# ŚRĪ-MAHĀ-BHĀRATA-TĀTPARYA-NIRṆAYA

Of ŚRĪ ĀNANDA-TĪRTHA-BHAGAVAT-PĀDA

[PART: ONE]

Editor :
Vidyāratnākara
Bannanje Govindācārya

Publishers:
Tatva-Samśodhana-Samsat
Udupi (2009)

श्रीमदानन्दतीर्थभगवत्पादविरचितः

# श्रीमहाभारततात्पर्य्यनिर्णयः

[श्रीहृषीकेशतीर्थलिखितमूलकोशानुसारेण पाठान्तरटिप्पण्यादिना परिशोधितः पाठः]

श्रीवेदाङ्गतीर्थभट्टारककृतया तात्पर्य्यदीपिकया

आचार्य्यगोविन्दकृतया निर्णयभावचन्द्रिकया च समलङ्कृतः

**प्रथमो भागः**

**अद्ध्यायाः १—१८**


**सम्पादकः**

आचार्य्यगोविन्दो बन्नञ्जेपदोपाह्वः



**प्रकाशनी**

तत्वसंशोधनसंसत्

विद्यामान्यप्रकाशनम्

श्रीहृषीकेशतीर्थसंस्थानम्, रजतपीठपुरम् (उडुपि)

ŚRĪ-MAHĀ-BHĀRATA-TĀTPARYA-NIRṆAYA of Śrī Ānanda-Tīrtha-Bhagavat-pāda
with Tātparya-dīpikā of Śrī Vedāṅga-Tīrtha-Bhaṭṭāraka and
Nirṇaya-Bhāva-Candrikā of Bannanje Govindācārya

**First part** **1-18 Adhyāyas**

**Edited by** : **Vidyāratnākara Bannanje Govindācārya**

**Published by** : Tatva-Saṃśodhana-Saṃsat
Śrī Vidyāmānya Prakāśana
Śrī Hṛṣīkeśa-Tīrtha-Saṃsthānam,
(Śrī Palimāru Maṭha) Udupi,
Karnataka, (India)
Tel. no: 0820-2523402



**I Edition** : **2009**

**Copies** : **1000**

**Pages** : **108+652**

**Price** : **Rs-750 $ 50**

**ISBN** : **978-81-909776-0-9**

**Cover design** : **K.M. Sheshagiri**

**Typeset** : **Kaddi S. Badarinarayanachar**
**Poornaprajna vidyapeetha**
**E-Mail : bnkaddi@gmail.com**

**Printed at** : **Rajprakash Prints**
**Chamarajapet, Bengaluru-18**



प्रणतवान् प्राणिनां प्राणभूतं
प्रणतिभिः प्रीणये पूर्णबोधम् ॥

# आध्यक्षी भणितिः

श्रीमदाचार्यवर्यैः पूर्णप्रमतिभिः श्रीमदानन्दतीर्थभगवत्पादैः कृतानां कृतिततीनां जगतीतलप्रख्यातमन्वर्थकमभिधानं 'सर्वमूलम्' इति ॥

कदाऽप्याचार्यः स्वकपोलकल्पितं प्रमाणातीतं न ब्रूते, नाप्यनुमन्यते । नैव ग्रन्थे ग्रथ्नाति च । भारतीपतेः प्राणदेवस्यावतारेणानेनाऽचार्येण ग्रथितं न निर्मूलम् । अपि तर्हि, सर्वं समूलम् । सर्वं सर्वमूलम् । सर्वो मूलं यस्य तदित्यपि विग्रहीतुं सुशकम् । एवञ्च सर्वापि माध्वी वाणी सर्वमूलमिति साधु सङ्गच्छते ॥

अपौरुषेयी ह्यार्षवाणी सर्व इत्याख्यया व्याख्यायते । 'सर्वं समाप्नोषि ततोऽसि सर्वः' इति गीतापतियशोगाथा दिगन्तप्रथिता । सर्वगुणगणः, सर्वव्याप्तः, सर्वान्तर्यामी श्रीविष्णुरेव सर्वः । एतादृशं सर्वोत्तमं सर्वाह्वयं श्रीविष्णुं स्वरवर्णपदवाक्येषु सर्वदा स्तुवन्नेष त्रयीराशिरपि सर्वः । एतेनैव निमित्तेन सर्वाह्वयेन सर्वदा 'वैकुण्ठस्याखिला वेदा उद्गीर्यन्तेऽनिशं यतः' इत्युक्तदिशा संरक्षणाच्च सर्वं श्रौतं शब्दवृन्दं सर्व इत्येव सङ्कीर्त्यते । सारात्सारतरं श्रीहरिमेव स्तुवन्नेष समस्तः श्रौतो रवः सर्वः । सरव एव सर्वः ॥

वैदिको ह्यास्माकीन आचार्यो विमतं स्वनिरूपितमपूर्वममेयं प्रमेयं प्रमापयितुमविमतं सर्वसम्मतमनन्त-माम्नायं सर्वाह्वयं स्वकृतिषु प्रमाणयामास । सर्वो वेदराशिः, स मूलं स्वकृतेः इति सर्वमूलता स्वकृतिततेः नूनं साध्वी ॥

अपि च भगवता साक्षान्नारायणावतारेण बादरायणेन प्रणीतं महाभारतं नामेतिहासः पौरुषेयः पञ्चमो वेदानां वेदः । तदेतन्महाभारतं 'सर्वः शर्वः शिवः स्थाणुः' इति सर्व इत्याह्वयेन सहस्रनामस्विममेव समकीर्तयत् । अतः सर्वो नाम भगवान्, अतश्च तत्प्रणीतानीमानि श्रीब्रह्मसूत्र-पञ्चरात्र-महाभारत-मूलरामायणाष्टादशपुराणप्रभृतीनि च सर्वः, यतः सर्वेण प्रणीतान्येतानि । तदेतन्मूलत्वेन च सर्वमूलता श्रीमध्वकृतीनां साधु समर्थिता ॥

प्रतिपादितं प्रमेयजातं विवादातीतयितुं सर्वाह्वयानि श्रुतिसूत्रभारतपुराणप्रभृतीन्युदाहार्षीत्, स्वग्रन्थरत्नमन्वर्थं सर्वमूलं व्यदधाच्च ॥

अत एव श्रीमध्व इति श्रौतं नाम सार्थकं संस्मरन्ति । यदीयं शास्त्रं 'वं' मध्विव सर्वसहृदयहृदयाह्लादकं, भवरोगभेषजं च ।

मधुकरो विविधजातीयकुसुमसमवायेषु विहृत्य सौमं सारसर्वस्वं सङ्गृह्य मधु विदधाति । एवमेव मध्वोऽपि । सोऽयं देशिकवरः पुष्पायमाणासु सप्तसु शिवासु मातृषु स्वच्छन्दं विहृत्य सारं सम्पाद्य स्वशास्त्रेषु संयोज्य यतः स्वीयं 'स्वं' मधुमयं निरमात् । **'माध्वीर्गावो भवन्तु नः'** इति श्रुतिरपि संवदते ॥

अनेकासां कृतीनां निर्माताऽप्ययमाचार्यवरः न काञ्चिदपि रेखामलेखीत्, ऋते 'नास्मदुक्तिसदृशं हितरूपम्' इति पङ्क्तेः । काष्ठमौनव्रतदमशमतपःस्वाध्यायोपवासेषु प्रवणः भगवत्कार्यसाधको जीवोत्तमो देववरः स्वशिष्यान् शिक्षयन्नेव लिलेख किल । अतः कथमेष मिथ्याभाषीति भाषणं भूषणं स्यात्? न कथञ्चिदप्येषा मिथ्याप्रशंसेत्यपि शङ्कितुं शक्यते । नास्मदुक्तिसदृशं हितरूपमित्येव कृपापारावारोऽवादीत् । अस्मदिति बहुवचनं प्रयुञ्जानेन स्वीया गुरुता सूचिता । नैतावन्मात्रेण पर्याप्नोति । एषाऽस्मदुक्तिः, अस्माकमुक्तिः, न केवला ममोक्तिर्ह्येषा, अपि त्वस्माकम् । मम, मम गुरोः सर्वेशस्य, सर्वशास्त्रप्रशासकस्य, सर्वज्ञशिखामणेः, श्रीव्यासस्य, तेनैतेन वेदव्यासेन संशोधितस्य बोधितस्य वेदराशेश्च सम्मता सूक्तिरियमिति । अत एव सर्वमूलता ह्यस्य । 'सर्वं पूर्णमिहोच्यते' इति प्राचां वाचोऽपि सर्वमूलस्यास्य पूर्णार्थवत्तामेव समर्थयन्ते । श्रुतेस्त्र्यर्थता, भारतस्य दशार्थता, सहस्रनाम्नां निरन्तरशतार्थता । परन्त्वेतस्य सर्वमूलस्य सहस्रार्थता । 'सहस्रार्थस्य भाष्यस्य' इत्युच्चैरुद्घोषयन् तत्वदीपिकाकृत् पण्डिताचार्यः परमं प्रमाणम् । वीन्द्राहीन्द्ररुद्रस्कन्दसुरेन्द्रादिवृन्दारकवृन्दमेव वन्दयाञ्चकार, नन्दयाञ्चकार चायं सर्वमूलाचार्यवर्यः । अस्य व्याख्यानकर्मणि देवा ह्यधिकारिण इत्युत्कीर्तयन् श्रीमज्जयतीर्थयतिपतिरप्यमेयापूर्वार्थतामेवास्य सर्वमूलस्य समार्थयत । स्वपदपुञ्जेषु प्रत्यपीपदच्च । एवमाखण्डलाद्यखण्डपण्डितमण्डलीमेव मण्डयाम्बभूव ॥

✲

प्रकृतः श्रीमहाभारततात्पर्यनिर्णयः । सोऽपि सर्वमूलम् । एकैकग्रन्थोऽपि सर्वमूलमेव । न केवलं महाभारतस्य तात्पर्यं निर्णयत्येषा कृतिः, किन्तु सर्वशास्त्रस्य निर्णयो दरीदृश्यतेऽत्र । श्रुतिस्मृतिसमुद्रमथनजममृतमेतत् । सर्व-शास्त्राणि यस्य करतलामलकायन्ते सोऽयं महाचार्यः स्वीयपदकदम्बमध्य एव निबबन्ध वेदवैदिकसूत्रपद्य-वृन्दम् । 'क्रमात् संस्कारान् क्षत्रियाणामवाप्य तेऽवर्धन्त स्वतवसो महित्वना' इति वेदपादमेव पठित्वा श्लोकं प्रपूरयताऽचार्येण स्वस्य श्रुतिभर्तृता सूचिता । सीताकल्याणप्रसङ्गे 'तदा विमानावलिभिर्नभस्तळम्' इति भागवतीयपद्यार्धमेव संयोजयताऽनेन स्वस्य शुद्धभागवतधर्मनिष्णातता समसूचि ॥

'मुक्तोपसृप्य इह नास्ति' इत्यादिसूत्रोपनिषदौ ग्रथ्नता स्वस्य व्यासदासता तच्छास्त्रप्रभविष्णुता च प्रादर्शि ॥

बदरीमध्येऽपि द्योतमानस्य वेदेशस्य श्रीवेदव्यासस्य सविधे प्रेष्ठः शिष्यो भूत्वा तदुदितं सर्वं श्रुत्वा मत्वा व्याचख्यौ इति प्रख्यात एष एक एवाऽचार्यो ननु । नान्येषामेषा सुभगता । अतोऽप्येतत्कृतेः सर्वमूलता । वेदपतिना साक्षादेवाऽज्ञप्तः सर्वमूलग्रन्थजातं व्यरचयत् । अतोऽपि सर्वमूलतैतत्कृतेः ॥

श्रीव्यासशिष्यस्य श्रीमध्वराजस्य मुखपद्मात् साक्षाच्छ्रुत्वा स्मृत्वा ध्यात्वाऽचार्यवरस्य प्रथमशिष्येण, निजशिष्यप्रवरेण, श्रीमध्वस्यानुरूपगुणस्वरादिभाजा श्रीमता वशीकृतहृषीकेण श्रीहृषीकेशतीर्थयतिपुङ्गवेन लिखितः शुद्धः पाठः राराज्यतेऽत्र । श्रीमठेऽद्यापि पूज्यते । सम्प्रदायोऽपि संवदते । श्रीसत्यधर्मतीर्थानां 'विदितोऽसि भवान् साक्षात्' इति भागवतदशमस्कन्धव्याख्यानमपि तदेतदपलपतां प्रमाणपदवीमारोहति । न केवलं भैष्मीमध्वपूजित-मन्थपाशधरश्रीकृष्णपादपद्माराधका ह्येते, अपि तु श्रीमध्वपदपद्माराधकाश्चेमे नूनं सर्वाराध्याः कथं न भवन्तीति परं कौतूहलम् ॥

✻

महाभारतात्पर्यनिर्णयस्य प्रतनव्याख्यातारः वेदवेदाङ्गपारङ्गताः श्रीवेदाङ्गतीर्थाः । एतदीयव्याख्यानकौशलमेवेदं द्रढयति । श्रीमध्वविजयव्याख्यानकर्मण्येतद्वैभवमपूर्वं दृष्टपूर्वम् । श्रीहृषीकेशतीर्थीयपाठसौष्ठवानुगुण्यमपि दृष्टमत्रेति अपरमप्युत्कर्षं पश्यन्तु ॥

✻

प्राणवैयाकरणसूत्रप्रणेत्रा तथा वेदोपनिषदां साक्षात्परम्परया च व्याख्यात्रा, छन्दोलङ्कारबन्धभाषादिमीमांसाकर्त्रा, श्रीमता गोविन्दाचार्येण नैकेषु शास्त्रेषु सम्पादितं वैदुष्यमभिचाकशीत्यत्र । अत्र च निर्मत्सराः सहृदयाः सन्तः साक्षिणः । 'बालसङ्घमपि बोधयद्भृशं दुर्निरूपवचनं च पण्डितैः' इति श्रीनारायणपण्डिताचार्यवचनमपि नैव विस्मरामः । सहृदयानां विदुषां हृदयस्य हृद्यं ह्लादैकमयमपूर्वं रसायनमिदम् । बहोः कालान्निरीक्षितोऽप्यनिरीक्षितपूर्वः, अपूर्वोऽपि सपूर्वः, सपूर्वोऽपि व्ययीकृतोऽप्यक्षयिष्णुः निरवधिकः सुवर्णात्मकोऽक्षरमयः शेवधिरेषः । तस्यैतस्य भूयसः परिश्रमस्य फलं विदुषामध्ययनमध्यापनं च, चिन्तनं मन्थनं च, हरिगुरुप्रसादश्च निरवधिक इत्यत्र नास्ति संशीतिलेशोऽपि ॥

✻

तात्पर्यनिर्णयोऽयमस्मद्गुरुचरणानां प्रेष्ठतमो ग्रन्थः । स्वयमेवाहर्निशमस्य ग्रन्थस्याध्ययनाध्यापनरताः, तल्लब्ध-वैदुष्याश्च । लौकिकालौकिकसन्देहपदेष्विममेव निर्णयं परमं प्रमाणयन्ति स्म । इदं ग्रन्थरत्नं वारंवारमवलोक्य पदेपदे स्वादुतामास्वाद्य तृप्तचित्ताः सन्तुष्यन्ति स्म ॥

गुरुवरा इमे नूनं सम्पादकमेनमाशिषां पूरेण प्लावयिष्यन्तीति नैव मिथ्याभणितिरिति सहृदयाः प्रमाणम् ॥

अस्मद्गुरुचरणानां दशमाराधनायाः सुदशा एषा । श्रीविद्यामान्यकृपापात्रं विद्यारत्नाकर एषः । नायं लवण-मयः । अपि तु लावण्यपूर्णः, यः क्षणेक्षणे नवतामुपैति । अनन्तानां रत्नानां प्रभवादस्माद् रत्नाकरादाविर्भूत-मनर्घं विदुषां कण्ठभूषणमेतत् । अहो सौभाग्यं तत्वसंशोधनसंसदः । अन्यदायतनं स्थिरमलब्ध्वा स्वयमेवाऽ-गताऽऽचार्यान्तिकमियं पद्मश्रीः । ज्ञानसूर्यादृते पद्मस्य श्रीः न समुल्लसति च । नैनमाचार्यगोविन्दं पद्मश्रीः भूषयति, परन्त्वियं पद्मश्रीरेव भूषिताऽनेनेत्यत्र न काचित्संशीतिः । एतत्कृतिसूर्यस्य पद्मश्रियश्च सम्बन्धः नूनं न काक-तालीयः । स्वयमाचार्यसूर्यस्यैव महान् सङ्कल्प इति सुदृढं विश्वसिमः । भागवतप्रतिश्लोकव्याख्यामृतं ऋगर्थमञ्जरी च प्रतीक्ष्येते । अचिरादेव ते अप्याविष्कृते, अनया संस्थया प्रकाशिते च स्याताम् इति हरिगुरू प्रार्थ्येते ॥

श्रीविद्यामान्यप्रकाशनस्य महद् भागधेयम् । सम्पादकमेतमाचार्यगोविन्दं नूनं सानन्दमभिनन्दामः ॥

**विरोधि-मार्गशीर्ष-शुक्ल-प्रतिपत्**

(17-11-2009)

**इत्यनेकनारायणस्मृतयः**

**श्रीविद्याधीशतीर्थश्रीपादाः**

**अध्यक्षाः**

**तत्वसंशोधनसंसत्, विद्यामान्यप्रकाशनम्**

**श्रीहृषीकेशतीर्थसंस्थानम्, श्रीपलिमारुमठः (उडुपी)**

# सम्पादक उवाच

**प्रणम्यान्तःप्रणेतारं नारायणमनामयम् ।**
**प्रणम्य सर्वज्ञमुनिं प्रणम्य लिकुचान्वयान् ॥**

**श्रीमदानन्दतीर्थार्यसच्छिष्यान् यतिशेखरान् ।**
**तच्छिष्यानपि तच्छिष्यान् नत्वा गुरुपरम्पराम् ॥**

**विद्यामान्यानसामान्यान् प्रणम्य जितकाशिनः ।**
**विद्वत्प्रवरमूर्धन्यान् धन्यान् विद्यागुरून् मम ॥**

**नारायणार्यं पितरं विपश्चिद्गणतल्लजम् ।**
**नत्वा सत्तर्कपाथोधितरणाय प्लवायितम् ॥**

**नत्वाऽम्बां सत्यभामाख्यां नत्वा चैव पितामहीम् ।**
**नाम्ना पद्मावतीं चारुमतिं कृतिमतल्लिकाम् ॥**

**पितृव्यं श्रीनिवासार्यं नत्वाऽन्यान् ज्ञानदानपि ।**
**आदौ सम्पादकतया किञ्चिद् विज्ञाप्यते मया ॥**

सर्वतः प्रथमं स्मर्तव्या गुरवः श्रीविद्यामान्यतीर्थश्रीचरणाः, येषां जीवातुः श्रीमहाभारततात्पर्यनिर्णयो नाम । यदित एतत्प्रकाशनावसरेऽजीविष्यन् नूनमानन्दजलधौ न्यमङ्क्ष्यन् । श्रद्दधिष्महि– यद्यापि तेऽदृश्याः सन्तः, आस्माकीनं क्रियाकलापमुपरि पश्यन्त आशिषा नोऽयुक्षतेति । तेषामनुग्रहबलादेवेदमीदृशं महत् कार्यमवसितमिति नो दृढं विश्वासः । अन्यथा कः पारयेदपारं महाभारततात्पर्यनिर्णयजलधिमतितरीतुम्? श्रीविद्यामान्यतीर्थश्रीचरणानामन्तेवासिभिः श्रीहृषीकेशतीर्थमहासंस्थानमधिरूढैः श्रीविद्याधीशतीर्थश्रीपादैरिदं प्रकाश्यत इति च सर्वं सुन्दरम् ॥

**आशीःपरम्परा**

अथ चैतस्मिन् महत्तमे ज्ञानदीपसन्दीपनकर्मणि हस्तसंयोजनेन सम्पादितपुण्यानाममीषां सर्वेषां समोदमाशीःपरम्परां प्रशास्महे–

१. भगवत आचार्यमध्वस्य सेवेयमिति कटिबद्धया श्रद्धया निस्पृहं ग्रन्थस्यास्य लिपि-संयोजनकर्मण्यहर्निशमविश्रमं कृतपरिश्रमस्य साधुशीलस्य श्रीलस्य कड्डीपदोपाह्वस्य विदुषो बदरीनारायणाचार्यस्य–

२. 'अमेरिका'देशे राचेस्टर् इन्स्टिट्यूट् आफ् टेक्नालजि (RIT) इत्यत्र प्राध्यापकपदवीमधिरूढेन श्रीमुकुन्दशर्मणा 'बेङ्गळूरु'नगरे प्राच्यग्रन्थसंशोधनाय प्रकाशनाय च स्थापिते ताराप्रकाशने संशो-धनकर्मण्यधिकृतस्य, अस्मिन् ग्रन्थे मुद्राराक्षसविद्रावणकर्मण्यनिशं विहितकार्यस्य, अनुक्रमणिकादिसंयोजने परिशिष्टपरिष्करणे च दत्तसहकारस्य, तरुणपण्डितमण्डलीवनिकासहकारस्य श्रीमतो विजयसिंहशर्मणः–

३. श्रीहृषीकेशतीर्थमूलपरिशीलनकर्मणि दत्तप्रभूतसहकारस्य कृष्णराजशर्मणः–

४. लिप्यङ्कनशोधनकर्मणि, विशिष्य व्याकरणविभागे, बहूपकृतवतो वैयाकरणस्य विद्वदाभरणस्य 'बायरि' पदोपाह्वस्य श्रीमतः 'पर्कळ' आचार्यवेङ्कटेशस्य–

५. अपूर्वस्य श्रीकृष्णमध्वयो रेखाचित्रस्य विश्राणनेन कृतमध्वसेवस्य चित्रकलापरिणतस्य श्रीमतो रघुपतिभट्टस्य–

६. एतद्ग्रन्थरक्षाकवचस्य समुचितेनार्थपूर्णेन च विन्यासेन पुस्तकस्य शोभां विशेषितवतः कलाविदुषः श्रीमतः के.एम्. शेषगिरिशर्मणः–

७. सम्पादनकर्मणि बहुतरं सहकृतवतां श्रीमताम्, कड्डी रघूत्तमाचार्यः, नरसिंहमूर्तिः, पवमानः, सुधीन्द्रः, रमेशः, दिलीप इत्येतषाम्, अन्येषां च परःसहस्राणामत्रानुल्लिखितनामधेयानाम्–

मुद्रणकर्मण आशुत्वाय सौष्ठवाय च मुद्रणालयं प्रति गमागमैः कृतपरिश्रमस्य बन्नञ्जेपदोपाह्वस्य श्रीमतो विनयभूषणस्य–

८. सुन्दरं सकालं समापितमुद्रणकार्यस्य 'राजप्रकाश् प्रिण्ट्स्' इत्यभिधानस्य मुद्रणालयस्याधिपतेः श्रीमतः प्रकाशनामधेयस्य च–

**अथेदमिह वक्तव्यं स्वजनसहकरणम्–**

एतद्ग्रन्थसम्पादनसमये 'बेङ्गळूरु'नगरे लेखनकर्मणि निरतानां नः, स्वोपद्रवमप्यगणयित्वा, चिरं योगक्षेम-मूहतुर्दिवानिशमस्मत्तनया श्रीमती कविता च, तद्भर्ता श्रीमान् वेङ्कटराज उडुपश्च । अपरा चास्मत्तनयाऽध्यात्म-साधनप्रवीणा वीणा च सत्यकामान्तेवासिनी । अस्तु स्वस्ति तेभ्यः ॥

यदा पुनर्वयं रूप्यपीठे शान्ते स्वनिशान्ते न्यवसाम, तत्रापि गृहनिर्वहणादिषु लौकिकव्यवहारेषु नो निर्लक्ष्यता-मलक्षयित्वा, सोढ्वा च सर्वमनानुकूल्यम्, ऊढ्वा चास्मद्रक्षणभारम्, निर्व्याजेन प्रेम्णाऽस्मल्लेखनकर्मणि दत्त-स्वातन्त्र्याः, अस्मज्जाया श्रीमती अहल्या, वधूः श्रीमती रमा, श्रीमती विजयलक्ष्मीश्च, तनयौ विनयभूषणो विजयभूषणश्च सदा शुभया धिया युक्षीरन्निति साशीर्वादं प्रशास्महे ॥

**अन्ते च, अधमर्णाः कृतज्ञा वयम्–**

प्रकटनात् पूर्वमेव, लिप्यङ्कनदशायामेव ग्रन्थमेतमवलोकमवलोकं हृषिताय, शिष्यान् पाठयित्वा निर्मत्सरं प्रकटितहर्षाय कृतप्रशंसावर्षाय च सुहृदयाय महोदयाय पण्डितमण्डलाय–

प्रकाशनमिदं प्रीत्या निरीक्षमाणाय निरन्तरं प्रत्तप्रोत्साहाय पाठककदम्बाय च ॥

इति भवदीयः

**—बन्नञ्जेपदोपाह्व आचार्यगोविन्दः**

**रजतपीठपुरम् (उडुपी)**

**शा.श.१९३१, विरोधि-मार्गशीर्ष-कृष्ण-चतुर्थी**

(5-1-.2009)

# भूमिका.....

सम्बभूव भगवान् बादरायणः, कलियुगारम्भादप्यर्वाक् सप्तशत्याः समानाम् । इति ह शुश्रुम–यत् प्रथमं मानुषाणां मानसेषु दूणाशं तमोऽवततार । ततस्तन्निरासाय भारतवर्षे भगवान् बादरायणभास्करः ॥

उदिते भगवति भानुमति क्वाप्यलीयत तमः । प्रससार सर्वतः प्रचुरः प्रकाशः । विचकास भुवनभाग्यम्, सह च सतां हृदयपुण्डरीकैः ॥

अथ कृष्णद्वैपायनादुज्जगाम महाभारताख्यः पञ्चमो वेदः, चन्द्रमा इव क्षीरोदधेः । अप्सरस इव मोहन्यः पुराणसंहिताश्च । तेन मुमुदुः सन्तः । मुमुहुरसन्तः ॥

सप्तसु शिवासु मातृषु नळिनीष्विव विपश्चितश्चञ्चरीकन्त उल्लेसुः पायम्पायं मधुरं मधुरसम् । कलिरपि न पादं पुरः प्रससार यावत् पाण्डवसन्ततिर्भुवनमशात् ॥

इति ह विदन्तो वदन्ति– पञ्चसहस्रेभ्यः साधिकेभ्यः संवत्सरेभ्यः पूर्वं समारब्धं कलियुगम् । ततः पुनरतिगतानि त्रीणि सहस्राणि वत्सराणाम् । अथ कलिः पादं भुवि न्यचिक्षिप्सत । प्रववृधे च क्रमेण । **'श्वःश्वःपापीयदिवसा पृथिवी गतयौवना'** बभूव । मलीमसं समपद्यत जनमानसम् । जगाम ज्ञानमज्ञानताम् । दुर्भाष्यदूषिता तिरोदधे तत्वविद्या । तत्ववादः समजायत प्रवादमात्रम् ॥

✻

शास्त्रेषु भारतं सारमाहुः । दशार्थमाहुः । केवलेश्वरदृष्टार्थमाहुः । तेन सामस्त्येन ब्रह्माऽपि तन्न जानातीत्याहुः । महापुरुषनिर्मितमिति स्वयमपुरुषनिर्मिताद् वेदादप्युत्तममाहुः । पञ्चमं वेदानां वेदमाहुः । यदिहास्ति

तदन्यत्र यन्नेहास्ति न तत् क्वचिदित्याहुः । सर्वतोऽपि महत्तरमिति महार्थभरितमिति महाभारतमाहुः । वाङ्मयसारभूतयोः सप्तशतीविष्णुनामसहस्रयोर्निधानमाहुः । भारतवर्षस्य महतीं दैवीं सम्पदमाहुः । प्रथममद्वितीयमितिहासमाहुः । एवं विदितमहत्त्वाः सर्वसत्वास्तमिमं ग्रन्थरत्नराजं शिरोऽवतंसमिव नतशिरसः सबहुमानमूहुः ॥

सेयं दैवी सम्पत् ज्ञानमलिम्लुचैर्मुषिता निमुम्लोच । अपार्थव्याकुलमिदं महाभारतमपार्थमिव पाण्डव-कुलमनाथमासीत् । मन्दधिषणानां न केवलम्, प्रज्ञाप्रकाशेन तुलितधिषणानामपि दुरूहमासीत् । दुरधिगममासीत् ॥

मायाजालमवतमसमिव सर्वत आववार । शास्त्रधौते अपि विदुषां वाङ्मनसे कच्चरे बभूवतुः । विद्यापाटच्चरा-स्तत्ववादग्रन्थान् विलोपयामासुः । विलोळयामासुश्च तत्वमार्गम् । जना अनाकलिताध्वानः कान्दिशीका अपथेनैवाजिगमिषन् । विद्यामिषेणाविद्या विजजृम्भे ॥

एतस्मिन्नेवानेहसि कुहकधिषणा दुराग्रहप्रमुष्टदृष्टयः स्वमताभिनिवेशमात्रचारित्रास्तत्ववादभञ्जनैकदीक्षा रूक्षा जगति व्यतनिषत । अथ ते महाभारते पुराणेषु च स्वमतप्रसारदुराशया गूढदुराशयाः स्वाभिमतान् श्लोकान् प्रचिक्षिपुः । स्वमतप्रतीपांश्चान्विष्यान्विष्य बहुलमन्तरधापयन् । कांश्चन ग्रन्थभागान् मूलाशयवैयाकुल्याय व्यत्यस्य पेठुः । अपरे च मन्दप्रज्ञाः स्वाज्ञानवैभवेनैव विपरीतं पेठुः, मूलपाठमपपाठं मन्वानाः, अपपाठं च मूलपाठम् ॥

एवङ्गते कोऽपि न विजज्ञौ, सज्जनलोकोऽपि, कः शुद्धः पाठः? कश्च विवक्षितोऽर्थ इति । किं मूलम्? किं प्रक्षिप्तमिति ॥

एवमिदमदो वा विश्वसितव्यमिति सन्दिहाने सज्जनवृन्दे, बुभुत्सया ततइतः पर्यट्यापि, यान्कानपि परिपृच्छ्यापि, अन्तर्माथम्माथं विचिन्त्यापि अनधिगतपरिहारपथे नैराश्येन व्याकुलिते, अथ विजृम्भमाणे च दुर्जनगणे मिथ्याज्ञानशरणे, सर्वासां समस्यानां दैवप्रहितः परिहार इव भगवानाचार्यमध्वो भुव्यवततार पाजकाख्येऽणुग्रामे ॥

अथ स पित्रा कृतवासुदेवनामा बाल एवातिबालप्रज्ञो ववृधे । पण्डितमण्डली नासानिहिताङ्गुली विस्मृत-वाग्व्याहारा विस्मयजलधौ न्यमाङ्क्षीत् ॥

अथ वटुर्वासुदेवो लोकशिक्षायै संसारमोहबन्धं विच्छेत्स्यन् यतिमच्युतप्रज्ञमुपससाद । तदात्वे स कृती यती रजतपीठपरिसरे प्रथित आस । पूर्वैः पूर्वतरैः कृतेति स पञ्चायतनपूजापद्धतिमनुससार । परम्पराप्राप्तमिति स्वयमवशतया मायावादसम्प्रदायमन्ववर्तत । वासुदेवस्तमुपसद्य तुरीयाश्रमं स्वीचकार दशहायनः ॥

अच्युतप्रज्ञसविधे सविधानमूरीकृतपारमहंस्यो वासुदेवः पूर्णप्रज्ञो यतिर्बभूव । अथ वेदान्तसाम्राज्ये विदितशिष्यवैदुष्यतया परमानन्दनिर्भरेण गुरुणाऽभ्यषिच्यत । अलब्ध चाऽनन्दतीर्थ इति सार्थकमभिधानम् ॥

अथ पुनरानन्दतीर्थो मध्वो बभूव । स स्वयमात्मानमेवमुज्जुघोष–'अहमेव स्वयमिदं वदामि । अहमेव हि मध्वः' इति । जगाद श्रुतिः–'मध्व आधवे गुहा सन्तं मातरिश्वा मथायति' । अस्याः श्रुतेः प्रतनमर्थमिदमुपज्ञमाविर्भावयन् भगवत्पाद आह–'अहमेव मातरिश्वा । अहमेव 'गुहा सन्तं मथायन्' मध्व इति मन्तत्रवर्णगदितः' इति ॥

ततः परं तेनैव वैदिकेन नाम्ना स प्रथितो बभूव । शोभते च परमवैदिकस्याऽचार्यस्य वैदिकमिदं नाम ॥

अथ भगवानाचार्यमध्वः स्वपदा भुवं पुनान आसेतोरा हिमाद्रेः समग्रं भारतं द्विः सञ्चचार । तीर्थानि तीर्थीकुर्वन्नवजगाहे । सन्ददर्श सर्वाणि देवमन्दिराणि च पुण्यक्षेत्राणि च । स्वसन्दर्शनेन च तानि दर्शनीयतमानि चकार ॥

एवं चरकश्चारश्चारं चतुरमुन्ममार्ज तत्ववादप्रवचनैः साधुजनमनांसि । यदाह पण्डिताचार्यः–**'यस्यास्खलितानवरतवेदशास्त्रव्याख्यानश्रवणकौतुकसमुत्खातदुःखसङ्घातो निखिलपण्डितवर्गो महामृतसमुद्रावगाहीव बहुलमाह्लादमाप्नोति'** इति, **'भगवान् भगवत्तमवेदव्यासशिष्यप्रकरपुरःसरः सकलसुमनोमनोवारिजप्रबोधप्रभाकरः समस्तवेदार्थमीमांसकवरचूळामणिः प्रतिवादिवारणपतिदर्पविदारणसिंहराजः परमात्मतत्वविज्ञानगुरुपरमाचार्यः'** इति च ॥

एवमिह लोकोत्तरया नवनवोन्मेषशालिन्या प्रतिभया प्रतिवादिभयङ्करोऽपि भगवान् साधुजनदत्ताभयो जिगाय च वृथावादनिरतान् दुर्वादमुषितधिषणानन्यान् पण्डितम्मन्यान् । निर्वापयामास दुर्वादिनामखर्वं गर्वम् । उद्दधार च नष्टप्रायान् शास्त्रग्रन्थान् । उद्धृत्य च ममन्थ शास्त्रजलधिं सूक्तिसुयुक्तिमन्थानेन । उज्जहार च सतां विदुषां तत्ववादपीयूषम् ।

कियदित्युच्यते? किमित्युच्यते? किं हनुमानिव सङ्गीतकलाकुशल इति ब्रूमः? अथ किं भीमसेन इव नियुद्धनिपुण इति? आहो सर्वशास्त्रजलधितरणपटुरिति? आहो पर्वतारोहणधुरीण इति? उत भगवद्भक्तिधुरन्धर इति? अथ पुरुषसौन्दर्यसार इति? सर्वेषां किल समाहारः स आस । कियदपि कथ्यताम् । महताऽपि वचोविलासेन किञ्चिदेव कथितं भवति ।

सर्वमपि परमार्थम् । नात्रातिशयोक्तिलेशोऽपि । यत्रातिशयोक्तिरपि कुब्जति । अश्रौष्म, न केवलं प्रवचनैः, स किल भगवद्गुणवसुधया गानसुधया च लोकचित्तमचूचुरदिति । आचख्यौ च पण्डिताचार्यः–

**‘गन्धर्वविद्यानिपुणस्य तस्य गन्धर्ववर्यैरनुगीतकीर्तेः ।**
**कलाश्च शेषा हृदये गुरोर्नः करोल्लसत्कन्दुकवद् विभान्ति’** इति ।

न जानन्ति बहवः, यदाचार्यमध्वोपज्ञं कार्णाटिकी गानपद्धतिः प्रचचाल । यद् विस्तारयामासुर्व्यासतीर्थादयो यतयः, पुरन्दरदासादयश्च भक्तिपथप्रवर्तकाः । यक्षगानपद्धतिमपि श्रीनरहरितीर्थमुखेन स्वयमाचार्यमध्व एव प्रवर्तयामास ॥

अदइदमिति किमुच्यते? सर्वङ्कषमतिमानुषं च भगवतो वैदुष्यम् । दुरूहं चाप्रतिद्वन्द्वं च । निर्दोषं चाप्रतिहतं च । यद् देवसत्तमानां लक्षणमामनन्ति–

**‘अश्रुतप्रतिभा यस्य श्रुतिस्मृत्यविरोधिनी ।**
**विसृता नृषु जातं च तं विद्याद् देवसत्तमम्’** इति ।

प्रत्यक्षमीक्षित्वा क्रियासमभिहारेण चेदृशीमश्रुतपूर्वां प्रतिभां भगवत्पादे, स्वयं तदन्तेवास्यग्रणीः पण्डिताचार्यः पुनःपुनरन्तरमिमानेन विस्मयेनोच्छ्वयन् भक्तिभरावनम्रः स्फुटमुदघोषयत्–**‘प्रत्यक्षमेव चैतल्लक्षणं भगवति भाष्यकारे’** इति ॥

तेन स दशप्रमतिरिति चाविगीतयशा विबुधैरगीयत । श्रूयते च–**‘दशप्रमतिं जनयन्त योषणः’** इति ।

अपूर्वमिदं वैदिकं पदम् । समग्रे वैदिकसाहित्ये सकृदेव श्रुतम् (ऋ.सं.१.१४१.२) ‘दश+प्रमतिम्’ इति । अत एव वेदव्याख्यातृभिरपि स्वरसतोऽविदिताभिधेयम् । तेऽपि यथाकथाच हठादाकृष्य यकङ्कमप्यर्थं समर्थयाञ्चक्रिरे तर्कितार्थाः ॥

अतर्कितं शास्त्रप्रमितमर्थं दशप्रमतिरेव प्रमाणवचनेन प्रकटयामास–**‘दशेति पूर्णमुद्दिष्टं प्रज्ञा प्रमतिरुच्यते’** इति ॥

किमुक्तं भवति? निशमय सावधानम् । दश पूर्णाः प्रमतयोऽस्येति दशप्रमतिः पूर्णप्रज्ञ इत्यनर्थान्तरमित्युक्तं भवति । दशेति शतमिति सहस्रमिति च पूर्णवचनम् । पूर्णप्रज्ञो दशप्रज्ञ उच्यते । जीवेषु पूर्णानन्दः शतानन्द उच्यते । भगवतः पूर्णानि नामानि सहस्रनामानीत्युच्यन्ते । सहस्रं नामानीति सङ्ख्यावचनम् । सहस्राणि नामानीत्यनन्तवचनमनन्तेन भगवता सह सरन्तीति ॥

चित्ते स्फारं स्फुरदर्थान्तरमपि शक्यं लगयितुम्– दशभिर्गुणैः प्रमिता मतिरस्येति । शास्त्रेषु प्रमिता लोकेषु च प्रथिता । के दश गुणाः? तदेतद् व्याचष्ट स्पष्टतरं भगवान् व्यास एव–

**'भक्तिर्ज्ञानं सवैराग्यं प्रज्ञा मेधा धृतिः स्थितिः ।**
**योगः प्राणो बलं चैव वृकोदर इति स्मृतः ।**
**एतद्दशात्मको वायुस्तस्माद् भीमस्तदात्मकः'** इति ॥

तस्मान्मध्वश्च तदात्मक इत्युक्तं भवति ॥

सोऽयं दशप्रमतिः पूर्णप्रज्ञ आनन्दतीर्थ आचार्यमध्वः स्वयमवतीर्य धरायाम्, विधूय मायावादम्, वितत्य च तत्ववादं तत्ववादगुरुरिति पप्रथे ॥



अथ कस्तावत् तस्यावतारकालः? अत्र ह विवदन्ते विमर्शकाः ॥

केचिदाचक्षते– आचार्य एव स्वावतारसमयं स्वयं स्पष्टमाचष्ट–**'चतुःसहस्रे त्रिशतोत्तरे गते संवत्सराणां तु कलौ पृथिव्यां जातः'** (म.भा.ता.नि.३२.१३१) इति । तदिदमन्तरङ्गं प्रमाणम् । अथापि का संशीतिः? तेन ४३०१तमे कल्यब्दे, ११२१तमे शालिवाहनशकाब्दे (1199 A.D) भगवानाचार्यमध्वोऽवततारेति । मठेषूपलब्धो गुरुपरम्पराकालनिर्देशश्चानेन संवदत इति स्फायन्ते ॥

अन्ये त्वन्यथा मन्यन्ते । आचार्यवचनार्थापरिज्ञानमूलोऽयं वादः । मठीयः कालनिर्देशश्चार्वाचीनः प्रचुरदोषश्चेति निर्णीतचरमेतत् । तेन न कोऽपि विपश्चित् तं प्रमाणमित्यूरीकरोति । बहोः कालाद् यन्निरस्तमप्रमाणमिति तदधुना सपदि कथं प्रमाणपदवीमध्यास्ते । एवं स्थिते विमर्शनपथे तद्वचनमपूर्वमिव यः प्रमाणीकरोति स शोच्य एव विदुषाम् । तेनाणुमध्वचरितमेव कालनिर्णये प्रमाणम् । तत्र चैवं पठ्यते–

**त्रिशतोत्तरचतुःसहस्राब्देभ्य उत्तरे ।**
**एकोनचत्वारिंशाब्दे विलम्बिपरिवत्सरे ।**
**आश्वीनशुक्लदशमीदिवसे भुवि पावने ।**
**पाजकाख्ये शुभक्षेत्रे दुर्गया चाभिवीक्षिते ।**
**जातो मध्याह्नवेलायां बुधवारे मरुत्तनुः ॥**

(कस्तावदणुमध्वचरितस्य रचयितेति न स्फुटम् । श्रीहृषीकेशतीर्थकृतिरिति तु प्रवादमात्रम् । केचित् पुनरेतत् पौराणं वचनमाचक्षते । तदपि किंवदन्तीमात्रम् । यः कोऽपि रचयतु नाम । अथापीदं सम्प्रति प्रमाणतया स्वीक्रियेत, यावदन्यत् प्रबलतरं प्रमाणान्तरमुपलभामहे । अत्रापि ज्योतिर्विदां विवादः श्रूयते– तस्मिन्

दिने न बुधवार आसीत्, तेन 'विधुवारे मरुत्तनुः' इति पठितव्यमिति । स्यादपि । किन्तु तिथिमासवत्सरेषु न विवादः । एवं पदविदोऽपि विवदन्ते– आश्विनो मासो भवति । आश्वीन इत्यश्वस्यैकाह्साध्यः पन्था भवतीति । तदपि स्यात् । अत्र तु मासवचनमिति स्फुटम् । तेन दैर्घ्यमवधारणार्थमिति मन्तव्यम् ।)

तथाहि– ४३३९ तमे कल्यब्दे विलम्बिनामैव संवत्सर आसीत् । तत एकोनाशीतिवर्षाणि भुवि मानुषदृष्टिगो भूत्वा, अथाशीतितमे पिङ्गलाब्दे माघशुद्धनवम्यां बदरीं ययाविति च तत एव केवलमणुमध्वचरितादवगम्यते–

**'एकोनाशीतिवर्षाणि भूत्वा मानुषदृष्टिगः ।**
**पिङ्गलाब्दे माघशुद्धनवम्यां बदरीं ययौ'** इति ।

तेन ४३३९तमे कल्यब्दे, ११६०तमे शालिवाहनशकाब्दे (1238 A.D) भगवत्पादस्यावतारः, तत एकोनाशीतिवत्सरेष्वतीतेषु ४४१८ तमे कल्यब्दे, १२३९तमे शालिवाहनशकाब्दे (1317 A.D) बदरीं प्रति प्रयाणमिति समीचीनम् ॥

ननु तर्हि भोः, आचार्यवचनं कुप्यति– **'चतुःसहस्रे त्रिशतोत्तरे गते'** इति । न कुप्यति । सामान्यवचनं हि तत् सावकाशम् । अणुमध्वचरितगतं विशेषवचनं निरवकाशम् । सामान्यं विशेषो बाधते । सावकाशं निरवकाशः । वस्तुतस्तु नात्र सामान्यविशेषभावोऽपि । एकार्थं वचनद्वयम् । अविदिताचार्यवचनभावो भवान् मोघमाशङ्कते । भीमनिर्गमनानन्तरं संवत्सराणां चतुःसहस्रे त्रिशतोत्तरे गत इत्याशयेनोभयोरैकार्थ्यात् ॥

तथाहि–अस्मिन् कलियुगे षट्त्रिंशद्वर्षाणि ह्वै भीमो भूमावुवास । सप्तत्रिंशे तनुं त्यक्त्वा स्वधाम जगाम । ततः संवत्सराणां चतुःसहस्रे त्रिशतोत्तरे गते, ४३३८तमे कल्यब्दे, मध्यगेहभट्टगृहिणीगर्भं प्रविवेश । एकोनचत्वारिंशाब्दे भुवि प्रजात इति सर्वं सुसङ्घटम् ॥

तथाचायं द्वितीयः पक्ष एव साधीयानभिमतश्च विपश्चिताम् । अधिकं त्वस्मद्विरचितायां श्रीमध्वविजय-भूमिकायां द्रष्टव्यम् ॥

तत्रापि पुनर्विमर्शकम्मन्यानां द्वयी गतिः । माघशुद्धसप्तम्याम्, यां रथसप्तमीमाहुः, मध्वजननमित्येके । आश्वयुजशुद्धदशम्यामित्यपरे, यां विजयदशमीमाहुः ॥

तत्र प्रथमपक्षीयाः किमपि पुराणवचनं समाख्यापयन्ति–

**माघे तु रथसप्तम्यां प्राणदेवो महाबलः । मध्यगेहाख्यगेहे तु जातः–'** इत्यादि ॥

तदेतद् वराहपुराणवचनमित्युद्धरन्ति । अपरे विमर्शकास्त्वस्य मूलकोशेष्वनुपलम्भात् पुराणवचनत्वमेव नानुमन्यन्ते । युक्तं चैतत् भाति । तेन यथाणुमध्वचरितमाश्विनशुद्धदशम्यामवततार मध्व इत्येव युक्तमिति बहूनां विपश्चितां पक्षः । आचरन्ति च तस्मिन्नेव दिने मध्वजन्मोत्सवं तौळवाः ॥

(रथसप्तमीप्रस्तावात् स्मृतमिति प्रसङ्गवशात् किञ्चिन्मनसि भातं निवेद्यते । नारायणपण्डिताचार्यः श्रीमध्वचरितं लोकस्य प्रकाशयन् भास्करायते । तथा त्रिविक्रमपण्डिताचार्यः श्रीमध्वशिष्येषु भीष्मायते । तेन रथसप्तम्यादि दिनत्रयं नारायणसप्तमी त्रिविक्रमाष्टमी मध्वनवमी चेति परिगणय्य ज्ञानसमाराधनं चेदाचर्यते महतां स्मरणपर्यायेण सार्थकं जनुः स्यात् ।)



तस्यास्य तत्ववादाचार्यस्य तत्वसारसङ्ग्रहोऽयम्–

**विष्णुः सर्वोत्तमोऽथाखिलपदगदितः सर्ववेदाभिधेयः**
**श्रीनाथः सद्गुणाब्धिर्जगदुदयलयाद्यष्टकर्ताऽन्तरात्मा ।**
**ब्रह्माद्या उच्चनीचा हरिचरणरताः पञ्चभेदः प्रपञ्चः**
**सत्यः स्त्रीपुंसभावः सततमनपगा योग्यता च स्वभावः ॥**

**जीवास्त्रैगुण्यभाजः परमगतियुजो नित्यबद्धास्तमोगाः**
**सत्वोद्रेकात्तु मोक्षे निजसुखनियतिः साधनं ज्ञानभक्ती ।**
**इष्टं दैवं मुकुन्दः परमगुरुरसौ मारुतिर्मध्वनामा**
**विश्वं ताभ्यामुभाभ्यां नियमितमखिलं चेत्ययं तत्ववादः ॥**



तमिमं तत्वसारं समस्तवेदशास्त्रारूढतया समन्वित्य निर्णयन्ती मेरुकृतिरियं महाभारतात्पर्यनिर्णयो नाम । महाभारतव्याजेन समग्रस्येतिहासपुराणवाङ्मयस्य तात्पर्यनिर्णयाय प्रवृत्तो ग्रन्थरत्नराजः ॥

मुखतो रामकथा, कृष्णकथा, सहैव च पाण्डवकथा चेति रामायणं महाभारतं भागवतं हरिवंशं च मुख्यतः स्पृशन्ती, अन्ततः समग्रस्येतिहासस्य पुराणजातस्य च निर्णयनी कृतिरियं नूनं सुकृतिनां कृतिनां सुकृतपरिपाकः ॥

भारतीयस्य तत्वशास्त्रस्येतिहासे निरुपमानः प्रबन्धः । संशोधनक्षेत्रे पुनरदृष्टचरमभूतपूर्वमुपायनम् । चिन्तारत्नं शास्त्रचिन्तकानाम् । कल्पलतिका सत्यान्वेषणे कृतसङ्कल्पानामनल्पधिषणानाम् ॥

उक्तं च श्रीविष्णुतीर्थीये–

**ऋचां तु भाष्यं स चकार सम्यक् तथाऽऽरणानां वरसूत्रकाणाम् ।**
**सारं च तन्त्रस्य च भारतस्य सङ्क्षेपमानन्दयुताम्बुसञ्ज्ञः ॥**

**यथैव यद् वस्तु तथैव चोक्ते तत् तत्ववादोऽखिल एव पुंसाम् ।**
**ज्ञेयश्च कार्यः परमादरेण संसाराब्धेस्तर्तुमत्यन्तदुःखात् ॥**

आरणानामुपनिषदां च भाष्यम्, वरसूत्राणां च भाष्यं चकार । तन्त्रस्य सारं तन्त्रसारसङ्ग्रहाख्यं च ग्रन्थं चकार । तथा भारतस्य सारं महाभारततात्पर्यनिर्णयाख्यं चकार । भारतस्य सङ्क्षेपं च चकार महाभारत-तात्पर्याख्ये यमकबद्धे ग्रन्थे ॥

उदितं च नारायणपण्डिताचार्येण श्रीमध्वविजये–

**इतिहासपुराणाब्धेर्भवचित्ताद्रिलोळितात् ।**
**जातां भारततात्पर्यसुधां कः सन्न सेवते ॥** (१५.७६)

व्यासाज्ञाप्रेमपाकोऽयं ग्रन्थ इति चाऽह–

**पाराशर्यः परतत्वप्रसिद्धयै तात्पर्यार्थं परमं भारतस्य ।**
**व्यक्तं वक्तुं नियुनक्ति स्म साक्षादेनं धन्यं भुवने मन्यमानः ॥** (१०.२५)

अस्य पण्डितैरपि दुरवगाहस्य निरन्तरमननीयतां चाऽह योगदीपिकायाम्–

**द्विजो गुर्वर्चकः शुद्धचरणो नित्यकर्मकृत् ।**
**सायम्प्रातः समिद्धोमी भैक्षान्नादः श्रुतीः पठेत् ।**
**श्रीमद्भारततात्पर्यनिर्णयाद्यं समभ्यसेत् ॥** (१.८–९)

यत्र रामकथाप्रस्तावः, तदा मूलरामायणे, वाल्मीकिरामायणे, भारते, पुराणेषु च निरूपिता यायाः कथास्तासां सर्वासामविरोधेन समन्वितोऽर्थोऽत्र समार्थ्यत । आपाततः परस्परं विप्रतीपतया प्रतीयमानानाम्, अथचासङ्गततया प्रतीयमानानां प्रमेयाणामैकार्थ्यबोधनेन समन्वयप्रकारश्च प्रकट्यक्रियत । एवं कृष्णकथायाम्, पाण्डवकथायामपि ॥

सर्वसङ्ग्रहश्चायं महाभारतमिति । रामकथा, कृष्णकथा, पाण्डवकथेति सर्वमपि तत्रैव ग्रथितम् । दशावतार-कथा च । प्रबन्धुर्बादरायणस्यावतारकथा च । न क्वापि तदस्ति यन्न भारतेऽस्ति । अतः सर्वशास्त्रार्थं निर्णयतोऽप्यस्यान्वर्थं नाम महाभारतात्पर्यनिर्णय इति । प्राधान्येन हि व्यपदेशा भवन्ति ॥

महाभारतं सर्वशास्त्राणां सारः । आसारः पुमर्थानाम् । कासारः पुरातत्वनळिनानाम् । महाभारततात्पर्य-निर्णयस्तु सर्वशास्त्राणां निर्णयसारः । मूलाधारः सर्वनिर्णयानाम् । अत एवाऽसारः सर्वपुमर्थानामपि ॥

स्वयं भगवत्पाद एवैतमर्थमाह ग्रन्थान्ते–

**समस्तशास्त्रार्थविनिर्णयोऽयं विशेषतो भारतवर्त्मचारी ।** (३२.१७२)

**अत्रोदिता याश्च कथाः समस्ता वेदेतिहासादिविनिर्णयोत्थाः ।**
**तस्मादयं ग्रन्थवरोऽखिलोरुधर्मादिमोक्षान्तपुमर्थहेतुः ।**
**किं वोदितैरस्य गुणैरतोऽन्यैर्नारायणः प्रीतिमुपैत्यतोऽलम् ॥** (१७९)

रामचरितोपसंहारे नवमाध्यायान्ते चैतदेवाऽह–

**इत्यशेषपुराणेभ्यः पञ्चरात्रेभ्य एव च ।**
**भारताच्चैव वेदेभ्यो महारामायणादपि ॥**

**परस्परविरोधस्य हानान्निर्णीय तत्वतः ।**
**युक्त्या बुद्धिबलाच्चैव विष्णोरेव प्रसादतः ॥**

**बहुकल्पानुसारेण मयेयं सत्कथोदिता ।**
**नैकग्रन्थाश्रयात् तस्मान्नाऽशङ्क्याऽत्र विरुद्धता ॥** (९.१२५–७)

ऋतेऽस्मात् कः किमिति निर्णयेत् पञ्चषग्रन्थेष्वधीती–

**विनिर्णयो नास्त्यमुना विना यद् विप्रस्थितानामिव सर्ववाचाम् ।** (३२.१७३)

अत एव समग्रस्य ग्रन्थदुर्गस्य गोपुरायितस्य प्रथमाध्यायस्य 'सर्वशास्त्रतात्पर्यनिर्णयः' इति समुचितं नाम चकार ॥

महदभिमानस्थानं प्रमेयमिदमाचार्य आचष्ट, यन्न कोऽप्यन्यः प्रबन्धा प्रायः प्रवक्तुं प्रभवेत्–

**इत्यृग्यजुःसामाथर्वपञ्चरात्रेतिहासतः ।**
**पुराणेभ्यस्तथाऽन्येभ्यः शास्त्रेभ्यो निर्णयः कृतः ॥**

**विष्ण्वाज्ञयैव विदुषा तत्प्रसादबलोन्नतेः ।**
**आनन्दतीर्थमुनिना पूर्णप्रज्ञाभिधायुजा ॥**

**तात्पर्यं शास्त्राणां सर्वेषामुत्तमं मया प्रोक्तम् ।**
**प्राप्यानुज्ञां विष्णोरेतज्ज्ञात्वैव विष्णुराप्योऽसौ ॥ (१.१३६–८)**

ग्रन्थान्तेऽपीममेवार्थं पुनः सावधारणमाह–

**आनन्दतीर्थाख्यमुनिः सुपूर्णप्रज्ञाभिधो ग्रन्थमिमं चकार ।**
**नारायणेनाभिहितो बदर्यां तस्यैव शिष्यो जगदेकभर्तुः ॥**

**यस्तत्प्रसादादखिलांश्च वेदान् सपञ्चरात्रान् सरहस्यसङ्ग्रहान् ।**
**वेदेतिहासांश्च पुराणयुक्तान् यथावदन्या अपि सर्वविद्याः ॥ (३२.१७०–१)**

कस्तमृते जीवोत्तममेतादृशानां व्याहारणामीष्टे ॥

## संशोधकानां धूः

ग्रन्थसम्पादकेन संशोधकेन च वोढव्या धूरपि वधूरिव महता यत्नेन पालनीया भवति । अतिमहती चेयं भवति संशोधनधुरा । यदि तत्र प्रमाद्यति पाठदोषाः शिर उच्छ्रयन्ते । अमैवार्थदोषाश्च । एकस्यापराधेन समग्रोऽपि वाचकलोकः कथमप्यपथेन गच्छन् प्रमादगर्ते पतति । तं न क्षमेत भगवती विद्यादेवता । नूनमवलिम्पेदेव । अवलिप्य शपेदेव । तामेतां संशोधनधुरां स्मारयन्नेवाऽचार्यः स्पष्टमाचष्ट द्वितीयाध्याये–

**क्वचिद् ग्रन्थान् प्रक्षिपन्ति क्वचिदन्तरितानपि ।**
**कुर्य्युः क्वचिच्च व्यत्यासं प्रमादात् क्वचिदन्यथा ॥**

**अनुत्सन्ना अपि ग्रन्था व्याकुला इति सर्वशः ।**
**उत्सन्नाः प्रायशः सर्वे कोट्यंशोऽपि न वर्त्तते ॥**

**ग्रन्थोऽप्येवं विलुळितः किम्वर्त्थो देवदुर्ग्गमः ।**
**कलावेवं व्याकुलिते निर्ण्णयाय प्रचोदितः ॥**

**हरिणा निर्ण्णयान् वच्मि विजानंस्तत्प्रसादतः ।**
**शास्त्रान्तराणि सञ्जानन् वेदांश्चास्य प्रसादतः ॥**

**देशेदेशे तथा ग्रन्थान् दृष्ट्वा चैव पृथग्विधान् ।**
**यथा स भगवान् व्यासः साक्षान्नारायणः प्रभुः ॥**

**जगाद भारताद्येषु तथा वक्ष्ये तदीक्षया ।**
**सङ्क्षेपात् सर्वशास्त्रार्थं भारतार्थानुसारतः ॥**

**निर्णयः सर्वशास्त्राणां भारतं परिकीर्त्तितम् ।**(२.३–९)

ग्रन्थसंशोधनं नामेदमित्थमिति निष्कृष्य लक्षणमाहेदमुपज्ञमत्र सर्वज्ञाचार्यः । सार्वत्रिकमेतल्लक्षणं सार्वकालिकं च । समग्रे संस्कृतवाङ्मये केवलमिदमेकं लक्षणसञ्ज्ञानमुपलभामहे । नान्यत्र क्वापि । वदन्ति केचित् प्रियपश्चिमाः– ग्रन्थसम्पादनं संशोधनं च पाश्चात्यविपश्चिदुपज्ञमिति । अपूर्वमिदं तेषां संशोधनम् । तैरिदमवश्यं गमनीयं यदब्रूत भगवनाचार्य उपाष्टशतेभ्यः पूर्वमेव वर्षेभ्यः ॥

संशोधनं हि द्विप्रकारं भवति, पाठशुद्धिरिति, अर्थशुद्धिरिति । नचार्थशुद्धिः पाठशुद्धिमन्तरेण । नह्यशुद्धः पाठः प्रायः प्रभवति शुद्धमर्थं गमयितुम् । तत् संशोधकस्य प्रथमं कर्तव्यं शुद्धपाठस्य निर्धारणम् । नह्यपथे पतन् गम्यमासादयति ॥

अशुद्धपाठपरम्परायाश्चत्वारि कारणानि भवन्ति– प्रक्षेपोऽपक्षेपो व्यत्यासः प्रमाद इति ॥

केचिदिह स्वं दुराग्रहं प्रतनग्रन्थारूढं चिकीर्षन्तः, तेन निरालम्बायाः स्वश्रद्धायाः पुराणमूलतां दिदर्शयिषन्तः, स्वकृतानेव कतिचन श्लोकान् पुराणकुक्षौ निक्षिपन्ति नीरमिव क्षीरे । प्रक्षेपगर्भिणी पुराणी वागनृतं सुतं सूते । प्रक्षेप्तुरेकस्य मौर्ख्यं परस्तादज्ञा लिपिङ्करा अन्वकुर्वन् । ते किलाक्षरचणाः, नार्थचणाः । एवं प्रक्षिप्तमपि मूलेन साकं सर्वत्र प्रसृतं भवति ॥

ततश्च क्रियासमभिहारेणाभिहितमसत्यं सत्यमित्येव मन्यते मुग्धो लोकः । एकोऽपराधं कुरुते । अहो दुरन्तमिदम्, यत् फलं भुङ्क्ते पाश्चात्या विद्वत्परम्पराऽपि ॥

अनयैवान्धप्रक्रियया बह्वयः क्षेत्रमाहात्म्यकथा यथासम्भवं पुराणेषु प्राक्षेपिषत । बहवोऽभिनववेदव्यासा सावद्यान्यपि स्वपद्यानि स्कान्दपुराणान्तर्गतानीति प्रकटयामासुः । अस्माभिरनुभूतमेतत् प्रत्यक्षतः । द्वापरे त्वेक एव व्यासो बभूव । कलियुगे पुनर्बहवो बभूवुः ॥

एतेनैव प्रक्षेपमालिन्येन विभ्रान्ताः पुराणानां प्रामाण्यमेव केचित् समदिहत । पूर्वं सन्दिहानाः पश्चादश्रद्दधाना बभूवुः । सश्रद्धा अपि बहवः कियदत्र मूलं कियत् प्रक्षिप्तमिति निर्णेतुमप्रभवः संशीतिसरित्पतौ न्यमाङ्क्षुः । केचित् प्रक्षिप्तमेव मूलममंसत । अपरे मूलमेव प्रक्षिप्तम् । एवमकाण्डताण्डविनी पण्डितमण्डली तत्रतत्र पुराणवचनैरपार्थनैव समर्थयमाना दृश्यते । अहो असीममहिमा भगवान् भ्रमः ॥

गैर्वाण्यां वाण्यामकृतपरिश्रमाः केचित् पूर्वाग्रहमात्रपरिग्रहाः पुराणसाहित्यस्य स्वीयमुपहारमुपाहरन् । तदिदं शास्त्रेषु कपिचापलम् । यत्र न च्छन्दोबन्धः, नापि पदसाधुता तादृशान्यपि वचनानि पुराणवचनत्वेन प्रकटितानि । यत्र 'सप्तम्यायां तिथौ' इत्याद्यानद्भुतांश्छान्दसप्रयोगान् पश्यामः ॥

भविष्यपुराणे पुनर्विस्मयावहः प्रक्षेपः । तत्र ह्येवं कथा पठ्यते–भविष्यति म्लेच्छा भारतमाक्रम्य शासिष्यन्ति । यदा ते शासति तदा भारतीयाश्चैत्रो वैशाख इत्यादिकं मासनाम विस्मृत्य, अवज्ञया परित्यज्य 'जान्वरी फर्वरी' इत्यादीनि नामानि व्याहरन्तीति । अवधत्त– न जान्युवरीति नापि फेब्रुवरीति, किन्तु 'जान्वरी फर्वरी' इति । स्फुटमेतत् कस्यचिद्धिन्दीमातृभाषस्य कपिचापलमिति ॥

अपरामद्भुतां कथां निशमयत– प्रथममाचार्यशङ्करः प्रसारयामासाद्वैतं मतम् । तमाचार्यरामानुजो व्यजयत वादे । आचार्यरामानुजमाचार्यमध्वः । तमपि कृष्णचैतन्यः । अतोऽन्ते सिद्धं कृष्णचैतन्यमतमेव सन्मतमिति सिद्धमिति । अहो, सेयं भगवता बादरायणेन निरूपिता भाविनी कलिकथा । निर्विचिकित्समेतत् चक्षुष्मतां प्रेक्षावताम्, यत् कृष्णचैतन्यपथानुयायी कश्चिदेतां कथां पुराणे प्रचिक्षेपेति ॥

तदनुसारेण शङ्करो रामानुजो मध्वः कृष्णचैतन्यश्चेति चत्वारोऽपि एकस्मिन्नेव काले बभूवुः, जजल्पुश्च परस्परं सङ्गत्य जल्पकथाम् । अहो महीयसी अस्याभिनवबादरायणस्येतिहासप्रज्ञा ॥

बहून्येतादृशान्युदाहरणानि भवन्ति । शृङ्गग्राहिकया किञ्चिदेव न्यरूपि, पिण्डिकैव पीठिकातः पीठिकैव प्रतिमातः पृथुला मा स्म भवदिति ॥

अस्माद् दुर्व्यसनाद् दूरे वर्तितव्यमिति, जागरूकैश्च संशोधकैर्भवितव्यमिति जागरयत्याचार्यः– **'क्वचिद् ग्रन्थान् प्रक्षिपन्ति'** इति ॥

इदमिदानीं स्फुटमवेदिष्म–यदिदं प्रक्षेपदुर्व्यसनं न नूतनम् । आसीदाचार्यस्य भूमाववतरणात् पूर्वमपि । सहस्रात् समाभ्यः सम्प्रवृत्तेयं मूढमोहनी मूर्खपरम्परा, परकृतिषु स्वहस्तक्षेपः । परव्यापारेष्विव नासान्यासः ॥

ग्रन्थसंशोधकैः प्रथममत्र दृष्टिः पातनीया । मा स्मापपाठमेव पाठं भ्रमामेति । मा च स्म मन्तुनाऽनेनाध्येतृपरम्परामपपाठजम्बालजटिले प्रह्रौ प्रक्षिपामेति । अपार्थसमर्थनादपि महानयं मन्तुर्यदपपाठसमर्थनं नाम । येन यथार्थज्ञानपरम्परा समूलमुत्कृत्ता भवति । अतः परःशतं हस्तलिखितान् ग्रन्थान् समवलोक्य प्रथमं निर्णेतव्यं भवति कः शुद्धः कश्चाशुद्धः पाठ इति ॥



निरस्तः प्रक्षेपः । अथ द्वितीयमपक्षेपनिर्णयनम् । यत् स्वमतप्रतीपमिति दुराग्रहग्रस्तैर्मूलादुत्सारितं तदन्वेषमन्वेषं स्वस्थाने निधातव्यं भवति यावच्छक्यम् ॥

अपेक्षितस्य प्रक्षेपादप्यधिकोऽयमपराधचक्रवर्ती यदन्तरितकरणम् । ऐकागारिकाणां सार्वभौमोऽयं यो मूलग्रन्थानां पद्यान्येव निर्लज्जं मुमोष ॥

एवं विद्यमानं निरास्यन् । अविद्यमानं प्राक्षिपन् । मूलमेव निरमूलयन् ॥

सम्प्रति नोपलभामहे बहूनि वचनानि यानि श्रुतिपुराणगतानीति भगवत्पाद उज्जहार । कारणमिदं यत्तेषां वचनानामुद्धपनम् । शैवा विष्णुपारम्यपरं भागमुदवपन् । वैष्णवाः शिवपरम् । अभेदवादा भेदपरम् । भेदवादा अभेदपरम् ॥

सम्प्रति ससाक्षिकमिदं शक्यं प्रत्याययितुम् । गृहीतस्तस्करो लोप्त्रेण सह । इदमेकमुदाहरणम्–

विष्णुतत्वनिर्णये मैत्रायणीयशाखात इदं श्रुतिवचनमुद्धृतं भगवत्पादेन–**'मिथ्यातर्कैः कुहकेन्द्रजालैर्वैदिकेषु परिस्थातुमिच्छन्ति । न तैः सह संवसेत् । प्राकाश्या ह्येते तस्कराः'** इति । एतावन्तमनेहसं परैः कण्ठविदा-रमुद्घोषितम्–आचार्योपज्ञमिदं वचनम्, न जातु श्रुतिगतमिति । सम्प्रति दिष्टया मैत्रायण्युपनिषदुपलब्धा । तत्रेदं वचनं च । तेन मुद्रितमुखाः परे परास्ताः ॥

आचार्यपादागमनात् पूर्वमेव यथेच्छमुद्वापाः प्रावर्तन्त । अत आचार्य आह– जागृतास्मिन् विषये । मा च स्म प्रमाद्यतेति । अथापि लोको न जजागार । प्रमत्तो विगतविद्यावित्तो ददरिद्रौ । निमील्य नेत्रे, सत्यं मा श्रवणपथमपि गादिति पिधाय श्रोत्रे अपि उद्वापशुभसम्प्रदायमेवानुप्रावर्तयत निरन्तरं च निरन्तरायं च सम्मूढः पण्डितवर्गः ॥

आस्तामन्या वार्ता । आचार्यमध्वस्य ग्रन्थेष्वेव बहुलमावापा उद्वापाश्च । अपरिचितप्राचीनपाठा निगूढ-दुराग्रहा अत एव विस्मृतसत्यपथा यथाकथाच स्वीयमपपाठं समर्थयितुं सुदृढबद्धपरिकराः परे परितः पराक्रमन्तैव । प्रचलितः प्रकटितः पाठ एव तेषां सर्वस्वम् । न मूलकोशानामनुशीलनम् । नाप्यातळं निमज्जनम् । अथापि लवणरसं लेलिहानाः परिप्लवन्ते । अपिच कुचरा विकटं डयन्ते । तेन वादो विवादता-माप । अपवादतां च ॥

एतेन दुर्व्यसनेनाऽचार्यरचितमेकं स्तोत्रमेवान्तरितमासीत्– **'शङ्खचक्रगदापद्मशार्ङ्गखड्गधरं सदा–'** इत्यादिकम्, **'लोकालोकपतिं दिव्यं नमस्यामि रमापतिम्'** इत्यन्तम् । द्वौ ग्रन्थावेवान्तरितावास्ताम्– न्यासपद्धतिरिति तिथिनिर्णय इति ॥

संशोधनप्रज्ञाविधुराणां विस्मृतधुराणां हस्ते निगळबद्धस्य वेदान्तस्य दशैवेदृशी । सकपोलताडनमञ्जलि-बद्धानां मुग्धानामयं सुवर्णावकाशः । समग्राऽपि वेदान्तसरणिः समजनि कौपमण्डूकी ॥

अस्मादपायादुत्तर्तव्यमित्यचार्यमध्वः करुणया पुरैव जागृयातेत्यभाषत– **'क्वचिदन्तरितान् कुर्युः'** इति ॥

*

संशोधकस्य तृतीयं कर्तव्यम्– येषाङ्केषामपि हस्तक्षेपेणास्तव्यस्ततया यत्रकुत्रापि पठितानां प्रकरणानां श्लोकानां वाक्यानां वा क्रमिकतया योजनेन स्वस्थाने पुनःस्थापनम् ॥

लिपिचणा एवं चक्रुः– तेषामभिमते यत् प्रमुखमिति भाति तत् प्रथमं लिलिखुः । व्युत्क्रमेण वा मूले पठितानि, मूलकाराशयमविदित्वा कथानुक्रमेण लिलिखुः । अतो ग्रन्थेषु बहुशः पूर्वापरीभावः समजनि । इदमेक-मुदाहरणमेतत्प्रत्यायनाय पर्याप्तम् । प्रसिद्धं श्रीविष्णुसहस्रनाम कस्मिंश्चित् पाठे, अनुशानपर्वणि १३५तमे-ऽध्याये पठ्यते । एकस्मिन् १४०तमेऽध्याये । अपरस्मिन् १४९तमेऽअध्याये । अन्यस्मिन् २५४तमेऽ-ध्याये । एवं भारते भागवते चैतद् बहुलमुपलभ्यते । विशेषतश्च भागवतस्य दशमस्कन्धे । महाभारते दक्षिणोत्तरपाठयोर्महदन्तरम् । क्वचिदावापस्य च । एवमौत्तराणामध्यायक्रमस्य दाक्षिणानां च साङ्गत्यमेव नास्ति ॥

एवं पूर्वापरीकारे, अपरपूर्वीकारे च संशोधकेन जाग्रता भाव्यमिति बोधयत्याचार्यः करुणया–**'कुर्युः क्वचिच्च व्यत्यासम्'** इति ॥

*

त्रयमेतद् बुद्धिपूर्वम् । अपरं तुरीयमबुद्धिपूर्वं लेखकप्रमादफलम् । विद्वांसोऽपि प्रमाद्यन्ति । किमुत मूढा लिपिकराः । सेयं मूढता प्रमादसन्तानजननी । अतोऽपि सदा शोधका जागृयुरित्याहाऽचार्यः– **'प्रमादात् क्वचिदन्यथा'** इति ॥

अपरिचितपुराणभाषैरनाघ्रातप्रतनव्याकरणगन्धैः, मुख्यतस्त्वनालीढवैदिकव्याकरणैरनास्वादितप्रातिशाख्यैः प्रत-नग्रन्थेष्वेतादृशाः प्रमादाः प्रचुरमाचीर्णा दृश्यन्ते ॥

इमानीह कानिचनोदाहरणानि– अनेनैवाज्ञानविजृम्भणेन 'पशून्तान्' इति वैदिको मन्त्रः 'पशूंस्तान्' इति विपर्यास्यत । 'श्रोत्रियंश्छन्दोऽधीते' इति पाणिनीयं सूत्रं 'श्रोत्रियश्छन्दोऽधीते' इति । किं बहिरन्वेषणेन?

अस्मिन्नेव ग्रन्थे भगवताऽऽचार्येण प्रयुक्तानि–'बाहुषाळी, अक्षोहिणी, सङ्कम्, भत्सनम्, शुन्ध्युः' इत्यादीन्यपूर्वाणि पदानि–'बाहुशाली, अक्षौहिणी, सङ्कचम्, भर्त्सनम्, शुन्धिः' इति व्यत्यास्यन्त ॥

तदिदं किञ्चिदधीतपाणिनिनयानां विगतविनयानामविद्यायामन्तरे परिवेष्टच्यमानानां पण्डितं मन्यमानानां प्रमादफलम् ॥

अहो सिद्धान्तकौमुदीपर्यन्तपाण्डित्यपिहितनयनानां चापलमेतद् यत् प्राचामाचार्याणामपूर्वप्रयोगान् स्वप्रज्ञानुगुणं परिवर्त्य तेषां मानमरिरक्षिषन् । एतेन महाप्रमादेन महापुरुषैरुपहृताऽप्यपूर्वपदानामुपदा नूनमपदे क्लीबे दत्ता कुमारीव वन्ध्या बभूव । एतादृशानामप्रबुद्धानामेवैकस्वाम्यं सम्प्रति ग्रन्थसंशोधनरङ्गे । प्रतनप्रयोगमानभञ्जनैरेतादृशैर्जनैर्मुग्धजनरञ्जनैर्हन्त रक्षणीयं प्रतनवाङ्मयम् । विशिष्य च माध्व्यो गावः ॥

सम्प्रत्यपि संशोधकस्य स्वकर्मण्येतान्येव मूलसूत्राणि– प्रक्षेपनिरासः, उद्धापोद्धारः, पूर्वापरीभावसमीकरणम्, प्रमादपरिमार्जनमिति । एत एव मानदण्डा मूलशुद्धौ । अनधिकारिणामथापि संशोधने प्रवृत्तानामकाण्डताण्डविनां पण्डितब्रुवाणां दण्डनेऽपि ॥

तदेवं शास्त्रीयसंशोधनस्य पन्थानमाविष्कुर्वन्निदमुपज्ञं महान् ग्रन्थराजः श्रीमहाभारततात्पर्यनिर्णयः । अयं साध्वाचाराणामध्वा मध्वादृतः– प्रथमं शुद्धस्य पाठस्य निर्धारणम् । ततस्तेन पथा यथायथं शुद्धमर्थं प्रति प्रयाणम् ॥

समग्रे संस्कृतवाङ्मये ग्रन्थोऽयं स्वयमेव स्वस्योपमानम् । नेतः पूर्वमीदृशः प्रबन्धः केनापि प्राणायि । नापि प्रायः प्रणेष्यते । इदम्पूर्वमिदश्चरमं चेदं परमं कृतिरत्नम् ॥

आचार्यमध्वस्य प्रियतमः शिष्यप्रवरः श्रीत्रिविक्रमपण्डिताचार्यः स्वरचितायां मन्त्राक्षरचितायां श्रीवायुस्तुताविमं ग्रन्थराजमेवमस्तोष्ट–**'पुनरपि बदरीं प्राप्य कृष्णं च नत्वा कृत्वा भाष्याणि सम्यग् व्यतनुत च भवान् भारतार्थप्रकाशम्'** इति ॥

एतेनैतदपि ज्ञायते– यत् प्रथममाचार्यः प्राणेष्ट गीताभाष्यम्, अथ ब्रह्मसूत्रभाष्यम्, ततो दशोपनिषदां भाष्याणि । अन्ते चैनं महाप्रबन्धं प्रबबन्ध । तेन च महाभारतस्य श्रीबादरायणाभिमतमर्थं समर्थं प्रकाशयामासेति ॥

विदुषां रसायनमेतत् । विमर्शकानां खण्डखाद्यम् । पुराणार्थमधिजिगांसूनामनुपमं मार्गदर्शनम् । निधानं विस्मृतानामपूर्वपदानाम् । परन्तु दुरन्तमेतत्– यदद्यत्वे सर्वसमस्यापरिहारसाधनं संशोधनमहाधनमिमं प्रबन्धं बालानां भारतरामायणकथाबोधनाय बालादर्शमिव पाठयन्तीति ॥

## वैदिकवाङ्मयस्यापूर्वमुपहरणम्

जगाद भगवान् बादरायणः– **'इतिहासपुराणाभ्यां वेदं समुपबृंहयेत्'** इति । तेन प्रथममितिहासानाम्, मुख्यतो महाभारतस्येतिहासराजस्य, पुराणानां चाधीतिः । अथ तदवलम्बेन वेदार्थनिर्णिनीषया सूत्रप्रस्थानोपस्थानम् ॥

इतिहासप्रस्थाने बन्धुरवर्त्मनि प्रचरतामस्खलितयात्रायै चतुरः प्रबन्धान् निरमिमीत प्रबन्धृवरेण्यो भगवान् मध्वः– गीताभाष्यम्, गीतातात्पर्यनिर्णयः, महाभारततात्पर्यनिर्णयः, महाभारततात्पर्यं च, यदधुनातना यमकचकिता यमकभारतमिति व्यपदिशन्ति विस्मृतमूलनामधेयाः ॥

अथ पुराणस्थानपान्थानामेकाऽपूर्वतमा कृतिराज्ञी– भागवततात्पर्यनिर्णयः ॥

सूत्राणामन्तरङ्गमननार्थं चत्वारि ग्रन्थरत्नानि– ब्रह्मसूत्रभाष्यम्, अनुव्याख्यानम्, न्यायविवरणम्, सर्वशास्त्रार्थसङ्ग्रह इति प्रथितं सङ्ग्रहभाष्यं च, यदधुनातना अणुभाष्यमिति भाषन्ते ॥

श्रुतीनां श्रुतिशिरसां च निगूढार्थनिर्णयाय द्वादश ग्रन्थाः । मन्त्रभागमागूर्य ऋग्भाष्यम् । ब्राह्मणभागे त्वैतरेयब्राह्मणस्य खण्डमेकं विवरीतुम्, ऐतरेयारण्यकस्य महानाम्नीमन्त्रखण्डं च विवरीतुं खण्डार्थनिर्णयः, यमधुनातना कर्मनिर्णय इति कथयन्ति, एवं दशानामुपनिषदां भाष्याणि च दशेति । एवं मन्त्रो ब्राह्मणमारण्यकमुपनिषदिति चतुर्मुखोऽपि वेदो व्यव्रियत भाविचतुर्मुखेन ॥

एवमाचार्यप्रणीतेषूपपञ्चाशेषु प्रबन्धेष्वेकविंशतिः साक्षाद् वेदस्य वैदिकवाङ्मयस्य चार्थनिर्णयायैव निर्मिता । एतावद्भिः कृतिरत्नैरितिहासपुराणाभ्यां वेदवचांसि समुपबृंह्य प्रथमं समन्वितार्थसरणिप्रदर्शनजा कीर्तिराचार्यमध्वस्यैव शोभते ॥

अस्मिन् प्रकाशने श्रीमहाभारततात्पर्यनिर्णयः श्रीहृषीकेशतीर्थलिखितप्रतनपाठानुसारी श्रीवेदाङ्गतीर्थभट्टारकविरचितयाऽपूर्वया व्याख्यया संवलिता चेदमुपक्रमं प्रकटीक्रियते । महाभारततात्पर्यमितः पूर्वमेव श्रीनरहरितीर्थकृतया नवनवार्थप्रकाशिकया परिशुद्धया टीकया सह प्रकट्यकारि ॥

महाभारतात्पर्यनिर्णये तावदष्टादशपर्वात्मकस्य लक्षश्लोकनिबद्धस्य महाभारतस्य, सहैव च भारतखिलस्य हरिवंशस्य, भागवतस्य च समग्रं विश्लेषणमकारि । अन्येषां च पुराणानां यथासम्भवम्, सृष्टिविलयप्रक्रियाभागस्य, भगवदवताराणां कथाविस्तरस्य च । पूरकतया पञ्चरात्रसंहितानाम्, मूलरामायणस्य, श्रुतिवचसां च ॥

प्रमुखतया चात्र प्राणतत्वस्य यदवतारत्रयं हनुमान् भीमो मध्व इति, तत्सम्बद्धं च भगवतो यदवतारत्रयं रामः कृष्णो बादरायण इति तत्कथाया समग्रं निरूपणम्, सङ्क्षिप्ततया च दशानामप्यवताराणाम्, तत्सङ्गततया धन्वन्तरेर्मोहिन्याश्च कथाया निरूपणमकारि । एवं वैवस्वतमन्वन्तरीया अवताराः समग्रतया न्यरूपिषत ॥

## संशोधनरङ्गस्य पीठवेदिका

मूलग्रन्थानां संशोधनं नाम किमित्यस्य पीठवेदी कृतिरियमित्यवगतम् । न केवलं तावदेव । सर्वस्यापि संशोधनप्रपञ्चस्येदं मूलम् । अत्र किञ्चिदिवोदाहरणम्–

शिबिरदाहानन्तरभाविनी कथा महाभारते तावदेवं श्रूयते– अश्वत्थामा पञ्चानामपि द्रौपदेयानामुत्कृत्य शिरांसि दुर्योधनाय दर्शयामास । तद्दर्शनेन हर्षनिर्भरो ममार कौरवः । ततो द्रौणिर्विपिनपथं पपात । भीमस्तमनु पपात । तमनु च कृष्णार्जुनौ युधिष्ठिरश्च । ततो द्रौणिरुपायान्तरमपश्यन्नात्मरक्षायै मुमोच ब्रह्मशिरोस्त्रम् । अर्जुनोऽपि तत्प्रतिष्टम्भाय प्रत्यस्त्रम् । अथाजगाम भगवान् बादरायणः । उभे अप्यस्त्रे उप-संहरतमिति तावादिदेश । अर्जुनः सत्वरमुपसञ्जहार । न शशाक द्रौणिः । तदा द्वैपायनः प्राह– अस्त्रोप-संहारमजानन् कथमथ प्रायोक्षीः । कृतापराधोऽसि । तत्परिमार्जनाय विश्राणय ते शिरोमणिमिति ॥

व्यासोपदेशेन द्रौणिरुत्कृत्य शिरोमणिं भीमाय ददौ । बादरायणेन वासुदेवेन च शप्तः स तपसे विपिनं विवेश ॥

इयं भारतगा कथा । भागवते पुनरन्यादृशी कथा पठ्यते–

सुप्तानां द्रौपदेयानामवैधं वधं विधाय धावन्तं द्रौणिमनुजग्मतुः कृष्णार्जुनौ । अथ द्रौणिर्विससर्ज ब्रह्मा-स्त्रम् । अर्जुनस्तदुपसंहृत्य बबन्ध द्रौणिम् । बद्ध्वाऽऽनिनाय पाञ्चालीसकाशम् । निशाम्य तमाह पाञ्चाली– विमुञ्चैनम् । जानामि हतसुताया मातुः शोकम् । मा चास्य माताऽहमिव तनयाधिमनुभूदिति । अथ पार्थश्चकर्त तच्छिरसो रत्नम् । तं च मोचयामासेति ॥

एवं भारतमेकमाह । भागवतं चापरम् । कतरदिह वयमहो श्रद्दधीमहि? द्वयमपि तथ्यमिति सर्वथा न पथ्यं वचः । नहीतिहासो विकल्पमर्हति । इदं वा स्याददो वा । नेदमदो वेति सम्भवति । यदि तथ्यं भारतोक्तमतथ्यं तर्हि भागवतोक्तम् । यदि भागवतोक्तं तथ्यमतथ्यं तर्हि भारतोक्तम् । अपि स्यादुभयमप्यतथ्यम् । नोत जातूभयमपि तथ्यम् ॥

अधीतिनिरतानामियं निरुत्तरा समस्या । आचार्यावतरणं यावत् न कश्चिदपि विपश्चिदेतत्परिहाराय प्रायततापि ॥

विरोधं पर्यहरदाचार्यः । पर्यदर्शयदैकार्थ्यम् । स उज्जुघोष उभयमपि तथ्यम् । भारतं जाग्रत्तथ्यम् । भागवतं स्वप्नतथ्यमिति ॥

अटवीमटाट्यमानो द्रौणिरायस्तः क्वचिदास्त । अथ किञ्चिदिवाऽगतनिद्रः स्वप्नमेतं ददर्श अर्जुनेन केशग्राहं गृहीत इव, मातृवात्सल्यात् पाञ्चाल्या मोचित इव । मनःशास्त्रानुगुणः स्वप्नः । मनोविज्ञानिनां हर्षदं चेदमाचार्योक्तं विवरणम् ॥

अस्तु नाम । एकं स्वप्नदर्शनम् । अपरं जाग्रद्दर्शनम् । उभयमपि तथ्यम् । अथापि द्वयोरिदमेव स्वप्नदर्शनमद एव जाग्रद्दर्शनमित्यस्य किं गमकम्? विपर्ययोऽपि स्यात् । अस्याप्युत्तरं ददावाचार्यः पुराणवचनेनैव । तदिदमाचार्योदाहृतं स्कान्दवचनम्—

**पार्थानुयातमात्मानं द्रौणिः स्वप्ने ददर्श ह ।**
**बन्धनं चाऽत्मनस्तत्र द्रौपद्या चैव मोक्षणम् ॥**

तदेवं भारतं भागवतं स्कान्दं चेत्येतत् त्रयं संहत्य यः समग्रमधिजगाम स एवैवं समन्वितमर्थं वर्णयितुं प्रभवेत् । नह्येकमपि तत्वतो ज्ञातुं शक्यमृते सर्वज्ञताम् । नह्येकस्य ज्ञानाय तन्मात्राध्ययनेन पर्याप्तम् । एकं जानन् नैकमपि जानाति । समग्रं जानन्नेवैकमपि समग्रं जानीयात् । एवमस्मानेतेन प्रसङ्गेन बोधयत्याचार्यः ॥

✻

इदमन्यदुदाहरणम्—

शिखण्डिने कश्चिद् यक्षः स्वं पुन्देहं ददाविति श्रूयते । कोऽयं यक्षः? किन्नामा? स्थूणाकर्ण इति भारते पठ्यते । अथापि न सन्देहनिस्तारः । कोऽयं स्थूणाकर्णः? नान्यत्र क्वापि स्थूणाकर्णं नाम कञ्चन यक्षमाकर्णयामः । अपूर्वोऽयं यक्षः कुतोऽवततार? तमेतं यक्षप्रश्नं धर्मराज इव परिजहार भगवत्पादः— तुम्बुरुरेवायं स्थूणोपमावस्य कर्णाविति स्थूणाकर्ण इति निरदिश्यतेति । शुश्रुमस्तुम्बुरुम् । तेनाधिगतः स्थूणाकर्णः ॥

✻

इदमपरमवधेयम्– वालिसुग्रीवयोरायोधने अभिज्ञानार्थं सुग्रीवस्य ग्रीवायां गजपुष्पीलतामासञ्जयत सौमित्रिरिति रामायणे पठ्यते । हनुमानिति भारते । कथमत्र समन्वयनमिति? प्रश्न एवायमसङ्गतः । न रामायणे सौमित्रिरिति पठ्यते । किन्तु लक्ष्मण इति । तेनाऽचार्यः पर्यहरत्– हनुमानेव मालामलगयदिति । नन्वयं पक्षपातः । कथमनेन विरोधः पर्यह्रियत? हनुमानित्याञ्जनेयस्यासाधारणं नाम । लक्ष्मण इति सौमित्रिरपि स्यात् । लक्ष्मीवानन्योऽपि स्यात् । **'रामभ्रातरि पुंसि स्यात् सश्रीके चाभिधेयवत्'** इति हि स्मरन्ति । तेन लक्ष्मण इति सामान्यवचनं सावकाशं लक्ष्मीवन्तं हनुमन्तमपि ब्रूयात् । हनुमानिति निरूढवचनं निरवकाशम् । सावकाशं निरवकाशेन शक्यं बाधितुमिति विदितमेव विदुषाम् ॥

एवं पुराणेष्वधीतिनः सुधियो विजानीयुरेव पुराणसंशोधनरङ्गे भगवत आचार्यस्य पात्रं महत्तरमिति । अपरेषां मृत्पिण्डबुद्धीनां पुनरिदं भारतरामायणकथासङ्ग्रहमात्रम् ॥

अनुव्याख्याने यदवोचदाचार्यस्तदत्राप्यनुसन्धेयम्– **बहुज्ञा एव जानन्ति विशेषेणार्थमेतयोः ।**



आस्तां तावद् ग्रन्थान्तरैर्विप्रतिषेधः । महाभारत एव सम्प्रति द्विविधः पाठ उपलभ्यते । दक्षिणादिः पाठ उत्तरादिश्चेति ॥

उत्तरादिपाठेऽल्पीयांसः श्लोकाः । अधिका दाक्षिणात्ये । उभयत्रापि महान् कथाव्यत्यासः । अभिमन्युश्चक्रव्यूहं विवेशेत्युत्तराहि पठन्ति । पद्मव्यूहमिति दक्षिणाहि ॥

सुभद्रामर्जुनः सहजेनैव रूपेण जहारेत्युत्तरापथगाः । यतिवेषेणेति दक्षिणापथगाः । कः पाठः साधीयान्? किमुत्तरात्? आहो दक्षिणात्? य एव प्रतनः । यतरः प्रतनः पाठः?

निर्णयग्रन्थोऽयमेषां सन्देहानां परिहारपथं प्रदर्शयति ॥

अभिमन्युर्न चक्रव्यूहं विवेश । किन्तु पद्मव्यूहम् । पार्थः सहजवेषेण न सुभद्रां जहार । किन्तु यतिवेषेण जहारेति ॥

एतेनेदं तावदवसीयते– यदुत्तरादेरपि दक्षिणादिरेव पाठः साधीयान् प्रतनश्चेति ॥

उत्तराद्वसन्तो यवनैराक्रान्ता विस्तरं विच्छिद्य बहून् ग्रन्थभागानन्तरितान् कृत्वा ह्रसीयो भारतं पेठुरिति ज्ञायते ॥

उत्तरभारते उत्तरपश्चिमायां क्वचित् कोणे जातः पतञ्जलिः । तस्य जन्मभूमिर्यवनैराक्रान्ता । नाशिता च सर्वा पुस्तकसम्पत् । तद्रचितं पाणिनिसूत्रभाष्यमहो महता यत्नेन दाक्षिणात्या ररक्षुरितीदानीमप्युप-लभामहे । यदि ते नारक्षिष्यन् हन्त महत्तरमतिरुचिरं चिरत्नं ग्रन्थरत्नमेकं सर्वात्मना लुप्तमेवाभविष्यत् ॥

एवं महाभारतमपि । उत्तरस्यां हिमवतस्तटान्तरे लब्धरूपस्य लोकोत्तरस्य सर्वशास्त्रोत्तमस्यानुपमसुषमस्य महाभारतस्य शुद्धं पाठं दक्षिणभारत एवोपलभामहे । तेन दण्डकारण्यमेव पुण्यभूमिर्बभूव ॥

*

आचार्योऽत्राविकलं कानिचन पद्यान्युज्जहार । तेन पाठनिर्णयेऽपि महदुपकृतं भवति ॥

मङ्गलपद्य एव पाठान्तरस्य नान्दी । एवमधुना पठन्ति–

**नारायणं नमस्कृत्य नरं चैव नरोत्तमम् ।**
**देवीं सरस्वतीं चैव ततो जयमुदीरयेत् ॥**

द्वितीय एकं तृतीये चैकमिति चैवद्वयम् । कोऽपि महामतिर्मूलपाठं स्वप्रज्ञावैभवेन व्यत्यस्य कवीनां कविं बादरायणमेव 'चवैतुहि'कविं चकार ॥

अथच जयमुदीरयेदिति न विधिः । किन्तूदीरय इति प्रवक्तुः प्रतिज्ञानम् । तस्यैतस्य व्यासविवक्षितमर्थं प्रतनं च पाठं भगवत्पादो दर्शयामास–

**नारायणं नमस्कृत्य नरं चैव नरोत्तमम् ।**
**देवीं सरस्वतीं व्यासं ततो जयमुदीरये ॥**

अयं प्रतनः शुद्धः पाठः । यत्र षण् नमस्कारा भवन्ति । प्रथमं नारायणो नरश्च नतौ । ननु तावेवात्र कृष्णोऽर्जुनश्च । अथ य एव नरोत्तमो जीवोत्तमः, स एवात्र नरश्रेष्ठो भीमसेनः । नरस्यार्जुनस्य ज्यायान् भ्राता चेति नरोत्तमः । एवं वायुरपि नतः । ततो देवी देवस्य नारायणस्य दयिता विद्यामानिनी श्रीः । सैवात्र रुग्मिणी रमा चेति द्विरूपा बभूव । ततः सरस्वती वाग्देवता । सैवात्र द्रौपदी बभूव । अन्ते पाण्डवानां वंशमूलं पितामहो भगवान् व्यासः सर्वेषां गुरुरिति प्रबन्धा चेति प्रणतः । रमणीयः सन्नि-वेशः । महार्थं मङ्गलाचरणम् । व्याख्यातं चैतदेवमेव पञ्चरात्रे । तदुद्धरणेनैतमर्थमाविश्चकारेदमुपज्ञं भग-वानाचार्यमध्वः ॥

*

अयमपरः श्लोकः–

**मन्वादि केचिद् ब्रुवते ह्यास्तीकादि तथाऽपरे ।**
**तथोपरिचराद्यन्ये भारतं परिचक्षते ॥**

एतत्पद्यार्थः न कस्यापि पण्डितस्य पुस्फोर यावदाचार्यो विववार । आचार्यात् पूर्वं व्याख्यातृभिर्विवृतः, अद्यापि कैश्चिच्चक्षुषी निमील्य विव्रियमाणोऽर्थः– 'केचिद् भारतं मङ्गलपद्यारम्भं ब्रुवते, अपरे त्वास्तीकपर्वत एव भारतारम्भमाचक्षते । अपरे पुनरुपरिचरचरितात्, अंशावतरणपर्वतः' इति ॥

अपष्ठु विवरणम् । अहो कुत्र भारतारम्भ इति भारतप्रणेतुरेवानिश्चयः । अपटुधियः किमपिकिमपि रटन्ति ॥

अस्य समञ्जसमर्थं प्रथममाचार्य एवाऽविश्चकार, भारतस्यार्थत्रयपरतावचनमेतदिति ॥

एकोऽर्थः– मननीयं मनःशास्त्रीयमर्थमादाय प्रवर्तत इति मन्वादि भारतमुच्यते । अस्यां विवक्षायां पाण्डवाः पञ्च, द्रौपदी, कृष्णश्चेति सप्तेमे, अष्टादश मूल्यानि प्रतिनिदधते ॥

१. धर्मराजः – धर्मः ।

२. भीमसेनः – भक्तिः, ज्ञानम्, वैराग्यम्, प्रज्ञा, मेधा, धृतिः, स्थितिः, योगः, प्राणः, बलं च ।

३. अर्जुनः – श्रवणम्, मननम्, निदिध्यासनं च ।

४–५. नकुलसहदेवौ – शीलविनयौ ।

६ द्रौपदी – वेदविद्या ।

७. कृष्णः – वेदवेद्यः ।

इमान्यष्टादश तत्वानि । धर्मराजो धर्माख्यमेकं तत्वं प्रतिनिधत्ते । भीमो भक्त्यादीनि दश । श्रवणादीनि त्रीण्यर्जुनः । शीलविनयौ नकुलसहदेवाविति संहत्य षोडशतत्वानि । साधक एतानि १६ तत्वान्यात्मनि साधयित्वा सप्तदर्शी वेदविद्यामधिगत्य, तयाऽष्टादशस्य वेदवेद्यस्य प्राप्तये प्रयतेतेतीयमाध्यात्मिकी साधनलोकस्यान्तरङ्गकथा । अयमेव मनोविज्ञानमय आध्यात्मिको भारतार्थः । अयमेव च मन्वादिरर्थः । अस्य सारो भगवद्गीता ॥

द्वितीयमास्तीकादि व्याख्यानम् । आस्तिकतमान् पाण्डवानादाय प्रवृत्ता वीराणां गाथा । महावीराणां चरितम् । अयमैतिहासिको महाभारतस्यार्थः ॥

तृतीयं विवरणमुपरिचरादि । सर्वस्मादुपरिचरमूर्ध्वं भगवन्तमादाय प्रवृत्ता व्याख्या । प्रतिश्लोकं प्रतिपदं प्रत्यक्षरं भगवत्परमित्यनुसन्धानम् । सर्वं भगवन्नामस्मरणम् । परममुख्योऽयं तात्विकोऽर्थः । इदमेवोपरि-चरादि विवरणम् । अस्य सारः श्रीविष्णुसहस्रनामस्तोत्रम् ॥

एवं त्रिमुखी महाभारतगतिः । आस्तिकानामितिहासमुपस्थाप्य पाण्डवादिभिरिवास्माभिरपि धर्मपथे वर्तितव्यमिति प्रज्ञां विकास्य, मनः संशोध्य भगवन्तं प्रति नयनम् । उपर्युपरि समारोहः ॥

यस्य यावती योग्यता तस्य तावानर्थः ॥

एवमपूर्वमर्थमस्य पद्यस्यास्मत्पुरत उपस्थाप्य भगवानाचार्यः प्रमाणसंवादेन च तमर्थं द्रढयामास ॥

न केवलमर्थः । आचार्यादृतः पाठोऽप्यन्यादृशः, य उपरि निर्दिष्टः । सम्प्रति तु किञ्चिदिवान्यथा पठन्ति–

**मन्वादि भारतं केचिदास्तीकादि तथाऽपरे ।**
**तथोपरिचराद्यन्ये विप्राः सम्यगधीयते ॥**

नान्ततोऽर्थभेदः । अथाप्याचार्योपज्ञं शुद्धः, अर्थदृष्ट्या चोत्तमः पाठ उपलब्ध इति महदिदं सन्तोषस्थानं तत्वबुभुत्सूनाम् ॥

✻

अन्यच्चेदमुदाहरणम्–

कीचकं भीमो व्यापादयामास । गूढचरास्तं गन्धर्वनिसूदितं दुर्योधनाय निवेदयामासुः । तदा दुर्योधनस्य प्रतिक्रिया कीदृश्यासीत्? उत्तरभारतीयपाठे दुर्योधनस्य मौनमेवोत्तरम् । दाक्षिणात्या एवं पठन्ति–

**सत्वे बाहुबले धैर्ये प्राणे शारीरसम्भवे ।**
**साम्प्रतं मानुषे लोके सदैत्यनरराक्षसे ॥**

**चत्वारस्तु नरव्याघ्रा बले शक्रोपमा भुवि ।**
**उत्तमाः प्राणिनां तेषां नास्ति कश्चिद् बले समः ॥**

**समप्राणबला नित्यं सम्पूर्णबलपौरुषाः ।**
**बलदेवश्च भीमश्च मद्रराजश्च वीर्यवान् ॥**

**चतुर्थः कीचकस्तेषां पञ्चमं नानुशुश्रुमः ।**
**अन्योन्यानन्तरबलाः परस्परजयैषिणः ॥**

असङ्गतोऽयं पाठः । बलदेवादयः **'अन्येन्यानन्तरबलाः'** इत्युच्यते । अथ **'समप्राणबलाः'** इति चोच्यते । भीमादपि बलदेवो बलीयानिति च । **'नरव्याघ्राः'** इति **'प्राणिनामुत्तमाः'** इति च नातिभिन्नार्थाभ्यां विशेषणाभ्यां पुनरुक्तता च । **'बले शक्रोपमाः'** इति, **'तेषां नास्ति कश्चिद् बले समः'** इति च विप्रतिषिद्ध-मिव । **'परस्परजयैषिणः'** इति व्यर्थमपार्थं च । भीमस्य गदाशिक्षायां बलभद्रो गुरुरासेति जानता केनचिदभिनवपण्डितेन पाठोऽयं व्यत्यास्यत । हन्त विसस्मार चायं पूर्वप्रमेयम्– बलरामस्य नरावतारत्वम्, भीमस्य नरोत्तमत्वमिति । अतोऽत्र शिष्य एव गुरुमतिशिश्य इति सूक्तम् । तदेवमर्थतः शब्दतश्च श्लथबन्धः प्रचलितः पाठः । अयमत्राचार्योद्धृतः प्राचीनः समीचीनः पाठः–

**सत्वे बाहुबले धैर्ये प्राणे शारीरसम्भवे ।**
**साम्प्रतं मानुषे लोके सदैत्यनरराक्षसे ॥**

**चत्वारः प्राणिनां श्रेष्ठाः सम्पूर्णबलबौरुषाः ।**
**भीमश्च बलभद्रश्च मद्रराजश्च वीर्यवान् ॥**

**चतुर्थः कीचकस्तेषां पञ्चमं नानुशुश्रुमः ।**
**अन्योन्यानन्तरबलाः क्रमादेव प्रकीर्तिताः ॥** (म.भा.ता.नि.२.१६३–६)

अहो, अर्थदृष्ट्याऽतिरमणीयः पाठः । पदकृत्ये चान्यूनानतिरिक्तः । अनयैव दिशा यदि समग्रं मूलं भगवन्मुखात् श्रावंश्रावमन्तेवासिनोऽलेखिष्यन् सुकरं शास्त्राध्ययनमभविष्यत् । हन्त दुर्भगा वयम् ॥

❊

कर्णपर्वणि चेदमपरमुदाहरणम् । युद्धारम्भात् सप्तदशदिनान्यतीतानि । बहवो दुर्योधनानुजा भीमगदामृदिता मृताः । सप्तदशे सेनापहारे सायमश्वत्थामा दुर्योधनमाह–

**धनञ्जयस्तिष्ठति वारितो मया जनार्दनो नैव विरोधमिच्छति ।**
**युधिष्ठिरो भूतहिते रतः सदा वृकोदरस्तद्वशगस्तथा यमौ ॥**

वृकोदरस्तद्वशग इति युधिष्ठिरवशग इत्यर्थः । यमावपि तथेति तद्वशगावेव । किमर्जुन एको न तद्वशगः, यो वारितोऽपि धर्मजेन युध्येतैव । तेन नायं मूलाशय इति युक्तं वक्तुम् । वृकोदरस्य हि कृष्णे महती निष्ठा । कृष्णैकवशगश्च सः । अतः कौरवकुलनिर्मथने कृतशपथोऽपि वृकोदरः कृष्णवचनेन शान्तो

भवेदेवेत्यश्वत्थामाशयः । अर्जुनोऽपि कृष्णवचने तिष्ठेदेव । अथापि न तत्पर्यन्तं गन्तव्यम् । मम सखा सहाध्यायी चायं मयैव शक्यं वारयितुमिति साभिमानमाह । भीमस्तु नूनं मद्वचने न तिष्ठति । तं वाचोयुक्त्या स्नेहपाशेन वा नमयेयमिति न मे भ्रान्तिः । अथापि स कृष्णवचनेन शम्यादेव । एवमनयोर्वीरतमयो-स्तूष्णीम्भावे धर्मराजस्य यमयोर्वा नियमनं नैव समस्या । यतस्ते त्रयोऽप्यन्योपरोधमृतेऽपि स्वयं शमपरा इत्येवं द्रौण्याशयमाविष्कुर्वाणं सुसङ्गतं भारतपाठमाचार्योदाहृतं पश्यत–

**धनञ्जयस्तिष्ठति वारितो मया जनार्दनो नैव विरोधमिच्छति ।**
**वृकोदरस्तद्वचने स्थितः सदा युधिष्ठिरः शान्तमनास्तथा यमौ ॥** (म.भा.ता.नि.२७.१७७)

एवं बहून्युदाहरणानि तत्रतत्रगतानि । प्रकृते खलु बहु जल्पित्वा । महाभारतमाचार्यकृतेन तात्पर्यनिर्णयेन सह सन्तोल्य विमर्शविमर्शमधीयानानां स्फुटमेतत् सर्वम् । पिहितनयनानां पुरः पुनःपुनर्निदर्शनप्रदर्शनेन किं फलम् । अन्धसभायां विलासिन्या नाट्यविलासः । एडनिकटे मृदङ्गवादनम् । विग्रस्य चन्दनलेपः ॥

## काश्चन समस्याः

क्वचिदेवं वर्तते– अन्य एव प्रसङ्गो भारते पठ्यते । अन्यादृश एव निर्णये ॥

पाण्डवानां सन्ततिप्रकरणे, प्रचलितभारतपाठानुसारेण शैब्या युधिष्ठिरजाया, तनयश्च यौधेयः ॥

तत्रापि महदन्तरम् । चतुर्षु मुद्रणेषु चतुर्विधः पाठक्रमः ॥

अयमौत्तराणां पाठः–

**युधिष्ठिरस्तु गोवासनस्य शैब्यस्य देविकां नाम तनयां स्वयंवरे लेभे ।**
**तस्यां पुत्रं जनयामास यौधेयं नाम ॥**

गोरखपुरमुद्रिते पाठे, अयमादिपर्वणि ९५तमोऽध्यायः, यत्रैतद् वाक्यम् । पुण्यपत्तनमुद्रिते पाठे ९० तमोऽध्यायः ॥

अथायं दाक्षिणात्यानां पाठः–

**शैब्यस्य कन्यां देवकीं नामोपयेमे युधिष्ठिरः ।**
**तस्यां पुत्रं जनयामास यौधेयं नाम ॥**

तत्रापि ‘कृष्णाचार्य’पाठेऽयं त्रिषष्टोऽध्यायः । ‘रामस्वामि’पाठे द्विपञ्चाशोऽध्यायः ॥

निर्णये त्वेवं श्रूयते–

**अथोपयेमे शिशुपालपुत्रीं युधिष्ठिरो देवकीं नाम पूर्वम् ।**
**तस्यां सुहोत्रो नामतः पुत्र आसीत्–** (२०.११–२)

एतेन प्राचीनो भारतपाठ एवमासीदिति निश्चीयते–

**चैद्यस्य कन्यां देवकीं नामोपयेमे युधिष्ठिरः ।**
**तस्यां पुत्रं जनयामास सुहोत्रं नाम ॥**

लिपिकराणां प्रमादेन चैद्यः शैब्यो बभूव। अत एव मूलपाठं सूचयन् का चेयं चैद्यकन्येति जिज्ञासां च परिहरन्नाचार्यो व्याचख्यौ– **'शिशुपालपुत्रीम्'** इति । एका क्रिया द्व्यर्थकरी बभूव–पाठशुद्धिश्चार्थनिर्णयश्चेति ॥

अस्तु नाम श्रुतिसाम्यादक्षरचणैः प्रामादि चैद्यः शैब्य इति । अथ कथं सुहोत्रो यौधेयो बभूव? सत्यमुक्तं भगवत्पादेन–**'कुर्युः कचिच्च व्यत्यासं प्रमादात्'** इति ॥

एवं भीममन्तरेणायमौत्तराणां पाठः–

**भीमसेनोऽपि काश्यां बलन्धरां नामोपयेमे वीर्यशुल्काम् ।**
**तस्यां पुत्रं सर्वगं नामोत्पादयामास ॥**

इतः किञ्चिदिव प्राचीनपाठानुगो दाक्षिणात्यपाठः–

**भीमसेनस्तु वाराणस्यां काशिराजतनयां जलन्धरां नामोपयेमे स्वयंवरस्थाम् ।**
**तस्यामस्य जज्ञे शर्वत्रातः ॥**

अचार्यवचोऽनुसारेण काशिराजतनया काळी नाम भीमभार्या। शर्वत्रातस्तनयः। तथाचैवं प्राचीनो भारतपाठः स्यात्–

**भीमसेनस्तु काशिराजतनयां काळीं नामोपयेमे स्वयंवरस्थाम् ।**
**तस्यामस्य जज्ञे शर्वत्रातः ॥**

काळ्या नाम जलन्धरेति दाक्षिणात्याः । बलन्धरेत्यौत्तराः । बलन्धरेति स्यादपि नामान्तरमन्वर्थम् । वायुर्हि बलदेवता । **'प्राणो वै बलम्'** इति बृहच्छ्रुतिः । **'बळित्था–'** इति च प्राणाग्निसूक्तम् । तेन बलनाम्नः प्राणावतारस्य भीमस्य पतित्वेन भरणाद् बलन्धरेति युक्तं वचः स्यात् ॥

नकुलसहदेवयोः संसारमेवमाह प्रचलित औत्तरः पाठः–

**नकुलस्तु चैद्यां करेणुमतीं नाम भार्यामुदवहत् ।**
**तस्यां पुत्रं निरमित्रं नामाजनयत् ।**
**सहदेवोऽपि माद्रीमेव स्वयंवरे विजयां नामोपयेमे ।**
**तस्यां पुत्रमजनयत् सुहोत्रं नाम ॥**

केचित् करेणुमतीं करेणुवतीमाहुः । भ्रान्तास्ते । दाक्षिणात्यास्त्वेवं पेठुः–

**नकुलस्तु खलु चैद्यां रेणुमतीं नामोदवहत् ।**
**तस्यां तु पुत्रं जनयामास निरमित्रं नाम ।**
**सहदेवस्तु खलु माद्रीमेव स्वयंवरे विजयां नामोदवहद् भार्याम् ।**
**तस्यां पुत्रं जनयामास सुहोत्रं नाम ॥**

पाठभेदेऽपि न महानर्थभेदः । केवलं करेणुमती रेणुमती बभूव । एतदनुसारेण चैद्या नकुलभार्या, यां युधिष्ठिरभार्यामाचार्य आह । नाममात्रं त्वन्यत् । एवं सुहोत्रः सहदेवात्मजः, यं युधिष्ठिरात्मजमाचार्य आचचक्षे । एवं माद्री न सहदेवभार्या, किन्तु नकुलभार्या । तस्या नामधेयं तु न निर्णये निर्दिष्टम् । नापि तत्पुत्रस्य । मगधराजस्य जरासन्धस्य तनया सहदेवभार्याऽसीत् । तेन– **सहदेवोऽपि मागधीमेव विजयां नामोपयेमे'** इति प्राचीनपाठः स्यात् । अर्वाचीनानां मुखे मागधी माद्री बभूव । तत्पुत्रस्य च नाम निर्णये नोल्लिखितमपि न नूनं सुहोत्र इति । युधिष्ठरात्मजो हि सः । तेन यौधेय इति सहदेवतनयस्य नामधेयं स्यात् ॥

एतेनैतदवगम्यते– विस्मयावहं पाठवैयाकुल्यं बहुमुखं ववृधे । लिपिचणाः स्वच्छन्दं व्यत्यासंव्यत्यासं मूलं व्यालोळयामासुः ॥

इतोऽपि विपरीतो विष्णुपुराणे नामनिर्देशः । तत्र युधिष्ठिरजाया यौधेयी । देवकः पुत्रः । (भारते देवकी जाया । यौधेयः पुत्रः । जनन्या जातस्य च नामविपर्ययः ।)

एवं भीमस्य भार्या काशी । (काळी काशी बभूव । काशीशतनयेति युक्तं काशीति नामापि ।) पुत्रः सर्वग इत्येव । प्रायः शर्वगः सर्वगो बभूव । नकुलपत्नीपुत्रयोरुभयत्रापि समानं नाम । सहदेवस्य भार्या रेणुमती ॥

तदेवं पुराणानां पाठान्तरशरधौ भगवत्पादकृतिरियं प्लवायते पारं जिगमिषूणाम् । यद्ययं प्रबन्धो नाभविष्यत् क एनं शरधिमुत्तितीर्षेत्? कः किमिति परिजिहीर्षेत्?

✻

अयमपरः पाठविभ्रमः–

श्रूयते माहिष्मतीपतिर्नीलो नील इति । भारतसङ्ग्रामे स कं पक्षमाशिश्रिये? पाण्डवानामुत धार्तराष्ट्राणाम्?

प्रचलिते भारतपाठे स धार्तराष्ट्रपक्षमाशिश्रिये । पाण्डवैः सह च युयुधे । निर्णये भगवत्पाद उवाद– स पाण्डवपक्षीयः धार्तराष्ट्रैः सह युध्यमानः सङ्गरे द्रौणिनाऽघानीति–**'गुरोः सुतो माहिष्मतीपतिमाजौ जघान'** (२६.३) इति ॥

भारतेऽपि गुरोः सुतेन हतो नीलः पठ्यते । न माहिष्मतीपतिः । किन्त्वनूपाधिपतिः । माहिष्मतीपतिः कौरवपक्षीयः । तं कथं द्रौणिर्हन्यात् स्वपक्षपरपक्षभिदामविदन्निव? तथाहि पठ्यते कौरवपक्षीयवीराणां परिगणनावसरे–

**तथा माहिष्मतीवासी नीलो नीलायुधैः सह ।**
**महीपालो महावीर्यैर्दक्षिणापथवासिभिः ॥** (उ.प.१९.२४)

भीष्मोऽप्येतदेवाऽह–

**नीलो माहिष्मतीवासी नीलवर्मा रथस्तव ।**
**रथवंशेन कदनं शत्रूणां वै करिष्यति ॥ (१६६.४)**

पाण्डवानां पक्षेऽपि कश्चिन्नीलः पठ्यते–

**दक्षिणं शृङ्गमास्थाय भीमसेनो व्यरोचत ।**
**नानाशस्त्रौघसम्पन्नैर्नानादेश्यैर्नृपैर्वृतः ।**
**तदन्वेव विराटश्च द्रुपदश्च महारथः ।**
**तदनन्तरमेवाऽसीन्नीलो नीलायुधैः सह ।**
**नीलादनन्तरश्चैव धृष्टकेतुर्महाबलः ॥ (भी.प.५६.११–३)**

अयं माहिष्मतीपतिरिति च स्फुटम् । **'माहिष्मतीवासी नीलो नीलायुधैः सह'** इति पूर्ववचनसंवादात् । तं द्रौणिर्जघानेति च सत्यम्–

**ततः प्रविव्यथे सेना पाण्डवी भृशमाकुला ।**
**आचार्यपुत्रेण हते नीले ज्वलिततेजसि ॥ (द्रो.प.३१.२७)**

किन्त्वनूपाधिपतिः स पठ्यते, न माहिष्मतीपतिः–

**अनूपाधिपतिः शूरो भीमस्य दयितः सखा ।**
**नीलो नीलाम्बुदप्रख्यः सङ्क्रुद्धो द्रौणिमभ्ययात् ॥ भी.प.९४.२९)**

कथमस्माज्जटिलात् प्रसङ्गादुत्तारः? कः समाधिः?

इदमिहेत्थं स्यादिति हस्म भाति । माहिष्मती हि नर्मदातीरगा नगरी? अनूप इति च स्म हि नदीतीरगः प्रदेश इत्येवार्थः । यं ह देशमापोऽनुगता भवन्ति, यत्र हवै समृद्धा आपो भवन्ति स किलानूपदेशः । तेन नदीतीरगतो यः कोऽपि देशोऽनूपदेशः स्यात् । याङ्काश्च नदीमनुगतोऽपि । तथाच नर्मदातीरगां माहिष्मतीमेव अनूपदेशमाचक्षतेति सूक्तम् ॥

तेन माहिष्मतीपतिर्नील एवानूपाधिपतिर्नीलः ॥

अथाप्युद्योगपर्वगं वचनं बाधते । तत्र हि माहिष्मतीवासी नीलः कौरवपक्षीय उच्यते । पाठान्तरेण सन्देह एव शरणमिति हस्तावुत्क्षिप्यासहायं निषण्णानां भगवत्पादो निर्णयक्रमं स्मारयामास– नीलो गुरुसुतेन हत इति लिङ्गादेव न कौरवपक्षीय इति ॥

तर्हि भारतवचनस्य का गतिः? स्थानविपर्ययोऽयम् । तथाह्युद्योगपर्वणि सम्प्रत्येवं पठ्यते–

**तथैवाक्षोहिणीं गृह्य चेदीनामृषभो बली ।**
**धृष्टकेतुरुपागच्छत् पाण्डवानमितौजसः ॥**

**मागधश्च जयत्सेनो जारासन्धिर्महाबलः ।**
**अक्षोहिण्यैव सैन्यस्य धर्मराजमुपागमत् ॥ (१९.७–८)**

अत्र कौरवपक्षीयो जयत्सेनः पाण्डवपक्षे निक्षिप्तः ॥

अथचोपरिष्टादेवं पठ्यते–

**सुदक्षिणश्च काम्बोजो यवनैश्च शकैस्तथा ।**
**उपाजगाम कौरव्यमक्षोहिण्या विशाम्पते ॥**

**तस्य सेनासमावायः शलभानामिवाऽबभौ ।**
**स च सम्प्राप्य कौरव्यं तत्रैवान्तर्दधे तदा ॥**

**तथा माहिष्मतीवासी नीलो नीलायुधैः सह ।**
**महीपालो महावीर्यैर्दक्षिणापथवासिभिः ॥**

**आवन्त्यौ च महीपालौ महाबलसुसंवृतौ ।**
**पृथगक्षोहिणीभ्यां तावभियातौ सुयोधनम् ॥** (२२–६)

अत्र पाण्डवपक्षीयो नीलः कौरवपक्षे निक्षिप्तः । (रामस्वामि'पाठेऽत्र 'तथा माहिष्मतीवासी–' इति पद्यमेव न पठ्यते ।) तथाचैतयोरीषत् स्थानव्यत्ययेन मूलभावानुगुणं पाठमुपलभामहे । एवमिह चतुर्विंशः श्लोकोऽष्टमो भवति । अष्टमश्च चतुर्विंशः । तथाहि–

**तथैवाक्षोहिणीं गृह्य चेदीनामृषभो बली ।**
**धृष्टकेतुरुपागच्छत् पाण्डवानमितौजसः ॥**

**तथा माहिष्मतीवासी नीलो नीलायुधैः सह ।**
**महीपालो महावीर्यैर्दक्षिणापथवासिभिः ।**
**अक्षोहिण्यैव सैन्यस्य धर्मराजमुपागमत् ॥**

इति पूर्वत्र पाठः । उत्तरत्र च–

**सुदक्षिणश्च काम्बोजो यवनैश्च शकैस्तथा ।**
**उपाजगाम कौरव्यमक्षोहिण्या विशाम्पते ॥**

**तस्य सेनासमावायः शलभानामिवाऽबभौ ।**
**स च सम्प्राप्य कौरव्यं तत्रैवान्तर्दधे तदा ॥**

**मागधश्च जयत्सेनो जारासन्धिर्महाबलः ।**
**आवन्त्यौ च महीपालौ महाबलसुसंवृतौ ।**
**पृथगक्षोहिणीभ्यां तावभियातौ सुयोधनम् ॥**

एवं श्लोकस्य स्थानव्यत्ययेन द्वौ दोषौ परिहृतौ स्याताम् । पाण्डवपक्षीयत्वेनोल्लिखितस्य जयत्सेनस्य कौरवपक्षे निवेशः । कौरवपक्षत्वेनोल्लिखितस्य नीलस्य पाण्डवपक्षे निवेशश्चेति ॥

प्रायोऽयं लिपिकाराणां प्रमादजो व्यत्ययः ॥

ननु व्यत्ययेनैको दोषः समाहितः । एवमेकं सन्धित्सतः पुच्छमपरं च्यवते । भीष्मवचनं किल सर्वमेतद् विफलयति । तत्र हि स्फुटं नीलस्य कौरवपक्षीयत्वं समर्थितम्–

**नीलो माहिष्मतीवासी नीलवर्मा रथस्तव ।**
**रथवंशेन कदनं शत्रूणां वै करिष्यति ॥**

**कृतवैरः पुरा चैव सहदेवेन मारिष ।**
**योत्स्यते सततं राजंस्तवार्थे कुरुनन्दन ॥** (उ.पु.१६६.४७)

सत्यमत्र नीलस्य कौरवपक्षीयत्वं प्रतीयते । अथापि स गुरुणा हत इत्युपरिश्रवणात् कौरवं नाऽजगामेति च स्फुटम् । तेन ज्ञायते– इदं भीष्मस्याऽऽशामात्रम् । तथा चैवं वचनार्थः– नीलस्तव पक्षे स्थित्वा कदनं करिष्यतीति, तवार्थे योत्स्यत इति निरीक्षे । कुतः? पुरा दिग्विजये सहदेवेन कृतवैरत्वादिति ॥

वास्तवं त्वन्यदेव । भीष्मोऽपि बभ्राम । नीलः किल **'भीमस्य दयितः सखा'** (भी.प.९४.२९) । स कथं सहदेवेन वैरायते । वस्तुतो दिग्विजयेऽपि न वैरमास । प्रीत्या सत्कारपूर्वं हि नीलः सहदेवाय करं ददौ ॥ तथाहि सभापर्वणि–

**पावके विनिवृत्ते तु नीलो राजाऽभ्यगात् तदा ।**
**पावकस्याऽऽज्ञया चैनमर्चयामास पार्थिवः ।**
**सत्कारेण नरव्याघ्रं सहदेवं युधाम्पतिम् ॥** (स.प.३२.६०)

यः स्वजामातुः पावकस्याऽऽज्ञया सहदेवं सत्कृत्य प्रीत्या करं ददौ, यश्च भीमस्य दयितः सखा स कथं कौरवपक्षमाश्रयेत? तस्मात् स पाण्डवपक्षं जगामेत्येव सूक्तम् ॥

❊

अन्यच्चेदं विमृशतां शिरःशूलं जनयति–

जयत्सेनो जरासन्धतनयः सहदेवानुजः । सहदेवः पाण्डवपक्षे बभूव । तस्यायमनुजः कौरवपक्षे तस्थावित्यवगतम् । तं च भीमो जघानेत्याचार्यवचनम्–

**तत्र भीमो गजानीकं जयत्सेनं च मागधम् ।**
**जघान सुबहूंश्चैव मागधानां रथाव्रजान् ॥** (ता.नि.२६.२८४–५)

प्रचलिते भारतपाठे सर्वमप्याविलमाकुलं च । भीष्मपर्वणि स कौरवपक्षीयो बभूवेत्युच्यते–

**श्रुतायुधश्च कालिङ्गो जयत्सेनश्च मागधः ।**
**बृहद्बलश्च कौसल्यः कृतवर्मा च सात्वतः ॥** (१६.१६)

अथ पुनरयं द्रोणपर्वणि पाण्डवपक्षं प्राविक्षत् । प्रविश्य च दुर्योधनानुजेन विजयेन युयुधे । अहो पक्षान्तर-पतनप्रवीणता तपस्विनो जयत्सेनस्य, साम्प्रतराजकीयधुरीणानामिव–

**पुत्रास्ते दुर्जयश्चैव जयश्च विजयश्च ह ।**
**नीलकाश्यजयत्सेनांस्त्रयस्त्रीन् प्रत्यवारयन् ॥** (२५.४६)

एवमयं कदाचित् कौरवपक्षे युध्यते । कदाचिदह पाण्डवपक्षे । एवं नु हो पक्षात् पक्षं पतन्नेव भवति । पक्षान्तरपक्षपाती । एतेन विज्ञायेत यथा प्रचलितो भारतपाठो निर्मर्यादं व्याकुलित इति । सत्यमाह भगवत्पादः– **'ग्रन्थोऽप्येवं विलुलितः किम्वर्थो देवदुर्गमः'** इति ।

नात्र हवा अवसीयते पक्षान्तरदुरन्तकथा । पाण्डवपक्षमाश्रित्य युध्यमानं हन्तैनं पुनरन्ते निहन्ति सौभद्रः–

**जयत्सेनस्तथा राजन् जारासन्धिर्महाबलः ।**
**मागधो निहतः सङ्ख्ये सौभद्रेण महात्मना ॥** (क.प.२.३३)

उपरि च तत्रैव–

**मागधानामधिपतिर्जयत्सेनो महाबलः ।**
**अद्य सप्तैव चाहानि हतः सङ्ख्येऽभिमन्युना ॥** (७७.२५)

भीष्मपर्वणि चेदमित्थमेव कथितम्–

**मागधोऽथ महीपालो गजमैरावतोपमम् ।**
**प्रेषयामास समरे सौभद्रस्य रथं प्रति ॥**

**तमापतन्तं सम्प्रेक्ष्य मागधस्य महागजम् ।**
**जघानैकेषुणा वीरः सौभद्रः परवीरहा ॥**

**तस्याऽवर्जितनागस्य कार्ष्णिः परपुरञ्जयः ।**
**राज्ञो रजतपुङ्खेन भल्लेनापाहरच्छिरः ॥** (६३.४६–८)

कोऽत्र परिहारस्य पन्थाः? केवलं भगवत्पादस्य तात्पर्यनिर्णयः । पाठनिर्णयाय चार्थनिर्णयाय च । निर्णयानुसारेणार्थेऽवगते पाठोऽपि सुकरमुन्नीयेत ॥

सोऽयं कौरवपक्षीय इति तु निश्चितम् । अथापि सन्देहान्धौ निमग्नस्य नोत्थानम् । स कथं दुर्योधनानुजं विजयं योद्धुमभिययौ? नायं नूनं मागधः । नापि जारासन्धिः । तत्सनामा कश्चिदन्य एव राजन्यः स्यादिति युक्तम् ॥

अथ कस्तं जारासन्धिं मागधं जघान? उत भीमः? आहो अभिमन्युः?

सर्वान् प्रतनप्रबन्धान् प्रतनांश्च पाठान् परिशील्येदमिह स्फुटमुदघोषि भगवत्पादेन– **'तत्र भीमो गजानीकं जयत्सेनं च मागधं जघान'** इति ॥

ननु भोः, अभिमन्युर्जघानेति भारते त्रिः पठ्यते? किं त्रिरेव? शतकृत्वः पठ्यताम् । नहि बहुशः पठितमित्यतथ्यं तथ्यं भवति । सकृत् पठितमिति तथ्यमतथ्यम् । 'तत् त्वमसि' इति नवकृत्वः पाठेऽपि न तत् त्वमभवः ॥

भवतु, कथमिदमदो वेति शङ्काशङ्कुमुत्कीलयसि? आचार्यवचनादेव । प्रमाद्येयुरपि लिपिकृतः । नोत समधिगतपरमार्था विगलितस्वार्थाः पारदृश्वानो महान्तः प्रबन्धारः ॥

अथ प्रचिलतो भारतपाठः किञ्चिदिव परामृश्यताम्–

एकत्र सौभद्रो जघानेति पठ्यते । कार्ष्णिरित्यन्यत्र । अभिमन्युरित्यपरत्र । प्रकरणं पश्यत । कर्णपर्वणि द्वितीयाध्याये तावदयं श्लोकक्रमः–

**पितामहस्तव तथा बाह्लीकः सह बाह्लिकैः ।**
**निहतो भीमसेनेन महाबलपराक्रमः ॥**

**जयत्सेनस्तथा राजन् जारासन्धिर्महाबलः ।**
**मागधो निहतः सङ्ख्ये सौभद्रेण महात्मना ॥**

**पुत्रस्ते दुर्मुखो राजन् दुःसहश्च महारथः ।**
**गदया भीमसेनेन निहतौ शूरमानिनौ ॥** (२.३२–४)

पूर्वश्लोके भीमः प्रस्तुतः । उत्तरश्लोके च । तेन सम्भाव्यते मध्यगतोऽपि भीम एव स्यादिति । **'सौभद्रेण महात्मना'** इत्यत्र **'भीमेनैव महात्मना'** इति, **'कौन्तेयेन महात्मना'** इति वा प्रतनः पाठः स्यात् ॥

भीष्मपर्वणि च तथैव–

> **तस्याऽवर्जितनागस्य कार्ष्णिः परपुरञ्जयः ।**
> **राज्ञो रजतपुङ्खेन भल्लेनापाहरच्छिरः ॥**
>
> **विगाह्य तद् गजानीकं भीमसेनोऽपि पाण्डवः ।**
> **व्यचरत् समरे मृद्नन् गजानिन्द्रो गिरीनिव ॥** (६२.४८–९)

एतद्व्याख्यानरूपं भगवत्पादवचनं संशयं निरुणद्धि–**'तत्र भीमो गजानीकं जयत्सेनं च मागधं जघान'** इति । एतेनापि तर्क्येत– **'कार्ष्णिः परपुरञ्जयः'** इत्यत्र **'भीमः परपुरञ्जयः'** इत्येव प्रतनः पाठ आसीदिति ॥

नहि कार्ष्णिरित्यपि सौभद्रस्य सहजं नाम । प्रद्युम्नो वाऽनिरुद्धो वा हि तथोच्यते ॥

एवं पाठव्यत्यसनं च समूलम् । उपरि पठिष्यमाणेन 'हतः सङ्ख्येऽभिमन्युना' इति श्लोकेन जातविभ्रमाः केचन 'सौभद्रेण' इति 'कार्ष्णिः' इति च पाठं व्यत्यस्य पेठुः ॥

ननु 'हतः सङ्ख्येऽभिमन्युना' इति स्फुटमभिमन्युहतत्वं प्रतीयते । तत्र को नाम विभ्रमावकाशः?

अस्ति विभ्रमावकाशः । गुह्यभाषेयम् । अभिमन्युरिति न सौभद्र उच्यते, किन्तु भीमसेनः ॥

मन्युनामा हि नरसिंहः स्तूयते मन्युसूक्ते । स मन्युरभितो यस्य रक्षिता सोऽभिमन्युरिह गदितः । तथाहि श्रूयते भीमसेनदृष्टो मन्त्रः– **'अभीहि मन्यो'** इति । एतं गूढाशयमजानन्तः सौभद्रमेवाभिमन्युममन्यन्त । अनया भ्रान्त्या हन्त जयत्सेनहन्ता सौभद्र इति बभ्रमुः । तदनुगुणतया पाठं व्यत्यस्य पेठुरिति ॥

✼

अथापि नोत्तारः समस्याजलधेः । भारते पठ्यते– युद्धस्य दशमे दिने, यच्चरमं दिनं भीष्मसेनापत्यस्य, जयत्सेनो हत इति । आचार्य ऊचे–द्रोणसेनापत्यस्य चरमे दिने, युद्धारम्भात् पञ्चदशे दिने हत इति । कालव्यत्यासोऽयम् । उक्तमेतत् **'व्यत्यासः प्रातिलोम्यं च'** इत्यादिना । भवन्ति च पुराणेष्वीदृशाः कालव्यत्यासादयो बहुश इति मूल एव स्फुटम् ॥

एतदाचार्य एव स्फुटमुल्लिलेख–

> **पुंव्यत्यासेन चोक्तिः स्यात् पुराणादिषु कुत्रचित् ।**
> **कृष्णामाह यथा कृष्णो धनञ्जयशरैर्हतान् ॥**

**शतं दुर्य्योधनादींस्ते दर्शयिष्य इति प्रभुः ।**
**भीमसेनहतास्ते हि ज्ञायन्ते बहुवाक्यतः ॥**

**विस्तारे भीमनिहताः सङ्क्षेपेऽर्ज्जुनपातिताः ।**
**उच्यन्ते बहवश्चान्ये पुंव्यत्याससमाश्रयात् ॥**

**विस्तारे कृष्णनिहता बलभद्रहता इति ।**
**उच्यन्ते च क्वचित् कालव्यत्यासोऽपि क्वचिद् भवेत् ॥**

**यथा सुयोधनं भीमः प्राहसत् कृष्णसन्निधौ ।**
**इति वाक्येषु बहुषु ज्ञायते निर्ण्णयादपि ॥**

**अनिर्ण्णये तु कृष्णस्य पूर्वमुक्ता गतिस्ततः ।**(९.१३०–३५)

इन्द्रप्रस्थे मयनिर्मितायां सभायामटमानः सुयोधनः सलिलं स्थलं मत्वा भ्रान्तः सलिलौघे पपात । तं दृष्ट्वा क्षितिभारनाशहेतोः स्वयं भगवता कृष्णेन सूचितो भीम उरुणा स्वरेण प्रजहास ॥

अथापि भारते दुर्योधनप्रहसनात् पूर्वमेव कृष्णस्य द्वारकागमनमुक्तम् । कालव्यत्यासोऽयम् । कृष्णस्य द्वारकागमनमेव तत्र विवक्षितोऽर्थः, न पूर्वगमनम् । अनिर्णयवचनं नामायं शैलीभेदः । एवमत्रापि ॥

इदमुक्तं भवति– परस्ताद् भाविनी कथा पूर्वमगादि । यद्यपि दशमदिने जयत्सेनस्य जारासन्धेर्मागधस्य वध उदितः । अथापि वधमात्रं तत्र विवक्षितोऽर्थः । न दशमदिने वध इति ॥

भाविनमर्थं पूर्वमपि कथयन्ति प्रसङ्गवशात् । पूर्वतनमपि पश्चात् । विवक्षा हि तात्पर्यनिर्णयनी । नतु वक्तुरुक्तिक्रमः । अत एवाऽहुर्मीमांसकाः– पाठक्रमादर्थक्रमो बलीयानिति । अथच निर्णयवचनमनुसृत्य निर्णेयानि वाक्यानि व्याख्यातव्यानि भवन्ति ॥

ननु नैवं वक्तुं शक्यम् । नेदमनिर्णयवचनम् । **'अद्य सप्तैव चाहानि हतः सङ्ख्येऽभिमन्युना'** इति स्फुटतरं कालनिर्देशात् । अतो नात्र वधमात्रं विवक्षितोऽर्थः, किन्तु दशमदिने वध एव ॥

आत्मविश्वासतुन्दिलोऽसि । ननु भोः, नायं जयत्सेनवधस्य कालनिर्देशः । किन्तु भीष्मसेनापत्यस्य कालनिर्देशः । भीष्मपातानन्तरमद्य सप्तैव चाहानि । एषु सप्तसु दिनेषु बहवः प्रमुखा जयत्सेनादयो हता इत्यर्थः ॥

एतेनैतदपि विवरणान्तरं स्यात् । यथा कालव्यत्यासेन तथा पुंव्यासेनापि चेयमुक्तिः स्यात् । विपश्चितः पुनरुत्तरवचनेनैवाभिमन्युरिति भीमोऽत्र विवक्षित इति जानीयुरिति । तथाहि तदनन्तरः श्लोकः–

**ततो दशसहस्राणि गजानां भीमकर्मणाम् ।**
**जघान गदया भीमस्तस्य राज्ञः परिच्छदम् ॥ (क.प.७७.२६)**

तथाच भीम इति वक्तव्ये व्यत्यस्य सौभद्र इत्याह । अभिमन्युरित्याह ॥

गुह्यभाषया सङ्क्रमनं चात्र सम्भवति । सुभद्रो भगवान् । तद्भक्ताग्रणीर्भीमः सौभद्र इति । एतेन कार्ष्णिरिति च विवृतार्थम् ॥

भवन्ति च तिस्रो भाषाः पुराणेष्विति पुराणभाषाविदो विदन्ति । आचार्यमध्वेनैव तदिदं प्रथममाविरक्रियत–

**लोकदर्शनमाश्रित्य देवाश्च मुनयस्तथा ।**
**ब्रूयुः कथास्तत्र शिक्षा ग्राह्या नार्त्थाः कथञ्चन ॥**

**अर्त्थः समाधिभाषासु ग्राह्यः सर्वोऽप्यसंशयम् ।**
**परदर्शनभाषासु ज्ञेयं तद्दर्शनं तथा ॥**

**ग्राह्यो नार्त्थो वैदिकं तु दर्शनं ग्राह्यमेव च ।**
**अन्यार्त्थो गुह्यभाषासु ग्राह्य एवं विनिर्ण्णयः ॥ (२२.३९५–७)**

यथाऽस्ति, आसीद् वा, भविष्यति वा तथा कथनं समाधिभाषा । अतस्तत्रोक्तः सर्वोऽप्यर्थो ग्राह्यः । दर्शनभाषायां न स्वाशयः प्रकटीक्रियते । किन्तु केवलं परदर्शनमनूद्यते । वैदिकं चेद् दर्शनं स्वदर्शनमेव तदिति समाधिभाषैव । परदर्शनं च द्विविधं भवति– प्रत्यक्षदर्शनं शास्त्रदर्शनं चेति । आद्यं यथा– चिन्मयविग्रहोऽपि भगवान् कृष्णो भारतविग्रहे शितविशिखहतो विशीर्णदंसः क्षतजपरिप्लुतो भीष्मादिभिरदृश्यत । शास्त्रदर्शनं यथा– शैवदर्शनमवलम्ब्य शिवपारम्यनिरूपणम् । सिद्धान्तस्येव पूर्वपक्षस्यापि पूर्वपक्षोऽयमित्यनिरूप्य तूर्ष्णीं कथनं दुर्जनमोहनी पुराणशैली ॥

केचिच्चकत्थिरे– जयत्सेनावुभावभवताम् । एकः पाण्डवपक्षीयः । अपरः कौरवपक्षीयः । अकस्मादुभावपि मागधौ । उभयोरपि पितरौ जरासन्धनामानाविति । असङ्गतं बालिशं चेदं विवरणमित्युपेक्षामर्हति ॥

एवं प्रचलिते भारते बहवः पाठभेदाः । निगूढप्रयोगाश्च । येनार्थोऽपि दुरधिगमः । परश्शतमुदाहरणानि शक्यमुल्लिखितुम् । निशितशेमुषीकैरेतावतैव शक्यमभ्यूहितुम्– संशोधनक्षेत्रेऽस्य निर्णयप्रबन्धस्यानुपमो महिमातिशयः कियानिति । अत उपरम्यते ॥

## श्रीहृषीकेशतीर्थीयो मूलपाठः

आस्तां तावन्महाभारतकथा । आ पञ्चसहस्रेभ्यः संवत्सरेभ्यः स्वच्छन्दं पाठं व्यत्यस्य पेठुः । केवलं साधिकानि सप्तशतानि वर्षाण्यासन् यावदाचार्यो ग्रन्थमिमं निरमिमीत । एतस्मिन्नेवाल्पीयस्यनेहसि कियन्तः पाठभेदाः । कियन्तोऽज्ञानमूला दुराग्रहमूला वाऽपपाठाः ॥

इयान् व्यत्यासः । महाभारतस्य समग्रो मूलपाठः सम्प्रति प्रायो न शक्यमेवान्वेष्टुम् । यतो न कमपि मूलादर्शमुपलभामहे । अत्र तु न तथा । महाभारततात्पर्यनिर्णयस्य मूलपाठः, भगवत्पादस्य साक्षाच्छिष्य-प्रवरेण वशीकृतहृषीकेण श्रीहृषीकेशतीर्थेन लिखितः सम्प्रत्यप्युपलभ्यत इति महदिदं भागधेयं तत्व-बुभुत्सूनाम् । चित्तरसायनं संशोधकानाम् ॥

अहो, गाढेऽवतमसे समुदित इव चन्द्रमाः । अपपाठजलधौ पारदर्शनीव द्रोणी । दुराग्रहप्रमुष्टदृष्टीनां मुखमुद्रणमिवार्गळम् । कण्टकचिते कान्तारे कुसुमितेव लता । मरुभूमाविव सुधाकासारः । आसार इवानावृष्टिनष्टे क्षेत्रे । एरकषण्ड इव रसालद्रुमः । अन्धकग्रामे नळिननयनेव सुन्दरी । अहह दुर्जनलोककोकशोकाय सज्जननिकरचकोरानन्दाय च विन्दामहे मूलादर्शं माध्वानां भागधेयचन्द्रोदयम् ॥

समग्रे देशे प्रतनतममिदं तालपत्रमयं पुस्तकम् । एक एव चायं सुरक्षितः सार्वमूलो मूलपाठ आचार्यकालादद्य यावत् । यदा सर्वे मठा गलितमूलपाठाः, एकमात्रस्य मूलादर्शस्य, यद् धन्यमन्यदिव रूपमाचार्यस्य, नितान्तरक्षणेन लब्धपुण्यातिशयः श्रीपलिमारुमठः सर्वोत्कृष्टो विराजते । यत्परम्परागता यतय इमं मूलादर्शं भगवत्प्रतियातनामिव सपर्यापूर्वं सश्रद्धं सञ्जुगुपुः । यस्य चरमे पत्रे **'हृषीकेशतीर्थेन लिखितोऽयं ग्रन्थः'** इति स्फुटतराण्यक्षराणि सत्यमप्यपलपतां लपनं मूकयन्ति ।

तथाहि तौळवलिपिबद्धानि तान्यक्षराणि–

*

यद्यपि सप्त शतकानि जीवित्वा जराजीर्णानि पत्राणि । तत्रतत्र विच्छिन्नपर्यन्तानि, महता प्रयत्नेन सुदृढायां दारुमय्यां मञ्जूषायामन्तर्निक्षिप्य रक्षितान्यपि घुणभक्षितानि गलितगलितानि । अथापि प्रचुरः शुद्धपाठो-ऽद्यत्वेऽप्यवशिष्ट इति सन्तोष्टव्यम् । यद् घुणा अपि घृणार्द्रचेतसोऽस्माकमेतावदवाशेषयन्, तेन ते नतेन शिरसा कार्तज्ञ्यमर्हन्ति । वरीयांसस्ते नीलङ्गवः, लब्धमपीदृशं शुद्धं मूलपाठमनादृत्य दूरतोऽपसरद्भ्यो, अशुद्धमेव पाठं हठादनुवादादिना जनेषु प्रसारयद्भ्यो मनुष्यकीटेभ्यः । अहो बलवत्तरं दिष्टम् । यद्

विपश्चितोऽपि मुह्यन्ति । सुरानप्यसुरा आविश्य मोहयन्ति । किमुत मनुष्यमात्रान् पण्डितान् । किमुत हो अल्पमात्रेण व्यवसायेनानल्पं गर्वमुद्वहतः स्वयन्धीरान् पण्डितम्मन्यान् ॥

सम्प्रति चायं तालपत्रमयः समग्रो ग्रन्थो गणकयन्त्रसात्कृतः । इतः परं न घुणा भक्षयेयुः । न तैलाद् रक्षणीयः । नतरां जलात् । यतो नैनमापः क्लेदयेयुः । गृहेगृहे पिपूजयिषूणामपेक्षापूरणाय अणोरणुतरीभूय हिरण्मये पात्रे मुद्राङ्कितश्च ॥

✲

अस्मिन् प्रकाशने प्रकटितः पाठः समग्रं हृषीकेशतीर्थीयपाठानुसारी । पूर्वमपि सार्वमूलः पाठोऽयं मयैव समपादि सचक्षुर्वेदनमहोरात्रं संशोध्य । मुद्रालिपिबद्धश्चाकारि माध्वमहामण्डलद्वारा । तत्रापि येके चानवधानेन चक्षुःपथमतिगताः पाठभेदास्तेऽप्यत्र समीचक्रिरे । तेन साभिमानमिदमुद्घुष्यते– यदिदम्प्रथमं महाभारततात्पर्यनिर्णयस्य प्रतनतरः शुद्धतरश्च पाठोऽत्र निर्मत्सराणां सतां जिज्ञासूनामुपदीक्रियत इति । स्फुटमेतच्चक्षुष्मताम् । तदिदमन्तःकरणहरणं सताम् । इतरेषां नैषधवचनस्य स्मारयामः–**'यथा यूनस्तद्वत् परमरमणीयाऽपि रमणी कुमाराणामन्तःकरणहरणं नैव कुरुते'** इति, **'किमस्या नाम स्यादरसपुरुषानादरभरैः'** इति च ॥

## देवभाषाया अपूर्वमुपहरणम्

अस्ति किञ्चिद् वक्तव्यम्, सर्वशास्त्रनिर्णयात्मकं प्रबन्धमेतं प्रविविक्षूणाम्, अधिकृतैरेवाध्येतव्यमिति । अन्यथा ग्रन्थोऽयमपार्थभाजनं स्यात् । मुख्यतः पाणिनिनयमुग्धानां वैयाकरणपाशानां प्रथमज्ञेयमेतत् ॥

अनेकेऽपूर्वतमाः प्रयोगा अत्र दृश्यन्ते ये सम्प्रति न प्रयुज्यन्ते । नापि कोशेषु पठ्यन्ते । नवा समधिगताष्टाध्यायीसूत्रमात्रैरूरीक्रियन्ते । वैदिकसम्प्रदायेन सह प्रायो व्यस्मर्यन्तैव ॥

हनूमन्तमन्तरेणागस्त्यवचनमुत्तररामायणे–**'सोऽयं नवव्याकरणार्थवेत्ता ब्रह्मा भविष्यत्यपि ते प्रसादात्'** इति । रामवचनं च पूर्वत्र–**'नूनं व्याकरणं कृत्स्नमनेन बहुधा श्रुतम् । बहु व्याहरताऽनेन न किञ्चिदपशब्दितम्'** इति । **'नानृग्वेदविनीतेन नायजुर्वेदधारिणा । नासामवेदविदुषा शक्यमेवं प्रभाषितुम्'** इति च । समानमेतन्मध्वावतारेऽपि । नवान्नवान् प्रयोगविशेषान्, अथच पुरातनानपि नूतनैर्विस्मृतान् शब्दविशेषान् प्रायुङ्क्त भगवत्पादः । एवं स्थितेऽपि केचिद् दैवहतकाः सिद्धान्तकौमुदीपर्यन्तपरिमितपरिज्ञाना वैयाकरणपाशा यथास्वबुद्धिविभवं व्यत्यस्य भगवत्पादप्रयोगान् मूलमेव व्याकुलयामासुः ॥

तेषां प्रमादेन कार्त्यायनी कात्यायनी बभूव । अक्षोहिणी अक्षौहिणी बभूव । अथच बाहुषाळी बाहुशाली बभूव । सङ्कं च सङ्कचम् । एवमादयो बहवोऽपशब्दाः । **'ग्रन्थोऽप्येवं विलुळितः किम्वर्थो देवदुर्गमः'** ॥

भगवत्पादः क्वापि नान्ततः पाणिनीयं नयमनुसरति । महाव्याकरणम्, प्रातिशाख्यानि, वैदिकाश्च प्रयोगास्तत्प्रयोगमूलम् । वैदिकानि पदानि तद्वदेवाविकलं प्रयुङ्क्ते । तद् यथा– **'दोषशब्दाश्च विष्णवि'** इति । **'मदे सुतस्य विष्णवि'** (ऋ.स.८.३.८), **'यत् सोममिन्द्र विष्णवि'** (१२.१६) इति च वैदिकं प्रयोगमनुशीलयतामयं परमवैदिकस्याऽचार्यस्यापूर्वः प्रयोगोऽपि मोदमादधाति । बहव एतादृशा आचार्यप्रयोगा अधुनातनानां सङ्कचावतामपरिचितचराः । तादृशा विपश्चितः किमेतेऽपि साधवः शब्दा इति विस्मयन्ते । किमयं लिपिकृत्प्रमादः, आहो मुद्रणदोष इति संशय्य विभ्रमे तिष्ठन्ते ॥

कानिचन च पदानि संस्कृतभारत्या आचार्योपहृतान्युपायनानीवापूर्वाणि । उदाहरणार्थं कानिचित् पदानीह विमृशामः ॥

अर्वाचीना अवेहीति प्रयुञ्जते । यदाचष्ट भट्टोजिदीक्षितः–**'अवैहीत्यसाधुरेव'** इति । एवमक्षौहिणीति प्रयुञ्जते । उत्तमौजा इति प्रयुञ्जते । आचार्यस्तन्न मन्यते । स पुनरवेहीत्येव प्रयुङ्क्ते पररूपं न मन्वानः । उत्तमोजा इत्येव प्रयुङ्क्ते पररूपं मन्वानः । अक्षोहिणीत्येव प्रयुङ्क्ते वृद्धिमनङ्गीकुर्वाणः । प्रायः सर्वत्र पुराणानां प्राचीनादर्शेषु हस्तलिखितेषु–**'अवेहि'** इति, **'उत्तमोजा'** इति **'अक्षोहिणी'** इत्येव प्रयोगः प्रमितः । तदेव प्रतनं रूपम् ॥

पाणिनेः समयेऽप्येतदेव शब्दरूपं प्रचलितमासीत् । अर्वाचीनाः पुनरवैहिमवेहिं चक्रुः । उत्तमोजसमुत्तमौजसम् । अक्षोहिणीमक्षौहिणीम् । नेदं पाणिनिरमन्यत । परस्तात् तत् प्रचलितमासीत् । अस्ति प्रयोग इति कात्यायनेन तदपि पदमुपसमख्यायत– **'अक्षादूहिन्यां वृद्धिर्वक्तव्या'** इति ॥

तेन अक्षौहिणीत्यर्वाचीनम् । अक्षोहिणीति प्राचीनम् । आचार्यः सर्वदाऽपि प्राचीनमेव पदनिष्पत्तिमुपादत्ते प्रयुङ्क्ते च ॥

✻

ळकारं रहयित्वा पाणिनिर्वर्णमालां पपाठ । नवपञ्चवारं ढक्कां नादयन्नपि शम्भुर्ळकारमुपसङ्ग्रहीतुमहो विसस्मार । अज्मध्यस्थडकारस्याऽदेशरूपं बाह्वृच्यं ळकारमेव केवलं पाणिनीया अङ्गीकुर्वन्ति । तेनानेके प्रतनाः शब्दा अदर्शनमेव ययुः । प्राचीनसंस्कृते लळयोर्भेद एव । तेनान्यः कालः । अन्यश्च काळः । काल इत्यनेहा । काळ इति मेचकः । प्रळयकालः, नतु प्रळयकाळः । काळाष्टमी, नतु कालाष्टमी ॥

अन्यन्नीलम् । अन्यन्नीळम् । नीलमिति वर्णवचनम् । नीळमिति नीडम् । नीलो मेघः, नतु नीळः । नीळे पक्षिणो वसन्ति, नतु नीले ॥

क्वचिदेवं व्यवस्था भवति– बहोरळजेव नालच् । तेन बहळमेव न बहलम् । एवमुलजेव, नोळच् । बहून् लातीति वा । तेन बहुलाष्टमी न बहुळाष्टमी ॥

अज्मध्यस्थो डकारः प्रायो बाह्वृच्य इव वेदे लोकेऽपि ळकारतां भजते । यथा–व्रीडा व्रीळा भवति । जडीकृतो जळीकृतो भवति । गुडोदनो गुळोदनो भवति । यदत्र केचिदाहुः खड्गः खळ्गो भवतीति । तन्नाऽऽदृत्यम् । अज्मध्यस्थताभावात् । न क्वापि तथा प्राञ्चः प्रयुञ्जते ॥

एवं तळमेव, न क्वापि तलम् । मङ्गलं विभाषा भवति । स्यान्मङ्गळमपि । एवं प्रायः कमलमपि । स्यात् क्वचित् कमळमपि । यमकेषु लळयोः स्वाच्छन्द्यम् । यथा महाभारततात्पर्ये–

**यस्य कराळोळं**
**चक्रं कालः परः स हि कराळोळम् ।**

प्रथमपादे 'कर+आलोळम्' इति प्रतृण्णम् । द्वितीये 'कराळः+अलम्' इति । प्रथमपादे लो ळो बभूव, द्वितीयपादसारूप्याय । द्वितीये लं ळं बभूव प्रथमपादसारूप्याय ॥

✻

अर्वाचीनैः पदज्ञैः सर्वात्मना विस्मृतानि कानिचनापूर्वाणि पदानि भगवानाचार्यः प्रयुङ्क्ते । प्रयुज्य तानि नः परिचाययति । परिचाय्य विस्मृतप्रायं स्मारयति ॥

सङ्ख्यमिति युद्धवचनमित्यर्वाचीनाः पदज्ञाः । तन्नाऽऽदृत्यम् । सङ्ख्मित्येव साधु पदमित्याचार्यः ॥

सप्तमी विभक्तिर्भ्रान्तिबीजम्– **'एवमुक्त्वाऽर्जुनः सङ्ख्ये'** । एतद्धि पदमपटुकरणस्य यान्तमिव श्रूयते 'सङ्ख्ये' इति । तेन भ्रान्ता वैयाकरणाः सङ्ख्यमिति नूतनं पदं ससृजुः ॥

✻

अतिशयितबाहुबलवानित्यर्थे वैयाकरणैः प्रचालितं पदं बाहुशालीति । तन्नाऽऽदृत्यम् । बाहुषाळीत्येव साधु पदमित्याचार्यः ॥

दृश्यते च रामायणादिषु संवादः । रामायणकतके तत्पदं निरवोचदपि माधवयोगीन्द्रः । विस्मृतं नूतनैर्वैयाकरणैः । बाहुशालीति म्लेच्छितम् । सम्प्रदायविच्छित्तिजननी वैयाकरणजनका चेयमपभाषितकुमारी चश्चूर्यते हरन्ती मन्दानां मनांसि ॥

✲

एवं शकुन्तलाकमिता दुष्षन्तः, न दुष्यन्तः ॥

वङ्गाः सम्प्रत्यपि दुष्षन्त इत्येव व्याहरन्ति । वङ्गानामभिज्ञानशाकुन्तले दुष्षन्त एव रङ्गं प्रविशति, न दुष्यन्तः ॥

देवयानीसूनुस्तुर्वशुः, न तुर्वसुः ॥

सञ्जयस्य जनको गवद्गणः, न गवल्गणः ॥

तेन सञ्जयो गावद्गणिः, न गावल्गणिः ॥

करूशो नाम देशः, न करूषः ॥

तेन कारूशो दन्तवक्रः, न कारूषः ॥

नैमिशं नामारण्यम्, न तु नैमिषम् ॥

यत्र निमिशा नाम मुनिभोज्यफलाः पादपाः, यत्र च चक्रनेमिरशीर्यतेति कथयन्ति ॥

ननु तर्हि पुरुश इति वक्तव्यम् । न पुरुष इति । पुरि शेत इति हि निर्वचनमामनन्ति । सत्यमामनन्ति । किन्तु निर्वचनान्तरमप्यामनन्ति– पुरु स इति । पुरुषड्गुण इति । उभयसङ्गमनाय तत्र शस्य ष इत्याशयः ॥

पुराणेषु सर्वत्रैवमेव प्रतनः प्रयोगः प्राचीनलिखितादर्शेषु ॥

✲

वबयोरपि काचन व्यवस्था भाति–

स्वयम्बरः स्वयंवर इत्युभयथापि प्रयोगो दृश्यते । अत्रैव चतुर्दशकृत्वः स्वयम्बर इति पदं प्रायोजि (४.९,३५;१७.३,२६,२९; १९.९८,१८९,२०४; २०.१३, ४६,५१; २१.२४;२२.२३७) विंशेऽध्याय एकपञ्चाशे पद्ये द्विः । स्वयंवर इत्येकस्मिन्नेवाध्याये (१७), तदपि केवलं चतुर्वारम्–(५१,६०,६१,७२) ॥

वबयोः प्रक्षेपापक्षेपाभ्यां सम्भावितोऽर्थभेदश्चास्मत्कृतव्याख्यायां निर्णयभावचन्द्रिकायां द्रष्टव्यः ॥

✻

यद्यपि व्रीडा व्रीळा भवति । अथापि व्रीळितो ब्रीळितो भवति ॥

व्रतं सपूर्वपदं बादि भवति– मासब्रतम् ॥

व्रजतेः सोपसर्गं च रूपम्– अनुब्रजनम् ॥

वडवा बडबा भवति । बिडालो बिलाळः ॥

शिबिः शिविः । तेन **'शैव्यश्च नरपुङ्गवः'** इति साधुः प्रयोगः ॥

✻

अपरं च शाब्दिकोपज्ञमपशब्दमाचार्यो दर्शयामास– रुक्मम् । अचार्याशियेन साधु पदम्– रुग्मम्, रुग्मी, रुग्मिणीत्यादि ॥

उणादिष्वेवं सूत्रं पठन्ति– **'युजिरुचितिजां कुश्च'** इति । प्रायो वैयाकरणानां भ्रमजोऽयं पाठः । **'युजिरुजितिजाम्'** इत्येव पठनीयमिति भाति ॥

नेदं रुचे रूपम् । किन्तु रुजे रूपं रुग्ममिति । तथाच **'यदा पश्यः पश्यते रुग्मवर्णम्'** इत्येव साम्प्रदायिकः श्रुतिपाठः । अर्वाचीना वैदिकास्तु–**'रुक्मवर्णम्'** इति पठन्ति । तद्यथा–**'त्वामेव प्रत्यक्षं ब्रह्म वदिष्यामि'** इति प्राचीनां श्रुतिपाठपरम्परां विस्मृत्य **'त्वमेव प्रत्यक्षं ब्रह्म वदिष्यामि'** इति पठन्तः, **'सप्तसु प्रथमा'** इति सूत्रावलम्बनाः स्वकृतमपपाठं समर्थयन्ते । शाब्दिकेषु विश्रम्भस्य फलं वैदिकनामयं भ्रमः । उक्तमाचार्येणैवान्यत्र–**'विपरीतज्ञानादपि विपरीतज्ञानान्तरं जायते'** ।

तथाच रुजे रुग्मम्, युजेर्युग्मम्, तिजेस्तिग्ममिति रोचकोऽयमाविष्कारः ॥

✻

एवं कुत्सयतिवत् भत्सयतिः प्रतनैः पठ्यते । आधुनिकास्तु शाब्दिका भर्त्सयतिं पठन्ति । आचार्यस्तु सर्वत्रापि विरेफमेव भत्सधातुं पठति ॥

✻

उल्बणं क्वचिदुद्बणं भवति । उद्बणमित्येव मूलरूपम् । उदिति किलोपसर्जनं भवति । न पुनरुलिति । परस्ताद् दस्य लो विभाषा भवति । (यथा कैरळानां मुखे **'तत् सवितुः'** इत्येतत् **'तल् सवितुः'** इति भवति । **'प्रचोदयात्'** इत्येतत् **'प्रचोदयाल्'** इति ।)

एकत्र उद्ब्लणमित्यपूर्वः प्रयोगो दृश्यते । तदेतत् उद्+व्रणं मूलतः । पूर्वाक्षरयोगेन उद्+ब्रणं बभूव । तथाहि याज्ञीयमन्त्रभाष्ये– **'अब्रणं नित्यपूर्णतः'** इति । ततश्च रेफस्य लः । येन प्रहरणेन व्रणा उद्गता भवन्ति तद् उद्ब्रणमेव उद्ब्लणम् ॥

✲

अन्यदपूर्वं पदमाचार्यः प्रायुङ्क्त– **'पवमानशुन्ध्व्योः'** (१४.९१) इति । एतावन्तमनेहसं सर्वेऽपि **'पवमान-शुन्ध्योः'** इत्येव पेठुः । अस्माभिः पूर्वं संशोध्य मुद्रिते प्राचीनपाठेऽपि नायं दृष्टिपथं पपात, मनुष्यसहजेन चक्षुषोऽनवधानेन । इदमुपक्रमं स शुद्धः पाठस्तत्रभवतां प्रभवतामुपहारीक्रियते । समग्रे संस्कृतवाङ्मय एवापूर्वमिदं पदम् । न केनापि विदुषा प्रयुक्तम् । न कोशकारैरपि पठितम् । न वैयाकरणैश्चिन्तितम्– शुन्ध्युरिति । केवलं भोजराजेन स्वकीये सरस्वतीकण्ठाभरणे शुन्धेर्युस्प्रत्यययोगेन पदमिदं निष्पादितं दृश्यते । अत्यपूर्वमिदं पदं भगवत्पादप्रसादबलादुपलब्धम् । पाश्चात्यानां पण्डितानामबोधविजृम्भणेनाधि-गतमप्यपगतम् ॥

✲

अर्वाचीना हस्तिनापुरमिति पठन्ति । हस्तिना निर्मितं पुरमिति । यत्रेदं पदं छन्दोऽननुगुणं तत्र हास्तिन-पुरमिति पठन्ति । उभयमप्यर्वाचीनम् । विसर्गलोपेन हस्तिनः पुरं हस्तिनपुरमिति तु पुरातनं नामधेयम् । सर्वत्र भगवत्पादस्तथैव प्रयुङ्क्ते ॥

एवमधुनातनानां मरकतमणिः प्राचीनानां मरतकमणिः । सर्वत्र प्रतनग्रन्थेषु मरतकमणिरित्येव प्रयोगः । मरं मरणं तकति हसतीति मरतकः ॥

✲

लोकेष्वप्रयुक्तानि वैदिकानि च पदानि बहुलं प्रयुङ्क्ते भगवत्पादः– चरितुमिति वक्तव्ये चरितोरिति । इदानीमित्यर्थे 'इदा' इति । ग्रहीतुमिति वक्तव्ये प्रायो गृहीतुमित्येव प्रयुङ्क्ते ॥

## लकारलावण्यम्

केनापि शाब्दिकेन स्वप्नेऽप्यचिन्तितान्यपूर्वाणि तिङन्तरूपाणि भगवत्पादः प्रयुङ्क्ते । स यथा लोटो भविष्यद्वचनम्– **'वत्स्यन्तु'**(१९.१८), **'भविष्यतु'**(२१.८८), **'स्वप्स्यन्तु'**(२६.२६५) ॥

ननु नेदमपूर्वम् । किन्त्वसङ्गतम् । के वा पदज्ञा इदमीदृशं सहेरन् । पठ धातुमञ्जरीम् । ततः संस्कृतां वाणीं भाषस्वेति वक्तव्यम् । ननु भोः शाब्दिकपाश, अनन्तपारः शब्दजलधिः । कूपकुहरेऽप्यपारयन् दर्दुरवरो भवान् कदा जलधिमुत्ततार?

नन्वेकेन दृष्टमदृष्टमिव । एकेन प्रयुक्तमप्रयुक्तमिव । न क्वाप्येतादृशः प्रयोगोऽस्मद्दृष्टिपथमागत इति न श्रद्दध्महे भवदाचार्यप्रयोगमात्रविश्रम्भादिति ॥

ननु यदि भवदाचार्योऽपि प्रायुङ्क्त? अवश्यं श्रद्दधे । शृणोतु तर्हि तत्रभवान् सकललोकाचार्यस्य बादरायणभगवतः प्रयोगम्– **'अनेन प्रसविष्यध्वम्'** इति । लोटो ध्वम् । लृटः स्यः । एवं लकारद्वययोगेन निष्पन्नमपूर्वं रूपम्– प्रसविष्यध्वमिति ॥

नन्वयं बादरायणप्रयोगः । लोके तु न पश्याम एव तादृशं प्रयोगम् । किं बादरायणसम्बन्धेन भवदाचार्यं समर्थयितुमीहसे? अय्यदक्ष पूर्वपक्षिन्, किमाह भवान्? लोके तु न पश्याम इति । किं बादरायणो न लोकः? न स लोकः । किन्तु लोकातीतः । यद्यपि लोकातीतः । अथापि लोकः । लोकृ दर्शन इति हि पठन्ति । स एव हि सर्वं लुलुके । अस्माकमपि लोकयामास शास्त्रव्याजेन दिव्यचक्षुषा ॥

सत्यं स लोकः । अथापि न लौकिकः । वैदिकनामाचार्यं हि वेदव्यासं वेदयन्ति विपश्चितः । वाल्मीकिवेदव्यासादयो हि छान्दसान् प्रयोगान् प्रचुरमुपायुञ्जत । न तल्लोके प्रयोक्तव्यमिति । ननु तेऽपि लोक एव प्रायुञ्जत । ननु वचनतात्पर्यमविज्ञाय भाषसे । यानि छान्दसानि पदानि तानि लौकिकैः प्रबन्धृभिर्न प्रयोक्तव्यानीति पदविदां सम्प्रदायः । दत्तोत्तरमेतत् । मा नाम लौकिकैः प्रयोजिषत । परमवैदिक आचार्यः प्रायो लोकेष्वप्रयुक्तानि च पदानि प्रयुङ्क्त इति विवृतमेतत् । प्रत्यक्षमेतत् तत्प्रबन्धदिदृक्षूणां चक्षुष्मताम् । कोऽन्यः कविर्लौकिकः साहसं कुरुतेऽस्मदाचार्यमृते **'दोषशब्दाश्च विष्णवि'** इत्यादीनि केवलवैदिकानि पदानि प्रयोक्तुम् ॥

अपिच मर्त्या व्याकरणमधीत्य स्मारंस्मारं सूत्राणि पदान्याचित्य भाषन्ते, आचार्यस्तु मर्त्यावतारः । तस्य देवभाषा नाम स्वम् । नहि स व्याकरणमनुरुध्य भाषते । स यद् भाषते तदनुरोधीनि सूत्राणि प्रणेतव्यानि

भवन्ति । नहि महान्तः सूत्राण्यनुसरन्ति । सूत्राण्येव महतोऽनुसरन्ति । **'ऋषीणां पुनराद्यानां वाचमर्थोऽनुधावति'** । व्याकरणमप्यनुधावति । सूत्रमसूत्रं भवति, व्याकरणमव्याकरणम्, यदि नाम नानुधावति ॥

नन्वस्तु साधुतावादः । अथापि लौकिकैः कविभिरप्रयुक्तमित्यप्रयुक्तत्वेन दोषेण दुष्टं भवदाचार्यप्रयोगमाचक्ष्महे । ननु भोः, नायं स्थाणोरपराधः, यदेनमन्धो न पश्यति । व्युत्पित्सूनां काव्यानि भवन्ति । व्युत्पन्नाः शास्त्रेषु विहरन्ति । एके धरायां पदन्यासमभ्यस्यन्ति । अपरे नभसि डयन्ते ॥

अपिच काव्यदोषोऽयम्, यदप्रयुक्तत्वमिति । रसिका रसास्वादाय मा क्लिशन्निति, बोधसौकर्यायाऽलङ्कारिकैः कल्पितोऽयं पन्थाः । नहि बालानां खेलनक्षेत्रं शास्त्रम् । यः काव्ये दोषः स शास्त्रे गुणोऽपि स्यात् । नायं काव्यालापः । किन्तु शास्त्रकाव्यम् ॥

चतस्रो हि विधा भवन्ति । काव्यमिति, शास्त्रमिति, काव्यशास्त्रमिति, शास्त्रकाव्यमिति । काव्यं यथा– किरातार्जुनीयम्, मेघदूतम्, कादम्बरी, उत्तररामचरितमिति । शास्त्रं यथा–ब्रह्मसूत्राणि, ब्रह्मसूत्रभाष्यम्, वादः, खण्डार्थनिर्णय इति । काव्यशास्त्रं यथा–महाभारतम्, यमकमयं महाभारततात्पर्यम्, सङ्ग्रहरामायणम्, शुभोदयमिति । शास्त्रकाव्यं यथा– उपनिषदः, महाभारततात्पर्यनिर्णयः, भगवद्गीता, युक्तिमल्लिकेति ॥

काव्यत्वप्रधानं शास्त्रं काव्यशास्त्रम् । शास्त्रत्वप्रधानं काव्यं शास्त्रकाव्यम् ॥

अपिच तुष्यतु भवान् । नेदमप्रयुक्तम् । प्रयुक्तपूर्वं हि व्यासेन प्रसविष्यध्वमिति । ननु कविभिरप्रयुक्तम् । किं कविपदार्थेऽवधारणा? उत बहुवचने? बहुत्वं न गमकम् । बहवो ह्यल्पप्रज्ञा भवन्ति । अल्पीयांसो विपश्चितः ॥

यदि कवित्वेऽवधारणा तर्हि वृथालापेन केवलं समयातिपातोऽयम् । यदि कवीनां कविर्व्यासोऽपि न कविस्तर्हि कः कविस्तवास्मिन् जगति?



नन्वास्तामियं शुष्का चर्चा । संस्कृतभाषायां दशैव लकाराः पठ्यन्ते द्विविधेन लिङा सह । दशसु कोऽयं महात्मा 'वत्स्यन्तु' इति, 'भविष्यतु' इति , 'स्वप्स्यन्तु' इति । यदि न तेषु कोऽपि तर्हीदमसंस्कृतं पदमित्यायातम् ॥

भगवान् भ्रमोऽयं भवतः । न दशैव लकाराः । लेडपि वेदेषु पठ्यते । किं वेदवचनमप्यसंस्कृतं मन्यसे पण्डितम्मन्य? । तर्हि किंनामाऽयं लकार इति वक्तव्यम् । भवतु वक्ष्यामः । किमकृतनामसंस्कारमपत्य-

मनपत्यं भवति । एकादशेऽहनि, पश्चाद् वा पिता नाम करोति । नहि नामधेयं न विद्यत इति प्रमेयमप्रमेयं भवति । वस्तु भवति । नाम क्रियते ॥

अथापि नामजिज्ञासा बाधते भवन्तम् । आकर्णयतु भवान् विवृत्य कर्णौ । लोट उश्च लृटः स्यश्च सङ्गम्य नूतनं रूपं निष्पादयतः । तेन 'लोलृट्' इति व्यपदिश्यताम् । किं भवतश्छिन्नम् ॥

स यथा **'अनुशुश्रुमः'** इति व्यासप्रयोगः– **'चतुर्थः कीचकस्तेषां पञ्चमं नानुशुश्रुमः'** इति । भवानपि वदतु कोऽयं लकारः किंनामा? लटं च लिटं च समाहृत्य सम्पन्नं पदं शुश्रुम इति । तेन युक्तं नामधेयमस्य ललिडिति ॥

ननु विफलोऽयं समागमः । वन्ध्यासुरतमिव न कमप्यर्थविशेषाख्यं तनयं सूते? क एवं ब्रूते? तात्पर्य-विशेषगर्भोऽयं समागमः । अस्ति कश्चित् तात्पर्यविशेषः । 'न शृणुमः' इत्युक्ते वर्तमानमात्रनिषेधः प्रतीयते । वर्तमाने काले न श्रूयत इति । पूर्वमपि केनापि नाश्रूयेतेति वक्तव्यम् । ततो लिटः प्रयोगः । तस्य विसर्गसंयोजनेन 'न सम्प्रति शृणुमः, नापि प्रायः श्रोष्यामः' इति च ध्वनितम् । तेन ज्ञायते भीमसेन-समानो नाम मायावादिनां प्रपञ्च इव त्रैकालिकनिषेधप्रतियोगीति । एवं चावधारणार्थोऽयं विसर्गो भवति भूतं भविष्यदर्थं च द्योतयन् ॥

*

एवं 'वत्स्यन्तु' इत्यत्रापि । 'वसन्तु' इति किञ्चित् कालं तत्र वासेनापि गतार्थम् । वत्स्यन्त्विति लृटा समाहारेणोत्तरकालीनोऽत्यन्तसंयोगो बोध्यते– यावज्जीवं तत्रैव वसन्तु, मास्म पुनरेषामत्र प्रत्यावर्तनं कदाऽपि भवदिति ॥

**'त्रिशङ्कुजो भविष्यतु'** इति च । पूर्वप्रयोगे लोडर्थस्यात्यन्तसंयोगो लृटाऽबोध्यत । अत्र लृडर्थस्यात्यन्त-संयोगाभावो लोटा बोध्यते । यद्यपि भविष्यति । अथापि शापावसाने न भविष्यतीति ॥

एवं **'स्वप्स्यन्तु यावच्छशिनः प्रकाशः'** इति च । अत्रापि स्वापस्य प्रातःपर्यन्तत्वाभावो लोडर्थः । तदिदं लकारलावण्यं प्रतनप्रयोगेषु ॥

## लिङ्गव्यत्ययः

वेदसम्प्रदायप्रसिद्धो विभक्तिव्यत्ययो लिङ्गव्यत्ययश्चात्राऽचार्येण समुचिततया प्रायुज्येताम् । चेतोहारी लिङ्गव्यत्ययो यथा–

**'विश्वासिता विदुरपूर्ववचोभिरेव दाशोदिताभिः–'** (१९.४४) ।

विचित्रोऽयं प्रयोगविशेषः । विशेष्यपदं नपुंसि वर्तते– वचोभिरिति । विशेषणं स्त्रियां वर्तते– दाशोदिताभिरिति । उभयत्रापि भिस्प्रत्यययोगेन नोतवा प्रतीयत इव लिङ्गव्यत्ययः । एवं लौकिकस्य पदशास्त्रस्य नियमानतिलङ्घ्चेदृशानां प्रयोगाणां केवलमाचार्य एवेष्टे ॥

यदि कश्चिद् विद्यार्थी पुनरीदृशीं वाक्यरचनामारचयिष्यत्, नूनमध्यापकस्तमनुत्तीर्णमघोषयिष्यत् ॥

यद्यपशब्दानज्ञानी प्रयुङ्क्ते, अज्ञानप्रभवः स दोष एव भवति । ज्ञानी चेद् बुद्धिपूर्वमपशब्दानिव प्रयुङ्क्ते तत्र महानर्थविशेषो निगूढं निहितो भवतीति स गुण एव भवति ॥

अत्र स्त्रीलिङ्गप्रयोगो न छन्दःसौहित्याय । नापि विनोदचापलाय । अस्ति हवा अत्र विवक्षाविशेषः । अत्र स्त्रीलिङ्गविशेषणेन दाशोदितेष्वपि वचस्सु स्त्रीगुणा आरोप्यन्ते । के स्त्रीगुणाः? शालीनता विधेयता स्पृहणीयता च ॥

✻

अथायमपरो दृष्टान्तः–

**'अमूभिर्जेष्यामि भीममममुमेकमयातयामैः'** (१९.१७)

अयातयामैर्मनुभिरिति विशेष्यपदं पुंसि पठ्यते । तेन अमीभिरिति वक्तव्यम् । अथाप्यममूभिरित्याह । अमूभिरिति तु स्त्रियां पठन्ति । तर्हि कथमयातयामैर्मनुभिरमूभिरिति । मनूनां पौरुषराहित्यं वन्ध्यात्वं चानेन लिङ्गव्यत्ययेनाऽचष्ट । स यथा शिखण्डी पूर्वं कन्या बभूव, पश्चात् पुंयोगेन पुरुषत्वमाप, एवमेते मनवोऽपि स्वतः शक्तियोगादवन्ध्याः सन्तो दुर्योधनयोगेन वन्ध्या योषित इव विफला बभूवुरित्यर्थः ॥

अमीभिरिति पाठेऽपि नात्र च्छन्दसि गणभङ्गः । अथाप्यमूभिरित्येव पपाठ । तेन ज्ञायते स्त्रीधर्मा मनुष्वारोप्यन्त इति ॥

✻

केचित् संशयीरन्– अयमाचार्याशय इत्यत्र किं गमकम्? केवलं भवादृशानामयं प्रज्ञावाद एव किं न स्यात्?

न स्यात् । यतोऽस्ति गमकम् । किं तत्? निशाम्यतामयं प्रयोगः श्रीमहाभारततात्पर्ये– **'अथ हतयोर्गळिकेशयोः'** इति ॥

गळिकेशिनोरिति पठितव्यम् । अथापि गळिकेश्योरिति पपाठ । किं कारणम्? अचार्यमुखादेवाधीतवेदशास्त्रः श्रीनरहरितीर्थ एवं व्याचख्यौ–

**गळिकेश्योरिति ह्यत्र व्यत्ययः कुत्सने मतः ।**

केशिनः पौरुषं कृष्णस्य पुरतो व्यर्थमासेति बोधयितुं केशिशब्दं स्त्रीप्रत्ययान्तमिव प्रयुयोजेत्यर्थः ॥

एतेन भगवत्पादस्य लिङ्गज्ञानं नाभूदिति ये भ्राम्यन्ति, प्रकामं भ्राम्यन्तु नाम । दुर्जनमोहनमप्यवतारोद्देश एव किल । अत एवाऽह श्रीलस्त्रिविक्रमपण्डिताचार्यः– **'क्रीडामात्रं तदेतत् प्रमदद सुधियां मोहक द्वेषभाजाम्'** इति ।

## विभक्तिव्यत्ययः

अवगतं लिङ्गव्यत्ययस्योदाहरणम् । क्वचिद् विभक्तीनामपि भञ्जनं विबुधचित्तरञ्जनं भवति । तस्य चेदमुदाहरणम्–

**'तेनैव हेतोर्नातिसामीप्यमासीत्'** (२०.१६२)

शक्यं वक्तुम्– **'तस्माद्धि हेतोः'** इति । अयं सहजः पन्थाः । अथापि तेनैव हेतोरित्येवाह ॥

षष्ठीचतुर्थ्योरिव (**वीणायै वाद्यमानायै**) तृतीयपञ्चम्योरपि विपर्ययो वैदिकसम्प्रदायसिद्ध इति ज्ञापयितुम्, तेन ग्रन्थोऽयं शब्दतोऽर्थतश्च परमवैदिक इत्यवगमयितुं वैदिकाग्रणीर्भगवानाचार्य एवंविधानि व्यत्यस्तविभक्तीनि पदानि प्रयुङ्क्ते । **'पञ्चसु तृतीया'** इति च प्रतनं सूत्रम् ॥

## स्वच्छन्दश्छन्दोविलासः

छन्दसां नवेननवेन विन्यासेन नवंनवं लयं निर्माय पुराणेष्विव स्वग्रन्थेऽपि भगवानाचार्योऽपूर्वेण विलासेन छन्दांसि नर्तयति । तस्य कमप्यद्भुतमाविष्कारं नखस्तुतौ प्रकटयामास । तत्र हि पूर्वार्धे शार्दूलविक्रीडितं नाम छन्दः । उत्तरार्धे स्रग्धरा । तदिदं छन्दसैवावतारकथाविष्करणम् । पूर्वं हि नृहर्यक्षो रूक्षैः स्वनखरै रक्षसो वक्षो विदार्य शार्लूलविक्रीडितं प्रदर्शयामास । ततश्चान्त्रस्रग्धरा शुशुभे मूर्तिरस्येति ॥

अत्राप्येकं पद्यं तादृशं दृश्यते (९.९१) । इयान् विशेषः– नखस्तुतौ पूर्वार्धे शार्दूलविक्रीडितम् । उत्तरार्धे स्रग्धरा । अत्र त्वाद्यं पादत्रयं स्रग्धराबद्धम् । चरमे शार्दूलविक्रीडितम् । तदिदं स्रग्धराविक्रीडितं नाम नूतनं वृत्तम्–

**गन्धर्वैर्गीयमानो विबुधमुनिगणैरब्जसम्भूतिपूर्वै-**
**र्वेदोदारार्थवाग्भिः प्रणिहितसुमनः सर्वदा स्तूयमानः ।**
**सर्वैर्भूतैश्च भक्त्या स्वनिमिषनयनैः कौतुकाद् वीक्ष्यमाणः**
**प्रायाच्छेषगरुत्मदादिकनिजैः संसेवितः स्वं पदम् ॥** (९.९१)

अत्र रामस्य स्वधामप्राप्तिर्वर्ण्यते । विस्तारगतिना चाद्रुतेन च (मरभनैर्यानां त्रयेण च) एकविंशत्यक्षरमयेन पादत्रयेण भगवद्यानवैभवं प्रस्तूय त्वरितगतिना (मसजसैस्ताभ्यां गुरुणा च) एकान्नविंशतिभिरक्षरैर्निबद्धेन चरमचरणेन भगवतः स्वधामप्रवेशवर्णनमित्यनन्येयं विधा चमत्कृतिजननी ॥

पाद्मे चैतादृशं पद्यं पठ्यते–

**वाराहः पुनरेव युद्धकुशलः संवाञ्छते सङ्गरं**
**तुण्डाग्रेण सुतीक्ष्णदन्तनखरैः क्रुद्धो धरां क्षोभयन् ।**
**हुङ्कारोच्चारगर्वात् प्रहरति विमलं भूपतिं तं च राजन्**
**मत्वा विष्णुपराक्रमं मनुसुतस्त्वानन्दरोमाञ्चितः ॥** (पा.पु.भूमि.४३.३६)

अत्र प्रथमे द्वितीये तुरीये च शार्दूलविक्रीडितम् । तृतीये स्रग्धरा ॥

✻

कविभिरप्रयुक्ताऽपराऽपूर्वोपजातिरिन्द्रवज्रावसन्ततिलयकयोरुपसर्गेण । पूर्वार्धे वसन्ततिलका उत्तरार्धे पुनरिन्द्र-वज्रा–

**भीमश्च विह्वलतनुः स तु किञ्चिदेव**
**पूर्वं नते गुरुसुते प्रययौ क्षणेन ।**
**निर्धूतयुद्धश्रम आत्तधन्वा**
**योद्धुं गजौघं प्रतिनादिताशः ॥** (२७.११)

भीमस्य किञ्चिदिव कातर्यं पूर्वार्धे प्रकाश्य मन्दगजगमनया वसन्ततिलकया, उत्तरार्धे च महाप्राणबहुलया सत्वरगमनया चेन्द्रवज्रया तस्य रणराभस्यं चातुर्यं च प्रकटं दर्शयतीव ॥

इन्द्रवज्रायाः स्थाने क्वचिदुपेन्द्रवज्रयोपसृष्टोपजातिर्भवति–

**स सर्ववेत्तुश्च विभोर्भयेन**
**विप्रोऽहमित्यवददस्त्रवरातिलोभात् ।** (१९.४८)

इन्द्रवज्रोपेन्द्रवज्रयोर्योजनेन निष्पन्नामुपजातिं प्रायः कवयः प्रयुञ्जते । कवीनां कविराचार्यस्तु कविसमय-मतिक्रम्य वैविध्यमयीमुपजातिं वितनुते ॥

बहळमुपयुक्तानि त्विमानि चत्वारि– इन्द्रवज्रा(ततजा गौ च), उपेन्द्रवज्रा (जतजा गौ च), इन्द्रवंशा (ततजराः), वंशस्थं (जतजराः) च । वसन्ततिलकया चेन्द्रवज्रोपेन्द्रवज्राभ्यां च निष्पन्ना उपजातीः पूर्वमेवाद्राक्ष्म । स्रग्धराशार्दूलविक्रीडिताभ्यां च ॥

अपरश्चायमपूर्वश्छन्दःश्लेषः– मञ्जुभाषिण्या (सजसजगाः) रथोद्धतया च (रनरलगाः)–

> **अथ केचिदासुरारसुराः सुराणका**
> **इत्युरुप्रथितपौरुषाः पुरा ।** (९.२७)

अत्राथेति प्रथमपादस्याऽद्यमक्षरद्वयं विरहय्य पाठे साऽपि रथोद्धतैव भवति– **'केचिदासुरसुराः सुराणकाः'** इति । अथेत्यक्षरद्वययोजनेन तां मञ्जुभाषिणीं चकार । उत्तरत्र चाक्षरद्वयं परिहाय रथोद्धतां निबबन्ध । अथच मञ्जुभाषिणीं रथोद्धतध्वानया रथोद्धतया संयोजयामास ॥

अथच वैश्वदेवीं (ममयया:) ललितां (तभजराः), शालिनीं (तता गौ च), वातोर्मीं (मभता गौ च) चोपसृज्य बहुविधा रुचिराश्चोपजातीराचार्य उपससर्ज ॥

वैश्वदेव्या यथा–

> **काले त्वेतस्मिन् भूय एवाखिलैश्च**
> **नृपैर्युक्तो मागधो योद्धुकामः । (१६.१)**

प्रथमचरणगतया वातोर्म्या सह लयसाम्याय उत्तरार्धेऽप्युपेन्द्रवज्राया गणभङ्गेन लघुस्थाने द्वे गुरुणी अक्षरे निचिक्षेप । चतुर्थं च सप्तमं च । तेन 'जतजाः' यतता बभूवुः । तेनापरैव नूतना त्रिष्टुबवततार ॥

ललितया यथा–

> **यज्ञोरुदाननरदेववन्द्यता-**
> **प्रश्नर्षिपूजासु युधिष्ठिरोऽभूत् । (२०.१)**

प्रथमपादे ललिता । द्वितीये स्फुटमिन्द्रवज्रा ॥

शालिन्या यथा–

**दृष्ट्वा भीमः क्लिश्यमानां तु कृष्णां**
**धर्मात्ययं धर्मराजे च दृष्ट्वा । (२१.३३८)**

अत्र प्रथमपादे शालिनी । द्वितीये भग्नतृतीयगणा हीन्द्रवज्रा । जगणस्य स्थाने तगणः । स्थाने चायं तगणः तृतीयतगणायाः शालिन्याः सादृश्याय निविष्टः शोभते । नूनमयमपि नूतनश्छन्दोऽवतारस्त्रिष्टुभि यत्र 'ततजाः' ततता बभूवुः ॥

वातोर्म्या यथा–

**भीष्मो द्रोणो विदुराद्याः क्षमस्व**
**सर्वं त्वयोक्तं सत्यमित्येव हस्तौ । (२१.३४७)**

प्रथमा वातोर्मी । अथ द्वितीयचरणो द्वादशाक्षरोऽपि नेन्द्रवंशाबद्धः । ततजरैर्हीन्द्रवंशा भवति । अत्र तु तमययाः । वैश्वदेवी हि ममययैर्भवति । तेनेयमिन्द्रवंशावदना वैश्वदेवीकरचरणा काचिदन्यैव जगती जगति कृतप्रथमपदन्यासा भाति ॥

✻

एवं सर्वत्र यथासन्दर्भं गणान् व्यत्यस्य कश्चनार्थानुगुणं नवन्नवं लयं सृजति भगवत्पादः । परःशतमीदृशाश्छन्दोभङ्गविलासा अत्र विलसन्ति । येन च्छन्दोगतेरेव कश्चन चेतोहारी नूतन आयामोऽनुभूयते ॥

सूक्ष्मं चेत् समीक्ष्यते प्रायो न द्वे उपजाती एकरूपे सर्वात्मना । गतौ यतिभङ्गी भिन्ना भवति । येन च्छन्दोभङ्ग एव नूतनस्य च्छन्दसोऽवताराय भवति । ईदृशं छन्दोविलासं प्राय ऋते पुराणेभ्यः, विशिष्यर्ते च भारतात्, नान्यत्र पश्यामः ॥

✻

इन्द्रवज्रोपेन्द्रवज्रे आचार्यहस्ततालानुसारिण्यौ केकिन्याविव नूतनया नाट्यभङ्ग्या नृत्यन्त्यौ, अथच मेघाडम्बरजातसम्भ्रमाविव केकिनौ चित्तं चमत्कारयतः । पश्यतेदमेकमुदाहरणम्–

**प्रायाद् यदूंस्तत्र नित्याव्ययाति-**
**बलैश्वर्यौऽपीच्छयाऽगात् स कृष्णः । (१६.१)**

अत्र प्रथमचरणे हीन्द्रवज्रा पुनः सप्तमस्याक्षरस्य गुरुभावेन गुर्विणी रमणीव बन्धुरायां धरायामिव चकितगतिर्लक्ष्यते । तेन ततजानां स्थाने तत्रयं बभूव ॥

एवं द्वितीयचरणे तृतीयं सप्तमं चेति द्वे लघ्वक्षरे गुरूभूय गुरुतरं गृहभारं निर्वहन्ती गृहिणीव शोभते । येन जतजानां स्थाने यगणेन तद्वयेन च नवीना गतिधुरा विराजते ।

**त त त ग. ग.**

**प्रायाद्य । दूंस्तत्र । नित्याव्य । या । ति ।**

**य. त. त. ग. ग.**

**बलैश्व । यौंपीच्छ । यागात्स । कृ– । ष्णः ।**

छन्दःशास्त्रे संशिशोधयिषूणां मनीषिणां महाभारतमिव महाभारततात्पर्यनिर्णयोऽपि निदर्शनजलधिर्महान् ।।

✻

अत्र प्रयुक्तानि छन्दःशस्त्रेषु कृतनामधेयान्यक्षरगणच्छन्दांसि– वसन्ततिलका, इन्द्रवज्रा, उपेन्द्रवज्रा, इन्द्रवंशा, वंशस्थम् (अस्योपेन्द्रवंशेति युक्तं पुनर्नामकरणम्), उपजातिराहो उपेन्द्रमाला, मालिनी, शालिनी, द्रुतविलम्बितम्, स्रग्धरा, शार्दूलविक्रीडितम्, भुजगेन्द्रप्रयातम्, रथोद्धता, मञ्जुभाषिणी, प्रमिताक्षरा, वैश्वदेवी, ललिता, वातोर्मी, प्रमाणिका, अनुष्टुबिति । अथचाकृतनामधेयाः पिङ्गलनागादिभिरपरिगणिता बहवस्त्रिष्टुब्जगतीभेदाः । मात्रागणच्छन्दस्सु गीतिः पथ्यार्या च ।।

स्फारमुपयुक्तानि प्रमुखानि च्छन्दांसि तु चत्वारि– वसन्ततिलका, उपजातिप्रभेदाः, प्रमाणिका चानुष्टुप् चेति ।।

✻

स्वच्छन्दं छन्दांसि नर्तयन्ती भगवत्पादशैलीशैलूषी मोमुषीति तत्वचिन्तकानां चेतांसि । विशिष्य चैकविंशेऽध्याये स्वादंस्वादमनुभवितव्यं तस्या लास्यवैदुष्यम् । यत्र प्रमेयानुगुणं सत्वरं प्रमाणिकाऽनुष्टुब् भवति; अनुष्टुब् वा प्रमाणिका । यथा–

**एतच्छ्रुत्वा धर्मसुतो भ्रातृभिः सहितो वशी ।**
**अवाप्तिं राजसूयस्य मन्त्रयामास धर्मवित् ।। (७४)**

**सुकार्यमेतदित्यलं निशम्य सोदरोदितम् ।**
**अयातयत् स्वसारथिं स केशवाय भूपतिः ।। (७५)**

अत्र मन्त्रणानन्तरं केशवदिदृक्षायां त्वरातिशयं प्रमाणिका द्योतयति । विपर्ययेण यथा–

**विलज्ज्यमानमीक्ष्य तं जगाद केशवोऽरिहा ।**
**व्रजेति स प्रतिश्रवं चकार हाप्यरक्षणे ॥ (२१)**

**वह्निं प्रवेक्ष्येऽशक्तश्चेदित्युक्त्वा सर्वयादवैः ।**
**ययौ न रामप्रद्युम्नावनिरुद्धं च केशवः ।**
**न्ययोजयत् तत्साहाय्ये यशस्तेष्वभिरक्षितुम् ॥ (२२)**

अत्र प्रमाणिका कृष्णस्य त्वरितां परिणामज्ञामनुमतिमाह । ततोऽर्जुनस्यापरिणामदर्शिनीं साहसितां तन्मूलां प्रतिश्रवत्वरां च । ततोऽनुष्टुभा पुनस्तस्याप्रज्ञामूलं दृढनिर्धारम्, यादवसाहित्येन विश्रम्भातिशयं चाऽह, केवलमक्षराणां गतिभेदेन त्वरामत्वरां च बोधयन् ॥

एवमन्यत्रापि । अन्येषु छन्दस्स्वपि ॥

✼

ग्रन्थमिमं भगवत्पादो वसन्ततिलकयोपक्रमते । महाभारतमपि वसन्ततिलकारम्भम् । अथापि यतिभेदेन गतिभेदं विरचयामास । महाभारतपद्ये चतुर्भिश्चतुर्भिः षड्भिर्यतिः प्रथमचरणे–

**नारायणं । सुरगुरुं । जगदेकनाथम् ।**

अत्र तु पञ्चभिश्चतुर्भिः पञ्चभिश्च–

**नारायणाय । परिपूर्ण । गुणार्णवाय ।**

एवमुत्तरचरणेष्वपि लयभेद उन्नेयः ॥

✼

क्षैप्रसंयोगानां व्यूहाख्यं तन्त्रमनेकधोपयुङ्क्ते भगवत्पादः । तेन यथाप्रसङ्गं निर्धारशैथिल्यम्, प्रवृत्तिसङ्कोचम्, भयग्रस्तताम्, सन्दिहानताम्, स्पृहणीयताम्, असहायताम्, गद्गदताम्, आनन्दतुन्दिलताम्, अमन्दानन्दजनितां मन्दताम्, आत्मन्यप्रत्ययं च वै तत्रतत्र नाटकीयं परिणामं नाटयित्वा दर्शयतीव–

**चक्षुःश्रुतिभ्यां स्पर्शात् सहैव (३.२८)**

**जानामि संस्पर्शमस्य शरस्य (५.३०)**

**तर्हि वालिवधे समर्थः (६.६)**

सिन्धुः शिरस्यर्‌हणं परिगृह्य (८.१०)

तत्पक्षवातस्पर्‌शेन (८.१४४)

तच्चैलवातस्पर्‌शात् (८.१५७)

सुरैश्च पुष्पैर्वर्‌षद्भिरीडितः (८.१६९)

स्पर्शाच्च सर्वे स्पर्‌शेन्द्रियप्रियाः (९.८)

हर्‌षं विबुधेषु कुर्वन् (९.४८)

समस्तदोषस्पर्‌शोज्झितः (१२.६०)

कृष्णो निजस्पर्‌शतः (१३.४६)

शक्तस्य तद्दर्‌शनोपगतः (१४.४६)

निश्वासतो दर्‌शनादपि भस्म येषाम् (१४.७८)

बार्‌हद्रथः (१७.६६; २१.१०४, ११४)

बार्‌हद्रथे (१७.१०१)

केशेषु सञ्चकर्‌षाऽशु (१९.११२)

पार्थेन सन्धर्‌षितः (१९.११३)

खड्गं प्रगृह्य हर्‌षात् (१९.१३५)

आदाय पारिबर्‌हम् (१९.१६०)

हरेः पार्‌षदः क्षिप्रम् (२१.४०)

ततः पार्‌षतं द्रौणिः (२७.७०)

वैदिकसम्प्रदायसिद्धश्चायं क्षैप्रसंयोगव्यूहः । यदाह पिङ्गलनागः– **‘क्षैप्रसंयोगान् व्यूहेत’** इति । प्रयोगाच्च– **‘तथ् सवितुर्वरेणियम्’, ‘त्रियम्बकं यजामहे’, ‘सहस्रशीर्‌षं देवम्’** इत्याद्याः ॥

कर्णाटकभाषायामपि प्रचुरोऽयं क्षैप्रस्य विश्लथः प्रयोग उदन्ततया व्यवह्रियते । तद् यथा–सङ्कर्षणं सङ्करुषणमाहुः । हर्षं हरुषमाहुः । वर्षं वरुषमाहुः । दर्शनं दरुशनम् ॥

✻

एवं छन्दस्यक्षरलोपेन, अधिकेन वाऽक्षरेण व्यक्तिगतं न्यूनातिरेकमक्षरशोऽभिनीय दर्शयत्याचार्यः । पञ्चमेऽध्याय एकाक्षरन्यूनां पश्यत स्रग्धराम्–

**सेत्युक्ता मन्थराऽऽसीत् तदनु कृतवत्येव चैतत् कुकर्म । (५.२)**

अत्र च्छन्दस आनुगुण्याय **'तदनु च कृतवत्येव चैतत् कुकर्म'** इति वक्तव्यम् । अथाप्येकमेकादशमक्षरं विलोप्य मन्थरायाः पुण्यलोपमाह । तेनात्र पादे विंशतिरेवाक्षराणि ॥

तत्रैव चतुर्थे पद्ये द्वितीयतुरीययोश्चरणयोर्विंशतिरेवाक्षराणि–

**प्रोत्थां गङ्गां स्वपादाद्धर इव गुहेनार्चितः सोऽथ तीर्त्वा ।**
**शैलेशं चित्रकूटं कतिपयदिनान्यत्र मोदन्नुवास ॥**

छन्दोऽनुगुणं **'हर इव च गुहेनार्चितः'** इति पठनीयम् । अथाप्येकमक्षरं विलोप्य **'हर इव गुहेनार्चितः'** इत्येव पपाठ । एवं तुरीयचरणे छन्दआनुगुण्याय **'कतिपयदिवसानत्र मोदन्नुवास'** इति शक्यं वक्तुम् । अथाप्येकमक्षरं विलोप्य **'कतिपयदिनान्यत्र मोदन्नुवास'** इत्येव पपाठ ॥

सहजं पठतामत्र छन्दो भग्नमभूदिति न प्रतीयत एव । गणभङ्गेऽपि (मरभनानां यानां त्रयस्य च स्थाने मरभानास्तद्वयं गद्वयं च) तादृशी स्वरसमधुरा स्रग्धराया लयसरणिः ॥

अर्थतोऽपि रुचिरोऽयं गणभङ्गः । **'हर इव गुहेनार्चितः'** इति देवसेनापतेर्निषादपतेश्च तयोरर्चनस्य च साम्यमुपमानेन प्रतीयते । अथापि देवसेनान्यो गुहस्य निषादपतेर्गुहस्य च महद् वैषम्यमित्यक्षरलोपेनाऽह प्रथमपादे । चरमे च सीतया सह मोदमानस्य रामस्य दीर्घा अपि दिवसा अदीर्घा एवाऽसन्नित्याह । अविदितगतक्षणाः क्षणदा एव क्षिप्रमतिययुः, न सीतारामयोर्विहारलीला इत्यक्षरलोपेनाऽह ॥

✻

भगवतो बादरायणस्य स्वरूपवर्णने पुनरधिकमक्षरद्वयं प्रयोज्य तस्य सर्वाधिकं रूपातिशयमाह । मालिनीवृत्तबद्धं चेदं पद्यं (ननमययैः) पञ्चदशाक्षरम् । परन्तु द्वितीयपादे सप्तदशभिरक्षरैः (ननसततैर्गाभ्यां च) नवीना छन्दोगतिः । नवीनो लयविन्यासः–

**शुभमरतकवर्णो रक्तपादाब्जनेत्रा-**
**धरकरनखरसनाग्रश्चक्रशङ्खाब्जरेखः । (१०–५३)**

मालिन्या अष्टभिः सप्तभिश्च यतिः । अत्रापि प्रथमपादे तथैव । द्वितीये तु षड्भिश्चतुर्भिः सप्तभिश्च–

**शुभमरतकवर्णो । रक्तपादाब्जनेत्रा-**
**धरकरनख । रसनाग्र– । श्चक्रशङ्खाब्जरेखः ।**

अपूर्वा लयगतिरियं वृत्तस्य ॥

*

छन्दसां लघुगुरुव्यत्ययेन पद्यस्य पौराणिकीं सुषमां मन्त्रतुल्यं गरिमाणं च प्रदाय चमत्करणं पुनराचार्यकृतिषु क्रियासमभिहारेण दृश्यते । एकमुदाहरणं पर्याप्तम् । यस्मिन्नेकस्मिन् विज्ञाते सर्वमन्यद् विज्ञातं भवति–

**देवव्रतोऽसावनुशासनाय**
**मात्रा दत्तो देवगुरौ शतार्धम् । (११.४६)**

इन्द्रवज्रेयं तगणतुण्डा । परन्तु द्वितीयचरणे त्रिगुरुर्मगणस्तगणस्थानमाक्रम्यापूर्वं शोभातिशयमादधातीत्यलं छन्दश्चमत्कृतिचिन्तया । वस्तुतोऽयमेव वृत्तरत्नाकरः । कियन्तीत्यवचयमवचयं रत्नान्युद्धरामः । विदन्त एतावतैव विद्युः । अविदतां बहु कथनेनापि किं फलम्? मर्कटहस्ते माणिक्यनिक्षेपः ॥

## तात्पर्यनिर्णयस्य टीकाः

अस्य महतः प्रबन्धस्य अधिकसप्तविंशाष्टीकाः सन्तीत्येके उल्लिखन्ति । उपत्रिंशाष्टीका आसन्नित्यपरे विमर्शकाः । तत्र दशैकादशाष्टीका मम दृष्टिपथङ्गताः पर्यशील्यन्त च–

१. उपनिषद्भाष्याणामणुटिप्पणीकृता व्यासतीर्थेन विरचिता भावपञ्चिका ।

२. वेदाङ्गतीर्थभट्टारकविरचिता पदार्थदीपिका ।

३. वादिराजश्रीचरणविरचिता भावप्रकाशिका ।

४. जनार्दनभट्टविरचिता पदार्थोद्दीपिका (पदार्थप्रदीपिका)

५. आद्यवरदराजाचार्यविरचिता मन्दसुबोधिनी ।

६. भारतश्रीनिवासाचार्यविरिचिता टीका ।

७. जम्बुखण्डिजातस्य लक्ष्मीनरसिंहाचार्यस्य टीका ।

८. अनन्ताचार्यकृता तन्त्रमाला ।

९. सत्याभिनवतीर्थविरचिता दुर्घटार्थप्रकाशिका ।

१०. आद्यानां केषाञ्चिदध्यायानां सङ्कर्षणतीर्थकृता शुभप्रकाशिका ।

अपरा च टीका भावचन्द्रिका नाम क्वचिदवलोकिता । केचित्तां श्रीनिवासाचार्यविरचितामाचक्षते । अपरे कृष्णाचार्यकृताम् । संशोधनरङ्गेऽपि मिथ्यावादेन लोकं प्रतारयन्तः सम्प्रति प्रतायन्त इति सर्वैरपि सत्यान्वेषिभिर्जागरूकैर्भाव्यम् ॥

तत्र वादिराजीया भावप्रकाशिका, जनार्दनभट्टीया पदार्थोद्दीपिका, सत्याभिनवतीर्थीया दुर्घटार्थप्रकाशिका चेत्येतास्तिस्रष्टीकाः समग्रं मुद्रिताः । भावप्रकाशिका पदार्थोद्दीपिका च द्विवारं मुद्रिते ॥

भागतो मुद्रिताश्चेमाः–

१. व्यासतीर्थकृता भारतभावपञ्चिका । २. सङ्कर्षणतीर्थविरचिता शुभप्रकाशिका । ३. वरदराजाचार्यकृता मन्दसुबोधिनी । ४. ताम्रपर्णीश्रीनिवासाचार्यविरचिता प्रमेयमणिमाला ५. जम्बुखण्डिलक्ष्मीनरसिंहाचार्यविरचितष्टीकासङ्ग्रहः । ७. रामाचार्यविरचिता भावविवृतिः । ८. भारतश्रीनिवासाचार्यविरचिता टीका चेति ॥

एषु प्रायः प्रतनतमा टीका व्यासतीर्थकृता भावपञ्चिका । तदीया उपनिषद्भाष्यटीका इव नातिविस्तृता, न वावदूका, अतितमां मितभाषिणी ॥

प्रायः कालतो द्वितीयाऽत्रेदम्प्रथमतया समग्रं प्रकटीक्रियमाणा वेदाङ्गतीर्थभट्टारकविरचिता पदार्थदीपिका । व्यासतीर्थो वेदाङ्गतीर्थश्चेत्युभावपि कालतो नातिव्यवहितौ । अथापि वेदाङ्गतीर्थः किञ्चिद्यवीयानिति भाति । शालिवाहनशकस्य चतुर्दशशतके द्वितीये दशके प्रायो व्यासतीर्थ इमां टीकामटीकत । तृतीयदशके वेदाङ्गतीर्थः । अथापि हृषीकेशतीर्थीयमूलपाठेन वेदाङ्गतीर्थीयमेव भूयिष्ठं संवदते । तदनन्तरभाविनष्टीकाकारा जनार्दनभट्टादयस्तदेवाविकलमनुचक्रुरिति स्फुटं चक्षुष्मताम् । न केवलमर्थतः, शब्दतश्च । स्वयमेव चोदघोषि जनार्दनभट्टेन– **'भारतार्थनिर्णयस्य प्रदीपिका । वेदाङ्गतीर्थसद्व्याख्यामाश्रित्य क्रियते मया'**

इति । स्फुटं बहुषु स्थलेषु वेदाङ्गतीर्थीयस्य पदशोऽनुसरणम् । एतेन **'व्यासतीर्थादिसद्व्याख्यामाश्रित्य'** इति पाठान्तरकरणं मूलानवबोधनिमित्तमिति स्फुटम् ॥

कालक्रमतस्तृतीया वादिराजीया टीका । इयं द्विवारं मुद्रिताऽप्यशुद्धिप्रचुरा । प्रायो मध्येमध्ये पुनरबो-धविजृम्भितैः प्रक्षिप्तान्यपि वाक्यानि सहैव मुद्रितानीति भाति । तदिदं गङ्गारथ्यापसङ्गमनम् ॥

जिज्ञासूनां कृते चात्र कानिचनोदाहरणानि भवन्ति–

**समस्तपदे तु विश्वस्य आ समन्तात् मित्रं यो मुनिः स विश्वामित्र इति विग्रहः । (४.४.)**

वस्तुतो न वक्तव्यमेतत् । **'मित्रे चर्षौ'** (६.३.१३०) इति पाणिनिस्मरणात् । तेन विनाऽप्याङ उपसर्जनं नामपदतया पूर्वपदान्तवृद्धौ विश्वामित्र इत्येव रूपम् । अन्यानि च बहून्येतादृशानि वृद्धिमन्ति नामपदानि भवन्ति । तद् यथा–अष्टावक्रः, पद्मावती, द्वारावती, नेत्रावती, धूमावती- इत्यादयः । नात्र सर्वत्राऽङः प्रश्लेषः शक्यो वक्तुम् ॥

**भरतः साक्षादनुजः । इमौ तु परम्परया रामानुजाविति भावः । कथमन्यथा रामस्य वनवासे भरतस्यैव राज्यं भविष्यतीत्याशा कैकेय्याः । अत एवोक्तं महानाटके–चतुर्णामवरजतया यस्य जात इति ।**(३.७७–८)

इदमपि स्फुटं प्रक्षिप्तम् । सङ्गहरामायणादिसर्वप्रामाणिकग्रन्थविरोधात् । रामस्य वनवासे भरतस्यैव राज्यं भविष्यतीत्याशा कैकेय्या नाऽसीदेव । अत एव भरतो राजा भवत्विति द्वितीयमपि वरं वव्रे । महानाटकं च न प्रमाणमिति प्रमितम् । काव्यालापो हि सः । काळिदासोऽप्याह रघुवंशे– **'अस्त्येव मन्युर्भरताग्रजे मे'** इति । क एतादृशानि काव्यवचनानि भगवत्पादोक्तिनिर्णयाय प्रमाणत्वेनोदाहरेत् ॥

**उत्तारयन्तीमथेत्यत्र अथशब्देन वसिष्ठयाज्ञवल्क्यादिमुनीनां संसदि विवाहहोमे कृते सति पित्रा वसुचक्रवर्तिना धारापूर्वकदानानन्तरमिति भारते प्रसिद्धकथां स्मारयति । तस्मात् कानीनो व्यास इति यदविदुषां वचनं तद् भारतकथापरिज्ञानशून्यत्वनिमित्तम्** । (१०.४७)

प्राय इदमपि प्रक्षिप्तम् । **'कानीनो बादरायणः'** इति स्वयमाचार्येणैव कथनात् खण्डार्थनिर्णये ।

**शूरतातसुतस्य । शूरस्य तातः पिता शूरतातः । तस्य सुतः शूर एव । तस्येत्यर्थः । शूरस्येति वक्तव्ये छन्दोभङ्गपरिहारार्थमेवमुक्तिः । (११.२२७)**

छन्दोभङ्गपरिहार इति त्वगतिका गतिः । नहि हठादाकृष्टानां पदानां रचयिता भगवानाचार्यः । येन च्छन्दोभङ्गपरिहाराय व्यर्थपदानां प्रयोग इति शक्यं वक्तुम् । वश्यवाचः कवेर्हीदं वचनं भारतीभर्तुः ।

अपिचान्यथाऽपि विनाऽपि व्यर्थपदप्रयोगं शक्यं छन्दोभङ्गपरिहारः कर्तुम्–**'शूरसेनाह्वयस्य'** इत्यादिपदान्त-रयोजनेनापि । तेन केनापि चवैतुहिकविना प्रक्षिप्तमिदं वाक्यमिति भाति ॥

**'माषस्य नाळेन कृतास्त्रिभेरीः'** (२१.१२५) इत्यत्र भावप्रकाशिकावचनम्–

**आकस्मिकमाषनाळेन कृता इत्यर्थः ।**

असङ्गतमिदम् । माषाख्यस्यासुरस्य नाळेनेति वक्तव्यम् ॥

**नराधिरूढो गम्यस्तव स्यान्न च भूमिभागः ।** (२८.१८५) इत्यत्र–

**सहस्रं जना यत्र तिष्ठन्ति कोलाहलरूपेण नादं कुर्वन् द्रौणिस्तेषां शिरांस्यारूढस्तिष्ठतीति पौराणिकी कथा ।**

विप्रतिषिद्धमिदं व्याख्यानम् । नराधिष्ठितो भूमिभागस्तव न गम्यः स्यादिति हि तत्रोक्तम् । गमनाभावो हि तत्र वाक्यार्थः । अत्र तु जनसम्मर्दे तिष्ठतीत्युच्यते । किं केन सङ्गतम्?

अत्यद्भुतमेतद् यल्लकारज्ञानविधुरं बालिशं वचनमपि वादिराजीया व्याख्यानचातुरीति प्रशस्य प्रकटीक्रियते । तथाहि निदर्शनम्–

**क्वचिदमुश्चदित्यादिना लौकिकप्रयोगं करोमि । क्वचिदमुचदित्यादिना वैदिकप्रयोगं करोमि । अतोऽहं लौकिका-लौकिकपाण्डित्यचतुरत्वात् त्रैलोक्याचार्य इति सूचितम् ।** (१३.१०२)

अहो व्याकरणेष्वनधीतिनामपि प्रक्षेपचापलम् । अमुचदिति न वैदिकप्रयोगः । लङि अमुञ्चदिति रूपम्, अमुचदिति लुङि । तेन केनचिदपदज्ञेनेदं वाक्यमुपक्षिप्तम्, यो धातुमञ्जरीमपि न पपाठ । प्रक्षेप्ताऽपि यदि **'अयुञ्जदित्यादिना वैदिकप्रयोगं करोमि'** इति प्राक्षेप्स्यत् किञ्चिदिव सह्यमभविष्यत् । युजेरयुनगिति लङि रूपम्, अयुजदिति लुङि । तेन **'अयुञ्जदब्धौ'** इत्यादिर्नूनं वैदिकः प्रयोगः, अबिभ्रदिति यथा ॥

एवमाद्यनेकदोषसङ्कुलं तद् व्याख्यानं प्रक्षेपप्रचुरमिति निश्चीयेत । नहि महान्तः प्रबन्धारः प्रमाद्यन्ति । क्षुद्राः प्रक्षेपकाः प्रमाद्यन्ति । किं नीरं किं क्षीरमिति विवेक्तुमक्षमाः क्षुल्लकाः संशोधकाः प्रमाद्यन्ति ॥

✲

जनार्दनभट्टीयमपि किञ्चिदिव समस्याग्रस्तम् । मधुरं विवरणम् । स्निग्धं निरूपणम् । प्रामाणिकं प्राचामनुसरणम् ॥

वेदाङ्गतीर्थीया टीका पदार्थदीपिका । अतः स्वटीकां पदार्थोद्दीपिकामाह । केषाञ्चिन्मते पदार्थप्रदीपिकाम् । तेन नाम्नैवाधमर्णतां प्रस्फुटमस्फुटत् । अथापि क्वचित्क्वचिद् विजह्वालेव । तथाहि **'मरीचिमुख्या देवाश्च'** (३.२९) इत्यत्र तद्व्याख्यानम्–

**'मरीच्याद्याः सूर्यरश्मिसंस्था वसुपुत्राः'** इति ।

एतद्व्याख्यानमूलं तु च्छन्दोगोपनिषद्भाष्यगतं सामसंहितावचनम्–

**अन्तरिक्षगतश्चासौ वस्वाद्या मधुकारिणः ।**
**तत्पुत्रास्तु मरीच्याद्याः सूर्यरश्मिषु संस्थिताः ॥**

अहो बभ्राम व्याख्याता । तत्र हि तत्पुत्रा इति प्रधानवायुपुत्रा उच्यन्ते । न वसुपुत्राः ॥

एवं विंशेऽध्याये–**'प्रयाजान् देवाननुयाजांश्च शुल्कम्'** (२१८) इत्यत्र जनार्दनभट्टीयम्– **'प्रयाजाननुयाजान् चतुर आहुतिविशेषान्'** इति । तदिदमसङ्गतम् । प्रयाजाः पञ्च भवन्ति । त्रयोऽनुयाजा नव वैकादश वा भवन्ति । न क्वापि चत्वारः । अधिकं निर्णयभावचन्द्रिकायां द्रष्टव्यम् ॥

✻

खलु तावदप्रस्तुतं चिन्तयित्वा । इतः पूर्वं दश टीका ग्रन्थस्यास्य भागशः प्रकाशिताः । त्रयस्तु समग्रतया– वादिराजीयम्, जनार्दनभट्टीयम्, सत्याभिनवतीर्थीयं चेत्यावेदितम् ॥

एतावन्तमप्यनेहसं दारवस्य पिटकस्यान्तः शार्वरे निलीना, क्रिमिभिः कृतेर्मेषु तालपत्रेषु पिहिता वेदाङ्ग-तीर्थभट्टारकविरचिता टीका पदार्थदीपिका समग्रा चात्रेदमुपक्रमं प्रकट्यकारि ॥

द्वे टीके पदार्थदीपिकाख्ये वेदाङ्गतीर्थभट्टारकविरचिते सम्प्रत्युपलभ्येते । एका श्रीमध्वविजयटीका; अपरा श्रीमहाभारततात्पर्यनिर्णयटीका ॥

तत्र श्रीमध्वविजयटीका पदार्थदीपिका पूर्वमेवास्मत्प्रकाशनेन प्राकाशि । सम्प्रति श्रीमहाभारततात्पर्यटीका प्रकाशयिष्यते ॥

व्यासतीर्थकृतभावपञ्चिकातः परमिदानीमुपलभ्यमानाभ्यः सर्वाभ्यष्टीकाभ्यः प्रतनतमा सन्निकृष्टा च मूलकृ-तेरियं पदार्थदीपिका ॥

श्रीवेदाङ्गतीर्थभट्टारकः श्रीविष्णुतीर्थसंस्थानमधिरूढः परम्परायां त्रयोदशः । दशमस्तु श्रीवायुस्तुतिव्याख्याता वेदात्मतीर्थः । विंशश्च प्रथितयशाः श्रीवादिराजमुनिराजः ॥

तथाहीयं गुरुपरम्परा वेदाङ्गतीर्थपर्यन्ता सम्प्रति 'सोदेमठ' इति प्रथितस्य पुरा 'कुम्भासिमठ' इति गदितस्य श्रीविष्णुतीर्थसंस्थानस्य–

| | |
|---|---|
| १. श्रीविष्णुतीर्थः | ७. श्रीवासुदेवतीर्थः |
| २. ''वेदव्यासतीर्थः | ८. ''वेदव्यासतीर्थः |
| ३. ''वेदवेद्यतीर्थः | ९. ''वराहतीर्थः |
| ४. ''वेदगर्भतीर्थः | १०. ''वेदात्मतीर्थः |
| ५. ''वरदेशतीर्थः | ११. ''विश्ववन्द्यतीर्थः |
| ६. ''वामनतीर्थः | १२ ''रत्नगर्भतीर्थः |

१३ श्रीवेदाङ्गतीर्थः

अस्य वेदाङ्गतीर्थस्य वृन्दावनमुत्तरकर्णाटके, 'सिद्धापुर'विभागे बिळगिनामनि ग्रामे बहोः कालादलक्षितमरक्षितं चाऽसीत् । यत्र पूर्वं शास्त्रविदां विप्राणामग्रहार आसीत् । यत्प्रान्ते शाल्मली शोधयन्ती मलीमसानि जनमनांसि प्रोहे । यत्र च शिलामयं देवायतनं बभौ । बभूव सम्प्रति सर्वं कालकलितम् । विप्रा अदर्शनं गताः । अग्रहारोऽटवी बभूव । शाल्मली स्वयं जम्बालमलीमसा बभूव । लुण्टाकैः स्तेनितदेवताप्रतिमं च देवायतनम् । जीर्णं वृक्षगुल्मगीर्णं च वृन्दावनम् । ऋते वृन्दावनादन्यत् सर्वं तथैव वर्तते । दिष्ट्या वृन्दावनं नवीकृतम् । 'शिवमोग्ग'नगरवासी मूलतस्तौळववंशजो भगवदनुग्रहपात्रं श्रीलः के.एल्. उपाध्यायः सुन्दरं मन्दिरं निर्ममे, तत्र च शिलामयं वृन्दावनं प्रत्यतिष्ठिपदिति महत्तरमिदं प्रमोदस्थानम् । आकस्मिकीयं घटना यत् तदात्व एव तदीयां मध्वविजयटीकामहं संशोध्य प्राकाशयम् । सम्प्रति महाभारततात्पर्यनिर्णयटीका प्रकाश्यत इति नूनं श्रीवेदाङ्गतीर्थभट्टारकस्य महती तपःशक्तिरेवेयं पफाल ॥

व्याख्या चेयं सरळा । नातिविस्तरा नातिसङ्क्षेपा । नातिप्रौढा नातिमुग्धा च । मितैरक्षरैः प्रमितमर्थं प्रकाशयन्ती शोभते । अथापि सङ्क्षिप्ता सा क्वचिद् बहुनि वक्तव्येऽपि मिताक्षरा स्वयमृषिकेव धृतमौना । तेन नेयं प्रचुरान् प्रमेयविशेषान् विश्लेषयतीत्यरुच्येव पुनः श्रीवादिराजयतिराजोऽस्य विपुलां सरसां च टीकां वितेने । यत्र स्वपूर्वाचार्यस्य टीकायां क्वचिदतुष्टिमपि स्पष्टं व्यानञ्ज ॥

तथाहि निर्णयस्य दशमेऽध्याये पठ्यते–**'वीशः सुमन्तुमपि वारुणिं मुनिम्'** (१०.७४) इति । तत्र **'वारुणिर्वरुणपुत्रो भृगुः'** इति वेदाङ्गतीर्थीयं व्याख्यानम् । तदेतन्निराचकार श्रीवादिराजयतिः– **'अथर्वाङ्गिरसामासीत् सुमन्तुर्वारुणो मुनिरिति भागवते, 'वारुणिर्वरुणपुत्रः सुमन्तुर्नाम मुनिः' इति तट्टीकायां च स्पष्टमुदितत्वादपि सुमन्तरेव वारुणो मुनिः, नतु भृगुः'** इति ॥



अथापि मिताक्षरं वेदाङ्गतीर्थीयं व्याख्यानं रुचिरं पुरातनं चेति द्वाभ्यां कारणाभ्यामस्य प्रकाशनाय मया प्रायत्यत । तत्संशोधनाय चैक एव मूलकोशः समपादि मया, यः श्रीहरिपदं गतेन श्रीसोदामठाधीशेन श्रीविश्वोत्तमतीर्थश्रीचरणेन सङ्गृहीतः प्रीत्या दत्तश्च ॥

तत्रैका समस्या बभूव । बहुषु स्थानेषु पदानि गलितानि । क्वचिद् घुणभक्षितानि । क्वचिदक्षरचणेन प्रमादा-दज्ञानाद्वा त्यक्ताक्षराणि । क्वचिदप्यपलिखितानि । किं पदं तत्र ग्रन्थकृता विवक्षितं स्यादिति प्रायो न शक्यं निश्चेतुम् । अथापि शक्यमूहितुम् । एवं लुप्ताक्षरेषु लुप्तपदेषु च स्थलेषु वाक्यपूर्णतायै, अधीयानानां जनानां सुकरमर्थावबोधाय च क्वचित्क्वचिदूहित्वा निहितानि पदानि ( ) इत्येतच्चिह्नान्तर्गतानि प्रकटितानि । अस्मिन्नूहकर्मणि जनार्दनभट्टीयमपि क्वचित्क्वचिदुपचकार । यतो बहुषु स्थलेषु जनार्दनभट्टः स्वयं वेदा-ङ्गतीर्थमक्षरशोऽनुकरोति ॥

उक्तमुपत्रिंशानि व्याख्यानान्यस्य ग्रन्थस्योपलब्धानीति । अनुपलब्धानि च बहून्यासन्निति शृणुमः । एवं व्याख्यावैपुल्यमेवास्य निर्णयग्रन्थस्य सर्वातिशायिनीं महत्तावमगमयति । प्रायो नान्यस्य कस्यापि प्रबन्ध-स्यैतावत्यष्टीका उपलभ्यन्ते, ऋते भगवद्गीतायाः । अहो, अस्य व्याकरणमेव स्वपाण्डित्यनिकषममन्यन्त विचक्षणाः । अस्य निरन्तरमननमेव स्वजीवनसाफल्यम् । युक्तमत्र स्मर्तुं श्रुतिवचनस्य –**'उत त्वः पश्यन्न ददर्श वाचमुत त्वः शृण्वन्न शृणोत्येनाम्'** ॥

## निर्णयभावचन्द्रिका

सतीष्वप्येतावतीषु टीकासु, यदर्थमस्य ग्रन्थस्य प्रणयनम्, तदसम्पन्नमिवाऽसीत् । अध्यापकाः केवलमनेन बालानां भारतरामायणकथाः पाठयन्तो हन्त कृतकृत्यताममन्यन्त ॥

यः प्रबन्धः पुराणानां परस्परविरोधादिपरिहाणेन सर्वशास्त्रनिर्णयाय प्राणायि, यः पुनर्विपश्चितामपि निरन्तर-मभ्यासेऽप्यगाधगम्भीरो दुरवबोधो बभूव, स इदानीमदूरदर्शिभिरुत्तानप्रज्ञैः केवलं बालबोधायोपयुज्यत इति महती चिन्ता बहोः कालान्मामपीपिडत् । सा चान्तर्वेदना स्वयमनूढधुरेषु विदुरेष्ववलेपं जनयामास । तस्येयं प्रतिक्रिया निर्णयभावचन्द्रिका नाम नवीना टीका श्रीमहाभारततात्पर्यनिर्णयस्य ॥

पुराणेषु किङ्किं कथितम्, तत्र किङ्किमसाङ्गत्यम्, कःको वा विप्रतिषेधः, कथङ्कारं च तत् परिहरणीयमिति विशिष्य जिज्ञासूनां संशोधकानाममितार्थेनापि मितपदेनाऽचार्यवचनमात्रेण न सर्वं स्फुटं प्रतीयते ।

अधीतसकलपुराणेतिहासानामन्तःसम्भृतपृच्छानामेवात्राधिकारः । अध्येतृगताननुयोगान् केवलं प्रतिवाक्यदानेन परिहरत्याचार्यः । न किल स्वयमनुयुज्यानुयुज्य शङ्कामुद्भाव्योत्तरति ॥

तस्मादस्माभिरचिन्ति– आचार्यवचसामुपबृंहणानि पुराणादिवचनानि समुद्धृत्य किमपि विस्तृतं विश्लेषणात्मकं विवरणं जिज्ञासुलोकोपकारायावश्यं करणीयमवाशिष्यतैवेति । तादृश्याश्चिन्तायाः फलमिदं नूतनं व्याख्यानम् ॥

निर्मत्सराणां सतां काळिदासवचनस्यैव स्मारयामः– **'पुराणमित्येव न साधु सर्वं नचापि काव्यं नवमित्यवद्यम्'** इति । अपसार्य पूर्वाग्रहं प्रसार्य च सानुग्रहं चक्षुः सहार्दं दयालुभिर्हृदयालुभिरिदं किञ्चिदिव परिभावनीयम् । समग्रं शास्त्राध्ययनमत्र निष्पिण्डितम् ॥

पूर्वं त्वहमभैषम्– किमेकस्मिन्नेव जन्मनि शक्यमस्य व्याख्यानस्य समापनमिति । आचार्यमध्वकृपया सुशकमासीत् । स एव शास्त्रवचनानि स्मारयामास । स प्रश्नमार्गान् सन्दर्शयामास । स उत्तराणि स्फोरयामास । ममान्तःप्रज्ञां विस्फारयामास । ज्ञापयामास च तत्रतत्र वक्तव्यम् । बोधयामास च तत्वरहस्यानि । पदेपदे स्खलन्तं स्तनन्धयमिव माता मातरिश्वा मां हस्ते गृहीत्वा पारं तारयामास । विस्मापयामास च स्वमहिमाविष्करणेन । आप्लावयामास च मां कृपातरङ्गिण्याम् । पावयामास च मामवगाह्य शास्त्रजलधौ । स एव प्रबन्धा । लिपिङ्करोऽहम् ॥

सन्ति तर्हि पूर्वाचार्यैः कृतान्यासन्नत्रिंशानि व्याख्यानानि । अथापि कथङ्कारमिदमिदानीमीदृशं साहसमकारि यन्नूतनाय व्याख्यानाय प्रयतनम्? तदिदं पङ्गुः पर्वतमारुरुक्षति । बाहुभ्यां प्लवमानोऽकूपारमुत्तितीर्षति । सत्यं भोः, शतवारं सत्यम् । न पङ्गुः पर्वतमारोढुमर्हति । नवा बाहुभ्यां प्लवमानः पारवारमुत्तर्तुम् । अथापि कथङ्कारमिति ब्रूषे । इत्थङ्कारमिति ब्रूमः । नन्वपारेऽन्तरिक्षे तार्क्ष्योऽपि डयते । अणुश्चाटकैरोऽपि डयते । चाटकैरः पुनरन्तःसदनं प्रविश्य गोपानसीविटङ्के वसति । अणुतरैः पादैरुत्प्लुत्योत्प्लुत्य सर्वमुदवसितं परिचित्य परिचरति, यत्र न गरुत्मतोऽपि सञ्चारः । एवङ्कारमेवेदं व्याख्यानमिति मन्तव्यम् ॥

पञ्चप्रयोजना चेयं पञ्चिका । तथाहीदं प्रतिज्ञावाक्यम्–

**विरुद्धवत् प्रतीतानां पुराणवचसामपि । समन्वयसमीक्षाऽत्र कृता मूलानुसारतः ॥**

**पूर्णप्रज्ञप्रयोगेषु दर्शिता विपुलार्थता । पाणिन्यविहितानां च साधुता साधु साधिता ॥**

**उपसर्गस्याव्ययस्य विशेषणगणस्य च । अर्थचिन्तनमत्रास्ति नाम्नां निर्वचनं तथा ॥**

**हेतुभिरिमकैः पञ्चभिरस्तु समेषां सतामुपादेया । आनन्दतीर्थकरुणालेशादेषा विनिर्मिता टीका ॥**

स्फुटमेतत् सर्वमुपरिष्टाद् व्याख्याने निक्षिप्तचक्षुषामपक्षपातिनां कृतिनाम् । तथाच पौराणानां पुरुषाणां देशभेदानां च सर्वेषामत्र नाम्नां निर्वचनं प्रादर्शि । चवायादीनामव्ययानां यथाप्रसङ्गमर्थो निरवर्णि । उपसर्गयोगेन धातूनामर्थविशेषोऽप्युपापादि । वस्तुतः प्रार्थयामाससम्प्रार्थयामासयोरर्थभेदं व्याख्यातरो न मन्यन्ते । नापि विवृणते । तर्हि व्यर्थमुपसर्गयोजनं छन्दःपूर्तिमात्रप्रयोजनमित्यायातम् । नहि महतां वचनेषु स्वरमात्रस्यापि वैयर्थ्यं वक्तुं साम्प्रतम् । तस्मात् तदर्थवर्णनायात्र यथामति प्रायति ॥

अथच ये पुनरपाणिनीयाः शब्दा भगवत्पादप्रयुक्तास्तेषां साधुता च यथासम्भवं समर्थिता । प्रथमं तावदिदमवगन्तव्यं पदज्ञैः– साधवः शब्दा द्विविधाः पाणिनीया अपाणिनीयाश्चेति । तेन पाणिनीयाः साधव एवेत्यभ्युपगम्यते । न पाणिनीया एव साधव इति ॥

यद्यपि पतञ्जलिराह– **'केषां शब्दानाम्? वैदिकानां लौकिकानां च'** इति । अथापि पाणिनिर्लौकिकानां शब्दा-नामेव इत्थम्भावेन रूपक्लृप्तिं नियमयति । छान्दसानां तु केषाञ्चिदेव । अन्यत्र तु प्रायोवचनमात्रेण । तदर्थमेव **'बहुलं छन्दसि'** इति द्वादशकृत्वः सूत्राणि प्रणिनाय ॥

स्तादिदम् । प्रकृतमनुसरामः । अन्यच्चेदं निर्णयभावचन्द्रिकामागूर्य वक्तव्यम् । छन्दोवैचित्र्येणार्थवैचित्र्यमपि किञ्चिदिवात्र चिन्तितम् । एतेनास्य न गतार्थता प्राचीनटीकाभिः । यन्न तत्रोदितं तदिहोदितम् । यत् तत्र सङ्क्षिप्योक्तं तदिह विवृतम् । यत् किञ्चिदस्वरसमुक्तं तदिह सहेतुकं निराकृतम् ॥

## लिपिलेखनक्रमः

प्राचीनादर्शे, विशिष्य श्रीहृषीकेशतीर्थेन लिखिते ग्रन्थे, कश्चन विशिष्टो लेखनक्रमोऽनुसृतो दृश्यते । तमेव क्रममत्राप्यनुससृम । तत्रेदं किञ्चिद् वक्तव्यं भवति ॥

पाणिनिः सूत्रयामास– **'अचो रहाभ्यां द्वे'** (८.४.४६) इति । तेन अच उत्तरौ यौ रेफहकारौ ताभ्यामुत्तरस्य यरो द्वे भवतः । तेन अर्क्कः, स्वर्ग्गः, अर्च्चनम्, अर्ज्जुनः, कर्ण्णः, पार्त्थः, अर्द्दनम्, अर्द्धम्, अर्प्पणम्, कर्म्म, सूर्य्यः, दुर्ल्लभः– इत्यादिरूपसिद्धिः ॥

एवं हकारादुत्तरस्यापि । तेन ब्रह्मा ब्रह्म्मा भवति । वह्निः वह्न्निर्भवति । जाह्नवी जाह्न्नवी भवति ॥

भागश एतदनुमतमाचार्यस्यापि । स रेफात् परस्य यरो द्विर्भावमनुमन्यते । तेन अर्क्कः, स्वर्ग्ग इत्यादि युक्तं रूपम् । अथापि हकारादुत्तरस्य यरो न द्वे भवतः । तेन ब्रह्मेत्येव । न ब्रह्म्मेति । वह्निरित्येव न वह्न्नि-रिति । जाह्नवीत्येव । न जाह्न्नवीति ॥

तथाच 'अचो राद् द्वे' इत्येव पर्याप्तम् । तत्रापि क्वचिदपवाद इष्यते । वबयोर्भकारस्य च द्विर्भावो नेष्यते । तेन सर्वम्, अर्बुदम्, गर्भ इत्याद्येव साधु रूपम् । न सर्व्वम्, अर्ब्बुदम्, गर्ब्भ इत्यादि । तेन **'ऋते बभाभ्यां वाच्च'** इति वक्तव्यम् । **'शरोऽचि'** (८.४.४९) इति पाणिनिनैवोक्तम् । तेन कर्षति, कर्शयतीत्यादौ न द्विर्भाव इति स्थितम् ॥

पुनश्च सूत्रयामास पाणिनिः–**'अनचि च'** इति । अनच्परस्य अच उत्तरस्य यरो द्वे भवतः । तेन दध्यङ् आथर्वणो दद्ध्यङ् आथर्वणो भवति । मध्वो मद्ध्वो भवति । अनुमतमेतदपि तत्ववादाचार्यस्य । परन्त्वत्र वपरस्य धकारस्य द्विर्भावे तल्लेखनाय संयुक्तं मुद्राक्षरं नास्ति । तेन 'मद्ध्वः', 'अद्ध्वा' इत्येव लिखितव्यं भवति । तदा पठितॄणामस्ति भ्रमावकाशः । 'सहस्रशीर्षम्' इत्यादिवदिदमपि विश्लिष्य पठनीयमिति विभ्रम्यासुः । एवङ्कारं मा नाम पठितॄणां विभ्रमो भूदिति द्विर्भावं विनैवात्र प्रकटितम्– 'मध्वः, साध्वत्र' इत्यादिषु सर्वत्र ॥

एवम्–**'अनचि च'** इत्यत्र, अच इति पूर्वसूत्रादनुवर्तयन्ति वैयाकरणाः–**'अनच्परस्य अच उत्तरस्य'** इति । अत्राऽचार्यमते **'अच उत्तरस्य'** इति च न नियतम् । तेन 'द्ध्यायति, द्ध्यात्वा' इत्यादिरूपसिद्धिः ॥

अथ वार्त्तिककार आह– **'यणो मयो द्वे भवत इति वक्तव्यम्'** इति । अत्र यण इति पञ्चमी मय इति षष्ठीति केचित् । तेषां पक्षे– वल्कलो वल्क्कलो भवति । वाल्मीकिर्वाल्म्मीकिर्भवति । नेदं वक्तव्यम् । वल्कलो वाल्मीकिरित्येव साधु रूपमित्याचार्यमतम् । अथचान्ये वार्तिकमन्यथाकारं व्याचक्षते– यण इति षष्ठी मय इति पञ्चमीति । तेषं पक्षे– दध्यङ्, दध्य्यङ् भवति । मध्वो मध्व्वः । नेदमपि वक्तव्यम् । समग्रं वार्तिकं शक्यमवक्तुम् ॥

पुनराह कात्यायनः– **'शरः खयो द्वे भवत इति वक्तव्यम्'** इति । अत्रापि द्वयी गतिः– शर इति पञ्चमी खय इति षष्ठीत्येके । तेषां पक्षे स्थानं स्त्थानं भवति । स्थाली स्त्थाली भवति । स्याद् वा । मा वा भूत् । द्विविधमपि रूपमनुमन्यामहे । अथापरे खय इति पञ्चमी शर इति षष्ठीत्यातिष्ठन्ते । तेषां पक्षे वत्सः वत्स्सो भवति । क्षीरं क्ष्षीरं भवति । प्रथमपक्षे स्याद्वादिनोऽपि तत्ववादिनो न द्वितीयं पक्षमङ्गीकारक्षमं मन्यन्ते ॥

अपिच पुनराह कात्यायनः– **'चयो द्वितीयाः शरि पौष्करसादेः'** इति । तेन पौष्करसादिराचार्यो मन्यते तकारस्य थकारम्, ककारस्य खकारम्, पकारस्य च फकारम् । तथाच तस्याऽचार्यस्य मते वत्सः वथ्सो भवति । क्षीरं ख्षीरं भवति । अप्सरा अफ्सरा भवति । नैतत् सर्वमनुमतम् ॥

तकारस्य थकारो भवति च्छन्दसीति त्वङ्गीकुर्मः । स यथा– **'तथ् सवितुर्वरेण्यम्'** ॥

✻

क्वचित् सिद्धमपि द्वित्वं निवर्तयन्त्याचार्याः प्राञ्चः । ते सत्वमित्याचक्षते न सत्त्वमिति । तत्वमित्याचक्षते न तत्त्वमिति ॥

निर्वचनविशेषविवक्षया चेदम् । तस्य भावस्तत्त्वं भवति । ततं वं ज्ञानमस्येति प्रमेयं तत्वं भवति । एवं सतो भावः सत्त्वं भवति । प्रसन्नं सत् निर्दुष्टं वा वं ज्ञानमनेनेति सत्वं गुणो भवति ॥

✻

अनुनासिकमक्षरं पूर्वमनुस्वारयोजनेन द्योतयन्ति हृषीकेशतीर्थादयः पूर्वाचार्याः । तद् यथा– 'जिंह्वा', 'प्रसंह्य' इत्यादि । तच्चात्रानुनासिकचिह्नदर्शनेन सूचितम् । जिँह्वा, प्रसँह्य इत्यादि ।

परन्त्वयं नियमः मूलग्रन्थमुद्राङ्कन एव नियमेनानुसृतः । अन्यत्र टीकाटिप्पण्यादिषु सर्वत्र प्रचलितः क्रम एवाऽऽदृतः, गणकयन्त्रमुद्राङ्कनसौकार्यायेति सर्वमतिमङ्गलम् ।

**इमामाचार्यगोविन्दः प्रमृष्टार्थां व्यरीरचत् ।**
**महाभारततात्पर्यनिर्णयस्येति भूमिकाम् ॥**

—o—

यो विप्रलम्भविपरीतमतिप्रभूत-
वादान्निरस्य कृतवान् भुवि तत्ववादम् ।
सर्वेश्वरो हरिरिति प्रतिपादयन्त-
मानन्दतीर्थमुनिवर्य्यमहं नमामि ॥

# श्रीमहाभारततात्पर्य्यनिर्ण्णयः

अद्ध्यायाः १–१८



## तात्पर्य्यदीपिका

## निर्ण्णयभावचन्द्रिका च





कृष्णं वन्दे मन्थपाशधरं दिव्यार्भकाकृतिम् ।
शिखाबन्धत्रयोपेतं भैष्मीमध्वकरार्चितम् ।।

# प्रथमोऽध्यायः

[सर्वशास्त्रतात्पर्य्यनिर्ण्णयः]

ओ३म् ॥ नारायणाय परिपूर्ण्णगुणार्ण्णवाय विश्वोदयस्थितिलयोन्नियतिप्रदाय ।
ज्ञानप्रदाय विबुधासुरसौख्यदुःखसत्कारणाय वितताय नमोनमस्ते ॥ १ ॥

---

## निर्णयभावचन्द्रिका

ओ३म् ॥ नारायणाख्यममलं जगदम्बयोपगूढं निगूढममरैरपि चाप्रमेयम् ।
गेयं समस्तनिगमैः प्रणवाभिधेयं ध्येयं मनस्यवतरत्वनिशं परेशम् ॥ * ॥

यत् पपाथ भगवद्गुणपाथो यत् सतामुवचिथ प्रियतत्वम् ।
विप्लवेऽपि जगतां यदजागस्तेन मध्व सुहृदध्वनि भूयाः ॥ * ॥

यज्जगन्थ भवसागरपारं यज्जिगेथ सदसि प्रतिपक्षम् ।
यन्ममार्जिथ सतामवितृप्तिं तत् त्वयि स्वयमनक्ति मनो मे ॥ * ॥

ग्रन्थेषु गूढार्थेष्वपि
प्रत्नैः सुबोधमिति यन्न व्याख्यातम् ।
तदेव दुर्बोधतरमधुनातनानां जातं
तत इयं काऽपि वाचालता मन्दानां कृते मयाऽनुसृता ॥ * ॥

महाभारततात्पर्यनिर्णयोऽयं महार्थवान् । आचार्यानुग्रहबलाल्लेशतोऽर्थः प्रदश्यते ॥ * ॥

विरुद्धवत् प्रतीतानां पुराणवचसामपि । समन्वयसमीक्षाऽत्र कृता मूलानुसारतः ॥ * ॥

पूर्णप्रज्ञप्रयोगेषु दर्शिता विपुलार्थता । पाणिन्यविहितानां च साधुता साधु साधिता ॥ * ॥

उपसर्गस्याव्ययस्य विशेषणगणस्य च । अर्थचिन्तनमत्रास्ति नाम्नां निर्वचनं तथा ॥ * ॥

हेतुभिरिमकैः पञ्चभिरस्तु समेषां सतामुपादेया । आनन्दतीर्थकरुणालेशादेषा विनिर्मिता टीका ॥ * ॥

नारायणाज्ञया ग्रन्थं चिकीर्षुस्तमेव प्रणमति–**नारायणायेति** । नारायणपदमेव विवृणोति–**परिपूर्णगुणार्णवाय ।** गुणाश्च परिपूर्णाः । गुणैश्च परिपूर्णः । परितः कालतो देशतः, अवयवेषु चावतारेषु च । **'परितः सर्वत इत्यर्थः'** इति हि जयादित्यः [अ.सू.का.५.३.९] । किञ्च यथायोग्यं पूर्णा बहवो भवन्ति । परिपूर्णस्त्वेक एव । **'पूर्णमदः पूर्णमिदम्–'** इति श्रुतेः । तेनात्र पूर्णतायां परित इति निरवधिकत्वं नामाऽनन्त्यमुच्यते । अर्णव इवार्णोभिरयं गुणैः सम्भृतः । तेन गुणपूर्णश्चायम् । गुणरूपश्च । नद्यर्णांस्यन्यानि भवन्ति । अर्णवश्चान्यः । अथाप्यर्णवस्याम्भांसीत्युच्यन्ते । कुतः परिपूर्णगुणार्णवः? यतोऽयं विश्वोदयस्थितिलयोन्नियतिप्रदः । **'कर्तृत्वात् सगुणं ब्रह्म'** [३.३३.१२] इति हि भागवते । नारायणं सुरगुरुमिति भारतमङ्गलपद्यविवरणं चेदम् । सुरगुरुमित्येतद् विवृणोति– **ज्ञानप्रदायेति ।** जगदेकनाथमित्येतत् विश्वोदयस्थितिलयोन्नियतिप्रदायेति । विभुमिति विततायेति । भक्तप्रियं भवघ्नमित्येतद् विबुधासुरसौख्यदुःखसत्कारणायेति । एतेनैव विशेषणेन **'सृष्टा ब्रह्मादयो देवाः–'** इत्येतदपि पद्यं व्याख्यातम् । ब्रह्मादयः सृष्टा अनेनेति ब्रह्मादीनां मुक्तौ स्वरूपसुखप्रद इत्यर्थः । दानवा निहता इत्यसुराणां तमसि दुःखप्रद इत्यर्थः । एतेन महाभारतव्याख्याऽधिक्रियत इत्यसूचि । एतेनैव **'नारायणं नमस्कृत्य'** इत्येतदपि विवृतम् । नाराया रमाया अयमयन इति देवी रमा वन्दिता । नारस्य ज्ञानस्याऽयकः प्रापक इति व्यासोऽपि नारायणः । ज्ञानप्रदायेति स्फुटम् । एवं वाच्यो नारायणः, वक्ता व्यासः, वाग्देवी रमा च वन्दिताः । अन्येषां ग्रन्थादौ वन्दनीयं देवतात्रयं ज्ञानप्रदायेति सूचयाम्बभूव । ज्ञानदाने गुरुत्वेन सहायकेषु नरोत्तमसरस्वतीनरेषु स्थित्वा ज्ञानप्रदायेति । नन्ताऽधिकारी । नम्यो विषयः । ज्ञानद्वारा स्वरूपसुखाविर्भावः फलमिति च । विश्वस्य जीवजडात्मकस्य सर्वस्य उदयस्थितिलयनियमनप्रदाय । अथच विश्वस्य जीवसमुदायस्य । उदित्युत्कर्षो मोक्षः । नीचैर्यमनं नियतिस्तमः । उच्चैर्नीचैः स्वर्गनरकयोः भूमौ च परिवर्तनं चोन्नियतिः । तदर्थमेव ज्ञानाज्ञानप्रदाय । केषाञ्चित् ज्ञानं प्रददाति । केषाञ्चित् प्रद्यतीति । उन्नियतिमेव स्फुटमाह– विबुधेत्यादि । विबुधा इति सात्त्विकोपलक्षणम् । असुषु रममाणा न सुष्ठु रममाणा वा असुरा राजसास्तामसाश्च । सर्वेषां संसारदशायां सौख्यमिश्रं दुःखम् । अन्ते सात्त्विकानां सौख्यम् । सुखमेव सौख्यम् । केवलं सुखमित्यर्थः । दुःखमेव च तामसानाम् । स्वयं तु सत् निर्दुष्टं कारणम् । तस्यतस्य तत्तद्योग्यं दददपक्षपातात् । एवं सृष्टयाद्यष्टकर्तृत्वमप्युदितम् । तेन **'जन्माद्यस्य यतः'** इति सूत्रलक्षितं जिज्ञास्यं परं ब्रह्मैव नारायणाख्यमिति च सूचितम् । कालतो देशतश्च, अन्तर्बहिश्च वितताय विविधतया च तताय । विशेषतः विश्वस्य वायोः उदयस्थितिलयानां सर्वजीवोत्कृष्टतया नियमनस्य च कर्त्रे । पुनर्विशेषतः स्वस्य ज्ञानमितरजीवापेक्षया प्रकृष्टतया ददातीति ज्ञानप्रदस्तस्मै । अथच विश्वेति समस्तस्य चेतनस्य चाचेतनस्य च सर्गस्थितिप्रळयनियमाः । ज्ञानप्रदायेति त्रिविधस्य चेतनमात्रस्य, सात्विकस्य राजसस्य तामसस्य च, ज्ञानाज्ञानबन्धाः । अन्ते विबुधेत्यादिना सत्वप्रचुराणां नित्यसौख्यरूपा मुक्तिः, तमःप्रचुराणां नित्यदुःखरूपा मुक्तिरिति च विभज्याऽह । अथच विश्वेन वायुना द्वारेण जगतः उदयादिप्रदाय । अत एव प्रदायेत्याह । वायुस्तदाज्ञया ददाति । अयं तु प्रददाति स्वेच्छया स्वातन्त्र्येण ददातीत्यर्थः । ते नमोनमः, उदयकारणाय पितृत्वेन नमः । ज्ञानप्रदाय गुरुत्वेन नमः । नमोनम इति वीप्सया नैरन्तर्यं चाऽह नमनस्य । न यदाकदाचित्, फलाकाङ्क्षया वा । ते नम इत्यपरोक्षवन्दनमाह । एतेन ममापरोक्षतो नम्याय, अन्येषां परोक्षतो यथायथं नम्यायेति सकललोकनमस्कृतत्वं च

**आसीदुदारगुणवारिधिरप्रमेयो नारायणः परतमः परमात् स एकः ।**
**संशान्तसंविदखिलं जठरे निधाय लक्ष्मीभुजान्तरगतः स्वरतोऽपि चाग्रे ॥ २ ॥**

**तस्योदरस्थजगतः सदमन्दसान्द्रस्वानन्दतुष्टवपुषोऽपि रमारमस्य ।**
**भूत्यै निजाश्रितजनस्य हि सृज्यसृष्टावीक्षा बभूव परनामनिमेषकान्ते ॥ ३ ॥**

---

सूचयाम्बभूव । सृष्ट्याद्यष्टककर्तुरष्टपदेयं नान्दी प्रतिपादं चतुर्दशभिरक्षरैश्चतुष्पदा चेति चतुर्भी रूपैश्चतुर्दश भुवनानि व्याप्य जगन्नियमयतो भगवतो लीलां स्मारयतीव । ऋग्वेदोऽपि किलाष्टपदयैव नान्द्याऽधिक्रियते–**'अग्निमीळे–'** इत्यादि-कया । सदयपवने हृदयोपवने नवभक्तिकुसुमोद्गमने वसन्ततिलकायितमन्वर्थं च छन्दः । भगवान् बादरायणोऽप्यनेनैव च्छन्दसा महाभारतसंहितामारभत–नारायणं सुरगुरुमिति । भगवद्गुणगणशालिनी शक्करी शक्नुते भगवन्तं स्तोतुम् । तेन हि शक्करी शक्करी भवति । संहत्य षट्पञ्चाशदक्षरा चेयं शक्करी भवति । पञ्चपञ्चाशता विधाभिर्विभक्तं क्षराक्षरात्मक-मिदं जगदिति भागवते गदितम् –**'एकायनोऽसौ–'** [१०.३.२८] इत्यादिना । षट्पञ्चाशो जगन्नाथः । एवं क्षराक्षर-पुरुषोत्तमाभिधायीदमक्षरजातम् ॥ १ ॥ उदारा महान्तः पूर्णाः प्रत्येकमनन्ताश्च गुणाः । वदान्याश्च भक्ताभीष्टप्रदाने । **'उदारो दातृमहतोः'** । तेषां वारीणां वारिधिरिव निधानम् । अत एवाप्रमेयः । गुणत इयानित्यपरिच्छेद्यः । इत्थमित्यपरि-च्छेद्यः । कालदेशाभ्यां चापरिमेयः । स एक एव परमात् परतमः । परा इन्द्रादयः । परमाः शिवादयः । ततोऽपि परौ ब्रह्मवायू । परतरा रमा । परतमो नारायण इति । परा मा श्रीः यस्मात् स परमो ब्रह्मादिजीवसङ्घः । तस्मात् परतम इति वा । परमं जीवजातमत्तीति परमात् सर्वात्ता । सर्वस्मात् परतमश्चेति वा । स एक एव चाऽसीदग्रे । **'नारायणो वा इदमग्र आसीत्'** इत्यादेः । संशान्तसंवित् पूर्णानन्दमयः, पूर्णज्ञानमयश्च । अनभिव्यक्तज्ञानशक्तिश्च । जगद्व्या-पारविरहात् सुप्त इव निमीलितनयनो योगनिद्रामनुभवन् । अथच संशान्तसंवित् सामस्त्येनोपरतप्रज्ञं सुप्तमेव जगद-खिलं जठरे निधाय । लक्ष्मीरस्य भुजान्तरं गता । लक्ष्म्याश्चायं भुजान्तरं गतः । लक्ष्मीभुजान्तरगतोऽपि स्वरतः । स्वस्मि-न्नेव रतः स्वरूपानन्दे । स्वरतोऽपि लक्ष्मीभुजान्तरगतो लीलया, बाह्यसुखे सुष्ठु अरतोऽपि । तदपि कुतः? स्वरतः । तथाहि स्वरन्ति शास्त्राणि । यः अग्रे सर्वाधिक्ये स्थितः । अग्रे च सृष्टेः पूर्वम् ॥ २ ॥ उदरस्थजगत इति । ब्रह्मण उदरम्, ब्रह्मैव चोदरमित्यनेनाऽह । उद्गतमरेभ्य दोषेभ्य इत्युदरं हि ब्रह्मोच्यते । **'उदरं ब्रह्मेति शार्कराक्ष्याः'** इति हि श्रुतिः । सन् दुःखासम्भिन्नः, अमन्दः परिपूर्णः, सान्द्रः निरन्तरः, स्वरूपभूतश्चाऽनन्दः । तेन नित्यतृप्तं स्वरूपभूतं वपुरस्य । तेन तुष्टानि वपूंष्यवताररूपाणि चास्येति । रमां रमयति, स्वयं च लीलया रमया सह रमत इति रमारमः । सतो रमयतीति रमः । असतो न रमयतीत्यरमः । ततश्च रमारमः । **'कस्तं मदामदं देवम्–'** इति श्रुतेः । विबुधासुरसौख्यदुःखसत्कारणायेत्येतत्तदुक्तं भवति । ईक्षा नित्यज्ञानरूपा अपेक्षा अभिव्यक्ता बभूव । सा चेक्षा निजाश्रितजनस्य भूत्यै हि । न स्वप्रयोजनाय । तदेतत् सर्वप्रमाणप्रसिद्धं हि । निजमात्मानं निजं नित्यं नियतं वा आश्रितजनस्य । निजस्य आत्मीयस्य सहजस्य वाऽऽश्रितजनस्य । सत्वप्रकृतेरित्यर्थः । तस्यैव सार्थकं जननमिति स

**दृष्ट्वा स चेतनगणान् जठरे शयाना-**
**नानन्दमात्रवपुषः सृतिविप्रमुक्तान् ।**
**ध्यानं गतान्त्सृतिगतांश्च सुषुप्तिसंस्थान्**
**ब्रह्मादिकान् कलिपरान् मनुजांस्तथैक्षत्** ॥ ४ ॥

---

जन उच्यते । अन्यस्तु दुर्जननात् दुर्जनः पशुतुल्यः । भूतिरुन्नतिः । आनन्दो वा । साधनेन भगवदपरोक्षाय, स्वरूपानन्दाभिव्यक्त्या मोक्षान्तायै भूत्यै । सृज्यस्य स्वस्य सृज्यानां जीवानां जडानां च सृष्टौ । स्वस्य सृष्टिः स्वेच्छया निर्विकारतया च सतां हिताय, विनाशाय दुष्कृताम्, भूभारहरणाय च । कर्मार्था जीवानां सृष्टिः । जीवभोगार्था च जडानाम् । अथच उदरस्थजीवेष्वसृज्यान् विहाय तस्मिन् कल्पे सृज्यानामेव सृष्टौ । परकालः परायुषो ब्रह्मणः कालः । ब्रह्मणः शतं वर्षाणि । मनुष्यमानेन ३१,१०४ सहस्रकोटिवर्षाणि । ततस्तावान् भगवन्निमेषको योगनिद्रारूपः प्रळयकालः । सेयं भगवतो निद्राऽपि चक्षुर्निमेषमिषेण लोकविडम्बनमेवेति कप्रत्ययेन कुत्सयामास–निमेषक इति । आनन्दरूपश्च स निमेष इति । तेन सोऽयं पराख्यः कालः परस्य परमात्मनो निमेष इति नाममात्रम् । परावच्छिन्नः कालो निमेष इत्युपचर्यते व्यवहाराय । नतु वस्तुतो निमेषः । तस्य कालानवच्छिन्नत्वादिति चार्थः । तस्यान्ते अन्तभागे, अष्टमभागे । **'लयस्य त्वष्टमो भागः सृष्टिकालः'** इति स्मरणात् । अयं हि प्रळयनिशाया अरुणोदयकालः । स च मनुष्यमानेन ३,८८८ सहस्रकोटिवत्सरपर्यन्तः ॥ ३ ॥ शयानान् निर्व्यापारतया सुप्तानिव स्थितान् । सुप्तानेव च कांश्चन । आनन्दमात्रवपुषः लिङ्गदेहभङ्गेन आनन्दमयस्वरूपदेहान्, तथा आ समन्तात् अनन्दमात्रवपुषः दुःखमय-स्वरूपदेहान्, ब्रह्मादिकान् कलिपरान् विप्रमुक्तान्, तथा आ ईषदानन्दस्वरूपान् मनुजोत्तमांश्च विप्रमुक्तानपश्यत् । प्रकर्षेण पुनरावृत्तिरहिततया मुक्ताः प्रमुक्ताः । साऽपि मुक्तिर्योग्यतानुगुणतया विविधेति विप्रमुक्तानित्याह । यद्यपि विविधास्तरतमभावोपेता मुक्ताः । अथापि सर्वेऽपि स्वस्वयोग्यतानुगुणं पूर्णतया प्रकृष्टा एवेति च । विष्वक्सेनादयः केचिन्नित्यमुक्ता इत्यन्ये । तन्निरासाय सृतिविप्रमुक्तानित्याह । सर्वेऽपि सृतिमुक्ता एव । न कोऽपि ब्रह्मादिषु नित्य-मुक्तो नामेति । सृतिविप्रमुक्तान् ध्यानं गतान् दृष्ट्वा । तथा सृतिगतान् ब्रह्मादीन् कलिपरान् मनुजमध्यान् सुषुप्तिसंस्थान् दृष्ट्वा ऐक्षत् चिन्तयामास । नित्यद्रष्टुः सृष्ट्यर्थमीक्षणमपि निजाश्रितजनस्य भूत्या एवेत्यैक्षदिति परस्मैपदम् । **'सर्वस्मादुभयं पदम्'** इति प्रायः प्राचीनग्रन्थेषु वैवक्षिकं धातूनामुभयपदत्वमिष्यते । ब्रह्मादिकान् सृतिगतानित्यत्र ब्रह्मेति स उच्यते, यस्तस्मिन् कल्पे ब्रह्मा भविष्यति । नतु सः, यो भूत्वा विप्रमुक्तः । निश्चितमेष्यन्तमतीतमिव हि व्याहरन्ति लोके च शास्त्रेषु च । तथा च ब्रह्मा भविष्यन् वायुरत्र ब्रह्मा । ब्रह्मपदयोग्यो वाऽत्र ब्रह्मपदार्थः । ननु कथमथापि वाय्वादिकान् सुषुप्तिसंस्थानिति? प्रळयेऽपि प्रतिभातपरावरं हि वायुमाचक्षते । आचक्षते । किं तेन तेऽनिष्टम्? न मम किमपि । तव त्वनिष्टं भवति । व्याहन्येते किल द्वे वचने–**'सुषुप्तिसंस्थान् ब्रह्मादिकान्'** इति, **'प्रळयेऽपि प्रतिभातपरावरः'** इति च । व्याहन्येते अनवगतार्थस्य । अर्थावगमे तु सङ्गच्छेते । तथा हि नित्यजागृतस्य भगवतोऽपि हि योगनिद्रामा-चक्षते शास्त्रकाराः । अङ्गीकुर्वन्ति च बाह्यव्यापारोपरतिसाम्यान्नेत्रनिमीलननाटिकां निद्रां भगवतोऽपि । अत्रापि समं समाधानम् । तथाच सुषुप्तिसंस्थानितीतरेषां सुषुप्तिरेव । वायोस्तु सुषुप्तिरिव बाह्यव्यापारविरतिः सुषुप्तिरिति । अत

**स्रक्ष्ये हि चेतनगणान्त्सुखदुःखमद्ध्यसम्प्राप्तये तनुभृतां विहृतं[1] ममेच्छन् ।**
**सोऽयं विहार इह मे तनुभृत्स्वभावसम्भूतये भवति भूतिकृदेव भूत्याः ॥ ५ ॥**

**इत्थं विचिन्त्य परमः स तु वासुदेवनामा बभूव निजमुक्तिपदप्रदाता ।**
**तस्याऽऽज्ञयैव नियताऽथ रमाऽपि रूपं बभ्रे द्वितीयमपि यत् प्रवदन्ति मायाम् ॥ ६ ॥**

---

एव ब्रह्मणोऽपि निद्रां पुराणज्ञाः पठन्ति । **'कालेनाऽगतनिद्रस्य धातुः शिशयिषोर्जले । मुखतो निःसृतान् वेदान् हयग्रीवोऽन्तिकेऽहरत्'** [८.२३.८] इति हि भागवते । अत्रापि बाह्यव्यापारविरहरूपा विश्रान्तिरेव हि निद्रापदार्थः । ननु तर्हि ध्यानं गत इत्येवोक्तं भवति । को विशेषस्तर्हि मुक्तस्य चामुक्तस्य च ब्रह्मणः? अत्राविशेषेऽपि न कोऽपि दोषः । सृतिगतान् ब्रह्मादिकांश्च ध्यानं गतानित्येव च केचिद् व्याचक्षते । तत्र बहुवचनं गले ग्रावायते । अयं तु विशेषः सम्भाव्यते–आलोचने सति हि प्रतिभातपरावरः । प्रळये कदाचिद् भगवदिच्छया नाऽलोचयेदपि । मुक्तास्तु ब्रह्माणः सदा भगवन्तमालोचयन्तो ध्यायन्तीति । ननु किमनेन रूप्यपीठाद् गोकर्णं जिगमिषोः कुमाराद्रिप्रवासेन? अतद्गुण-संविज्ञानेन वा, ब्रह्मा आदिः कारणमेषामिति वा विगृह्य 'ब्रह्मादिकान्' इत्येतद् 'रुद्रादिकान्' इति किं न व्याख्यायते? द्वाभ्यां कारणाभ्याम् । प्रथमं तावत् प्रस्तावविरोधान्न व्याख्यायते । **'ब्रह्मादिकान् कलिपरान्'** इति प्रथमचरमजीवौ किलात्र प्रस्तूयेते । अतो ब्रह्मपदयोग्यस्यैवात्र प्रथमग्रहणमुचितम्, न रुद्रादीनाम् । द्वितीयं च, तथा व्याख्याने सृज्येषु भविष्यन्तौ ब्रह्मवायू अनुक्तौ भवत इति न्यूनता च व्याहारस्य भवति । नहि महान्त एवमपूर्णवचना अनुक्तवक्तव्या वा भवेयुरिति । ब्रह्मादिकान् आनन्दरूपान् मोक्षयोग्यान् । कलिपरान् तामसान् । मनुजान् नित्यसंसारिणो राजसान् ॥ ४ ॥ स्रक्ष्य इत्यात्मनेपदेन सूचितमर्थमाह–'विहृतं ममेच्छन्' इति, 'सोऽयं मे स्वरूपभूतो विहारः' इति च । विविधेषु पदार्थेषु तत्तद्रूपतया स्वरूपाणां हरणं प्रापणं च विहार इति वदन्ति । वैयाकरणाः सृजधातुं द्विः पठन्ति विसर्गेऽर्थे । दिवादौ च तुदादौ च । दिवादिरात्मनेभाषः सृज्यत इति । तुदादिः परस्मैभाषः सृजतीति । दिवादित्वे लृट उत्तमपुरुषैकवचने **'स्रक्ष्ये'** इत्येव रूपम् । तुदादित्वे तु 'स्रक्ष्यामि' इति । तत्ववादिनस्तूभयभाषावादिन इति न काऽपि क्षतिः । सुखं पूर्वावधिः । दुःखमपरावधिः । मध्यं सुखं दुःखं चेत्युभयम् । चेतनगणान् स्रक्ष्ये चेतनगणानां तनूः स्रक्ष्ये । तनुभृतामेव हि सुखादिभोगः सम्भवति । इह जगति जगन्नाथस्य मे विहारः इह तनुभृतां सुखदुःखतदुभयात्मकस्य स्वभावस्य सम्भूतये अभिव्यक्तये भवति । भूत्याः जगन्मातुः भूतिं सृष्टिविस्ताररूपं विभवमेव करोति । न तनुभृतामिव स्वभाव-सम्भूतिमपि ॥ ५ ॥ **'यतो वा इमानि–'** इत्युक्तानि चतूरूपाण्याह– वासुदेवनामा बभूव, यं **'अभिसंविशन्ति'** । वासुदेवो बभूवेति वक्तव्ये वासुदेवनामा बभूवेत्याह । अनेनैतदाह– केवलं नामभेद एव, न स्वरूपभेद इति । अत एव **'स तु'** इत्यभिन्नोऽपि भिन्न इवेति विशेषं तुनाऽऽह । परमः परमपुरुष इत्यर्थः । परमः सर्वोत्तमः । परा मा प्रमाऽस्येति परमः सर्वज्ञः । मायाः मानात् परः अतिक्रान्त इति परमो देशकालाद्यनवच्छिन्नः । मायाः वाङ्मय्याः पर इति परमोऽप्रमेयः ।

---

१. **'विहृतिम्'** इति प्रचलितः पाठः ।

**सङ्कर्षणश्च स बभूव[१] पुनः सुनित्यः संहारकारणवपुस्तदनुज्ञयैव ।**
**देवी जयेत्यनु बभूव स सृष्टिहेतोः प्रद्युम्नतामुपगतः कृतितां च देवी ॥ ७ ॥**

**स्थित्यै पुनः स भगवाननिरुद्धनामा देवी च शान्तिरभवच्छरदां सहस्रम् ।**
**स्थित्वा स्वमूर्त्तिभिरमूभिरचिन्त्यशक्तिः प्रद्युम्नरूपक इमांश्चरमात्मनेऽदात् ॥ ८ ॥**

---

परत्वेन सर्वशास्त्रैर्मेयश्च । रमान् मुक्तान् नित्यमुक्तां रमामपि पातीति च परमः । वेति ज्ञानम् । स्वित्यानन्दः । ज्ञानानन्दमयीं मुक्तिं देवयति गमयतीति वासुदेवो निजमुक्तिपदप्रदाता । निजानां निजं नित्यं नियतं सहजं च मुक्तिपदं प्रददातीति । पदनीया हि मुक्तिर्भवति । नत्वज्ञानावरणापगममात्रमिति ज्ञापयितुं मुक्तिपदमित्याह । अनन्तकालीनं दानं प्रदानम् । **'–सर्वत्रापि च वासनात् । वर्तकत्वाच्च सर्वस्य प्राणदेवत्वतस्तथा । वासुदेवः स विज्ञेयो ज्ञानिनां मोक्षदो हरिः'** [सं.प.२.९८] इति विष्णुतीर्थीये । यथा नारायणः तथा रमाऽपि अद्वितीयमपि द्वितीयं रूपं बभ्रे भगवत्सेवाजनितायाऽनन्दविशेषरूपायाऽत्मगामिने फलाय । मां भगवत्प्रमामाययतीति प्रापयतीति माया । संसारमायां यापयति अपगमयतीति वा । मायायैव माया । लोपः समाने । मयस्य सर्वप्रधानस्य नारायणस्येयं नित्यावियोगिनीति वा । माङ् मान इत्यतो यप्रत्ययः, **'मातीति माया'** इति वैयाकरणाः ॥ ६ ॥ अथ **'यत्प्रयन्ति'** तद्रूपमाह–सङ्कर्षणश्च स बभूव । स एव सङ्कर्षणश्च बभूव । सुनित्यः देहतोऽपि नित्यः । अथापि बभूव । **'नेतृत्वादनितृत्वाच्च नित्य इत्यपि पठ्यते'** [अहि.सं.२.३१] इति चापूर्वं प्रतनं निर्वचनम् । संहरन् देहात् कर्षतीति सङ्कर्षणः संहारकारणवपुः । संहारकम्, अथापि अरणं शरणं सर्वरक्षितृ रूपमस्येति च । संहारोऽपि रक्षणमेवेति । **'सम्यग्ज्ञानस्वरूपत्वादानन्दत्वात् स केशवः । सम्यक् कर्तृस्वरूपत्वात् सम्यग्ग्रहणरूपतः । सम्यक् प्राणस्वरूपत्वात् सम्यक् च बलरूपतः । सङ्कर्षण इति प्रोक्तः'** [सं.प.२.९६–७] इति च । जयति अभिभवति सर्वानिति जया । जि अभिभवे । अभिभवो न्यूनीकरणम् । **'यतो वा इमानि भूतानि जायन्ते'** इत्येतदाह–प्रद्युम्नतामुपगतः । प्रकृष्टं जगदाख्यं द्युम्नं द्रविणमस्येति प्रद्युम्नः । **'द्योतनत्वाज्ज्ञानवत्त्वात् प्रद्युम्न इति कीर्तितः'** [सं.प.२.९५] इति च । जगत्करणात् कृतिः ॥ ७ ॥ **'येन जातानि जीवन्ति'** तदाह–स्थित्यै पुनः स भगवाननिरुद्धनामा । न निरुद्धं स्थितिकर्म यस्य सोऽनिरुद्धः । **'सर्वचेष्टकरूपत्वादनो वायुरुदाहृतः । तद्वाननी हरिः स स्याद् रुद्धश्चैव स्वभक्तकैः । शत्रुभिः सोऽनिरुद्धश्चेत्यनिरुद्धः प्रकीर्तितः'** [सं.प.२.९४] इति च । पालितं स्वसन्तानं निशाम्य शाम्यतीति शान्तिः । शरदां सहस्रं देवमानेन । मनुष्यमानेन ३,६०,००० वर्षाणि । प्रद्युम्नरूप आनन्दमयश्च प्रद्युम्नरूपकः । प्रपञ्चसृष्ट्यादिना नास्य दुःखमिति । प्रद्युम्नः सन् आ-ब्रह्मण आस्तम्बं जगद् रूपयतीति च रूपकः । प्रद्युम्नरूपोऽयमिति ज्ञानिभिः कीयते गीयत इति च प्रद्युम्नरूपकः । कै शब्दे । प्रद्युम्नरूपः करोति सर्वमिति च । इमान् चेतनगणान् । चरमात्मने चरमाय स्वात्मन एवानिरुद्धनाम्ने ॥ ८ ॥

---

१. **'सङ्कर्षणः स च बभूव'**

**निर्देहकान्त्स भगवाननिरुद्धनामा जीवान्त्स्वकर्म्मसहितानुदरे निवेश्य ।**
**चक्रेऽथ देहसहितान् क्रमशः स्वयम्भुप्राणात्मशेषगरुडेशमुखान् समग्रान् ॥ ९ ॥**

**[1]पञ्चात्मकः स भगवान् द्विषडात्मकोऽभूत् पञ्चद्वयी शतसहस्रपरोऽमितश्च ।**
**एकः समोऽप्यखिलदोषसमुज्झितोऽपि सर्वत्र पूर्ण्णगुणकोऽपि बहूपमोऽभूत् ॥ १० ॥**

---

अत्रायं विशेषः–क्वचिदनिरुद्धोऽपि सृष्टिहेतुर्भवति । यत्र सूक्ष्मसृष्टिर्विवक्ष्यते । **‘स्थितोऽस्मि मोक्षप्रळयस्थितीनां सृष्टेश्च कर्ता क्रमशः स्वमूर्तिभिः । स वासुदेवादिचतुःस्वरूपः–’**[२६.२८] इति चोपरि । तदेतदाह–निर्देहकान् । अथ शरदां सहस्रेऽतीते । सूक्ष्मदेहसहितान् । लिङ्गदेहावरकतया सूक्ष्मदेहं ससर्जेत्यर्थः । अत एव सूक्ष्मदेहमनिरुद्धशरीरमाचक्षते । प्राणात्मा जीवकलामानी मुख्यप्राणः । यद्वा स्वयम्भुप्राणावात्मानौ जीवकलामानिनौ । आत्मानः मनोमानिनः शेषगरुडेशाः । ननु **‘भुवः सञ्ज्ञान्तरयोः’** [अ.सू.३.२.१७९] इति क्विपि निष्पन्नं पदमूदन्तम्–**‘स्वयम्भू’** इति । तत् कथं नवीनमुदन्तमाह–**‘स्वयम्भु’** इति? सत्यं स्वयम्भूरित्येव रूपम् । अथापि स्वयमेव भवतीत्यन्वर्था सञ्ज्ञा नारायणस्यैव मुख्या न चतुर्मुखस्येति द्योतयितुं संहितायां दीर्घं लोपयित्वा प्रायुङ्क्त । प्रतृण्णपाठे तु **‘स्वयम्भू–’** इत्येव । तद्यथा **‘सगिरिवरधरातळवह’** इति वक्तव्ये **‘धरतळ’** इत्याह स्वयमेवान्यत्र । अथवा **‘समासे स्वयम्भुवो वा ह्रस्वता’** इत्युपस्कर्तव्यम् । **‘स्वयम्भुब्रह्मसञ्ज्ञोऽसौ परोऽस्मै ब्रह्मणे नमः’** इत्यादि च प्रतनाः प्रयुञ्जते । **‘स्वयम्भुशर्वशक्राद्यैः’** इत्यादिप्रयोगबाहुल्यादिदमवसीयते । **‘निमेषो देवदेवस्य ब्रह्मकल्पसमो मतः । तस्यावसाने चोन्मेषो देवदेवशिखा-मणेः । निमेषान्ते भवेदिच्छा स्रष्टुं लोकांश्च कुक्षिगान् । सोऽपश्यत् स्वोदरे सर्वान् जीवसङ्घाननेकशः । सृज्यान् मुक्तानमून् सर्वान् लिङ्गभङ्गमुपागतान् । सुप्ताः सृतिस्थाः सर्वेऽपि तमोगा अपि सर्वशः । पूर्वकल्पे लिङ्गभङ्गमापन्ना विधिपूर्वकाः । मानवान्ता जीवकोशा जीवन्मुक्ताश्च मुक्तिगाः । पूर्वकल्पे विमुक्ताश्च ब्रह्माद्या मानवान्तकाः । ध्यानसंस्था हि तिष्ठन्ति विष्णुकुक्षिगता अपि । उन्मेषस्याऽदिमे भागे चतुर्व्यूहात्मको विभुः । भूत्वा तु पूर्वसाद्गुण्याद् वासुदेवाच्च व्यूहगात् । दत्वा तु ब्रह्मणो मुक्तिं सायुज्याख्यां महाविभुः । दत्वा तदनु सायुज्यं तत्वज्ञानां महात्म-नाम् । सारूप्यं चैव केषाञ्चित् सामीप्यं च तथा विभुः । सालोक्यं च तथाऽन्येषां दत्वा देवो जनार्दनः । अनिरुद्ध-वशे सर्वान् स्थितान् लोकानलोकयत् । प्रद्युम्नस्य वशे दत्वा सृष्टिं कर्तुं मनो दधे । मायां जयां कृतिं शान्तिमुपयेमे स्वयं हरिः । चतुर्व्यूहैः पूर्णगुणैर्वासुदेवादिकैः क्रमात् । ताभिर्युक्तो महाविष्णुश्चतुर्व्यूहात्मको विभुः । भिन्नकर्माशयं लोकं पूर्णकामो व्यजीजनत् । उन्मेषान्ते पुनर्विष्णुर्योगमायां समाश्रितः । सङ्कर्षणाद् व्यूहगाच्च हरत्येतच्चराचरम्’** [वै.खं;वैशा.मा.२०.३९–५१] इत्यादि स्कान्दे ॥ ९ ॥ उक्तमनूद्य रूपान्तराण्यप्याह–एवं चतुर्मूर्तिभिः सह पञ्चात्मकः स भगवान् द्विषडाद्यात्मकोऽभूदिति । अत्र पञ्चेति विस्तृतस्य च व्याहरणं भवति । तद् यथा सिंहः पञ्चास्य उच्यते ।

---

१. एतदादीनि पद्यानि भगवत्पादकृतानि; **‘नारायणस्य न समः’** इत्यतः परं प्रमाणवचनोदाहरणमिति पूर्वव्याख्यातारः । वस्तुतस्तु एतेष्वपि कानिचन प्रमाणवचनान्येव । पञ्चरात्रवचनत्वेन प्रमाणत्वेन च परैरप्युल्लेखात् ।

**निर्दोषपूर्णगुणविग्रह आत्मतन्त्रो निश्चेतनात्मकशरीरगुणैश्च हीनः ।**
**आनन्दमात्रकरपादमुखोदरादिः सर्वत्र च स्वगतभेदविवर्जितात्मा　　　　॥ ११ ॥**

---

पचि विस्तारे । पञ्चं बहुधा विस्तृतमात्मानं करोतीति पञ्चात्मकः । एष एव करोतीत्येक इति यथा । बहुभी रूपैरा-त्मानं विस्तारयामासेत्यर्थः । उक्तानुक्तानां सर्वरूपाणामेकयोक्त्या सङ्ग्रहोऽयम् । एक आस । पञ्चात्मकोऽभूत्, त्रिधाऽऽ-त्मानं प्रपञ्चयामास । ब्रह्मणि शिवे च गतः स्वयं विष्णुरूपो भूत्वा । अथ पञ्चात्मकोऽभूत् चतुर्धाऽऽत्मानं प्रपञ्चयामास, वासुदेवः सङ्कर्षणः प्रद्युम्नोऽनिरुद्ध इति, विश्वस्तैजसः प्राज्ञस्तुरीय इति । अथ पञ्चेति सङ्ख्यावद्वचनम् । वासुदेवादिभिः सह स्वयं नारायणः पञ्चात्मकोऽभूत् । पञ्च आत्मानः स्वरूपाण्यस्येति । स्वार्थे कः । तेन रूपभेदेऽपि न स्वरूपभेद इत्येव कप्रत्ययार्थः । एवमन्यत्रापि । पञ्च आत्मकानि आनन्दमयानि रूपाण्यस्येति वा । आनन्दोद्रेकादेव बहुरूपो बभूव, न कर्मवशादिति हृदयम् । वासुदेवादिभिश्चतुर्भिः पुरुषरूपेण च पञ्चात्मक इति केचित् । अथ द्विषडात्मकोऽभूत् । द्व्यात्मकोऽभूत्, षडात्मकश्च । आत्मा अन्तरात्मा चेति द्व्यात्मकः । वासुदेवादिपञ्चात्मक एव वेदव्यासेन सह षडात्मकः षड्तुगतः । अथ द्वौ च षड् च द्विषट् अष्टौ । अकारोकारमकारनादबिन्दुकलाशान्तातिशान्तैः प्रणवस्याष्टाक्षरैः प्रतिपाद्य-तयाऽष्टात्मकोऽभूत् – विश्वस्तैजसः प्राज्ञस्तुरीय आत्माऽन्तरात्मा परमात्मा ज्ञानात्मा चेति; कृष्णो रामो नृसिंहो वराहो विष्णुः परञ्ज्योतिः परम्ब्रह्म वासुदेवश्चेति । अथ द्विगुणाः षट् द्विषट् । द्वादशात्मकोऽभूत् । केशवादिभिश्च सङ्कर्षणा-दिभिश्च । अथ पञ्चद्वयी, पञ्चानां द्वयं रूपजातमस्येति । ज्ञानेन्द्रियगतानि पञ्च रूपाणि, कर्मेन्द्रियगतानि च पञ्चेति पञ्चकद्वयम् । एवमन्यदप्यूह्यम् । अथ पञ्चद्वयी, पञ्चकं च द्वयं चेति सप्तमूर्तिः । सप्तलोकगतः, सप्तधातुगतः, सप्तच्छन्दोगतः, सप्तस्वरगत इत्यादि । अथ पञ्चद्वयी मत्स्यादिदशमूर्तिः । शतमित्यादि च सङ्ख्येयवचनम् । शतं च, शतानि च, सहस्रं च, सहस्राणि च, शतसहस्राणि च, ततोऽपि पराणि च रूपाण्यस्येति शतसहस्रपरः । शतात्मा अजादिशतमूर्तिः कलश-नामा । हृदयनाडीगत एकोत्तरशतमूर्तिः–**'शतं चैका च हृदयस्य नाड्यः'** इति । **'नारायणो नरः शौरिः–'** इत्यादिना पठितः नारायणाद्यष्टोत्तरशतमूर्तिः । अस्थिमज्जादिगतानि षष्टिश्च त्रीणि च शतानि रूपाणि । संवत्सरस्याहोरात्रगतानि विंशतिश्च सप्त शतानि च रूपाणि । अथ सहस्रात्मा–**'विश्वं विष्णुर्वषट्कारः–'** इत्यादिना पठितः विश्वादिसहस्र-मूर्तिः । हृदयनाडीशाखागतः शतोत्तरदशसहस्रमूर्तिः । नाडीगतः द्वासप्ततिसहस्रमूर्तिः । प्रतिशाखानाडीगतमूर्तिषु कोटिसङ्ख्यामितानि रूपाणि विहाय गणने द्वासप्ततिलक्षमूर्तिः । ततोऽपि परः । प्रतिशाखानाडीगतद्वासप्ततिलक्षोत्तर-द्वासप्ततिकोटिमूर्तिः । ततोऽपि परः परायुषः ब्रह्मणः परकाले गतः परसङ्ख्यमूर्तिः । अमितो न सङ्ख्यया मितः । असङ्ख्यः । अजिताद्यनन्तमूर्तिः । बिम्बमूर्तिश्चानन्तजीवेषु । 'बृहतीसहस्रऋचां स्वरसमसङ्ख्यः परः । व्यञ्जन-समसङ्ख्योऽमितः' इत्यपि व्याचक्षते । बहुभिः बहुत्वभाग्भिर्जीवैरुपमीयत इति बहूपमोऽभूत् । कथम्? एकोऽप्यनेक इव बभूव । तथा दर्शयामास । सर्वरूपेषु समोऽप्यसम इव । अखिलदोषसमुज्झितोऽपि दुःखादिमानिव । पूर्णगुणकोऽप्य-पूर्णगुण इव । सर्वत्र सर्वरूपेषु । पद्यमिदम्, **'निर्दोषपूर्णगुणविग्रहः–'** इत्युपरितनं च पद्यं पञ्चरात्रवचनमिति वल्लभाचार्योऽपि स्वग्रन्थे प्रमाणत्वेनोदाजहार ॥ १० ॥ गुणा एवास्य विग्रहो विग्रहा वा । अभिन्नमपि विभिन्नमिव विविधतया गृह्यत इति विग्रहः शरीरमवताररूपं च । सर्वेऽप्यात्मान एतत्तन्त्राः, अयं च स्वतन्त्र इत्यात्मतन्त्रः । भक्तपराधीनश्च । आत्मान

**कालाच्च देशगुणतोऽस्य नचाऽदिरन्तो वृद्धिक्षयौ नतु परस्य सदातनस्य ।**
**नैतादृशः क्वच बभूव नचैव भाव्यो नास्त्युत्तरः किमु परात् परमस्य विष्णोः ॥ १२ ॥**

**सर्वज्ञ ईश्वरतमः स च सर्वशक्तिः पूर्णाव्ययात्मबलचित्सुखवीर्य्यसारः ।**
**यस्याऽज्ञया रहितमिन्दिरया समेतं ब्रह्मेशपूर्वकमिदं न तु कस्य चेशम् ॥ १३ ॥**

**आभासकोऽस्य पवनः पवनस्य रुद्रः शेषात्मको गरुड एव च शक्रकामौ ।**
**वीन्द्रेशयोस्तदपरे त्वनयोश्च तेषामृष्यादयः क्रमश ऊनगुणाः शतांशाः[1] ॥ १४ ॥**

इत्यात्मीया भक्ताः । चेतनया चैतन्येन निष्क्रान्त आत्मा स्वरूपमस्येति निश्चेतनात्मकं शरीरम् । निश्चेतनात्मकाश्च गुणाः । कुत्सने कः । कुत्सितेन जडशरीरेण जडगुणैश्च हीनः । अतः क्वचिद् वेदादिष्वशरीर उच्यते । निर्गुणश्च । ननु गुणविग्रहत्वेन निर्गुणत्वं गतम् । नतु निराकारत्वम् । नहि गुणानामाकारो नाम युज्यते । नेत्याह–आनन्दमात्रकरपाद-मुखोदरादिः । आनन्देति सर्वगुणोपलक्षणम् । सर्वेऽपि गुणा आनन्दरूपा इति पृथग्ग्रहणम् । मात्रेत्यनानन्दादिकं दोषजातं व्यावर्तयति । न गुणान्तरम् । सर्वत्र शरीरेषु अवयवेषु गुणेषु च । भेदविवर्जिता आत्मानोऽवताररूपाणि चास्य । विशिष्टं वर्जनं विवर्जनम् । भेदप्रतिनिधिविशिष्टं भेदव्यवहारसहं भेदवर्जनमित्येतत् ॥ ११ ॥ कालतो देशतो गुणतश्चानन्तोऽयं न केवलम् । किन्तु कस्माच्चित् कालात् पूर्वमनन्तरं वा कस्मिंश्चिद् देशे कस्यचिदपि गुणस्य वृद्धिक्षयावपि नतु नैवाभूताम्, भविष्यतो वा । कुतः? परत्वात् परिपूर्णत्वात्, सदातनत्वाच्च । कथं परिपूर्णस्य वृद्धिः? अपूर्णो हि वर्धते । कथं सदातनस्य क्षयः? कथं वा परिपूर्णस्य सदातनस्य कालादिकृत आदिरन्तो वा? क्वच कुत्रापि नैवास्ति, नैव बभूव, नैव भविष्यति च । उत्तमः नास्तीति किमु वक्तव्यम् । सर्वस्मादपि परादुत्तमात् परमस्य । यः पारम्यस्य परा काष्ठा । कालदेशगुणैरनन्तो हि विष्णुरुच्यते । सर्वं कालं देशं च व्याप्नोतीति, सर्वे गुणा विशन्त्येनमिति च हि विष्णुः । एतेन **'न ते विष्णो जायमानो न जातो देव महिम्नः परमन्तमाप'** [ऋ.सं.७. ९९.२] इति श्रुतिं स्मार-यति । अन्यमहिम्नां परमन्तं ते महिमानं न कश्चिदाप ॥ १२ ॥ बहवो भवन्तीश्वराः, ये क्वचिदनीश्वरा अपि । अस्य तु नानीश्वरत्वसमानाधिकरणमीश्वरत्वम् । अत ईश्वरतमः सर्वेश्वरः सर्वाधिपतिः । नास्य कश्चिदीश्वर इति । सर्वं कर्तुं शक्नोतीति सर्वशक्तिः । शक्तितोऽप्यनन्तः । **'ज्ञानशक्तिबलैश्वर्यवीर्यतेजांस्यशेषतः । भगवच्छब्दवाच्यानि–'** इत्युदिताः षड्गुणा विष्णोरेवेत्यनेनाऽह । सर्वज्ञ इत्यशेषज्ञानम् । ईश्वरतम इत्यशेषमैश्वर्यम् । सर्वशक्तिरित्यशेषशक्तिः । अथ बलवीर्यतेजांस्याह–पूर्णेत्यादिना । अव्ययानि वृद्धिक्षयरहितानि । आत्मस्वरूपाणि बलचित्सुखवीर्याणि । कर्तृत्वशक्तिः शक्तिः । धारणशक्तिर्बलम् । निग्रहशक्तिर्वीर्यम् । चित्सुखमन्तःसम्भृताभ्यां ज्ञानानन्दाभ्यां विलसितं वर्चो नाम तेजः । तैरयं सारः श्रेष्ठः । तान्येवास्य सार आकृतिसर्वस्वमिति वा । इदं तु तदधीनं न कस्यापि कार्यस्येष्टे । आज्ञया सहितं तु कस्यापीष्टे ॥ १३ ॥ आश्रित्य ईषत् तद्वद् भासत इत्याभासकः । अल्पार्थे कन् । आश्रित्येत्याङा तदधीनत्व-

१. 'शतांशात्'

**आभासका त्वथ रमाऽस्य मरुत्स्वरूपाच्छ्रेष्ठाऽप्यजात् तदनु गीः शिवतो वरिष्ठा ।**
**तस्या उमा विपतिनी च गिरस्तयोस्तु शच्यादिकाः क्रमश एव यथा पुमांसः ॥ १५ ॥**

---

मुक्तम् । आभासक इत्यानन्दरूपः प्रतिबिम्बश्च । नह्यनानन्दरूपाणां तामसानां भगवत्प्रतिबिम्बत्वोपासनमिष्यते । पवनः ब्रह्मा भविष्यन् । शेषात्मको रुद्रः शेषो भविष्यन् । गरुड एव न त्वन्यो भविष्यन् । वीन्द्रेशयोर्गरुडरुद्रयोः शक्रकामावाभासकौ । अनयोः शक्रकामयोः तदपरे तदवराः अहम्प्राणानिरुद्धमनुगुरुदक्षाद्या देवा आभासकाः, तारतम्यक्रमशः । तेषामवरदेवानामृषय ऋषीणां मनुष्या इत्यादिक्रमेण च । क्रमश उत्तमेभ्योऽवरा ऊनगुणाः । शततमोंऽशः शतांश उच्यते । शतांशेन ऊनगुणाः शतांशा उच्यन्ते । अथ शतस्यांशा दशपञ्चादयः अंशा येषां तेऽपि शतांशाः । तेन शास्त्रोक्तक्रमेण यथायोग्यं शतांशाः । ननु बिम्बप्रतिबिम्बयोः सारूप्यमिष्यते । तत् कथं पुमाकारपवनप्रतिबिम्बयोर्गरुडशेषयोः पतगभुजगाकारता? कथं च गरुडशेषप्रतिबिम्बयोरिन्द्रकामयोः पुनः पुमाकारता? द्विधा हि प्रतिबिम्बत्वं शास्त्रेषु पठ्यते । भगवत्प्रतिबिम्बत्वम्, भगवदन्यस्वोत्तमप्रतिबिम्बत्वं चेति । स्वहृदिस्थितस्य भगवतो बिम्बरूपस्य साक्षात् प्रतिबिम्बाः सर्वजीवाः । अत्र बिम्बस्य भगवत आकारविशेषेण तत्तदाकारविशेषः । यथा विश्वम्भरप्रतिबिम्बस्य विनायकस्य गजमुखता । अत्र तु स्वोत्तमद्वाराऽवराणां जीवानां प्रतिबिम्बत्वमुच्यते । नेदमाकारसादृश्यहेतुः । तद्भिन्नतन्नियम्यतत्सदृशज्ञानानन्दादिमत्त्वमात्रमत्र प्रतिबिम्बपदार्थः । अथच गरुडशेषयोर्न केवलं पतगभुजगाकारता । तयोः पुमाकारता चास्ति । तदवच्छेदेन युक्तं पवनप्रतिबिम्बत्वं शक्रकामबिम्बत्वं चेति । अत एव च युक्तं तेषां वक्ष्यमाणं पुमाकारकालजयादिजनकत्वं च ॥ १४ ॥ स्त्रीत्वं पुंस्त्वं च नियतमिति दर्शयितुं स्त्रीणां पृथगाभासपरम्परामाह– आभासका त्वथ रमा । भगवान् स्त्रीरूपश्च पुरुषरूपश्चेति युक्तं तस्योभयबिम्बत्वं साक्षादपि । अथेत्यधिकारार्थः आनन्तर्यार्थश्च । उक्तः पुरुषाणां बिम्बप्रतिबिम्बभावः । अथ स्त्रीणामयमधिक्रियत इति । अस्य विष्णोः । आभासका तु । तुना रमाया अव्यवहितं प्रतिबिम्बत्वमाह । यथा पुरुषेषु साक्षात् प्रतिबिम्बस्य साक्षादवरत्वम्, तेन तारतम्यहेतुत्वं च, न तथा स्त्रीषु । यतस्तास्वन्तरेण बिम्बभूतां प्रतिबिम्बभूतां च तरतमभावक्रमेणोच्चाः पुरुषा अपि भवन्ति । अत एव तारतम्यक्रमं सहैव स्मारयति– मरुत्स्वरूपादजादपि श्रेष्ठा । तदनन्तरं गीः सरस्वती भारती च । शिवतः गरुडशेषाभ्यां च । तस्याः भविष्यत्सरस्वत्याः भारत्याः उमा च भविष्यद्वारुणी, विपत्नी सुपर्णी च । **'सौपर्णी'** इत्यर्वाचीनोऽपशब्दः । **'पुंयोगादाख्यायाम्'** [अ.सू.४.१.४८] इति, सुपर्णस्य स्त्री सुपर्णीत्येव भवति । भगवत्पादोऽपि सर्वत्र सुपर्णीत्येव प्रायुङ्क्त, न क्वापि सौपर्णीति । ननु तारतम्यस्तुतौ **'सौपर्णी वारुणी पर्वतपतितनया'** इति पठ्यते? सत्यं पठ्यते । तदेव गमकं तस्याः स्तुतेरर्वाचीनत्वे । यत्तु केचिदाचक्षते नारायणपण्डिताचार्यकृतिरियमिति, भगवती भ्रान्तिरेव सा । कथं विपतिनी? विः पक्षी गरुडः पतिर्यस्याः सा । ननु कथमथापि विपतिनी? विपतिरिति स्यात् । **'पत्युर्नो यज्ञसंयोगे'** [अ.सू.४.१.३३] इति पाणिनिस्मरणाद् विपत्नीति वा स्यात् । प्रतनानामयं प्रथितः पन्थाः । यदिदन्तमिन्नन्तं च सङ्कीर्णतया पठन्ति । केशिनं केशिमाहुः । केसरिणं केसरिमाहुः । यतिं यतिनमाहुः । एवमत्रापि पतिं पतिनमाह । वस्तुतस्तु पत्नीत्यर्थे पतिनीत्ययमादिश्यते । स चाऽदेशो विभाषा भवति । तथाच त्रीणि रूपाणि–विः पतिरस्या इति विपतिनी विपत्नी विपतिर्वा । अधिक-

**ताभ्यश्च ते शतगुणैर्दशतो वरिष्ठाः पञ्चोत्तरैरपि यथा क्रमतः[१] श्रुतिस्थाः ।**
**शब्दो बहुत्ववचनः शतमित्यतश्च श्रुत्यन्तरेषु बहुधोक्तिविरुद्धता न ॥ १६ ॥**

मस्मत्कृतायां प्रतनव्याकरणमीमांसायाम् । उमा विपतिनी च तस्याः गिरो देव्या आभासके । तयोरुमाविपतिन्योः शचीरती तयोर्मानवी शतरूपा । इत्यादिका अपि यथा पुमांसस्तथा श्रुत्युक्तक्रमेणैव तारतम्यक्रमेणैव च बिम्ब-प्रतिबिम्बभावमापन्नाः । तृतीयार्थे शस् । यद्यपि उमाविपतिन्योः पूर्वं नीळाभद्राद्याः षट् कृष्णमहिष्यस्तत उमा विपतिनी च वक्तव्ये । अथाप्युपासने नातितरामुपयोग इति, विष्णुवायुरुद्राणां पत्न्य एवोत्तरोत्तरं प्रतिबिम्बत्वेनोपासनायामुपयुज्यन्त इति च तासां षण्णामनुक्तिः ॥ १५ ॥ ताभ्यः पत्नीभ्यश्च ते पतयश्चतुर्मुखादयः । दशतः दशगुणैः कचित् । पञ्चैव उत्तरसङ्ख्या येषां तैः पञ्चपर्यन्तैः गुणैः कचित् । यथावत् क्रमेण श्रुतिस्थाः श्रुतिगदिताः । यथा क्रमेण यादृशेन क्रमेण श्रुतिस्था इति वा । यथा श्रुतिस्थास्तं क्रममनतिक्रम्येति वा । यथाक्रममित्येव वाऽर्थः । श्रुतय इतीतिहासपुराणानि च । तद् यथा ब्रह्मा ब्रह्मण्याः शतगुणैरधिकः । शतेन गुणितैर्गुणैरित्यर्थः । एतेन पवनो व्याख्यातः । गरुडादयः सुपर्ण्या-दिभ्यो दशगुणैरधिकाः । इन्द्रकामौ शचीरतिभ्यां पुनः शतगुणैरधिकाः । सूर्यचन्द्रयमाः सञ्ज्ञारोहिणीश्यामलाभ्यः, अग्निश्च स्वाहायाः पञ्चगुणाधिका इत्यादि । नन्वथापि न निस्तारः । **'ते ये शतं विरिञ्चा एतावती श्रीः'** इति श्रियो विरिञ्चाच्छतगुणाधिकत्वमेका श्रुतिः पठति । कोटिगुणाधिकत्वमपरा–**'एतेभ्यः श्रीस्तु मुक्तेभ्यो गुणैः कोटिगुणोत्तरा'** इति । एवं रुद्राच्छतगुणाधिको ब्रह्मा, इन्द्राच्छतगुणश्च रुद्रः कचित् पठ्यते–**'ते ये शतं बृहस्पतेरानन्दाः स एकः प्रजा-पतेरानन्दः । ते ये शतं प्रजापतेरानन्दाः । स एको ब्रह्मण आनन्दः'** इति, **'–बृहस्पतिर्नाम महेन्द्रत्वात् पुरन्दरः । तस्मात् प्रजापतिर्मुक्तो रुद्रः प्रजननेशिता । तस्माद् ब्रह्मा शतगुणः–'** इति च । रुद्राच्छतगुणा ब्रह्माणी । तस्याः शतगुणो ब्रह्मेत्यन्यत्र–**'चन्द्रेत्यादिस्वरूपा यास्तेभ्यः शतगुणावराः'** इति, **'–ताभ्यः शतगुणावराः'** इति च । एव-मिन्द्राच्छतगुणा पार्वती तस्याः शतगुणो रुद्र इति च कचिदुच्यते । तथाहि बृहद्भाष्य आचार्योदाहृता पैङ्गिनां श्रुतिः– **'एवं सुपर्णाः सर्वेऽपि समाः शेषैः सदैव तु । सर्वैर्गुणैस्तथा मुक्तौ तद्भार्यास्तच्छतावराः'** इति, **'ताभ्यः शतावरास्त्विन्द्राः पुरन्दर इतीरिताः'** इति च । कथमथ विप्रतीपान्येवं व्याकुलानि वचनानि सकपोलताडं श्रद्दधीमहि । विरोधाभास एवायं तत्रभवतो बुद्धिवैयाकुल्यान्न वस्तुतो विरोध इत्याह– शब्दो बहुत्ववचनः । शतमिति शब्दो न शतत्वं वक्ति किन्तु केवलमपरिच्छिन्नं बहुत्वं वक्ति । स्फुटवचनान्तरेण चेयत्तानिर्णयः । तथाहि यत्र विरिञ्चाल्लक्ष्म्याः शतगुणमन्तरमुच्यते तत्र शतमिति कोटिः । **'कोटिगुणोत्तरा'** इति स्फुटवचनात् । यत्र रुद्राच्छतगुणो विरिञ्च उच्यते तत्र शतमिति दश-सहस्राणि । छान्दोग्यभाष्ये स्फुटं व्याख्यानात्–**'शिवादाशा तथैवास्या मुख्यवायुः शतोत्तरौ'** इति । यत्रेन्द्रपार्वत्योः पार्वतीशिवयोर्वा शतगुणमन्तरमुच्यते तत्र शतमिति दश । **'सर्वे त्वेते दशोत्तराः'** इति स्फुटवचनाच्छान्दोग्यभाष्ये । इन्द्रात् कृष्णस्य षण्महिष्यः **'विंशगुणाधिकाः स्युः'** इति स्ववचनाचोपरि । तस्मात् पौरुषेयापौरुषेयश्रुत्यन्तरेषु बहुधोक्त्या परस्परं विरुद्धता न शङ्कनीया ॥ १६ ॥

१. **'–क्रमशः'**

**तेषां स्वरूपमिदमेव यतोऽथ मुक्ता[१] अप्येवमेव सततोच्चविनीचरूपाः ।**
**शब्दः शतं दश सहस्रमिति स्म यस्मात् तस्मान्न हीनवचनोऽथ ततोऽग्ररूपाः॥ १७ ॥**

**एवं नरोत्तमपरास्तु विमुक्तियोग्या अन्ये च संसृतिपरा असुरास्तमोगाः ।**
**एवं सदैव नियमः क्वचिदन्यथा न यावन्न पूर्त्तिरुत संसृतिगाः समस्ताः ॥ १८ ॥**

---

ननु मुक्तौ नीचोच्चत्वमसम्भावितम् । नहि मुक्तेषु केचिदुच्चाः केचिन्नीचा इति वक्तुमुचितम् । संसारे त्वव्यवस्थया नीचोच्चा भवन्ति । तात्कालिकं च तत् । तत् किमनेन गणितनिष्कर्षेणेति शङ्कमानं प्रत्याह– तेषां स्वरूपम् । इदं नीचोच्चभावोपेतमेव तेषां स्वरूपम् । यत इदं नीचोच्चत्वं तेषां स्वरूपमेव । तेन नीचोच्चत्वापगमो नाम स्वरूपनाश एव । अथ तस्मात् परममङ्गलरूपत्वादस्य स्वरूपभूतस्य नीचोच्चभावस्य मुक्ता अपि संसारिवदेव सततोच्चविनीचरुपाः । विशिष्टमिदं नीचत्वं न नैच्यानुसन्धानहेतुरिति सूचनाय विनीचेत्याह । उच्चोऽग्रजः, नीचोऽनुज इतिवत् पारावर्यमेव, नतु नाम दोष इत्यर्थः । ननु स्यादयं गणितनिष्कर्षः । निष्कर्षेण चास्य मुक्तिपर्यन्तता । यदि शतशब्दो बहुत्ववचनः स्यात् । तदेव निर्मूलमिति तवाऽशासौधस्य मूलोच्छेद इत्यत आह– शब्दः । **‘शतं दश सहस्रं च सर्वमक्षय्यवाचकम्’** [म.भा;आ.प.२३७-८] इति शब्दः आगमोऽस्मिन्नर्थे प्रमाणमस्ति । अक्षय्यमिति यावदपेक्षितं तावदक्षीणं वदतीत्यर्थः । न हीनवचनः नाप्यधिकवचनः । यद्वा न्यूनं चाधिकं च हीनमुच्यते । न हीनवचनः अन्यूनानधिकवचन इत्यर्थः । अथ अथापि तरतमभावेऽपि ततः शतांशक्रमेणैकस्मादेकस्योत्तमत्वात् सर्वेऽपि मुक्ता देवा अग्ररूपा इति । अथ तस्मात् शतादिशब्दस्य अधिकार्थत्वात्, ब्रह्माद्याः ततः शतांशादप्यग्ररूपा अधिकस्वरूपा इत्येके । अत्र शब्दः– **‘दश शतं सहस्रमित्यपरिमितनामानि’** इति श्रुतिवचनमित्यपि व्याचक्षते । **‘दश दशतस्तच्छतम्, दशशतानि तत् सहस्रम्, तत् सर्वम्’** इति श्रुतिशब्द इत्यपि । चतुर्थचरणं केचिदेवं व्याचक्षते–**‘शतमितिशब्दस्तस्माच्छताद्धीनवचनो न । किन्तु शतादप्यधिकवचनो यस्मात् । दशेतिशब्दः तस्मात् दशतो हीनवचनो न, किन्तु दशतोऽप्यधिकवचनो यस्मात् । सहस्रमितिशब्दः तस्मात् सहस्रात् हीनवचनो न, किन्तु सहस्रादप्यधिकवचनो यस्मात् अथ तस्मात् ततः शतादेरप्यग्ररूपाः’** इति । यद्यपि रमणीयं व्याख्यानम् । लोकेऽपि तथैव व्यवहारः । ‘ಹತ್ತಾರು’ इत्याचक्षते । दशावरं ततोऽधिकं च हि तथा व्याहरन्ति । ‘ನೂರಾರು’ इत्याचक्षते । शतावरं ततोऽधिकं च हि तथा व्याहरन्ति । ‘ಸಾವಿರಾರು’ इत्याचक्षते । सहस्रावरं ततोऽप्यधिकं च हि तथा व्याहरन्ति । अथापि मूलाशयाननुगुणतया चिन्त्यमिदम् । यस्मात् बृहद्भाष्ये शिवादिभार्याः शिवादिभ्यो दशावरा इति वक्तव्ये **‘तद्भार्यास्तच्छतावराः’** इत्याह । तेन ज्ञायते शतशब्दः शताद्धीनवचनोऽपि भवतीति । तेन शतमिति दशापि स्यात् । सहस्रमपि स्यात् । निर्वचनसाम्यात् । बहूनां विषयाणामवगमनेन, विष्णोर्महिमातिशयस्य रूपविशेषाणां चावगमनेन शं तनोतीति शन्तमेव शतम् । ददाति शमिति दशमेव दश । शतादिभिः सह सरतीति सहस्रम् ॥ १७ ॥ नरोत्तमश्चतुर्मुखः परः पूर्वावधिर्येषां सत्त्वाधिकानाम् । अथच नरोत्तमा मनुष्योत्तमा

---

१. **‘मुक्तावप्येवमेव’**

**पूर्त्तिश्च नैव नियमाद् भविता हि यस्मात् तस्मात् समाप्तिमपि यान्ति न जीवसङ्घाः ।**
**आनन्त्यमेव गणशोऽस्ति यतो हि तेषामित्थं ततः सकलकालगता प्रवृत्तिः ॥ १९ ॥**

---

परा उत्तरावधयो येषाम् । नरलोके य उत्तमा इति विवक्षायां तृणान्ता अपि जीवा नरोत्तमपदेनैव सङ्गृहीताः । विविधा मुक्तिः । नत्वेकरूपा । साधनस्य वैविध्यात् । प्रथमं तावच्चतुर्विधा– सायुज्यं सारूप्यं सामीप्यं सालोक्यमिति । एकैकाऽपि पुनर्जीववैविध्यात् साधनवैविध्याच्च विविधा । तदेतदाह– विमुक्तियोग्या इति । तुना सत्त्वप्रचुरत्वं नाम विशेषमाह । ननु पञ्चविधा मुक्तिः स्मर्यते–**'सालोक्यसार्ष्टिसामीप्यसारूप्यैकत्वमप्युत । दीयमानं न गृह्णन्ति विना मत्सेवनं जनाः'** [भाग.३.३०.१३] इति । अत्र पुनर्भवदुक्तं सायुज्यं न पठ्यते । अनुक्ते सार्ष्टि चैकत्वं च पठ्येते । न भोः । अनधिगत-भागवतार्थोऽसि । तत्र ह्येकधा तावन्मुक्तिः पठ्यते–एकत्वं ब्रह्मणा एकीभवनं नाम मुक्तिरिति । तत्रैकत्वं नाम स्वरूपैक्य-मिति मा कश्चिद् भ्रमीदिति चतुर्धा एकत्वं व्याचष्ट–सालोक्यरूपमेकत्वम्, सार्ष्टिरूपमेकत्वम्, सामीप्यरूपमेकत्वम्, सारूप्यरूपमेकत्वमिति । ऋष्टिरिति भोगानुभूतिरुच्यते । ऋष ज्ञाने । आ समन्तात् समाना ऋष्टिरत्रेति सार्ष्टीति सह-भोगरूपं सायुज्यमिति न कोऽपि विरोधः । अन्ये ये च रजोधिकाः । संसृतिरेव परा गतिर्येषाम् । त्रिदिवनिरयभूगोचरा नित्यसंसारिणः । अथवा नरोत्तमः परः सर्वाधिको येषां ते देवा विशिष्टमुक्तिभाजः । वैशिष्ट्यमपि तारतम्याद् विविधमिति विविधमुक्तिभाजश्च । तदेतत् तुना सूचितम् । अन्ये मनुष्याः संसृतिपराः नित्यसंसारिणः प्रायः । चशब्दात् मनुष्योत्तमा मुक्तियोग्याश्च । मनुष्याधमास्तमोगाश्च । अथ च असुरास्तमोऽधिका अन्धन्तमोयोग्या एव । ये तमोऽगमन् तेऽपि तमोगाः । ये च तमो गमिष्यन्ति तेऽपि तमोगाः । ये संसृतौ वर्तमानास्ते संसृतिगाः । अत्र गमिः स्थितिवचनः । संसृतावेव गच्छन्ति परिवर्तमानास्तिष्ठन्तीति । कियत्पर्यन्तम्? यावन्न पूर्तिः, साधनपूर्तिः । समस्ता उत समस्ता अपि । यावत् साधनं न पूर्यते तावत् मुक्तियोग्या अपि संसृतिस्थाः । तमोयोग्या अपि संसृतिस्थाः । सर्वेऽपि संसारिणः । तत्र केचिन्नित्यसंसारिण इत्येतत् ॥ १८ ॥ नियमात् पूर्वोक्तनियमानुसारेण साधनस्य पूर्तिरपि नियमात् नियततया कदाचिदेकदा सर्वेषां न भविता । कुतः? मा भूत् सर्वेषां सकृदेव साधनपूर्तिः, मा च भूदन्ततः सर्वेषां साधकानां च पूर्तिरितीश्वरनिय-मादेव । **'नासुरा दैवीम् । न देवा आसुरीम् । न मनुष्या दैवीमासुरीं च गतिमीयुः । आत्मीयामेव जातिमनुभवन्ति'** [ब्र.सू.भा.३.४.४०] इति नियमश्रुतेः । हीत्यनेन तदेतत् शास्त्रप्रसिद्धमनन्तत्वादियुक्तिसिद्धं चेत्याह । ब्रह्मपद-योग्यो रुद्रपदयोग्य इत्यादयो बहवो गणाः । एकैकगणगतजीवानामप्यानन्त्यमेव यतस्ततो न समाप्तिं यान्तीति हि युक्त-मेतत् । ततः इत्थमेव **'यथापूर्वमकल्पयत्'** इति सकलकालगता प्रवृत्तिरिति । सा च सकला प्रवृत्तिः, ततः तस्मादेव भगवत इति च । इयमत्र व्यवस्था– यस्मिन् कल्पे स्वपदप्राप्तिः, आ तत्कल्पावसानं तत्पदे स्थितिर्ब्रह्मवाय्वोः । गरुडशेषरुद्राणां च । ततो मुक्तिर्ब्रह्मणः, गरुडशेषयोश्च । वायोस्तदुत्तरकल्पे ब्रह्मपदप्राप्तिस्ततो मुक्तिः । एवं रुद्रस्य शेषपदप्राप्तिस्ततो मुक्तिः । तत्र ब्रह्मवाय्वोः कल्पमध्ये न पुनः सृष्टिरिति कल्पायुष्ट्वं शास्त्रेषूच्यते । गरुडशेषरुद्रास्तु प्रतिब्रह्मदिनं पुनःपुनः सृज्यन्त इति न कल्पायुष्ट्वम् । इन्द्रादीनां तु मन्वन्तरावधिः स्वपदस्थितिः । न कल्पावधिः । तथाऽपि तेषां तत्वमानित्वं आकल्पमनुवर्तते । तद् यथा–पुरन्दरनामा इन्द्र आगामिनि मन्वन्तरे नेन्द्रपदे स्थास्यति ।

**एतैः सुरादिभिरतिप्रतिभादियुक्तैर्य्युक्तैः सहैव सततं प्रविचिन्तयद्भिः ।**
**पूर्त्तेरचिन्त्यमहिमः परमः परात्मा नारायणोऽस्य गुणविस्तृतिरन्यगा क्व ॥ २० ॥**

**साम्यं नचास्य परमस्य[1] च केन चाऽप्यं मुक्तेन च क्वचिदतस्त्वभिदा कुतोऽस्य ।**
**प्राप्येत चेतनगणैः सततास्वतन्त्रैर्न्नित्यस्वतन्त्रवपुषः परमात् परस्य ॥ २१ ॥**

**अर्थोऽयमेव निखिलैरपि वेदवाक्यै रामायणैः सहितभारतपञ्चरात्रैः ।**
**अन्यैश्च शास्त्रवचनैः सह तत्वसूत्रैर्न्निर्ण्णीयते सहृदयं हरिणा सदैव ॥ २२ ॥**

---

तदा बलिरिन्द्रो भविष्यति । अथाप्यष्टमकक्ष्यागतः पुरन्दर एव मनोमानितामश्नुते, न बलिः । पदमायाति च याति च । न तेन स्वरूपं विपरिवर्तते । नहि पदव्यत्ययेन तारतम्यं व्यत्येति । नहि बलिरिन्द्रो बभूवेत्यष्टमकक्ष्यागतो भवति । तारतम्यं च तत्वमानित्वं च स्वरूपनिष्ठम् । तर्हि भाविनि मन्वन्तरे यदा बलिरिन्द्रो भवति, तदा **'इन्द्राय स्वाहा'** इति कस्मै हविर्दीयते? बलये वा, पुरन्दराय वा? बलये वा स्यात्, पुरन्दराय वा स्यात् । व्यवस्थितश्चायं विकल्पः । यत्र पदनिमित्तं हूयते तत्र बलये । यत्राभिमाननिमित्तं तत्र त्वष्टमकक्ष्यागताय पुरन्दरायैवेति सर्वं समञ्जसम् ॥ १९ ॥ नवनवोन्मेषशालिनी प्रज्ञा प्रतिभा । श्रुतिस्मृत्यनुगुणमन्तःस्फुरणं वा । विचक्षणेष्वपि अदृष्टाश्रुता विलक्षणा प्रतिभा अतिप्रतिभा । आदिना अतिशयितं माहात्म्यज्ञानम्, अतिशयिता प्रीतिश्च भगवति । अथच येये धर्मा भगवत्साधनौपयिकास्ते सर्वेऽपि । पूर्तेः पूर्णत्वादनन्तत्वाद्धेतोः सुरादिभिरप्यचिन्त्योऽस्य महिमा । **'बहुव्रीहौ महिम्नो वाऽदन्तता'** इति वक्तव्यम् । अचिन्त्यमहिमा, अचिन्त्यमहिमः । युक्तैर्मिलितैः । एकत्र मिलिता न केवलम् । एकैव चिन्ता सर्वेषामित्याह– सहैव । सङ्गत्यैव च भगवत्प्रकर्षं विलक्षणं गुणरूपादिकं च चिन्तयद्भिः । युक्तैः भगवति मनोयोगयुक्तैर्वा । निरुद्धचित्तवृत्तिभिर्वा । सुखदुःखादिषु समचित्तैर्वा । ध्यानकर्मणि कुशलैर्वा । सदोद्यतैर्वा । परमः सर्वोत्तमः । अर्थविशेषाः पूर्वमुक्ता यथासम्भवं सर्वत्रानुसन्धेयाः । अतोऽन्येषां सर्वेषामात्माऽन्तर्यामी । सर्वेषां नाराणां गुणानामयन इति स नारायणः ॥ २० ॥ साम्यमपि केनाप्यस्य नाऽप्यम् । अथ केन च ब्रह्मणाऽपि मुक्तेनापि । कुतस्तरां पारम्यम् । कुतस्तमामभिदा । परमस्य चेति चकारेण पूर्वोक्तं विशेषणजातं स्मारयति– अचिन्त्यमहिमस्य सर्वान्तर्यामिणः इतरासाधारणगुणविस्तृतिमतश्च । मुक्तेनापि साम्यमपि नाऽप्यते । अतः कुत एवाभिदा प्राप्येत । कुत इति कस्मात् कारणविशेषात्? कस्माद् वा प्रमाणात्? कुत इति कथमित्यर्थे वा । केन वा प्रकारेण? अभिदा तु । कल्पनातीता चासम्भविता चेयमभिदेत्यर्थः । तदेव वैषम्यदर्शनेन स्फुटयति–नित्यस्वतन्त्रवपुषः । वपुरपि नित्यं स्वतन्त्रं च यस्य । तस्य परमात् परस्य एकमात्रस्य सततं मुक्तावप्यस्वतन्त्रैरत एवावरैरनेकैश्चेतनगणैरिति ॥ २१ ॥ ततं वं ज्ञानमस्येति ततवं तत्वमुच्यते । प्रमाविषय इत्येतत् । अथवा तननं तत् । सम्पदादित्वात् क्विप् । मत्वर्थे वः प्रत्ययः । मत्वर्थे प्रत्यये

---

१. **'परमेण च'**

**नारायणस्य न समः पुरुषोत्तमोऽहं जीवाक्षरे ह्यतिगतोऽस्मि[1] ततोऽन्यदार्त्तम् ।**
**मुक्तोपसृप्य इह नास्ति कुतश्च कश्चिन्नानेव धर्म्मपृथगात्मदृगेत्यधो हि ॥ २३ ॥**

परतः तदिति शब्दरूपं भसञ्ज्ञं भवति–**'तसौ मत्वर्थे'** [अ.सू.१.४.१९] इति । भत्वात् जश्त्वं न भवति । तेन तत्+वम्=तत्वम् । केचिन्मध्ये द्विस्तकारं पठन्ति– तत्त्वमिति । वस्तुतस्तु तत्वमिति तत्त्वमिति भिन्नार्थे द्वे पदे भवतः । तननवत् तत्वम्, तस्य भावस्तत्त्वमिति । तत्ववादीनि सूत्राणि ब्रह्मसूत्राणि मुख्यतः । तत्वसूत्रैः सहितानि सहतत्वसूत्राणि । वस्तुतस्तु सहेति भिन्नं पदम् । सर्वशास्त्रैः सह मिलितैर्विचार्य तत्वसूत्रैर्हरिणा बादरायणेन निरणीयतेति । निखिलैरिति सर्वत्रान्वयि । निखिलैरपि रामायणैः । निखिलैरपि भारतपञ्चरात्रैः । भारतं क्वचिच्छिवपारम्यपरमिव प्रतीयते शिवसहस्रनामादिप्रसङ्गे । पञ्चरात्रं क्वचित् प्रमाणम्, क्वचिज्जीवजननादिवाक्येष्वप्रमाणमिति केचित् । अतो निखिलैरपीत्याह । ब्रह्मसूत्रेष्वपि कानिचित् पूर्वपक्षसूत्राणि कानिचिदेव सिद्धान्तसूत्राणीति परे व्याचक्षते । अतो निखिलैरपि तत्वसूत्रैरिति चाभिप्रैति । अथच कर्मतत्वप्रतिपादकानि जैमिनिसूत्राणि तारतम्यतत्वप्रतिपादकानि देवमीमांसासूत्राणि चात्र विवक्षितानि । अतश्च निखिलैरपि तत्वसूत्रैः । तेषामुपसङ्ग्रहार्थमेव ब्रह्मसूत्रैरित्यनुक्त्वा तत्वसूत्रैरित्याह । स्वतन्त्रतत्वप्रतिपादनान्मुख्यतस्तत्वसूत्राणि ब्रह्मसूत्राण्येव । मूलरामायणं वाल्मीकिरामायणं पाद्मादिपुराणगतानि बहूनि रामायणानि चेति रामायणैरित्याह । रामायणैः सहितानि भारतं च पञ्चरात्राणि च । संहिताबहुत्वाद् बहुवचनम् । हरिवंशेष्विति यथा । भारतपञ्चरात्राभ्यां सहितानि वा सहितभारतपञ्चरात्राणि । खिलाभ्यां हरिवंशशेषधर्माभ्यां सहितं भारतं पञ्चरात्राणि चेति वा । कथं रामायणम्? अयन्तेऽनेनेत्ययनं चरितम् । रामस्येदमयनमिति रामायणम् । भरतानामिदं चरितमिति भारतमिति स्फुटम् । अर्थतः शब्दतश्च भारवदिति च भारतम् । शब्दतोऽपि महदर्थतोऽपि महदित्येतत् । भारपर्वाभ्यां मत्वर्थे तः सञ्ज्ञायाम् । पर्वतः, भारतम् । असञ्ज्ञायां न स्यात् । भारं वहन् न भारत उच्यते । नापि भारतं पर्वाण्यस्य सन्तीति पर्वतमुच्यते । पञ्चरात्रशब्दार्थ उपरिष्टात् [३०] वक्ष्यते । यथार्थशासनाच्छास्त्राणां वचनानि । शास्त्राणि वा वचनानि । स्मृतिपुराणगतानि । सहृदयं सतात्पर्यम् । कानिचिद्धरिणा कृतानि । कानिचिद्धर्यादेशेन । अन्ते च तत्वसूत्रैर्हरिणैव निर्णीयते । इदमपि पञ्चरात्रगतमिति प्रमाणत्वेनोदाजहार वल्लभाचार्यः ॥ २२ ॥ उक्तेऽर्थे प्रमाणजातमुदाहरति–नारायणस्य न समः । **'नास्ति नारायणसमं न भूतं न भविष्यति । एतेन सत्यवाक्येन सर्वार्थान् साधयाम्यहम्'** [आ.प.१.३४] इति भारते । पुरुषोत्तमोऽहं जीवाक्षरे ह्यतिगतोऽस्मि । **'यस्मात् क्षरमतीतोऽहमक्षरादपि चोत्तमः । अतोऽस्मि लोके वेदे च प्रथितः पुरुषोत्तमः'**[१५.१८] इति गीतायाम् । शरीरक्षरणात् क्षरं ब्रह्मादिजीवजातम् । अक्षरं चित्प्रकृतिः । एवं क्षरपुरुषमक्षरपुरुषं चातिगत इति पुरुषोत्तम इति प्रथितः । **'प्रजापतिप्रमुखाः सर्वजीवाः क्षरोऽक्षरः पुरुषो वै प्रधानम्'** इति श्रुतिः । **'ब्रह्मरुद्रादयः सर्वे शरीरक्षरणात् क्षराः । श्रीरक्षरात्मेत्युदिता नित्यचिद्देहका यतः'** इति च । **'क्षराक्षरात्मनोर्यस्मादुत्तमः स सदाऽनयोः । पुरुषोत्तमनामाऽतः प्रसिद्धो लोकवेदयोः'** इति च । ततोऽन्यदार्तम् । **'एष त आत्मा सर्वान्तरोऽतोऽन्यदार्तम्'** [५.४.३;५.५.१] इति बृहदारण्यके । **'अतो विष्णोरन्यदार्तम् । अ इति विष्णोर्हि नाम'** इति भाष्यम् । **'अतोऽन्ये सर्व एव च । ब्रह्मरुद्रादयो जीवाः दुःखिनः'** इति

१. **'ह्यधिगतोऽस्मि'**

**आभास एव पृथगीशत एष जीवो मुक्तस्य नास्ति जगतो विषये तु शक्तिः ।**
**मात्रापरोऽसि नतु तेऽश्नुवते महित्वं षाड्गुण्यविग्रह सुपूर्ण्णगुणैकदेहः[1] ॥ २४ ॥**

च श्रुतिः । तत इति च विष्णोरित्येवार्थः । **'ओं तत्सदिति निर्देशो ब्रह्मणस्त्रिविधः स्मृतः'** इति स्मरणात् । **'तद्ध तद्वनं नाम'** इति च श्रुतिः । मुक्तोपसृप्यः । **'मुक्तोपसृप्यव्यपदेशात्'** [१.३.२] इति ब्रह्मसूत्रम् । **'अमृतस्यैष सेतुः'** इति मुक्तप्राप्यत्वव्यपदेशात् । इह नास्ति कुतश्च कश्चिन्नानेव । कुतश्चित् कारणविशेषादपि कश्चिदपि शरीरगुणक्रियादिः नानेव भिन्नो वा भिन्नाभिन्नो वा नास्तीत्यर्थः । **'मनसैवेदमाप्तव्यं नेह नानाऽस्ति किञ्चन । मृत्योः स मृत्युं गच्छति य इह नानेव पश्यति'** [२.१.११] इति काठके । इदं भगवद्रूपादिकं मनसैव वेदार्थं विचार्य ज्ञातव्यम् । नेह किञ्चन नाना भिन्नमस्तीति । य इह भगवतो गुणेषु रूपेषु वा नाना पश्यति सर्वप्रकारेण भेदं पश्यति, इवशब्दादत्यल्पमेव वा भेदं पश्यति, **'भवेदेकत्र संयोग इवशब्दो विरुद्धयोः'** इति वचनाद् भेदाभेदं च यः पश्यति स मृत्यनन्तरं मृत्युनामकमन्धं तमो यातीत्यर्थः । **'मनसैवानुद्रष्टव्यं नेह नानाऽस्ति किञ्चन । मृत्योः स मृत्युमाप्नोति य इह नानेव पश्यति'** [६.४.१९] इति बृहदारण्यके । धर्मपृथगात्मदृगेत्यधो हि । **'यथोदकं दुर्गे वृष्टं पर्वतेषु विधावति । एवं धर्मान् पृथक् पश्यंस्तानेवा-नुविधावति'** [२.१.१४] इति च काठके । धर्मेभ्यः पृथगेवाऽत्मानं परमात्मानं पश्यतीति धर्मपृथगात्मदृक् । **'पर्वतेषु दुर्गे पर्वताग्रे वृष्टं यथाऽधो विधावति एवं पृथग्दृष्टान् धर्मानन्वेव तदनन्तरमेव अधोऽन्धे तमसि विधावति'** इति बृहद्भाष्ये । **'पर्वतेषु दुर्गे शिखरे वृष्टमधो विधावति । एवं विष्णोर्धर्मान् पृथक् पश्यन्नधोऽन्धं तमो विधावति'** इति काठकभाष्ये । **'आभास एव च'** [२.३.४९] इति ब्रह्मसूत्रम् । पृथगीशत एष जीवः । **'पृथगुपदेशात्'** [२.३.२७] इति च । आ ईषत्साम्येन भासत इत्याभासः प्रतिबिम्बः । एष जीवः ईशस्य प्रतिबिम्ब एव । अथच ईशादेष पृथग् भिन्न एव । **'भिन्नोऽचिन्त्यः परमो जीवसङ्घात्'** इति श्रुत्युपदेशात् । मुक्तस्य नास्ति जगतो विषये तु शक्तिः । तुना जगत्सर्जनादिशक्तिविशेषमाह । **'जगद्व्यापारवर्जम्'** [४.४.१७] इति च । जगत्सृष्ट्यादिव्यापारं वर्जयित्वैव सर्वान् कामानाप्नोति मुक्तः । मात्रापरोऽसि नतु तेऽश्नुवते महित्वम् । **'परो मात्रया तन्वा वृधान न ते महित्वमन्वश्नुवन्ति'** [७.९९.१] इत्यृग्वेदे । **'मात्रायाः परः परिमाणातीतस्त्वम्, तन्वा वृधान वर्धमान, देहेन पूर्ण । इत्थम्भावे तृतीया । देहरूपेण पूर्ण इत्यर्थः । यतश्चिदानन्दात्मको विष्णोरभिन्नश्च देहः । ते महिमानं नानुभवन्ति न प्राप्नुवन्ति च'** इति तत्वदीपिकायाम् [१.१.२४] । **'मातृत्वादिन्द्रियं मात्रा । श्रोत्रादिवत् । तदतीतः परो मात्रयेत्युक्तः'** [१.१.२४] इति च । अश्नुवन्तीति रूपं वैयाकरणा लोके न पठन्ति । स्वादेः **'अशू व्याप्तौ'** इत्यस्याऽत्मनेभाषत्वात् । तदेतदन्तेवासिनो बोधयन् भगवत्पादः–**'अश्नुवते'** इत्याह । **'त्वं मात्रया परः । परिमाणेन जगतो विलक्षणः । अनन्तत्वात् । तन्वा वृधान देहेन सहैव पूर्ण । तस्य स्वतोऽभिन्नत्वात् । त्वन्महिमानं केऽपि नानुभवन्ति'** इति तत्वमञ्जर्याम् । षाड्गुण्यविग्रह । **'जितं ते पुण्डरीकाक्ष पूर्णषाड्गुण्यविग्रह'** इति पञ्चरात्रे । ऋग्विधाने [३.१७५] च पठ्यते । पुण्डरीकं रक्ताम्भोजमुच्यते । **'पुण्डरीकं सिताम्भोजम्'** इति वदन् भ्रान्तः । पुण्डरीके इवाक्षिणी अस्येति

१. **'–गुणैकदेह ।'**

**माहात्म्यदेह सृतिमुक्तिगते शिवश्च ब्रह्मा च तद्गुणगतौ न कथञ्चनेशौ ।**
**न श्रीः कुतस्तदपरेऽस्य सुखस्य मात्रामश्नन्ति मुक्तसुगणाश्च शतावरेण ॥ २५ ॥**

---

पुण्डरीकाक्षः । जीवस्य हृत्पुण्डरीकमक्षमक्षयं धामास्येति च पुण्डरीकाक्षः । त्वया जितं सर्वोपरि स्थितम् । त्वं सर्वोत्तमोऽसि । षड्गुणा एव षाड्गुण्यम् । पूर्णं षाड्गुण्यमेव विग्रहो यस्य । पूर्णेति भिन्नं वा पदम् । ऐश्वर्यवीर्ययशःश्रीज्ञानवैराग्याणि भगपदवाच्याः षड् गुणाः । सर्वप्राभवमैश्वर्यम् । निग्रहानुग्रहशक्तिर्वीर्यम् । सर्वैः सद्भिर्गीयमानत्वं सर्वपदवाच्यत्वं वा यशः । सर्वसम्पदाधिपत्यं द्वात्रिंशल्लक्षणलक्षितं सौन्दर्यं वा श्रीः । सर्वविषयं ज्ञानं ज्ञानम् । अनभिमानो वैराग्यम् । ज्ञानशक्तिबलैश्वर्यवीर्यतेजांसि वा । तथाहि पञ्चरात्रे–**‘किं तत् षाड्गुण्यमित्युक्तम्–’** इति नारदप्रश्नस्य परिहारमाहाहिर्बुध्न्यः–**‘अजडं स्वात्मसम्बोधि नित्यं सर्वावगाहनम् । ज्ञानं नाम गुणं प्राहुः प्रथमं गुणचिन्तकाः । स्वरूपं ब्रह्मणस्तच्च गुणश्च परिगीयते । जगत्प्रकृतिभावो यः सा शक्तिः परिकीर्तिता । श्रमहानिस्तु या तस्य सततं कुर्वतो जगत् । बलं नाम गुणस्तस्य कथितो गुणचिन्तकैः । कर्तृत्वं नाम यत् तस्य स्वातन्त्र्यपरिबृंहितम् । ऐश्वर्यं नाम तत् प्रोक्तं गुणतत्वार्थचिन्तकैः । तस्योपादानभावेऽपि विकारविरहो हि यः । वीर्यं नाम गुणः सोऽयमच्युतत्वापराह्वयम् । सहकार्यनपेक्षा या तत् तेजः समुदाहृतम्’** [अहि.सं.२.५६–६१] इति । तथाच सर्वज्ञता ज्ञानम् । प्रकृष्टकरणात् प्रकृतिपदगदिता सर्वकर्तृत्वशक्तिः शक्तिः । सर्वकरणेऽपि श्रमराहित्यरूपं लीलाकैवल्यं बलम् । सर्वस्वातन्त्र्यमैश्वर्यम् । विकारान्तर्यमनेऽपि स्वतो विकारविरहो वीर्यम् । सहायनैरपेक्ष्यं तेज इत्यर्थः । सुपूर्णगुणैकदेहः । अस्य मूलमन्वेष्टव्यं भवति । **‘पूर्णमदः पूर्णमिदम्’** इत्यादिका, **‘सद्देहः सुखगन्धश्च ज्ञानभाः सत्पराक्रमः’** इत्यादिका च श्रुतिः । **‘मय्यनन्तगुणेऽनन्ते गुणतोऽनन्तविग्रहे’** [६.४.४८] इति भागवते ॥ २४ ॥ माहात्म्यदेह । **‘माहात्म्यशरीर पवित्र महापवित्र’** इति मोक्षधर्मेषु नारदकृते भगवत्स्तवने [शां.प.३३८.१७५] । समग्रं नारदगद्यमत्रोद्धरणीयम् । **‘सृतिमुक्तिगते’** इत्यस्य मूलमन्वेष्टव्यम् । **‘बन्धको भवपाशेन भवपाशाच्च मोचकः’** इत्यस्य ग्रहणमित्यपि वदन्ति । **‘मुक्तानां परमा गतिः’** इति च सहस्रनामसु । अथापि सम्बुद्ध्यन्तं प्रमाणवचनमन्वेष्टव्यमेव भवति । अन्यथा **‘सृतिमुक्तिगतिः’** इत्येवावक्ष्यत् । **‘जयजय नारायण अपारभवसागरोत्तारपरायण’** [वै.खं;पु.क्षे.मा.२०.२६] इति नारदगद्यं स्कान्दे । शिवश्च ब्रह्मा च तद्गुणगतौ न कथञ्चनेशौ । अनेन **‘नान्तं गुणनामगुणस्य जग्मुर्लोकेश्वरा ये भवपाद्ममुख्याः’** [भाग.१.१८.१४], **‘न यत्र कालोऽनिमिषप्रभुः प्रभुः कुतो नु देवा जगतां य ईशिरे’** [२.२.१८] इत्यादीन्युपसङ्गृह्णाति । काल इति श्रीः । काल इति ब्रह्मा । काल इति रुद्रश्च । **‘नाहं न यूयं बत तद्गतिं विदुर्न वामदेवः किमुतापरे सुराः’** [२.६.३६], **‘न यस्य साक्षाद् भवपद्मजादिभी रूपं धिया वस्तुतयाऽनुवर्णितम्’** [७.१०.५१], **‘यस्याऽत्मयोगरचितं न विदुर्विरिञ्चिरुद्रादयः–’** [११.३०.३८], **‘न यस्य रुद्रो नच पद्मयोनिर्नेन्द्रो न सूर्येन्दुमरीचिमिश्राः । जानन्ति दैत्याधिपते स्वरूपं स वासुदेवः कलयाऽवतीर्णः’** [वाम.पु.२९.२०] इत्यादीनि च । ‘दैत्याधिपते’ इति बलिं प्रति प्रह्लादवचनम् । न श्रीः कुतस्तदपरे । **‘न श्रीर्न शर्वः किमुतापरे ते’** [भाग.८.२२.६] इति, **‘अत्रोपसृष्टमिति चास्मृतमिन्दिरायाः’**[३.१६.४२] इति च भागवते । अत्र उपसृष्टमवसितमिति, इदमियदित्थमिति निश्चितमिति वा, इन्दिरया कदाऽप्यस्मृतम् । अस्य सुखस्य मात्रामश्नन्ति । उपजीवनमेवा-

**आभासकाभासपरावभास-**
**रूपाण्यजस्राणि च चेतनानाम् ।**
**विष्णोः सदैवाति वशात् कदाऽपि**
**गच्छन्ति केशादिगणा न मुक्तौ ॥ २६ ॥**

**यस्मिन् परेऽन्येऽप्यजजीवकोशा**
**नाहं परायुर्न मरीचिमुख्याः ।**
**जानन्ति यद्गुणगणान् न रमादयोऽपि**
**नित्यस्वतन्त्र उत कोऽस्ति तदन्य ईशः ॥ २७ ॥**

---

त्राशनं नाम । **'अद्यतेऽत्ति च भूतानि–'** इति श्रवणात् । **'एतस्यैवाऽनन्दस्यान्यानि भूतानि मात्रामुपजीवन्ति'**[बृ.उ.६.३.३२] इति बृहदारण्यके । मुक्तसुगणाश्च शतावरेण । मुक्तेषु सुगणा इति सुरगणाः । अनेन **'ते ये शतं मानुषाणामानन्दाः स एको मनुष्यगन्धर्वाणामानन्दः'**[तै.उ.२.१३] इत्याद्या समग्राऽऽनन्दवल्ली गृह्यते ॥ २५ ॥ विष्णोः साक्षादाभासौ कौ ब्रह्मवायू । तयोराभासा गरुडशेषरुद्राः । तेषां परेपरे आभासा इति चेतनानां स्वरूपाणि सर्वाण्यवभासरूपाण्येव । सदृशतया भासन्ते, अथाप्यवमतयैव भासन्त इत्यवभासरूपाणि । अजस्राणि निरन्तराणि । अजस्रमवभासरूपाणीत्यर्थः । नतु कादाचित्कमाभासत्वम् । केशादिगणाः कदाऽपि मुक्तावपि विष्णोर्वशात् नातिगच्छन्ति इति वचनान्तरम् । वामनपुराणगतं वचनमिति केचित् । श्रुतिवचनमिति प्राचीनाचार्याः ॥ २६ ॥ यस्मिन् परेऽन्येऽप्यजजीवकेशाः । **'वयं न तात प्रभवाम भूम्नो भवन्ति काले न भवन्ति हीदृशाः । यस्मिन् परेऽन्येऽप्यजजीवकोशाः सहस्रशो यत्र वयं भ्रमामः'**[९.६.४४] इति भागवते । दुर्वाससं प्रति रुद्र आह–विष्णुचक्रात् त्वां रक्षितुं वयं न तात प्रभवाम । तस्य भूम्नः भगवतः सकाशात् ईदृशा मादृशा यतः भवन्ति न भवन्ति च कालेकाले । यस्मिन् परमात्मनि अन्यान्यप्यनन्तानि ब्रह्माण्डानि भवन्ति । यत्र वयं भ्रमामः, तादृशो हरिरिति । नाहं परायुर्न मरीचिमुख्या जानन्ति । **'नाहं परायुरृषयो न मरीचिमुख्या जानन्ति यद्विरचितं खलु सत्वसङ्घाः'**[८.११.९] इति भागवते विष्णोर्मोहिनीरूपं दिदृक्षो रुद्रस्य वचनम् । नाहं रुद्रो जानामि । न परायुर्ब्रह्मा जानाति । न मरीचिमुख्या ऋषयो जानन्ति । त्रैष्टुभं प्रथमपादमनुवर्तमान आचार्यः शाकरं भागवतवचनमपि परिवर्त्य त्रैष्टुभेनैव च्छन्दसा पपाठेत्यतिसुन्दरम् । उत्तरार्द्धं पुनः शाकरमेव । तेनेन्द्रवज्रावसन्ततिलकयोः संसर्गजाऽपूर्वेयमुपजातिः । नाम चापूर्वं स्यादस्या इन्द्रतिलकेति । **'न त्वामहं नचेशानो नेन्द्राद्यास्त्रिदशा हरे । ज्ञातुमीशा न ऋषयः सनकाद्या न योगिनः'** [वाम.पु.३०.२८] इति चान्यत्र ब्रह्मवचनम् । **'ब्रह्मरुद्राद्युत्कृष्टचेतनः । शम्भोः पितामहो ब्रह्मपिता शक्राद्यधीश्वरः'** [उ.खं.७१.१४४–५] इति पाद्मे विष्णुसहस्रनामसु । **'जानन्ति–'** इत्यादि प्रमाणवचनान्तरम् । **'नाहं परायुः–'** इत्यादिभागवतवचनस्यैव शेषपूरणमि-

**नैवैक एव पुरुषः पुरुषोत्तमोऽसा-**
**वेकः कुतः स पुरुषो यत एव जात्या ।**
**अर्थाच्छ्रुतेश्च गुणतो निजरूपतश्च**
**नित्यान्य एव कथमस्मि स इत्यपि स्यात्** ॥ २८ ॥

---

त्यन्ये । अस्वरसमेतत् । नहि स्वकृतेन शेषपूरणेन स्ववचनसमर्थनं सम्भवति । प्रमाणवचनोपन्यासस्य चायं प्रसङ्गः । नित्यः कालत्रयातीतः स्वतन्त्रोऽपराधीनश्च । ओङ्कारार्थोऽयम् । **'ओमित्येदक्षरम् । इदं सर्वम् । तस्योपव्याख्यानं भूतं भवद् भविष्यदिति । सर्वमोङ्कार एव । यच्चान्यत् त्रिकालातीतं तदप्योङ्कार एव'** इत्यादेः ॥ २७ ॥ नैवैक एव पुरुषः पुरुषोत्तमोऽसावेकः । **'नैतदिच्छन्ति पुरुषमेकं कुरुकलोद्वह । बहूनां पुरुषाणां हि यथैका योनिरुच्यते । तथा तं पुरुषं विश्वमाख्यास्यामि गुणाधिकम्'** [शां.प.३६०.२-३] इति मोक्षधर्मपर्वणि । **'बहवः पुरुषा ब्रह्मन्नुताहो एक एव तु'** इति जनमेजयजिज्ञासाया इदमुत्तरमाह वैशम्पायनः–यत् केचिदेकं पुरुषमाहुः, नैतदैकात्म्यं मनसाऽपीच्छन्ति ज्ञानिनः । बहवः पुरुषाः । तेषामेका योनिः सृष्ट्यादिकारणं पुरुषोत्तमो विष्णुरिति ज्ञानिभिरुच्यते । न केवलं क्षरपुरुषाणाम् । अक्षरपुरुषस्यापि योनिः । **'मम योनिरप्सु–'** इति श्रवणात् । अतस्तमेव व्याख्यास्यामीति । कुतः स पुरुषो यत एव जात्या अर्थात् श्रुतेश्च गुणतो निजरूपतश्च नित्यान्य एव कथमस्मि स इत्यपि स्यात् । **'यतः स रूपतश्चान्यो जातितः श्रुतितोऽर्थतः । कथमस्मि स इत्येव सम्बद्धः स्यादसंहितः'** [शां.प.२२०.३६] इति च । अत्र प्राचीनटीकाकाराः द्वेधा पाठं पठन्ति । **'सम्बद्धः स्यादसंहितः'** इति श्रीहृषीकेशतीर्थलिखिते प्राचीनादर्शे पठ्यते । स एव च श्रीपद्मनाभतीर्थसम्मतः पाठः । तथा व्याख्यानात् तत्वनिर्णयटीकायां तैः । **'सम्बन्धः स्यादसंहितः'** इति तु तत्वमञ्जर्यां नारायणपण्डिताचार्यादृतः पाठः । **'सम्बद्धः'** इति भारतपाठः । **'सम्बन्धः'** इति पुराणान्तरपठितः पाठः स्यात् । सर्वत्रेयं गमनिका यत्राऽऽचार्यमुखनिर्गतवेदपुराणवचनश्रवणभाग्यभाजो भगवत्पादसेवाफलितपुण्यपुञ्जसञ्जाताशेषविषयधिषणा धिषणोपमा विकसितान्तश्चक्षुषः साक्षादन्तेवासिनोऽपि द्वेधा पाठं पेठुः । सूचितमेतत् तत्वदीपिकाचार्यैः [ब्र.सू.१.३.१६]–**'स सेतुरिति वक्तव्ये छन्दोगवाक्ये, एष सेतुरिति वदता भगवता समानरूपं श्रुत्यन्तरमपि विषयवाक्यमाद्रियत इत्यावेदितम् । ..... उपरिष्टाच्च कचित्कचिदेवम्भूतेषु वचनभेदेष्वयमेवाऽऽशयो बोद्धव्यः'** इति । यथा भगवतो वचनभेदेषु तथा साक्षात् तेनाधिगतपरमार्थानां तदन्तेवासिनां वचनभेदेष्वप्ययमेवाऽऽशयो बोद्धव्यः । अयं श्लोकार्थः– स भगवान् रूपतोऽन्यः । भगवाननन्तरूपः । जीव एकरूपः । स सर्वगतः । अयमणुरूपः । स स्वतन्त्रः । अयं परतन्त्रस्वरूपः । स सुखरूपः । अयं दुःखीत्यादि । जीवत्वेश्वरत्वाभ्यां जातितश्चान्यः । जातिरिति जननं च । तस्य प्रादुर्भाव एव जननम् । अस्य जडदेहयोगः । **'अन्यमीशम्–', 'द्वा सुपर्णा–', 'भिन्नोऽचिन्त्यः परमो जीवसङ्घात्–'** इत्यादिश्रुतितः । परप्रयोजनार्थमीश्वरः प्रवर्तते । स्वार्थं जीव इत्यर्थतः । अर्थापत्तितश्च–स्वातन्त्र्यानुपपत्तेः परतन्त्राज्जीवादन्य एवेति । तस्मादसंहितः असङ्गत्वेन श्रुतः स भगवान् सोऽस्मीत्यभिन्नतया जीवेन कथं सम्बद्धः स्यादिति । **'सम्बन्धः स्यादसंहितः'** इति पाठे – सोऽहमस्मीत्यैक्यानुसन्धानेन सम्बन्धः असंहितः अनुपपन्नः कथं स्यादित्यर्थः ॥ २८ ॥

**सर्वोत्तमो हरिरिदं तु तदाज्ञयैव चेत्तुं[१] क्षमं स तु हरिः परमस्वतन्त्रः[२] ।**
**पूर्णाव्ययागणितनित्यगुणार्ण्णवोऽसावित्येव वेदवचनानि परोक्तयश्च ॥ २९ ॥**

**'ऋगादयश्च चत्वारः पञ्चरात्रं च भारतम् ।**
**'मूलरामायणं ब्रह्मसूत्रं मानं स्वतः स्मृतम् ॥ ३० ॥**

**'सर्वोत्तमो हरिः–'** इति वचनान्तरम् । इदं तदधीनं जीवजातं तु । तुना जीवस्य प्रतिबिम्बत्वं नाम विशेषमाह । नहि प्रतिबिम्बस्य स्वतः क्रिया सम्भवति । तदाज्ञया तत्प्रेरणया तदिच्छया चैव । चेत्तुं चेतितुम् । वेत्तुमित्येतत् । चिती सञ्ज्ञाने । **'स चेत्ता देवतापदम्'** इति हि श्रुतिः । छन्दसि परस्मैपदमात्मनेपदं भवत्यात्मनेपदं परस्मैपदं भवतीति न केवलम् । सेडप्यनिड् भवति । अनिडपि सेड् भवति । स तु बिम्बात्मा हरिः परमस्वतन्त्रः । निरपेक्षं निरवधि चास्य स्वातन्त्र्यमित्यर्थः । प्रत्येकं पूर्णाः अव्यया वृद्धिह्रासवर्जिताः अनन्ता नित्याश्चास्य गुणाः । इत्येव इत्यस्मिन्नर्थ एव सर्वाणि वेदवचनानि । सर्वाः परोक्तयश्च । परस्य व्यासादिरूपस्य भगवत उक्तयः । पराः वेदवचनेभ्योऽन्याः प्रमाणतमत्वेन पराश्चोक्तयः ॥ २९ ॥ **'ऋगादयश्च–'** इत्यारभ्य **'–ग्राह्यास्ते सर्व एव तु'** इत्यन्तैः सार्धैः सप्तदशभिः श्लोकैः भविष्यत्पर्ववचनं सञ्जग्राह । भविष्यत्पर्वेति हरिवंशस्य तृतीयं पर्व । भविष्यपुराणेऽन्तिमं प्रतिसर्गपर्व । तस्यैव भविष्यत्पर्वेति नामान्तर-मित्येके । भविष्यत्पर्वनामकमुपपुराणान्तरमित्यन्ये । किम्मूलमेतद्वचनमिति त एव प्रष्टव्याः । सम्प्रत्येते श्लोकास्तत्ववादप्रद्वेषप्रमुषितशेमुषीकैरन्तरिताः कृताः । अपौरुषेयाश्चत्वार ऋग्यजुस्सामाथर्वाणः । प्रत्येकं च चत्वारः– संहिता ब्राह्मणमारण्यकमुपनिषदिति चतुर्धा भिन्नाः । अथ त्रयः पौरुषेया वेदा इतिहासपदगदिताः–पञ्चरात्रं च भारतं च मूलरामायणं चेति । **'पञ्चरात्रं भारतं च मूलरामायणं तथा । इतिहास इति प्रोक्तः–'** इति चान्यत्र । कथं पञ्च-रात्रम्? पञ्च भूतानि, तन्मात्रा वा रात्रयः, ज्ञानिनां रात्रिस्थानीयानि, पञ्चेन्द्रियविषयाः । **'सा निशा पश्यतो मुनेः'** इत्युक्तेः । पञ्च वासुदेवादीनि भगवद्रूपाणि च रात्रयः, अज्ञानिनां रात्रिस्थानीयानि । **'या निशा सर्वभूतानाम्'** इत्यादेः । तदेवमेताः पञ्च रात्रयः समाहृताः पञ्चरात्रः । **'अहःसर्वैकदेशसङ्ख्यातपुण्याच्च रात्रेः'** [अ.सू.५.४.८७] इत्यत्र **'सङ्ख्याव्ययादेः'** इति पूर्ववचनस्याप्यनुवर्तनात् । तमिमं विषयमागूर्य कृतं तन्त्रं पञ्चरात्रम् । तथाहि स्मर्यते–**'रात्रयो गोचराः पञ्च शब्दादिविषयात्मिकाः । महाभूतात्मिका वाऽत्र पञ्चरात्रमिदं ततः । अवाप्य तु परं तेजो यत्रैताः पञ्चरात्रयः । नश्यन्ति पञ्चरात्रं तत् सर्वाज्ञानविनाशनम् । प्रमाणप्रवरं तन्त्रं पञ्चरात्राख्यमीदृशम् । एताभ्यः पञ्चरात्रिभ्यो व्यतिरिक्तं निरञ्जनम् । यदा पश्येत् परं तत्वं तदा मुक्तः स नान्यथा'** [वि.सं.२.४९–५३] इति । पञ्चविधमज्ञानं राययति नाशयतीति वा पञ्चरात्रम् । रि हिंसायाम् । पञ्च भगवद्रूपाणि राति अवगमयतीति वा । रा दाने । दानमत्र बुद्धौ निधानम् । **'सा रात्रिस्तत् परं ब्रह्म तदव्यक्तमुदाहृतम्'** [अहि.सं.४.७०] इति च । रतिदातृत्वाद् रात्रयो भगवद्रूपाणि । ननु युक्तं रामायणमितिहास इति । युक्तं भारतमितिहास इति । कथं च पञ्चरात्रमितिहासः? अवधत्स्व । इति ह इति ह आस

१. **'चेतुं क्षमम्'** २. **'परमः स्वतन्त्रः'** । प्राचीनपाठे व्यस्तं समस्तं वेत्युभयथाऽपि शक्यं व्याख्यानम् ।

**'अविरुद्धं[1] च यत्त्वस्य प्रमाणं तच्च नान्यथा ।**
**'एतद्विरुद्धं यत्तु स्यान्न तन्मानं कथञ्चन ॥ ३१ ॥**

**'वैष्णवानि पुराणानि पञ्चरात्रात्मकत्वतः ।**
**'प्रमाणान्येव मन्वाद्याः स्मृतयोऽप्यनुकूलतः ॥ ३२ ॥**

**'एतेषु विष्णोराधिक्यमुच्यतेऽन्यस्य न क्वचित् ।**
**'अतस्तदेव मन्तव्यं नान्यथा तु कथञ्चन ॥ ३३ ॥**

वैदिकी संस्कृतिरिति निष्कृष्य कथनात् पञ्चरात्रमितिहासः । मूलरामायणाद्यनुगुणतया योजितार्थं वाल्मीकीयमपीतिहासः, प्रमाणं च । **'वाल्मीकेर्गौः पुनीयान्नः–'** इति ह्याह सङ्ग्रहकारः । पञ्चरात्रस्य कृत्स्नस्य वक्ता धर्मतनयो नारायणः । भारतब्रह्मसूत्रयोर्बादरायणः । मूलरामायणं हयग्रीवमुखोद्गीर्णमिति वदन्ति । चकारेण पुराणानामुपसङ्ग्रहः । एतावद् ग्रन्थजातं स्वतः प्रमाणान्तरनिरपेक्षं मानं स्मृतं ज्ञानिभिः । कुतः? अपौरुषेयत्वात्, **'इतिहासपुराणः पञ्चमो वेदानां वेदः'** इत्यपौरुषेयवेदपरिगृहीतत्वाच्च । सर्वमपि प्रमाणजातं स्वत एव हि मानम् । सन्दिग्धप्रामाण्यं तु सन्देहनिरासाय प्रमाणान्तरसंवादमपेक्षते केवलम् ॥ ३० ॥ चकारोपात्तेषु पुराणेषु स्मृत्यादिषु च विशेषवक्तव्यमिदानीमाह– अविरुद्धं च । यत्त्वस्य वेदादेरविरुद्धम्, चशब्दादापाततः विरुद्धमिव प्रतीयमानं च । तच्च प्रमाणमेव । यदि पुराणवचनम् । यदि व्यासवचनम् । तदेतत् तुनाऽऽह । यदि प्रातीतिकोऽर्थो विरुद्ध इव भाति तदा ऋगाद्यविरोधेन योजनीयम् । नान्यथा । पुराणानां न केवलम् । श्रुत्याद्यविरुद्धस्य यस्यकस्यचिदपि वचनस्य नाप्रामाण्यं शङ्कनीयम् । यदि सर्वात्मना विरुद्धम्, यस्य वेदविरुद्धार्थकथन एव तात्पर्यम्, न तन्मानं कथञ्चन । केनापि प्रकारेण दर्शनगुह्यभाषात्वादिना तस्य प्रामाण्यसम्पादनाय न प्रयतनीयमित्यर्थः । तदेतत् तुनाऽऽह ॥ ३१ ॥ तदेव स्फुटमाह– वैष्णवानि पुराणानि । पुरातनं विषयमागूर्य रचितं शास्त्रं पुराणम् । यद् भविष्यति तदपि भविष्यति काले पुरातनं भविष्यति । तेन पुरेति सार्वकालिकं वचनम् । तेन पुराऽपि नवं पुराणम् । आद्येऽर्थे सञ्ज्ञायामुत्तरपदादेर्लोपः । द्वितीयेऽर्थे तूत्तरपदान्त्यस्य । अन्यपरतया प्रतीयमानान्यपि पुराणानि वस्तुतः वैष्णवान्येव । पञ्चरात्रव्याख्यानरूपत्वात् । अतः सर्वाण्यपि पुराणान्यन्ततः वैष्णवत्वात् प्रमाणान्येव । अथापि **'वैष्णवान् पञ्चरात्राच्च यथार्थज्ञानसिद्धये'** [१०.८४] इति वक्ष्यमाणानुसारेण स्वबुद्धिदोषेण दर्शनादिभाषारीत्या वा पुराणानामविष्णुपरत्वमपि विवक्षाभेदेन क्वचिदनुमतम् । तदा चैवं योजना– विष्णुपराण्येव पुराणानि प्रमाणानि, नावैष्णवानीति । वक्ष्यति हि–**'शिवशास्त्रेऽपि तद् ग्राह्यं भगवच्छास्त्रयोगि यत्'** [१.५२] इति । अनुकूलतः वेदानुकूलत्वादेव मन्वाद्या अपि स्मृतयः प्रमाणानि स्युः । अनुकूलतः अनुकूलं भागमपेक्ष्यैवेति वा । यद्यननुगुणा ऋगादीनां तदा न प्रमाणानि ॥ ३२ ॥ एतेषु ऋगादिषु । पुराणेषु च । विशेषतः वैष्णवेषु पुराणेषु । अन्यस्य न क्वचित् वेदेषु

१. **'–रुद्धं तु य–'**

**‘मोहार्थान्यन्यशास्त्राणि कृतान्येवाऽज्ञया हरेः ।**
**‘अतस्तेषूक्तमग्राह्यमसुराणां तमोगतेः** ॥ ३४ ॥

**‘यस्मात् कृतानि तानीह विष्णुनोक्तैः शिवादिभिः ।**
**‘एषां यन्न विरोधि स्यात् तत्रोक्तं तन्न वार्य्यते** ॥ ३५ ॥

**‘विष्ण्वाधिक्यविरोधीनि यानि वेदवचांस्यपि ।**
**‘तानि योज्यान्यानुकूल्याद् विष्ण्वाधिक्यस्य सर्वशः** ॥ ३६ ॥

**‘अवतारेषु यत् किञ्चिद् दर्शयेन्नरवद्धरिः ।**
**‘तच्चासुराणां मोहाय दोषा विष्णोर्न्नहि क्वचित्** ॥ ३७ ॥

**‘अज्ञत्वं पारवश्यं वा वेधभेदादिकं तथा ।**
**‘तथा प्राकृतदेहत्वं देहत्यागादिकं तथा** ॥ ३८ ॥

---

भारतादिषु वा । यत्र क्वचिद् रुद्रादीनामाधिक्यमिव प्रतीयते तत्रापि विष्णोराधिक्यमेवोच्यते । अन्तर्यामिपरतया । रुद्रादिपदानामपि विष्ण्वभिधानत्वाच्च । **‘नामानि सर्वाणि यमाविशन्ति–’** इत्यादिश्रुतेः । अतस्तदेव मन्तव्यं सर्वत्र । अन्यन्न मन्तव्यम् । अन्यस्मिन् मन्तव्येऽपि शास्त्रमुख्यतात्पर्याविरोधेन । विष्णोरवरत्वं वा तदन्यस्योत्तमत्वं वा सर्वथा न मन्तव्यम् ॥ ३३ ॥ अन्यशास्त्राणि पाशुपतस्कान्दशाक्तादिकानि । **‘मोहशास्त्राणि कारय’** इति हरेराज्ञयैव कृतानि । अतः मोहनार्थं कृतत्वात् । कस्माद् कारणाद् हरिर्मोहशास्त्रकरणायाऽज्ञापयत्? के च प्रणिन्युः? आह– असुराणाम् । तमसः विपरीतज्ञानस्य तेन चान्धन्तमसः गतेः प्राप्तेः कारणात् । गत्यर्थं वा हरेराज्ञया शिवादिभिः कृतानि यस्मात् तस्माच्च । असुराणां ज्ञानमपहरति च, परिहरति च, तेन तान् संहरति तमसि पातयति चेति हरिः । हरेराज्ञया शिवश्चकार । शिवस्याऽज्ञया चापरे मुनयः । ‘मोहशास्त्राणि कुरु कारय च’ इति हि हरेराज्ञा । यद् वचनं पुनरेषां वेदादीनां न विरोधि स्यात् तत् मोहशास्त्रोक्तमपि न परित्यज्यते । किन्तु स्वीक्रियत एव । वार्यते निवार्यते । चुरादेः ‘वृञ् आवरणे’ इत्यस्य कर्मणि रूपम् ॥ ३४–५ ॥ यानि विष्ण्वाधिक्यविरोधीनीत्यापाततः प्रतीयन्ते **‘विश्वाधिको रुद्रः’** इत्यादीनि, तानि सर्वशः सर्वाणि सर्वत्र सर्वथा च विष्ण्वाधिक्यस्याऽनुकूल्यं सम्पाद्य योज्यानि ॥ ३६ ॥ यन्नरवद् दर्शयेत् । तदप्यसुराणां मोहाय । यच्च दर्शनभाषया तदेव पुराणादिषु पठ्यते तदप्यसुराणां मोहाय । आसुराणां वा । असुरप्रकृतीनामित्येतत् । तेन मनुष्याधमा अपि गृह्यन्ते । क्वचिदवतारेष्वपि ॥ ३७ ॥ कानिचित् तादृशानि दर्शनानि शृङ्ग-

**‘अनीशत्वं च दुःखित्वं साम्यमन्यैश्च हीनताम् ।**
**‘प्रदर्शयति मोहाय दैत्यादीनां हरिः स्वयम् ॥ ३९ ॥**

**‘न तस्य कश्चिद् दोषोऽस्ति पूर्णाखिलगुणो ह्यसौ ।**
**‘सर्वदेहस्थरूपेषु प्रादुर्भावेषु चेश्वरः ॥ ४० ॥**

**‘ब्रह्माद्यभेदः साम्यं वा कुतस्तस्य महात्मनः ।**
**‘यदेवंवाचकं शास्त्रं तद्धि शास्त्रं परं मतम् ॥ ४१ ॥**

**‘निर्ण्णयायैव यत् प्रोक्तं ब्रह्मसूत्रं तु विष्णुना ।**
**‘व्यासरूपेण तद् ग्राह्यं तत्रोक्ताः सर्वनिर्ण्णयाः ॥ ४२ ॥**

---

ग्राहिकयाऽऽह– अज्ञत्वम् । बाणादिना वेधः । तेन कवचादीनां भेदः । तद् यथा–**‘शितविशिखहतो विशीर्णदंसः–’** इत्यादि । आदिपदेन मोहः श्रमः भीतवत् पलायनमित्यादि । प्राकृतो देहो यस्य तस्य भावः प्राकृतदेहत्वम् । देहत्यागादिकमित्यादिपदेन देहसंस्कारादिकम् । प्रथमस्तथाशब्दः समुच्चये । द्वितीय उपमार्थे च । तृतीयः पूर्वपरामर्शी । अज्ञत्वादिकं यथा तथा प्राकृतदेहादिकं च तथा मोहाय मृषैव प्रदर्शयति ॥ ३८ ॥ न केवलं कारयति शिवादिभिर्मोहशास्त्रम् । स्वयं हरिस्तथा नट इव नटित्वा प्रदर्शयति । सर्वजनसमक्षं किमपि प्रकटयितुं दर्शनं प्रदर्शनम् । तत् कुतः? दैत्यादीनां मोहाय । आदिना मनुष्याणाम् । क्वचिद् देवानामपि, ऋष्यादीनामपि । उक्तं चान्यत्र– **‘तथाऽप्यसुरमोहाय परेषां च क्वचित्क्वचित् । दुःखाज्ञानश्रमादीन् स दर्शयेच्छुद्धसद्गुणः’** इति । **‘परेषां सुराणाम् । ज्ञानित्वादसुरवन्न । किन्तु क्वचित्क्वचिदेव’** इति प्राचीनटीकाकाराः । **‘परेषां स्वयोग्यतातिरिक्तशुभवतां सतां च मोहाय’** इति तत्वमञ्जर्यां पण्डिताचार्यः ॥ ३९ ॥ पूर्णाखिलगुणो ह्यसौ । स हि दोषवान् भवति योऽपूर्णगुणः, यश्चाल्पगुणः । न केवलं मूलरूपे । अन्तर्यामिरूपेषु अवताररूपेषु च । अपि चानीश्वरो दोषवान् भवति । अयं तु दोषाणामपीष्टे ॥ ४० ॥ महात्मन आत्मशब्दमुख्यार्थस्य परमात्मनः । ब्रह्मादिभिरभेदः, येषु पुनरात्मशब्दः केवलमुपचर्यते । परमुत्तमं प्रमाणं मतम् ॥ ४१ ॥ निर्णयायैव । एवकारः कात्स्न्र्यवचनः । सामस्त्येन निर्णयाय । यदतः परं न किञ्चिद् वेदपदमनिर्णीतमवशिष्यते । निर्णयैकफलानि च तानि सूत्राणि । ब्रह्मसूत्रं तु । तुना निर्णायकग्रन्थेषु सर्वाधिक्यं नाम विशेषमाह । **‘परविद्याख्यं चक्रे शास्त्रमनुत्तमम्’** इति ह्यनुव्याख्याने । **‘आप्तवाक्यतया तेन श्रुतिमूलतया तथा । युक्तिमूलतया चैव प्रमाण्यं त्रिविधं महत् । दृश्यते ब्रह्मसूत्राणामेकधाऽन्यत्र सर्वशः । अतो नैतादृशं किञ्चित् प्रमाणतममिष्यते’** इति च ॥ ४२ ॥

**‘यथार्त्थवचनानां च मोहार्त्थानां च संशयम् ।**
**‘अपनेतुं हि भगवान् ब्रह्मसूत्रमचीक्लृपत्** ॥ ४३ ॥

**‘तस्मात् सूत्रार्त्थमागृह्य कर्त्तव्यः सर्वनिर्ण्णयः ।**
**‘सर्वदोषविहीनत्वं गुणैः सर्वैरुदीर्ण्णता** ॥ ४४ ॥

**‘अभेदः सर्वरूपेषु जीवभेदः सदैव च[1] ।**
**‘विष्णोरुक्तानि सूत्रेषु सर्ववेदेड्यता तथा** ॥ ४५ ॥

**‘तारतम्यं च मुक्तानां विमुक्तिर्विद्यया तथा ।**
**‘तस्मादेतद्विरुद्धं यन्मोहार्त्थं तदुदाहृतम्** ॥ ४६ ॥

**‘तस्माद् येये गुणा विष्णोर्ग्राह्यास्ते सर्व एव हि’ ।**
**इत्याद्युक्तं भगवता भविष्यत्पर्वणि स्फुटम्** ॥ ४७ ॥

**‘एष मोहं सृजाम्याशु यो जनान् मोहयिष्यति ।**
**‘त्वं च रुद्र महाबाहो मोहशास्त्राणि कारय** ॥ ४८ ॥

---

एषु कानि यथार्थवचनानि कानि मोहार्थानीत्यनिर्णयजातं संशयमपनेतुम् । अचीक्लृपत् विरचयामास । कृपू सामर्थ्ये । चर्करीतम् ॥ ४३ ॥ आगृह्य आधृत्य । सूत्रार्थ एव परमः सिद्धान्त इत्याग्रहवता च भाव्यमित्यनेन सूचयति । आग्रह इत्यचलोऽभिनिवेशः । सर्वेषां शास्त्राणां सर्वस्य च प्रमेयस्य निर्णयः । ननु सूत्रमपि दुर्बोधम् । कथं तदर्थ आगृह्येत? आगृह्य च निर्णीयेत? नेयं समस्या । यतोऽयं सूत्रार्थ इति स्वयं सूत्रकार एवाऽहेत्याह– सर्वदोषविहीनत्वं विष्णोरित्यादि । उदीर्ण उत्कृष्टः पूर्णः ॥ ४४ ॥ जीवेभ्यो विष्णोर्भेदः । सदैव मुक्तावपि । चकाराज्जीवानां च परस्परं जडेभ्यश्च भेदः । विष्णोश्च जडेभ्यः ॥ ४५ ॥ न केवलं संसारिणाम् । मुक्तानां च तारतम्यं सूत्रेषूक्तम् । विद्यया विविधा मुक्तिश्च तथा सूत्रोक्ता ॥ ४६ ॥ तस्मात् सूत्रोक्तत्वात् । हि ज्ञानिपुरुषप्रसिद्धोऽयम् । नात्र कश्चिद्, यदि विपश्चित्, विवदते । स्फुटमिति समाधिभाषयेत्यर्थः ॥ ४७ ॥ **‘एष मोहम्–’** इत्यादि श्लोकद्वयं वाराहवचनम् । सम्प्रति त्वेकमेव पद्यम्, **‘एष मोहम्–’** इति वाराहे पठ्यते [७०.३६] । **‘अतथ्यानि–’** इति द्वितीयं पद्यमन्तरितम् । दिष्ट्या पाद्मे तु द्वयमपि पठ्यते [उ.खं.७१.१०८–९] । भवेदेतदेव गमकं वाराहगं परैरन्तरितमित्यस्य । यदि पाद्मेऽपि नापठिष्यत नूनं परैरवक्ष्यत

---

१. **‘सदैव हि ।’**

**'अतत्थ्यानि वितत्थ्यानि दर्शयस्व महाभुज ।**
**'प्रकाशं कुरु चाऽत्मानमप्रकाशं च मां कुरु' ॥ ४९ ॥**

**इति वाराहवचनं ब्रह्माण्डोक्तं तथाऽपरम् ।**
**'अमोहाय गुणा विष्णोराकारश्चिच्छरीरता ॥ ५० ॥**

**'निर्दोषत्वं तारतम्यं मुक्तानामपि चोच्यते ।**
**'एतद्विरुद्धं यत् सर्वं तन्मोहायेति निर्ण्णयः' ॥ ५१ ॥**

---

यद्वैष्णवानां स्वप्रज्ञोपज्ञमिदं पद्यमिति । मोहं विवेकवैधुर्यम् । जनचित्तमोहनीं मायां वा । आशु सपदि जगद्व्यापी यथा स्यात् तथा । अशू व्याप्तौ । मोहयिष्यति, इदमदो वेति विभ्रमं जनयिष्यति, अद एवेति विपरीतां च मतिं जनयिष्यति । **'मुह वैचित्त्ये'** । वैचित्त्यमविवेकः । कारय कुरु । स्वार्थे णिच् । कारय चान्यैः । **''एष मोहं सृजामि मोहकारणं सृजामि । जनानामनादिकर्मवासनानुरूपमिति यावत् । अतो न मोहशास्त्रवक्ता विष्णुराशङ्कनीयः । 'अजस्यावक्रचेतसः' इति हि श्रुतिः । 'निरनिष्टो निरवद्यः' इति च । त्वं च मोहशास्त्राणि कुरु । अन्यैश्च कारय । अतथ्यानि अविद्यमानानि लिङ्गमूलमार्गणादीनि । वितथ्यानि ततो विगतत्वे सति तथ्यानि स्रष्टृत्वादीनि'** इति तत्वदीपिकायाम् । महद् बं बलमस्येति महाबो महाबलः । महाब इत्याहूयत इति महाबाहुः । अहो इति भिन्नं वा पदम् । मोहशास्त्रेषु तु जना धावन्तः पतन्ति दीपशिखास्विव पतङ्गा इत्यहो इत्याह । महाभुजो महाभोगः । संहर्तृत्वात् । संहाराङ्गतयैव हि मोहसृष्टिः । महाबाहुर्महाभुज इति प्रातीतिकोऽप्यर्थो ग्राह्य एव । महावीर इति तं प्रशंसन्निव कार्ये नियोजयति । आत्मानं त्वां च, अवरमपि त्वामुच्चत्वेन प्रसिद्धं कुरु । अन्तर्णीतणिच्च । कारय च । मां च, सर्वोच्चमपि मामवरमिव निरूप्य त्वां पूजयन्तमिव, त्वद्दत्तवरेण प्राप्तबलमिवाप्रकाशम्, माहात्म्यप्रकाशरहितम्, कुरु कारय च ॥ ४८–४९ ॥ **'अमोहाय'** इत्यादिः सार्द्धः श्लोको ब्रह्माण्डवचनम् । अपरम्,उपरि यद् वक्ष्यते । परमिति वा प्रतृण्णम् । वैष्णवे वाराह उक्तं यथा तथा मुखतोऽवैष्णवे ब्रह्माण्ड उक्तमपि परमुत्तमं ग्राह्यमेव । भगवद्वचनप्रामाण्यात्, ऋगादिसंवादाच्च । केचिन्मोहान्निर्गुणं भगवन्तमाहुः । अतः अमोहाय तादृशमोहनिरासाय विष्णोर्गुणा उच्यन्ते । अतस्ते नासुराणां मोहाय । किन्तु सतां यथार्थज्ञानायैवोच्यन्ते । केचिन्मोहाद् भगवन्तं निराकारमाहुः । अतोऽमोहाय विष्णोराकार उच्यते करचरणादिमत्त्वम् । मत्स्याद्याकारता च । केचिन्मोहाद् भगवतः प्राकृतं शरीरमाहुः । अतोऽमोहाय चिदानन्दशरीरतोच्यते । केचिन्मोहाद् विष्णोरवताररूपेषु दुःखशरीरनाशादिदोषमाहुः । अतोऽमोहाय निर्दोषत्वमुच्यते । केचिन्मोहान्मुक्तावैक्यमाहुः, केचिदेकरूपत्वम् । अतोऽमोहाय मुक्तानामपि तारतम्यमुच्यते संसारिणामिव । तेन यन्निर्गुणत्वं निराकारता चाचिच्छरीरता दोषाश्च विष्णोः समानता ऐक्यं वा मुक्तानां यदि दर्शनभाषादिना क्वचिदुच्यते तदसतां मोहायैव । तदेतदाह– एतद्विरुद्धम् । मोहाय मोहजननाय ॥ ५०–१ ॥

**स्कान्देऽप्युक्तं शिवेनैव षण्मुखायैव सादरम् ।**
**शिवशास्त्रेऽपि तद् ग्राह्यं भगवच्छास्त्रयोगि यत्** ॥ ५२ ॥

**'परमो विष्णुरेवैकस्तज्ज्ञानं [1]मोक्षसाधनम् ।**
**'शास्त्राणां निर्ण्णयस्त्वेष तदन्यन्मोहनाय हि** ॥ ५३ ॥

**'ज्ञानं विना तु या मुक्तिः साम्यं च मम विष्णुना ।**
**'तीर्त्थादिमात्रतो ज्ञानं ममाऽधिक्यं च विष्णुतः** ॥ ५४ ॥

**'अभेदश्चास्मदादीनां मुक्तानां हरिणा तथा ।**
**'इत्यादि सर्वं मोहाय कत्थ्यते पुत्र नान्यथा'** ॥ ५५ ॥

**उक्तं पाद्मपुराणे[2] च शैव एव शिवेन तु ।**
**यदुक्तं हरिणा पूर्वमुमायै प्राह तद्धरः** ॥ ५६ ॥

---

नेदं वचनमपि सम्प्रति ब्रह्माण्डे पठ्यते । न केवलं वैष्णवे वाराहे, ब्राह्मे च ब्रह्माण्डे, शैवे च स्कान्द उक्तम् । शिवेनैवेति वक्त्रानुकूल्यम् । षण्मुखायैवेति श्रोत्रानुकूल्यम् । सादरमिति प्रसङ्गानुकूल्यम् । जानतैव जनकेनोक्तम् । जिज्ञासव एव तनयायोक्तम् । ज्ञानं भूयादित्यादरेणैवोक्तम् । नहि पिता पुत्रं प्रतितारयिषति । सादरमिति नायमर्थवाद इत्याह । तदन्यन्मोहनाय हीति सतात्पर्यं कथनात् । पुत्रेति सम्बोध्य परमप्रेमास्पदं पुत्रं प्रति कथनात् । नान्यथेतीतरनिराकरणाच्च । शिवशास्त्रेऽपि मुखतः शिवपारम्यपरेऽपि शास्त्रे । अपिच शिवशास्त्रेऽपि यदि विष्णुपारम्यमुच्यते श्रद्धेयतमं हि तद् भवति । प्रतिनायकेनेव नायकस्तवः । दुर्योधनेनेव भीमसेनप्रशंसा ॥ ५२ ॥ **'परमो विष्णुरेवैकः–'** इत्यादिकं श्लोकत्रयं सम्प्रति पाद्मे पठ्यते [उ.खं.७१.११४–६] रुद्रपार्वतीसंवादरूपेण । तत्र चायं तृतीयश्लोके पाठभेदः– **'इत्यादिसर्वं मोहाय कथ्यते सति नान्यथा'** इति । निर्णयस्त्वेषः, एष एव निर्णयः । न क्वाप्यन्यथा । तर्हि किमिति तत्रतत्रान्यदन्यदुच्यते? आह– तदन्यदसुरजनमोहनाय । हि ज्ञानिलोकप्रसिद्धमेतत् ॥ ५३ ॥ किं तदन्यत्? ज्ञानं विना तु । विना तु विनैव । कर्मणैव केवलम् । असाधारणं मोक्षसाधनं ज्ञानमिति विशेषं च ज्ञानं तु विनेति तुनाऽऽह । तीर्थस्नानादिमात्रतः ॥ ५४ ॥ अस्मदादीनाम् । वयं देवा आदयो येषामृष्यादीनाम् । **'मदाद्या देवताः सर्वास्तस्यैवाऽज्ञावशे स्थिताः । तेनान्तर्यामिणाऽऽज्ञप्ताः फलदा नात्र संशयः'** [वै.खं; पु.क्षे.मा.५९.३५] इति च षण्मुखं प्रति शिववचनम्, वङ्गीयानां पाठे । अन्यैर्न पठ्यते ॥ ५५ ॥ हरिणा स्वान्तरङ्गभक्ताय हरायोक्तम्, हरेण

---

१. **'–ज्ञानं मुक्तिसा–'**
२. **'पद्मपुराणे'**

**'त्वामाराद्धच तथा शम्भो ग्रहीष्यामि वरं सदा ।**
**'द्वापरादौ युगे भूत्वा कलया मानुषादिषु** ॥ ५७ ॥

**'स्वागमैः कल्पितैस्त्वं च जनान् मद्विमुखान् कुरु ।**
**'मां च गोपाय[1] येन स्यात् सृष्टिरेषोत्तराधरा'** ॥ ५८ ॥

---

च स्वान्तरङ्गप्रियायै उमाया उक्तम्, तदपि शैवे शिवपारम्यपरे प्रकरणे प्रस्तुते सति, पूर्वस्मिन् पाताळखण्डे लिङ्गदीक्षातिर्यक्पुण्ड्रधारणादेर्विस्तरेण निरूपणात् । अत एव श्रद्धेयतमम् । शिवपारम्येणोपक्रम्य विष्णुपारम्येणोप-संहारात् ॥ ५६ ॥ उक्तं पाद्मपुराणे च इति पूर्वोत्तरान्वयि । स्कान्दवचनत्वेन पूर्वोक्तं श्लोकत्रयं पाद्मपुराणे चोक्तम् । इयांस्तु विशेषः– स्कान्दे शिवेन षण्मुखायोक्तम् । पाद्मे तु शिवेनोमाया इति । अथच वक्ष्यमाणं श्लोकद्वयं च पाद्म-पुराणे [उ.खं.७१.१०६–७] । चकारान्नारदपञ्चरात्रे [४.२.२९–३०] च । अन्यत्र च पाद्मे –**'त्वं हि रुद्र महाबाहो मोहनार्थे सुरद्विषाम् । पाषण्डचरणं धर्मं कुरुष्व सुरसत्तम । तामसानि पुराणानि कथयस्व च तान् प्रति । मोहनानि च शास्त्राणि कुरुष्व च महामते'** [उ.खं.२३५.२३–७४] इति । कुरुष्व च कारय च । **'अहमप्यवतारेषु त्वां च रुद्र महाबल । तामसानां मोहनार्थं पूजयामि युगेयुगे'**[३५] इति च । के पाषण्डाः? ये पाषण्डन्ति । **'पाषडि हिंसागत्योः'** इति काशकृत्स्नः । पाषण्डिनश्चोक्तास्तत्रैव–**'येऽन्यं देवं परत्वेन वदन्त्यज्ञानमोहिताः । नारायणाज्जगन्नाथात् ते वै पाषण्डिनः स्मृताः'** [२३५.३], **'शङ्खचक्रोर्ध्वपुण्ड्रादिचिह्नैः प्रियतमैर्हरेः । रहिता ये द्विजा देवि ते वै पाषण्डिनः स्मृताः'** [५], **'यस्तु नारायणं देवं ब्रह्मरुद्रादिदैवतैः । समत्वेनैव वीक्षेत स पाषण्डी भवेद् सदा'** [१०] इत्यादि । त्वं यथा मोहशास्त्राणि कृत्वा मोहयसि तथाऽहं त्वामाराध्य मोहयामि । तेन मदाज्ञाकरणजनितेन पुण्येन ते शमेव भवतीति शम्भविति सम्बोधनेन सूचयति । सदेति भणितिभङ्गीविशेषोऽयम् । सदा तदातदा । अथवा यदा त्वामाराधयामि तदा सर्वदा । आराधनेन तव पारम्यं वरग्रहणेन मम सकामतया न्यूनतां च प्रदर्शयितुम् । द्वापरादौ । द्वापरमादिं कृत्वा त्रेतायां च कृते च । यथा कृष्णेन पुत्रार्थं शिवाराधनम् । यथा वा बादरायणेन शिवमाराध्य शुकप्राप्तिः । यथा वा त्रेतायां रामेण लिङ्गस्थापनम् । यथा वा परशुरामस्य शिवान्तेवासिता । कलया अंशेन । नहि भगवत्यंशांशिनो-र्भेदः । यथा कृष्णकेशः कृष्णो बभूव । केशो हि केशव एव । मानुषादिषु ऋष्यादिषु च । कृतयुगे मत्स्यो भूत्वा, **'पुरा प्रतिष्ठितं लिङ्गं विष्णुना मत्स्यरूपिणा'** इति, लिङ्गमाराधयामासेति **'मानुषादिषु'** इत्यादिपदमुपादत्तेति केचित् ॥ ५७ ॥ केवलं स्वप्रज्ञामूलाः स्वमहिमप्रतिपादकाश्च स्वागमाः । स्वस्य स्वीयानां चाऽगमाः । गोपाय तिरोहितमहिमानं कुरु । उत्तरमधरमधरं चोत्तरं यस्याः । उत्कृष्टं नीचम्, नीचं चोत्कृष्टं भगवत्तत्वगोपनेन स्यादित्यर्थः । ज्ञाने चायमधरोत्तरभावोऽत्र विवक्षितः । **'गुपू रक्षणे'** । **'गुपू-धूप-विच्छ-पणि-पनिभ्य आयः'** [अ.सू.३.१.२८] । **'स्युर्मोहाय चराचरस्य जगतस्तेते पुराणागमास्तान्तामेव हि देवतां परमिकां जल्पन्तु कल्पे विधौ । सिद्धान्ते पुनरेक एव भगवान् विष्णुः समस्तागमव्यापारेषु विवेकिनां व्यतिकरं नीतेषु निश्चीयते'** [पा.खं.९७.२७] इति च पाद्मे ॥ ५८ ॥

---

१. **'गोपय'**

**नच वैष्णवशास्त्रेषु वेदेष्वपि हरेः परः ।**
**क्वचिदुक्तोऽन्यशास्त्रेषु परमो विष्णुरीरितः ॥ ५९ ॥**

**निर्दोषत्वाच्च वेदानां वेदोक्तं ग्राह्यमेव हि ।**
**वेदेषु च[1] परो विष्णुः सर्वस्मादुच्यते सदा ॥ ६० ॥**

**'अस्य देवस्य मीळ्ढुषो वया विष्णोरेषस्य प्रभृथे हविर्भिः ।**
**'विदे हि रुद्रो रुद्रियं महित्वं यासिष्टं वर्त्तिरश्विनाविरावत्' ॥ ६१ ॥**

**'स्तुहि श्रुतं गर्त्तसदं युवानं मृगं न भीममुपहत्नुमुग्रम्' ।**
**'यं कामये तन्तमुग्रं कृणोमि तं ब्रह्माणं तमृषिं तं सुमेधाम्' ॥ ६२ ॥**

---

वैष्णवशास्त्रेषु वेदेषु च हरेः परः अन्यः हरेः पर उत्तमः न क्वचिदुक्तः । यत् किञ्चिदुक्तवदापाततः प्रतीयते तदप्युपक्रमोपसंहारादिना विष्णुपरमेव स्फुटमवसीयते । दर्शनभाषादिनाऽन्यार्थत्वावगमात् । अन्यशास्त्रेषु तु समाधिभाषयैव विष्णुः परम ईरितो निरवकाशतया । न सा दर्शनभाषा । सर्वशास्त्राविरोधेन विष्णुपरताया एव समाधिभाषात्वावधारणात् । तदपीतरशास्त्रेष्वेवोदितमिति पुरैवोक्तम् । **'कथा भागवती या तु श्लाघ्यते वैष्णवैर्जनैः । तां मिथ्यामिव यो वक्ति स ज्ञेयः पापिनां वरः'** [क्रि.यो. सा.१.३०] इति च पाद्मे ॥ ५९ ॥ वेदोक्तं ग्राह्यमिति शैवशाक्तादीनामपि सम्मतं हि । वेदेषु च । श्रेष्ठत्वे चः । प्रतिवादिभिरपि परिगृहीतत्वात्, अपौरुषेयत्वाच्च प्रमाणतमेषु वेदेषु । सदेति भणितिभङ्गी । सर्वत्रेत्यर्थः ॥ ६० ॥ तत्र कानिचन वेदवचनान्युद्धरति– **'अस्य देवस्य–'**[ऋ.सं.७.४०.५] इत्यादिना, **'न कश्चित् तत्समः सदा'** [७४] इत्यन्तेन । अस्य देवस्येत्यादिभिस्त्रैष्टुभैर्मन्त्रैर्वसिष्ठेन विश्वे देवाः स्तूयन्ते । **'असिय देवस्य'** इति क्षैप्रविश्लेषेण प्रथमपादेऽप्येकादशाक्षरता । **'अस्य विष्णोरेषस्य मीळ्ढुषो देवस्य हविर्भिर्मनसि प्रभरणे हि वयाः सन् रुद्रो रुद्रियं महित्वं विदे । हे अश्विनौ, युवामप्यन्नवतीं वृत्तिं हविर्भिः प्रभरणे च विष्णोः सकाशादेव यासिष्टम् । मीढ्वान् समर्थः । वया बन्धकः । 'वय बन्धने' इति धातोः । विदे लेभे । 'विद लाभे' इति धातोः । हविर्भिः प्रभरणे, कर्मणा ध्यानेन च । प्रभृथं प्रभरणम्'** इति तत्वदीपिकायाम् [२.२.३७] तत्वमञ्जर्यां च । **'देवस्य मीळ्ढुषो वीर्यवतो विष्णोः हविर्भिः प्रभृथे ध्यानयोगे सति वयाः कालरूपो रुद्रो रुद्रियं महित्वं विदे'** इति पद्मनाभतीर्थाः । एषस्य इच्छारूपस्य । **'इषु इच्छायाम्'** इति धातोः । आ समन्तादिष्टस्य, आ समन्तादीशस्येति च । शस्य षः । पुरि शेत इति पुरुष इति यथा । प्रभृथं प्रभृतं मनसि प्रभरणं ध्यानमिति यावत् । यासिष्टमयासिष्टम् । अन्नादिसर्वभोगवत् वर्तिः वृत्तिम्, वर्तनं स्थानमित्येतत् । वर्तिरिति सान्तं नपुंसकमर्चिरादिवत् । **'यमाराध्य जगन्नाथं ब्रह्मत्वं प्राप्तवान् विधिः । रुद्रो महेश्वरत्वं च शक्रस्त्रिदिवराजताम्'** [वै.खं;पु.क्षे.मा.२०.५२–३] इति स्कान्दे ॥ ६१ ॥ **'स्तुहि**

---

१. **'वेदेष्वपि परो–'**

**'एको नारायण आसीन्न ब्रह्मा नच शङ्करः' ।**
**'वासुदेवो वा इदमग्र आसीन्न ब्रह्मा नच शङ्करः'** ॥ ६३ ॥

---

**श्रुतम्–'** इति ऋग्वेदे [२.३३.११] गृत्समदस्याऽर्षम्, त्रैष्टुभम् । **'स्तुहि श्रुतं गर्तसदं युवानं मृगं न भीममुपहत्नुमुग्रम् । मृळा जरित्रे रुद्र स्तवानोऽन्यं ते अस्मन्नि वपन्तु सेनाः'** इति समग्रो मन्त्रः । रुद्रान्तर्यामी नरसिंहः स्तूयते । सर्ववेदेषु विश्रुतं नरसिंहं स्तुहीति स्वात्मानं प्रत्याह । स्तोतारमृत्विग्गणं वा । हृदयगुहायां सीदन्तम्, नित्ययुवानम्, सिंहमिव भयङ्करम्, शत्रूणामुग्रमुपहत्नुमुपद्रुत्य हन्तारम् । हे रुद्र रुजां द्रावक नरसिंह, त्वमिह स्तूयमानः सन् स्तोतारमपि स्तवानः अभिनन्दन् । अथवा, हे रुद्र शम्भो, त्वदन्तर्यामिणं नरसिंहं स्तवानः स्तुवंस्त्वमस्मदीयाय जरित्रे स्तोत्रे मृळ सुखय । **'मृड सुखने'** । अस्मदन्यं अभक्तं जनं ते सेनाः निवपन्तु नाशयन्तु । **'वप नीरोमकरणे'** । मन्त्रोऽयं तैत्तिरीयसंहितायां [४.५.१०.३] च पठ्यते । **'गर्तसदं जनानाम्'** इति पाठभेदेनाथर्ववेदे [१८.१.४०] च । **'यं कामये–'** इत्यम्भ्रिण्याः सूक्तमृग्वेदे [१०.१२५.५] अथर्ववेदे [४.३०.३] च पठ्यते । **'अहमेव स्वयमिदं वदामि जुष्टं देवेभिरुत मानुषेभिः । यं कामये तन्तमुग्रं कृणोमि तं ब्रह्माणं तमृषिं तं सुमेधाम्'** इति समग्रो मन्त्रस्त्रैष्टुभः । अकारवाच्यं भगवन्तं बिभर्तीत्यम्भ्रिणी, अम्भसि रमत इत्यम्भ्रो नारायणः, तस्येयमिति वाऽम्भ्रिणी लक्ष्मीः । वागाम्भृणीति सायणः । अम्भृणीत्यन्ये । अम्भ्रणीत्यपरे । सर्वेऽपि विभ्रान्ताः । **'वागाम्भृणी स्वात्मानं तुष्टाव'** इत्यनुक्रमणिकापाठश्च प्रामादिकः । **'वागम्भ्रिणी'** इत्येव साधुः पाठः । तथाहि बृहदारण्यके–**'नैध्रुवेर्वाक्, वागम्भ्रिण्याः, अम्भ्रिण्यादित्यात्, आदित्यानीमानि शुक्लानि यजूंषि वाजसनेयेन याज्ञवल्क्येनाख्यायन्ते'** [८.५.३] इति । स्वयमाह–अहमेव स्वयमिदं सतात्पर्यं वदामीति । किमिदम्? यत् परब्रह्म, देवैर्मनुष्यैश्च मननशीलैर्जुष्टं सेवितम् । इदं वक्ष्यमाणं वा । तदपि देवैर्मनुष्यैश्च जुष्टमादृतम् । किं तत्? यमुग्रं रुद्रं कर्तुं कामये तन्तमुग्रं करोमि । यं ब्रह्माणं चतुर्मुखं कर्तुं कामये तं ब्रह्माणं करोमि । सर्वदेवतोपलक्षणम् । तथा यमृषिं चिकीर्षामि तमृषिं करोमि । यं सुमेधसं चिकीर्षामि तं च सुमेधसम् । यद्यप्येतावत्यसदृशी शक्तिर्मम । अथापि मम योनिर्नारायणोऽप्स्वन्तः समुद्र इत्युत्तरमन्त्रेणान्वयः । **'यंयमुग्रं कामये तन्तमुग्रं कृणोमि । यंयं ब्रह्माणं कामये तन्तं ब्रह्माणं करोमीति । इह च तात्पर्यमधिकमवगम्यते । अहमेव स्वयमिदं वदामि जुष्टं देवेभिरुत मानुषेभिरित्यादरणीयत्ववर्णनात्'** [ब्र.सू.२.२.३७] इति तत्वदीपिकाचार्यः ॥ ६२ ॥ **'एको नारायणः–'** इति शुद्धाऽनुष्टुप् । एकः सर्वोत्तमः । एष एव करोतीति सर्वकर्ता च । **'स मुनिर्भूत्वा समाचिन्तयत् तत एते व्यजायन्त'** इत्युत्तरार्धम् । तृतीयपादे स्वराडनुष्टुप् । समग्रं वाक्यं निगदरूपं वा । **'वासुदेवो वै–'** इति त्रैष्टुभः प्रथमः पादः । द्वितीय आनुष्टुभः । **'नेन्द्रसूर्यौ न च गुहो न सोमो न विनायकः'** इत्युत्तरार्धम् । शुद्धाऽनुष्टुप् । **'ब्रह्मरूपेण येनाथ त्वया सृष्टमिदं जगत् । त्वयि तस्मिन् महाविष्णो रमतां मम मानसम् । सर्वो विष्णो त्वयाऽनेन क्रियते जगतः क्षयः । रूद्ररूपेण संहारे तस्मै तुभ्यं नमोऽस्तु मे । यस्मादल्पतमं नास्ति यस्मान्नास्ति महत्तरम् । येन व्याप्तं जगत् सर्वं त्वया तस्मै नमोऽस्तु ते'** [क्रि.यो.सा.१७.१४०–२] इति च पाद्मे ॥ ६३ ॥

**'यदा पश्यः पश्यते रुग्मवर्ण्णं[1] कर्त्तारमीशं पुरुषं ब्रह्मयोनिम् ।**
**'तदा विद्वान् पुण्यपापे विधूय निरञ्जनः परमं साम्यमुपैति' ॥ ६४ ॥**

**'यो वेद निहितं गुहायां परमे व्योमन् ।**
**'सोऽश्नुते सर्वान् कामान्त्सह ब्रह्मणा विपश्चिता' ॥ ६५ ॥**

**'प्र घा न्वस्य महतो महानि सत्या सत्यस्य करणानि वोचम्' ।**
**'सत्यमेनमनु विश्वे मदन्ति रातिं देवस्य गृणतो मघोनः' ॥ ६६ ॥**

---

**'यदा पश्यः पश्यते–'** इत्याथर्वणोपनिषदि [३.१.३] । मन्त्रेऽस्मिन् त्रैष्टुभावयुजौ पादौ । युजौ तु जागतौ । पश्यतीति पश्यो भगवद्दर्शनयोग्यो जीवः यदा निष्टप्तहेमवर्ण्णं ब्रह्मयोनिं लक्ष्मीशं चतुर्मुखजनकं वेदाविष्कर्तारं जगत्कर्तारं जगदीशं परमपुरुषं पश्यति तदाऽनिष्टपुण्यं पापं च विधूय निर्दुःखत्वादिना चतुर्भुजत्वादिना च परमं साम्यमुपैति । रुग्ममित्येव प्रतनं रूपम्, रुक्ममिति वैयाकरणानामपभ्रंशः । **'रुग्मवर्णम्'** इत्येव श्रुतिपाठः । 'रुक्मवर्णम्' इत्यर्वाचीनानां व्याकरणमुग्धानां वैदिकानामपभ्रंशः । अन्यथा कथं जान्तयोर्धात्वोर्मध्ये **'युजिरुचितिजाम्–'** [द.पा.७.३३] इति चान्तस्य पाठः । आदावेव तत् पठनीयमभविष्यत्–**'रुचियुजितिजां कुश्च'** इति । वस्तुतस्तु **'युजिरुचितिजाम्–'** इति भ्रान्तः पाठः । अन्यत्रापि पाठभ्रान्तिर्दृश्यते वैयाकरणानामम् । तथाहि सूत्रान्तरे काशिकाकारः रुचिं पठति– **'नहिवृतिवृषिव्यधिरुचि–'** [अ.सू.६.३.११६] इति । रुजिं क्षीरस्वामी–**'नहिवृतिवृषिव्यधिरुजि–'** इति । तद्वदत्रापि **'रुजो भङ्गे'** इति रुजतेरेव ग्रहणं साधु । तेन **'युजिरुजितिजाम्–'** इत्येव सूत्रपाठः साधुः । स्नेहबन्धं रुजतीति रुग्मम् । अधिकमस्मत्कृतायामुपनिषच्चन्द्रिकायाम् ॥ ६४ ॥ **'यो वेद–'** इति तैत्तिरीयोपनिषदि [२.१.१] । अत्रायुजोश्चरणयोर्याजुषी बृहती । **'वियोमन्'** इति विश्लेषेण युजोर्याजुषी गायत्री चोष्णिक् च । हृदयगुहायां परमाकाशे निहितं यो वेद स तेन परब्रह्मणा सह सर्वकामान् समश्नुते । विपश्चिता ब्रह्मणा चतुर्मुखेन सह वा । सर्वान् कामान् सह युगपदश्नुते प्राप्नोत्यनुभवति च । अशू व्याप्तौ । प्राप्तिरपि हि व्याप्तिः । परब्रह्मणा तदनुग्रहेणेति वा ॥ ६५ ॥ **'प्र घा न्वस्य–'** इति गार्त्समद ऐन्द्रो मन्त्रस्त्रैष्टुभ ऋग्वेदे [२.१५.१] पठ्यते । ऐतरेयब्राह्मणे[५.१३.२], कौषीतकिब्राह्मणे[२३.७] च । **'प्र घा न्वस्य महतो महानि सत्या सत्यस्य करणानि वोचम् । त्रिकद्रुकेष्वपिबत् सुतस्यास्य मदे अहिमिन्द्रो जघान'** इति समग्रो मन्त्रः । महतः सत्यसङ्कल्पस्य अस्य परमेश्वरस्य महान्ति महनीयानि वा सत्यानि कर्माणि नु इदानीं प्रवोचं घ प्रवदामि हि इत्याह गृत्समदः । त्रिषु सवनेषु कं सोमरसः ध्यानयोगे मनो वा द्रुतमत्रेति त्रिकद्रुकं सवनत्रयं बाह्यं मानसं वा । तत्र सोमं भक्तिरसं वाऽपिबत् । तन्निमित्ते आनन्दे जातेऽयमहिं भक्तानामज्ञानं जघान परमेश्वर इति । **'अस्य इन्द्रादिशब्दाभिधेयस्य महतः सत्यस्य विष्णोः महानि महान्ति सत्या सत्यानि**

---

१. **'रुक्मवर्णम्'**

'यच्चिकेत सत्यमित् तन्न मोघं वसु स्पार्हमुत जेतोत दाता' ।
'सत्यः सो अस्य महिमा गृणे शवो यज्ञेषु विप्रराज्ये' ॥ ६७ ॥

'सत्या विष्णोर्ग्गुणाः सर्वे सत्या जीवेशयोर्भिदा ।
'सत्यो मिथो जीवभेदः सत्यं च जगदीदृशम् ॥ ६८ ॥

---

**पारमार्थिकानि करणानि सृष्ट्यादिकर्माणि नु इदानीं प्रवोचं घ प्रावोचमेव, वच्मीत्यर्थः'** इति प्राचीनटीकाकाराः । **'अस्य महतः सत्यस्य महनीयानि सत्यानि करणानि कर्माणि प्रवोचं घ नु ब्रवाणि हि किम्?'** इति तत्वमञ्जरी । **'सत्यमेनम्–'** इत्यृग्वेदे [४.१७.५] वामदेवदृष्टो मन्त्रस्त्रैष्टुभः । **'य एक इच्च्यावयति प्र भूमा राजा कृष्टीनां पुरुहूत इन्द्रः । सत्यमेनमनु विश्वे मदन्ति रातिं देवस्य गृणतो मघोनः'** इति समग्रो मन्त्रः । कृष्टीनां प्रजानां राजा पुरुभिर्ब्रह्मादिभिः पुरुभिः पदैराहूत इन्द्रः परमेश्वरः एक इत् एक एव सर्वोत्तमः भूम महत्तरं ब्रह्माण्डमप्यन्ते प्रच्यावयति नाशयति । सत्यमेनमनु विश्वे जना मदन्ति । कमेनम्? गृणतः स्तुवतो मघोनो देवस्य रातिमभीष्टदातारम् । बन्धुं वा । **'एनमनु विश्वे मदन्ति आनन्दन्तीत्येतत् सत्यम् । स्तुवत इन्द्रस्य दातारम्'** इति तत्वमञ्जरी ॥ ६६ ॥ **'यच्चिकेत–'** इत्यृग्वेदे [१०.५५.६] बृहदुक्थदृष्टो मन्त्रस्त्रैष्टुभः । सामवेदे [२.१.३३] चायं पठ्यते । **'शाक्मना शाको अरुणः सुपर्ण आ यो महः शूरः सनादनीळः । यच्चिकेत सत्यमित् तन्न मोघं वसु स्पार्हमुत जेतोत दाता'** इति समग्रो मन्त्रः । शाक्मना स्वरूपसामर्थ्येन सर्वं कर्तुं शक्तः । उद्यदादित्यवर्णः सुपरानन्दः आगच्छतु । यो महनीयः सनादनादिः, अनीळः अनिलयनः सर्वगतत्वात् । **'कित निवासे'** इति पठन्ति । **'कित निर्माणे'** इति च पठनीयम् । स यच्चकार विश्वं तत् सत्यमेव, न व्यर्थं मिथ्या वा । स्पृहणीयं वसु दैत्येभ्यो जेता उत देवेभ्यो दाता । **'स भगवान् यच्चिकेत चकार तन्न मोघं न मिथ्या । स्पृहाविषयं द्रव्यं तेजो वा भक्तेभ्यो दाता'** इति तत्वमञ्जरी । नहि तस्य विजयो विश्राणनं वा वितथं भवितुमर्हति । **'बल्यादिदैत्यराज्यं स्पार्हं वसु जेता, इन्द्रादिभ्यो दाता परमैश्वर्यादिन्द्रनामको विष्णुर्यच्चिकेत तत् सत्यमेव, न मोघम्'** इति प्राचीनटीका । **'सत्यः सो अस्य–'** इत्यृग्वेदे [३.३.४] मेधातिथिदृष्टो मन्त्रः । वाजसनेयसंहितायां [२३.८३], सामवेदे [२,१५८], अथर्ववेदे [२०.१०४.२] चायं पठ्यते । अत्र प्रथमः पादो जागतः । द्वितीयतृतीयावानुष्टुभौ । **'विप्रराजिये'** इति विश्लेषेण तुरीयः पादोऽपि जागतः । संहत्य च चत्वारिंशदक्षरा पङ्क्तिः । **'अयं सहस्रमृषिभिः सहस्कृतः समुद्र इव पप्रथे । सत्यः सो अस्य महिमा गृणे शवो यज्ञेषु विप्रराज्ये'** इति समग्रो मन्त्रः । अयं परमेश्वर ऋषिसहस्रेण कृतया स्तुत्या प्रीतः सन् सहस्कृतः आविष्कृतबलः कृतः । समुद्र इव बलादिगुणैः प्रथितो बभूव । अस्य सोऽयं सृष्ट्यादिमहिमा सत्य इति विप्रराज्यभूतेषु यज्ञेषु शवः सुखमुद्दिश्य गृणे स्तौमि । शव इति विभक्तिविपरिणामेन भगवद्विशेषणमिति पद्मनाभतीर्थाः । तथाहि प्राचीनटीकायाम्– **'विप्रराज्येषु यज्ञेषु सुखबलरूपस्य विष्णोः स महिमा सत्य इति गृणे स्तौमीत्यर्थः'** इति ॥ ६७ ॥ **'सत्यः सो अस्य महिमा'** इत्युक्तस्य विवरणरूपाणि श्रुतिवचनानि चाऽह–सत्या विष्णोः । सत्या जीवेशयोर्भिदा । सत्या जीवेशयोः,

**'असत्यः स्वगतो भेदो विष्णोर्नान्यदसत्यकम् ।**
**'जगत्प्रवाहः सत्योऽयं पञ्चभेदसमन्वितः** ॥ ६९ ॥

**'जीवेशयोर्भिदा चैव जीवभेदः परस्परम् ।**
**'जडेशयोर्ज्जडानां च जडजीवभिदा तथा** ॥ ७० ॥

**'पञ्च भेदा इमे नित्याः सर्वावस्थासु[१] सर्वशः ।**
**'मुक्तानां च न हीयन्ते तारतम्यं च सर्वदा** ॥ ७१ ॥

**'क्षितिपा मनुष्यगन्धर्वा दैवाश्च[२] पितरश्चिराः ।**
**'आजानजाः कर्म्मजाश्च देवा इन्द्रः पुरन्दरः** ॥ ७२ ॥

---

अजीवेशयोः, जडेश्वरयोरिति यावत्, भिदा च । ईदृशमिति कीदृशम्? यादृशं दृश्यते तादृशम् । यादृशं दृश्यते? ईक्षस्व चक्षुषी उन्मील्य, तदा बुद्ध्यसे जगदिदमीदृशमिति–स्वभिन्नेशनियम्यमिति, मिथोभिन्नजीवजातोपेतमिति, जीव-भिन्नमिथोभिन्नजडात्मकमिति । **'कल्याणगुणवान् श्रीशः सर्वकामफलप्रदः । योऽसौ निर्गुण इत्युक्तः शास्त्रेषु जगदीश्वरः । प्राकृतैर्हेयसंयुक्तैर्गुणैर्हीनत्वमुच्यते । यत्र मिथ्याप्रपञ्चत्वं वाक्यैर्वेदान्तगोचरैः । दृश्यमानमिदं सर्वमनित्यमिति चोच्यते'** [उ.खं.२२७.४०–४२] इति च पाद्मे । असत्यकम् । असत्यमित्यनादरेण कुत्सनीयम् ॥ ६८-६९ ॥ जडेशयोर्भिदा, जडानां च परस्परं भिदा । **'जीवेशयोर्भिदा चैव'** इत्यत्रैवकारेण भेदाभेदवादिनां वार्तां निराह ॥ ७० ॥ नित्याः । न कदाचिदपि पञ्चभेदरहितः कालः कश्चिदस्तीत्यर्थः । तदेव स्फुटमाह–सर्वावस्थासु । सृष्टाविव प्रळयेऽपि । संसृताविव मुक्तावपि । अथवा नित्या नियता इत्यर्थः । एषु पञ्चसु नैकोऽपि न कदाऽप्यन्यथा भवतीत्यर्थः । ननु वयं दृष्टिसृष्टिवादिनः । तस्मात् सुप्तौ न विश्वं नापि भेदः । एवंवादिनोऽपि केचन वादिनो भवन्ति भ्रान्ताः । अतश्चाऽह– सर्वावस्थासु । जाग्रतीव स्वप्नेऽपि सुषुप्तावपि । सर्वशः सर्वे, पञ्चापि भेदा इत्यर्थः । कथं मुक्तौ पञ्चापि भेदाः? अप्राकृतत्वान्मुक्तेः कथं तत्र जडभेदः? कथं जडभेद इति कोऽर्थः? किं जडप्रतियोगिको भेदो नेति ब्रूषे? आहो यत्र जडस्यैव प्रतियोगित्वं चानुयोगित्वं च तादृशो भेदो नेति? नाऽद्यः । अस्ति हि प्राकृतात् प्रपञ्चाद् भेदो मुक्तेः । नापि द्वितीयः । स्तो हि मुक्तावपि कालाकाशौ जडौ । आकाशगुणश्च शब्दः । अस्ति च तयोः परस्परं भेदः । अतः साधूक्तं सर्वश इति । सर्वेऽपि, सर्वत्रापि सर्वप्रकारेणापि । तारतम्यं च सर्वदा । मुक्तावपि न हीयते ॥ ७१ ॥ मनुष्यगन्धर्वाः, दैवाश्च देवानामिमे साक्षात् प्रेष्या इति दैवाः, चकारेण गन्धर्वा इत्यनुवर्तते, देवगन्धर्वाः । **'स्वमुखेनैव देवैर्य आज्ञाप्याः सर्वदा गणाः । आख्याता देवगन्धर्वा ये त्वन्यमुखगोचराः । मानुषास्ते तु गन्धर्वास्तेभ्यस्ते**

---

१. **'–सु नित्यशः'**

२. **'देवाश्च'** इति पाठः प्रामादिकः ।

**'रुद्रः सरस्वती वायुर्म्मुक्ताः शतगुणोत्तराः ।**
**'एको ब्रह्मा च वायुश्च वीन्द्रो रुद्रसमस्तथा** ॥ ७३ ॥

**'एको रुद्रस्तथा शेषो न कश्चिद् वायुना समः ।**
**'मुक्तेषु श्रीस्तथा वायोः सहस्रगुणिता गुणैः ।**
**'ततोऽनन्तगुणो विष्णुर्न्न कश्चित् तत्समः सदा'** ॥ ७४ ॥

---

च शतावराः' इति, **'कार्तवीर्यादिराजभ्यो देवभृत्याः शतावराः । आजानदेवास्ते प्रोक्तास्तेभ्यस्तु पितरश्चिराः'** इति, **'कार्तवीर्यः पृथुश्चैव दौष्यन्तिर्भरतस्तथा । शशबिन्दुश्च मान्धाता काकुत्स्थाद्यास्तथाऽपरे । शतावराश्च देवेभ्यः कर्मदेवा इति स्मृताः'** इति च बृहद्भाष्ये । **'एकानन्दस्वरूपोऽसौ मानुषो मुक्त इष्यते । तस्माच्छतगुणानन्दा गन्धर्वा मानुषात्मकाः । तेभ्यः शतगुणानन्दा देवप्रेष्यास्तु मुख्यतः । ये ते हि देवगन्धर्वा मुक्तेभ्यस्तेभ्य एव च । शताधिका हि पितरस्तेभ्य आजानदेवताः । अनाख्याता देवतास्तु जाता देवकुले च याः । आजानदेवतास्ता हि ताभ्योऽग्र्याः कर्मदेवताः । बल्याद्या अन्तरा प्राप्ता देवताः कर्मदेवताः । ताभ्यश्च तात्विका देवाः सृष्ट्यादौ देवतां गताः'** इति तैत्तिरीयभाष्ये । पितॄणां पुत्रपौत्रगणोऽनन्तः पठ्यते–**'तेषां पुत्रपौत्रमनन्तकम्'** इति । तेषु केचनैव चिरलोकवासिनः पितर उच्यन्ते चिराः पितर इति सप्तानां पितृप्रधानानां सन्ततिभूताः । विशिष्य श्रुतिष्वनाख्याता देवभृत्या आजानजाः । देवास्तत्वदेवा अग्न्याद्याः । पुरन्दरनामा इन्द्रः । तथाहि श्रूयते–**'भूपा मानुषगन्धर्वा दैवाः पितर एव च । आजानेयाः कर्मदेवास्तत्वरूपाः पुरन्दरः । शिवो विरिञ्च इत्येते क्रमाच्छतगुणोत्तराः'** [गी.ता.२.१७] इति । यज्ञनामा नारायणोऽपीन्द्रः स्वायम्भुवमन्वन्तरे । रोचननामा वायुरपीन्द्रः स्वारोचिषमन्वन्तरे । न ताविन्द्रावष्टमकक्ष्यागतौ । नापि धर्माद्याः भूतेन्द्राः । नापि बल्याद्या भावीन्द्राः । अतः 'इन्द्रः पुरन्दरनामा' इत्याह । यो मन्द्रद्युम्नो भूत्वाऽस्मिन् मन्वन्तरे पुरन्दरो बभूव ॥ ७२ ॥ सरस्वती या भारती बभूव । वायुर्यो ब्रह्मा भविष्यति । स्त्रीजीवगणेषु सर्वाधिकेति सरस्वत्या मुखतो ग्रहणम् । एतेन पूर्वत्रापि इन्द्रादिभिः सह तत्पत्न्योऽप्युपसङ्ग्राह्या इति सूचयति ॥ ७३ ॥ एको रुद्रस्तथा शेषः । **'वारुणी त्वं फणीन्द्रोऽहम्'** [माहे.खं.२१.१३] इति स्कान्दे पार्वतीं प्रति शिववचनं विभूतिपरमपि प्रासङ्गिकतया तथ्यं कटाक्षयति । सहस्रगुणिता । **'शतं दश सहस्रं च'** इति पूर्वोक्तन्यायेन कोटिगुणिता । **'हनूमान् भीम आनन्द इत्यादिबहुरूपिणः । हिरण्यगर्भा येऽतीता ये भाव्या यश्च वर्तते । एतेभ्यः श्रीस्तु मुक्तेभ्यो गुणैः कोटिगुणोत्तरा'** इति हि बृहद्भाष्योदाहृता पैङ्गिश्रुतिः ॥ ७४ ॥ तथाचायं तारतम्यारोहसरणिसङ्ग्रहः– १. मनुष्योत्तमाः । २. ततः शतगुणाधिकाः क्षितिपाः, ये त्रेतादिभवा मानुषचक्रवर्तिनः । ३. ततः शतगुणाधिका मानुषगन्धर्वाः । ४. ततः शतगुणा [वक्ष्यमाणं शतमष्टोत्तरं विहायावशिष्टा] देवगन्धर्वा अप्सरसश्च । ५. ततः शतगुणाश्चिरपितरः । ६. ततः शतगुणा आजानजा देवाः– देवकुले जाताः, नवकोटिदेवेष्वत्रानाख्याताः शास्त्रेषु विशिष्यानाख्यातनामानश्च देवभृत्याः । गन्धर्वाणामप्सरसां च शतम् । शतोनशतकोटयश्च ऋषयः [९९,९९,९९,९००] । ७. तेभ्यः किञ्चिदधिको वरुणपुत्रः कर्ममानी

पुष्करः । ८. ततः किञ्चिदधिकः पृथिवीमानी सूर्यपुत्रः शनैश्चरः ९. ततः किञ्चिदधिकः कुजः । १०. तस्मादीषदधिका अश्विभार्या नाममानिन्युषाः । ११. तस्याः पञ्चगुणाधिको जलमानी बुधः । १२. तस्माद् द्विगुणाधिका वाङ्मानिनी वैश्वानरभार्या स्वाहा । १३. तस्या द्विगुणाधिकाः षड् देवताः– द्वादशादित्येष्ववरः पर्जन्यः, अनिरुद्धभार्या विराडाख्योषा, चन्द्रभार्या रोहिणी, सूर्यभार्या सञ्ज्ञा, यमभार्या श्यामला, वरुणभार्या गङ्गा च । १४. ततो द्विगुणाधिकाः, आजानजेभ्यो देवेभ्यः शतगुणाधिकाः, कर्मदेवाः पृथुकार्तवीर्यनहुषाद्याश्चक्रवर्तिनः, भूतवायुमानी मरीचिः, प्रधानाग्निपुत्रो भूताग्निमानी पावकः, पादमानिनाविन्द्र-पुत्रौ यज्ञनामा जयन्तः शम्भुश्च, दैत्यगुरुः शुक्रः, तत्सोदरश्च्यवनः, बृहस्पतिसोदर उचथ्यः, सनकादयस्त्रयः सनकः सनन्दनः सनातन इति, सप्तोर्ध्वरेतस ऋषयः, अशीतिः काश्यपाद्या गृहस्थाः, सप्त पितृपतयः, भावि-मन्वन्तराणामिन्द्राः सप्त, एकादश मनवः, अष्टौ गन्धर्वाः, अष्टावप्सरसः, अष्टौ भगवतो द्वारपाला जयाद्या इत्यादयः । १५. कर्मजदेवेभ्य ईषदधिकाः– वायुपुत्रो विष्वक्सेनः, आकाशाभिमानी विनायकः, नासामानिनौ सूर्यपुत्रावश्विनौ, धनपतिः कुबेरः, वसुप्रधानमग्निं विहायान्ये सप्तवसवः, अर्यमा पूषा त्वष्टा सविता भगो धाता चेति षडादित्याः, दश विश्वे देवाः, प्रधानरुद्रं विहायान्ये दश रुद्राः । ४७ मरुतः [तत्रापि प्राणापानव्यानोदानसमाना इतरेभ्य उत्तमाः । तेभ्योऽवराः इतरेभ्य उत्तमा आवहोद्वहपरावहविवहसंवहाः ], त्रिषु पितृपतिष्वेकः कव्यवाहनः, ऋभुर्विभ्वा वाज इति ऋभवस्त्रयः, द्यावापृथिव्यौ च तन्मानिन्यौ । १६. तेभ्य ईषदधिकाश्चतस्रो देवताः– द्वादशादित्येष्वेको मित्रः, कोणपो निरृतिः, बृहस्पतिभार्या तारा, प्रवहवायुपत्नी प्रावही च[१] [कुमुद्वतीत्यस्या नामेति वदन्ति] । १७. ततः किञ्चिदधिका नव– मरीच्यादयः सप्तर्षयः, विश्वामित्रो वैवस्वतमनुश्च । १८. तेभ्य ईषदधिकाः, तिस्रो देवताः– वाङ्मानी प्रधानाग्निर्वैश्वानरः, वरुणपुत्रो भृगुः, स्वायम्भुवमनुतनया दक्षपत्नी प्रसूतिश्च । १९. तत ईषदधिकः नारदः । २०. तत ईषदधिको रसमानी, आदित्येष्वेको वरुणः । २१. तस्मादीषदधिकाश्चतस्रो देवताः–चन्द्रः, सूर्यः, तत्पुत्रो यमः, स्वायम्भुवमनुभार्या शतरूपा च । [अयं सूर्यो द्वादशादित्येष्वेको विवस्वन्नामा । यमसोमौ द्वौ पितृपती ।] २२. ततो द्विगुणाधिकः स्पर्शमानी नासिक्यवायुः प्रवहः । २३. ततः पञ्चगुणाधिकाः षट्–पुरन्दरपत्नी शची, कामपत्नी रतिः, कामपुत्रोऽनिरुद्धः, बृहस्पतिः, स्वायम्भुवमनुः, दक्षप्रजापतिश्च । २४. ततो दश गुणाधिक आहङ्कारिकः प्राणः सूर्यादिभ्यः शतगुणाधिकः । २५. तस्माद् दशगुणाधिकौ, अनिरुद्धात् स्वपत्नीभ्यां च शतगुणाविन्द्रकामौ । [अयमिन्द्रश्च पुरन्दरनामा द्वादशादित्येष्वेकः ।] २६. ततो दशगुणा-धिकाः सुपर्णीवारुणीपार्वत्यः । पार्वत्येव च वारुणी । २७. ताभ्यो द्विगुणाधिकाः षड् जाम्बवत्याद्याः कृष्णभार्याः । प्रद्युम्नतो विंशतिगुणाधिकाः । तत्र जाम्बवती किञ्चिदुत्तमा । रमाया विशेषावेशदशायां शेषसमा । २८. ताभ्यः पञ्चगुणा-धिका गरुडशेषरुद्राः । रुद्र एव च शेषो भविष्यति । त एते पार्वत्यादिभ्यः स्वपत्नीभ्यो दशगुणाधिकाः । २९. ततः शतगुणाधिके सरस्वतीभारत्यौ । भारत्येव सरस्वती भविष्यतीति क्वचिदपृथगुक्तिः । ३०. ताभ्यां शतगुणाधिकौ ब्रह्म-वायू । वायुरेव ब्रह्मा भविष्यन्निति तयोरपि क्वचिदेकयोक्त्या निर्वाहः । ३१. ताभ्यां कोटिगुणाधिका लक्ष्मीः । ३२. ततोऽनन्तगुणो नारायण इति । [नारायण एव द्वादशादित्येष्वजघन्यो जघन्यजो वामनात्मा ।] अथच शतोत्तरा

१. ननु सुपर्णस्य स्त्री सुपर्णी, न सौपर्णी । एवं प्रवहस्य स्त्री प्रवही स्यात्, कथं प्रावही? प्रत्नप्रयोगशरणा वयम् । न व्याकरणशरणाः । सुपर्णस्य स्त्रियं सुपर्णीमेवाऽचक्षते प्रतना आचार्याः, न सौपर्णीम् । प्रवहस्य स्त्रियं प्रावहीमेवाऽचक्षते, न प्रवहीम् ।

**इत्यादि वेदवाक्यं विष्णोरुत्कर्षमेव वक्त्युच्चैः ।**
**तात्पर्य्यं महदत्रेत्युक्तं यो मामिति स्वयं तेन ॥ ७५ ॥**

**भूम्नो ज्यायस्त्वमिति ह्युक्तं[1] सूत्रेषु निर्ण्णयात् तेन ।**
**तत्प्रीत्यैव च मोक्षः प्राप्यस्तेनैव नान्येन ॥ ७६ ॥**

**'नायमात्मा प्रवचनेन लभ्यो न मेधया न बहुना श्रुतेन ।**
**'यमेवैष वृणुते तेन लभ्यस्तस्यैष आत्मा विवृणुते तनुं[2] स्वाम्' ॥ ७७ ॥**

**'विष्णुर्हि दाता मोक्षस्य वायुश्च तदनुज्ञया ।**
**'मोक्षो ज्ञानं च क्रमशो मुक्तिगो भोग एव च ॥ ७८ ॥**

---

एवात्र प्रायः प्रमाणश्लोके पठिताः । मनुष्योत्तमानारभ्य १. क्षितिपाः, २. मनुष्यगन्धर्वाः, ३. दैवाश्च गन्धर्वाः, ४. पितरश्चिराः, ५. आजानजा देवाः, ६. कर्मजा देवाः, ७. ततो देवा इत्यग्न्याद्याः सूर्यान्ता देवा उच्यन्ते । एतेषु तु शतोत्तरगुणना नास्ति । अत एव समष्टिव्यपदेशः । ८. दक्षादिभ्यः शतगुण इन्द्रः पुरन्दरनामा । ततः शतगुणो रुद्रः । ततः शतगुणा सरस्वती । ततः शतगुणो वायुरिति ॥ ※ ॥ उच्चैः प्रकटम् । समाधिभाषयेत्येतत् । **'यो मामेवमसम्मूढो जानाति पुरुषोत्तमम् । स सर्वविद् भजति मां सर्वभावेन भारत'** [१५.१९] इति स्वयं तेन गीतायामुक्तम् । भगवतः सर्वोत्तमत्वं जानत एव सर्वशास्त्रवित्त्वं किल तत्र प्रतिज्ञातम् । कुतः? भगवतः सर्वोत्तमत्वस्यैव सर्वशास्त्रार्थत्वात् । यदि तन्नाभविष्यत् नैवं तर्हि भगवान् प्रत्यज्ञास्यत् ॥ ७५ ॥ **'भूम्नः क्रतुवज्ज्यायस्त्वम्–'** [३.३.५९] इति ब्रह्मसूत्र-वचनम् । सर्वगुणेषु भूम्नः पूर्णत्वस्य ज्यायस्त्वम् । **'तमृत एकगुणस्याप्यनुपासनीयत्वात् । यथा सवनत्रयात्मकः क्रतुरहीनादिषु प्रत्यहं सम्बध्यमानो विशिष्टो भवति । तमन्तरेणैकस्याप्यननुष्ठेयत्वेन, एवमिहापि । अतः पूर्णज्ञानः पूर्णानन्द इत्येवोपासनं कार्यम्'** इति तत्वदीपिकायाम् । अहोभिः साध्यमहीनम् । निर्णयादुक्तम्, निर्णीयोक्तम् । तेन येन गीतायामुक्तं तेनैव कृष्णात्मना बादरायणेन । तस्मिन् प्रीत्या भक्त्यैव । चकारः प्राधान्यवचनः । सर्वाधिकया । तेनैव च प्रीतेन । नान्येन पुरुषेण, नान्येन साधनेन च ॥ ७६ ॥ **'नायमात्मा–'** इति काठके [१.२.२३] चाऽथर्वणे [३.२.३] च । मन्त्रेऽस्मिन् त्रयः पादास्त्रैष्टुभाः । चरमस्तु जागतः । भक्त्यसमानाधिकरणैः प्रवचनादिभिरलभ्य इत्यर्थः । शिष्यान् प्रति शास्त्रप्रवचनेन । मननरूपेण स्वप्रवचनेन वा । मेधया श्रुतमविस्मरन्त्या प्रतिभया । वृणुते स्वीकरोति भक्तोऽय-मिति । विवृणुते प्रकाशयति ॥ ७७ ॥ अथ पुनर्भविष्यत्पर्वसमाख्यामाह– विष्णुर्हि । वायुश्च मोक्षस्य दाता । अथापि

---

१. **'–स्त्वमित्युक्तम्'** । छन्दोभङ्गादयं पाठः प्रामादिकः । २. **'तनूम्'** इति पाठः श्रुतिपाठविसङ्गतः ।

'उत्तरेषां प्रसादेन नीचानां नान्यथा भवेत् ।
'सर्वेषां च हरिर्नित्यनियन्ता[१] तद्वशाः परे ॥ ७९ ॥

'तारतम्यं ततो ज्ञेयं सर्वोच्चत्वं हरेस्तथा ।
'एतद् विना न कस्यापि विमुक्तिः स्यात् कथञ्चन ॥ ८० ॥

'पञ्चभेदांश्च विज्ञाय विष्णोः स्वाभेदमेव च ।
'निर्दोषत्वं गुणोद्रेकं ज्ञात्वा मुक्तिर्न्नचान्यथा ॥ ८१ ॥

'अवतारान् हरेर्ज्ञात्वा नावतारा हरेश्च ये ।
'तदावेशांस्तथा सम्यग् ज्ञात्वा मुक्तिर्न्नचान्यथा ॥ ८२ ॥

'सृष्टिरक्षाहृतिज्ञाननियत्यज्ञानबन्धनान् ।
'मोक्षं च विष्णुतस्त्वेव ज्ञात्वा मुक्तिर्न्नचान्यथा ॥ ८३ ॥

'वेदांश्च पञ्चरात्राणि सेतिहासपुराणकान् ।
'ज्ञात्वा विष्णुपरानेव मुच्यते नान्यथा क्वचित् ॥ ८४ ॥

---

न स्वातन्त्र्येण । किन्तु विष्णोरनुज्ञया । आज्ञया च । मुक्तिगो भोगश्च क्रमशः तारतम्यक्रमेणैव भवेत् । अपि चोत्तमानां प्रसादेन नीचानां भवेत् । नियमोऽयं क्वचिदपि नान्यथा भवेत् ॥ ७८–७९ ॥ एतद् हरेः सर्वोच्चत्वज्ञानं विना । विशिष्टाऽऽनन्दमयी मुक्तिर्विमुक्तिः । नित्यदुःखरूपा मुक्तिरेतद् विनैव भवतीति विमुक्तिरित्याह ॥ ८० ॥ स्वाभेदं स्वरूपगुणक्रियादिभिरभेदम् । भेदाभेदमेवकारेण निराह ॥ ८१ ॥ ज्ञात्वा मुक्तिरित्ययोगव्यवच्छेदः । नचान्यथेत्यन्ययोग-व्यवच्छेदः । नावतारा हरेश्च ये, अथापि पुराणेषु क्वचिदवतारत्वेन कथिता नरबलरामाद्याः । तान् तदावेशान्, तस्य विष्णोरावेशो येषु तान् ज्ञात्वा । मत्वर्थीयेनाचा वा आवेशा इत्यावेशवन्त उच्यन्ते । तथाच तदावेशान् तेनाऽविष्टान् ॥ ८२ ॥ बध्नातीति बन्धनः संसारः । विष्णुतस्त्वेव, सर्वोत्तमाद् विष्णुत एव । ज्ञात्वा मुक्तिर्नचान्यथा । एतदेव हि माहात्म्यज्ञानं नाम ॥ ८३ ॥ इतिहास इति भारतं मूलरामायणं च । सेतिहासपुराणकान् वेदान् पञ्चरात्राणि च । ज्ञात्वा विष्णुपरानेव । यतस्तत एव माहात्म्यज्ञानं जायते ॥ ८४ ॥

---

१. '–र्नित्यं नियन्ता'

**'माहात्म्यज्ञानपूर्वस्तु सुदृढः सर्वतोऽधिकः ।**
**'स्नेहो भक्तिरिति प्रोक्तस्तया मुक्तिर्न्नचान्यथा ॥ ८५ ॥**

**'त्रिविधा जीवसङ्घास्तु देवमानुषदानवाः ।**
**'तत्र देवा मुक्तियोग्या मानुषेषूत्तमास्तथा ॥ ८६ ॥**

**'मद्ध्यमा मानुषा ये तु सृतियोग्याः सदैव हि ।**
**'अधमा निरयायैव दानवास्तु तमोलयाः ॥ ८७ ॥**

**'मुक्तिर्न्नित्या तमश्चैव नाऽवृत्तिः पुनरेतयोः ।**
**'देवानां निरयो नास्ति तमश्चापि कथञ्चन ॥ ८८ ॥**

**'नासुराणां तथा मुक्तिः कदाचित् केनचित् क्वचित् ।**
**'मानुषाणां मद्ध्यमानां नैवैतद् द्वयमाप्यते ॥ ८९ ॥**

---

सुदृढः भावतः कालतश्च । नत्वितरसाधारणः कादाचित्कश्च । सर्वतः प्रियादधिकत्वेन स्नेहः ॥ ८५ ॥ देवाः सात्त्विका एवेति सर्वेऽपि मुक्तियोग्याः । राजसेषु मानुषेषूत्तमाः सात्त्विकास्तथा मुक्तियोग्याः । मध्यमा राजसराजसाः सदैव सृति-योग्याः त्रिदिवनिरयभूगोचरा नित्यबद्धाः । नैषां मुक्तिस्तमो वा । मानुषेष्वधमा राजसतामसा नित्यनिरयायैव । निरयायैवेत्येवकारेणैव तस्य नित्यत्वमवगम्यते । संसारदशायामपि प्रायोऽनित्यनिरयायैव । न ते स्वतः स्वर्गभाजो भवन्ति । अयमत्र सम्भावितः क्रमः—यस्मिन् कल्पे येषां मनुष्यजीवानां मुक्तिस्तमो वा तस्मिन्नेव कल्पे तेषां सृष्टिः । नित्यसंसारिणां तु न साधनसम्पूर्तिप्रसङ्ग इति सदाऽपि तेषां सृष्टिः । तेषां स्वरूपस्यैव सुखदुःखात्मकत्वात् तदुभयात्मकस्य लिङ्गदेहस्य स्वरूपसहकारित्वाच्च । अन्यथा मुक्तेस्त्रैविध्यप्रसङ्गात् नित्यसुखरूपा मुक्तिर्नित्यदुःखरूपा तदुभयरूपा चेति । लिङ्गदेहस्य भङ्गो हि मोक्षो नाम । आह हि पण्डिताचार्यः—**'त्रिदिवनिरयभूगोचरान् नित्यबद्धान्'** इति । स्मरन्ति च—**'नित्यसंसारिणः सर्वे सृष्टौसृष्टौ भवन्ति च । न तेषां संसृतेर्नाशः क्वचित् क्वापि भविष्यति'** इति । अत्र बहवो मतभेदा भवन्ति । महान्तः प्रमाणम् । दानवा इति तामसोपलक्षणम् । भगवद्गुणखण्डनशीलाः । दो अवखण्डने । तमसि लीयन्त इति तमोलयाः । तमोनिलया वा । निरय इति तामिस्रमुच्यते । तम इत्यन्धतामिस्रमिति पूर्वाचार्याः ॥ ८६–८ ॥ मानुषाणां मध्यमानाम् । तृतीयार्थे षष्ठी । **'पञ्चसु तृतीया'** इति प्रतनं सूत्रम् । मध्यमैर्मानुषैः । मानुषाणां मध्ये ये मध्यमास्तैरिति वा ॥ ८९ ॥

**'असुराणां तमःप्राप्तिस्तदा नियमतो भवेत् ।**
**'यदा तु ज्ञानिसद्भावे नैव गृह्णन्ति तत् परम् ॥ ९० ॥**

**'तदा मुक्तिश्च[1] देवानां यदा प्रत्यक्षगो हरिः ।**
**'स्वयोग्ययोपासनया तन्वा तद्योग्यया तथा ॥ ९१ ॥**

**'सर्वैर्गुणैर्ब्रह्मणा तु समुपास्यो हरिः सदा ।**
**'आनन्दो ज्ञः सदात्मेति ह्युपास्यो मानुषैर्हरिः ॥ ९२ ॥**

**'यथाक्रमं गुणोद्रेकात् तदन्यैरा विरिञ्चतः ।**
**'ब्रह्मत्वयोग्या ऋजवो नाम देवाः पृथग् गणाः ॥ ९३ ॥**

**'तैरेवाप्यं पदं तत्तु[2] नैवान्यैः साधनैरपि ।**
**'एवं सर्वपदानां च[3] योग्याः सन्ति पृथग् गणाः ॥ ९४ ॥**

**'तस्मादनाद्यनन्तं हि तारतम्यं चिदात्मनाम् ।**
**'तच्च नैवान्यथा कर्त्तुं शक्यं केनापि कुत्रचित् ॥ ९५ ॥**

---

असुराणामिति । आसुरप्रकृतीनाम् । ग्राहयितुः ज्ञानिनः सद्भावेऽपि नैव गृह्णन्ति । प्रत्युत ज्ञानिनमेव दूषयन्तो निराकुर्वन्तीति तुनाऽऽह ॥ ९० ॥ देवानामिति दैवप्रकृतीनाम् । स्वरूपं यादृशं तदनुगुणया तन्वा । बिम्बरूपेणेत्येतत् । जीवस्यापि स्वरूपानुगुणया तन्वा । **'सर्वेषामपि जीवानामन्त्यदेहो यथा निजः । मुक्तौ च निजभावः स्यात् कर्मभोगान्ततोऽपिच'** [गी.ता.९.३२] इति स्मरन्ति हि ॥ ९१ ॥ जीवोत्तमेन ब्रह्मणैव सम्यगुपास्यः । एकैकस्यापि गुणस्याशेषविशेषैः सह । एवं समुपासित एव तस्य संसारं हरतीति हरिः । आनन्दो ज्ञ इति । सच्चिदानन्द आत्मेति चतुर्गुणोपासकैः । सच्चिदानन्दो भगवान् मम आत्मा स्वामीत्येकगुणोपासकैः । तावन्मात्रैणैव तेषां संसारं हरति ॥ ९२ ॥ गुणोद्रेकात् गुणाधिक्यमुपास्य ॥ ९३ ॥ तत्तु । जीवैराप्येषु सर्वाधिकं पदमिति तुनाऽऽह । अन्यैरनृजुभिः । कठिनैः साधनैरपि ॥ ९४ ॥ चिदात्मनां ज्ञानस्वरूपाणाम् । चेतनानामित्येतत् । तच्चेति चकारेण जीवस्वरूपभूतं तदिति विशेषणं समुच्चिनोति । केनापि पुरुषेण । केनापि साधनेन । कुत्रचिदिति वचनभङ्गी । न कथञ्चित्, न कस्मिंश्चिदपि काले देशे वा ॥ ९५ ॥

---

१. 'मुक्तिर्हि देवा–'    २. '–प्यं तत्पदं तु'    ३. 'पदानां तु योग्याः'

**‘अयोग्यमिच्छन् पुरुषः पतत्येव न संशयः ।**
**‘तस्माद् योग्यानुसारेण सेव्यो विष्णुः सदैव हि ॥ ९६ ॥**

**‘अच्छिद्रसेवनाच्चैव निष्कामत्वाच्च योग्यतः ।**
**‘द्रष्टुं शक्यो हरिः सर्वैर्नान्यथा तु कथञ्चन ॥ ९७ ॥**

**‘नियमोऽयं हरेर्यस्मान्नोल्लङ्घ्यः सर्वचेतनैः ।**
**‘सत्यसङ्कल्पतो विष्णुर्नान्यथा च[1] करिष्यति ॥ ९८ ॥**

**‘दानतीर्थतपोयज्ञपूर्वाः सर्वेऽपि सर्वदा ।**
**‘अङ्गानि हरिसेवायां भक्तिस्त्वेका विमुक्तये’ ।**
**भविष्यत्पर्ववचनमित्येतदखिलं परम् ॥ ९९ ॥**

---

योग्यानुसारेण । यस्ययस्य यद्यद् योग्यं तदनुसारेण । योग्यतानुसारेण च ॥ ९६ ॥ अच्छिद्रं निरन्तरं निर्दुष्टं च । निष्कामत्वाच्च योग्यतः । अयोग्यकामनैव दोषः । नतु योग्यकामनाऽपीत्यर्थः । उक्तं हि–‘अयोग्यमिच्छन् पुरुषः पतति’ इति । योग्यतः योग्यताया इति चार्थः । अन्यथा तु अन्यथा चेत् ॥ ९७ ॥ नान्यथा च । चकारो हेत्वर्थः । यस्मान्नान्यथा करिष्यति तस्मान्नोलङ्घ्यः । तदपि कुतः? सत्यसङ्कल्पत्वतः । सत्याद्वा सङ्कल्पात् । **‘अद्वैतं परमार्थतः’** इतिवत् सत्यसङ्कल्पो विष्णुरिति वा । यस्मान्नोलङ्घ्यः, तस्मान्नान्यथा द्रष्टुं शक्यः ॥ ९८ ॥ सर्वेऽपि पुण्यहेतवः साधनविशेषाः । अङ्गानि हरिसेवायाम् । हरिसेवया भक्तिः । भक्त्या चाधिका हरिसेवा । तया पुनः प्रवृद्धा भक्तिस्त्वेका विमुक्तये सालोक्यादि-चतुर्विधमुक्तये । भक्तिरेव एका मुख्यहेतुरित्यर्थः । **‘विष्णुर्हि दाता मोक्षस्य–’** इत्यारभ्य, **‘भक्तिस्त्वेका विमुक्तये’** इत्यन्तं द्वाविंशतिश्लोकमयमेतदखिलं परं समाधिभाषानिबद्धत्वादुत्तमं भविष्यत्पर्ववचनम् । सम्प्रति परैरन्तरितम् । विवक्षित-समग्रार्थग्राहकत्वादखिलम् । स्कान्दे चैतत् सर्वमुक्तम्–**‘उत्पत्तिस्थितिसंहारा आवृतिर्नियमस्तथा । प्रकाशो बन्धमोक्षौ च वृत्तिर्यस्माद् भवन्त्यमी । स विष्णुर्ब्रह्मसञ्ज्ञोऽसौ कवीनां सम्मतो विभुः । साक्षाद् ब्रह्मेति तं प्राहुः पश्चाद् ब्रह्मादिकानपि । ब्रह्मशब्दं सोपपदं ब्रह्मादिषु विदो विदुः । नान्येषां ब्रह्मता क्वापि तच्छक्त्येकांशभागिनाम् । तदेतच्छास्त्रगम्यं हि जन्माद्यस्य महाविभोः । शास्त्रं च वेदाः स्मृतयः पुराणं चैतदात्मकम् । इतिहासः पञ्चरात्रं भारतं च महामुने । एतैरेव महाविष्णुर्ज्ञेयो नान्यैः कथञ्चन । नावेदविदमुं विष्णुं मनुते च नरः क्वचित् । नेन्द्रियैर्नानुमानैश्च न तर्कैः परमं विभुम् । ज्ञातुं नारायणं देवं वेदवेद्यं सनातनम् । अस्यैव जन्मकर्माणि गुणान् ज्ञात्वा यथामति ।**

---

१. **‘–न्यथा तु करि–’**

**'शृण्वे वीर उग्रमुग्रं दमायन्नन्यमन्यमतिनेनीयमानः ।**
**'एधमानद्विळुभयस्य राजा चोष्कूयते विश इन्द्रो मनुष्यान्** ॥ १०० ॥

---

**मुच्यन्ते जीवसङ्घाश्च सदा तद्वशवर्तिनः । क्रमाद् विष्णोश्च माहात्म्यं यथा सातिशयं भवेत् । एकैकस्मिन् स्थिता शक्तिर्देवर्षिपितृमातृके । प्रत्यक्षेणाऽगमेनापि तथैवानुमयाऽपि च । आदौ नरोत्तमं विद्याद् बले ज्ञाने सुखे तथा । तस्माद् भूपं शतगुणं विद्याज्ज्ञानादिभिर्वृतम् । भूपान्मनुष्यगन्धर्वान् विद्याच्छतगुणाधिकान् । तत्वाभिमानिनो देवांस्तेभ्यो विद्याच्छताधिकान् । तत्वाभिमानिदेवेभ्यः सप्तैव ऋषयो वराः । सप्तर्षिभ्यो वरो ह्यग्निरग्नेः सूर्यादयस्तथा । सूर्याद् गुरुर्गुरोः प्राणः प्राणादिन्द्रो महाबलः । इन्द्राच्च गिरिजा देवी देव्याः शम्भुर्जगद्गुरुः । शम्भोर्बुद्धिर्महादेवी बुद्धेः प्राणो बलाधिकः । न प्राणात् परमं किञ्चित् प्राणे सर्वं प्रतिष्ठितम् । प्राणाज्जातमिदं विश्वं प्राणात्मकमिदं जगत् । प्राणे प्रोतमिदं सर्वं प्राणादेव हि चेष्टते । सर्वाधारमिमं प्राहुः सूत्रं नीलाम्बुदप्रभम् । लक्ष्मीकटाक्षमात्रेण प्राणस्यास्य स्थितिर्भवेत् । सा लक्ष्मीर्देवदेवस्य कृपालेशैकभाजनी । न विष्णोः परमं किञ्चिन्न समं वा कथञ्चन'** [वै.खं; वैशा.मा.१९.८–२५] इत्यादि । **'त्रिविधा जीवसङ्घा हि रजःसत्वतमोगुणाः'** [२०.३] इति, **'प्रकृतिस्था इमे जीवा बद्धा एतैर्गुणैस्त्रिभिः'** [६] इति, **'गतिं प्राकृतिकीं यान्ति व्यत्ययः प्रकृतेर्नहि । तामसा दुःखबहुलाः सदा तामसवृत्तयः । निर्दया निष्ठुरा लोके सदा द्वेषैकजीविनः । राक्षसाद्याः पिशाचान्तास्तामसीं यान्ति वै गतिम् । राजसा मिश्रमतयः कर्तारः पुण्यपापयोः । पुण्यात् स्वर्गं प्राप्नुवन्ति क्वचित् पापाच्च यातनाम् । अत एते मन्दभाग्या आवर्तन्ते पुनःपुनः । धर्मशीला दयावन्तः श्रद्धावन्तोऽनसूयकाः । सात्त्विकाः सात्त्विकीं वृत्तिमनुतिष्ठन्त आसते । तेनोर्ध्वं यान्ति विमला गुणापाये महौजसः'** [२०.८–१२] इति, **'–ब्रह्मणा सह मुक्तिगाः । भूपाश्च साधवो ये च सिद्धिं प्राप्ताः परं गताः । तेनैव चाभिवर्तन्ते सत्यलोकव्यवस्थिताः । तद्राशिगाः पुनर्यान्ति तन्नाम्ना श्रुतिसंस्थिताः । तत्तद्गोत्रेषु जायन्ते तत्तत्कर्मरताः सदा । दैत्यानामपि सर्वेषां यदा कलियुगात्ययः । कलिना सह गच्छन्ति स्वां गतिं निरयालयाः । तेषां च राशिसंस्था ये तन्नामानोऽपरेऽपि च । जायन्ते कर्मणा स्वेन तत्तत्कर्मविधायकाः'** [३४–३८] इत्यादि च ॥ ९९ ॥ **'शृण्वे वीरः–'**[६.४७.१६] इति, **'परा पूर्वेषाम्–'**[६.४७.१७] इति चर्ग्वेदे । गर्गदृष्टौ मन्त्राविन्द्रदेवत्यौ त्रैष्टुभौ । द्वितीयमन्त्रे प्रथमपादे **'सखिया'** इति, तृतीयपादे **'–धूनुवानः'** इति विश्लेषेणाक्षरपूर्तिः । नृसिंहरूप इन्द्रः परमेश्वरो वीरः श्रूयते, **'उग्रं वीरम्'** इत्यादिषु । युक्तमेतत् । यतः स उग्रमुग्रं दुष्टजनं तमसि पातयित्वाऽतिशयेन दमयन् श्रूयते । **'संहितायां यत्र दैर्घ्यं पदे यत्र न दृश्यते । उक्तार्थस्य महाधिक्यम्'** इति हि स्मरन्ति । वीप्सायां द्विर्वचनम् । अन्यमन्यं अनुग्रं सात्त्विकजनमतिशयेन ऊर्ध्वलोकं पौनःपुनिकतया नयन् । एधमानद्विडुभयस्य । बाह्वृच्ये डस्य ळः । **'अज्मध्यस्थडकारस्य ळकारं बह्वृचा विदुः'** इति । एतेन **'एधमानद्विळुभयस्य–'** इति संहितापाठः । योग्यतामतिक्रम्य एधमानं द्वेष्टि च । उभयस्य देवासुरवर्गस्य राजा नियामकः । किमुत मानुषाणाम्? उभयस्येति सर्वग्रहणं वा । **'द्वया हि प्राजापत्या देवा असुराश्च'** इति हि श्रूयते । स्मर्यते च–**'द्वौ भूतसर्गौ लोकेऽस्मिन् दैव आसुर एव च'** इति । अतः सदा विशन्ति संसारमिति विशो मनुष्यरूपाः प्रजाः राजाऽयं चोष्कूयते संसार एव परिवर्तयतीति ।

'परा पूर्वेषां सख्या वृणक्ति वितर्तुराणो अपरेभिरेति ।
'अनानुभूतीरवधून्वानः पूर्वीरिन्द्रः शरदस्तर्त्तरीति' ॥ १०१ ॥

'तमेवं विद्वानमृत इह भवति नान्यः पन्था अयनाय विद्यते' ।
'तमेव[1] विदित्वाऽति मृत्युमेति नान्यः पन्था विद्यतेऽयनाय'[1] ॥ १०२ ॥

'यस्य देवे परा भक्तिर्य्यथा देवे तथा गुरौ ।
'तस्यैते[ऽ]कथिता ह्यर्थाः प्रकाशन्ते महात्मनः' ॥ १०३ ॥

'भक्त्यर्थान्यखिलान्येव भक्तिर्म्मोक्षाय केवला ।
'मुक्तानामपि भक्तिर्हि नित्यानन्दस्वरूपिणी ॥ १०४ ॥

---

**'स्कुञ् आप्रवणे'** इति पाणिनीयाः । **'स्कुञ् आप्लवने'** इति कातन्त्राः । **'स्कूञ् आच्छादने'** इति काशकृत्स्नः । मैत्रेय एतं धातुमेव न पठति । **'सौत्रोऽयम्'** इति क्षीरस्वामी । तस्य यङि रूपम्–चोस्कूयते । छान्दसे षत्वे चोष्कूयते । वस्तुतस्तु मूर्धन्यादिरेव कश्चिदन्यो धातुरासीदिति भाति–**'ष्कुञ् प्रेङ्खणे'** इति । **'देवासुराणामीश्वरोऽध्यवसायान्तगामी स्वयोग्यताधिकवृद्धिह्रासमसहमानोऽसुरानन्धे तमसि क्षिपन्, देवानुच्चं स्वपदं नयन्, मनुष्यान् स्वर्गे भूमौ नरके च प्रेङ्खोलयतीत्येवं श्रूयते'** [३.४.३८] इति तत्वदीपिकाचार्यः । प्रेङ्खोलनमिति निरन्तरमुपर्यधश्च क्षेपणम् । दोलनमिति यावत् । **'प्रेङ्खोल चापले'** इति कविकल्पद्रुमः ॥ १०० ॥ पूर्वेषां प्रथमोक्तानामुग्राणामसुराणां सख्यानि परावृणक्ति परिवर्जयति । अपरेभिर्देवैस्तु त्वरमाणः सख्यमेति । भगवदनुभूतिरहिताः प्रजाः संसार एव धुनोति । एवं पूर्वीः शरदस्तीर्णवान् । अद्यत्वे च तरति । भाविनीश्च तरिष्यति । अनादिरनन्तोऽयं नियमो भगवत इति ॥१०१॥ **'तमेवं विद्वान्–'** इति पुरुषसूक्ते तैत्तिरीयारण्यके [३.१२.७] त्रैष्टुभो मन्त्रः । **'तमेवम्–'** इत्ययं पादस्तु द्व्यक्षराधिक इति स्वराट् त्रिष्टुप् । **'तमेव विदित्वा–'** इति वाजसनेयसंहितायां [३१.१८] श्वेताश्वतरोपनिषदि [३.८] च । **'विदित्वा+अति–'** इति विश्लेषे जागतः पादः । अविश्लेषे त्रैष्टुभः । उत्तरः पादः **'विद्यते+अयनाय'** इति विश्लेषेण त्रैष्टुभः । परं प्रत्ययनं मोक्षः । अमृत इत्युपक्रमात् । **'मृत्युमत्येति'** इति समाख्यातश्च । मृत्युं संसारमतीत्य भगवन्तमेतीति वा । अतिमृत्युं मृत्युमतिक्रम्य स्थितं मोक्षमिति वा ॥ १०२ ॥ **'यस्य देवे–'** इति च श्वेताश्वतरे [६.२३] । सर्वपरमे देवे परा भक्तिः । गुरौ च तत्तद्योग्या । तस्यैते वेदगता अर्थाः गुरुणा कथिता अकथिता अपि प्रकाशन्ते । अन्येषां कथिता अपि न प्रकाशन्ते । वेदेषु कथिता अपि । गुरुभिः कथिता अपि ॥ १०३ ॥ भक्तिर्मोक्षाय । न तर्हि मोक्षे भक्तिरित्यत आह– मुक्तानामपि ॥ १०४ ॥

---

१. **'तमेवं विदित्वा'** इति, **'विद्यते अयनाय'** इति च पाठः श्रुतिपाठविसङ्गतः ।

**'ज्ञानपूर्वः परः स्नेहो नित्यो भक्तिरितीर्य्यते' ।**
**इत्यादि वेदवचनं साधनप्रविधायकम्** ॥ १०५ ॥

**'निश्शेषधर्म्मकर्त्ताऽप्यभक्तस्ते नरके हरे ।**
**'सदा तिष्ठति भक्तश्चेद् ब्रह्महाऽपि विमुच्यते'** ॥ १०६ ॥

**'धर्म्मो भवत्यधर्म्मोऽपि कृतो भक्तैस्तवाच्युत ।**
**'पापं भवति धर्म्मोऽपि यो न भक्तैः कृतो हरे'** ॥ १०७ ॥

**'भक्त्या त्वनन्यया शक्य अहमेवंविधोऽर्ज्जुन ।**
**'ज्ञातुं द्रष्टुं च तत्वेन प्रवेष्टुं च परन्तप'** ॥ १०८ ॥

**'अनादिद्वेषिणो दैत्या विष्णौ द्वेषो विवर्द्धितः ।**
**'तमस्यन्धे पातयति दैत्यानन्ते विनिश्चयात्** ॥ १०९ ॥

**'पूर्णदुःखात्मको द्वेषः सोऽनन्तो ह्यवतिष्ठते ।**
**'पतितानां तमस्यन्धे निःशेषसुखवर्ज्जिते** ॥ ११० ॥

---

नित्यः ननु तात्कालिकः । अभक्तेष्वपि तात्कालिकभक्त्याभाससम्भवात् ॥ १०५ ॥ उद्धृतानि वेदवचनानि । अथास्मिन्नर्थे पुराणवचनान्युद्धरति– निःशेषधर्मकर्ताऽप्यभक्तस्ते । तस्यतस्य तत्तद् योग्यं स्थानं हरति नयतीति हि हरिः । अभक्तस्य प्रबलेन पापकर्मणा धर्मस्योपहतिः । भक्तस्य पुण्यकर्मणा पापस्य । दुर्बलं हि बलिष्ठेन हन्यते ॥ १०६ ॥ तदेव प्रमाणान्तरेण समाख्यापयति– धर्मो भवत्यधर्मोऽपि । यो भक्तैर्न कृतः । किन्तु नभक्तैरभक्तैः कृतः । यथा भीमार्जुनकृतं युद्धे शत्रुहननं धर्मोऽभवत् । दुर्योधनकृतमधर्मः । भगवत्प्रवणत्वाप्रवणत्वे एव हि धर्मत्वाधर्मत्वनिर्णायके । भक्तानधर्मकृतोऽपि धर्मान्न च्यावयतीत्यच्युतः । अभक्तानां धर्ममपहृत्य पापमुपहरतीति हरिः ॥ १०७ ॥ **'भक्त्या त्वनन्यया शक्यः अहम्–'** [भ.गी.११.५४] इत्यत्र भक्तेर्माहात्म्यज्ञानपूर्वकत्वात्, माहात्म्यज्ञानस्य च विभेदज्ञानपूर्वकत्वात्, विभेदज्ञानिन एव शक्यं भक्तिः कर्तुमिति द्योतयितुम् **'शक्यः अहम्'** इति विभिद्य पठनम् । अनन्यया अनन्यविषयया, अव्यभिचारिण्या । तत्वेन याथातथ्येन ज्ञातुं द्रष्टुं च । परान् शत्रून् तपन्नपि परन्तपः । परं परमात्मानं तपसाऽऽराधयन्नपि परन्तपः ॥ १०८ ॥ अन्ते द्वेषसाधनान्ते । प्रारब्धभोगान्ते च । विनिश्चयादिति । दुःखं सुखनान्तरीयकमित्यादिभिः कुतर्कैस्तत्र संशीति-लेशोऽपि न कर्तव्य इत्यर्थः । शास्त्रदर्शनेन निश्चयो भवति । अपरोक्षदर्शनेन विनिश्चयः ॥ १०९–१० ॥

**‘जीवाभेदो निर्गुणत्वमपूर्णगुणता तथा ।**
**‘साम्याधिक्ये तदन्येषां भेदस्तद्गत एव च ॥ १११ ॥**

**‘प्रादुर्भावविपर्य्यासस्तद्भक्तद्वेष एव च ।**
**‘तत्प्रमाणस्य निन्दा च द्वेषा एतेऽखिला मताः ॥ ११२ ॥**

**‘एतैर्विहीना या भक्तिः सा भक्तिरिति निश्चिता ।**
**‘अनादिभक्तिर्देवानां क्रमाद् वृद्धिं गतैव सा ॥ ११३ ॥**

**‘अपरोक्षदृशेर्हेतुर्म्मुक्तिहेतुश्च सा पुनः ।**
**‘सैवाऽनन्दस्वरूपेण नित्या मुक्तेषु तिष्ठति ॥ ११४ ॥**

**‘यथा शौक्ल्यादिकं रूपं गोर्भवत्येव सर्वदा ।**
**‘सुखज्ञानादिकं रूपमेवं भक्तेर्न्नचान्यथा ॥ ११५ ॥**

---

यथा भक्तिर्नवविधा तथा हरिद्वेषोऽपि नवविध इत्याह– जीवाभेदः । अभेदज्ञानम्, एवमुत्तरत्रापि । हरेरन्येषां ब्रह्मादीनां हरिणा साम्यमेको द्वेषः । हरेः सकाशादाधिक्यमपरः । तद्गतो भेदः षष्ठः । तदवताराणां भेदः, तच्छरीरस्य स्वरूपतो भेदः, तदवयवानां गुणक्रियाणां च ततो भेदः । एवकारेण तदन्यगत एव भेद इत्याह । **‘मायावादमसच्छास्त्रं प्रच्छन्नं बौद्धमुच्यते । मयैव कथितं देवि कलौ ब्राह्मणरूपिणा । अपार्थं श्रुतिवाक्यानां दर्शयल्लोकगर्हितम् । कर्मस्वरूपत्याज्यत्वं यत्र वै प्रतिपाद्यते । सर्वकर्मपरिभ्रष्टः विकर्मस्थः स उच्यते । परेशजीवयोरैक्यं मयाऽत्र प्रतिपाद्यते । ब्रह्मणोऽत्र परं रूपं निर्गुणं वक्ष्यते मया । वेदार्थवन्मोहशास्त्रं मायावादमवैदिकम्’** [उ.खं.२३६.६–१०] इति पाद्मे । सर्वं मायेति वादो यत्र तन्मायावादं शास्त्रम् । ब्राह्मणरूपिणा तत्प्रतिपादकेष्वाविष्टेन मया । वेदार्थवत्, अवेदार्थः वेदार्थ इव वक्ष्यते । अतोऽवैदिकं तत् । पाद्मवचनमिदं वाल्लभैरपि प्रमाणत्वेनोद्धृतम् ॥ १११ ॥ प्रादुर्भावविपर्यासः सप्तमः । अप्रादुर्भावस्य प्रादुर्भावत्वकल्पनम्, प्रादुर्भावस्याप्रादुर्भावत्वकल्पनम्, आवेशावतारस्य अंशावतारत्वकल्पनम्, अंशावतारस्य आवेशावतारत्वकल्पनं च । तद्भक्तद्वेषोऽपि तद्द्वेष एव । तद्भक्त इति हि तं द्विषन्ति । तदिदमेवकारेणाऽह । अष्टमोऽयं दोषः । तत्पारम्यवाचिनो वेदादिप्रमाणस्य निन्दा च नवमः । मताः शास्त्रसम्मताः, विपश्चिदभिमताः ॥ ११२–३ ॥ दृशिरिति धातुनिर्देशः । **‘इक्श्तिपौ धातुनिर्देशे’** [अ.सू.३.३.१०८] इति कात्यायनः । तेन धात्वर्थो दर्शनं लक्ष्यते । निरूढलक्षणा चेयम् । यद्वा दृशेरिन् । दर्शनं दृशिः । **‘द्रष्टा दृशिमात्रः–’** [यो.सू.२.२०] इति पतञ्जलिः । **‘यत्र दृशिः श्रिता मे’** [भाग.५.२.१२] इति बादरायणः । **‘–नृचक्षसो दृशये कर्णयोनयः’** [ऋ.सं.२.२४.८] इति श्रुतिः ॥ ११४ ॥ यथा

**‘भक्त्यैव तुष्टिमभ्येति विष्णुर्नान्येन केनचित् ।**
**‘स एव मुक्तिदाता च भक्तिस्तत्रैककारणम्[1] ॥ ११६ ॥**

**‘ब्रह्मादीनां च मुक्तानां तारतम्ये तु कारणम् ।**
**‘तारतम्यस्थिताऽनादिनित्या[2] भक्तिर्नचेतरत् ॥ ११७ ॥**

**‘मानुषेष्वधमाः किञ्चिद् द्वेषयुक्ताः सदा हरौ ।**
**‘दुःखनिष्ठास्ततस्तेऽपि नित्यमेव न संशयः ॥ ११८ ॥**

**‘मद्ध्यमा मिश्रभूतत्वान्नित्यं मिश्रफलाः स्मृताः ।**
**‘किञ्चिद्भक्तियुता नित्यमुत्तमास्तेन मोक्षिणः ॥ ११९ ॥**

**‘ब्रह्मणः परमा भक्तिः सर्वेभ्यः परमस्ततः’ ।**
**इत्यादीनि च वाक्यानि पुराणेषु पृथक्पृथक् ॥ १२० ॥**

---

शौक्ल्यादिकं रूपम् । मुक्तिपर्यन्तं भक्तिरानन्दसाधनी । मुक्तौ तु भक्तिरेव ज्ञानानन्दादिरूपा भवति । स्वरूपत्वात् । नहि धर्मिणाऽभिन्नयोर्धर्मयोः परस्परं भेद इति युज्यते । यथा गोपदार्थस्य सर्वदा विद्यमानम्, यावद्वस्तुभावीत्येतत्, शौक्ल्यं कार्ष्ण्यं कापिल्यं वा खुरविषाणककुदसास्नादिमान् संस्थानविशेषो वा गोरेव स्वरूपम्, गोपिण्डाभिन्नम् । गोपिण्डाभिन्नत्वादेव परस्परस्वरूपं च । सविशेषाभिन्नमित्यर्थः । नान्यथा । न भिन्नम्, नापि निर्विशेषाभिन्नम् । न भिन्नम्, कुतः? सर्वदा विद्यमानत्वात् । यावद्वस्तुभावित्वात् । नापि निर्विशेषाभिन्नं कुतः? मुक्तस्य ज्ञानमानन्दो भक्तिरिति विशेषणविशेष्यतया प्रयोगात्, सहप्रयोगाच्च । अथ च यथा संसारे मानसं भिन्नं ज्ञानमानन्दो भक्तिश्च तथा मुक्तावपि स्वरूपाद् भिन्नमपि भक्त्यादिकं स्यादित्यन्यथा चिन्तनं न करणीयमित्यर्थः ॥ ११५ ॥ ननु तुष्टो भगवान् मुक्तिं ददाति । सत्यम् । किन्तु भक्त्यैव तुष्टिमभ्येति विष्णुः । नान्येन कारणेन । यद्यपि विष्णुरेव मुक्तिदाता । किन्तु स एव तुष्ट एव । भक्तिरेव च भगवत्तोषस्य प्रधानं कारणम् ॥ ११६ ॥ ब्रह्मादीनां च । न केवलं राजसतामसानामवरजीवानाम् । मुक्तानां च । न केवलममुक्तानाम् । **‘तारतम्ये तु’** इति तुना तस्य स्वरूपत्वमत एव नित्यत्वं चाऽह । मुक्तानां तारतम्ये च ज्ञानानन्दादितारतम्ये भगवत्प्रियत्वतारतम्ये च । भक्तिरेव कारणमिति भक्तेर्मुख्यकारणत्वमाह । वैराग्यादीन्यमुख्यकारणानि भवन्ति । नचेतरत् मुख्यकारणम् ॥ ११७ ॥ नित्यमेव किञ्चिद् द्वेषयुक्ताः । ततो नित्यमेव तमोनिष्ठाः । निष्ठा चरमस्थितिः । मानुषेषूत्तमाः किञ्चिद् भक्तियुताः ॥ ११८–११९ ॥ ब्रह्मणः परमा भक्तिः ।

---

१. **‘–स्तत्रैव कारणम्’** २ **‘–नादिर्नित्या’**

**'षण्णवत्यङ्गुलो यस्तु न्यग्रोधपरिमण्डलः ।**
**'सप्तपादश्चतुर्हस्तो द्वात्रिंशल्लक्षणैर्य्युतः** ॥ १२१ ॥

**'असंशयः संशयच्छिद् गुरुरुक्तो मनीषिभिः ।**
**'तस्माद् ब्रह्मा गुरुर्म्मुख्यः सर्वेषामेव सर्वदा** ॥ १२२ ॥

**'अन्येऽपि स्वात्मनो मुख्याः क्रमाद् गुरव ईरिताः ।**
**'क्रमाल्लक्षणहीनाश्च लक्षणालक्षणैः समाः** ॥ १२३ ॥

---

ततो ब्रह्मा सर्वेभ्यः परमः । न केवलं वेदे, पुराणेषु च । इत्यादीनि, अत्रानुक्तानि च परःशतानि वाक्यानि । प्रायः प्रति-पुराणं प्रतिविषयं पृथक्पृथक् स्फुटवचनानि पठ्यन्ते । नैकत्र, नैकधा सम्मुग्धतया वा ॥ १२० ॥ अथ पञ्चरात्र-वचनेन गुरुलक्षणमाह–षण्णवत्यङ्गुल इति । स्वाङ्गुष्ठमध्यरेखामानमङ्गुलम् । **'यवोदरैरष्टभिरङ्गुलम्'** इति सामान्य-वचनम् । सामुद्रिके स्वाङ्गुष्ठमध्यरेखैव मानम् । व्यायतयोर्भुजयोर्मानं न्यग्रोध उच्यते । तावदेवोच्चः न्यग्रोधपरि-मण्डलः । द्वात्रिंशल्लक्षणैर्युतः । कानि तानि लक्षणानि? तानीमानि लक्षणज्ञा आहुः– **'पञ्चदीर्घः पञ्चसूक्ष्मः सप्तरक्तः षडुन्नतः । त्रिपृथुलघुगम्भीरो द्वात्रिंशल्लक्षणस्त्विति'** इति । कानि पञ्च दीर्घाणि? बाहू नासा हनू अक्षिणी वक्ष-श्चेति । केचिद्धनुस्थाने कुक्षिं पठन्ति । कानि पञ्च सूक्ष्माणि? अङ्गुलिपर्वाण्यङ्गुलयस्त्वक् केशा दन्ताश्चेति । **'अङ्गुलि-पर्वाणि दन्तकेशनखत्वचः'** इत्यन्ये । कानि सप्त रक्तानि? हस्ततळमङ्घ्रितळं नेत्रान्तस्तालु जिह्वाऽधरोष्ठो नखाश्चेति । कानि षडुन्नतानि? वक्षः कुक्षिर्ललाटं स्कन्धौ हस्तौ वक्त्रं चेति । कानि त्रीणि पृथूनि? ललाटं वक्षः कटिश्चेति । कानि त्रीणि लघूनि? ग्रीवा जङ्घा मेहनं चेति । कानि त्रीणि गम्भीराणि? अन्तःकरणं नादो नाभिश्चेति ॥ १२१ ॥ तस्मात् स्वाङ्गुलिमानेन षण्णवत्यङ्गुलपरिमितदैर्घ्योपेतदेहवत्त्वादिलक्षणोपेतस्यैव मुख्यगुरुत्वात्, ब्रह्मणि सर्वेषां लक्षणानां सामग्र्याच्च । एवकारोऽप्यर्थे च । ब्रह्मैव सर्वेषामपि मुख्यो गुरुः ॥ १२२ ॥ स्वात्मनो लक्षणाधिकाः स्वात्मनो मुख्याः । तस्माद् गुरवश्च । तदपि लक्षणाधिक्यक्रमादेव । यत उत्तमेभ्योऽवरा देवास्तारतम्यक्रमाल्लक्षणहीनाश्च । तथाहि– ब्रह्मा द्वात्रिंशल्लक्षणः सरस्वती च । शिवोऽष्टाविंशतिलक्षणः । इन्द्रश्चतुर्विंशतिलक्षणः । एवं षोडशपर्यन्तलक्षणाः सुराः । तदेतदुक्तम्– लक्षणालक्षणैः समा इति । अलक्षणमिति लक्षणानामभावः । षोडशलक्षणानां भावः षोडशानामभाव इति लक्षणालक्षणैः समा अवरदेवा मानुषाणां मुख्यगुरवः । ततोऽवरा ऋषयोऽपि मानुषगुर्वपेक्षया मुख्यगुरवः । मनुष्योत्तमा मध्यमगुरवः । अन्योऽप्यत्रार्थः स्फुटं प्रतीयते– ब्रह्माणमारभ्य मनुष्योत्तमपर्यन्ताः क्रमाद् गुरवः क्रमाल्लक्षणहीनाश्च । तथाहि– आषोडषलक्षणाः सुरा इत्युक्तम् । षोडशत आऽष्टावृषीणां लक्षणानि भवन्ति । सप्ताष्टलक्षणाश्चक्रवर्तिनः । पञ्चषलक्षणा मनुष्योत्तमा इति । अत्रापि पुनरवान्तरभेदा भवन्ति । तथाहि–विष्णुरपि द्वात्रिंशल्लक्षणः । लक्ष्मीरपि । ब्रह्मवायू अपि । सरस्वतीभारत्यावपि । न तथाऽपि सर्वे समानलक्षणाः । परिमाणभेदात् । एकैकमपि पूर्णं विष्णौ । ततो न्यूनं

**‘मानुषा मद्ध्यमाः सम्यग् दुर्लक्षणयुतः कलिः ।**
**‘सम्यग्लक्षणसम्पन्नो यद् दद्यात् सुप्रसन्नधीः ॥ १२४ ॥**

**‘शिष्याय सत्यं भवति तत् सर्वं नात्र संशयः ।**
**‘अगम्यत्वाद्धरिस्तस्मिन्नाविष्टो मुक्तिदो भवेत् ॥ १२५ ॥**

**‘नातिप्रसन्नहृदयो यद् दद्याद् गुरुरप्यसौ ।**
**‘न तत् सत्यं भवेत् तस्मादर्च्चनीयो गुरुः सदा ॥ १२६ ॥**

**‘स्वावराणां गुरुत्वं तु भवेत् कारणतः क्वचित् ।**
**‘मर्य्यादार्त्थं तेऽपि पूज्या नतु यद्वत् परो गुरुः’ ।**
**इत्येतत् पञ्चरात्रोक्तं पुराणेष्वनुमोदितम् ॥ १२७ ॥**

---

रमायाम् । ततोऽपि न्यूनं ब्रह्मवाय्वोः । ततोऽपि सरस्वतीभारत्योरित्यादि । अत एव **‘आऽष्टकादृषयः–’** इति, **‘विंशल्लक्षण-तोऽनूनः’** इति चाविरुद्धं भवति । ऋषीणां यत्परिमाणं लक्षणं पूर्णमुच्यते तावन्ति आऽष्टकात् षोडशपर्यन्तान्येव । वेद-दर्शिनां पुनरन्यान्यपि किञ्चिदिव पञ्चषाणि लक्षणानि भवन्ति । अतस्ते विंशतिलक्षणतोऽनूना उच्यन्ते । एवमत्र द्विविधमलक्षणं भवति । लक्षणस्याभावोऽप्यलक्षणमुच्यते । दुर्लक्षणस्य भावोऽपि । उत्तमानां परिसङ्ख्याने लक्षणाभाव एव पदार्थः । एवं च चतुर्विंशतिलक्षणः शक्रः । इतरेषामष्टानामभाव एव तत्र । नत्वष्टानां दुर्लक्षणानां भावः । एवमष्टान्तलक्षणा ऋषय इति चावशिष्टानामभाव एव । न तु तावन्ति दुर्लक्षणानि । एवं सर्वत्रावधेयम् । एवं मोक्षयोग्यानां क्रमाद् गुरव ईरिताः । इतरे किंलक्षणाः? तदप्याह–लक्षणालक्षणैः समा मध्यमा मानुषाः । त्रिविधेषु मनुष्यजीवेषु ये मध्यमा नित्यसंसारिणस्ते लक्षणालक्षणैः समाः । अत्रालक्षणानीति लक्षणविरुद्धानि दुर्लक्षणान्युच्यन्ते । एकद्वा द्वित्राणि वा त्रिचतुरपरमाणि लक्षणानि । तावन्त्येव दुर्लक्षणानि । अतो लक्षणदुर्लक्षणैः समाः । अवशिष्टानां लक्षणानामभाव एव । ततोऽवरेषु तमोयोग्येषु मनुष्याधमानारभ्य कलिपर्यन्तेषु क्रमात् परिवर्धमानानि दुर्लक्षणानि । कलिस्तु सम्यक् पूर्णतया द्वात्रिंशताऽपि दुर्लक्षणैर्युतः । यथा पूर्णलक्षणो ब्रह्मा तथा पूर्णदुर्लक्षणः कलिरित्यर्थः । सुप्रसन्ना सर्वात्मना प्रसन्ना । न क्वापि किञ्चिदपि वैरस्यम् । यच्छिष्याय वाचा दद्यात्, तत् सत्यं भवति । यद् ज्ञानं वा दद्यात् तत् सत्यं मोक्षान्तफलकं स्यात् । ननु किं मोक्षमपि दद्यात्? दद्यादेव । यतो हरिस्तस्मिन्नाविष्टो मुक्तिदो भवेत् । गुरूपदेशं विना भगवतोऽगम्य-त्वात् । प्रत्यक्षादिनाऽगम्यत्वाच्च ॥ १२३–५ ॥ तस्मात् गुरुः, तद्द्वारा तस्मिन्नाविष्टो हरिरर्चनीयः ॥ १२६ ॥ ननु स्वरूपतोऽवरा अपि वयसा ज्येष्ठा गुरव उच्यन्ते । यथा देवकीवसुदेवौ कृष्णबलरामयोः । कुन्ती पाण्डुर्वा

'यदा मुक्तिप्रदानस्य[१] स्वयोग्यं पश्यति ध्रुवम् ।
'रूपं हरेस्तदा तस्य सर्वपापानि भस्मसात् ॥ १२८ ॥

'यान्ति पूर्वाण्युत्तराणि न श्लेषं यान्ति कानिचित् ।
'मोक्षश्च नियतस्तस्मात् स्वयोग्यहरिदर्शने' ॥ १२९ ॥

भविष्यत्पर्ववचनमित्येतत् सूत्रगं तथा ।
श्रुतिश्च तत्परा तद्वत् तद्यथेत्यवदत् स्फुटम् ॥ १३० ॥

'मुक्तास्तु मानुषा देवान् देवा इन्द्रं स शङ्करम् ।
'स ब्रह्माणं क्रमेणैव तेन यान्त्यखिला हरिम् ॥ १३१ ॥

---

भीमादीनाम् । क्वचिदवरा अप्युपदेष्टारो भवन्ति । यथा सान्दीपनिः कृष्णबलरामयोः । भीष्मो युधिष्ठिरस्य । बृहस्पतिर्वा पुरन्दरस्य । तदा कथं पूज्यपूजकभावः? आह– स्वावराणाम् । कारणतः वयसा ज्यैष्ठ्यात्, आधिकारिकत्वात्, भगवत्सङ्कल्पात्, प्रारब्धकर्मरूपाच्च । गुरुत्वं तु । तुशब्दात् पूज्यत्वं नाम विशेषमाह । तदेव स्फुटमाह– मर्यादार्थम् । गौरवरक्षार्थं लोकवेदसिद्धशिष्टाचारानुवर्तनार्थं च ॥ १२७ ॥ अथ मुक्तिविषये भविष्यत्पर्ववचनमाह– यदा मुक्तिप्रदानस्य । यद्यपि भगवान् मुक्तिप्रदः । अथापि न दर्शनमात्रेण । किन्तु स्वस्वमुक्तिप्रदानयोग्यं बिम्बरूपं पश्यत एव मुक्तिं ददातीति भावः । ध्रुवं पश्यति । नतु धारणायामिव विक्षिप्तम् । सर्वपापान्यप्रारब्धानि । उत्तराणि कान्यपि पूर्ववन्न श्लेषं यान्ति । अथापि महापराधरूपाणि कानिचित् सुखह्रासहेतवो भवन्ति ॥ १२८–९ ॥ **'तदधिगम उत्तरपूर्वाघयोरश्लेषविनाशौ तद्व्यपदेशात्'**[ब्र.सू.४.१.१३] इति सूत्रगम् । **'–तदवस्थावधृतेः'** [३.४.५१] इति च । तत्परा उत्तराघस्याश्लेषं वदन्ती परा श्रुतिरपि तदेतत् प्रमेयं स्फुटमवदत्– **'तद्यथा पुष्करपलाश आपो न श्लिष्यन्ते एवमेवंविदि पापं कर्म न श्लिष्यते'** [छ.उ.४.७.३] इति । **'तद् यथैषीकातूलमग्नौ प्रदूयेतैवं हैवास्य सर्वे पाप्मानः प्रदूयन्ते'** [५.५.७] इति च । तदधिगमे ब्रह्मदर्शने उत्तराघस्याश्लेषः पूर्वस्य विनाशः । **'तद्यथा–'** इति श्रुत्योस्तद्व्यपदेशात् । तदवस्थावधृतेः– **'एत्येव ब्रह्मसंस्थोऽमृतमेत्येव ब्रह्मसंस्थोऽमृतम्'** इति सम्यग्दर्शिनः सर्वथा मुक्त्यवधारणादित्यर्थः । इषीका तूलिका । अयःशलाकोपमस्तीक्ष्णाग्रस्तृणविशेषः । यत्काण्डाग्रे तूलं स्फुटति । अग्नौ निहितं प्रदूयेत निःशेषं दह्येत । टु दु उपतापे ॥ १३० ॥ मानुषा देवान् यान्ति । देवा इन्द्रं कामं च यान्ति । इन्द्रमिति सामान्योक्तिः । एवं शङ्करमिति च । इन्द्रः सुपर्णम् । कामः प्राक्तनशङ्करं शेषम् । स ब्रह्माणं याति । तेन सहाखिला हरिं यान्ति ॥ १३१ ॥

---

१. '–दानाय स्व–'

‘उत्तरोत्तरवश्याश्च मुक्ता रुद्रपुरस्सराः ।
‘निर्द्दोषा नित्यसुखिनः पुनरावृत्तिवर्ज्जिताः ॥ १३२ ॥

‘स्वेच्छयैव रमन्तेऽत्र नानिष्टं तेषु किश्चन ।
‘असुराः कलिपर्य्यन्ता एवं दुःखोत्तरोत्तराः ॥ १३३ ॥

‘कलिर्दुःखाधिकस्तेषु तेऽप्येवं ब्रह्मवद् गणाः ।
‘तथाऽन्येऽप्यसुराः सर्वे गणा योग्यतया सदा ॥ १३४ ॥

‘ब्रह्मैवं[1] सर्वजीवेभ्यः सदा सर्वगुणाधिकः ।
‘मुक्तोऽपि सर्वमुक्तानामाधिपत्ये स्थितः सदा ।
‘आश्रयस्तस्य भगवान् सदा नारायणः प्रभुः’ ॥ १३५ ॥

इत्यृग्यजुःसामाथर्वपश्चरात्रेतिहासतः ।
पुराणेभ्यस्तथाऽन्येभ्यः शास्त्रेभ्यो निर्ण्णयः कृतः ॥ १३६ ॥

विष्ण्वाज्ञयैव विदुषा तत्प्रसादबलोन्नतेः ।
आनन्दतीर्थमुनिना पूर्ण्णप्रज्ञाभिधायुजा ॥ १३७ ॥

---

उत्तरस्मादुत्तरा उत्तरोत्तराः । उत्तरोत्तरेषां वश्या अवरावरा इत्यर्थः । रुद्रपुरःसराः शेषपुरःसराः । शेषो भूत्वैव हि रुद्रो मुक्तिं याति । ब्रह्मण उत्तरस्यापरस्य जीवस्याभावात् रुद्रपुरःसरा इत्याह ॥ १३२ ॥ उत्तरोत्तरवश्यतया दुःखादिकं नानिष्टं तेषु किश्चन । सुरा ब्रह्मपर्यन्ता यथा सुखोत्तरोत्तराः । एवमसुराः कलिपर्यन्ता दुःखोत्तरोत्तराः दुःखमेव उत्तरमुत्तरं येषामुत्तरेषामुत्तरेषाम् ॥ १३३ ॥ तेऽपि कलिपदयोग्या अपि गणाः गणशो गणनीया इत्यर्थः । गणशो गण्यन्त इति गणाः । अन्येऽप्यसुराः, रुद्रादयः सुरा इव, तत्तत्पदयोग्यतानुगुणं गणशः स्थिताः । सदा अनाद्यनन्तकालम् ॥ १३४ ॥ एवं मुक्ततारतम्यान्तगत्वेन । सदा संसारे मुक्तौ च । तदेवोत्तरवाक्येन स्फुटमाह– मुक्तोऽपि । तस्यापि सदा संसारेऽपि मुक्तावपि नारायण आश्रयः । प्रभवति हि स ब्रह्माणमपि नियन्तुम् । प्रकृष्टो हि स भवति ब्रह्मणोऽपि ॥ १३५ ॥ इतिहासतः मूलरामायणान्महाभारताच्च । एतदनुकूलेभ्योऽन्येभ्यश्च शास्त्रेभ्यः । ब्रह्मतर्कादिभ्यः मन्वादि-स्मृतिभ्यश्च । महाभारततात्पर्यनिर्णयाङ्गतया प्रथमं सर्वशास्त्रतात्पर्यनिर्णयः कृतः ॥ १३६ ॥ स च निर्णय आनन्दतीर्थ-

---

१. ‘ब्रह्मैव’

**तात्पर्य्यं शास्त्राणां सर्वेषामुत्तमं मया प्रोक्तम् ।**
**प्राप्यानुज्ञां विष्णोरेतज्ज्ञात्वैव विष्णुराप्योऽसौ ॥ १३८ ॥**

**इति श्रीमदानन्दतीर्थभगवत्पादकृते**
**श्रीमहाभारततात्पर्य्यनिर्ण्णये**
**सर्वशास्त्रतात्पर्य्यनिर्ण्णयो नाम[1]**
**प्रथमोऽद्ध्यायः**

—०—

मुनिना विष्ण्वाज्ञयैव कृतः । पूर्णप्रज्ञ इत्याश्रमनाम । आनन्दतीर्थ इति वेदान्तसाम्राज्याभिषेकसमयेऽच्युतप्रज्ञयतिना दत्तं नाम । पुरात्वे त्वेवं किल सम्प्रदाय आसीत् । प्रथमं सन्न्यासस्वीकरणम् । तदा तीर्थपदविरहितं नामकरणम् । ततः परिणतप्रज्ञस्य वेदान्तसाम्राज्ये तीर्थाभिषेकपूर्वकं तीर्थपदसहितं नामकरणमिति । तीर्थपददानं च द्विविधम्– नामान्तर-करणम्, पूर्वनामधेयस्यैव तीर्थपदयोजनमिति । प्रथमं यथा– पूर्णप्रज्ञ आनन्दतीर्थः । अच्युतप्रज्ञः पुरुषोत्तमतीर्थः । द्वितीयं यथा– हृषीकेशः हृषीकेशतीर्थः । नरहरिः नरहरितीर्थः । अधिकं ग्रन्थान्ते द्रष्टव्यम् । तस्य विष्णोः नित्यप्रसाद एव बलमालम्बनम् । तस्योन्नतेरौन्नत्यात् । तस्य प्रसादोऽनुग्रहः । तद्बलेन लब्धा योन्नतिर्ज्ञानस्य, सार्वज्ञ्यमित्येतत्, तत इति वा ॥ १३७ ॥ तदेवं महाभारततात्पर्यनिर्णयाङ्गतया सर्वशास्त्रतात्पर्यं प्रथमाध्यायेन निर्णीय प्रोक्तम् । उत्तमं तात्पर्यं मुख्यतात्पर्यम् । महातात्पर्यमित्येतत् । विष्णोरनुज्ञां प्राप्य मया प्रोक्तम् । आदेश आज्ञा । अनुमतिरनुज्ञा ॥१३८॥ उपसंहारवाक्ये श्रीमदानन्दतीर्थभगवत्पादकृत इति । भगवान् भगवदनुग्रहभाग्यवान् पादः भगवत्पादः । उत्तमानां हि स्वरूपं पादशब्देनोच्यते । **'उत्पत्तिमायतिं चैव भूतानामागतिं गतिम् । वेत्ति विद्यामविद्यां च स वाच्यो भगवानिति'** इति स्मरन्ति । भगवतः पाद इव पूज्यस्वरूप इति वा । सदा भगवन्तं प्रतिपादयतीति च भगवत्पादः । सर्वेषां शास्त्राणां तात्पर्यं निर्णीयतेऽत्रेत्ययमध्यायः सर्वशास्त्रतात्पर्यनिर्णयः । तथाच श्रीमदानन्दतीर्थमुनिदृष्टेऽस्मिन्नध्याये सर्वशास्त्रप्रतिपाद्योऽनन्तरूपो नारायणो देवता । तदनन्तरं लक्ष्मीश्च । ततो वायुश्च भारती च । अथ च्छन्दांसि–

१–२५. वसन्ततिलका नाम शक्करी । [तभजजा गौ च हि वसन्ततिलका] । २६. इन्द्रवज्रा नाम त्रिष्टुप् । [ततजाश्च गौ चेन्द्रवज्रा] । २७. पूर्वार्द्धे इन्द्रवज्रा । उत्तरार्द्धे वसन्ततिलका । तयोः संसर्गेण पञ्चाशदक्षरा स्वराड् जगती । २८–२९. पुनर्द्वे वसन्ततिलके एव शक्कर्यावतिच्छन्दसी षट्पञ्चाशदक्षरे । ३०–६०. श्लोका नामानुष्टुभः । ६१–६२. त्रैष्टुभौ वेदमन्त्रौ । ६३. पूर्वार्धेऽनुष्टुप् । तुरीयपादेऽपि । तृतीयपादे त्रिष्टुप् । तेन पञ्चत्रिंशदक्षरा निचृद्बृहती । ६४. प्रथम-तृतीययोस्त्रिष्टुप् । द्वितीयचतुर्थयोर्जगती । संहत्य स्वराट् त्रिष्टुप् । ६५. प्रथमपादे याजुषी बृहती । तृतीयपादे च । द्वितीये याजुषी गायत्री । तृतीये याजुष्युष्णिक् । संहत्य निचृदनुष्टुप् । ६६. त्रैष्टुभो मन्त्रः । ६७. पूर्वार्धे त्रैष्टुभो मन्त्रः । तृतीयपाद

१. **'सर्वशास्त्रार्थनिर्णयो नाम'**

आनुष्टुभः । तुरीयस्त्रैष्टुभः । संहत्य भुरिक्पङ्क्तिः । ६८–७४. अनुष्टुभः । अन्त्या षट्चरणाऽनुष्टुप् । वैदिकानां मते जगत्येव । ७५. प्रथमतृतीयचरणयोर्द्वादशमात्रा, द्वितीयतुरीययोरष्टादशमात्रा गीतिर्नाम मात्राच्छन्दः । अक्षरशः स्वरा-ऽनुष्टुप् । ७६. चतुर्थचरणे पञ्चदशमात्रा आर्या नाम । अक्षरशः केवलाऽनुष्टुप् । ७७. त्रैष्टुभो मन्त्रः । चतुर्थचरण एकाक्षराधिक इति भुरिक् त्रिष्टुप् । ७८–९९. अनुष्टुभः । अन्त्या षट्पदाऽनुष्टुब् वा जगती वा । १००–१०१. त्रैष्टुभौ मन्त्रौ । १०२. पूर्वार्द्धं जागतम् । अपरार्द्धं त्रैष्टुभम् । १०३–१३७. अनुष्टुभः । तत्र १२७तमः, १३५तमश्च श्लोकः षट्पद आनुष्टुभो वा जागतो वा । १३८. गीतिर्नाम मात्राच्छन्दः । अक्षरशोऽनुष्टुबेव ॥ ※ ॥

**आचार्यगोविन्दकृते**
**श्रीमद्भारततात्पर्यनिर्णयस्य ।**
**निर्णिक्ते व्याख्याने निर्णयभावचन्द्रिकाख्याने**
**प्रगतं प्रथमाध्यायविवरणं सतां हृदयाभरणम् ॥ ※ ॥**

**इत्याचार्यगोविन्दस्य कृतिषु**
**श्रीमहाभारततात्पर्यनिर्णयपञ्चिकायां**
**निर्णयभावचन्द्रिकायां**
**प्रथमोऽध्यायः**

—०—

२२-१०-१२

# द्वितीयोऽध्यायः

**[वाक्योद्धारः]**

**ॐ ॥ जयति हरिरचिन्त्यः सर्वदेवैकवन्द्यः**
**परमगुरुरभीष्टावाप्तिदः सज्जनानाम् ।**
**निखिलगुणगणार्ण्णो नित्यनिर्म्मुक्तदोषः**
**सरसिजनयनोऽसौ श्रीपतिर्म्मानदो नः ॥ १ ॥**

---

**ॐ ॥ अध्यायेऽस्मिन् द्वितीये नः पुनातां सङ्गते मिथः ।**
**व्यासमध्वसरस्वत्यौ जान्हवीयमुने इव ॥ ※ ॥**

अथ विषयान्तरं प्रतुष्टूषुर्भगवत्स्तुतिलौल्यात् पुनरपि मङ्गलमाचरति– जयतीति । जयति संसारहारी हरिरानन्त्याद-चिन्त्यमहिमा । अत एव सर्वदेवैः मुख्यस्तुत्यः । **'वदि अभिवादने स्तुतौ च'** । न केवलं सर्वदेवोत्तमत्वेन वन्द्यः । परमगुरुत्वेन च । अन्येषां परमगुरुः । स्वस्य परमश्च साक्षाद् गुरुश्च । परमस्य ब्रह्मणः, अक्षरपुरुषस्य च गुरुः । सज्ज-नानाम् । सन्तः ज्ञानिनः । **'सन् विद्वान्'** इत्यभिधानात् । सन्तः सात्विकाः । सन् साधनयोग्यो जन्यत इति जनो देहो येषाम् । अभीष्टस्य मोक्षान्तस्य अवाक् त्वरया आप्तिदः प्रापकः । अभीष्टो मुख्येष्टो भगवानेव वा । आत्मानमेव भक्तेभ्यो ददाति त्वरमाण इत्यर्थः । अभीष्टस्य ज्ञानभक्तिवैराग्यादेरवनाय रक्षणाय सज्जनानामाप्तिं सख्यं दापयतीति च । अर्णो जलम् । अर्णांसि अत्र सन्तीत्यर्णोऽर्णवः । निखिलगुणगणानामर्णव इव निखिलगुणार्णः । अथवा निखिलगुणगणा एवार्णांसि यस्य तादृशः । समासान्ताऽदन्तता । अथच निखिला गुणगणा येषु प्रतिपाद्यास्ते निखिलगुणगणा अर्णा वर्णा यस्य सः । सर्ववर्णपदप्रतिपाद्य इत्यर्थः । 'वर्णोऽक्षरं रश्मिरर्णः' इत्यभिधानम् । सरसिजिनयनः । भक्तानुग्रहपरवशतया विवृतमसृणनयनः । नारायणस्य चैतल्लक्षणम्–**'तस्य यथा कप्यासं पुण्डरीकमेवमक्षिणी'** इति श्रुतेः । श्रीपतिरिति वदता पत्या सह सकलविद्यादेवता श्रीरपि वन्दिता । मानदः ज्ञानदः चित्तसमुन्नतिदः मान्यताप्रदश्च नः । आत्मनि बहु-वचनम् । नः सर्वेषां च ॥ १ ॥

**उक्तः पूर्वेऽद्ध्याये[१] शास्त्राणां निर्ण्णयः परो दिव्यः ।**
**[२]श्रीमद्भारतवाक्यान्येतैरेवाद्ध्यवस्यन्ते ॥ २ ॥**

**क्वचिद् ग्रन्थान् प्रक्षिपन्ति क्वचिदन्तरितानपि ।**
**कुर्य्युः क्वचिच्च व्यत्यासं प्रमादात् क्वचिदन्यथा ॥ ३ ॥**

उक्तः पूर्वेऽध्याये । शक्यं 'पूर्वाध्याये' इति वक्तुम् । अथापि 'पूर्वेऽध्याये' इत्याह । तेनेदं सूचयति– सप्तम्यामपि पूर्वादेः सर्वनामसञ्ज्ञा विभाषा भवतीति । पूर्वे पूर्वस्मिन् । परे परस्मिन् । अपरे अपरस्मिन् । आह च पाणिनिः–**'पूर्वादिभ्यो नवभ्यो वा'** [अ.सू.७.१.१६] इति । **'पूर्वादिभ्यो नवभ्यः सर्वनामभ्य उत्तरयोर्ङसिङ्योः स्मात् स्मिन् इत्येतावादेशौ वा भवतः । पूर्वस्मात्, पूर्वात् । पूर्वस्मिन् पूर्वे'** [का.] इति वामनः । पूर्व, पर, अवर, दक्षिण, उत्तर, अधर, स्व, अन्तर– इति पूर्वादयो नव । परः परिपूर्णः । महाफलत्वादत्युत्तमो वा । व्यासाभिमतत्वाच्च । दिव्यः ज्ञानिभिः स्तुत्यः । सर्वार्थप्रकाशकः । विशिष्य देवैरेव गम्यश्च । एतैः शास्त्रवचनैरेव, शास्त्रनिर्णीतार्थैरेव । समग्रभारतवाक्यानि भारतगतैरेव निर्णायकवाक्यैर्वा । अध्यवस्यन्ते सङ्गम्य निर्णीयन्ते ॥ २ ॥ चतुर्विधान् ग्रन्थसम्पादकैरवधेयान् दोषानाह– क्वचिदित्यादि । त्रयो बुद्धिपूर्वकाः । चतुर्थोऽबुद्धिपूर्वकः । स्वकृतान् ग्रन्थान् स्वापेक्षितार्थप्रतिपादकान् श्लोकादीन् मूलग्रन्थमध्ये तत्रतत्र प्रक्षिपन्ति संयोजयन्ति । क्वचित् स्वमतप्रतीपान् ग्रन्थभागानन्तरितानपि कुर्युः । अहो मोहपिहितनयना उत्पाटयेयुरपि । अपिना दुराग्रहिणां मोहमहिमानमगाधं विस्मयते । क्वचिच्च व्यत्सासं कुर्युः । तदिदं द्वयमपि प्रक्षेपश्चान्तरितकरणं च । यत्र मूले विद्यते ततोऽन्तरितान् कुर्युः । एवं तत उत्पाट्य यत्र न विद्यन्ते तत्र प्रक्षिपेयुः । आहो न द्वयमपि । न बाह्यतः प्रक्षेपः । नाप्यन्तरितकरणम् । किन्तु विद्यमानस्यैव स्थानान्तरकरणम् । प्रक्षेपस्य द्वयी गतिः । स्वाभिमतमेव पुराणादिसम्मतमिति भ्रान्तिजननेन लोकवैयाकुल्यम् । क्वचिद् विरळतया पाण्डित्यचापलम् । अन्तरितकरणस्यापि द्वयी गतिः । तत्रोक्तं स्वमताननुगुणमित्यसन्तुष्टिः । विस्तरो मा भूदित्यमन्दतन्द्राणां सङ्ग्रहणचापलं च । व्यत्यस्य पठनं च द्विविधम्–बुद्धिपूर्वमबुद्धिपूर्वं च । तत्र प्रथममाह– कुर्युः क्वचिच्च व्यत्यासम् । व्यत्यासोऽध्यायानां श्लोकानां वा पूर्वापरीभावः । कचित् पदानां व्यत्यासेनार्थान्तरकरणं च । पूर्वापरीभावस्यापरपूर्वीभावस्य च द्वयी गतिः– क्वचिन्मूलेन स्वस्वमताननुगुणार्थावधारणं मा भूदिति । क्वचित् स्वाभीष्टप्रमेयस्यैकत्र पठनसौकर्याय च । अथ द्वितीयं व्यत्यासमाह– प्रमादात् क्वचिदन्यथा । प्रमादोऽनवधानमज्ञानं भ्रान्तिर्वा । एवं त्रिविधात् प्रमादान्मूलपाठमन्यथा पठन्ति साधवोऽपि । कचित् पाठव्यत्यास एवायम् । क्वचित् तन्मूलोऽर्थव्यत्यासोऽपि । पाठव्यत्यासो यथा–सङ्कं सङ्कचं पठन्ति । बहळं बहलं पठन्ति । रुग्मं रुक्मं पठन्ति । भत्सनं च भर्त्सनमाहुः । बाहुषाळिनं च बाहु-

१. **'पूर्वाध्याये'**

२. **'अथ भारत–'** इति पाठः प्रामादिकः, छन्दःशास्त्राविदुषां जिह्वामूलः । तृतीयपादे द्वादशमात्राणां स्थाने पाठेऽस्मिन् दशैव मात्रा भवन्तीति न्यूनता । **'अथ खलु भारत–'** इति तु च्छन्दोऽनुगुणोऽपि मूलपाठाननुगुणः ।

**अनुत्सन्ना अपि ग्रन्था व्याकुला इति सर्वशः ।**
**उत्सन्नाः प्रायशः सर्वे कोट्यंशोऽपि न वर्त्तते ॥ ४ ॥**

**ग्रन्थोऽप्येवं विलुळितः[1] किम्वर्थो देवदुर्गमः ।**
**कलावेवं व्याकुलिते निर्ण्णयाय प्र चोदितः ॥ ५ ॥**

**हरिणा निर्ण्णयान् वच्मि विजानंस्तत्प्रसादतः ।**
**शास्त्रान्तराणि सञ्जानन् वेदांश्चास्य प्रसादतः ॥ ६ ॥**

---

शालिनम् । चाणूरान्ध्रनिसूदनं चाणूरान्ध्रनिषूदनं पठन्ति । अर्थव्यत्यासोऽपि द्विविधः– मूलाशयविरुद्धः, अविरुद्धश्च । आद्यो यथा–**'प्रायस्तेनापि मन्देन न युष्मास्वशिवं कृतम्'** [म.भा.ता.नि.३१.५०] इति पठितव्ये **'–मन्देन युष्मास्वप्यशिवं कृतम्'** इति पठन्ति । **'पराधीनस्थित्यभावादनन्तर उदाहृतः'** इति वक्तव्ये **'–स्थित्यभावादनपर–'** इति पठन्ति । द्वितीयो यथा–**'यदि नाम परो न भवेत हरिः'** इति पठितव्ये **'–न भवेत्स हरिः'** इति पठन्ति । **'परोऽस्मै ब्रह्मणे नमः'** इति वक्तव्ये **'परस्मै ब्रह्मणे नमः'** इति पठन्ति । तदेवं चतुर्ष्वर्थनिर्णयप्रतिकूलेषु प्रथमं त्रयमक्षम्यम् । चरमं त्वज्ञानमूलमिति किञ्चिदिव क्षम्यं स्यात्, यद्यबद्धे न बद्धादरता, यदि वा न दुराग्रहः ॥ ३ ॥ बहव उत्सन्नाः । उपरि-गता दिवि स्थिता मनुष्यलोके नष्टा इत्यर्थः । अनुत्सन्ना अनष्टा उपलभ्यमाना अपि चतुर्धा व्याकुलाः सङ्कीर्णा अस्त-व्यस्ताश्च सन्त उत्सन्नप्रायाः । यदर्थं ते प्राणीयन्त तदेव दुःशकमभूदिति । सर्वशः सर्वेऽपि, सर्वदेशेषु च, सर्वात्मना च । प्रायशः बाहुल्येन । कोटेरेकांशोऽपि न विद्यते । अनन्तो हि शास्त्रजलिधिः । तथाहि स्मर्यते–**'शतकोटयः पञ्चरात्रं पुराणं तावदेव च । रामस्य चरितं तावत् तावदन्यच्च सर्वशः । अनन्ताश्च तथा वेदाः साङ्गोपाङ्गाश्च सर्वशः'** [३.५] इति बृहद्भाष्ये ॥ ४ ॥ विलुळितः उत्सादेन प्रक्षेपादिना च कलुषितः । लुड विलोडने । तुदादिः । डस्य ळः । न प्राक्षेपि । नान्तरितमकारि । नापि व्यत्यासि । नतरां पाठे प्रामादि । समपाद्यविलुळितो ग्रन्थः । अथापि न निस्तारः । अनिर्णय एव शरणम् । यतः शुद्धोऽपि ग्रन्थोऽपव्याख्यानेनापार्थो बभूव । अपव्याख्यानस्य च त्रीणि कारणानि–लोकप्रतारणम्, अज्ञानमयथार्थज्ञानं च । अत एतद्दोषत्रयविरहायाहमिह हरिणा निर्णयाय प्रचोदितः प्रीत्या चोदितः । प्रभवति निर्णयायेति चोदितः, प्रीत्या च उदितः, प्रभुत्वेन च उदितः, आज्ञप्त इत्यर्थः ॥ ५ ॥ हरिप्रसादत एव निर्णय-विधानं जानन् । शास्त्रान्तराणि वेदानुकूलानि प्रतिकूलानि च तत्वतो जानन् । सामस्त्येन सम्यक्तया च । न केवलं तस्य परोक्षस्य हरेः प्रसादतः । किन्तु अस्य प्रत्यक्षस्य व्यासरूपस्य प्रसादतश्च । अस्य अकारवाच्यस्य व्यासस्य वा । स्वयमेव ह्याह गीताभाष्ये–**'गुरूंश्चान्'** इति ॥ ६ ॥

---

१. **'विलुलितः'**

**देशेदेशे तथा ग्रन्थान् दृष्ट्वा चैव पृथग्विधान् ।**
**यथा स भगवान् व्यासः साक्षान्नारायणः प्रभुः ॥ ७ ॥**

**जगाद भारताद्येषु तथा वक्ष्ये तदीक्षया ।**
**सङ्क्षेपात् सर्वशास्त्रार्थं भारतार्थानुसारतः ॥ ८ ॥**

**निर्णयः सर्वशास्त्राणां भारतं परिकीर्त्तितम् ।**
**'भारतं सर्ववेदाश्च तुलामारोपिताः पुरा ॥ ९ ॥**

---

अस्य प्रसादतः सर्वं जानन्नपि लोकशिक्षार्थं लोकनीतिमनुसरन् देशेदेशे पाठभेदादिना पृथग्विधान् ग्रन्थान् दृष्ट्वा परिशील्य । यद्वा सर्वज्ञत्वात् स्वस्य देशेदेशे पृथग्विधान् दृष्ट्वा स्वतो विज्ञाय, चकारेण तन्मूलं जनानामनिर्णयं भ्रमं च दृष्ट्वा, दृष्ट्वैवेत्येवकारेण साधुलोकसमुद्धरणाय कृपातिशयमूलां त्वरामाह । तं पाठभेदमर्थभेदं सज्जनमोहं च निवारयितुं यथा व्यासो जगाद तथा वक्ष्ये वदिष्ये । वद व्यक्तायां वाचि । अधिकं प्रत्नप्रयोगमीमांसायाम् । यथार्थाविष्करणेन सङ्ख्यावत्संसदि भासमानो वक्ष्यामि, वक्तव्यं प्रमेयजातं वदितुं सम्यग् जानन् वक्ष्यामि । व्यासाज्ञेयमिति वक्तुमुत्साहमाविष्करिष्यामि । एवमात्मनेभाषयाऽनेकानर्थविशेषानाविश्चकार । **'भासनोपसम्भाषाज्ञानयत्नविमत्युपमन्त्रेषु वदः'** [अ.सू.१.३.४७] इति तङ् । भासनादिषु विशेषणेषु सत्सु वदतेरात्मनेपदं भवति । भासनं दीप्तिः । वदते भासमानो दीप्यमानः पदार्थान् व्यक्तीकरोति । ज्ञानं सम्यगवबोधः । वदते जानाति वदितुम् । यत्न उत्साहः । वदते तद्विषयमुत्साहमाविष्करोति । अथच भगवदाज्ञापालनरूपायाऽत्मगामिने फलायेति चाऽत्मनेभाषा । साक्षान्मुख्यतः । नत्वावेशादिना । ममापि प्रभुः । तदीक्षया तेन यथेक्षितं तथैव । तद्दत्तया ईक्षया दर्शनेन । तस्येक्षया इच्छया तत्प्रेरणया च । करुणापूर्णया वरप्रदया तस्य सरसिजनयनेक्षया चानुगृहीतः । तद्व्याजेन सङ्क्षेपात् सर्वशास्त्रार्थं च वक्ष्ये ॥ ७–८ ॥ कुतो भारतार्थानुसारतः? इतरशास्त्रानुसारत एव भारतार्थः किमिति न निर्णीयते? न निर्णीयते । यतो भारतं सर्वशास्त्राणां निर्णयात्मकम् । तदपि कुतः? व्यासवचनादेवेत्याह– भारतमित्यादिना । अत एव परिकीर्तितमित्युक्तम् । तुलारोपेण परीक्ष्य कीर्तितम् । **'भारतं सर्व-वेदाश्च–'** इत्यादिना, **'अत्रोक्तं सर्वशास्त्रेषु न हि सम्यगुदाहृतम्'** इत्यन्तेन त्रिचत्वारिंशच्छ्लोकमयेन ब्रह्माण्डवचनेन भारततात्पर्यं च सङ्गृह्णाति । भारतमेकतः । अपरतश्च सर्वे पौरुषेया अपौरुषेयाश्च वेदाः । भारतातिरिक्तानि सर्वशास्त्राणीत्येतत् । तेन सर्वसङ्ग्रह इति न न्यूनता । व्यासस्यैवाऽज्ञया तुलामारोपिताः पुरा । मननेन तोलयामासुः । तत्प्रतिनिधितया किमपि तुलायां निक्षिप्येति च । समन्वितैः, एककार्यानुष्ठानाय सह मिलितैः, समानहृदयैश्च । अत्यरिच्यत सर्वानतिक्रम्य निःसृतं सर्वोपरि स्थितमभूत् । रिचिर् विरेचने । **'विरेचनं निःसारणम्'** इति क्षीरस्वामी । पृथग्भाव इत्यपरे ॥ ९–१० ॥

**‘देवैर्ब्रह्मादिभिः सर्वैरृषिभिश्च[1] समन्वितैः ।**
**‘व्यासस्यैवाऽऽज्ञया तत्र त्वत्यरिच्यत भारतम् ॥ १० ॥**

**‘महत्त्वाद् भारवत्त्वाच्च महाभारतमुच्यते ।**
**‘निरुक्तमस्य यो वेद सर्वपापैः प्रमुच्यते ॥ ११ ॥**

**‘निर्णयः सर्वशास्त्राणां सदृष्टान्तो हि भारते ।**
**‘कृतो विष्णुवशत्वं हि ब्रह्मादीनां प्रकाशितम् ॥ १२ ॥**

---

**‘महत्त्वात्–’** इति पद्यं भारतेऽपि पठ्यते, आदिपर्वणि [१.३००] स्वर्गारोहणपर्वणि [५.४५] च । लक्षश्लोकात्मकत्वेन ग्रन्थतोऽपि महत्त्वात्, महार्थत्वाच्च, दशार्थत्वादिनाऽर्थभारवत्त्वाच्च । भारवद् भारतमुच्यते । पर्ववान् पर्वतो यथा । ननु पर्वत इति साधु – **‘पर्वमरुद्भ्यां तन् वक्यव्यः’** [अ.सू.५.२.१२२] इति कात्यायनेन विधानात् । नैवं भारतमिति । अविधानात् । ननु भोः, अङ्गीकरोषि कात्यायनेन विहितम्, नाङ्गीकरोषि व्यासेन विहितमपीत्यहो तव व्याकरणचापलम् । तस्माद् वार्तिकेऽपि **‘भारादपि’** इत्युपस्कर्तव्यम् । भरतानामिदं चरितं भारतमिति निर्वचनान्तरेणापि पूर्यत इति न मुखत उवाच कात्यायनः । भारेण ततं भारतमित्यपि व्याचक्षते । भारतस्य सर्वग्रन्थोत्तमत्वादेव नामनिरुक्तिज्ञानमात्रेण सर्वपापैः प्रमुच्यते । सर्वपापैर्मुच्यत इत्ययमर्थः शास्त्रेषु प्रथित इत्यर्थः । स्वयमेवान्यत्राऽऽचार्य आह– **‘कथमन्यथा नामनिरुक्तिज्ञानमात्रेण सर्वपापक्षयः’** इति ॥ ११ ॥ इतिवृत्तकथनेन सदृष्टान्त उक्त इति हि स्फुटं चक्षुष्मताम् । विष्णुवशत्वं हि । हिर्हेत्वपदेशे । हि यस्मादित्यर्थः । हिर्विशेषे । विष्णोरन्यावशत्वं नाम विशेषमनेनाऽऽह । हीत्यनुनये । प्रकाशितं हि । तेन सदृष्टान्तो निर्णयः कृत इति ज्ञायते नन्विति । **‘हि पादपूरणे हेतौ विशेषेऽप्यवधारणे’** इत्यभिधानम् । अविवक्षित्वाऽर्थविशेषं केवलं वाक्यस्य शोभायै तुह्यादीनां प्रयोगः पादपूरणमुच्यते । तदपि शक्यं वक्तुम्–हीति वाक्यालङ्कार इति । सुकरेयं सर्वत्र व्याख्यानसरणिरधिलहरि प्लवमानानाम् । वयं तु जलधौ मज्जम्मज्जं मणिगणमार्गणपराः ॥ १२ ॥

---

१. अधुनातनास्तु **‘सर्वैर्ऋषिभिः’** इति लिखन्ति । एवं **‘निर्ऋतिः’** इत्यादि च । वस्तुतस्तु **‘सर्वैर्+ऋषिभिः’** इति, **‘निर्+ऋतिः’** इति रेफोत्तरोऽयमृकार इति प्राचीनादर्शेषु–**‘सर्वैरृषिभिः’**, **‘निरृतिः’** इत्येव लिख्यते । उच्चारश्चास्य प्रायः–**‘पूर्वैऋषिभिः’**,**निऋतिः’** इतीव । नतु संयुक्ताक्षरवत् । नहि व्यञ्जनस्य स्वरयोगेन क्वापि संयुक्ताक्षरं भवति । द्वे हि व्यञ्जने संयुक्ते संयुक्ताक्षरमुत्पादयतः । अतः **‘निरृतिः’** इत्यत्र **‘नि’** इत्येतल्लघ्वक्षरमेव । अत एव **‘नासत्यौ निरृतिर्मरुद्गणयुताः’** इति राजराजेश्वरयतिः । **‘वरनिरृतिनामा’** इति चान्यत्र । स्यादयमृवर्णे । ऌवर्णे कथम्? **‘मुनिः ऌ इत्याह= मुनिर्ऌित्याह’** इत्यत्रापि नीत्येतत् लघ्वक्षरवदेवोच्चारणीयम् । तद्यथा **‘दृळ्ढच्युतः’** इत्यत्र ळढयोरेकाक्षरत्वेनासंयुक्ताक्षरस्येवोच्चारणम्, तेन **‘दृ’** इत्यस्य लघुत्वं चेत्येकः पक्षः । छन्दःसौहित्यायैवमुच्चारणमन्यत्र संयुक्ताक्षरवदपि स्यादित्यपरः पक्षः । तद्यथा **‘मतिर् ऋतस्य धेनाः’** इत्यादीनि । तथाच यत्र पूर्वाक्षरस्य गुरुत्वमिष्टं तत्र संयुक्ताक्षरवदुच्चारः । यत्र लघुत्वं तत्रासंयुक्ततयेति व्यवस्था । एवमुत्तरत्रापीति ।

**‘यतः कृष्णवशे सर्वे भीमाद्याः सम्यगीरिताः ।**
**‘सर्वेषां ज्ञानदो विष्णुर्य्यशोदातेति चोदितम्[1] ॥ १३ ॥**

**‘यस्माद् व्यासात्मना तेषां भारते यश ऊचिवान् ।**
**‘ज्ञानदश्च शुकादीनां ब्रह्मरुद्रादिरूपिणाम् ॥ १४ ॥**

**‘ब्रह्माऽधिकश्च देवेभ्यः शेषाद् रुद्रादपीरितः ।**
**‘प्रियश्च विष्णोः सर्वेभ्य इति भीमनिदर्शनात् ॥ १५ ॥**

**‘भूभारहारिणो[2] विष्णोः प्रधानाङ्गं हि मारुतिः ।**
**‘मागधादिवधादेव दुर्य्योधनवधादपि ॥ १६ ॥**

**‘योय एव बलज्येष्ठः क्षत्रियेषु स उत्तमः ।**
**‘अङ्गं चेद् विष्णुकार्य्येषु तद्भक्त्यैव नचान्यथा[3] ॥ १७ ॥**

---

ज्ञानदः बलदश्च, तेन यशोदाता । इति च उदितं भारते । इति विद्वद्भिश्च उदितम् ॥ १३ ॥ व्यासात्मना व्यासस्वरूपेण । व्यास इति आत्मा स्वरूपाभिन्नं रूपं यस्य स व्यासात्मेति वा । ब्रह्मरुद्रादिरूपिणाम् । ब्रह्मरूपी भीमः । रुद्ररूपी शुकोऽश्वत्थामा च । शुके पुनर्वायोरावेशः । तेन स ब्रह्मरूपश्च रुद्ररूपश्च । वाय्वात्मनो ब्रह्मणो रूपमस्मिन्नस्तीति, रुद्रस्य रूपमस्यैव स्वरूपमस्तीति । अत एव तस्य प्रथमं मुखतो निर्देशः । साक्षात् पितृत्वेन गुरुत्वेन ज्ञानदानाच्च शुकस्य । शेषरूपी बलराम इत्यादि ॥ १४ ॥ देवेभ्य इन्द्रादिभ्यः । शेषात् बलरामात्मनः, रुद्रादप्यश्वत्थामात्मन उत्तमत्वं निदर्शितमिति तयोर्मुखतो ग्रहणम् । तेन गरुडादप्युत्तमत्वमर्थाद् गदितप्रायम् । सर्वेभ्योऽप्यधिकप्रिय इति चेरितः ॥ १५ ॥ भूभारहारिणः प्रधानाङ्गं भूभारहरणे । मागधादीति । आदिना कीचकहिडिम्बबककिर्मीरादयः । एवकारेण मागधादीनां मुख्यं भूभारत्वमाह । दुर्योधनस्य सानुजस्य वधादपि ॥ १६ ॥ क्षत्रियेषु योयो बलज्येष्ठः सस एव स्वरूपत उत्तमः । अनेनान्ययोगव्यवच्छेदेन बलज्येष्ठत्वव्याप्यमुत्तमत्वमित्याह । एवं योयो बलज्येष्ठः सस उत्तम एव । अनेनायोगव्यवच्छेदेन चोत्तमत्वव्याप्यं बलज्येष्ठत्वमित्याह । तेनोभे अपि समनियते । योय इति वीप्सायां द्विर्वचनम् । अत एव नित्यसमासो विभक्त्यलोपश्च । केषाञ्चिन्मत इवशब्देनेव । सहप्रयोगनैयत्यमेव ह्यैकपद्यं नाम । भिन्नं पदं पठन्तो भ्रान्ता एव । न क्वापि वीप्साया भिन्नपदता लोकवेदयोः । अत्र

---

१. **‘चोदितः’** २. **‘भूभारहरणे’** ३. **‘–त्त्यैव च नान्यथा’**

**'बलं नैसर्गिकं तच्चेद् वरास्त्रादेस्तदन्यथा ।**
**'अन्यावेशनिमित्तं चेद् बलमन्यात्मकं हि तत्** ॥ १८ ॥

**'देवेषु बलिनामेव भक्तिज्ञाने नचान्यथा ।**
**'स एव च प्रियो विष्णोर्नान्यथा तु कथञ्चन** ॥ १९ ॥

---

बले किञ्चिदुपस्कर्तव्यमित्याह–अङ्गं चेत् । तद् बलं विष्णुकार्येषु अङ्गं चेत्, बलज्येष्ठो वा विष्णुकार्येष्वङ्गम्, तदैवायं नियमः । एवं च विष्णुकार्याङ्गभूतबलज्येष्ठ एवोत्तमः । न सर्वोऽपि बलज्येष्ठः । तेन क्वचिदसुराणां बलाधिक्येऽपि न व्याप्ति-भङ्गः । धर्मसंस्थापनम्, तदर्थमसतामधर्मस्य च निग्रहणम्, ज्ञानप्रकाशनम्, सतां हितकरणं च विष्णुकार्याणि । नन्वसतां हन्ता हत्वा यथा विष्णुकार्याङ्गं तथा हतोऽपि मृत्वा । उभयसाध्यं हि दुष्टहननम् । तथाच भीमो जरासन्धादीन् हत्वा यथा विष्णुकार्याङ्गतामाप तथा जरासन्धादयोऽपि स्युः । अत आह–तद् भक्त्यैव । तद् विष्णुकार्याङ्गत्वं बलं वा भक्त्या सहैव विवक्षितम् । तेन जरासन्धादिव्युदासः । तथाच भक्तिसमानाधिकरणं विष्णुकार्याङ्गं च यद् बलं तदेवोत्तमत्व-समानाधिकरणमित्युक्तं भवति । यद्यपि भक्तिसमानाधिकरणं बलमिति पर्याप्तम् । अथापि विष्णुकार्याङ्गमित्याह । तेनेद-माह– दृष्टिरेव ह्युत्तमत्वं निश्चाययति । बलस्य दर्शनं च कार्याङ्गत्वेनैवेति । वक्ष्यते हि–**'दृश्यते स्थूलदृष्टिभिः'** इति । तद्भक्त्यैवेत्येकं वा पदम् । तस्य विष्णोर्भक्त्यैव । अन्यथा भक्त्यभावे, चकारेण द्वेषभावे वा बलज्येष्ठोऽप्युत्तमो नैव भवति ॥ १७ ॥ ननु व्यजयताश्वत्थामानमर्जुनः । तर्हि गतं यो बलाधिकः स स्वरूपतोऽप्युत्तम इति । नन्वश्वत्थामा न क्षत्रियः । न भोः । तस्यापि बलकार्याङ्गत्वस्य वक्ष्यमाणत्वात् । अथापि तुष्यतु भवान् । उदाहरणान्तरं भवति । व्यजयता-र्जुनं बभ्रुवाहनः । अथापि न नियमभङ्ग इत्याह– बलं नैसर्गिकं तच्चेत् । तथा चार्जुने देवानां शापात् प्रारब्धकर्म-समेधितात् तिरोहितमिव नैसर्गिकं बलम् । तथाहि स्मरन्ति–**'गङ्गायास्तीरमाश्रित्य हते शान्तनवे नृप । आप्लुत्य देवा वसवः समेत्य च महानदीम् । इदमूचुर्वचो घोरं भागीरथ्या मते तदा । एष शान्तनवो भीष्मो निहतः सव्य-साचिना । अयुध्यमानः सङ्ग्रामे संसक्तोऽन्येन भामिनि । तदनेनानुषङ्गेण वयमद्य धनञ्जयम् । शापेन योजयामेति तथाऽस्त्विति च साऽब्रवीत्'** [आश्व.प.८२.१२-४] इत्युलूपीवचनमनुगीतायाम् । एवं च भक्तिसमानाधिकरणं विष्णुकार्योपकरणं सहजाविष्करणं च यद् बलं तदेवोत्तमत्वसमानाधिकरणमित्युक्तं भवति । वरास्त्रादेस्तदन्यथा । आदिना सन्निधानं शापश्च । शापेनार्जुनमिव चित्राङ्गदात्मजः । एवमन्यावेशनिमित्तं चेदपि तद् बलमन्यथा अनैसर्गिकमत एव नोत्तमत्वगमकमित्यर्थः । तथा चार्जुनः किरातात्मनः शिवस्य वरात्, गाण्डीवशस्त्रबलात्, पाशुपताद्यस्त्रबलात्, ध्वजे हनुमतो रथे कृष्णस्य च सन्निधानात्, नरावेशाच्च द्रौणेर्वरः । नतु नैसर्गिकतया । अन्यात्मकमन्यस्वामिकम् । आत्मशब्दः स्वरूप-वचनो वा । यदधिष्ठानं बलं दृश्यते तन्न तत्स्वरूपम् । अन्यदीयमित्यर्थः । वरादिबलादाहितम् । आवेशे पुनरावेष्टुरेव हि तद् बलम् । न त्वाविष्टस्य । प्रायोऽसुराणां वरास्त्रादिजमनैसर्गिकं बलम् । देवानां नैसर्गिकम् ॥ १८ ॥ देवेषु देवा-वतारेषु च प्रकाशात्मकेषु भक्तिज्ञानाधिक्यम् । तेन अन्यथा असुरादिविवक्षायां बलाधिक्येऽपि न भक्तिज्ञानाधिक्यं

**‘तस्माद् योयो बलज्येष्ठः स गुणज्येष्ठ एव च[१] ।**
**‘बलं हि क्षत्रिये व्यक्तं ज्ञायते स्थूलदृष्टिभिः ॥ २० ॥**

**‘ज्ञानादयो गुणा यस्माज्ज्ञायन्ते सूक्ष्मदृष्टिभिः ।**
**‘तस्माद् यत्र बलं तत्र विज्ञातव्या गुणाः परे ॥ २१ ॥**

**‘देवेष्वेव नचान्येषु वासुदेवप्रतीपतः ।**
**‘क्षत्रादन्येष्वपि बलं प्रमाणं यत्र केशवः ॥ २२ ॥**

शङ्कनीयम् । एवं देवेषु क्वचिदपि अन्यथा बलाधिकस्य भक्तिज्ञानहैन्यं वा भक्तिज्ञानाधिकस्य बलहीनत्वं वा, चकारेण हीनभक्तिज्ञानस्य बलाधिकत्वम्, हीनबलस्य चाहीने भक्तिज्ञाने वा नैव सम्भवन्तीति । यो बलाधिकः, यस्य भक्तिज्ञाने अधिके स एव विष्णोरधिकं प्रियश्च । कथञ्चन केनापि प्रकारेण नेदमन्यथा भवति । भक्तिज्ञानवतः बलाधिकस्यापि देवस्य विष्णुप्रियत्वाभावः, विष्णोरप्रियस्यापि अहीनं बलमहीने भक्तिज्ञाने चेत्येतदसम्भावितमिति ॥ १९ ॥ स एव गुणज्येष्ठ इत्युक्तम् । इदानीं स गुणज्येष्ठ एवेति मुखत आह– तस्मात् । बलज्येष्ठस्यैव विष्णुप्रियत्वात् । एवमन्ययोगायोगयोर्व्यव-च्छेदेन समव्याप्तिं स्फोरयति । चकारेणान्ययोगव्यवच्छेदं समुच्चिनोति । बलं हि क्षत्रिये व्यक्तं प्रत्यक्षत एव ज्ञायते स्थूलदृष्टिभिरपि । व्यज्ञायत च तदानीन्तनैर्भीमादीनां बलम् । व्यक्तं ज्ञायतेऽद्यत्वेऽपि भारताद्यध्ययनेन ॥ २० ॥ ननु सत्यामपि समव्याप्तौ बलस्य व्याप्यत्वमेवाऽम्रेडनेन किमिति पुरस्क्रियते? स्थूलदृश्वानोऽपि यथा पश्येयुरिति कृपया । तदेतदाह–ज्ञानादयः । सूक्ष्मदृष्टिभिरेव ज्ञायन्ते । यत्र बलं तत्र ज्ञानाद्या गुणा इत्युक्ते, व्याप्यं बलं स्थूलदृष्टीनामपि शक्यं द्रष्टुमिति बलेन हेतुना व्यापकाः परेऽन्येऽपि ज्ञानादयो गुणाः सुकरं हि ज्ञाताः स्युरिति ॥ २१ ॥ यत्र बलं तत्र ज्ञानादयो गुणा इति देवेष्वेव मोक्षयोग्येषु । तेन मानुषाणामपि चक्रवर्तिनाममुपसङ्ग्रहः । नान्येषु मनुष्येष्वसुरेषु च । तत् कुतः? तेषां वासुदेवप्रतीपत्वात् । वासुदेव इति मुक्तिप्रदो हि भगवानुच्यते । तेनान्येषु मुक्त्ययोग्येष्विति स्फुटमुदितम् । भावप्रधानश्च निर्देशः । मा वा भूद् भाववचनम् । सप्तम्यास्तसिः । वासुदेवप्रतीपेष्वन्येष्वित्यन्वयः । वा असुदेवप्रतीपत इति च प्रतृण्णम् । वाशब्दो व्यवस्थितविकल्पे । क्वचिदसुदेवप्रतीपतश्चैदवगम्यते, यत्र न स्फुटं वासुदेवप्रतीपत्वम् । यथा मणिमदादिषु । ननु ब्राह्मणकुले जातानां द्रोणादीनामपि बलमधिकं दृष्टम् । तत् कथं **‘क्षत्रियेषु स उत्तमः’** इति? सत्यम्, क्षत्रियेष्वयं नियमः । क्वचिदपवादोऽप्यस्तीत्याह– क्षत्रादन्येष्वपि । तदपि देवेष्वेव । तेषु भुवि प्रजातेषु क्षत्रादन्येष्वपि गुणज्यैष्ठ्यं प्रमापयति । यथा द्रोणः कृपोऽश्वत्थामा च । कदा? यत्र केशवो बलकार्ये दुष्टनिधने प्रवृत्तः । यत्र केशवो ज्ञानकार्ये प्रवृत्तस्तदा तदेव ज्ञानमेव क्षत्रादन्येषु गुणाधिक्यगमकम् । ‘क्वचिदुभयकार्ये भगवति उभयं चेति **‘तदेव च’** इति चकारेणाऽह । केशिनं हतवानिति बलकार्यं केशवमाह । केशपाशाख्यकोटीरवान् बादरायणः केशव इति ज्ञान-

१. ‘एव हि ।’

**‘प्रवृत्तो दुष्टनिधने ज्ञानकार्य्ये तदेव च[1] ।**
**‘अन्यत्र ब्राह्मणानां तु प्रमाणं ज्ञानमेव हि ॥ २३ ॥**

**‘क्षत्रियाणां बलं चैव सर्वेषां विष्णुकार्य्यता ।**
**‘कृष्णरामादिरूपेषु बलकार्य्यो जनार्द्दनः ॥ २४ ॥**

**‘दत्तव्यासादिरूपेषु ज्ञानकार्य्यस्तथा प्रभुः ।**
**‘मत्स्यकूर्म्मवराहाश्च सिंहवामनभार्ग्गवाः ॥ २५ ॥**

---

कार्यं केशवमाह । यथा कृष्णे दुष्टनिधनाय प्रवृत्तेऽश्वत्थामा बलकार्यो बभूव । यथा स एव व्यासावतारे ज्ञानकार्ये भगवति स्वयमपि शुको भूत्वा ज्ञानकार्यो बभूव । अश्वत्थामरूपेणैव च व्यासशिष्यो भूत्वा वेदान् विभजिष्यन् ज्ञानप्रधानो भविष्यति । यथा वा भीमसहचारिणः क्षत्रियास्तस्य मध्वभावे स्वयमपि ज्ञानरतयो यतयोऽभवन्, येषां प्राग्जन्मभवान्यायुधानि मध्वः कुरुक्षेत्रे खानयित्वा न्यदर्शयत् । तथाहि पण्डिताचार्यः– **‘विस्मेरैः स्वैर्निजनृपतनूहेतिदृष्ट्याऽतितुष्टैः’** [म.वि.१०.४९] इति । **‘–पुराऽऽजौ शिष्याणामायुधानि प्रकटयति पुरा’** [प्र.न.मा.२१] इति च । **‘यौधोऽत्र राजा त्वमितीरिते गुरुं ममाऽयुधं क्वेति जगाद सत्यवाक् । खातेऽमुनोक्ते कुतळे महागदां दृष्ट्वाऽऽप्तवाचं श्रदधुर्गुरुं हि ते’** इति प्राचीनम् । राजा त्वमभव इतीरिते गुरुणा । सत्यवाक् सत्यतीर्थः । एवं विशेषप्रसङ्गं विहाय, अन्यत्र सामान्यप्रसङ्गे तु ब्राह्मणानां ज्ञानमेव ॥ २२–३ ॥ क्षत्रियाणां बलमेव प्रमाणमिति च हि प्रसिद्धं लोके शास्त्रे च । सर्वेषामपि वर्णानां विष्णुकार्यता । यथाऽत्र विदुरः । बलसाध्यं दुष्टहननादि कार्यमवतारप्रयोजनं यस्य, यत्र वा । एवं ज्ञानकार्य इत्यपि । विष्णोः सेवारूपं कार्यमेव कार्यं येषां ते विष्णुकार्याः । विष्णुप्रीत्यर्थं कार्यं येषामिति वा । विष्ण्वर्थमेव कर्मणां कार्यता वा । यस्माज्जनार्दनः दुर्जनमर्दनायावतीर्णः तस्माद् बलकार्यः । तथा ज्ञानकार्ये बलकार्ये च प्रभुरपि क्वचिदवतारेषु ज्ञानकार्यं क्वचिद् बलकार्यं विशेषतोऽभिव्यनक्तीत्यर्थः ॥ २४ ॥ कृष्णरामाभ्यां दत्तव्यासाभ्यां चाऽदिमन्ति भगवद्रूपाण्याह– मत्स्येत्यादिना । सिंहो नृसिंहः । केवलं स्वरूपनिर्देशोऽयम् । नात्रावतारक्रमविवक्षा । मत्स्यकूर्मवराहा इति तिर्यगवतारत्वेन त्रयाणां सहोक्तिः । तत्रापि जलचरो मत्स्यः, जले च स्थले चेत्युभयचरः कूर्मः, स्थलचरो वराह इति क्रमः । सिंहोऽपि नरो बभूव । वामनोऽपि त्रिविक्रमो बभूव । भृगुकुलोत्पन्नोऽपि क्षत्रधर्मा बभूवेति स्वभावद्वैविध्यप्रदर्शनाय नरसिंहादीनां त्रयाणां सहोक्तिः । तत्रापि नरसिंहरूपे किञ्चिदिव तिर्यक्त्वम् । अतस्तदेव सिंह इति मुखत आह । वामनो बालः, भार्गवः प्रबुद्ध इति क्रमः । अथच वामनो दिवि भवः । भार्गवः प्रथमो भौमोऽवतार इति ॥ २५ ॥

---

१. **‘तथैव च’**

**'राघवः कृष्णबुद्धौ च कृष्णद्वैपायनस्तथा ।**
**'कपिलो दत्तवृषभौ[१] शिंशुमारो रुचेः सुतः ॥ २६ ॥**

**'नारायणो हरिः कृष्णस्तापसो मनुरेव च ।**
**'महिदासस्तथा हंसः स्त्रीरूपो हयशीर्षवान् ॥ २७ ॥**

---

बुद्धस्तु न भगवदवतारः, बलरामसाहित्येन सङ्ख्यापूर्तिरित्येके । कृष्णः पूर्णावतारः, बुद्धस्त्वपूर्णावतार इत्यन्ये । तदुभयनिरासार्थं कृष्णबुद्धाविति सहोक्त्या निर्दिदेश । कृष्ण एव द्वीपे जातत्वाद् द्वैपायनः । स्वतन्त्रमस्वतन्त्रं चेति द्वे तत्वे पातीति द्विपस्तत्ववादः । तेन द्वैपास्तत्ववादिनः । तेषामयनश्चायम् । अत एव तत्ववादे रतानामयनत्वाद् वादरायण एव बादरायण इत्युच्यते । कृष्णद्वैपायनोऽपि कश्चन ऋषिः, तत्र भगवदावेश इत्येके । तन्निरासाय कृष्णद्वैपायनोऽपि तथा केवलो विष्णुरित्याह । कर्दमाद् देवहूत्यां जातः कपिलो भगवान् । **'साङ्ख्यस्य वक्ता कपिलः'** । भगवदवतारादन्यः कपिलनामा निरीश्वरसाङ्ख्यस्य वक्ता कश्चनर्षिरप्यस्ति । तद् व्युदासाय तथा कपिल इत्याह । यथा कृष्णद्वैपायनस्तथा भगवदवतारभूतः कपिलोऽपि केवलो विष्णुरेव । न बलरामादिवदावेशावतारः । वृषभः क्षत्रियत्वेऽपि ज्ञानकार्यप्रधान इति सूचनाय दत्तेन सहोक्तिः । मेरुदेव्यां नाभेर्जातो वृषभः । अत्रेरनसूयायां जातो दत्तः । आन्वीक्षिकीं नाम योगविद्यां यः प्रवर्तयामास । शिं शिवं शवति गच्छतीति शिंशुः । शु गतौ । शिवान्तर्यामी सन् मारयति जगदिति शिंशुमारो ध्रुवलोकगः । मां रमां रमयतीति च मारः । शिशुरिव क्रीडनकं जगन्मारयतीति च । बिन्दुरवधारणे । स्वयं शिशुरिव निर्लिप्तः प्रमां राति ब्रह्मादीनामिति वा । वटपत्रशायी वा शिशुः । अत एव शिशुमार इत्यर्वाचीनाः । **'एतज्ज्योतिरनीकं शिंशुमारसंस्थानस्य भगवतो वासुदेवस्य योगधारणामनुवर्णयन्ति'** [५.२२. २१] इति भागवते । अष्टसु वसुष्वेको दोषो नाम प्रदोषमानी । तस्य भार्या शर्वरी नाम शर्वरीमानिनी । तयोराविर्भूतः शिंशुमारो भगवान् । तथाहि स्मर्यते– **'दोषस्य शर्वरीपुत्रः शिंशुमारो हरेः कला'** [भाग.६.६-१४] इति । अयमेव किंस्तुघ्न उच्यते । ये कुत्सितं दोषमेव स्तुवन्ति वर्णयन्ति ते किंस्तवः । तान् हन्तीति किंस्तुघ्नः । **'नारायणः साक्षात् किंस्तुघ्नः'** इति भागवतात्पर्ये । **'किंस्नुघ्नः'** इत्येके । तदा कुत्सितं स्नुवन्तीति व्याख्येयम् । ष्णु प्रस्रवणे । रुचिप्रजापतेराकूत्यां जातो यज्ञः । यः स्वायम्भुवमन्वन्तर इन्द्रो भूत्वा दैत्यान् जघान । यज्ञ इत्युक्ते पुरन्दरपुत्रः पादमानी यज्ञ इति भ्रमेयुरिति रुचेः सुत इत्युक्तम् ॥ २६ ॥ नारायणो हरिः कृष्ण इति त्रयो धर्मतनयाः दक्षतनयायाः प्रसूत्याः पुत्र्यां मूर्त्यां जाताः । तत्र हरिः स्वायम्भुवमन्वन्तरे उपेन्द्रश्च । यत्र स्वयं यज्ञनामेन्द्रो बभूव । **'तत्रोपेन्द्रेण हरिणा जितो धर्मात्मजेन च'** [भा.ता.४.२६] इति च । कृष्णः प्रायस्तापसमन्वन्तर उपेन्द्रः । अन्यस्याकीर्तनात् । नारायणो नरेण सह तपस्तेपे हिमवति नगाधिराजे । केचित् तापसं मनुं हरिनामानं न विष्णुं मन्यन्ते । प्रियव्रतसुतोऽयं तामसो नाम मनुरित्यन्ये तामसप्रज्ञाः । तदर्थं तापसो मनुश्च केवलो

---

१. **'दत्तऋषभौ'**

**'तथैव बडबावक्त्रः[1] कल्की धन्वन्तरिः प्रभुः ।**
**'इत्याद्याः केवलो विष्णुर्नैषां भेदः कथञ्चन ॥ २८ ॥**

विष्णुरेवेत्याह । प्रियव्रतस्य द्वितीया भार्या तपा नाम । तस्या अयमात्मजस्तापसः । महिदासस्यापि विष्ण्ववतारत्वं केचिन्नानुमन्यन्ते । अतः महिदासोऽपि तथेत्याह । विशालात् प्रजापतेरितरायां जातो महिदास ऐतरेयः । य ऐतरेयसंहिताया ब्राह्मणारण्यकोपनिषदां च प्रवर्तकः । महान्तो ब्रह्मादयोऽपि यस्य दासाः स महिदासः । मही महिता रमाऽपि यस्य दासी । हंसः, यो ब्रह्मणा प्रार्थितः प्रादुर्भूय हंसरूपेण तत्वमुपादिदेश । **'स मामचिन्तयद् देवः प्रश्नपारविनिश्चयम् । तस्याहं हंसरूपेण समीपमगमं तदा'** [भाग.११.१३.१९] इति च । स्त्रीरूपः मोहिनीरूपः । हयशीर्षवान् हयग्रीवः । शीर्षमिति स्वतन्त्रं प्रकृत्यन्तरमिति द्योतयन् शीर्षवानित्याह ॥ २७ ॥ बडबावक्त्रोऽपि तथैव स्त्रीरूपः । अत एव बडबावक्त्रनामा । अश्वा हि बडबा । बट् बलमवतीति । बडं बलिनं हयं बातीच्छति वा । ब कामने । तथाहि च्छन्दोगभाष्ये–**'वाचि संस्थश्च स्त्रीरूपो हयशीर्षकः'** इति । बडबावक्त्रः समुद्रान्तर्वासी वडवाग्निरिति केचित् । **'यो वाडवाग्निर्नृहरिर्विचिन्त्यः'** इति च प्रमाणं तत्रोपस्कुर्वन्ति । अन्तर्यामिविवक्षया सावकाशमेतत्– वडवाग्निगतो नृहरिरिति । **'क्रोडात्मा बडवावक्त्रो धर्मो वागीश्वरस्तथा । एकाम्भोनिधिशायी च भगवान् कमठेश्वरः'** [अहि.सं.५.५९] इति पञ्चरात्रेषु । वडबावक्त्रनामा महर्षिर्भगवदवतार इत्यपि केचिदभिप्रयन्ति– **'नारायणो लोकहितार्थं वडवामुखो नाम पुरा महर्षिर्बभूव । तस्य मेरौ तपस्तप्यतः समुद्र आहूतो नाऽगतः । तेनामर्षितेनाऽत्मगात्रोष्मणा समुद्रः स्तिमितजलः कृतः । स्वेदप्रस्यन्दनसदृशश्चास्य लवणभावो जनितः'** [शां.प.३५१.६१] इति भारतवचनमुदाहरन्ति । एतदपि पृथ्वादिवद् विशेषावेशपरमिति न निर्णायकम् । धन्वन्तरिरिति भगवदावेशभाक् कश्चन राजाऽऽसीत् । यो दीर्घतमसः पुत्रः काशीं शशास । आयुर्वेदं च प्रवर्तयामास । तद्व्यावृत्तये प्रभुरित्याह । प्रभुरयं देवानाममृतदानाय दैत्यानां वञ्चनाय च । यश्च काशिराजस्य धन्वन्तरेरपि प्रभुः । कथं धन्वन्तरिः? धन्वनि संसाराख्ये मरुदेशे तरिरिव तारक इति । अयमत्रानुसन्धानक्रमः– त्रिविधा अवताराः पठ्यन्ते– ज्ञानकार्या बलकार्या मोहकार्याश्चेति । तत्र मोहो नाम बलादसुराणां सतः पथः प्रच्यावनमेवेति मूलतो द्वेधैवावताराः । अविप्रलम्भकत्वाच्च भगवतः । तत्र मत्स्यादिषु राघवान्तेषु सप्तसु बलकार्यो जनार्दनः । कृष्ण उभयकार्यः । दुष्टक्षत्रहननेन बलकार्यः । गीताद्युपदेशेन ज्ञानकार्यश्च । बुद्धश्च मुखतो मोहकार्योऽप्यन्ततो बलज्ञानकार्यः । बलादासुरान् वेदपथात् प्रच्याव्य देवानां प्रशान्तविद्याप्रदानात् । उभावपि समानकार्यावित्यतश्च कृष्णबुद्धाविति समस्याऽह । कृष्णद्वैपायनः कपिलो दत्तश्च ज्ञानकार्याः । वृषभः क्षत्रावतारत्वान्मूलतो बलकार्योऽपि प्रजानां स्वरूपोपदेशाज्ज्ञानकार्योऽपि । शिंशुमारो बलकार्यः । रुचेः सुतो यज्ञश्च । नारायणो ज्ञानकार्यः । हरिकृष्णौ तापसश्च मनुर्बलकार्याः । महिदासो हंसश्च ज्ञानकार्यौ । स्त्रीरूपो रूपबलादसुरान्मोहयामासेति मोहकार्योऽपि बलकार्यः । हयग्रीवोऽसुरहननेन बलकार्योऽपि वेदाविष्कारेण ज्ञानकार्यः । बडबावक्त्रश्च । कल्की बलकार्यः । धन्वन्तरिश्च । तदेतत् प्रभुरिति सूचितम् । अथ च धन्वन्तरिनाम्नि काशिराज आविष्टः स एवाऽयुर्वेदं प्रवर्तयामासेति ज्ञानकार्योऽपि स्यात् ।

१. **'वडवावक्त्रः'**

**'न विशेषो गुणैः सर्वैर्बलज्ञानादिभिः क्वचित् ।**
**'श्रीब्रह्मरुद्रौ शेषश्च[१] वीन्द्रेन्द्रौ काम एव च ॥ २९ ॥**

**'कामपुत्रोऽनिरुद्धश्च सूर्य्यश्चन्द्रो[२] बृहस्पतिः ।**
**'धर्म्म एषां तथा भार्य्या दक्षाद्या मनवस्तथा ॥ ३० ॥**

---

वस्तुतो बलकार्यमपि ज्ञानवृद्ध्या एवेत्यन्ततः सर्वावतारेषु ज्ञानकार्य एव भगवानिति हृदयम् । इत्याद्या इति । एवम्प्रकाराः सर्वे उपेन्द्रा उक्तातिरिक्ता वैकुण्ठाजितसार्वभौमाद्यास्तथा सनत्कुमारपुरुषविष्णुमुखाश्चाऽदिशब्दोक्ताः । वासुदेवाद्याः, केशवाद्याः, अजाद्याः, नारायणाद्याः, विश्वाद्याश्चेति । तथाहि बृहद्भाष्ये [३.५.४]–**'मत्स्यकूर्मक्रोडसिंहवटुभार्गवराघवाः । कृष्णबुद्धौ कल्किदत्तहयशीर्षैतरेयकाः । पाराशर्यश्च कपिलो वैकुण्ठो वृषभस्तथा । यज्ञो धन्वन्तरिश्चैव स्त्रीरूपस्तापसो मनुः । नारायणो हरिः कृष्ण उपेन्द्राः सर्व एव च । एवमाद्या हरेः साक्षात् प्रादुर्भावाः प्रकीर्तिताः'** इति पैङ्गिश्रुतिवचनम् । केवलः सर्वप्रकारेणाऽप्यभिन्नः । कथञ्चन केनापि प्रकारेण, अभेदसाहित्येनापि, नैषां रूपाणां भेदः । तथाच न भेदः, नापि भेदाभेदः, किन्तु केवलाभेद इत्यर्थः ॥ २८ ॥ तदेव स्फुटमाह–क्वचिन्मूलरूपेऽवताररूपेषु वा गुणैर्न विशेषः, न कोऽपि व्यत्यास इति । ज्ञानकार्योऽपि पूर्णबलः । बलकार्योऽपि पूर्णज्ञान इत्यादि । **'पूर्णमदः पूर्णमिदम्–'** इति श्रवणात् । अदः ज्ञानकार्यमपि रूपं बलादिपूर्णम् । इदं बलकार्यमपि ज्ञानादिपूर्णमिति । नन्वन्यान्यपि भगवद्रूपाणि सन्ति । तथाहि स्मरन्ति–**'नमोनमोऽविशेषस्त्वं त्वं ब्रह्मा त्वं पिनाकधृक् । इन्द्रस्त्वमग्निः पवनो वरुणः सविता यमः । वसवो मरुतः साध्या विश्वेदेवगणा भवान्'** [वि.पु.१.९.६९–७०] इति । **'अहं भवान् भवश्चैव य इमे मुनयोऽग्रजाः । सुरासुरनरा नागा गावो मृगसरीसृपाः'** [भाग.२.६.१२] **'सर्वं पुरुष एवेदं भूतं भव्यं भवच्च यत्'** [१५] इति च । **'ऋषयो मनवो देवा मनुपुत्रा महौजसः । कलाः सर्वे हरेरेव सप्रजापतयः स्मृताः'** [१.३.२७] इति च । एतेषां वचनानां भावं स्फुटयितुं द्विविधानि भगवतो रूपाणि भवन्ति अवताररूपाणि, आवेशरूपाणि च, अतो न विरोध इति समन्वयं बोधयन् सम्प्रत्यावेशरूपाण्याह–श्रीब्रह्मरुद्रौ । भगवतः सृष्टिसंहारकर्मणि प्रमुखाङ्गत्वात्, पुत्रत्वेन पौत्रत्वेनान्तरङ्गत्वाच्च श्रीयुक्तौ ब्रह्मरुद्रौ । क्वचित् **'श्रीर्ब्रह्मरुद्रौ'** इति पठ्यते । तदा तु स्वरसोऽर्थः । अथापि पूर्वोक्तानामेषां सर्वेषां भार्या इत्युपरितनवचनानुगुण्येन पूर्वं पुरुषाणामेवोल्लेखाद् 'श्रीब्रह्मरुद्रौ' इति विसर्गरहितः पाठ इति भाति । ब्रह्मेति वायुश्च । वीन्द्रः पक्षीशो गरुडः । अत्र तारतम्यक्रमो न विवक्षितः । सृष्टिसंहाराङ्गत्वेन ब्रह्मरुद्रयोः सह पाठः । अपौरुषेयवेदमानित्वेन वीन्द्रेन्द्रयोः । यः स्वरूपतः काम एव स्कन्दः, सोऽप्यत्र विवक्षितः । सनत्कुमारः सनकादिभिः सह पठ्यते ॥ २९ ॥ कामपिताऽप्यनिरुद्धो भगवानिति कामपुत्रोऽनिरुद्ध इत्याह । सूर्यश्चन्द्रो नेत्रश्रोत्रमानिनौ । चन्द्रस्य मनोमानित्वमप्यस्तीत्यन्तरङ्गत्वात् पृथगुक्तिः । बुद्धिमानित्वाद् बृहस्पतेर्मनोमानिना सहोक्तिः । मनोबुद्धी चन्द्रबृहस्पती इति । एकस्ताराकमिता, अपरस्तारापतिरिति च सह स्मरणबीजम् । उभावपि तारापती इति च । एकस्ताराणां पतिरपरस्ताराया इति । ततो यमधर्मः सूर्यचन्द्रसमानकक्ष्यः सूर्यपुत्रश्च । एषां

---

१. **'श्रीब्रह्मरुद्रशेषाश्च'** २. **'सूर्यचन्द्रौ'**

**'मनुपुत्राश्च ऋषयो नारदः पर्वतस्तथा ।**
**'कश्यपः सनकाद्याश्च वह्न्याद्याश्चैव देवताः ॥ ३१ ॥**

**'भरतः कार्त्तवीर्य्यश्च वैन्याद्याश्चक्रवर्त्तिनः ।**
**'गयश्च लक्ष्मणाद्याश्च त्रयो रोहिणिनन्दनः ॥ ३२ ॥**

---

ब्रह्मादीनां धर्मान्तानां भार्याः । दक्षाद्या मनवश्च तथा सभार्याः । दक्षाद्या इत्याद्यपदेन अन्येषां प्रजापतीनां ग्रहणम् । **'मरीचिरत्र्यङ्गिरसौ पुलस्त्यः पुलहः क्रतुः । वसिष्ठश्च भृगुर्दक्षः'** इति दक्षप्रधाना नव प्रजापतयः । अथर्वाणमागृह्य दश वा प्रजापतयः । मनवः स्वायम्भुवाद्यास्त्रयोदश तापसवर्जम् ॥ ३० ॥ मनुपुत्राः प्रियव्रतादयश्चक्रवर्तिनः । ऋषयो विश्वामित्राद्याः । ऋषिप्रसङ्गात् प्राप्तो देवर्षिर्नारदः । तत्सम्बन्धात् पर्वतस्तथा । यं नारदभागिनेयं वदन्ति । मुख्यतः सखायौ च तौ सयुजौ । **'पर्वतः हिमवान् । तदभिमानी तन्नामा'** इत्येके । नह्यत्र स्थावराणां प्रसङ्गः स्वरसः । नापि हिमालयमानिनः पर्वत इति नाम । किन्तु हिमालय इत्येव । यदि सर्वेषां पर्वतानामभिमानिवचनं तर्हि पर्वता इति वक्तव्यम् । न पर्वत इति । तस्मान्नारदसुहृदेवात्र पर्वत इति । काश्यपो मारीचः । समस्तशास्त्रप्रकाश्यं भगवत्तत्वं पातीति काश्यपः । स एव दीर्घलोपेन कश्यपश्च । यद्वा कश्यत इति कश्यः । सर्वशब्दवाच्यः । कश शब्दे । तं हृदये पातीति कश्यपः । पश्यतीति वा कश्यपः । **'कश्यपः पश्यको भवति'** [तै.आ.१.८.८] इति हि श्रुतिः । सनकाद्याश्चत्वारः । येषु चतुर्षु सनक आद्यः, निदेशक्रमेण । वह्न्याद्या इत्याद्यपदेनावशिष्टा गणदेवता गृह्यन्ते वसवो विश्वेदेवा रुद्रा आदित्या मरुत इति । मध्ये ऋषिमनुमनुपुत्रादीनामुल्लेखात् पुनर्देवता इत्याह । एवकारेण देवताप्रकारा एवाऽदिपदग्राह्या इत्याह । स्वायम्भुवमनोरुत्तमत्वात् **'मनवस्तथा'** इति प्रथमग्रहणम् । दक्षसमकक्ष्यत्वाच्च दक्षेण सहपठनम् । एकोक्तिसौकर्यायान्येषां च ग्रहणम् । मनुप्रस्तावाच्च मनुपुत्राणाम् । अनन्तरं मन्वन्तरर्षीणामन्येषां च । प्रसङ्गादेव मनुपुत्राः पूर्वपठिता नर्षिभ्य उत्तमा इतीति ज्ञापयितुमेव **'मनुपुत्राश्च ऋषयः'** इत्यृषीन् विश्लिष्टान् पपाठ ॥ ३१ ॥ श्रीब्रह्माद्या देवताः मूलरूपेऽपि विशेषावेशिनो हरेः । तथा मनवो मनुपुत्राद्याश्च । अवतारेषु पुनर्लक्ष्मणाद्या रूपविशेषावेशिन इति । भरतः कार्तवीर्यश्च चक्रवर्तिनौ । भरतस्य भगवत्पुत्रतया कार्तवीर्यस्य भगवच्छिष्यतया च पृथङ्निर्देशः । वैन्यः पृथुः । राजराजेश्वरस्य भगवतो विशेषसन्निधानपात्रम् । आदिना ध्रुवमान्धातृशशबिन्द्वादयः । गयश्च चक्रवर्ती । तस्य चक्रवर्तिषु विशिष्टत्वात् स इह पृथगुक्तः–गयश्चेति । चकारात् प्रियव्रतश्च । **'प्रियव्रतो गयश्चैव कर्मदेवसमो गुणैः'** इति षाड्गुण्यवचनं भागवततात्पर्ये । **'गयो राजर्षिप्रवर उदारश्रवा अजायत साक्षाद् भगवतो विष्णोर्जगदभिरक्षया गृहीतसत्त्वस्य कलयाऽऽत्मवत्तालक्षणेन महापुरुषतां प्राप्तः'** [५.१५.४] । इति च भागवते । अथच लक्ष्मणभरतशत्रुघ्नास्त्रयः सङ्कर्षणप्रद्युम्नानिरुद्धानां भगवद्रूपाणां विशेषावेशिनः । रोहिणिनन्दनो बलरामश्च भगवतः सङ्कर्षणस्य । **'ङ्यापोः सञ्ज्ञाछन्दसोर्बहुलम्'** [अ.सू.६.३.६३] इति स्मरणाद् रोहिणीनन्दनो रोहिणिनन्दनो भवति । **'ङ्यन्तस्य आबन्तस्य च सञ्ज्ञाछन्दसोर्बहुलं ह्रस्वो भवति । ङ्यन्तस्य सञ्ज्ञायाम्– रेवतिपुत्रः, रोहिणिपुत्रः, भरणिपुत्रः'** इति काशिका । **'मारुतिवल्लभ**

पं. ७ स्वायम्भुवाद्या**स्त्रयोदश तापसवर्जम्** ॥ ३० ॥

**'प्रद्युम्नो रौग्मिणेयश्च[१] तत्पुत्रश्चानिरुद्धकः ।**
**'नरः फल्गुन इत्याद्या विशेषावेशिनो हरेः ॥ ३३ ॥**

**'वालिसाम्बादयश्चैव किञ्चिदावेशिनो हरेः ।**
**'तस्माद् बलप्रवृत्तस्य रामकृष्णात्मनो हरेः ॥ ३४ ॥**

**'अन्तरङ्गं हनूमांश्च भीमस्तत्कार्य्यसाधकौ[२] ।**
**'ब्रह्मात्मको यतो वायुः पदं ब्राह्ममगात् पुरा ॥ ३५ ॥**

**'वायोरन्यस्य न ब्राह्मं पदं[३] तस्मात् स एव सः ।**
**'यत्र रूपं तत्र गुणा भक्त्याद्याः स्त्रीषु नित्यशः ॥ ३६ ॥**

**'रूपं हि स्थूलदृष्टीनां दृश्यं व्यक्तं ततो हि तत् ।**
**'प्रायो वेत्तुं न शक्यन्ते भक्त्याद्याः स्त्रीषु यत् ततः[४] ॥ ३७ ॥**

---

**जानकिकान्त'** इति, **'देवकिनन्दन'** इति, **'रुग्मिणिवल्लभ'** इति च भगवत्पादः । आबन्तस्य च सञ्ज्ञायाम्–**'सगिरि-वरधरातळवह'** इति वक्यव्ये–**'सगिरिवरधरतळवह'** इति ह्रस्वः । यथा वा **'रमामनोवल्लभ'** इति वक्तव्ये **'रममनोवल्लभ'** इति । छन्दसि च–**'अजाक्षीरेण जुहोति'** इति पठितव्ये **'अजक्षीरेण जुहोति'** इति पठन्ति ॥ ३२ ॥ रुग्मिणीतनयत्वेन जातः प्रद्युम्नश्च भगवतः प्रद्युम्नस्य । तत्पुत्रत्वेन जातोऽनिरुद्धश्च भगवतोऽनिरुद्धस्य । भगवद्रूपापेक्षयाऽत्यल्पोऽ-निरुद्धोऽयमित्यनिरुद्धकः । रुग्मिणीत्येव प्रतनं रूपम् । रुक्मिणीति वैयाकरणानामपभ्रंशः । **'यदा पश्यः पश्यते रुग्मवर्णम्'** इति च श्रुतिपाठ इति विवृतं प्रथमाध्याये [६४] । नरः फल्गुनश्च भगवतो नररूपस्य । तैः सह बन्धुतया विहरतीति व्यवहरतीति च हरिः ॥ ३३ ॥ वाली य इन्द्रः । साम्बो यः स्कन्दः । के पुनरिमे वालिसाम्बाभ्यामादिमन्तः? कर्ण-द्रोणादयः । रामायणे यथा वाली किञ्चिदावेशयुक् तथाऽत्र कर्णः । बृहस्पतेरवतारत्वसाम्येऽपि उद्धवोऽधिकावेशयुक्, द्रोणः किञ्चिदावेशयुक् । एवमश्वत्थामाऽपि । यद्यपि ते भगवत्प्रतीपमाचरन् । अथाप्यन्ततो भगवत्कार्याङ्गत्वात् किञ्चिदा-वेशिन एवेत्येवकारार्थः । आविश्य क्वचित् तेषां सामर्थ्यं हरतीति हरिः । रामकृष्णात्मनो हरेः । शत्रून् हरतीति हरिः बलकार्यप्रवृत्तो भगवानित्यर्थः । स्वीयान् न हरतीत्यहरेरिति च । हृञ् हरणे । हरणमिति प्राणहरणमुच्यते । हरणमिति स्वीकारः स्तेयं नाशनं चोच्यते ॥ ३४ ॥ अन्तरङ्गं प्रधानसहकारितया आप्ततमतया च । योयः पुरा वायुः स ततः परं नियत्या ब्राह्मं पदमगात् । य इदानीं वायुः सोऽपि गच्छति पुरा ॥ ३५ ॥ वायोरन्यस्य न गम्यम् । स वायुः

---

१. **'रौक्मिणेयश्च'** २. **'–साधकः ।'** ३. **'ब्राह्मपदम्'** ४. **'यत्नतः ।'**

**'यासां रूपं गुणास्तासां भक्त्याद्या इति निश्चयः ।**
**'तच्च नैसर्गिकं रूपं द्वात्रिंशल्लक्षणैर्य्युतम्** **॥ ३८ ॥**

**'नालक्षणं वपुर्म्मात्रं गुणहेतुः कथञ्चन ।**
**'आसुरीणां वरादेस्तु वपुर्म्मात्रं भविष्यति** **॥ ३९ ॥**

**'न लक्षणान्यतस्तासां नैव भक्तिः कथञ्चन ।**
**'तस्माद् रूपगुणोदारा जानकी रुग्मिणी[1] तथा** **॥ ४० ॥**

**'सत्यभामेत्यादिरूपा श्रीः सर्वपरमा मता ।**
**'ततः पश्चाद् द्रौपदी च सर्वाभ्यो रूपतो वरा** **॥ ४१ ॥**

**'भूभारक्षपणे साक्षादङ्गं भीमवदीशितुः ।**
**'हन्ता च वैरहेतुश्च भीमः पापजनस्य तु** **॥ ४२ ॥**

---

स एव ब्रह्मैव । पुरुषेषु यथा बलं स्थूलदृष्टीनामपि व्यक्तं दृश्यं देवतास्त्रीषु रूपं तथा । इति हि यस्मात् ततस्तत् रूपं गुणव्याप्यं गुणान्तरगमकं स्त्रीणाम् । शास्त्रप्रसिद्धं हि प्रमेयमेतत् । यत् यतः भक्त्याद्या बहुलं स्थूलदृष्टीनां वेत्तुं न शक्यन्ते । ततस्तासां रूपवन्न मुखतो व्याप्यत्ववचनमिति ॥ ३६–७ ॥ तासां भक्त्याद्या गुणाः । द्वात्रिंशल्लक्षणैः समस्तैर्व्यस्तैर्वा युतम् । अलक्षणादधिकानि यत्र लक्षणानि तादृशं रूपं गुणगमकम् । तदपि क्वचिदावेशादिना कादाचित्कं स्यात् । अतः स्वाभाविकम्, स्वरूपभूतम्, अत एव च यावद्द्रव्यभावि चेति रूपं विशेष्यते । तेन अलक्षणेभ्योऽधिकलक्षणोपेतं यावद्द्रव्यभावि च यद्रूपं तदेव भक्त्यादिगमकमिति निष्कृष्याऽह– तच्च नैसर्गिकमित्यादिना ॥ ३८ ॥ वरादेस्तु वपुर्मात्रं भविष्यति । वरात्, आवेशात्, मायया वा कादाचित्कं सुन्दरं वपुर्मात्रम् । नैसर्गिकरूपस्यैव गुणयोगनैयत्यान्नात्र नियमभङ्ग इति भावः ॥ ३९ ॥ जानकी रुग्मिणी तथा । **'राघवत्वेऽभवत् सीता रुग्मिणी कृष्णजन्मनि । अन्येष्वप्यवतारेषु विष्णोरेषाऽनपायिनी'** [उ.खं.२४७.१७] इति पाद्मे ॥ ४० ॥ वस्तुतः सर्वेभ्यो जीवेभ्यः परमा । अथापि स्त्रीलक्षणप्रसङ्गात् सर्वेभ्यः स्त्रीजीवेभ्यः परमेति च व्याख्येयम् । सर्वाभ्य इत्युत्तरवचनसंवादात् । ततः पश्चात् द्रौपदी च । ततः पाश्चात्याभ्यः सर्वाभ्यो रूपतो गुणतश्च वरा । रूपनान्तरीयकत्वात् गुणत इति पृथगनुक्त्वा चकारेणोपसञ्जग्राह ॥ ४१ ॥ वैरहेतुश्च । पापजनस्य स्वभावसहजं भगवति वैरमुद्बोध्य हन्तीत्यर्थः । यतः प्रकृत्या पापः स जनः । पापेन सहैव जायत इति पापजनः पापप्रकृतिः । तमेव विशेषं तुना द्योतयति । पापजन

---

१. **'रुक्मिणी'**

**‘द्रौपदी वैरहेतुः सा तस्माद् भीमादनन्तरा ।**
**‘बलदेवस्ततः पश्चात् ततः पश्चाच्च फल्गुनः ॥ ४३ ॥**

**‘नरावेशादन्यथा तु द्रौणिः पश्चात् ततोऽपरे ।**
**‘रामवज्जाम्बवत्याद्याः षट् ततो रेवती तथा ॥ ४४ ॥**

**‘लक्ष्मणो हनुमत्पश्चात् ततो भरतवालिनौ ।**
**‘शत्रुघ्नस्तु[1] ततः पश्चात् सुग्रीवाद्यास्ततोऽवराः ॥ ४५ ॥**

**‘रामकार्य्यं तु यैः सम्यक् स्वयोग्यं न कृतं पुरा ।**
**‘तैः पूरितं तत्[2] कृष्णाय बीभत्स्वाद्यैः समन्ततः ॥ ४६ ॥**

**‘अधिकं यैः कृतं तत्र तैरूनं कृतमत्र तत्[3] ।**
**‘कर्ण्णाद्यैरधिकं यैस्तु प्रादुर्भावद्वये कृतम् ॥ ४७ ॥**

---

इति न पापकृदुच्यते । किन्तु पापप्रकृतिरुच्यत इति । अन्यथा पापस्येत्येवावक्ष्यत् ॥ ४२ ॥ द्रौपदी तु न स्वयं हन्ति । किन्तु हननहेतुं भगवति वायौ च वैरं जनयति ॥ ४३ ॥ अन्यथा नरावेशं विहाय स्वरूपमात्रग्रहणे बलरामात् पश्चात् द्रौणिः । पश्चात् फल्गुनादयः । जाम्बवत्याद्याः षट् जाम्बवतीनीलाभद्रामित्रविन्दाकाळिन्दीलक्षणाः रामवत् द्रौपद्या अनन्तराः, रेवतीत उत्तमा इत्यर्थः । एतदेव रामसादृश्यं नाम । नत्वेककक्ष्यागतत्वम् । बलरामात् किञ्चिदूनत्वा-दासाम् । प्रमेयविशेषस्तूपरिष्टाद् वक्ष्यते–**‘रामेण तुल्या जाम्बवती प्रियत्वे कृष्णस्यान्याः किञ्चिदूनाश्च तस्याः । यदाऽऽवेशो बहुलः स्याद् रमायास्तदा तासु प्रीयते केशवोऽलम् । यदाऽवेशो ह्रासमुपैति तत्र प्रद्युम्नतो विंशगुणाधिकाः स्युः’** [२०.६१–२] इति । अथापि **‘तासां मध्ये जाम्बवती प्रधाना’** [६०] इति च । यथा रामो गदायुद्धं शिक्षयित्वा दुर्योधनस्य कृष्णे भीमे च वैरहेतुर्बभूव एवं जाम्बवत्याद्या अपि कृष्णवरणेनाऽसुराणामासुरीणां चासूयाजननेन कृष्णे वैर-हेतुवो बभूवुः । ततः रेवती या शेषभार्या वारुणी तथा वैरहेतुः स्वसौन्दर्येण बलरामवरणेन च तामसान् मोहयित्वा ॥ ४४ ॥ एवं रामावतारे लक्ष्मणो हनुमतः पश्चादनन्तरं हन्ता च वैरहेतुश्च । भरतवालिनौ यौ कामश्चेन्द्रश्च । भरते विशेषावेशात् प्रथमनिर्देशः । किञ्चिदावेशाद् वाली पश्चात् । शत्रुघ्नोऽनिरुद्धस्ततः पश्चात् । तुना तस्य कामपुत्रत्वं स्मारयति ॥ ४५ ॥ यैः बीभत्स्वाद्यैः पुरा वाल्यादित्वे स्वयोग्यं पूर्णतया न कृतं तैः तत् स्वयोग्यं भगवत्कार्यं कृष्णाय कृत्वा पूरि-तम् । समन्ततः सामग्र्येण ॥ ४६ ॥ यैः कर्णाद्यैस्तत्र रामावतारे सुग्रीवत्वादिदशायां तत् भगवत्कार्यं स्वयोग्यादधिकं

---

१. **‘शत्रुघ्नश्च ततः’** २. **‘पूरितं तु कृ–’** ३. **‘–मत्र तु ।’**

**‘विविदाद्यैर्हि तैः पश्चाद् विप्रतीपं कृतं हरेः ।**
**‘प्रादुर्भावद्वये ह्यस्मिन् सर्वेषां निर्ण्णयः कृतः ॥ ४८ ॥**

**‘नैतयोरकृतं किञ्चिच्छुभं वा यदिवाऽशुभम् ।**
**‘अन्यत्र पूर्य्यते क्वापि तस्मादत्रैव निर्ण्णयः ॥ ४९ ॥**

**‘पश्चात्तनत्वात् कृष्णस्य वैशेष्यात् तत्र निर्ण्णयः ।**
**‘प्रादुर्भावमिमं तस्माद् गृहीत्वा भारतं कृतम् ॥ ५० ॥**

**‘उक्ता रामकथाऽप्यस्मिन् मार्क्कण्डेयसमास्यया[१] ।**
**‘तस्माद् यद् भारते नोक्तं तद्धि नैवास्ति कुत्रचित् ॥ ५१ ॥**

**‘अत्रोक्तं सर्वशास्त्रेषु नहि सम्यगुदाहृतम्’ ।**
**इत्यादि कथितं सर्वं ब्रह्माण्डे हरिणा स्वयम् ॥ ५२ ॥**

---

कृतम्, तत् तस्मादधिककरणादेव हेतोः अत्र कृष्णावतारे ऊनं कृतम्। कर्णाद्यैरित्याद्यपदेन रामावतारेऽधिकसेवाकर्तारोऽन्ये कपयः। यथा तारः। स किल रामायणेऽ-धिकां सेवां कृत्वा कृष्णावतारे द्रोणो भूत्वा कृष्णप्रतीपस्य दुर्योधनस्य सेनाप्रणेता बभूव। यैर्विविदाद्यैः रामावतारे कृष्णावतारे नकुलसहदेवादिरूपेणेति प्रादुर्भावद्वयेऽप्यधिकं कृतं तैः पश्चाद् विप्रतीपं कृतम्। यथा वा जाम्बवान् रामरावणयुद्धेऽधिकसेवां चकार। कृष्णावतारेऽपि कृष्णाय जाम्बवतीदानेन। तेनाधिकं पुण्यं न्यूनं चकार कृष्णेन वियुध्य च विरुध्य च। सर्वेषां सुराणां योग्यतानिर्णयः, तारतम्यनिर्णयश्च। तद्द्वारा सर्वेषां शास्त्राणां तात्पर्यनिर्णयश्च ॥ ४७–८ ॥ एतयोः प्रादुर्भावयोः। अन्यत्र न पूर्यते। तस्मादत्र अनयोर्द्वयोः प्रादुर्भावयोरेव देवताक्रमनिर्णयः शास्त्र-निर्णयश्च ॥ ४९ ॥ तत्र कृष्णावतारे विशेषतया। कुतः? पश्चात्तनत्वात्। पूर्वतनं हि न्यूनमधिकं वा शक्यं समीकर्तुं पश्चात्। नतु पश्चात्तनं पूर्वतनेन। कृष्णस्य कृष्णावतारस्य ॥ ५० ॥ मार्कण्डेयसमास्यया। ननु मार्कण्डेयसमास्यापर्वणि न रामकथा श्रूयते। वनपर्वणि हि मार्कण्डेयसमास्यापर्वेत्येकादशमुपपर्व। अष्टादशं रामोपाख्यान-पर्व। तत् कथमिदम्? ननुः भोः मार्कण्डेयसमास्यापर्वणीति नाऽह भगवानाचार्यः। मार्कण्डेयसमास्ययेत्याह। मार्कण्डेयेन सह सम्भाषणार्थमासनं हि मार्कण्डेयसमास्या। रामोपाख्यानपर्वापि मार्कण्डेयेन सह सम्भाषणरूपमेवेति सूक्तमेतत्। अत एव मार्कण्डेयसमास्यायामित्यनुक्त्वा मार्कण्डेयसमास्ययेत्याह। पाण्डवमार्कण्डेयसम्भाषणव्याजेन रामकथाऽप्युक्तेति ॥ ५१ ॥ ब्रह्माण्डे पुराणे हरिणा व्यासरूपेण। ज्ञानकार्यः सन् सतामज्ञानं हरतीति हरिः। नैतानि वचनानि सम्प्रति

---

१. **‘–कथा ह्यस्मिन् मार्कण्डेयसमाख्यया’**

**मार्कण्डेयेऽपि कथितं भारतस्य प्रशंसनम् ।**
**'देवतानां यथा व्यासो द्विपदां ब्राह्मणो वरः ॥ ५३ ॥**

**'आयुधानां यथा वज्रमोषधीनां यथा यवाः ।**
**'तथैव सर्वशास्त्राणां महाभारतमुत्तमम्' ॥ ५४ ॥**

**वायुप्रोक्तेऽपि तत् प्रोक्तं भारतस्य प्रशंसनम् ।**
**'कृष्णद्वैपायनं व्यासं विद्धि नारायणं प्रभुम् ।**
**'को ह्यन्यः पुण्डरीकाक्षान्महाभारतकृद् भवेत्' ॥ ५५ ॥**

---

ब्रह्माण्ड उपलभ्यन्ते । **'क्वचिदन्तरितानि'** इत्यस्य स्फुटमुदाहरणम् ॥ ५२ ॥ मार्कण्डेये ग्रन्थारम्भ एव । देवतानां यथा व्यासो वरः । द्विपदां यथा ब्राह्मणः, आयुधानां यथा वज्रमित्यादि सापेक्षमुदाहरणम्, सन्निधानविशेषविवक्षया । **'पाण्डवानां धनञ्जयः'** इति यथा । यवं हि धान्यराजमाहुः । 'ಜಬ' इति भाषायाम् । अयं साम्प्रतो मार्कण्डेयपाठः– **'तपःस्वाध्यायनिरतं मार्कण्डेयं महामुनिम् । व्यासशिष्यो महातेजा जैमिनिः पर्यपृच्छत । भगवन् भारताख्यानं व्यासेनोक्तं महात्मना । पूर्णमस्तमलैः शुभ्रैर्नानाशास्त्रसमुच्चयैः । अतिशुद्धिसमायुक्तं साधुशब्दोपशोभितम् । पूर्वपक्षोक्तिसिद्धान्तपरिनिष्ठासमन्वितम् । त्रिदशानां यथा विष्णुर्द्विपदां ब्राह्मणो यथा । भूषणानां च सर्वेषां यथा चूडामणिर्वरः । यथाऽऽयुधानां कुलिशमिन्द्रियाणां यथा मनः । तथैव सर्वशास्त्राणां महाभारतमुत्तमम्'** [१.१–५] इत्यादि । **'कुर्युः क्वचिच्च व्यत्यासम्'** इत्यस्य स्फुटमुदाहरणम् ॥ ५३–४ ॥ वायुप्रोक्तेऽपि । इदमेव शैवपुराणमिति चोच्यत इत्याहुः । तथाहि भागवते–**'ब्राह्मं पाद्मं वैष्णवं च शैवम्–'** [१२.६.६७] इति चतुर्थपुराणतया यच्छैवमुद्दिष्टं तद् वायुना प्रोक्तमिति वायुप्रोक्तमिति वायवीयमिति । आपाततः शिवपरमिति शैवमिति च । यद्यपि वायुपुराणमिति पुराणान्तरं पठन्ति । तथाऽपि ब्रह्माण्डपुराणस्यैवाक्षरशः सङ्ग्रहोऽयम्, न पुराणान्तरमिति पुराणज्ञा मन्यन्ते । न केवलं मार्कण्डेये वायुप्रोक्तेऽपि तत् प्रोक्तम् । अपिच वायुप्रोक्तेऽपि आपाततः शिवपरेऽपि वायुप्रोक्ते तत् प्रोक्तम् । किं तत्? विष्णुपरस्य भारतस्य प्रशंसनम् । एतेन वायुप्रोक्तस्याप्यन्तरङ्गं विष्णुपरत्वमाविष्कृतम् । वायुना हि प्रोक्तं तत् । स कथं शिवपारम्यं वदेदिति । अपि च **'कृष्णद्वैपायनम्–'** इत्यादिकं भारतस्य प्रशंसनं वायुप्रोक्तेऽपि कथितम् । अन्यत्रापि कथितम् । तथाहि भारत एव शान्तिपर्वणि [३५६.११], पाद्मे च [सृ.खं१.४४] । विष्णुपुराणेऽपि–**'कृष्णद्वैपायनं व्यासं विद्धि नारायणं प्रभुम् । को ह्यन्यो भुवि मैत्रेय महाभारतकृद् भवेत्'** [३.४.५] इति । वासुदेवकृष्णव्यावृत्त्यर्थं कृष्णद्वैपायनमिति । व्यासं वेदानां विभक्तारम् । अयमेवानन्तवेदानां सङ्क्षेपे विभागे च समर्थ इत्यर्थः । केवलेश्वरदृष्टार्थ-युक्तस्य देवानामपि दुर्विज्ञेयस्य महाभारतस्य करणे च प्रभुम् । तदपि घटिष्यमाणाया भारतकथायाः षट्शतेभ्यः संवत्सरेभ्यः पूर्वमेव यथावदशेषविशेषैः सह ग्रथने प्रभुम् । लोकात्मकं पुण्डरीकमक्ष्णोति व्याप्नोतीति, पुण्डरीके अक्षाणि यस्येति च पुण्डरीकाक्षः । सर्वगतः सर्वज्ञः कमलनयनो नारायण इत्यर्थः ॥ ५५ ॥

**एवं हि सर्वशास्त्रेषु पृथक्पृथगुदीरितम् ।**
**उक्तोऽर्थः सर्व एवायं माहात्म्यक्रमपूर्वकः ॥ ५६ ॥**

**भारतेऽपि यथा प्रोक्तो निर्ण्णयोऽयं क्रमेण तु ।**
**तथा प्रदर्शयिष्यामस्तद्वाक्यैरेव सर्वशः ॥ ५७ ॥**

**'नारायणं सुरगुरुं जगदेकनाथं भक्तप्रियं सकललोकनमस्कृतं च ।**
**'त्रैगुण्यवर्ज्जितमजं विभुमाद्यमीशं वन्दे भवघ्नममरासुरसिद्धवन्द्यम्' ॥ ५८ ॥**

**ज्ञानप्रदः स भगवान् कमलाविरिश्चिशर्वादिपूर्वजगतो निखिलाद् वरिष्ठः ।**[1]
**भक्त्यैव तुष्यति हरिप्रवणत्वमेव सर्वस्य धर्म्म इति पूर्वविभागसंस्थः ॥ ५९ ॥**

---

पृथक्पृथक् । भिन्नविधानैः, भिन्नवचनैश्च । अयमेवार्थः भारतेऽप्युक्तः । यथा प्रोक्तस्तथा तारतम्यक्रमेणैव कथाक्रमेण च प्रदर्शयिष्यामः सर्वशः सर्वत्र सर्वथा च । तद्वाक्यैः भारतवाक्यैः । व्यासवाक्यैरेव वा ॥ ५६–७ ॥ नारायणं सुरगुरुमिति भारतमङ्गलपद्यम्, पश्चात्तनैर्ग्रन्थविलोपकैरन्तरितम्, अद्यापि तौळवमण्डले मध्वावतारभूमौ प्राचीनहस्तलिखितादर्शेषु प्रथमपद्यतयोपलभ्यमानं पठित्वा मूलच्छन्दोऽनुगुणतया त्रिभिः शाक्करैर्व्याख्याति । एतेन–**'आदौ श्रवणतो माङ्गलिकरोमहर्षणपदोपादानान्न पृथङ्मङ्गलाचरणम्–'** [म.भा.ल.] इति लक्षाभरणवचनं प्रक्षिप्तमिति स्फुटम् । **'इदमाद्यं पद्यमसहमानाः केचिदादौ न पठन्ति । केरळदेशस्थपुरातनपुस्तकेष्वद्यापि दृश्यते । कथमन्यथा लोकाचार्यो व्यासो लक्षपरिमितं ग्रन्थं कुर्वन् ग्रन्थादौ लोकशिक्षणाय मङ्गलपद्यं न रचयेत्'** [म.भा.ता.नि.टी.] इत्यादिभावप्रकाशिकागतस्ववचनविरोधाच्च । नच कल्पभेदेन व्यवस्था । कोऽयं महात्मा यः कल्पान्तरीयं भारतपाठं बुबुधिषति, यदर्थमयं प्रतनानां प्रयासः । नारायण एव वेदगदितं परं ब्रह्मेत्याह– स भगवानिति । यो नारायणः स भगवान् । यो भगवान् स नारायणः । **'ब्रह्मेति परमात्मेति भगवानिति शब्द्यते'** [भाग.१.२.११] इति ह्याह । सुरगुरुमित्येतद् विवृणोति–ज्ञानप्रदः कमलाविरिश्चिशर्वादिपूर्वजगतः । भवेयुर्बहवो गुरवः । ज्ञानप्रदो हि मुख्यगुरुः । गिरत्युद्गिरत्युपदिशत्यपूर्वानर्थविशेषानिति हि गुरुः । सुरा रमा च सुराश्च सुराः । उक्तं च भगवतैवान्यत्र–**'यस्माद् ब्रह्मेन्द्ररुद्रादिदेवतानां श्रियोऽपि च । ज्ञानस्फूर्तिः सदा तस्मै हरये गुरवे नमः'** इति । ब्रह्मादीनां ज्ञानदानायैव भारतं प्रणिनायेति तदेव प्रथममुच्यते सुरगुरुमिति । कमला च विरिश्चिशर्वौ च आदयो येषामिन्द्रादीनां ते पूर्वे यस्य जगतः जीवजातस्य, विशिष्य सज्जनसमुदायस्य । जगत एक एव चायं नाथः । तदेतदाह– निखिलात् कमलाविरिश्चिशर्वादिपूर्वाज्जगतो जीवजाताद्

---

१. **'विरिश्चि–'**

**निर्दोषकः सृतिविहीन उदारपूर्णसंविद्गुणः प्रथमकृत् सकलात्मशक्तिः ।**
**मोक्षैकहेतुरसुरूपसुरैश्च मुक्तैर्वन्द्यः स एक इति चोक्तमथोत्तरार्द्धे ॥ ६० ॥**

**नम्यत्वमुक्तमुभयत्र यतस्ततोऽस्य मुक्तैरमुक्तिगगणैश्च[१] विनम्यतोक्ता ।**
**इत्थं हि सर्वगुणपूर्त्तिरमुष्य विष्णोः प्रस्ताविता प्रथमतः प्रतिजानतैव ॥ ६१ ॥**

वरिष्ठः । पूर्वान्वये जगत इति षष्ठी । द्वितीये पञ्चमी । यः सर्वतोऽपि वरः, यस्माद् वरोऽन्यो नास्ति स वरिष्ठः । सर्ववरिष्ठत्वात् सर्वगुरुः । न केवलं गुरुत्वेन वरः । पितृत्वादिना सर्वप्रकारेणापि । सुराणां ज्ञानप्रद इत्यनेनैवासुराणामज्ञानप्रद इति च गदितम् । मुख्यदाता प्रदाता । भक्ताः प्रिया अस्येति भक्तप्रिय इति भक्त्यैव तुष्यतीत्युच्यते । अत एव भक्तानां च प्रियः । आदौ ज्ञानं प्रददाति । ततो भक्तिम् । भक्त्या तुष्टो मोक्षद इति । अतश्च सकलैः लोकैरमुक्तैः संसारिलोकैः ज्ञानिगणैः संसारान्मोचनार्थं नमस्कृतम्, प्रह्वेण मनसा कायेन च स्तुतम् । एतेन हरिप्रवणत्वमेव सर्वस्य धर्म इति ज्ञायते । संसारं परिहरतीति हि हरिः । हरिप्रीतिसाधनत्वं मोक्षसाधनत्वं वा धर्मपदार्थः । एतेन बन्धमोक्षदत्वं चोक्तम् । इत्ययमर्थः भारताद्यपद्यस्य पूर्वार्धे सामस्त्येन सङ्गततया च स्थितः प्रतिपादितः ॥ ५८–९ ॥ पूर्वार्ध उक्तं मुक्तिदत्वमेवोत्तरार्धे विशदयति । त्रयो गुणाः सर्वदोषमूलं दुःखमूलं च । भगवांस्त्रैगुण्यवर्जितोऽत एव निर्दोषकः सर्वदोषदूरो निर्दुःखानन्दरूपश्च । भक्तांश्च निर्दुःखानन्दरूपमुक्तिदानेन निर्दोषान् करोतीति च निर्दोषकः । सृतौ हि जायते । यः सृतिविहीनः स कथं जायेत? यद्यपि भगवानपि कौसल्यादेवक्यादिषु जायते । अथापि स्वेच्छया जायते न कर्मबन्धेनेति सृतिविहीन एवाजशब्देनोच्यते । स्वभक्तांश्च पुनर्न जनयतीत्यज उच्यते । अजशब्देन चतुर्मुखाभेदोऽपि न शङ्क्यः । यतः स सृतिगतोऽयं सृतिविहीन इति । त्रैगुण्यविरहादेव सृतिविहीनः । न केवलं दोषदूरः । किन्तु सर्वैर्गुणैर्विशिष्टो भवतीति विभुः सर्वगुणपूर्णः । कालतो देशतो गुणतश्च विभुरिति वा । तदेतदाह–उदारपूर्णसंविद्गुणः । उदारा महान्तः कालतो देशतश्च । स्वतोऽनन्ताश्च दोषासमानाधिकरणाश्च । एकैकशोऽपि पूर्णाः । स्वरूपसंविद्रूपा गुणा अस्य । न जडा इति भावः । यद्यपि स्वरूपपदेनैवाजडत्वं सेत्स्यति । अथापि संविद्गुण इत्याह । तेनेदं बोधयति– न केवलं गुणगुणिनोरभेदः, गुणानामपि परस्परम्– तस्य संविदप्यानन्दरूपा, आनन्दोऽपि संविद्रूप इत्यादीति । अतो विभुः सर्वविलक्षणश्चायं भवति । मुक्ता अप्यनेन सृतिविहीनाः सन्तः यथायोग्यमुदारपूर्णाभिव्यक्तस्वरूपगुणा भवन्ति । आदौ भवति, आदिः कारणं च सर्वस्य भवतीत्याद्यः । तदेतदाह– प्रथमकृत् सर्वस्मात् प्रथमः सर्वस्य प्रथमकर्ता च । प्रधानकर्ता च । अनन्तरमधीनकर्तारो बहवो भवन्ति । सर्वस्यापीष्टे समर्थो भवतीतीशः । तदेतदाह–सकलात्मशक्तिः । सकला सर्वविषया स्वरूपभूता शक्तिरस्य । सर्वसमर्थ इत्येतत् । ईशमिति शिवाभेद उच्यत इति शङ्कामप्यनेनापनुदति । स तु इन्द्रादीनामीष्टे नेष्टे च ब्रह्मादीनामितीशश्चानीशश्च । अयं तु सकलस्यापीष्ट इति न कश्चिदपि तस्येष्टे चेति । भवघ्नमिति विशेषणाच्च । सर्वसंहारकं भवमप्यन्ते संहरतीति भवघ्नः । एतेन ब्रह्मरुद्रादिवाचकत्वेन लोकतः प्रसिद्धा

१. **'–मुक्तकगणैश्च'**

**'कृष्णो यज्ञैरिज्यते सोमपूतैः कृष्णो वीरैरिज्यते विक्रमद्भिः ।**
**'कृष्णो वन्यैरिज्यते सम्मृशानैः कृष्णो मुक्तैरिज्यते वीतमोहैः' ॥ ६२ ॥**

**'सृष्टा ब्रह्मादयो देवा निहता येन दानवाः ।**
**'तस्मै देवादिदेवाय[1] नमस्ते शार्ङ्गधारिणे' ॥ ६३ ॥**

अजेशादिसर्वशब्दा मुख्यतो भगवद्वाचका इति चोक्तं भवति । एतावद्भिर्विशेषणैः सूचितमिदानीं मुखत आह भगवान् व्यासः –भवघ्नम् । मूले निषेधमुखेनोक्तमाचार्यो विधिमुखेन विशदयति– मोक्षैकहेतुः । भवहानौ नियतो हि मोक्षः । तस्याप्ययं मुख्यहेतुः । संसारध्वंसो हि मोक्षः । तेनान्धतमसमपि । एतदर्थमेव भवघ्नमित्याह । उभयत्रापि भवहानिर्हि समानधर्मः । मोक्षार्थं भक्तैर्वन्द्यत्वमुक्तं पूर्वार्धे । इदानीं मुक्तैरपि वन्द्यत्वमाह– अमरासुरसिद्धवन्द्यम् । असून् रूपयन्ति प्रेरयन्तीत्यसुरूपाः । असुषु रमन्त इत्यसुराः । **'महद् देवानामसुरत्वमेकम्'** [ऋ.सं.३.५५.१–२२] इत्याम्रेडितस्यासुर-पदस्य व्याख्यानमेतत् । असुरूपाः असुस्वरूपा इति वा । चिन्मयस्वरूपेन्द्रिया हि मुक्ताः । तादृशैरसुभी रमन्त इति च । त एव सिद्धा मुक्ताश्चेति अमरासुरसिद्धाः । विशेषणयोः परनिपातः । पूर्वममरत्वं प्राप्ताः, ततोऽसुनियामकत्वम्, ततो मुक्ता इति क्रमदर्शनार्थं क्रमव्यत्ययः । तेनामरासुरसिद्धवन्द्य इति असुरूपसुरैश्च मुक्तैर्वन्द्य उच्यते । अथशब्दो मङ्गलार्थः कात्स्न्यवचन आनन्तर्यवचनश्च । उक्तमथ । अमुक्तनियामकत्वनिरूपणानन्तरमुत्तरार्धे कृत्स्नमुक्तनियामकमत्वमप्युक्त-मित्यशेषमतिमङ्गलमित्यर्थः ॥ ६० ॥ उभयत्र पूर्वार्धे चोत्तरार्धे च । सकललोकनमस्कृतं चेत्यमुक्तनम्यतोक्ता । लोक इति संसारिलोक उच्यते अलोक इति मुक्त उच्यते । **'प्रज्ञानेत्रोऽलोकः'** [महै.उ.२.५.३] इत्यैतरेय्यामुपनिषदि । **'अलोकशब्देन मुक्तसमुदाय उच्यते । मुक्तो ह्यलौक्यत्वादलोकः'** इति च भाष्ये । तेन लोक इत्यमुक्तसमुदाय उच्यत इति स्फुटम् । अमुक्ताः सात्विकास्तमेव नमस्कुर्वन्ति । अन्येऽप्यजानन्तोऽविधिपूर्वकं तमेव नमन्तीत्यर्थः । **'येऽप्यन्यदेवता-भक्ता यजन्ते श्रद्धयाऽन्विताः । तेऽपि मामेव कौन्तेय यजन्त्यविधिपूर्वकम्'** [भ.गी.९.२३] इति हि भगवद्वच-नम् । मुक्तास्तु सर्वे सात्विका इत्येको गणः । अमुक्तास्तु सात्विका राजसास्तामसा इति त्रिविधा गणा इत्यमुक्तिगगणैरि-त्याह । अमरासुरसिद्धवन्द्यमिति मुक्तनम्यता । अन्यथा पुनरुक्तेः । सर्वोत्तमतया परया भक्त्या नम्यता विनम्यता । अमुष्य भारतप्रतिपाद्यस्य । ग्रन्थप्रतिपाद्यस्य वस्तुनो निर्देशः प्रतिज्ञा । यदत्र प्रतिज्ञातं तदेवोपरि प्रतिपाद्यते ॥ ६१ ॥ न केवलं प्रथमतः प्रतिजानता, उपरिष्टादपि मुक्तामुक्तनम्यता तत्रतत्रोक्तेति ज्ञापयति– कृष्णो मुक्तैरित्यादिना । अनुशासन-पर्वणीदं पठ्यते [१८.६] किञ्चित् पाठभेदेन । पाठभेदो भ्रान्तिमूलः । वस्तुतस्त्विदं द्वितीयमङ्गलपद्यत्वेनापि प्राचीनादर्शेषु पठ्यते । अत एवाऽद्यन्तयोरित्याह भगवत्पादः । सोमपूतैर्ब्राह्मणैः कृष्णो यज्ञैः पूज्यते । विक्रमद्भिः क्षत्रियैः वीररसैरि-ज्यते । आरण्यकोपनिषदः सम्मृशानैः तापसैर्वानप्रस्थैश्च वनरुहैः फलपुष्पादिभिरिज्यते । वन्यैर्वनस्थैस्तापसादिभिर्वा । एवं मुक्तैरपि ज्ञानयज्ञादिभिरिज्यते ॥ ६२ ॥ मङ्गलपद्यान्तरं व्याख्यातुमुद्धरति–सृष्टा ब्रह्मादय इति । प्राचीनपाठानुसारेण

१. 'देवाधिदेवाय'

**स्रष्टृत्वं देवानां मुक्तिस्रष्टृत्वमुच्यते नान्यत् ।**
**उत्पत्तिर्दैत्यानामपि यस्मात् सम्मिता विशेषोऽयम् ॥ ६४ ॥**

**अथ च दैत्यहतिस्तमसि स्थिरा नियतसंस्थितिरेव नचान्यथा ।**
**तनुविभागकृतिः सकलेष्वियं नहि विशेषकृता सुरदैत्यगा ॥ ६५ ॥**

**तमिममेव सुरासुरसश्चये हरिकृतं प्रविशेषमुदीक्षितुम् ।**
**प्रतिविभज्य च भीमसुयोधनौ स्वपरपक्षभिदा कथिता कथा ॥ ६६ ॥**

---

भारते तृतीयमेतन्मङ्गलपद्यम् । दानवा इति न दनुपुत्रा एवोच्यन्ते । एवमुत्तरत्र दैत्या न दितिपुत्रा एवोच्यन्ते । तद् यथा आदौ ब्रह्मसृष्टावपि हिरण्याक्षहिरण्यकशिपू आदिदैत्यावुच्येते । **'दैत्योऽसुरे'** इति चाभिधानम् । धर्ममर्यादा-खण्डनं दितिः । तत्स्वभावाः सर्वेऽपि दैत्या इति सामान्यवचनम् । एवं दानवा इति च । तामसप्रकृतित्वं ग्राह्यता-वच्छेदकम् । देवानामप्यादिः कारणभूतो देवः । अत एव ब्रह्मादयस्तेन सृष्टा उच्यन्ते । तमसि पातनीयानां दैत्यानां हननाय शार्ङ्गधारी । **'निहता दानवाः सर्वे देवदेवेन विष्णुना'** [४५.१६] इति च सभापर्वणि ॥ ६३ ॥ ननु देवा अपि भगवता सृष्टाः । दैत्या अपि । एवं दैत्या अपि भगवता निहताः । देवा अपि । तत् किमिदमुच्यते–**'सृष्टा ब्रह्मादयो देवा निहता येन दानवाः'** इति? आह–स्रष्टृत्वं देवानाम् । सत्यं केवला सृष्टिर्दैत्यानामपि सम्मिता समाना । तस्मादेवायं विशेषार्थो गम्यते मुक्तिस्रष्टृत्वमेवात्राभिमतं स्रष्टृत्वमिति । देवा मुक्त्यर्थं सृष्टाः, मुक्तियोग्यतया सृष्टा इति, देवाः सृष्टा दत्त-मुक्तय इति । नान्यत् देहस्रष्टृत्वमात्रम् । एवं दैत्या नीचे तमसि नित्यवासाय हता इति निहता उच्यन्ते । निहताः प्राप्त-तमस इति च । नैवान्यथा देहवियोगमात्रम् । कुतः? यत इयं सुरेषु दैत्येषु च समानतया गता तनुवियोगकरण-रूपा मृतिः न दैत्येष्वेव विशेषकृता भवति । येन तेषां हननमेव विशिष्य व्यपदेश्यं स्यात् । सृष्टिरिव हतिरपि न पक्षपातविशेषकृतेत्यर्थः । तेन न कोऽपि क्षुद्रोपद्रव इति । **'एवमेषोऽसुराणां च सुराणामपि सर्वशः । भयाभयकरः कृष्णः सर्वलोकेश्वरः प्रभुः'** [६१.२५] इति च सभापर्वणि । **'तं भूतिरिति देवा उपासाञ्चक्रिरे । ते बभूवुः । अभूतिरि-त्यसुराः । ते ह पराबभूवुः'** इत्युपनिषदैतरेयी । एतेन **'भवाभवकरः'** इत्यपि भारतपाठः सम्भाव्यते ॥ ६४–५ ॥ अथेदानीं समग्रभारतकथासङ्गततया मङ्गलपद्याशयमुपसंहरति– तमिमम् । प्रकृष्टं वैषम्यनैर्घृण्यरहिततया महागुण-रूपम्, न दोषापादकम्, प्रकटं विशेषं उदीक्षितुं उदीक्षयितुं दर्शयितुम् । स्वातन्त्र्ये व्यत्ययः । स्वयमप्येतं स्वकृतं विशेषमन्तर्यमयन्नुदीक्षते हि लीलया । स्वयमपि व्यासरूपेणोदीक्षितुम् । उदीक्ष्य च तुष्यति स्वयं भीमविजयेन, दुर्योधन-पराजयेन च । परस्परप्रतीपतया विभज्य । भीमः भगवत्पक्षः सुयोधनः परपक्ष इति भिदा भेदेन भारतकथा कथिता भगवता व्यासेन । स्वपरपक्षयोः भिदा मुक्तितमआख्यफलभेदः यस्यां सा कथा वा ॥ ६६ ॥

**‘नमो भगवते तस्मै व्यासायामिततेजसे ।**
**‘यस्य प्रसादाद् वक्ष्यामि नारायणकथामिमाम्’ ॥ ६७ ॥**

**‘वासुदेवस्तु भगवान् कीर्त्तितोऽत्र[1] सनातनः’ ।**
**‘प्रतिबिम्बमिवाऽदर्शे यं पश्यन्त्यात्मनि स्थितम्’ ॥ ६८ ॥**

**‘नास्ति नारायणसमं न भूतं न भविष्यति ।**
**‘एतेन सत्यवाक्येन सर्वात्थान् साधयाम्यहम्’ ॥ ६९ ॥**

---

व्यव्रियन्त मङ्गलपद्यानि । अथ **‘नमो भगवते तस्मै–’** इत्यादिना आद्यन्तगतानि भारतवाक्यान्युद्धृत्याध्यवस्यति, उपक्रमे प्रतिज्ञातस्यैवोपसंहाराच्च निर्विवादमेतदवसीयत इति । तानीह यथासम्भवमगवेष्यन्त । **‘नमो भगवते तस्मै–’** [१.३२] इत्यादिपर्वगतं सौतेरुग्रश्रवसो वचनम् । भारताख्यानोपक्रमे मङ्गलाचरणरूपमिदं वैशम्पायनीयमिति प्राचीन-टीकासु । वैशम्पायनोक्तमेव सौतिरनूवादेति तेषामाशयः स्यात् । **‘अवान्तरवक्त्रा वैशम्पायनेन’** इति भावप्रका-शिका । स्फुटं हि लिपिकृतां प्रमादः । सर्पसत्रे प्रथमवक्ता हि वैशम्पायनः । ततो नैमिशारण्ये द्वितीयवक्ता सौतिः । तेन **‘अवान्तरवक्त्रा सौतिना’** इत्येव साधुः पाठः । अत एव **‘वैशम्पायनाद्युक्तम्’** इत्यपरे व्याचक्षते । आदिपदेन सौतेरेव ग्रहणमिति स्फुटम् । शान्तिपर्वणि [३५३.३०] च स्वप्रवचनोपक्रमे वैशम्पायनकृतं मङ्गलाचरणम् ॥ ६७ ॥ **‘वासुदेवस्तु भगवान्–’** [१.२८२] इति चाऽदिपर्वणि, अनुक्रमणिकान्ते, सौतिवचनम् । **‘प्रतिबिम्बमिवाऽऽदर्शे–’** [१.२८६] इति च । आद्यन्तयोः पठनेन मध्यगतान्यप्युपसङ्गृह्णाति । तथाहि साम्प्रतः पाठः–**‘भगवान् वासुदेवश्च कीर्त्यतेऽत्र सनातनः । स हि सत्यमृतं चैव पवित्रं पुण्यमेव च । शाश्वतं ब्रह्म परमं ध्रुवं ज्योतिः सनातनम् । यस्य दिव्यानि कर्माणि कथयन्ति मनीषिणः । असत् सत् सदसच्चैव यस्माद् विश्वं प्रवर्तते । सन्ततिश्च प्रवृत्तिश्च जन्ममृत्युपुनर्भवाः । अध्यात्मं श्रूयते यत्र पञ्चभूतगुणात्मकम् । अव्यक्तादि परं यच्च स एव परिगीयते । यं ध्यायन्ति सदा मुक्ता ध्यानयोगबलान्विताः । प्रतिबिम्बमिवाऽदर्शे पश्यन्त्यात्मन्यवस्थितम्’** इति । वासुदेवस्तु वासुदेव एव । विशेषतः सर्वप्राधान्येन । अत्र सर्वत्र भारते । आत्मनि स्थितं बिम्बरूपं भगवन्तं भारते पश्यन्ति । कथम्? प्रतिबिम्बमि-वाऽदर्शे । आ स्फुटं समन्ताच्च दर्शयति भगवन्तमिति भारतमप्यादर्शमेव । आदर्श इव च । अथच मुक्ता यमात्मनि, आदर्शे प्रतिबिम्बमिव स्फुटं पश्यन्ति । तथाहि काठके–**‘यथाऽऽदर्शे तथाऽऽत्मनि’** [२.३.५] इति । **‘जीवे स्थितस्तु भगवान् दृश्यते ज्ञानदृष्टिभिः । आदर्शे मुखवत् सम्यक्–’** इति भाष्ये महावराहवचनम् ॥ ६८ ॥ **‘नास्ति नारायण-समम्–’** [१.३४] इति च सौतिवचनम् । इदमप्याद्यन्तयोः पठितम् । सम्प्रत्यादावेव पठ्यते । उपसंहारवचनमन्तरित-

---

१. **‘कीर्त्यतेऽत्र’**

**आद्यन्तयोरित्यवदत् स यस्माद् व्यासात्मको विष्णुरुदारशक्तिः ।**
**तस्मात् समस्ता हरिसद्गुणानां निर्णीतये[1] भारतगा कथैषा ॥ ७० ॥**

**'सत्यंसत्यं पुनः सत्यमुद्धृत्य भुजमुच्यते ।**
**'वेदशास्त्रात् परं नास्ति न दैवं केशवात् परम्' ॥ ७१ ॥**

**'आलोड्य सर्वशास्त्राणि विचार्य्य च पुनःपुनः ।**
**'इदमेकं सुनिष्पन्नं ध्येयो नारायणः सदा' ॥ ७२ ॥**

**'स्मर्त्तव्यः सततं विष्णुर्विस्मर्त्तव्यो न जातुचित् ।**
**'सर्वे विधिनिषेधाः स्युरेतयोरेव किङ्कराः' ॥ ७३ ॥**

**'को हि तं वेदितुं शक्तो यो न स्यात् तद्विधोऽपरः ।**
**'तद्विधश्चापरो नास्ति तस्मात् तं वेद सस्स्वयम्'[2] ॥ ७४ ॥**

---

मिति भाति । नारायणसमं किमपि पदार्थान्तरं नास्ति । एतेन सत्यवचनानुसारेण सर्वशास्त्रार्थान् साधयामि । सर्वपुरुषार्थाश्च । किमलभ्यं भगवति प्रसन्न इत्येतत् ॥ ६९ ॥ आद्यन्तयोरिति । एतदननुगणं यत् किञ्चिन्मध्य उच्यते तद् दर्शनभाषयोक्तमिति । वक्ष्यति हि–**'आद्यन्तयोर्विरुद्धं यद् दर्शनं तदुदाहृतम्'** इति । उदारशक्तिः महाशक्तिः । **'उदारो दातृमहतोः'** । अनन्तशक्तिरित्येतत् । तस्मात् समस्ता कथा हरिसद्गुणानां निर्णीतय इत्यवसितम् । सन्तः दोषासम्भिन्ना गुणाः ॥ ७० ॥ **'सत्यंसत्यं पुनः सत्यम्–'** [ २.१५] इति भारतपरिशिष्टे शेषधर्मे । पौरुषेयापौरुषेयवेदाख्यशास्त्रात् परं उत्तमं शास्त्रं नास्ति । केशवात् परं दैवं च नास्ति । परदेवताप्रतिपादकेषु वेदशास्त्रात् परं नास्ति । शास्त्रप्रतिपाद्येषु केशवात् परं नास्तीति वा । मुक्तिप्रदेषु वेदशास्त्रात् परं शास्त्रम्, केशवात् परं दैवं च नास्तीति वा । परमित्यन्यच्च । उद्धृत्य भुजं सशपथमुच्यते **'सत्यंसत्यं पुनः सत्यं ब्रह्मणा कथितं पुरा । नारायणात् परो देवो नास्ति मुक्तिप्रदो नृणाम्'** [उ.खं.२२३.७९] इति पाद्मे ॥ ७१ ॥ **'आलोड्य सर्वशास्त्राणि–'** [१८६.११] इत्यनुशासनपर्वणि धर्मजं प्रति भीष्मवचनम् । आलोड्य मननाख्येन मथनेन । लुड विलोडने । सुनिष्पन्नं निर्विवादतया सिद्धान्तितम् ॥ ७२ ॥ **'स्मर्तव्यः सततं विष्णुः–'** इति तु नारदपञ्चरात्रे [४.२.२३] पठ्यते । पाद्मे च [उ.खं. ७१.१००] । स्मर्तव्य इति विधिः । न विस्मर्तव्य इति निषेधः । अन्ये विधयो निषेधा वा एतदर्था इत्येतयोरेव किङ्कराः ॥ ७३ ॥ यदि यः कोऽप्यपरः

---

१. **'निर्णीयते'** इत्यनन्वितः पाठः । २. **'स स्वयम्'**

**‘को हि तं वेदितुं शक्तो नारायणमनामयम् ।**
**‘ऋते सत्यवतीसूनोः कृष्णाद् वा देवकीसुतात्’ ॥ ७५ ॥**

**‘अप्रमेयोऽनियोज्यश्च स्वयं कामगमो वशी ।**
**‘मोदत्येष सदा भूतैर्बालः क्रीडनकैरिव’ ॥ ७६ ॥**

**‘न प्रमातुं महाबाहुः शक्योऽयं मधुसूदनः ।**
**‘परमात् परमेतस्माद् विश्वरूपान्न विद्यते’ ॥ ७७ ॥**

---

तद्विधो न स्यात् तर्हि कोऽपरस्तं वेदितुं शक्तः स्यात् । ननु स्यादेव कश्चित् तद्विधः । स तं विद्यात् । नेत्याह– तद्विधश्चापरो नास्ति तस्मात् सः सर्वसारः सर्वोत्तमः स एव तं सम्यग् वेद । स्वयं साक्षादन्यनिरपेक्षतया । अन्ये सर्वेऽप्यन्योपदेशेनैव विदन्ति । **‘सस्स्वयम्’** इति प्राचीनादर्शे सविसर्गपाठः । तच्छब्दस्य विभाषा विसर्गलोपः संयुक्तसकारे पकारे वा परे इति च प्राचां प्रयोगबाहुल्यादवसीयते । तथाहि प्रयोग उपरिष्टात्–**‘सः प्रीतो ददौ’** [५.१८] इति, **‘वेदनां सः प्राप्नोतु’** [११.२८] इत्यादि ॥ ७४ ॥ तदानीं तत्र परिदृश्यमानेषु ऋते । वादे तत्ववादे अवतीति वादेवकी श्रुतिः । तत्सुतादिति च । **‘तं माता रेळ्हि स उ रेळ्हि मातरम्’** इति ह्यैतरेयाः पठन्ति । देवेष्वधिकं कं सुखमस्येति देवकी शतानन्दः । देवकिर्वा । इः कामः । तावस्य तनयाविति च ॥ ७५ ॥ **‘अप्रमेयोऽनियोज्यश्च–’** [स.प.६१.३१] इति भीष्मवचनमग्रपूजाप्रसङ्गे । किं करोति, कदा करोति, कथं करोति, किमर्थं करोतीति प्रमातुमशक्यः । अत एव किमिति नवनीतं हरसि, किमिति गोपीवस्त्राण्यपहरसि इति नियोक्तुमशक्यः । कथञ्चिच्छास्त्रैर्मेयः । अथाप्यमेयः प्रकर्षेण सामस्त्येन । तस्य कर्माणि चाप्रमेयाणीति नियोगपर्यनुयोगानर्हः । स्वयं कामं गच्छति । भक्तानां च कामं गमयति । सर्वं वशयतीति वशी । न कस्यापि वशो भवतीत्यवशी । मोदति निजजनस्य भूत्येति परस्मैभाषा । देशकालाभ्यां गुणतश्चापरिच्छिन्नश्चाप्रमेयः । हरिवंशे चैतत् पठ्यते विष्णुपर्वणि [१०२.३७] नारदवचनत्वेन ॥ ७६ ॥ **‘न प्रमातुं महाबाहुः–’** [स.प.६१.३४] इति च । हरिवंशे च [वि.प.१०२.३८] । श्लोकद्वयमपि किञ्चित्पाठभेदेन ब्रह्माण्डे च [उपो.पा.७३.९४–५] । तस्माद् वायुपुराणेऽपि [उत्त.३६.९४.५] पठ्यत इति स्थितम् । तथाहि तत्र पाठः– **‘अप्रमेयोऽनियोज्यश्च स्वयं कामगमो वशी । क्रीडते भगवान् लोके बालः क्रीडनकैरिव । न प्रमातुं महाबाहुः शक्योऽसौ मधुसूदनः । परं ह्यपरमेतस्माद् विश्वरूपान्न विद्यते’** इति । प्रमातुं यथावज्ज्ञातुम् । महाबाहुः बाहुषाळी । महावीर इत्येतत् । महान्तः अवनाश्च, आहूयन्त इत्याहवो नामानि चास्येति महावाहुरेव महाबाहुः । सर्वरक्षकः सर्वनामा च । विश्वं रूपयति विश्वस्मिन्नस्य रूपाणि चेति विश्वरूपः । विश्वं पूर्णं च रूपमस्य । विश्वस्य चायं बिम्बरूपः ॥ ७७ ॥

'वसुदेवसुतो नायं नायं गर्भेऽवसत् प्रभुः ।
'नायं दशरथाज्जातो नचापि जमदग्नितः ॥ ७८ ॥

'जायते नैव कुत्रापि म्रियते कुत एव तु[1] ।
'न वेद्ध्यो[2] मुह्यते नायं बद्ध्यते नैव केनचित् ॥ ७९ ॥

'कुतो दुःखं स्वतन्त्रस्य नित्यानन्दैकरूपिणः' ।
'ईशन्नपि हि देवेशः सर्वस्य जगतो हरिः ॥ ८० ॥

'कर्म्माणि कुरुते नित्यं कीनाश इव दुर्बलः' ।
'नाऽत्मानं वेद मुग्धोऽयं दुःखी सीतां च मार्ग्गते ॥ ८१ ॥

'बद्धः शक्रजितेत्यादि लीलैषाऽसुरमोहिनी' ।
'मुह्यते शस्त्रपातेन भिन्नत्वग्रुधिरस्रवः ॥ ८२ ॥

---

नायं देवक्यादीनां गर्भेऽवसत् । यद्यप्यवसत् । अथापि न गर्भवासबद्धता । मनुष्यलोके मातृपित्रोः प्रजाता इव प्रतीतास्त्रय एव–भार्गवो रामकृष्णौ च । अतस्त्रयाणामेवात्रोल्लेखः । नरसिंहान्तानां पित्रोरेवाभावात् । वामनस्य चाभौमत्वात् । बुद्धकल्किनोश्च तदानीमभूतत्वात् ॥ ७८ ॥ केनचित् पुरुषेण, अस्त्रादिना वा । स्वतन्त्रत्वात् । नित्यानन्दैकरूपत्वाच्च । केवलं तथा दर्शयति लीलया । कुत एवत्विति तुना अप्राकृतदेहत्वादित्याह । न वेध्यः । व्यधनं वेधस्ताडनम् । नायं केनापि वेद्धुं शक्यः । नापि वेधादिना मुह्यते । आसतां वसुदेवादयः । अयं प्राकृतदेहयोगेन न जायत एव । तत् किं जनकचिन्तया? अलं गर्भवासचिन्तया । कुत्रापि बहिरपि प्राकृतदेहेन न जायते । तत् कुत एव म्रियेत? देहयोगे सति हि वियोगः सम्भविता । **'ईशन्नपि हि–'** [६७.१४] इत्युद्योगपर्वणि धृतराष्ट्रं प्रति सञ्जयवचनम् । कीनाशः कृपणः क्षुद्रः । क्लिश्यतीति कीनाशः । क्लिश उपतापे । क्लिशेर्लकारलोपेन ईकारः,नाम् चाऽगम इति वैयाकरणाः । कित ज्ञाने । चिकेतीति कीनाश इत्यन्ये । कनी दीप्तौ । कनतीति कीनाश इत्यपरे । कुत्सितं नाशयतीति कीनाश इत्यन्ये । वस्तुतस्तु स्वेदक्लिन्नमश्नातीति क्लिन्नाशं सन्तं कीनाशमाहुः परोक्षप्रियाः । नाऽत्मानं वेद । यथा रामवचनं रामायणे–**'आत्मानं मानुषं मन्ये'** ॥ ७९–८१ ॥ बद्धः शक्रजिता नागास्त्रेण । असुरमोहिनी । क्वचित् सुरमोहिनी च । वक्ष्यति– **'सतामपि तु कुत्रचित्'** इति । भिन्नायां त्वचि रुधिरस्य स्रवः स्रवणं यस्य । भिन्नत्वगिति भिन्नं वा

---

१. **'एव तत्'**    २. **'न वध्यो–'**

**‘अजानन् पृच्छति स्मान्यांस्तनुं त्यक्त्वा दिवं गतः ।**
**‘इत्याद्यसुरमोहाय दर्शयामास नाट्यवत् ॥ ८३ ॥**

**‘अविद्यमानमेवेशः कुहकं तद् विदुः सुराः’ ।**
**‘प्रादुर्भावा हरेः सर्वे नैव [1]प्रकृतिदेहिनः ॥ ८४ ॥**

**‘निर्दोषा[2] गुणसम्पूर्णा दर्शयत्यन्यथैव तु ।**
**‘दुष्टानां मोहनार्थाय सतामपि तु[3] कुत्रचित् ॥ ८५ ॥**

**‘यथायोग्यफलप्राप्त्यै लीलैषा परमात्मनः’।**
**‘ज्ञानं तेऽहं सविज्ञानमिदं वक्ष्याम्यशेषतः ॥ ८६ ॥**

**‘यज्ज्ञात्वा नेह भूयोऽन्यज्ज्ञातव्यमवशिष्यते’ ।**
**‘अहं कृत्स्नस्य जगतः प्रभवः प्रळयस्तथा[4] ॥ ८७ ॥**

---

पदम् । शस्त्रपातेन भिन्नत्वक् । शस्त्रपातेन रुधिरस्रवः । शस्त्रपातेन मुह्यते ॥ ८२ ॥ नाट्यवत् नाट्ये यथा । नाट्यमस्यास्तीति नटवद् वा ॥ ८३ ॥ मोहनार्थमविद्यमानप्रदर्शनं कुहकम् । ननु कथं भगवति कुहकम्? **‘धाम्ना स्वेन सदा निरस्तकुहकम्’** इति तन्निषेधात् । अशक्तिमूलं हि कुहकं तत्र निषिद्धम् । अत्र तु अयोग्येषु यथार्थज्ञानगूहनमुच्यते । गुण एव हि सः । प्रकृतिदेहिनः प्रकृतिनिर्मितदेहवन्तो न भवन्ति सर्वथा ॥ ८४ ॥ कुतः? निर्दोषत्वात्, गुणपूर्णत्वाच्च । निरवधिकं पूर्णत्वं सम्पूर्णत्वम् । अन्यथा भौतिकदेहवत इव । तुना मृषादर्शनमेतदित्याह । सतामपि कुत्रचिदधिकपुण्यह्रासायेति द्वितीयतुनाऽऽह । **‘एधमानद्विट्’** इति हि तं स्तुवन्ति ॥ ८५ ॥ तदेतदाह– यथायोग्यफलप्राप्त्यै । यस्य यावद् योग्यं तस्य तावत एवान्यूनानतिरिक्तस्य फलस्य प्राप्त्यै । इतः परं विंशतिः श्लोकाः श्रीभगवद्गीतागताः । **‘ज्ञानं तेऽहम्–’**[७.२] इति सप्तमाध्याये । **‘इदं मद्विषयं ज्ञानम् । विज्ञानं विशेषज्ञानम्’** इति भाष्यम् ॥ ८६ ॥ **‘अहं कृत्स्नस्य–’** [७.६–७] इति च । प्रकृष्टो लयः प्रळयः, सर्वलय इत्यर्थः । रेफात् परो लो ळो भवति । **‘प्रभवादेः सत्ताप्रतीत्यादिकारणत्वात् तद्वोक्तृत्वाच्च प्रभव इत्यादि । अहमेव परतरः । मत्तोऽन्यत् परतरं न किञ्चिदपि’** इति भाष्ये । **‘पिता विष्णुः स जगतो माता श्रीर्या त्वचेतना । उपादानं तु जगतः सैव विष्णुबलेरिता’** इति तात्पर्ये । **‘मत्तोऽन्यत् परतरं नास्ति । परतरस्त्वहमेवेत्यर्थः । अन्यथाऽन्यदिति व्यर्थम्’** इति च ।

---

१. ‘नैव प्राकृतदे–ः’ २. ‘निर्दोषगुण–’ ३. ‘–मपि च कुत्र–’ ४. ‘प्रलयस्तथा’

‘मत्तः परतरं नान्यत् किञ्चिदस्ति धनञ्जय’ ।
‘अवजानन्ति मां मूढा मानुषीं तनुमाश्रितम्’[1] ॥ ८८ ॥

‘मोघाशा मोघकर्म्माणो मोघज्ञाना विचेतसः ।
‘राक्षसीमासुरीं चैव प्रकृतिं मोहनीं[2] श्रिताः ॥ ८९ ॥

‘महात्मानस्तु मां पार्त्थ दैवीं प्रकृतिमाश्रिताः ।
‘भजन्त्यनन्यमनसो ज्ञात्वा भूतादिमव्ययम्’ ॥ ९० ॥

‘पिताऽसि लोकस्य चराचरस्य त्वमस्य पूज्यश्च गुरुर्ग्गरीयान् ।
‘न त्वत्समोऽस्त्यभ्यधिकः कुतोऽन्यो लोकत्रयेऽप्यप्रतिमप्रभाव’ ॥ ९१ ॥

‘परं भूयः प्रवक्ष्यामि ज्ञानानां ज्ञानमुत्तमम् ।
‘यज्ज्ञात्वा मुनयः सर्वे परां सिद्धिमितो गताः’ ॥ ९२ ॥

‘मम योनिर्म्महद् ब्रह्म तस्मिन् गर्भं दधाम्यम् ।
‘सम्भवः सर्वभूतानां ततो भवति भारत’ ॥ ९३ ॥

---

**‘अवजानन्ति–’** [९.११-२] इति च । **‘मानुषीं तनुम् । मूढानां मानुषवत् प्रतीताम् । नतु मनुष्यरूपाम्’** इति भाष्यम् । **‘मानुषीं मनुष्यसदृशीम्’** इति तात्पर्यम् ॥ ८७–८ ॥ **‘मोघाशा वृथाशाः । भगवद्द्वेषिभिराशितमामुष्मिकं न किञ्चिदाप्यते । यज्ञादिकर्माणि च तेषां वृथैव । ज्ञानं च । केनापि ब्रह्मरुद्रादिभक्त्याद्युपायेन न कश्चित् पुरुषार्थस्तैराप्यत इत्यर्थः’** इति भाष्यवचनम् । **‘द्वेषकारणमाह–राक्षसीमिति’** इति च ॥ ८९ ॥ **‘महात्मानस्तु–’** [९.१३] इति च । **‘नेतरे द्विषन्तीति दर्शयितुं देवानाह–महात्मान इत्यादिना’** इति च ॥ ९० ॥ **‘पिताऽसि–’**[११.४३] इत्येकादशे । पिताऽसि जनकोऽसि । पाता चासि । गरीयान् गुरुः । जगद्गुरूणामपि गुरुः । गुरुभ्यो महीधरादिभ्योऽपि गरीयानिति वा ॥ ९१ ॥ **‘परं भूयः–’**[१४.१] इति चतुर्दशे ॥ ९२ ॥ **‘मम योनिः–’** [१४.३] इति च । **‘महद् ब्रह्म प्रकृतिः । सा च श्रीर्भूर्दुर्गेति या भिन्ना । उमासरस्वत्याद्यास्तु तदंशयुतान्यजीवाः । मम योनिरिति गर्भाधानार्था योनिः’** इति भाष्यवचनम् । **‘योनिर्भार्या तथा स्थानं योनिः कारणमेव च’** इति च शब्दनिर्णयवचनं तात्पर्ये ॥ ९३ ॥

---

१. **‘–माश्रितम् । परं भावमजानन्तो मम भूतमहेश्वरम् । मोघाशा–’** २. **‘मोहिनीम्’**

‘द्वाविमौ पुरुषौ लोके क्षरश्चाक्षर एव च ।
‘क्षरः सर्वाणि भूतानि कूटस्थोऽक्षर उच्यते ॥ ९४ ॥

‘उत्तमः पुरुषस्त्वन्यः परमात्मेत्युदाहृतः ।
‘यो लोकत्रयमाविश्य बिभर्त्त्यव्यय ईश्वरः ॥ ९५ ॥

‘यस्मात् क्षरमतीतोऽहमक्षरादपि चोत्तमः ।
‘अतोऽस्मि लोके वेदे च प्रथितः पुरुषोत्तमः ॥ ९६ ॥

‘यो मामेवमसम्मूढो जानाति पुरुषोत्तमम् ।
‘स सर्वविद् भजति मां सर्वभावेन भारत ॥ ९७ ॥

‘इति गुह्यतमं शास्त्रमिदमुक्तं मयाऽनघ ।
‘एतद् बुध्वा[1] बुद्धिमान् स्यात् कृतकृत्यश्च भारत’ ॥ ९८ ॥

‘द्वौ भूतसर्गौ लोकेऽस्मिन् दैव आसुर एव च ।
‘दैवो विस्तरशः प्रोक्त आसुरं पार्थ मे शृणु’ ॥ ९९ ॥

---

**‘द्वाविमौ–’** इत्यारभ्य **‘कृतकृत्यश्च भारत’** इत्यन्तं पञ्चदशे [१५.१६-२०] । **‘क्षरभूतानि ब्रह्मादीनि । कूटस्थः प्रकृतिः’** इति गीताभाष्ये । **‘ब्रह्मरुद्रादयः सर्वे शरीरक्षरणात् क्षराः । श्रीरक्षरात्मेत्युदिता नित्यचिद्देहका यतः । चेतनाचेतनस्यास्य राशेः संस्थापकत्वतः । कूटस्थ आत्मा सा ज्ञेया परमात्मा हरिः स्वयम् । क्षराक्षरात्मनोर्यस्मादुत्तमः स सदाऽनयोः । पुरुषोत्तमनाम्नाऽतः प्रसिद्धो लोकवेदयोः’** इति तात्पर्योदाहृता नारायणश्रुतिः । लोके पौरुषेयागमे । ज्ञानिलोके वा ॥ ९४–६ ॥ असम्मूढः अधर्मकामितारहितः । **‘नाविरतो दुश्चरितात्’** इत्यादेः । **‘सम्मोहोऽधर्मकामिता’** इति च ॥ ९७ ॥ एतद् बुध्वैव बुद्धिमानित्युच्यते । नतु यत्किमपि बुध्वा । कृतकृत्यश्च स्यात् । नतु ततोऽन्यत् किञ्चिद् बोद्धव्यमवशिष्यते ॥ ९८ ॥ **‘द्वौ भूतसर्गौ–’** [१६.६] इति षोडशे । दैव आसुरश्चेति द्वावेव मुख्यतः । तत्रापि दैवो दैव एव । आसुर आसुर एवेति स्वभावानत्ययमेवकार आह । **‘सर्गाणां सुबहुत्वेऽपि**

---

१. **‘बुद्ध्वा’** **‘मद्ध्वः’**, इत्येव लिखितव्यम् । परन्तु वपरस्य धकारस्य द्विर्भावे तल्लेखनाय संयुक्तं मुद्राक्षरं नास्ति । अपि च **‘सहस्रशीर्षम्’** इत्यादिवदिदमपि विश्लिष्य पठनीयमिति मा नाम पठितॄणां विभ्रमो भूदिति द्विर्भावं विनैवात्र प्रकटितम्–**‘बुध्वा, मध्वः’**इत्यादिषु सर्वत्र ।

**'असत्यमप्रतिष्ठं ते जगदाहुरनीश्वरम्'[१] ।**
**'ईश्वरोऽहमहं भोगी सिद्धोऽहं बलवान् सुखी'[२] ॥ १०० ॥**

**'मामात्मपरदेहेषु प्रद्विषन्तोऽभ्यसूयकाः ।**
**'तानहं द्विषतः क्रूरान् संसारेषु नराधमान् ।**
**'क्षिपाम्यजस्रमशुभानासुरीष्वेव योनिषु ॥ १०१ ॥**

**'आसुरीं योनिमापन्ना मूढा जन्मनिजन्मनि ।**
**'मामप्राप्यैव कौन्तेय ततो यान्त्यधमां गतिम्' ॥ १०२ ॥**

**'सर्वभूतेषु येनैकं भावमव्ययमीक्षते ।**
**'अविभक्तं विभक्तेषु तज्ज्ञानं विद्धि सात्विकम्' ॥ १०३ ॥**

---

**शुभाशुभफलाधिकौ । देवासुराख्यौ द्वावेव गन्धर्वाद्यास्तदन्तरा । मुक्तिगा एव विज्ञेया देवा एव विमुक्तिगाः'** इति तात्पर्ये ब्रह्मवैवर्तवचनम् ॥ ९९ ॥ **'असत्यमप्रतिष्ठम्–'** [१६.८] इति च । **'जगतः सत्यं प्रतिष्ठा ईश्वरश्च विष्णुः । तद्वैपरीत्येनाऽहुः'** इति भाष्यवचनम् । **'मिथ्या जगदिदं सर्वं भ्रमजत्वान्न तिष्ठति । मिथ्यात्वान्नेश्वरोऽस्यास्ति परेभ्यो नच जायते'** इति च तात्पर्ये । **'ईश्वरोऽहम्–'** [१६.१४] इति च । **'येऽतिमानेन मन्यन्ते परमेशोऽहमित्यपि'** इति तात्पर्ये ब्रह्मवैवर्तवचनम् ॥ १०० ॥ **'मामात्मपरदेहेषु प्रद्विषन्तः–'** [१६.१८–२०] इत्यादि च । गीतावाक्यमिदं व्याचख्यौ स्वयं भगवत्पादः– **'न कस्यचिद् विष्णुः कारयिता । यदि स्यान्ममापीदानीं कारयत्वित्यादि'** इति । भगवतः देवानां चोत्कर्षे सदाऽभ्यसूयकाः ॥ १०१ ॥ **'मामप्राप्यैव'** इत्येवकारेण सुखरूपां मुक्तिं निषिषेध । ततः जन्मनिजन्मनि आसुरीं योनिमाप्य संसारभोगान्ते, अधमां पुनरावृत्तिरहितां दुःखमयीं गतिं यान्ति । निरवकाशमिदं नित्यनरकगमकम् ॥ १०२ ॥ **सर्वभूतेषु–'** [१८.२०] इत्यष्टादशे । परस्परं विभक्तेषु एकमविभक्तमभिन्नं भावं भूमानमीक्षते । **'एकं भावं विष्णुम्'** इति भाष्ये । **'अस्तित्वाद् भूतनामभ्यः सर्वजीवेभ्य एव यत् । मुक्तेभ्योऽपि पृथक्त्वेन विष्णोः सर्वत्रगस्य च । ऐक्येन च स्वरूपाणां प्रादुर्भावादिकात्मनाम् । तारतम्येन जीवानां भेदेनैव परस्परम् । जडेभ्यश्चैव जीवानां जडानां च परस्परम् । तेभ्यो विष्णोश्च सम्यक् तल्लक्षणज्ञानपूर्वकम् । ज्ञानं**

---

एवं नपरे धकारेऽपि **'मूर्द्धना, मूर्द्धनि'** इत्येव लिखितव्यम् । एवं रपरेऽपि **'द्ध्रुवम्'** इति लिखितव्यम् । अत्र सर्वत्राऽपि दधनानां, दधरानां च संयुक्तमक्षरं नास्तीति **'मूर्ध्ना, मूर्ध्नि, ध्रुवम्'** इत्येवं मुद्रितं पाठकानां सौकर्याय । एवमुत्तरत्र सर्वत्राऽप्ययमेव लिपिक्रमोऽनुसन्धेयः ।

१. **'–रनीश्वरम् । अपरस्परसम्भूतं किमन्यत् कामहैतुकम् । एतां दृष्टिमवष्टभ्य नष्टात्मानोऽल्पबुद्धयः । प्रभवन्त्युग्रकर्माणः क्षयाय जगतोऽहिताः । ईश्वरो–'**

२. **'सुखी । आढ्योऽभिजनवानस्मि कोऽन्योऽस्ति सदृशो मया । मामात्म–'**

**‘सर्वगुह्यतमं भूयः शृणु मे परमं वचः ।**
**‘इष्टोऽसि मे दृढमिति ततो वक्ष्यामि ते हितम्** **॥ १०४ ॥**

**‘मन्मना भव मद्भक्तो मद्याजी मां नमस्कुरु ।**
**‘मामेवैष्यसि सत्यं ते प्रतिजाने प्रियोऽसि मे’** **॥ १०५ ॥**

**‘पञ्चरात्रस्य कृत्स्नस्य वक्ता नारायणः स्वयम् ।**
**‘सर्वेष्वेतेषु राजेन्द्र ज्ञानेष्वेतद् विशिष्यते** **॥ १०६ ॥**

**‘ज्ञानेष्वेतेषु राजेन्द्र साङ्ख्यपाशुपतादिषु ।**
**‘यथायोगं यथान्यायं निष्ठा नारायणः परः’** **॥ १०७ ॥**

---

**सात्त्विकमुद्दिष्टं यत् साक्षान्मुक्तिकारणम्’** इति पाद्मवचनं तात्पर्ये ॥ १०३ ॥ **‘सर्वगुह्यतमम्–’**[१८.६४–५] इति च । **‘साधनसारोपसंहारः सर्वगुह्यतममिति । मन्मना इत्यादेः पूर्वमेवोक्तत्वाद् भूय इति । अर्थतस्त्वत्रापि विष्ण्वाधिक्यमेवोक्तं भवति’** इति तात्पर्यवचनम् ॥ १०४–५ ॥ **‘पञ्चरात्रस्य–’** इत्यादि **‘–गुणाधिकम्’** इत्यन्तं मोक्षधर्मवचनम् [शां.प.३५९.६८–६९;७२;३६०.१–३] । **‘साङ्ख्यं योगः पाशुपतं वेदारण्यकमेव च । ज्ञानान्येतानि भिन्नानि उताहो नेति चोच्यताम्’** [शां.प.३५९.१] इति राज्ञा जनमेजयेन पृष्टो वैशम्पायनो व्यासशिष्यः–**‘साङ्ख्यं योगः पाशुपतं वेदारण्यकमेव च । ज्ञानान्येतानि भिन्नानि नात्र कार्या विचारणा’** [३५९.६४] इति साङ्ख्यपाशुपतादीनां वेदबाह्यत्वमुक्त्वा, **‘पञ्चरात्रस्य कृत्स्नस्य वक्ता नारायणः स्वयम् । सर्वेष्वेतेषु राजेन्द्र ज्ञानेष्वेतद् विशिष्यते । ज्ञानेष्वेतेषु राजेन्द्र साङ्ख्यपाशुपतादिषु । यथायोगं यथान्यायं निष्ठा नारायणः परः । ससंशयास्ते सर्वेऽपि पञ्चरात्रमसंशयम् । निःसंशयेषु सर्वेषु नित्यं वसति केशवः । ससंशयान् हेतुबलान् नाध्यावसति माधवः । पञ्चरात्रविदो मुख्या यथाक्रमपरा नृप । एकान्तभावोपगता वासुदेवं विशन्ति ते’** [३५९.६५–७४] इति वेदपञ्चरात्रयोरैकार्थ्यमाह । अत्र कश्चन पाठभेदस्तत्वदीपिकादर्शेषु–**‘ज्ञानेष्वेतेषु राजेन्द्र सर्वेष्वेतद् विशिष्यते । ज्ञानेष्वेतेषु सर्वेषु साङ्ख्यपाशुपतादिषु’** इति, **‘पञ्चरात्रविदो ये तु यथाक्रमपरा नृप’** इति च । **‘निःसंशयेषु यथानिश्चितार्थेषु । हेतुबलान् हेतुमात्रबलान्’** इति तत्वदीपिकायाम् । ज्ञानेषु परतत्वज्ञापकेषु शास्त्रेषु ॥ १०६ ॥ यथायोगं योगार्थानुगुण्येन । यथान्यायं उपक्रमोपसंहाराद्यानुगुण्येन च । **‘यथायोगं सर्वशब्दानां ब्रह्मणि वृत्त्या । यथान्यायं यथा विष्णौ तात्पर्योपपत्तिः’** इति च तत्वदीपिका । निष्ठा परममुख्यार्थः । **‘हिंस्राणां मोहनार्थाय सङ्कुला एव वैष्णवाः । शास्त्राभासाः प्रवर्तन्ते देवब्रह्मर्षिवक्त्रतः’** [अहि.सं.१२.५१], **‘निष्ठा त्वेकैव शास्त्राणामेतेषां पञ्चवर्त्मनाम् । शास्त्रं सुदर्शनं नाम तदर्थो विष्णुरव्ययः’** [५४] इति पञ्चरात्रेषु ॥ १०७ ॥

**‘पञ्चरात्रविदो मुख्या यथाक्रमपरा नृप ।**
**‘एकान्तभावोपगता वासुदेवं विशन्ति ते[1]’ ॥ १०८ ॥**

**‘बहवः पुरुषा ब्रह्मन्नुताहो एक एव तु ।**
**‘को ह्यत्र पुरुषश्रेष्ठस्तं भवान् वक्तुमर्हति[2] ॥ १०९ ॥**

**‘वैशम्पायन उवाच–**

**‘नैतदिच्छन्ति पुरुषमेकं कुरुकुलोद्वह ।**
**‘बहूनां पुरुषाणां हि[3] यथैका योनिरुच्यते ।**
**‘तथा तं पुरुषं विश्वमाख्यास्यामि गुणाधिकम्’ ॥ ११० ॥**

**आह ब्रह्मैतमेवार्थं महादेवाय पृच्छते ।**
**‘तस्यैकस्य ममत्वं हि स चैकः पुरुषो विराट्’ ॥ १११ ॥**

**‘अहं ब्रह्मा चाऽद्य ईशः प्रजानां तस्माज्जातस्त्वं च मत्तः प्रसूतः ।**
**‘मत्तो जगत् स्थावरं जङ्गमं च सर्वे वेदाः सरहस्याश्च पुत्र’ ॥ ११२ ॥**

---

**‘यथाक्रमपराः यथोक्तदेवतातारतम्यक्रमपराः’** इति च । एकान्तभावेन वासुदेवमुपगताः ॥१०८॥ **‘बहवः पुरुषाः–’** [३६०.१] इति जनमेजयप्रश्नः । यदि बहवः, को ह्यत्र पुरुषश्रेष्ठः सर्वनियामकः । बहूनामस्वातन्त्र्यदर्शनात् ॥ १०९ ॥ **‘नैतदिच्छन्ति–’** [२–३]इत्यादि वैशम्पायनस्य प्रतिवचनम् । एकमेव पुरुषाख्यं तत्वमस्तीत्येतन्मतं ज्ञानिनो नेच्छन्ति । एका योनिः मुख्यं कारणम् ॥ ११० ॥ **‘तस्यैकस्य–’** [शां.प.३६१.९] इति च । **‘महापुरुषशब्दं स बिभर्त्येकः सनातनः’** इत्युत्तरार्द्धम् । ब्रह्मादिषु सर्वेषु स एक एव विविधं राजत इति विराट् । स एक एव ममेदमिति वक्तुं प्रभवति । नान्यस्य कस्यचित् किमपि स्वम् । **‘तेन त्यक्तेन भुञ्जीथा मा गृधः कस्य स्विद् धनम्’** इति हि श्रुतिः ॥ १११ ॥ **‘अहं ब्रह्मा चाऽद्य ईशः–’** [शां.प.३६१.२१] इति च ब्रह्मवचनं शिवं प्रति । ब्रह्मा च सर्वजीवेषु बृंहितोऽपि, जीवानामाद्योऽपि, ईशोऽपि सर्वजीवनियामकतया सर्वजीवोत्तमोऽपि तस्मान्नारायणाज्जातः । त्वं शिवश्च मत्तः प्रसूतः ॥ ११२ ॥

---

१. **‘विशन्ति ते । जनमेजय उवाच । बहवः–’** २. **‘वक्तुमर्हसि ।’** ३. **‘–षाणां च यथैका’**

**तथैव भीमवचनं धर्म्मजं प्रत्युदीरितम् ।**
**'ब्रह्मेशानादिभिः सर्वैः[1] समेतैर्य्यद्गुणांशकः ॥ ११३ ॥**

**'नावसाययितुं शक्यो व्याचक्षाणैश्च सर्वदा ।**
**'स एष[2] भगवान् कृष्णो नैव केवलमानुषः ॥ ११४ ॥**

**'यस्य प्रसादजो ब्रह्मा रुद्रश्च क्रोधसम्भवः' ।**
**वचनं चैव कृष्णस्य ज्येष्ठं कुन्तीसुतं प्रति ॥ ११५ ॥**

**'रुद्रं समाश्रिता देवा रुद्रो ब्रह्माणमाश्रितः ।**
**'ब्रह्मा मामाश्रितो नित्यं नाहं [3]किञ्चिदुपाश्रितः' ॥ ११६ ॥**

**'यथाऽऽश्रितानि ज्योतींषि ज्योतिःश्रेष्ठं दिवाकरम् ।**
**'एवं मुक्तगणाः सर्वे वासुदेवमुपाश्रिताः' ॥ ११७ ॥**

---

अल्पोंऽशः अंशकः गुणलेशः ॥ ११३ ॥ अवसाय इदमित्थमित्यवधारणा ॥ ११४ ॥ **'यस्य प्रसादजो ब्रह्मा रुद्रश्च क्रोधसम्भवः । योऽसौ योनिर्हि सर्वस्य स्थावरस्य चरस्य च'** [शां.प.३५०.१२] इतिचार्जुनं प्रति श्रीकृष्ण-वचनम् । **'अत्रानुवर्ण्यतेऽभीक्ष्णं विश्वात्मा भगवान् हरिः । यस्य प्रसादजो ब्रह्मा रुद्रश्च क्रोधसम्भवः'** [१२.४.४४] इति च भागवते। क्रोधोऽपि तस्य प्रसाद एव। वचनं चैव कृष्णस्येति पूर्वत्र चोत्तरत्र चान्वेति । **'यस्य प्रसादजः–'** इति कृष्णस्य ज्येष्ठं वचनम् । कुन्तीसुतमर्जुनं प्रतीति पूर्वान्वयः । **'रुद्रं समाश्रिताः–'** इति च कृष्णस्यैव वचनम्, ज्येष्ठं कुन्तीसुतं युधिष्ठिरं प्रतीत्युत्तरान्वयः । ज्येष्ठं वचनं प्रशस्यतमं वचनमित्यर्थः । **'प्रशस्यस्य श्रः । ज्य च'** [अ.सू. ५.३.६०–१] इति हि पाणिनिः । ज्येष्ठं कुन्तीसुतमिति वयसा ज्येष्ठमित्यर्थः ॥ ११५ ॥ **'रुद्रं समाश्रिताः–'** इति वैष्णवधर्मपर्वणि [आश्व.प.११८.३७] । अशक्त्याऽन्यस्योपकारकस्याऽश्रयणमुपाश्रयणम् । न केवलमन्यं कञ्चन चेतनमनुपाश्रितः, सृष्टावुपादनतया जडप्रकृतेरप्युपादानं स्वस्य नापेक्षितम्, किन्तु लीलयैव तदुपादानमिति किञ्चिदित्याह ॥ ११६ ॥ यथाऽऽश्रितानि ज्योतींषि । प्रतिफलितसूर्यज्योतींषि हि ज्योतींष्यन्यानि भासन्ते । न स्वतः । एवं मुक्तगणाः सर्वे । **'एतस्यैवाऽनन्दस्यान्यानि भूतानि मात्रामुपजीवन्ति'** इति हि श्रुतिः ॥ ११७ ॥

---

१. **'–दिभिर्देवैः'** २. **'स एव'** ३. **'नाहं कश्चिदुपा–'**

**भविष्यत्पर्वगं चापि वचो व्यासस्य सादरम् ।**
**'वासुदेवस्य महिमा भारते निर्ण्णयोदितः ॥ ११८ ॥**

**'तदर्थास्तु कथाः सर्वा नान्यार्थं वैष्णवं यशः ।**
**'तत्प्रतीपं तु यद् दृश्येन्न तन्मम मनीषितम् ॥ ११९ ॥**

**'भाषास्तु त्रिविधास्तत्र मया वै सम्प्रदर्शिताः ।**
**'उक्तो यो महिमा विष्णोः स तूक्तो हि समाधिना ॥ १२० ॥**

---

सादरं सतात्पर्यम् । **'वसुदेवस्य महिमा–'** इत्यादि द्वादशश्लोकमयं भविष्यत्पर्वगं स्वतो व्यासस्य वचोऽप्युक्तार्थ-संवादि । चकारेणास्य दौर्लभ्यमाह– स्वयमेव ग्रन्थकृत् स्वाशयं मुखत आविश्चकारेति । **'कचित् समुचयं ब्रूयात् कचिद् दौर्लभ्यवाचकः'** इति हि शब्दनिर्णयवचनम् ॥ ११८ ॥ दृश्येत् दृश्यते । वर्णव्यत्यासेनेदमाह–यदि व्यत्यासेन कथितम्, व्यत्यस्याऽर्थोऽवगन्तव्य इति । यद्वा दृश्येत् दृश्येत । परस्मैभाषयेदमाह–यत्परेषां मोहायैवेदमुदितमिति । न ग्रन्थकर्तुर्व्यासस्य मोहो नाम सम्भवति ॥ ११९ ॥ मया वै । वायित्यवधारणे, प्रसिद्धौ च । प्रसिद्धं हि भाषात्रयं पुराणतत्त्वविदाम्–समाधिभाषा, दर्शनभाषा, गुह्यभाषा चेति । यथाऽस्ति तथाकथनं समाधिः । यथा दृश्यते मूढचक्षुषा, शास्त्रान्तरेषु वा तथा कथनं दर्शनम् । निगूह्य कथनं गुह्यम् । एवं त्रिविधाऽपि सा पुनस्त्रिधा विभज्यमाना नवधा भवति–

| | | |
|---|---|---|
| १. समाधिसमाधिभाषा | २. समाधिदर्शनभाषा | ३. समाधिगुह्यभाषा |
| ४. दर्शनसमाधिभाषा | ५. दर्शनदर्शनभाषा | ६. दर्शनगुह्यभाषा |
| ७. गुह्यसमाधिभाषा | ८. गुह्यदर्शनभाषा | ९. गुह्यगुह्यभाषा |

एताश्च नवभाषाः पुनस्त्रिधा विभक्ताः सप्तविंशतिधा भवन्ति–

| | | |
|---|---|---|
| १. समाधिसमाधिसमाधि० | २. समाधिसमाधिदर्शन० | ३. समाधिसमाधिगुह्य० |
| ४. समाधिदर्शनसमाधि० | ५. समाधिदर्शनदर्शन० | ६. समाधिदर्शनगुह्य० |
| ७. समाधिगुह्यसमाधि० | ८. समाधिगुह्यदर्शन० | ९. समाधिगुह्यगुह्य० |
| १० दर्शनसमाधिसमाधि० | ११. दर्शनसमाधिदर्शन० | १२. दर्शनसमाधिगुह्य० |
| १३. दर्शनदर्शनसमाधि० | १४. दर्शनदर्शनदर्शन० | १५. दर्शनदर्शनगुह्य० |
| १६. दर्शनगुह्यसमाधि० | १७. दर्शनगुह्यदर्शन० | १८. दर्शनगुह्यगुह्य० |
| १९. गुह्यसमाधिसमाधि० | २०. गुह्यसमाधिदर्शन० | २१. गुह्यसमाधिगुह्य० |
| २२. गुह्यदर्शनसमाधि० | २३. गुह्यदर्शनदर्शन० | २४. गुह्यदर्शनगुह्य० |
| २५. गुह्यगुह्यसमाधि० | २६. गुह्यगुह्यदर्शन० | २७. गुह्यगुह्यगुह्य० |

पुनस्त्रिधा विभक्ता एकाशीतिविधाः पुराणभाषाः–

| | | |
|---|---|---|
| १. समाधिसमाधिसमाधिसमाधि० | २. समाधिसमाधिसमाधिदर्शन० | ३. समाधिसमाधिसमाधिगुह्य० |
| ४. समाधिसमाधिदर्शनसमाधि० | ५. समाधिसमाधिदर्शनदर्शन० | ६. समाधिसमाधिदर्शनगुह्य० |
| ७. समाधिसमाधिगुह्यसमाधि० | ८. समाधिसमाधिगुह्यदर्शन० | ९. समाधिसमाधिगुह्यगुह्य० |
| १०. समाधिदर्शनसमाधिसमाधि० | ११. समाधिदर्शनसमाधिदर्शन० | १२. समाधिदर्शनसमाधिगुह्य० |
| १३. समाधिदर्शनदर्शनसमाधि० | १४. समाधिदर्शनदर्शनदर्शन० | १५. समाधिदर्शनदर्शनगुह्य० |
| १६. समाधिदर्शनगुह्यसमाधि० | १७. समाधिदर्शनगुह्यदर्शन० | १८. समाधिदर्शनगुह्यगुह्य० |
| १९. समाधिगुह्यसमाधिसमाधि० | २०. समाधिगुह्यसमाधिदर्शन० | २१. समाधिगुह्यसमाधिगुह्य० |
| २२. समाधिगुह्यदर्शनसमाधि० | २३. समाधिगुह्यदर्शनदर्शन० | २४. समाधिगुह्यदर्शनगुह्य० |
| २५. समाधिगुह्यगुह्यसमाधि० | २६. समाधिगुह्यगुह्यदर्शन० | २७. समाधिगुह्यगुह्यगुह्य० |
| २८. दर्शनसमाधिसमाधिसमाधि० | २९. दर्शनसमाधिसमाधिदर्शन० | ३०. दर्शनसमाधिसमाधिगुह्य० |
| ३१. दर्शनसमाधिदर्शनसमाधि० | ३२. दर्शनसमाधिदर्शनदर्शन० | ३३. दर्शनसमाधिदर्शनगुह्य० |
| ३४. दर्शनसमाधिगुह्यसमाधि० | ३५. दर्शनसमाधिगुह्यदर्शन० | ३६. दर्शनसमाधिगुह्यगुह्य० |
| ३७. दर्शनदर्शनसमाधिसमाधि० | ३८. दर्शनदर्शनसमाधिदर्शन० | ३९. दर्शनदर्शनसमाधिगुह्य० |
| ४०. दर्शनदर्शनदर्शनसमाधि० | ४१. दर्शनदर्शनदर्शनदर्शन० | ४२. दर्शनदर्शनदर्शनगुह्य० |
| ४३. दर्शनदर्शनगुह्यसमाधि० | ४४. दर्शनदर्शनगुह्यदर्शन० | ४५. दर्शनदर्शनगुह्यगुह्य० |
| ४६. दर्शनगुह्यसमाधिसमाधि० | ४७. दर्शनगुह्यसमाधिदर्शन० | ४८. दर्शनगुह्यसमाधिगुह्य० |
| ४९. दर्शनगुह्यदर्शनसमाधि० | ५०. दर्शनगुह्यदर्शनदर्शन० | ५१. दर्शनगुह्यदर्शनगुह्य० |
| ५२. दर्शनगुह्यगुह्यसमाधि० | ५३. दर्शनगुह्यगुह्यदर्शन० | ५४. दर्शनगुह्यगुह्यगुह्य० |
| ५५. गुह्यसमाधिसमाधिसमाधि० | ५६. गुह्यसमाधिसमाधिदर्शन० | ५७. गुह्यसमाधिसमाधिगुह्य० |
| ५८. गुह्यसमाधिदर्शनसमाधि० | ५९. गुह्यसमाधिदर्शनदर्शन० | ६०. गुह्यसमाधिदर्शनगुह्य० |
| ६१. गुह्यसमाधिगुह्यसमाधि० | ६२. गुह्यसमाधिगुह्यदर्शन० | ६३. गुह्यसमाधिगुह्यगुह्य० |
| ६४. गुह्यदर्शनसमाधिसमाधि० | ६५. गुह्यदर्शनसमाधिदर्शन० | ६६. गुह्यदर्शनसमाधिगुह्य० |
| ६७. गुह्यदर्शनदर्शनसमाधि० | ६८. गुह्यदर्शनदर्शनदर्शन० | ६९. गुह्यदर्शनदर्शनगुह्य० |
| ७०. गुह्यदर्शनगुह्यसमाधि० | ७१. गुह्यदर्शनगुह्यदर्शन० | ७२. गुह्यदर्शनगुह्यगुह्य० |
| ७३. गुह्यगुह्यसमाधिसमाधि० | ७४. गुह्यगुह्यसमाधिदर्शन० | ७५. गुह्यगुह्यसमाधिगुह्य० |
| ७६. गुह्यगुह्यदर्शनसमाधि० | ७७. गुह्यगुह्यदर्शनदर्शन० | ७८. गुह्यगुह्यदर्शनगुह्य० |
| ७९. गुह्यगुह्यगुह्यसमाधि० | ८०. गुह्यगुह्यगुह्यदर्शन० | ८१. गुह्यगुह्यगुह्यगुह्य० |

**‘शैवदर्शनमालम्ब्य क्वचिच्छैवी कथोदिता ।**
**‘समाधिभाषयोक्तं यत् तत् सर्वं ग्राह्यमेव हि ॥ १२१ ॥**

**‘अविरुद्धं समाधेस्तु दर्शनोक्तं च गृह्यते ।**
**‘आद्यन्तयोर्विरुद्धं यद् दर्शनं तदुदाहृतम् ॥ १२२ ॥**

**‘दर्शनान्तरसिद्धं च गुह्यभाषाऽन्यथा भवेत् ।**
**‘तस्माद् विष्णोर्हि महिमा भारतोक्तो यथार्थतः ॥ १२३ ॥**

**‘तस्याङ्गं प्रथमं[1] वायुः प्रादुर्भावत्रयान्वितः ।**
**‘प्रथमो हनुमान् नाम द्वितीयो भीम एव च ॥ १२४ ॥**

---

तथाह्युक्तं भागवततात्पर्यनिर्णये–**‘गुह्यदर्शनभाषे च भाषा चैव समाधिका । तिस्रस्तु मूलभाषाः स्युरेकैका च त्रिधा पुनः । गुह्यदर्शनसञ्ज्ञा च गुह्यगुह्या तथाऽपरा । एवमादिक्रमेणैव त्वेकाशीतिविभेदिताः । भाषाः–’** इति [११.२१. ४०] । तत्र यो विष्णोर्महिमा मुखत उक्तः स तु स एव समाधिसमाधिसमाधिसमाधिभाषयोक्तः ॥ १२० ॥ शैवशास्त्र-मालम्ब्य शिवाधिक्यवादिनी कथोदिता । उपलक्षणमेतत् । शैवादिदर्शनमालम्ब्य । अवैष्णवदर्शनमालम्ब्येत्येतत् । दुर्गाशिवादिमहिमवादिनी कथोदिता । दर्शनमिति शास्त्रमापातदृष्टिश्च । कृष्णः पुत्रार्थं शिवं प्रति तपस्तेप इत्यादि शैवदर्शनमालम्ब्य । कृष्णः शितविशिखहतो विशीर्णदंसः क्षतजपरिप्लुत इति तत्रत्यानां सैनिकानामापातदर्शनम-वलम्ब्य ॥ १२१ ॥ ननु कथमथ निर्णीयेत, अयं समाधिरिदं दर्शनमिति? आह– आद्यन्तयोर्विरुद्धम् । उपक्रमोपसंहारौ हि तात्पर्यनिर्णयलिङ्गम् । तद्विरुद्धं मध्यपतितं न स्वाभिप्राय इति स्फुटं ज्ञायत एवेति कस्तत्रानिर्णयः? यद् दर्शनान्तर-सिद्धं वैष्णवदर्शनविरुद्धं च तदपि दर्शनमुदाहृतम् । दर्शनविदां न तिरोहितम् । जानन्त्येव हि दर्शनज्ञाः– इदं दर्शन-माश्रित्येदमुदितम्, इदमाश्रित्य चेदमिति । प्रतीयमानार्थादन्यथा अन्यार्थगर्भिता, प्रतीयमानभिन्नार्था, अप्रतीयमानार्था च गुह्यभाषा । यथा–**‘द्वा सुपर्णा सयुजा सखाया’** इति, यथा वा **‘अस्य वामस्य पलितस्य होतुः–’** इत्यादि, यथा वा– **‘स्त्रियः सतीस्ताँ उ मे पुंस आहुः’** इत्यादि, यथा वा भारत एव **‘अट्टशूला जनपदाः शिवशूलाश्चतुष्पथाः’** [व.प.१९१. ४२; १९३.५२] इत्यादि । **‘अट्टमन्नं शिवो वेदो ब्राह्मणाश्च चतुष्पथाः’** इति **‘शूलं तद्विक्रयं विदुः’** इति च साम्प्रदायिकाः ॥ १२२–३ ॥ भीम एव च । एवकारेणायोगं व्यवच्छिनत्ति– हनुमत्पुच्छमुद्धर्तुमप्रभवन् कथमयं हनुमद्रूपः स्यादिति कुशङ्कापनोदाय, भीमश्च वायुरेवेति ॥ १२४ ॥

---

१. **‘प्रथमो वायुः’**

‘पूर्ण्णप्रज्ञस्तृतीयस्तु भगवत्कार्य्यसाधकः ।
‘त्रेताद्येषु युगेष्वेष सम्भूतः केशवाज्ञया ॥ १२५ ॥

‘एकैकशस्त्रिषु पृथक् द्वितीयाङ्गं सरस्वती ।
‘शंरूपे तु रतेर्वायौ श्रीरित्येव च कीर्त्यते ॥ १२६ ॥

‘सैव च द्रौपदी नाम काळी[1] चन्द्रेति चोच्यते ।
‘तृतीयाङ्गं हरेः शेषः प्रादुर्भावसमन्वितः ॥ १२७ ॥

‘प्रादुर्भावा नरश्चैव लक्ष्मणो बल एव च ।
‘रुद्रात्मकत्वाच्छेषस्य शुको द्रौणिश्च तत्तनू[2] ॥ १२८ ॥

‘इन्द्रे[3] नरांशसम्पत्त्या पार्त्थोऽपीषत् तदात्मकः ।
‘प्रद्युम्नाद्यास्ततो विष्णोरङ्गभूताः क्रमेण तु ॥ १२९ ॥

‘चरितं वैष्णवानां तद्[4] विष्णूद्रेकाय कत्थ्यते’ ।
तथा भागवतेऽप्युक्तं हनूमद्वचनं परम् ॥ १३० ॥

---

पूर्वावतारौ बलकार्यौ । तृतीयस्तु ज्ञानकार्य इति विशेषं तुना बोधयति । एवं प्रादुर्भावत्रयेऽपि भगवत्कार्यसाधकः । **‘विष्णोः पदे हि परमे मध्व उत्सः शुभाश्रयः’** [उ.खं.२२७.७२] इति च पाद्मे । त्रेताद्येषु । त्रेतायां द्वापरे कलौ च । त्रिष्वपि युगेषु एकैकेन रूपेण केशवाज्ञया सम्भूतः ॥ १२५ ॥ भारते द्रौपदी श्रीपदेन निर्दिष्टा । यथा धर्मजं प्रतीन्द्रवचनं स्वर्गारोहणपर्वणि–**‘श्रीरेषा द्रौपदीरूपा त्वदर्थे मानुषं गता । अयोनिजा लोककान्ता पुण्यगन्धा युधिष्ठिर’** [४.१२] इति । तदाशयं स्फुटयति–शंरूपे ॥ १२६ ॥ काळी काशिराजदुहिता भीमभार्या । चन्द्रा मध्वावतारकालेऽवतीर्णेति सम्प्रदायविदः । समयवचनः कालः । वर्णवचनः काळः । **‘कलेर्वर्णे ळः’** इति वक्तव्यम् । तेन वर्णतः कृष्णा काळी ॥ १२७ ॥ यो नारायणानुजो नरः स एव रामानुजश्च लक्ष्मणः । योऽयमनुजः स एवाग्रजश्च बभूव बलरामत्वे । शुको द्रौणिश्च तत्तनू । तथाच नरं चैव नरोत्तममिति नरशब्देन पार्थ इव बलरामः, अश्वत्थामा, शुकश्च नता भवन्ति ॥ १२८ ॥ ततः प्रद्युम्नसाम्बौ, ततोऽनिरुद्धः, ततो धर्मराजः, ततोऽश्विनावित्यादिक्रमेणैव ॥ १२९–३० ॥

---

१. ‘काली’ २. ‘तत्तनुः ।’ ३. ‘इन्द्रो नरांश–’ ४. ‘–वानां च विष्णू–’

**'मर्त्यावतारस्त्विह मर्त्यशिक्षणं रक्षोवधायैव न केवलं विभोः ।**
**'कुतोऽस्य हि स्यू रमतः स्व आत्मन् सीताकृतानि व्यसनानीश्वरस्य ॥ १३१ ॥**

**'न वै स आत्माऽऽत्मवतामधीश्वरो भुङ्क्ते हि दुःखं भगवान् वासुदेवः ।**
**'न स्त्रीकृतं कश्मलमश्नुवीत न लक्ष्मणं चापि जहाति कर्हिचित्' ॥ १३२ ॥**

**यत्पादपङ्कजपरागनिषेवकाणां दुःखानि सर्वाणि लयं प्रयान्ति ।**
**स ब्रह्मवन्द्यचरणो जनमोहनाय 'स्त्रीसङ्गिनामिति रतिं प्रथयंश्चचार' ॥ १३३ ॥**

---

**'मर्त्यावतारः–'** इति, **'नवै सः–'** इति च किम्पुरुषगतस्य हनूमतो वचनं भागवते [५.१९.५–६] । **'स्त्रीसङ्गिनामिति रतिं प्रथयंश्चचार'** इति रामकथायाम् [९.८.११] । मर्त्यत्वेनावतरणमिह संसारे क्लिश्यमानानां मर्त्यानां शिक्षणम् । तुना मर्त्यत्वं विडम्बनमात्रमित्याह । न केवलं रक्षोवधायैव । किन्तु रक्षोवधायापि । यतो रावणो मा मे अमर्त्यैर्वधो भूदिति वरं वव्रे ब्रह्मणः । ददौ च ब्रह्मा । तदपि ब्रह्मण्यनुग्रहविशेषरूपतया विडम्बनमात्रम् । शक्यं हि ब्रह्मवरोऽपि भङ्क्तुं भगवता । आनन्दमये स्वरूपे रममाणस्य कुतो हि व्यसनानि स्युः? व्यसनमभिष्वङ्गः, दुःखं च । अत्र कश्चिच्छन्दश्च-मत्कारो भवति– पूर्वार्धे इन्द्रवंशा नाम जगती । तृतीयचरणे त्रिष्टुबुपेन्द्रवज्रा नाम । चतुर्थः पुनरिन्द्रवज्रया त्रिष्टुभाऽऽ-रभ्यान्ते गणभङ्गेन जगत्या समाप्यते । इन्द्रवंशया जगत्या वाऽऽरभ्य ॥ १३१ ॥ आत्मा अन्तर्यामी स्वामी । आत्म-वतां परमात्मभक्तानाम् । यद्यपि सर्वेषामात्मा । अथापि ज्ञानिषु विशिष्य । ज्ञानकृतो हि विशेषः । विद्यमानमपि यो न वेत्ति तस्य तदविद्यमानमेव हि । नह्यज्ञातं धनमस्तीति धनी भवति । धनमस्तीति विदन् हि धनी भवति । सकलजगतोऽधिकेशानामपि वरः । सङ्कर्षणादिभिस्त्रिभी रूपैर्लक्ष्मणादिष्वाविष्टो भगवान् वासुदेवः स्वयं रामो बभूव, स एव च वसुदेवसुतो बभूव, न तत्र कश्चन भेद इति बोधयन्नाह–भगवान् वासुदेव इति । कश्मलं मोहम् । मन्थरादिकृतं वनवासादिजनितं व्यसनं च । न लक्ष्मणं जहाति, नापि सीताम् । अत्रापि प्रथमचरणे चरमचरणे च वंशस्थं नाम जगती । द्वितीये पुनरिन्द्रवंशयाऽऽरभ्यान्ते जरयोः स्थाने यद्वयघटिताऽपूर्वा जगती । तृतीये त्रिष्टुबिन्द्रवज्रा नाम ॥ १३२ ॥ यत्पादनिषेवकाणां दुःखानि लयं प्रयान्ति, प्रकर्षेण यान्ति यथा न पुनरायायासुः, स कथं स्वयं दुःखी स्यात्? रामोऽपि पत्नीवशंवदो दुःखमनुबभूवेति दुर्जनमोहनाय विशिष्य । रतिं रमणव्यामोहम् । वसन्ततिलकेन्द्रवज्रा-भ्यामपूर्वेयमुपजातिः । तद्भक्तानां जीवनं वसन्ततिलकायते, भक्तदुःखानां दुष्टानां वा भगवानिन्द्रवज्रायत इति । **'स्त्रीसङ्गिनामिति रतिं प्रथयंश्चचार'** [९.८.९३] इति भागवतवचनेनैव चतुर्थचरणं पूरयन् वेदपुराणगर्भितत्वादिदमुपा-देयतममिति सूचयति । व्याचख्यौ च व्यासवचनं त्रिभिश्चरणैः । **'रक्षोऽधमेन वृकवद् विपिनेऽसमक्षं वैदेहराजदुहितर्यप-वाहितायाम् । भ्रात्रा वने कृपणवत् प्रियया वियुक्तः स्त्रीसङ्गिनामिति रतिं प्रथयंश्चचार'** इति समग्रं भागवत-वचनम् । शुकवचनमेतत् । हनूमद्वचनमिति वदन्तो बभ्रमुः ॥ १३३ ॥

**'क्वचिच्छिवं क्वचिदृषीन् क्वचिद् देवान् क्वचिन्नरान् ।**
**'नमत्यर्चयति स्तौति वरानर्थयतेऽपिच ॥ १३४ ॥**

**'लिङ्गं प्रतिष्ठापयति वृणोत्यसुरतो वरान् ।**
**'सर्वेश्वरः स्वतन्त्रोऽपि सर्वशक्तिश्च सर्वदा ॥ १३५ ॥**

**'सर्वज्ञोऽपि विमोहाय जनानां पुरुषोत्तमः' ।**
**तस्माद् यो महिमा विष्णोः सर्वशास्त्रोदितः स हि ॥ १३६ ॥**

**नान्यदित्येष शास्त्राणां निर्ण्णयः समुदाहृतः ।**
**भारतार्थस्त्रिधा प्रोक्तः स्वयं भगवतैव हि ॥ १३७ ॥**

**'मन्वादि केचिद् ब्रुवते ह्यास्तीकादि[1] तथा परे ।**
**'तथोपरिचराद्यन्ये भारतं परिचक्षते' ॥ १३८ ॥**

क्वचिच्छिवम् । यथा कृष्णः प्रद्युम्नजननाय शिवं ननामाऽनर्च तुष्टाव वरांश्चार्थयामास । क्वचिदृषीन् । यथा वैकुण्ठे भगवान् जयविजयशापप्रसङ्गे सनकादीन् । यथा वा वसिष्ठविश्वामित्रादीन् रामः । गर्गादीन् कृष्णः । क्वचिद् देवान् । यथा कुण्डलाहरणे अदित्यादीन् कृष्णः । यथा वा राम आदित्यमादित्यहृदयेन । क्वचिन्नरान् । यथा वसुदेवनन्दादीन् कृष्णः । दशरथकौसल्यादीन् रामः । अर्चतिश्चुरादिष्वपि पठ्यते । तेनार्चयति अर्चतीत्यर्थः । स्वयमर्चति, अन्यैरप्यर्चयतीत्यर्थविशेषलाभाय चार्चयतीत्युक्तम् ॥ १३४ ॥ लिङ्गं प्रतिष्ठापयति सेतुमूले रामः । **'रामो वै स्थापयामास शिवलिङ्गमनुत्तमम् । लिङ्गस्थं पूजयामास राघवः साम्बमीश्वरम्'** [ब्र.खं. ४४.११०] इति स्कान्दे सेतुमाहात्म्ये । जगदम्बया रमया सहितं सर्वेश्वरमात्मानमेव पूजयामासेति हृदयम् । सेयं गुह्यदर्शनसमाधिभाषा । वृणोत्यसुरतो वरान् । यथा बलेः पदत्रयम् । यथा वा मधुकैटभाभ्यां तयोः स्वेनैव वध्यत्वम् ॥ १३५ ॥ दुर्जनानां विमोहाय । क्वचिद् गर्गोदङ्कादीनामिव सज्जनानामपि । अत एव जनानामिति सामान्यवचनम् । अत एव **'जनमोहनाय'** इति पूर्वमप्युक्तम् । तेन मोहोऽपि विविध इति विमोहायेत्याह । यो महिमा स शास्त्रतात्पर्योदितः । योऽपकर्षः स मोहायोदित इति न शास्त्रार्थः । दर्शनभाषयोक्तः । न समाधिभाषया । वस्तुतो न तथा, अथापि तथा दर्शयामासेति परमार्थः ॥ १३६–७ ॥ **'मन्वादि केचिद् ब्रुवते–'** इत्यादिपर्वणि [१.६६] ॥ १३८ ॥

१. **'ह्यास्तिकादि'** । यद्यपि आदर्शे–**'ह्यस्तीकादि'** इति पठ्यते । दीर्घस्खलनं सम्भाव्यते ।

**'सकृष्णान् पाण्डवान् गृह्य योऽयमर्थः प्रवर्त्तते ।**
**'प्रातिलोम्यादिवैचित्र्यात् तमास्तीकं प्रचक्षते ॥ १३९ ॥**

**'धर्म्मो भक्त्यादिदशकः श्रुतादिः शीलवैनयौ ।**
**'सब्रह्मकास्तु ते यत्र मन्वादिं तं विदुर्बुधाः ॥ १४० ॥**

---

तमेतमर्वाचीना एवं पठन्ति– **'मन्वादि भारतं केचिदास्तीकादि तथाऽपरे । तथोपरिचराद्यन्ये विप्राः सम्यगधीयिरे'** इति । व्याचक्षते च– 'मनुः **'नारायणं नमस्कृत्य–'** इत्यादिर्मङ्गलश्लोकरूपो मन्त्रः । स एव भारतस्याऽदिरिति केचिद् विप्रा अधीयिरे । पूर्वतनानि चत्वार्युपपर्वाणि परित्यज्य, आस्तीकपर्वत एव भारतारम्भ इत्यपरे विप्राः । तदपि पर्व परित्यज्य, अंशावतरणपर्वणि, उपरिचरवसुकथातः, आ चतुःषष्टितमाध्यायादेव वस्तुतो भारतारम्भ इत्यन्ये विप्रा अधीयिरे' इति । मन्दमेतत् । भारतारम्भ इति किमुच्यते? ग्रन्थारम्भ उत भरतवंशीयानां कथारम्भः? नाऽद्यः । नहि ग्रन्थकर्तु-व्यासस्य प्रवक्तुरुग्रश्रवसो वा ग्रन्थारम्भः कुत इति सन्देहः सम्भवी । न द्वितीयः । असंशयादेव । जनाः पठन्ति । पठित्वा कथारम्भं जानन्ति । न हि तेषां कुतो भारतारम्भ इति जिज्ञासा घटते । अतो न वक्तव्यमेतत् । तर्हि कोऽर्थः? गुह्यभाषया भारतार्थत्रैविध्यकथनपरमेतदित्याह व्यासवचनेनैव–सकृष्णानिति । कृष्णया सहितान् पाण्डवान् प्रगृह्य । तेषां नियन्त्रा कृष्णेन च सह । ननु तर्हि उपरिचरादौ गतम् । न गतम् । पाण्डवानामितिहासोऽत्र मुख्यार्थः । कृष्णस्य सहकारितामात्रम् । उपरिचरादौ तु कृष्ण एव सर्वस्वम् । तदा सहस्रनाम्नीव प्रत्यक्षरं प्रतिपदं भगवन्नामतया केवलभगवत्परत्वमिति भेदः । असमासेऽपि ल्यप् सम्भवति गृह्येति । **'अर्च्य देवान् गतः'** इति वैयाकरणा एव ह्युदाजह्रुः । आस्तिकाग्रण्यामयमितिहास इति तमर्थमास्तीकादिं प्रचक्षते । अतितरामास्तिका आस्तीकाः । आस्तीकान् विषयतयाऽऽदत्त इत्यास्तीकादि । आस्तीकम्, आस्तीकानामयमास्तीकस्तम् । प्रातिलोम्यादिवैचित्र्यात् । कथायाः पूर्वापरीभावः प्रातिलोम्यम् । आदिना व्यत्यासादयः शैलीप्रभेदाः । तेषां नामलक्षणादिकमुपरिष्टान्नवमे भवति ॥ १३९ ॥ भक्त्यादिदशक इति देहल्यां दीपः । भक्त्यादयो दश गुणा यत्र स भक्त्यादिदशको धर्मः श्रुतादिश्च । स धर्मो धर्मो भवति यःस भक्त्यादिदशगुणः । तच्छ्रुतं श्रुतं भवति, मतं मतमथ ध्यातं ध्यातम्, यत् सभक्त्यादिदशगुणं भवति । भक्त्यादीनि दशापि वक्ष्यमाणानि कानि सुखात्मकानि यत्र स भीमसेनो भक्त्यादिदशकस्तन्मानी । स किल धर्ममानिनो युधिष्ठिरस्य श्रुतादिमानिनोऽर्जुनस्य च पृष्ठगोपः । तथा च धर्मराजचरितग्रथनेन धर्मबोधनं भारततात्पर्यम् । एवं भीमचरितबोधनेन भक्त्यादिबोधने तात्पर्यम् । भगवता बहुधा श्रुतगीतानुगीतस्य पार्थस्य चरितग्रथनेन असकृदस्माभिरपि शास्त्रानुवृत्तिः करणीयेति बोधने तात्पर्यमित्यादि । एवं धर्मराजो धर्मं प्रतिनिधत्ते । भीमो भक्त्यादिदशकम् । श्रुतादिमर्जुनः । नकुलः शीलम् । सहदेवो विनयम् । अथच नकुलसहदेवौ सहैव शीलविनयौ प्रतिनिदधाते । द्रौपदी विद्यामानिनी वेदात्मकं शब्दब्रह्म प्रतिनिधत्ते । कृष्णस्तु वेदवेद्यः परं ब्रह्मेति । श्रुतादिः श्रवणं मननं निदिध्यासनं च । विनय एव वैनयः । विनयस्यायमिति विनयसहजः सौजन्यविशेषो वा । येन जिह्रेत्यात्मप्रशंसाया जुगुप्सते च । शीलं सतां पथि पतनम् । विनयः सत्यपि

'नारायणस्य नामानि सर्वाणि वचनानि तु ।
'तत्सामर्थ्याभिधायीनि तमौपरिचरं विदुः ॥ १४१ ॥

'भक्तिर्ज्ञानं सवैराग्यं प्रज्ञा मेधा धृतिः स्थितिः ।
'योगः प्राणो बलं चैव वृकोदर इति स्मृतः ॥ १४२ ॥

'एतद्दशात्मको वायुस्तस्माद् भीमस्तदात्मकः ।
'सर्वविद्या द्रौपदी तु यस्मात् सैव सरस्वती ॥ १४३ ॥

'अज्ञानादिस्वरूपस्तु कलिर्दुर्य्योधनः स्मृतः ।
'विपरीतं तु यज्ज्ञानं दुःशासन इतीरितः ॥ १४४ ॥

---

गुणगरिमण्यहङ्कारविरहः । मननीया भक्त्यादयो गुणा मनवः । सब्रह्मकाः सवेदाः सनारायणाश्च । मननीयत्वादेव वेदाश्च मनवः । वेदवेद्यश्च मनुः । एवमष्टादशमनूनामवबोधकमष्टादशपर्वमयं भारतम् । मनवो विषयत्वेनाऽऽदीयन्तेऽत्रेति मन्वादिः ॥ १४० ॥ सर्वेषामुपरि वर्तमानः सर्वोत्तम इत्युपरिचरो नारायणः । सर्वाणि अक्षराणि पदानि च नारायणस्य नामानि । सर्वाणि वचनानि तु तत्सामर्थ्याभिधायीनि इति योऽयमर्थः प्रवर्तते उपरिचरस्यायमित्यौपरिचरः । **'हरिः सदाशिवो ब्रह्मा महेन्द्रः परमः स्वराट् । सर्वेश्वरस्य तस्यैते पर्यायाः परिकीर्तिताः'** [वै.खं.३५.३५] इति स्कान्दे वेङ्कटाचलमाहात्म्ये । एवं त्रिष्वप्यर्थेषु कृष्णो नारायणः प्रतिपाद्यते । अन्ये यथासम्भवम् ॥ १४१ ॥ अथ के ते भक्त्यादयो दश? आह–भक्तिरित्यादि । ग्रहणपाटवम्, अनधीतार्थप्रकाशश्च प्रज्ञा । धारणपाटवं मेधा । अविस्मृतिरिति यावत् । धृतिधैर्यम् । स्थितिः स्थैर्यम् । द्वन्द्वसहत्वं योगः । भगवति सदा मनोयोगो वा । प्राणः प्राणशक्तिः, जीवानामगदङ्कारबीजम्, या च हस्तयोः सदा परिस्रवति; चेष्टाप्रकर्षश्च । सर्वचेष्टकत्वं च । **'यस्य तीक्ष्णो वृको नाम जठरे हव्यवाहनः । सम्भाष्यते स धर्मात्मा तेन चासौ वृकोदरः'** [सृ.खं.२३.१६] इति पाद्मे । तेन च, अन्येन च प्रातीतिकेन कारणेन । वृकस्य ईहामृगस्य उदरमिव तनुतरमुदरमस्येति च वृकोदरः । उदरं उद्गतारं निर्दोषं ब्रह्म वृणोति वर्कते वा । वृक आदाने । अथच वृणोति वर्कते वा वृकः । उदेषु जीवसङ्घेषु नियामकतया रमते च । उदरं ब्रह्म वृणोति च । **'उदरं ब्रह्मेति शार्कराक्ष्या उपासते'** [मंहै.उ.१.३.८] इति हि श्रुतिः । **'अ इत्युक्तः परो विष्णुर्येभ्य उच्चः स एव तु । त उदा जीवसङ्घा स्युः–'** इति तैत्तिरीयभाष्ये [२.१२] यजुःसंहितावचनम् । एतेन मूलरूपस्यापि नामैतदित्यवगम्यते । समानं चावतारत्रयेऽपि । **'अङ्गुष्ठमात्रं जठरप्रतिष्ठितं जाज्वल्यमानं मम जातवेदसम् । नित्यं हितं विश्वदहं च वित्त तं विश्वेशचेता इति सोऽब्रवीत् तदा'** [५.३३] इति हि श्रीमध्वविजये । तेन मध्वोऽपि वृकोदरः । अत एव चैतद्दशगुणात्मक इति च दशप्रमतिरुच्यते दशभिर्गुणैरयं प्रमीयत इति ॥ १४२–३ ॥ अज्ञानदुःखद्वेषादिसर्वदोषस्वरूपः ॥ १४४ ॥

**‘नास्तिक्यं शकुनिर्न्नाम सर्वदोषात्मकाः परे ।**
**‘धार्त्तराष्ट्रास्त्वहङ्कारो द्रौणी रुद्रात्मको यतः** ॥ १४५ ॥

**‘द्रोणाद्या इन्द्रियाण्येव पापान्यन्ये तु सैनिकाः ।**
**‘पाण्डवेयाश्च पुण्यानि तेषां विष्णुर्न्नियोजकः**[1] ॥ १४६ ॥

**‘एवमध्यात्मनिष्ठं हि भारतं सर्वमुच्यते ।**
**‘दुर्विज्ञेयमतः सर्वैर्भारतं तु सुरैरपि** ॥ १४७ ॥

**‘स्वयं व्यासो हि तद् वेद ब्रह्मा वा तत्प्रसादतः ।**
**‘तथाऽपि विष्णुपरता भारते सारसङ्ग्रहः’** ॥ १४८ ॥

**इत्यादिव्यासवाक्यैस्तु विष्णूत्कर्षोऽवगम्यते ।**
**वाय्वादीनां क्रमश्चैव तद्वाक्यैरेव चिन्त्यते** ॥ १४९ ॥

**‘वायुर्हि ब्रह्मतामेति तस्माद् ब्रह्मैव स स्मृतः ।**
**‘न ब्रह्मसदृशः कश्चिच्छिवादिषु कथञ्चन’** ॥ १५० ॥

---

परे दुर्योधनदुःशासनाभ्यामितरे धार्तराष्ट्राः अवशिष्टसर्वदोषात्मकाः । दोषस्वरूपा दोषमानिनः । अत एवाऽत्मकाः । अल्पात्मानः कुत्सितात्मानश्च । भारत एवोक्तमेतत्– **‘कलिं दुर्योधनं विद्धि शकुनिं द्वापरं नृपम् । दुःशासनादीन् विद्धि त्वं राक्षसान् शुभदर्शने’** [आश्र.प.३३.१०] इति पुत्रदर्शने गान्धारीं प्रति व्यासवचनम् । **‘विद्धि द्रौणिं च रुद्रजम्’** [३३.१६] इति च । **‘कलेरंशः समुत्पन्नो गान्धार्या जठरे नृप’** [स्त्रीप.८.३०] इति च । **‘कलेरंशस्तु सञ्जज्ञे भुवि दुर्योधनो नृपः’** [आ.प.६८.८७] इति च ॥ १४५ ॥ द्रोणाद्या इन्द्रियाण्येव । तानि यथा सज्जनसङ्गतानि साधुकर्मणि प्रवर्तन्ते । दुर्जनसङ्गतान्यसाधुकर्मणि । एवं द्रोणभीष्मकर्णाद्याः दुर्जनेन दुर्योधनेन सङ्गता असाधुकर्मणि प्रावर्तन्त । **‘दुष्टत्वं दुष्टसंसर्गाददुष्टमपि गच्छति । सुराबिन्दुनिपातेन पञ्चगव्यघटी यथा’** [११६.१८] इति मार्कण्डेये । अन्ये धार्तराष्ट्राणां सैनिकाः । पाण्डवेयाः सैनिकाश्च पुण्यानि पुण्यकर्माभिमानिन इति ॥ १४६ ॥ भारतं त्विति तुना केवलेश्वर-दृष्टार्थयुक्तत्वं नाम विशेषमाह । अत एव सुरैरपि दुर्विज्ञेयम् । किञ्चिद् दुःखेन विज्ञेयम् । किञ्चिदविज्ञेयमेव ॥ १४७ ॥ तद् भारतस्याध्यात्मपरत्वम् । तद् भारततात्पर्यं वा ॥ १४८ ॥ तारतम्यक्रमश्च एवमेव व्यासवाक्यैरेव ॥ १४९-५० ॥

---

१. **‘पाण्डवेयानि पुण्यानि तेषां विष्णुर्नियामकः’**

**'ज्ञाने विरागे हरिभक्तिभावे धृतिस्थितिप्राणबलेषु योगे ।**
**'बुद्धौ च नान्यो हनुमत्समानः पुमान् कदाचित् क्वच कश्चनैव ॥ १५१ ॥**

**'बळित्था तद् वपुषे धायि दर्शतं देवस्य भर्ग्गः सहसो यतो जनि ।**
**'यदीमुप ह्वरते साधते मतिरृतस्य धेना अनयन्त सस्रुतः ॥ १५२ ॥**

**'पृक्षो वपुः पितुमान् नित्य आ शये द्वितीयमा सप्तशिवासु मातृषु ।**
**'तृतीयमस्य वृषभस्य दोहसे दशप्रमतिं जनयन्त योषणः ॥ १५३ ॥**

---

हरिभक्तेर्भावः समृद्धिः । पूर्णा हरिभक्तिः । तथाहि स्मरन्ति–**'सत्तायां मङ्गले वृद्धौ निवासे व्याप्तिसम्पदोः । अभिप्राये च शक्तौ च प्रादुर्भावे गतौ च भूः'** इति । उदाहरन्ति च । सत्तायां यथा–विरळा भवन्ति सन्तः, सन्तीत्यर्थः । मङ्गले यथा– पुत्रस्य भूतिः कार्या, मङ्गलमित्यर्थः । वृद्धौ यथा–गोत्रस्य भूतिः, वृद्धिरित्यर्थः । निवासे यथा–ममेदं भवनम् । व्याप्तौ यथा–विश्वं भवति, व्याप्नोतीत्यर्थः । सम्पद्यर्थे यथा– अदीर्घो दीर्घो भवति, सम्पद्यत इत्यर्थः । अभिप्राये यथा– अयं भावः, अभिप्राय इत्यर्थः । शक्तौ यथा–तन्तुर्भवति, शक्नोतीत्यर्थः । प्रादुर्भावे यथा–अक्रूरो भवति, जायत इत्यर्थः । गतौ यथा– भूताः, गता इत्यर्थः । क्षीरस्वामी चाऽह– **'भूरयं क्वचिदस्त्यर्थे वर्तते– बहूनि धनान्यस्य भवन्ति, सन्तीत्यर्थः । क्वाप्यभूतप्रादुर्भावे–क्षीरभोजिन्याः श्रुतन्धरः पुत्रो भवति, जायत इत्यर्थः । क्वचिदभूततद्भावात्मके सम्पद्यर्थे– पटोऽशुक्लः शुक्लो भवति, सम्पद्यत इत्यर्थः'** इत्यादि । बुद्धिरिति प्रज्ञा । बुद्धिरिति मेधा । तेन प्राणस्योक्ता दशापि गुणाः सङ्गृहीताः । तेन हनूमानपि वृकोदरः, दशप्रमतिश्च ॥ १५१ ॥ **'बळित्था–'** [ऋ.सं.१.१४१.१–४] इत्यादिकं मन्त्रचतुष्टयं जागतं प्राणाग्निसूक्तगतम्, प्रथमं भृगुदृष्टम्, पश्चाद् दीर्घतमोदृष्टम् । **बट् । इत्था । तत् । वपुषे । धायि । दर्शतम् । देवस्य । भर्गः । सहसः । यतः । जनि । यत् । ईम् । उप । ह्वरते । साधते । मतिः । ऋतस्य । धेनाः । अनयन्त । स+स्रुतः ।** इति प्रतृण्णम् । बट् बलरूपम् । दर्शतं ज्ञानरूपं । ततं च तत् पश्यतीति वा दर्शतं सर्वज्ञम् । दृशेरतच्प्रत्यय इति वैयाकरणाः [स.कं.२.२.१३५] । किं तत्? वायुरूपम् । बलत्वाद् वम् । अयनत्वात् ज्ञानरूपत्वादायुरिति वायुः । अय गतौ । इत्था इत्थमेव, मूलरूपं यथा तथा बलज्ञानात्मकमेव वपुषे अवतार-रूपायापि धायि अधायि । कीदृशं पुनस्तत्? यतो देवात् स्वयं जनि अजनि तस्य स्वपितुः सहसः अनभिभाव्यमहसो नारायणस्य देवस्य भर्गः भर्तृ च गन्तृ च । गमयितृ वा । यत् ईं यदेव च वपुः देवस्य उपह्वरते समीपे रहश्चरति, साधयति च नियुक्तं कार्यम् । तद्रूपं मतिर्नाम । दशप्रमतिमेव मतिमाहुः । ज्ञानस्वरूपत्वात् । 'इत्था दर्शतम्' इति ह्युक्तम् । कार्यक्षमतामेवाऽह – ऋतस्य रामस्य देवस्य रसस्रुतः धेनाः सन्देशवचनानि तमेनं मतिं हनुमन्तं लङ्कां प्रत्य-नयन्त । हन गतौ । तेन हनुमानिति गतिमानुच्यते ॥ १५२ ॥ **पृक्षः । वपुः । पितु+मान् । नित्यः । आ । शये । द्वितीयम् । आ । सप्त+शिवासु । मातृषु । तृतीयम् । अस्य । वृषभस्य । दोहसे । दश+प्रमतिम् । जनयन्त । योषणः ।** पृतनाक्षयकारी । आद्याक्षराभ्यां पृक्षः । पितुमान् । पितुरन्नम् । शकटान्नभुक् । भीमः इति यद् द्वितीयं

**'निर्य्यदीं बुध्नान्महिषस्य वर्प्पस ईशानासः शवसा क्रन्त सूरयः ।**
**'यदीमनु प्रदिवो मध्व आधवे गुहा सन्तं मातरिश्वा मथायति ॥ १५४ ॥**

**'प्र यत् पितुः परमान्नीयते पर्य्या पृक्षुधो वीरुधो दंसु रोहति ।**
**'उभा यदस्य जनुषं यदिन्वत आदिद् यविष्ठो अभवद् घृणा शुचिः'[१] ॥ १५५ ॥**

**'अश्वमेधः क्रतुश्रेष्ठो ज्योतिःश्रेष्ठो दिवाकरः ।**
**'ब्राह्मणो द्विपदां श्रेष्ठो देवश्रेष्ठस्तु मारुतः' ॥ १५६ ॥**

**'बलमिन्द्रस्य गिरिशो गिरिशस्य बलं मरुत् ।**
**'बलं तस्य हरिः साक्षान्न हरेर्बलमन्यतः' ॥ १५७ ॥**

---

वपुः तत् आ सप्तशिवासु सप्तसङ्ख्याकासु आ समन्तात् शिवासु शोभनासु विद्यासु, आ शये सम्यक् शेते, अनायासेन विहरति । यच्चास्य देववृषभस्य तृतीयं वपुः, तं दशप्रमतिं पूर्णप्रज्ञं दोहसे यथार्थज्ञानदोहाय वेदमानिन्यः योषणः तन्मातर-मनुविश्य जनयन्त अजनयन्त ॥ १५३ ॥ **निः । यत् । ईम् । बुध्नात् । महिषस्य । वर्पसः । ईशानासः । शवसा । क्रन्त । सूरयः । यत् । ईम् । अनु । प्र+दिवः । मध्वः । आ+धवे । गुहा । सन्तम् । मातरिश्वा । मथायति ।** यदीं यस्मादेव बुध्नात् बुधानां नेतुर्वायोस्तृतीयरूपात् महितषड्गुणस्य नारायणस्य वर्पसो गुणान् ईशानाद्याः समर्था वा सूरयः शवसा सुखेनैव निः क्रन्त निरक्रन्त निश्चितवन्तः । यदीं यदेव च रूपं प्रदिवः प्रज्ञावतः सात्विकाननुकूलयितुं वेदेषु निगूढं सन्तं भगवन्तं मथायति शास्त्राणि मथित्वामथित्वा प्रकाशयति । स किल मध्वो मातरिश्वा । किमर्थम्? आधवे आधवत्वाय । भगवतः सर्वेशत्वस्थिरीकरणाय । तेन चाऽधवनाय शास्त्रशुद्धीकरणाय ॥ १५४ ॥ **प्र । यत् । पितुः । परमात् । नीयते । परि । आ । पृक्षुधः । वीरुधः । दं+सु । रोहति । उभा । यत् । अस्य । जनुषम् । यत् । इन्वतः । आत् । इत् । यविष्ठः । अभवत् । घृणा । शुचिः ।** यत् इदं तृतीयं रूपं स्वपितुः परमपुरुषात् प्रणीयते । तस्मात् पृक्षुधः दुर्वादिनां क्षुद्रप्रश्नान् उक्षा वीरुध इव दन्तेषु परित आरोपयति, चर्वश्चर्वं शकलीकरोतीत्येतत् । यद् यस्मात् यदिदमस्य जनुषं तृतीयं जननं उभा लक्ष्मीनारायणौ इन्वतः व्याप्नुतः, व्याप्य प्रेरयतश्च । आदित् तस्मादेव अवतारेषु यविष्ठोऽयं मध्वः साधुषु घृणावान्, घृणया वा परमशुचिश्चाभवत् । समग्रसूक्तार्थस्त्वस्मत्कृतप्राणाग्नि-सूक्तभाष्ये द्रष्टव्यः ॥ १५५ ॥ **'अश्वमेधः क्रतुश्रेष्ठः–'** इति चाऽदिपर्वणि [१२९.४६] कुन्तीं प्रति पुत्रजननाय वायुमाजुहावयिषतः पाण्डोर्वचनम् । देवश्रेष्ठः । सृज्येषु देवेषु श्रेष्ठः । **'देवेषु वायुः पुरुषोत्तमाद्दते'** इति स्वयमेव वक्ष्यति द्वादशे ॥ १५६ ॥ इन्द्रादीनामपि परम्परया हरिरेव बलम् । अत उक्तं वायोः साक्षाद् बलं हरिरिति ॥ १५७ ॥

---

१. **'शुचिः । आदिन्मातॄराविशद् यास्वाशुचिरहिंस्यमान उर्विया वि वावृधे । अनु यत् पूर्वां अरुहत् सनाजुवो नि नव्यसीष्ववरासु धावते । अश्वमेधः–'**

‘वायुर्भीमो भीमनादो महौजाः सर्वेषां च प्राणिनां प्राणभूतः ।
‘अनावृत्तिर्देहिनां देहपाते तस्माद् वायुर्देवदेवो विशिष्टः’ ॥ १५८ ॥

‘तत्वज्ञाने विष्णुभक्तौ धैर्य्ये स्थैर्य्ये पराक्रमे ।
‘वेगे च लाघवे चैव प्रलापस्य च वर्ज्जने ॥ १५९ ॥

‘भीमसेनसमो नास्ति सेनयोरुभयोरपि ।
‘पाण्डित्ये च पटुत्वे च शूरत्वे च बलेऽपि च’ ॥ १६० ॥

तथा युधिष्ठिरेणापि[१] भीमं प्रति समीरितम् ।
‘धर्म्मश्चार्त्थश्च कामश्च मोक्षश्चैव यशो ध्रुवम् ॥ १६१ ॥

‘त्वय्यायत्तमिदं[२] सर्वं सर्वलोकस्य भारत’ ।
विराटपर्वगं चापि वचो दुर्य्योधनस्य हि ॥ १६२ ॥

---

**‘वायुर्भीमः–’** [शां.प.२६४.४१] इति मोक्षधर्मे धर्मराजं प्रति भीष्मवचनम् । वायुर्हि भीमो बभूव । भीमः शत्रूणां हृदयविदारणो नादोऽस्येति, भक्तानां भीर्मा इति नदंश्च भीमनादः । अभिभवशक्तिरोजः । प्राणिनां सर्वचेष्टाप्रदः । देहपाते अनस्य निर्गमनाद् देहेऽवृत्तिः । अथापि देहान्तरप्राप्तये जीवेन सहानस्याऽवृत्तिः । तस्मात् सर्वजीवचेष्टकत्वात्, जन्ममृतिहेतुत्वाच्च । **‘तस्मात् प्राणः सर्वजीवाधिकोऽभूद् बलाधिकः सर्वजीवान्तरात्मा । प्राणात् कोऽपि ह्यधिको वा समो वा शास्त्रे दृष्टः श्रुतपूर्वो नचाऽस्ते’** [वै.खं;वैशा.मा. १९.६१] इति स्कान्दे । **‘भूतं भव्यं भविष्यं च सर्वं प्राणे प्रतिष्ठितम् । श्रेष्ठं तदेव भूतानां ब्रह्म ज्योतिरुपास्महे’** [व.प.२१६.१६] इति च भारते ॥ १५८ ॥ प्रवृत्तौ, प्रारब्धान्तगमने चाऽत्मप्रत्ययो धैर्यम् । स्वनिर्धारादचलनं स्थैर्यम् । परान् प्रत्याक्रमणचातुरी पराक्रमः । व्यर्थभाषणमात्मप्रशंसनं च प्रलापः । प्रगत आलाप इति । भीमसेनसमो नास्ति कृष्णवर्जम् । तदेतदाह– इनेन कृष्णेन सहितो भीमो भीमसेन इति । भीमसमो योद्धा नास्तीति च । यस्य सेनाऽपि भीमा स कथं न भीमः स्यात् । शास्त्रार्थग्रहणपाटवं पाण्डित्यम् । कर्मसु कौशलं पटुत्वम् । शत्रुभिरदम्यता शूरत्वम् । बलमित्यात्मबलं हठो नाम । मनोबलं च । अपिरनुक्तानां वैराग्यादिगुणानां समुच्चायकः ॥ १५९–६० ॥ युधिष्ठिरेणापि । धर्मावतारेणापि । परिहासार्थमप्यनृतमभाषमाणेनापि ॥ १६१ ॥ अपि च **‘वीराणाम्–’** इत्यादि, **‘–क्रमादेव प्रकीर्तिताः’** इत्यन्तं दुर्योधनस्य हि वचो विराट-

---

१. **‘–रेणैव भीमम्’** २. **‘त्वय्याततमिदम्’**

**'वीराणां शास्त्रविदुषां कृतिनां[1] तत्वनिर्ण्णये ।**
**'सत्वे बाहुबले धैर्य्ये प्राणे शारीरसम्भवे ॥ १६३ ॥**

**'साम्प्रतं मानुषे लोके सदैत्यनरराक्षसे ।**
**'चत्वारः प्राणिनां श्रेष्ठाः सम्पूर्ण्णबलपौरुषाः ॥ १६४ ॥**

**'भीमश्च बलभद्रश्च मद्रराजश्च वीर्य्यवान् ।**
**'चतुर्त्थः कीचकस्तेषां पञ्चमं नानुशुश्रुमः ॥ १६५ ॥**

**'अन्योन्यानन्तरबलाः क्रमादेव प्रकीर्त्तिताः' ।**
**वचनं वासुदेवस्य तथोद्योगगतं परम् ॥ १६६ ॥**

पर्वगम् [३२.१६–२०] । तामसपुराणानामिव दुर्योधनस्यापि समाधिभाषया भाषितं गृह्यते । तत्किल प्रशस्ततरं भवति यच्छत्रुणैव स्वप्रत्यर्थी मुक्तकण्ठं स्तूयते । तदिदमाह दुर्योधनस्यापि सदा भीमं द्विषतोऽपीति ॥ १६२ ॥ वीराणां यच्छास्त्रं तत्र विदुषाम्, युद्धतन्त्रपरिणतानां मध्ये । किमत्र तथ्यं का रिपूणां वञ्चनेति वस्तुतत्वनिर्णये कृतिनां कुशलानां मध्ये । अथ दुर्योधनः कीचकमपि शास्त्रज्ञं तत्वज्ञं च मन्यत इति मतम्, तर्हि वीराणां तथा शास्त्रज्ञानां शास्त्रतत्वनिर्णये कुशलानां च मध्य इति यथाश्रुत एवार्थः । अथच शास्त्रविदुषां तत्वनिर्णये कृतपरिश्रमाणां च वीराणां मते चत्वारः श्रेष्ठा इति वा । औत्पत्तिकं बलं सत्वम् । तननवत् तत्वं भवति । सहनवद् वा सादवद् वा सत्वम् । सहनं मर्षणम् । शत्रुभिरनभिभाव्यत्वमित्येतत् । सादो विशरणमवसादो वा शत्रूणाम् । तत्+वम् = तत्वम् । सत्+वम् = सत्वम् । तत्+त्वमिति सत्+त्वमिति वा द्विस्तकारं प्राचीना न पठन्ति । बाहुभ्यामेव केवलं प्रत्यर्थिनिग्रहणपाटवं बाहुबलम् । सहजशक्त्याऽभ्यासपाटवेन च सम्भृत आत्मप्रत्ययो धैर्यमप्रकम्प्यता नाम । प्राणो नाम प्रतिपक्षस्य कान्दिशीकतापादकः, वेगेन लाघवेन च लोकविस्मापकः शरीरक्रियासम्भवः कश्चन चेष्टाप्रकर्षः । शारीरसम्भवे आत्मशक्तिसहकृत इति वा । सम्पूर्णबलपौरुषाः । बलं मानसम् । पौरुषं दैहिकम् । अर्वाचीनास्तत्वलुण्टका वृथा पाठं व्यत्यस्य पठन्ति– **'बलभद्रश्च भीमश्च'** इति । पूर्वोत्तरविरोधमप्यजानन्तः पण्डितमण्डूका एव ते ॥ १६३–६४ ॥ मद्रराजश्च वीर्यवानिति । भीमो वीर्यवत्तमः । बलभद्रो वीर्यवत्तरः । मद्रराजस्तु वीर्यवान् । यदि चतुर्थोऽपि गण्यते तर्हि कीचकश्च वीर्यवानिति । नानुशुश्रुम इति । एतेषामनुरूपं कञ्चनान्यं न शुश्रुमेत्यर्थः । कथं शुश्रुमः? लटो लिटो लृटश्च समाहारोऽयम् । न शुश्रुम, नापि शृणुमः, नापि प्रायः श्रोष्याम इत्यर्थः । अथवा, अवधारणे विसर्गः । **'बिन्दुरप्यवधारणे'**

१. **'शस्त्रविदुषां कृतीनाम्'**

‘यत् किञ्चाऽत्मनि कल्याणं सम्भावयसि पाण्डव ।
‘सहस्रगुणमप्येतत् त्वयि सम्भावयाम्यहम् ॥ १६७ ॥

‘यादृशे च कुले जातः सर्वराजाभिपूजिते ।
‘यादृशानि च कर्म्माणि भीम त्वमसि तादृशः’ ॥ १६८ ॥

‘अस्मिन् युद्धे भीमसेन त्वयि भारः समाहितः ।
‘धूरर्ज्जुनेन वोढव्या [1]‘वोढव्य इतरो जनः’।
उक्तं पुराणे ब्रह्माण्डे ब्रह्मणा नारदाय च ॥ १६९ ॥

‘यस्याः प्रसादात् परमं विदन्ति शेषः सुपर्ण्णो गिरिशः सुरेन्द्रः ।
‘माता च यैषां[2] प्रथमैव भारती सा द्रौपदी नाम बभूव भूमौ ॥ १७० ॥

‘या मारुताद् गर्भमधत्त पूर्वं शेषं सुपर्ण्णं गिरिशं सुरेन्द्रम् ।
‘चतुर्म्मुखाभांश्चतुरः कुमारान् सा द्रौपदी नाम बभूव भूमौ’ ॥ १७१ ॥

---

इत्युक्तम् । **‘विसर्गोऽप्यवधारणे’** इत्युपस्कर्तव्यम् । अन्योन्यानन्तरबलाः । अन्यः एकः, अन्यस्मादनन्तरोऽन्य एक इत्यन्योन्यम् । ‘ಒಬ್ಬರಿಗಿಂತೊಬ್ಬ’ इति भाषायाम् । अन्योन्यं अनन्तरं पाश्चात्यम्, पूर्वतनान्निहीनं बलं येषां ते अन्योन्यानन्तरबलाः । तदपि क्रमादेव–भीमादनन्तरबलो बलभद्रः । बलभद्रान्मद्रराजः । ततः कीचक इति ॥ १६५–६ ॥ **‘यत् किञ्चाऽत्मनि–’** [उ.प.७६.३–४;१८] इत्यादि श्लोकत्रयं सन्धानार्थं प्रस्थितस्य वासुदेवस्य वचनं भीमसेनं प्रति । कल्याणं शुभगुणजातम् ॥ १६७ ॥ यादृशानि त्वया कृतानि, यादृशानि च कुलोचितानि ॥ १६८ ॥ पुरोगमनरूपा धूरर्जुनेन मत्सारथिना वोढव्या भवति । तव तु मत्सारथ्यमपि नास्ति । त्वय्येव सर्वोऽपि भारः समाहितः । यश्चेतरो जनो वोढव्यस्तस्यापि भारस्त्वयि । अथ च या धूरर्जुनेन वोढव्या तस्या अपि त्वयि भारः समाहितः । अर्जुने वायोर्विशेषावेशात्, हनुमद्रूपेण ध्वजे स्थित्वा शक्त्युपबृंहणाच्च ॥ १६९ ॥ परवेदनान्न केवलमाचार्यानी । माता च । कद्रूविनतादीनामप्यपरमातृत्वमस्तीति प्रथमा मातेत्याह । प्रथमा च स्त्रीजीवेषु । या एषां चतुर्णां प्रथमा माता बभूव सैव द्रौपदी बभूव ॥ १७०–१ ॥

---

१. **‘वोढव्या इतरे जनाः’** २. **‘येषाम्’**

**‘यस्याधिको बले नास्ति भीमसेनमृते[1] क्वचित् ।**
**‘न विज्ञाने नच ज्ञान एष रामः स लाङ्गली ॥ १७२ ॥**

**‘यस्य न प्रतियोद्धाऽस्ति भीममेकमृते क्वचित् ।**
**‘अन्विष्यापि त्रिलोकेषु स एष मुसलायुधः’ ॥ १७३ ॥**

तथा युधिष्ठिरेणैव भीमाय समुदीरितम् ।
**‘अनु ज्ञातो रौहिणेयात् त्वया चैवापराजित[2] ॥ १७४ ॥**

**‘सर्वविद्यासु बीभत्सुः कृष्णेन च महात्मना’ ।**
**‘अन्वेष रौहिणेयं च त्वां च भीमापराजितम् ॥ १७५ ॥**

**‘वीर्य्ये शौर्य्येऽपि वा[3] नान्यस्तृतीयः फल्गुनादृते’ ।**
तथैव द्रौपदीवाक्यं वासुदेवं प्रतीरितम् ॥ १७६ ॥

**‘अधिज्यमपि यत् कर्त्तुं शक्यते नैव गाण्डिवम् ।**
**‘अन्यत्र भीमपार्थाभ्यां भवतश्च जनार्द्दन’ ॥ १७७ ॥**

---

विष्णुविषयं विज्ञानम् । तदन्यत् ज्ञानम् ॥ १७२–३ ॥ रौहिणेयात्, त्वत्तः कृष्णाच्च अनन्तरं ज्ञातः । त्वं तु रौहिणेयेनाप्यपराजितः ॥ १७४ ॥ कृष्णस्तु त्वत्तोऽपि महानात्मा । **‘सङ्कर्षणं महावीर्यं त्वां च भीमापराजितम् । अनुयातः स्ववीर्येण वासुदेवं च शत्रुहा’** इति तीर्थयात्रापर्वणि [व.प.१४३.२१] युधिष्ठिरवचनं पठ्यते ॥ १७५–६ ॥ **‘अधिज्यमपि–’** इति द्रौपदीवाक्यं वनपर्वगतम् [१२.८०] । **‘जिष्णोर्धनुषि कोदण्डे गाण्डीवं गाण्डिवं तथा’** इत्यभिदधति । कोदण्डे धनुर्मात्रे प्रयोगस्तु मृग्यः । **‘गाण्ड्यजगात् सञ्ज्ञायाम्’** [अ.सू.५.२.११०] इति पाणिनिः । गाण्डि-गाण्डी वा वंशग्रन्थिः । साऽस्त्यस्येति गाण्डीवं गाण्डिवं वा । गाण्डी खड्गमृगः । तद्विकारत्वाद् गाण्डीवमित्यपरे । **‘गाण्डी-अजग-इत्येताभ्यां वः प्रत्ययो भवति सञ्ज्ञायां विषये मत्वर्थे । गाण्डीवं धनुः । अजगवं धनुः । ह्रस्वादपि भवति–गाण्डिवं धनुरिति । तत्र तुल्या हि संहिता दीर्घह्रस्वयोः । उभयथा च सूत्रं प्रणीतम्’** इति काशिका । **‘एष गाण्डीमयश्चापो लोकसंहारसम्भृतः । रक्ष्यते दैवतैर्नित्यं यतस्तद् गाण्डिवं धनुः’** [उ.प.९८.१९] इति भारते ॥१७७॥

---

१. ‘भीममेकमृते’ २. ‘–वापराजितः ।’ ३. ‘शौर्ये बले नान्य–’

**तथैवान्यत्र वचनं कृष्णद्वैपायनेरितम् ।**
**'द्वावेव[1] पुरुषौ लोके वासुदेवादनन्तरौ ।**
**'भीमस्तु प्रथमस्तत्र द्वितीयो द्रौणिरेव च ॥ १७८ ॥**

**'अक्षयाविषुधी दिव्ये[2] ध्वजो वानरलक्षणः ।**
**'गाण्डीवं धनुषां श्रेष्ठं तेन द्रौणेर्वरोऽर्ज्जुनः' ॥ १७९ ॥**

**इत्याद्यनन्तवाक्यानि सन्त्येवार्त्थे विवक्षिते ।**
**कानिचिद् दर्शितान्यत्र दिङ्मात्रप्रतिपत्तये ॥ १८० ॥**

**तस्मादुक्तक्रमेणैव पुरुषोत्तमता हरेः ।**
**अनौपचारिकी सिद्धा ब्रह्मता च विनिर्ण्णयात् ॥ १८१ ॥**

**पूर्ण्णप्रज्ञकृतेयं सङ्क्षेपादुद्धृतिः सुवाक्यानाम् ।**
**श्रीमद्भारतगानां विष्णोः पूर्ण्णत्वनिर्ण्णयायैव ॥ १८२ ॥**

---

लोके यदा भारताख्यानं प्रववृते । तत्र वासुदेवादनन्तरयोर्द्वयोर्मध्ये ॥ १७८ ॥ अक्षयाविषुधी । यत्र इषवो न क्षीयन्ते । इषुगतमक्षयत्वमिषुधावुपचर्यते । दिव्ये च ते इषुधी । अक्षयेषुत्वादेव । पौरुषाङ्गतया पूर्वमक्षयाविति पुल्लिङ्ग-निर्देशः । अथ सैव कामिनीवदर्जुनस्य कामवशंवदेति दिव्ये इषुधी इति स्त्रीलिङ्गनिर्देशः । इषुधिशब्दस्योभयलिङ्गत्व-मुपयुञ्जान एवं चमत्करोति । अथवा दिव्ये रथे वानरलक्षणो ध्वजः । ध्वजश्च दिव्यः । कथं दिव्यो ध्वजः? वानर-लक्षणत्वात् । वानरः हनूमान् लक्षणं लाञ्छनं यस्य । स्वयं हि हनूमांस्तत्राऽविवेश । अथच दिव्या ईः कान्तिरस्येति दिव्येः, स चासौ ध्वजश्चेति सम्भ्रान्तलिङ्गाः समाधातव्याः । **'दिव्यो ध्वजो–'** इति पाठे तु सुगमोऽर्थः । तत्राप्यर्थान्तरं भाति–ध्वजो वा दिव्यः । स्वयं च नरलक्षणः । नराविष्टत्वात् नर इति लक्षणं नाम यस्य । **'लक्षणं नाम्नि चिह्ने च'** इति हि स्मरन्ति । नरस्य लक्ष्यत इति लक्षणं स्वरूपं यस्मिन् सन्निहितमिति वा । **'अक्षयाविषुधी दिव्यौ पाण्डवस्य महात्मनः । तेन पार्थो रणे शूरस्तस्थौ गिरिरिवाचलः । अश्वत्थाम्नः पुनर्बाणाः क्षिप्रमभ्यस्यतो रणे । जग्मुः परिक्षयं शीघ्रमभूत् तेनाधिकोऽर्जुनः'** [६०.१६–७] इति विराटपर्वणि वैशम्पायनवचनम् ॥ १७९ ॥ अनन्तवाक्यानि । सङ्क्षिप्ते ग्रन्थे उद्धृत्योद्धृत्य न शक्यमन्तगमनमिति ॥ १८० ॥ उक्तक्रमेणैव तारतम्यान्तगत्वेन क्षराक्षरपुरुषोत्तमता परब्रह्मता च ॥१८१॥ श्रीमद्भारते गतानाम्, तदनुगतानामन्येषां च सुवाक्यानाम्, विवक्षितार्थनिर्णयदक्षाणि वाक्यानि सुवाक्यानि ।

---

१. **'द्वाविमौ'** २. **'दिव्यो ध्वजो–'**

**स प्रीयतां परतमः परमादनन्तः सन्तारकः सततसंसृतिदुस्तराण्णार्त् ।
यत्पादपद्ममकरन्दजुषो हि पार्त्थाः स्वाराज्यमापुरुभयत्र सदा विनोदात् ॥ १८३ ॥**

**इति श्रीमदानान्दतीर्त्थभगवत्पादविरचिते
श्रीमहाभारततात्पर्य्यनिर्ण्णये
वाक्योद्धारो नाम[1]
द्वितीयोऽद्ध्यायः**

—०—

[आदितः श्लोकाः– १३८+१८३=३२१]

---

वेदगतानि, वेदपरिगृहीतानि भगवता गदितानि च ॥ १८२ ॥ भगवन्तं प्रीणयन्नध्यायमुपसंहरति– स प्रीयताम् । परमाद् देवगणादपि परा ब्रह्माद्याः । परतमो भगवान् । अनन्तः देशतः कालतो गुणतः शक्तितश्च । दुस्तरार्णवात् । वायुस्तारकः । तस्यापि तारकः सन्तारको भगवान् । उभयत्र, इह स्वराट्त्वम्, अमुत्र च स्वराख्यं राज्यम्, स्वर्गाधिपत्यम्, आप्स्यन्ति च मोक्षाधिपत्यम् । निश्चितत्वादतीतत्वेन वर्णनम् । विनोदात् विष्णोः प्रेरणया, विनोदात् लीलयैव, अनायासेन ॥ १८३ ॥

वाक्योद्धारो नामेति । प्रमाणवाक्यानां वेदपुराणेतिहासगतानाम्, अथच व्यासवाक्यानाम्, तत्रापि विशिष्य भारतगानां वाक्यानामुद्धारो यत्र ॥ ✲ ॥

अस्याध्यायस्य भारतवाक्यगो नारायणो देवता । कृष्णबादरायणौ च । भीमार्जुनौ च । द्रौपदी च । अथ च्छन्दांसि–

१. मालिनी नामातिशकरी । [ननमयया: मालिनी] । २. प्रथमतृतीयचरणयोर्द्वादशमात्रो द्वितीयेऽष्टादशमात्रस्तुरीये पञ्चदशमात्र आर्याप्रभेदः । अक्षरशः निचृदनुष्टुप् । ३–५७. अनुष्टुप् । ५८–६१. वसन्ततिलका नाम शकरी । ६२. शालिनी नाम त्रिष्टुप् । [मश्च तौ च गौ च शालिनी] । ६३. अनुष्टुप् । ६४. प्रथमतृतीययोः पादयोर्द्वादशमात्रो द्वितीयतुरीययोरष्टादशमात्रो गीतिर्नाम मात्राच्छन्दोभेदः । अक्षरशो भुरिगनुष्टुप् । ६५–६६. द्रुतविलम्बितं नाम जगती । [नो भौ च रश्च द्रुतविलम्बितम्] । ६७–६९. अनुष्टुप् । ७०. इन्द्रवज्रा नाम त्रिष्टुप् । ७१–९०. अनुष्टुप् । ९१. पूर्वार्द्धे उपेन्द्रवज्रा । उत्तरार्द्धे इन्द्रवज्रा । [जतजा गौ चोपेन्द्रवज्रा] । उपजातिरियं त्रिष्टुप् । ९२–१११. अनुष्टुप् । तत्र १०१तमा ११०तमा च षट्पदाऽनुष्टुप् । अक्षरगणनया जगती । ११२. अपूर्वा शालिनीसाम्यशालिनी त्रिष्टुप् । यतताश्च गौ च प्रथमचरणे । मतता गौ च द्वितीये । तततश्च गौ च तृतीये । मभता गौ च चतुर्थे । ११३–१३०.अनुष्टुप् । १३१. पूर्वार्द्धे इन्दवंशा नाम जगती । [ततजा रश्च इन्द्रवंशा] । तृतीयचरणे उपेन्द्रवज्रा नाम त्रिष्टुप् । चतुर्थे पुनः ततययैरपूर्वा

---

१. **'सुवाक्योद्धारो नाम'** । **'सुवाक्योद्धरणं नाम'** इति क्वचित् ।

जगती । तेन संहत्य निचृज्जगती । १३२. प्रथमचरणे वंशस्थं नाम जगती । [जतौ जरौ वंशस्थम्] । द्वितीये ततयथैर्जगती । तृतीय इन्द्रवज्रा नाम त्रिष्टुप् । तुरीये पुनर्वंशस्थं नाम जगती । संहत्य निचृज्जगती । १३३. प्रथमे वसन्ततिलका । द्वितीय इन्द्रवज्रा । उत्तरार्द्धे पुनर्वसन्ततिलका । संहत्य भुरिगतिजगती । १३४–१५०. अनुष्टुप् । १५१. प्रथमतृतीययोरिन्द्रवज्रा, द्वितीयतुरीययोरुपेन्द्रवज्रा । त्रिष्टुप् । १५२–१५५. जागताश्चत्वारो मन्त्राः । १५६– १५७. अनुष्टुप् । १५८. शालिनी नाम त्रिष्टुप् । [मतता गौ च शालिनी] । १५९–१६९. अनुष्टुप् । अत्र १६९तमः षट्चरणः श्लोकः । वैदिकानां मते जगती । १७०. प्रथमद्वितीयतुरीयेषु चरणेषु इन्दवज्रा । तृतीय इन्द्रवंशा । भुरिक् त्रिष्टुप् । १७१. तृतीयचरणे उपेन्द्रवज्रा, अन्यत्रेन्द्रवज्रा नाम त्रिष्टुप् । १७२–१८१. अनुष्टुप् । तत्र १७८तमः षट्चरणः श्लोकः । अक्षरशः जगती । १८२. गीतिर्नाम मात्राच्छन्दोभेदः । अक्षरशः स्वराडनुष्टुप् । १८३. अन्ते पुनर्वसन्ततिलका शाक्करी ॥ ✻ ॥

**आचार्यगोविन्दकृते**
**श्रीमद्भारततात्पर्यनिर्णयस्य ।**
**निर्णिक्ते व्याख्याने निर्णयभावचन्द्रिकाख्याने**
**प्रगतं द्वितीयाध्यायविवरणं सतां हृदयाभरणम् ॥ ✻ ॥**

**इत्याचार्यगोविन्दस्य कृतिषु**
**श्रीमहाभारततात्पर्यनिर्णयपञ्चिकायां**
**निर्णयभावचन्द्रिकायां**
**द्वितीयोऽध्यायः ।**

—०—

२२-१०-१२

# तृतीयोऽध्यायः

**[सर्ग्गानुसर्ग्ग-लय-प्रादुर्भाव-निर्ण्णयः]**

**ॐ ॥ जयत्यजोऽखण्डगुणोरुमण्डलः सदोदितो ज्ञानमरीचिमाली ।**
**स्वभक्तहार्दोच्चतमोनिहन्ता व्यासावतारो हरिरात्मभास्करः ॥ १ ॥**

**जयत्यजोऽक्षीणसुखात्मबिम्बः स्वैश्वर्य्यकान्तिप्रततः सदोदितः ।**
**स्वभक्तसन्तापदुरिष्टहन्ता रामावतारो हरिरीशचन्द्रमाः ॥ २ ॥**

---

**ॐ ॥ अत्यपूर्वप्रमेयाढ्यं दुर्गमं परमाद्भुतम् ।**
**विवरीतुं देहि शक्तिमध्यायं त्रिजगद्गुरो ॥ ॐ ॥**

उपरिष्टात् रामस्य व्यासस्य कृष्णस्य च कथाः प्रतुष्टूषुस्तान् प्रणमति । एषां त्रयाणां विशिष्य स्वावतारत्रय-सम्बन्धाच्च । व्यासस्य गुरुत्वेन प्रथमं प्रणामः । रामावतारात् पूर्वमपि त्रिः व्यासावतार आसीदिति सूचयितुं च । विशिष्य मध्वावतारसम्बन्धित्वात्, स्वव्याख्येयमहाभारतप्रणेतृत्वाच्च । जयति सर्वोत्कृष्टो वर्तते । आत्मतत्वं भासयन्नयं ज्ञान-भास्करो व्यासावतारः । अवतरतीत्यवतारः । व्यासनामाऽवतारो व्यासावतारः । अवतरणं वाऽवतारः । व्यासनामाऽवतारो यस्य । हरति तम इति सूर्योऽपि हरिरुच्यते । अयमान्तरं च तमो हरन् मुख्यतो हरिरित्याह– स्वभक्तहार्दोच्चतमो-निहन्ता । हृदयस्येदं हार्दम् । **'हृदयस्य हृल्लेख-यदण्-लासेषु'** [अ.सू.६.३.५०] इति हृदयस्य हृदादेशः । बाह्यं तमो बाह्यार्थानेव पिदधाति । हार्दं तु हृदयगुहानिहितं ब्रह्मैव पिहितं करोतीति तदुच्चं तम इत्याह । स्वभक्तेषु हार्देन प्रेम्णा तदुच्चतमोनिहन्तेति वा । स्वभक्ता ये हार्देन भक्त्याख्येन स्नेहेन उच्चाः, तेषां तमोनिहन्तेति वा । अत आदित्यः केवलं जडतत्वभास्करः । अयमात्मतत्वभास्करः । भास्करः केवलं तमो घ्नन्नपि न नितरां निःशेषेण हन्ति । पिहितपिठरादिगतं तमो विद्यत एव । अयं तु हार्दस्य पिहितस्य तमसो नितरां हन्ता । तेनायमात्मभास्करो जडभास्करं विजयते च । यतोऽयमात्मना स्वसामर्थ्येन भास्करः । अन्यस्तु **'तस्य भासा सर्वमिदं विभाति'** इति तद्दत्तभासा भास्करः । न तु स्वभासा सर्वं भासयन् । आदित्यो जायते । **'चक्षोः सूर्यो अजायत'**, **'सूर्याचन्द्रमसौ धाता यथापूर्वमकल्पयत्'** इत्यादेः । अयमजः । आदित्यः खण्डितप्राकृततेजोमण्डलः । अयमखण्डिताप्राकृतगुणमयानन्ततेजो-मण्डलः । आदित्यः दिवैवोदेति । अयं सदोदितः । आदित्यः जडमरीचिमाली । अयं ज्ञानमरीचिमाली । एवमुत्तरत्रापि । वाति वयतीति वा वौ नभसङ्गमे गरुड आस्त इति व्यासोऽयं गरुडवाहनो नारायण एवेत्याह ॥ १ ॥ रामचन्द्र इति

**जयत्यसङ्ख्योरुबलाम्बुपूरो गुणोच्चरत्नाकर आत्मवैभवः ।**
**सदा सदात्मज्ञनदीभिराप्यः कृष्णावतारो हरिरेकसागरः ॥ ३ ॥**

**'नारायणं नमस्कृत्य नरं चैव नरोत्तमम् ।**
**'देवीं सरस्वतीं व्यासं ततो जयमुदीरयेत्' ॥ ४ ॥**

**'जयो नामेतिहासोऽयं कृष्णद्वैपायनेरितः ।**
**'वायुर्नरोत्तमो नाम देवीति श्रीरुदीरिता ॥ ५ ॥**

---

प्रसिद्धिं मानयन्नेव रामावतारं रूपयति– रामावतारो हरिरीशचन्द्रमाः । सन्तापः संसारतापः । चन्द्रमा अभक्तानामपि सन्तापं हरति । अनीशत्वात् । अयं त्वीशचन्द्रमाः स्वभक्तानामेव दुरिष्टं हरति । चन्द्रस्तु प्रतिकृष्णपक्षं क्षीयमाणजड-बिम्बः । अयमक्षीणसुखात्मबिम्बः । स्वरूपैश्वर्यमयी कान्तिरस्य । चन्द्रमास्तु अनीश्वरजडकान्तिः । स चाण्डैकदेशे ततः । अयं तु प्रततः अण्डस्यान्तर्बहिश्च ततः । चन्द्रमा रात्रावेवोदितः । अयं सदोदितः । सतां हिताय भूमावागत्यापि उदितः ॥ २ ॥ एकसागरः मुख्यसागरः । असङ्ख्यमनन्तम्, अत एवोरु सर्वाधिकं बलम् । वस्तुतो ज्ञानानन्दादयो गुणा एवोच्चरत्नानि । प्रसिद्धरत्नानि तु समलोष्टाश्मकाञ्चनानाममोहनानीत्यनुच्चानि । आत्मना परमात्मना दत्तं वैभवं साग-रस्य । कृष्णस्य तु आत्मना स्वत एव स्वरूपभूतं वैभवं महिमेति महान् भेदः । सदा आत्मनि प्रतिबिम्बे बिम्बं परमात्मानं जानन्तः सदात्मज्ञाः । तैर्नदीभिः सागर इव सदा प्राप्यः । सदा जयति वा । सन्तं निर्दोषं परमात्मानं जानन्तः, स ह्येकः सदात्मा, अन्ये त्वसदात्मन इति । सन् निर्दोषः, आत्मा आततगुण इति च जानन्तः । सदिति प्राणः । तस्यायमात्मा अन्तर्यामीति च जानन्तः । सत् सत्यं चराचरात्मकं जगदयमाप्नोतीति सर्वगत इति च जानन्तः, जगत् सदिति जानन्तः, अयमेव च कालतो देशतो गुणतः शक्तितश्चाऽततत्वान्मुख्य आत्मेति च जानन्तः । **'सदिति प्राणः'** इति श्रवणात् । सन्तं प्राणं परमगुरुम्, परमात्मानं च परदैवतं जानन्तः । ब्रह्मादिभिर्दासभूतैः सहितः सदासः । तेषामभीष्टदश्चायमात्मेति च जानन्तः । ये सति भगवत्येवाऽसते ते सदासाः सात्विकाः । तेषामेव चायं मोक्षाद्यभीष्टद इति च जानन्तः । सति प्राणे भगवति वा आसीदन्तीति सदासदः । सात्विकाः । तेषामयमात्मेति जानन्तश्च । अत्र प्रथमपद्ये आद्यचतुर्थौ जागतौ । द्वितीयतृतीयौ त्रैष्टुभौ । द्वितीये तृतीये च पद्ये द्वितीयचतुर्थौ जागतावन्यौ त्रैष्टुभौ । जागतेन द्वादशात्मा ब्रह्माण्डगतो हरिः स्तूयते । त्रैष्टुभेन चैकादशेन्द्रियनेता पिण्डाण्डगतो नारायणः ॥ ३ ॥ त्रिरूपो भगवान् वक्तृवाच्यस्वरूपः स्वेन स्तुतः । रमाया अयं पती राम इति लक्ष्मीरपि स्तुतप्राया । स्वस्येदं पर्याप्तम् । अन्येषां नैतावता पूर्यते । अन्येऽपि नन्तव्या भवन्तीति भारतवचनेनैव ज्ञापयितुं मङ्गलपद्यान्तरं व्याख्यातुमारभते– नारायणं नमस्कृत्य ॥ ४ ॥ तदिदं पञ्चरात्र-वचनैरेव व्याख्याति– जयो नामेतिहासोऽयम् । जय इत्यष्टादशसङ्ख्योच्यते कटपयादिक्रमेण । अष्टादशपर्वात्मकमिति भारतमपि जय इत्युच्यते । अष्टादशाध्यायमयी गीता च । अष्टादशदिननिर्वृत्तामष्टादशाक्षोहिणीकां युद्धवार्तां कथयतीति च जयः । पाण्डवानां जयगाथा चेयम् । सकलसाधकानां च संसारजयगाथेयम् । अपि च धर्मः, भक्त्यादिदशकम्,

**'नारायणो व्यास इति वाच्यवक्तृस्वरूपकः[१] ।**
**'एकः स भगवानुक्तः साधकेशो नरोत्तमः ॥ ६ ॥**

**'उपसाधको नरश्चोक्तो देवी भाग्यात्मिका नृणाम् ।**
**'सरस्वती वाक्यरूपा तस्मान्नम्या हि तेऽखिलाः ।**
**'कृष्णौ सत्या भीमपार्थौ कृष्णेत्युक्ता हि भारते' ॥ ७ ॥**

श्रवणमनननिदिध्यासनानि, शीलविनयौ, अध्यात्मविद्या, वेद्यो नारायणश्चेत्यष्टादशतत्वान्यत्र गदितानीति च जयो नामेतिहासोऽयम् । अष्टादशस्य विशुद्ध्यर्थं सप्तदशानां निरूपणम् । ग्रन्थेषु जयति सर्वोत्कृष्टो भवति, तेन चेतरान् ग्रन्थान् जयत्यभिभवतीति च जयो नामेतिहासोऽयम् । कुतः? कृष्णद्वैपायनेरितत्वात् । **'कृष्णस्तु भगवान् स्वयम्'** इयुक्तः कृष्ण एव स्वयं ह्ययं द्वैपायनः कृष्णनामा । सर्वजीवोत्तमत्वाद् वायुर्नरोत्तमो नाम । **'तुभ्यं प्राण प्रजास्त्विमाः'** इत्यादिश्रुतिप्रसिद्धं चैतदित्याह– नामेति । महाभारतप्रतिपाद्येषु नरेषु चोत्तमोऽयम् । नर इत्यर्जुनः प्रसिद्धः । तदग्रजत्वाच्चायं नरोत्तमः । नाग्रे जननमात्रेण किन्तु स्वरूपतश्चोत्तमः । नारायण एव मुख्यतो देव इति देवीति श्रीरुदीरिता सर्वशास्त्रेषु विद्वद्भिः । अतोऽत्र भारतमङ्गलपद्येऽपि देवीति श्रीरुदीरिता ॥ ५ ॥ यद्यपि नारायणो व्यास इत्येक एव । अथापि वाच्यत्वेन ग्रन्थप्रतिपाद्यत्वेन ग्रन्थवक्तृत्वेन गुरुत्वेन च वन्द्य इति पृथगुक्तः– 'नारायणं व्यासं च नमस्कृत्य' इति । कप्रत्ययेन स्वरूपभेदं कुत्सयामास । निमित्तभेदादेव द्विर्नमनं न स्वरूपभेदादिति । सर्वजीवोत्तमः जीवकलामानी नरोत्तमो वायुः साधकेशः सर्वसाधकानामादिगुरुरिति साधकैः सोऽपि नन्तव्यः ॥ ६ ॥ उपसाधको नरः शेषः । तस्य छन्दःपुरुषत्वात् । स एव हि वाचमर्थवर्तीं व्याहारयति । उपसाधकानुग्रहेण साधकेश उपसदनीय इति तस्य प्राथम्यम्– नरं चैव नरोत्तममिति । अर्जुने नारायणस्य नररूपेणाऽवेशाच्च तस्य प्रथमनिर्देशः, कृष्णसारथित्वाच्च । नरमेव नारायणं नत्वा, तदनन्तरं नराविष्टं नरं तदाविष्टमर्जुनं च नत्वेति । तदिमे भारते मुख्यप्रतिपाद्यास्त्रयो निरूपिताः कृष्णोऽर्जुनो भीमश्च । तदनन्तरं ग्रन्थमानिन्यौ नम्येते देवी रमा सरस्वती च । देवी देवस्य नारायणस्य पत्नी रमा मुख्यतो वाग्देवी शास्त्रज्ञानाख्यभाग्यप्रदा च । वाक्यरूपा वाक्यानां पदानां वर्णानां च मानिनी । ततः परं ग्रन्थकृद् व्यास इति क्रमः । कृष्णौ कृष्णद्वैपायनः वासुदेवकृष्णश्च । नारायणं व्यासमित्युक्तौ । सत्या देवीमित्युक्ता । भीमपार्थौ नरोत्तमं नरं चेत्युक्तौ । कृष्णा द्रौपदी सरस्वतीमित्युक्ता । एते षडपि उक्ता हि भारते । तस्माद् विशिष्य भारतारम्भे नम्या हि तेऽखिलाः । सत्यभामाद्रौपदीसंवादपर्वणि सत्यभामा च विशिष्योक्ता । नरकवधे पारिजातहरणे च । तस्मादाद्यपद्येऽपि विशिष्य नम्यत्वेनोक्तेति । एते मङ्गलपद्यव्याख्यानरूपाः श्लोकाः पञ्चरात्रसंहितागता इत्युदाजहार भागवतटीकायां वल्लभाचार्योऽपीषत्पाठभेदेन । उपसाधक इत्येकाक्षराधिकः पाद इति भुरिगनुष्टुप् ॥ ७ ॥

१. '–स्वरूपतः ।'

**सर्वस्य निर्ण्णयसुवाक्यसमुद्धृती तु स्वद्ध्यायययोर्हरिपदस्मरणेन कृत्वा ।**
**आनन्दतीर्त्थवरनामवती तृतीया भौमी[1] तनुर्म्मरुत आह कथाः परस्य ॥ ८ ॥**

**व्यूढश्चतुर्द्धा भगवान् स एको मायां श्रियं सृष्टिविधित्सयाऽऽर ।**
**रूपेण पूर्व्वेण स वासुदेवनाम्ना विरिञ्चं सुषुवे च साऽतः ॥ ९ ॥**

**सङ्कर्षणाच्चापि जयातनूजो बभूव साक्षाद् बलसंविदात्मा ।**
**वायुर्य्य एवाथ विरिञ्चनामा भविष्य आद्यो न परस्ततो हि ॥ १० ॥**

---

अध्यायार्थमध्यायत्रयीवसन्ततिलकायितं तयैव धृत्या च्छन्दसाऽऽह । तदनेनातिच्छन्दसा स्वोक्तमर्थमवधारयतीव । सर्वस्य शास्त्रस्य निर्णयः, सर्वशास्त्रस्य सुवाक्यानां समुद्धृतिश्च । अपौरुषेयत्वेन व्यासप्रणीतत्वेन च परमप्रमाणत्वमेव सुवाक्यत्वं नाम । समुचिता, सङ्क्षिप्ता, अथापि समग्रा विवक्षितार्थसमर्थनसमर्था चोद्धृतिः समुद्धृतिः । तुना शास्त्रतात्पर्य-निर्णयस्य तत्र प्रमाणवाक्यानां समुद्धरणस्य चेतरदुःशकताम्, स्वस्य चानायाससाध्यतां चाऽह । अध्याययोः सुष्ठुत्वं च परमाप्तेन सर्वज्ञेन स्वोक्तार्थे स्वयमेव प्रमाणेन प्राणेन प्रणीतत्वम्, श्रुतीतिहासपुराणमूलत्वं च । मूलप्रमेयसङ्ग्रह-पूर्वकं मूलप्रमाणनिदर्शकत्वं च । हरिपदस्मरणं व्यापकम्, ग्रन्थकरणं व्याप्यमित्याह– हरिपदस्मरणेन सहैव । हरति विघ्नजातमिति, हरति विहरति चित्ते सर्वदेति हरिः । आनन्दकरं तीर्थमस्येत्यन्वर्थतया वरं नाम । भौमी भूमाव-वतीर्णा । मरुतस्तृतीया तनुः ॥ ८ ॥ सर्गानुसर्गलयप्रादुर्भावनिर्णयोऽयमध्यायः । तत्राऽदौ सर्गनिर्णयमाह–व्यूढ इत्यादिना, **'शुष्मं हिरण्यात्मकमम्बुमध्ये'** [२२] इत्यन्तेन ग्रन्थजातेन, चतुर्दशभिः पद्यैः । अथच प्रथमाध्याये नवमश्लोके **'चक्रेऽथ देहसहितान् क्रमशः स्वयम्भुप्राणात्मशेषगरुडेशमुखान् समग्रान्'** इत्युक्तम् । ततस्तदुपयुक्तं प्रमेयजातं द्वाभ्या-मध्यायाभ्यामुक्तम् । इदानीं तमेव सृष्टिक्रममुपक्रमते । **'क्रमशः देहसहितान्'** इत्युक्तम् । केन क्रमेणेतीदानीमाह–व्यूढ इत्यादिना । भगवान् नारायणः एकोऽपि चतुर्धा व्यूढः । वह प्रापणे । विश्लेषं प्राप्त इव चतूरूपैः संहतो बभूव । ततः वासुदेवनाम्ना पूर्वेण रूपेण मायामार जगाम । ऋ गतौ । भ्वादिरपि ऋधातुर्भवति । तदा ऋच्छतीत्यादि रूपम् । जुहोत्यादिरपि भवति । तदा इयर्तीत्यादि रूपम् । उभयत्रापि लिटि समानं रूपमारेति । संसारदशायामात्मानं वस्ते आच्छादयति, मुक्तानां पुनरात्मानं सदा देवयति प्रकाशयतीति वासुदेवः । मां भगवत्प्रज्ञां सदा यापयतीति माया । अतो वासुदेवात् सा माया विरिञ्चं सुषुवे । जगतो विरचनाद् विरेचनाद् वा विरिञ्चः । विरिञ्चिर्वा । **'विरिञ्चो द्रुहिणः शिञ्चो विरिञ्चिर्द्रुघणो मतः'** इति शब्दार्णवः । अतः सङ्गमाद् वा । अतः विरिञ्चप्रसवानन्तरं सङ्कर्षणाद् वायुर्बभूवेत्युत्तरान्वयो वा । विरिञ्चसृष्टेर्दशवत्सरानन्तरमित्यर्थः । **'दशवर्षं तु तत्पश्चाज्जननम्'** [३.१३.३–४] इति भागवततात्पर्ये ॥ ९ ॥ सङ्कर्षणाज्जया वायुं सुषुवे । संसारात् कर्षतीति सङ्कर्षणः । जातञ्जातं यापयतीति जया । बलसंविदात्मेति वायुपद-

---

१. **'भैमी'**

**सूत्रं स वायुः पुरुषो विरिञ्चः प्रद्युम्नतश्चाथ कृतौ स्त्रियौ द्वे ।**
**प्रजज्ञतुर्य्यमळे[१] तत्र पूर्वा प्रधानसञ्ज्ञा प्रकृतिर्ज्जनित्री ॥ ११ ॥**

निर्वचनम् । वं बलम् । आयुरिति संवित् । अय गतौ । साक्षादनुपचारतः । **'सुषुवे च साऽतः'**, **'सङ्कर्षणाच्चापि'** इत्युभयत्र चकारो दौर्लभ्यवचनः । दुर्लभतमैषा साक्षाद् रमारमेशयोर्जनिरृते विरिञ्चवाय्वोरिति । यः अथ समनन्तरकल्पे विरिञ्चो भविष्यति । भविष्येषु ब्रह्मसु य आद्यः । आदिजीवो वा । यतस्ततः परोऽन्यो ब्रह्मपदयोग्यो न हि भवति । ततः परोऽधिकः कश्चन जीवोऽपि न हि ॥ १० ॥ स वायुरेव क्वचित् सूत्रमित्युच्यते । विरिञ्चः पुरुष इति । सूत्रवत् जगद्धारणात् सूत्रम् । पुरुषमानित्वात् पुरुषः । प्रकृष्टं द्युम्नं जगदाख्यं द्रविणमस्येति प्रद्युम्नः । जगत् करोतीति कृतिः । अथ वायुसृष्टेः संवत्सरात् परम् । **'कालः संवत्सरात् परः'** इति च तत्रैव । ननु संवत्सरस्संवत्सर इति महता कण्ठेनोच्यते । कोऽयं संवत्सरो नाम । किं मानुषः? किमथ दैवः? उताहो ब्राह्मः? तृतीयस्तावद् गर्भस्रावेणैव निरस्तः । तदात्वे वायोर्नवतिरेव वर्षाण्यायुः स्यात् । ब्रह्मण इव वायोरपि हि शतायुष्ट्वमिष्यते । प्रथमद्वितीयौ सम्भावितौ । पूर्वे व्याख्यातारोऽपि द्वयोरेव परिभ्रमन्ति । प्रथमः साधुरित्येके । द्वितीय इत्यपरे । कोऽत्र स्वपक्षः? दैवः संवत्सर इति । यतोऽस्मिन्नेव भागवततात्पर्योदाहृते प्रमाणवचने उपरिष्टात् पठ्यते–**'शेषस्य गरुडस्यापि दिव्यवर्षसहस्रकः'** इति । तत्संवादादत्रापि दिव्यवर्षस्यैव ग्रहणमिति स्फुटम् । तेन ब्रह्मणो जननात् ३६०० मानुषवर्षेभ्यः परं वायोर्जननम् । ततः ३६० वर्षेभ्यः परं सरस्वतीभारत्योरिति । अथात्र बहुधा व्याहारा भवन्ति शास्त्रेषु । वासुदेवादेव ब्रह्मवाय्वोश्च सरस्वतीभारत्योश्च जननमिति क्वचित् पठ्यते । तथाह्यनुव्याख्याने–**'ततो जातः पुमान् नाम ब्रह्माऽस्यां वासुदेवतः । सूत्रात्मा प्राणनामा च देव्यौ प्रकृतिमानिनी'** [२.३.४३] इति । पुरुषरूपाद् भगवतः पुरुषाख्यस्य ब्रह्मणः सरस्वत्याश्च सृष्टिरित्यन्यत्र । तथाहि भागवततात्पर्ये सृष्टिविक्षेपवचनम्–**'नारायणाख्यः पुरुषः शेते लक्ष्म्याऽन्वितो लये । स एव पुरुषाख्यं तु द्वितीयं रूपमात्मनः । कृत्वा रमायां पुरुषनामानं तु चतुर्मुखम् । प्रधानाख्यां च गायत्रीं ससर्ज पुरुषात्मकः'** [भाग.ता.११.६.१६] इति । पुरुषाख्याच्चतुर्मुखादेव महत्तत्वमानिनस्तस्य श्रद्धाभिधायाः सरस्वत्याश्च जननमिति च तत्रैव–**'चतुर्मुखः स पुरुषो महत्तत्वाभिधं पुनः । प्रधाननाम्न्यां गायत्र्यां ससर्जाऽत्मानमेव तु । श्रद्धाभिधां च गायत्रीं ततः शेषोऽन्वजायत'** इति । सूत्रात्मा वायुरपि चतुर्मुखादेव जायत इति च भागवततात्पर्योदाहृतप्राथम्यवचनादवसीयते–**'वायुस्तु ब्रह्मणः पुत्रः प्रकृतौ समजायत'** [११.२४.६] इति । एवं सङ्कीर्णेषु वचनेषु, अनिर्णयग्रस्तेषु विद्वत्सु निर्णयमाह भगवत्पादः– वासुदेवात् पुरुषो नाम ब्रह्मा जायते । सङ्कर्षणात् सूत्रनामा वायुः । प्रद्युम्नात् सरस्वतीभारत्यौ । पुनरनिरुद्धान्महत्तत्वमानी चतुर्मुख इति । **'ज्ञानं त्वन्यतमो भागः पुरुषः सोऽभिधीयते'** [भाग.११.२४.४], **'तेभ्यः समभवत् सूत्रं महान् सूत्रेण संयुतः'** [६] इत्यादिवचनानामर्थं स्पष्टयितुं 'वायुः सूत्रं पुरुषो विरिञ्चः' इत्याद्याह । का तर्हि वचनान्तराणां गतिः? अयमिहानुव्याख्यानवचनार्थः–वासुदेवतः ब्रह्मा जातः । एवं सङ्कर्षणात्मनः वासुदेवात् सूत्रात्मा प्राणनामा । प्रद्युम्नात्मनो वासुदेवात् प्रकृतिमानिन्यौ देव्यौ ब्रह्मसूत्रात्मनोः पत्न्याविति । रूपान्तरमेव न स्वरूपान्तरमिति द्योतयितुमेवं शास्त्रकारा व्यामुग्धं व्याहरन्ति । अपिच सज्जनमोदाय दुर्जनमोहाय चैवं व्याहारा भवन्ति । तद्यथाऽऽचार्यः कृष्णरूपं स्तुवन् **'मन्दर-**

१. **'–र्यमले'**

**श्रद्धा द्वितीयाऽथ तयोश्च[1] योगो बभूव पुंसैव च सूत्रनाम्ना ।**
**हरेर्न्नियोगादथ सम्प्रसूतौ शेषः सुपर्ण्णश्च तयोः सहैव ॥ १२ ॥**

**शेषस्तयोरेव हि जीवनामा कालात्मकः सोऽथ सुपर्ण्ण आसीत् ।**
**तौ वाहनं शयनं चैव विष्णोः काला जयाद्याश्च ततः प्रसूताः ॥ १३ ॥**

**धारा गोविन्द वन्दे'** इत्याह । सृष्टिविक्षेपवचनमप्येतदनुगुणतया व्याख्येयम्– पुरुषविधं रूपं पुरुषाख्यमुच्यत इति वासुदेवादयः सर्वेऽपि पुरुषाख्या एव । अत एव **'पुरुषात्मकः'** इत्याह । पुरुषविधः करचरणादिमान् आत्मा विग्रहोऽस्येति । एवं च पुरुषात्मकः प्रद्युम्नः प्रधानाख्यां गायत्रीं ससर्जेत्यर्थः । **'चतुर्मुखः स पुरुषः–'** इति भगवत्सृष्टस्यैव स्वतः पुनः सृष्टिरुच्यते । एवं वायुरपि प्रथमं सङ्कर्षणेन सृष्टः । पश्चात् ब्रह्मणः पुत्रो बभूवेति न प्राथम्यवचनविरोधोऽपि । ननु किमिति पुनःपुनर्जायन्ते? न पुनर्जननं नाम बहुभावः । किन्तु स्थूलभाव इति वक्ष्यति । प्रद्युम्नात् कृतिर्द्वे स्त्रियौ सुषुवे । पूर्वजातयोः पत्न्यौ । स्त्रीजीवेषु प्राथम्यात् प्रजज्ञतुरित्याह प्रथमं जज्ञतुरिति । प्रकर्षेण जज्ञतुरिति । प्राधान्येन जज्ञतुरिति । **'जन जनने'** इति छान्दसस्य धातोर्लिटि रूपम्–जजान जज्ञतुः जज्ञुरिति । जनी प्रादुर्भाव इत्यस्य त्वात्मनेभाषत्वाज्जज्ञाते इति रूपं भवति । यमयुगयोर्लस्य ळो भवति । यमळम् । युगळम् । कमेर्विभाषा । कमलम् । कमळम् । पूर्वा प्रधानं प्रकृतिरिति शास्त्रगदिता जगन्माता सरस्वती पुरुषनाम्नो जगज्जनयितुर्विरिञ्चस्य भार्या । जनयतीति जनयिता । णिलोपे जनिता । **'जनिता मन्त्रे'** [अ.सू.६.४.५३] इति हि पाणिनिः । **'यो नः पिता जनिता'** इति श्रुतिः । स्त्रियां ङीपि जनयित्री, जनित्रीत्युच्यते जननी । **'तं ते माता परि योषा जनित्री'** [ऋ.सं.३.४८.२] इति श्रुतिः । अमन्त्रेऽपि भवतीति शब्दरत्नावलीकारः । प्रयुञ्जते च लोकेऽपि विपश्चितः । प्रथमं तावत् प्रकृतिपुरुषाविति लक्ष्मीनारायणौ । तदनन्तरं प्रकृतिपुरुषावेतौ सरस्वतीविरिञ्चौ तन्मानिनौ ॥ ११ ॥ तयोर्द्वितीया श्रद्धामानिनी भारती सूत्रनाम्नो वायोः पत्नी । तयोश्च प्रकृतिश्रद्धयोः पुरुषेण सूत्रेण च समागमो बभूव । पुंसैव सूत्रनाम्नैव च । एवकारेण तयोर्नियतं दाम्पत्यमाह । अथ दिव्यवर्षसहस्रानन्तरम् । **'शेषस्य गरुडस्यापि दिव्यवर्षसहस्रकः'** इति ह्युक्तम् । ३,६०,००० मानुषवर्षेभ्यः परस्तादित्यर्थः । तयोः प्रकृतिसङ्गतस्य पुरुषस्य श्रद्धासङ्गतस्य वायोश्च सकाशात् । नायं दम्पत्योः समागमो व्यसनितया । किन्तु हरेर्नियोगात् । नियोगो निदेशः । हरेस्तयोर्नितरां योगात् सन्निधानाच्च । हरिरेव तत्र सन्निधाय जनयामासेति चार्थः । शेषः सुपर्णश्च सहैव समकालमेव सम्प्रसूतौ । अथ तयोः प्रकृतिश्रद्धयोः शेषः सुपर्णश्च सहैव । अथापि यमाविव किञ्चिद्व्यवधानेनेति द्वितीयाथशब्दार्थः । शेष एव जीवनामा । गरुड एव कालनामा । ब्रह्मवायू उभावपि जीवमानिनौ कालमानिनौ च । तयोः शेषगरुडयोः जीवमानित्वं शेषेऽप्यनुवृत्तमिति स जीवनामा बभूव । कालमानित्वं गरुडे चानुवृत्तमिति स कालनामा बभूव । ब्रह्मवायू तु मुख्यतः कालजीवनामानाविति । एतेन– **'वासुदेवात् सङ्कर्षणो नाम जीवो जायते'** इति पञ्चरात्रवचनं गदितार्थम्, जीवो जीवमानी सङ्कर्षणः शेष इति । ततश्च जीवजननवचनात् पञ्चरात्रमप्रमाणमिति वदन्तोऽविदितमूलभावाः परास्ताः । तौ वाहनं शयनं चैव विष्णोः । तावेव विष्णोः

१. **'तयोस्तु'**

**काला जयाद्या अपि विष्णुपार्षदा यस्मादण्डात् परतः सम्प्रसूताः ।**
**नीचाः सुरेभ्यस्तत एव तेऽखिला विष्वक्सेनो वायुजः खेन तुल्यः ॥ १४ ॥**

---

शयनं वाहनं च । नान्यस्य तादृशं भाग्यमित्यर्थः । किञ्चित् पश्चाज्जननमात्रेणावरत्वं न शङ्कनीयमिति सूचयितुं वाहनं शयनं चेति क्रमव्यत्यासः । उपरि योजनार्थं च व्यत्यस्य कथनम् । तथाहि– ततः वाहनशयनयोः काला जयाद्याश्च प्रसूताः । कालनाम्नो विष्णुवाहनाद् गरुडात् कालनामकाः संहारकर्मणि सहकारिणः, **'अश्विनौ पृथिवी चैव काला मृत्यव एव च । शूद्रदेवाः समुद्दिष्टाः'** इत्युक्ताः शूद्रवर्णाभिमानिनो देवाः । जीवनाम्नो विष्णुशयनाच्छेषाज्जयविजयाद्याः विष्णुपार्षदा जाता इति । **'जयाद्याश्च'** इति चकारः परस्परसमुच्चये नीचत्वे च । सुरेभ्यो नीचा अपि कालाश्च जयाद्याश्च पूर्वं प्रसूता इति । स्फुटमेतदुत्तरश्लोके । जयाद्या इत्यष्टौ द्वारपालाः । वैकुण्ठे च जीवहृदये च बहिर्द्वारपाः । **'जयाद्या बाह्यतः स्मृताः'** इति च्छन्दोगभाष्ये प्रमाणवचनम् [३.२.७] । तथाच हृद्गतानां जयाद्याः सहकारिणः । हृदयादुद्गतानामूर्ध्वगमने कालाः सहकारिण इति । त इमे काला येऽजामिळाय दर्शनं ददुर्व्यवदन्त च यमकिङ्करैः सह । चत्वारश्च ते । तथाहि भागवते–**'अथ ते क्व गताः सिद्धाश्चत्वारश्चारुदर्शनाः'** [६.२.३४] इत्यजामिळवचनम् । **'चतुर्भिरद्भुतैः सिद्धैराज्ञा ते विप्रलम्भिता'** [६.३.८] इति च यमभटानां वचनम् । **'सर्वे पद्मपलाशाक्षाः पीतकौशेयवाससः । किरीटिनः कुण्डलिनो लसत्पुष्करमालिनः । सर्वे च नूत्नवयसः सर्वे चारुचतुर्भुजाः । धनुर्निषङ्गासिगदाशङ्खचक्राम्बुजश्रियः'** [६.१.३४–५] इति च ॥ १२–१३ ॥ काला अपि संहर्तुः सङ्कर्षणस्य विष्णोः पार्षदाः । पार्षदा इति पारिषदा अनुचराः । जयाद्याश्च द्वारपालतया पार्षदाः । अत्र व्याख्यातारो विवदन्ते–कालनामानश्च जयाद्याश्चेत्युभयेऽपि विष्णोः पार्षदा इत्येके । कालाः कालमानिन इति जयादीनां विशेषणम् । न पृथग्देवतागणोल्लेख इत्यपरे । प्रथमपक्षेऽपि **'ततः प्रसूताः'** इति बहुधा व्याचक्षते । **'ततः शेषात् कालाः सुपर्णात् जयाद्याश्च प्रसूताः'** इत्येके । अपरे व्यत्यस्य व्याचक्षते–**'शेषाज्जयाद्याः सुपर्णात् कालाः प्रसूताः' इति । 'ततः ब्रह्मवायुभ्यां प्रसूताः'** इत्यन्ये । के कस्मात् प्रसूता इति निर्णेतुमपारयन्तः केचित् सुकरं पन्थानं पतन्ति–**'ततः गरुडशेषयोर्जननानन्तरं कालमानिनो जयाद्याः प्रसूताः'** इति । काऽत्र विवक्षा युक्ता स्यात्? कालमानिनो जयाद्या इति पक्षे **'जयाद्याश्च'** इति चकारो नातिस्वरस इति भाति । उत्तरत्र **'जयाद्या अपि'** इत्यपि-शब्दश्च । शेषात् कालाः प्रसूता इति पक्षे जीवमानिनः शेषात् कालमानिनो जाता इति न चित्ते लगति । कालमानिनः सुपर्णात् कालमानिनः कालनामानो जाता इति तु स्वरसम् । तदर्थमेव च 'वाहनं शयनं च' इति व्यत्यस्य पठनमिति हृदयङ्गमम् । **'ततः'** इति केवलमानन्तर्यवचनमिति तु न श्लिष्यति । सर्वत्र पूर्वोत्तरयोः स्रष्टा सहैव सृष्टस्य वचनेऽप्यत्र स्रष्टुरवचनेन न्यूनता च स्यात् । तर्हि कौ स्रष्टारौ? ब्रह्मवायू इति तु दूरान्वयग्रस्तम् । एतच्छ्लोकप्रसक्तयोरेव परामर्शो युक्तः । तत्रापि न शेषगरुडयोः, किन्तु गरुडशेषयोरित्युक्तम् । अण्डाद् बहिः सम्प्रसूताः । संहत्य प्रसूताः । गणशः प्रसूता इत्यर्थः । अण्डान्तः सृष्टिरेव हि तारतम्यज्ञापनी । अयमत्र विशेषः । ब्रह्मवाय्वोः सरस्वतीभारत्योः गरुडशेषरुद्राणां तत्पत्नीनां चेतीयतामण्डाद् बहिः सृष्टिरपि भवति तारतम्यज्ञापनी । तदन्येषां त्वण्डान्तः प्रथमकल्पसृष्टिरिति । सा च वक्ष्यते । एवं विष्णुपार्षदेषु एकः पुनर्वायुजः । स तु विष्वक्सेननामा विष्णुपरिवारसेनापतिः । कालैर्जयाद्यैश्चोत्तमः । खेन आकाशमानिना विनायकेन तुल्यः । अष्टादशकक्ष्यापठित इत्येतत् । कालाद्या ऊनविंशकक्ष्यापठिताः ॥ १४ ॥

**व्यूहात् तृतीयात् पुनरेव विष्णोर्देवांश्चतुर्वर्ण्णगतान् समस्तान् ।**
**सङ्गृह्य बीजात्मतयाऽनिरुद्धो न्यधत्त शान्त्यां त्रिगुणात्मिकायाम् ॥ १५ ॥**

**ततो महत्तत्वतनुर्विरिञ्चः स्थूलात्मनैवाजनि वाक् च देवी ।**
**तस्यामहङ्कारतनुं स रुद्रं ससर्ज्ज बुद्धिं च तदर्द्धदेहाम् ॥ १६ ॥**

**बुद्ध्यामुमायां स शिवस्त्रिरूपो मनश्च वैकारिकदेवसङ्घान् ।**
**दशेन्द्रियाण्येव च तैजसानि क्रमेण खादीन् विषयैश्च सार्द्धम् ॥ १७ ॥**

---

विष्णोस्तृतीयाद् व्यूहात् निर्माणात् । यच्चतुर्धा स्वात्मानं निर्ममे तत्र तृतीयाद्रूपात् प्रद्युम्नाख्यादित्यर्थः । **'व्यूहः स्याद् बलविन्यासे निर्माणे वृन्दतर्कयोः'** इत्यभिधानम् । चतुर्वर्णगतान् चतुर्वर्णनियामकतया स्थितान् चतुर्वर्णमानिनः समस्तान् देवान् । **'विप्रादिवर्णभेदेन चत्वारो बहवोऽपि ते'** [१०.६] इति गीतातात्पर्ये पुराणवचनम् । तथाहि बृहद्भाष्ये– **'विष्णोर्ब्राह्मणजातिः सन् ब्रह्मा जज्ञे चतुर्मुखः । वायुः सदाशिवोऽनन्तो गरुडः शक्र एव च । कामश्च वरुणश्चैव सोमसूर्यौ यमस्तथा । एवमाद्याः क्षत्रियास्तु देवानां ब्रह्मनिर्मिताः । विवस्वदिन्द्रवरुणविष्णुभ्योऽन्येऽदितेः सुताः । रुद्रादन्ये तथा रुद्रा वायोरन्ये च वायवः । अग्नेरन्ये च वसवो वैश्या इत्येव कीर्त्तिताः । अश्विनौ पृथिवी चैव काला मृत्यव एव च । शूद्रदेवाः समुद्दिष्टा देववर्णा इति स्मृताः'** इति । अग्निश्च ब्राह्मणजातिमानी । बृहस्पतिश्च । **'एवमाद्याः क्षत्रियास्तु'** इत्याद्यशब्देन अनिरुद्धः, स्वायम्भुवमनुः, दक्षः, वैवस्वतमनुश्च गृह्यन्ते । निरृतिश्च शूद्रजातिमानी । नहि देवानां स्वतो वर्णविभागोऽस्ति । नाप्यसुराणाम् । मुक्तियोग्यानां मनुष्याणामेव हि चातुर्वर्ण्यमिष्यते । पालनकर्मणि न केनापि निरुद्ध इत्यनिरुद्धः । अनिभिः प्राणिभिः रुद्धः परिगत इति वा । मातृवत् सुतानां पालनेन दुःखशमनाच्छान्तिः । सूक्ष्मरूपत्वेन बीजात्मतया स्थितान् वृक्षभावमिव स्थूलरूपं गमयितुं त्रिगुणमानिन्यां शान्त्यामनिरुद्धो न्यधत्त ॥ १५ ॥ महत्तत्वतनुः महत्तत्वमानी विरिञ्चः ततोऽनिरुद्धादजनि । वाग्देवी सरस्वती च । तत एवाजनि । सृष्टिप्रकरणे पूर्वरूपस्योपचय एव देवानां पुनर्जननं नाम । न पूर्वरूपनाशेन रूपान्तरोत्पत्तिः । तद्यथा बीजमङ्कुरतामापद्यते । अङ्कुरो गुल्मो भवति । गुल्मश्च विटपी भवति । यथा वा कुमारी गौरी भवति । गौरी मध्यमा भवति । मध्यमा तरुणी भवति । तरुणी चिरण्टी भवति । चिरण्टी गुर्विणी भवति । गुर्विणी जनित्री भवति । एवं स्वोत्तमाधीना विशेषावाप्तिरेव देवानां सृष्टिरुच्यते । तदेतदाह– स्थूलात्मनैवाजनीति । क्वचिच्च पूर्वरूपे सत्येव रूपान्तरेण व्यक्तिरपि जननमुच्यते । तदिदं भौममवतरणं नाम, अभिमानभेदेन रूपान्तरेण जननं वा । स स्थूलतनुर्विरिञ्चः तस्यां वाग्देव्याम् । बुद्धिं चोमाम् । तस्य शिवस्यार्धदेह एवार्धदेहो यस्याः ॥ १६ ॥ सात्विकराजसतामसाहङ्कारभेदेन त्रिरूपः । त्रयाणां रूपाणां पुनस्त्रिधा जननमन्यत्र पठ्यते–**'वैकारिको ब्रह्मजस्तु तैजसो वायुजः स्मृतः । तामसोऽनन्तजश्चैव स एको गुणभेदतः'** [भाग.ता. ११.२४.७] इति । सात्विकाहङ्कार एव वैकारिकाहङ्कार इत्युच्यते । तत्र सात्विकाहङ्कारमानी

**पुंसः प्रकृत्यां च पुनर्विरिञ्चाच्छिवोऽथ तस्मादखिलाः सुरेशाः ।**
**जाताः सशक्राः पुनरेव सूत्राच्छ्रद्धा सुतानाप सुरप्रवीरान् ॥ १८ ॥**

---

वैकारिकदेवसङ्घान् इन्द्रियाभिमानिदेवसङ्घान् मनश्च, ससर्जेति वर्तते । इन्द्रियाभिमानिनश्च–**'सोमवित्तपसूर्य्याप्पा अश्व्यग्नीन्द्रेन्द्रसूनवः । यमो दक्षश्चेन्द्रियेशाः–'** इत्युक्ताः । **'दिग्वातार्कप्रचेतोऽश्विवह्नीन्द्रोपेन्द्रमित्रकाः'** [भाग.२.६.३०] इत्युक्ताश्च । **'दिग्वायुसूनुसूर्याश्च वरुणश्चाश्विनावपि । वह्निदक्षाविन्द्रसूनुर्मित्रश्चैव मनुस्तथा'** [तं.सा.सं.३.१३४] इत्युक्ताश्च । तथाच दिश इत्युदिता मित्रयमवरुणकुबेराः सोमश्च श्रोत्रमानिनः । कुबेरश्च प्रवहश्च त्वङ्मानिनौ । सूर्यश्चक्षुषः । वरुणो रसनायाः । अश्विनौ घ्राणस्य । अग्निर्वाचः । इन्द्रो दक्षश्च हस्तयोः । उपेन्द्रेण भगवताधिष्ठिताविन्द्रसूनू शम्भुजयन्तौ पादयोः । मित्रश्च यमश्च पायोः । दक्षो मनुश्चोपस्थस्य देवते । स्कन्देन्द्रौ च मनसो देवते इति । राजसाहङ्कार एव तैजसाहङ्कार उच्यते । तन्मानी स शिवः दशेन्द्रियाणि ससर्ज । एवकारेण सात्विकाहङ्कारतामसाहङ्कारयोरिव नात्र देवसर्ग इत्याह । तैजसस्य इमानि तैजसानि । तैजसाहङ्कारजन्यानि । ततस्तामसाहङ्कारनामा शिवः खादीन् आकाशादीन् तन्मानिगणपत्यादीन् शब्दादिभिर्विषयैश्च सार्द्धं ससर्ज । अत्रोक्तक्रमेणैव । पुराणेष्वन्यथाऽपि कथ्यते । प्रथमं भूतसर्गः कथितो भागवते । तत इन्द्रियसर्गः । ततो देवसर्गः । तथाहि– **'भूतसर्गस्तृतीयस्तु तन्मात्रद्रव्यशक्तिमान् । चतुर्थ ऐन्द्रियः सर्गो यस्तु ज्ञानक्रियात्मकः । वैकारिको देवसर्गः पञ्चमो यन्मयं मनः'** [३.११.१५–१६] इति । तत्र न क्रमविवक्षेति ज्ञापयितुं क्रमेणेत्याह । **'एतस्माज्जायते प्राणो मनः सर्वेन्द्रियाणि च । खं वायुर्ज्योतिरापः पृथिवी विश्वस्य धारिणी'** [आथ.उ.२.१.३] इति श्रुत्युक्तक्रमेणेति चार्थः । **'नारायणात् प्राणो जायते मनः सर्वेन्द्रियाणि च । खं वायुर्ज्योतिरापः पृथिवी विश्वस्य धारिणी'** इति च नारायणश्रुतिः । त्रिरूपशिवगतान्नारायणादित्यर्थः । खादीनां पञ्चानामपि न युगपदुत्पत्तिः । किन्तु **'आकाशाद् वायुः । वायोरग्निः । अग्नेरापः । अद्भ्यः पृथिवी'** इत्युक्तक्रमेणेति चार्थः । आकाशमानी विनायकः । तेन **'आत्मन आकाशः सम्भूतः'** इत्यस्य शिवाद् विनायको जात इत्यर्थः । आकाशाद् वायुः । शिवाधिष्ठिताद् विनायकाद् भूतवायुमानी मरीचिः । प्रधानवायुतनयश्चायम् । ततोऽग्निः । भूताग्निमानी प्रधानवह्निपुत्रः पावकः । यद्यपि वह्निपुत्रः, अथापि मरीचिद्वारा शिवोऽपि तं ससर्ज । तदिदं पावकस्य रूपान्तरेण जननम् । ततः पावकादापः, अबभिमानी बुधः । ततः पृथिवीमानी शनिरिति । शब्दस्य बृहस्पतिः । शब्दादीनां पञ्चानां विषयाणां प्राणादयः पञ्च मानिनः । एते पञ्च वायुपुत्रा अपि, शिवपुत्रा अपि । विषयमानिरूपान्तरेण शिवाज्जननमित्यर्थः । **'अन्ये तु सूनवो वायो रुद्रस्यापि प्रकीर्तिताः'** [तं.सा.सं.३.१३५] इति चान्यत्र भगवत्पादवचनम् ॥ १७ ॥ पुनश्च पुरुषनाम्नो विरिञ्चात् प्रकृत्यां सरस्वत्यां शिवो बभूव । द्वितीया सृष्टिरियम् । शिवादखिलाः सशक्राः सुरेशाः । तत्वमानिनः सुराः सुरेशाः, तत्वानि नियन्तुमीशत इति । पुनः येन पूर्वं सुपर्णो जातस्तस्मादेव सूत्रनाम्नो वायोः श्रद्धा भारती शेषं शिवं इन्द्रं च सुतानाप सुरप्रवीरान् । विशिष्य तानितानि तत्वानीरयन्ति प्रेरयन्तीति सुरवीराः, तेषु प्रधानाः सुरप्रवीराः । उपसर्गयोः पूर्वापरीभावेन विशिष्टाः प्रेरका वा प्रवीराः । तृतीया सृष्टिरियम् । अस्यां स्थूलसृष्टौ इन्द्रतः सर्वे सुराः, यज्ञगणप्रक्रियाः, यज्ञमानिदेवगणाश्च जाताः । ते च सोमाधिकारिणः शतम् । तत्र इन्द्रादवरा इन्द्राज्जाताः । प्रधानवायुं विहायान्ये मरुतः(४९), शिवं विहायान्ये रुद्राः (१०), विष्णुमिन्द्रं च विहायान्य आदित्याः (१०), विश्वेदेवाः (१०), वसवः

**शेषं शिवं चेन्द्रमथेन्द्रतश्च सर्वे सुरा यज्ञगणाश्च जाताः ।**
**पुनश्च माया त्रिविधा बभूव सत्वादिरूपैरथ वासुदेवात् ॥ १९ ॥**

**सत्वात्मिकायां स बभूव तस्मात् स विष्णुनामैव निरन्तरोऽपि ।**
**रजस्तनौ चैव विरिञ्च आसीत् तमस्तनौ शर्व इति त्रयोऽस्मात् ॥ २० ॥**

**एते हि देवाः पुनरण्डसृष्टावशक्नुवन्तो हरिमेत्य तुष्टुवुः ।**
**त्वं नो जगच्चित्रविचित्रसर्गनिस्सीमशक्तिः कुरु सन्निकेतम्[1] ॥ २१ ॥**

**इति स्तुतस्तैः पुरुषोत्तमोऽसौ स विष्णुनामा श्रियमाप सृष्टये ।**
**सुषाव सैवाण्डमधोक्षजस्य शुष्मं हिरण्यात्मकम्बुमद्ध्ये ॥ २२ ॥**

**तस्मिन् प्रविष्टा हरिणैव सार्द्धं सर्वे सुरास्तस्य बभूव नाभेः ।**
**लोकात्मकं पद्ममसुष्य मद्ध्ये पुनर्विरिञ्चोऽजनि सद्गुणात्मा ॥ २३ ॥**

---

(८) बृहस्पतिः (१), पितृपतयः (३), अश्विनौ (१), ऋभवः (३), द्यावापृथिव्यौ चेति संहत्य सप्त च नवतिश्च । जयन्तश्चात्रोपसङ्गृह्यते । माया त्रिविधा बभूव । श्रीर्भूर्दुर्गेति । सत्वात्मिकायां श्रियाम् । वासुदेवात् तस्मादेव स एव बभूव विष्णुनामा । निरन्तरोऽपि निर्भेदोऽपि लीलया । वासुदेवादपि निरन्तरः, विरिञ्चशर्वगतरूपाभ्यामपि निरन्तरः । रजस्तनौ रजोमानिन्यां भूदेव्यां विरिञ्चान्तर्यामी विरिञ्चनामाऽऽसीत् । तमोमानिन्यां दुर्गायां शर्वान्तर्यामी शर्वनामाऽऽसीत् । शर्वति जगत् संहरतीति शर्वः । शर्व हिंसायाम् । असतां शंरोधनाद्वा । इति स्थितिसृष्टिसंहारनिर्वाहाय त्रयोऽवतारा अस्माद् वासुदेवाद् बभूवुरिति निगमयति । **'ब्रह्मणि ब्रह्मरूपोऽसौ शिवरूपी शिवे स्थितः । स्वयं हि भगवान् विष्णुः पालयत्यखिलं जगत्'** इति शेषधर्मे [३५.४२] । **'सृजामि तन्नियुक्तोऽहं हरो हरति तद्वशः । विश्वं पुरुषरूपेण परिपाति त्रिशक्तियुक्'** [२.६.३१] इति भागवते ॥ १८–२० ॥ जगतः चित्रेऽद्भुते विचित्रे नानाविधे च सर्गे निःसीमशक्तिः । समीचीनं निकेतं निलयम् ॥ २१ ॥ योऽसौ विष्णुनामा श्रियो जातः पुरुषोत्तम उक्तः स एव रूपान्तरेण भार्यात्वेनाऽगतां श्रियमाप । अधोक्षजस्य शुष्मं वीर्यम्, भगवत्तेजसाऽऽहितसामर्थ्यम् । **'शुष्मं तेजसि'** इत्यभिधानम् । अण्डं सुषाव हिरण्यात्मकं हिरण्यवद् भासमानम् । **'धर्मः स्वभाव आत्मा स्यात्'** इति हलायुधः । **'अप एव ससर्जाऽदौ तासु वीर्यमवासृजत् । तदण्डमभवद् हैमम्–'** इति हि स्मरन्ति । एवं तस्य शक्तिरनुभूयते । अथापि न स शक्तिमान् दृश्यत इत्यधोक्षजस्येत्याह । अधःकृतमक्षजं येन । जनिमता ज्ञातेन जनिताऽनुमातव्य इत्यर्थः । **'जन्माद्यस्य यतः'** [ब्र.सू.१.१.२] इति ह्युक्तम् ॥ २२ ॥ उक्तः सर्गः । अथ तारतम्यज्ञापनीमण्डान्तःसृष्टिमाह दशभिः । अयमेवानुसर्ग

---

१. **'सन्निकेतनम्'**

**तस्मात् पुनः सर्वसुराः प्रसूतास्ते जानमाना अपि निर्ण्णयाय ।**
**निस्सृत्य कायादुत पद्मयोनेः सम्प्राविशन् क्रमशो मारुतान्ताः ॥ २४ ॥**

**पपात वायोर्ग्गमनाच्छरीरं तस्यैव चाऽवेशत उत्थितं पुनः ।**
**तस्मात् स एको विबुधप्रधान इत्याश्रिता देवगणास्तमेव ॥ २५ ॥**

---

उच्यते । अण्डमन्वयं हि सर्गः । सूक्ष्मतया सृष्टानामेव देवानामयं स्थूलात्मना पुनःसर्ग इति चानुसर्गः । भगवत्-सर्गमनु ब्रह्माण्डे ब्रह्मादिभिः क्रियमाणः सर्ग इति च । पद्मजत्वेन ब्रह्माण्डमानित्वेन पुनश्चतुर्थवारं विरिञ्चोऽजनि रजसा जातोऽपि सद्गुणात्मा ॥ २३ ॥ सर्वसुराः पुनस्तारतम्यक्रमेण प्रसूताः । स्वयं जननक्रमेण तारतम्यं जानमाना अप्यजानतामपि लोकानां निर्णयाय । एतदप्याह–जानमाना इति । जनानां समुदायो जानम् । तस्य मानं ज्ञानं यैस्ते जानमानाः । ग्रथयिष्यति हि तामेतां कथां व्यासरूपेण । जानाना अपि स्वगतज्ञानदार्ढ्याय च । ननु जानाना इति वक्तव्यम् । सत्यम्, जानाना इति वक्तव्यम् । अथापि जानमाना इत्याह । तेनाधिकाक्षरप्रयोगेणेदमाह–आजानास्ते ज्ञानिनः, अधिकज्ञानिनश्चेति । आजानमौत्पत्तिकं मानमेषामित्याजानमानाः सन्तश्च जानमाना उच्यन्त आद्याक्षरलोपेन । अर्थान्तर-निर्वाहश्च पूर्वोक्तोऽनेन भवतीति महानर्थलाभः । एवमनेकार्थलाभायाक्षराणि योजयन्ति च वियोजयन्ति च महान्तः । **'अजानमानाऽथ निशाचरी हरिम्'** [भाग.१०.७.९] इति भागवते । एवं कामयमानं कामयानमाचक्षते । जानानं जानमानमाचक्षते ॥ २४ ॥ वायोर्गमनादेव पपात । नान्येषां गमनात् । तस्यैव आवेशतः प्रवेशत उत्थितं च । नान्येषां प्रवेशतः । **'अस्मासु देवमधिकं नैव विद्मः कथञ्चन । त्वमेव निर्णयं ब्रूहि देवाः संशयिनः खलु । इति पृष्टोऽमरैः सर्वैः प्रहसन्निदमब्रवीत् । देहादस्माच्च वैराजाद् यस्मिन्निष्क्रामति ह्ययम् । पतिष्यति प्रविष्टे तु यस्मिन् वा उत्थितो भवेत् । स देवो ह्यधिको नूनं नापरस्तु कथञ्चन । इत्युक्तास्ते ततः सर्वे तथाऽस्त्विति वचोऽब्रुवन् । निश्चक्राम जयन्ताह्वः पादात् पूर्वं सुरेश्वरः । तदा पङ्गुममुं प्राहुर्न देहः पतितस्तदा । शृण्वन् पिबन् वदन् जिघ्रन् पश्यन्नास्ते चलन्नपि । पश्चाद् गुह्याद् विनिष्क्रान्तो दक्षो नाम प्रजापतिः । तदा षण्ढममुं प्राहुर्न देहः पतितस्तदा । शृण्वन् वदन् पिबन् जिघ्रन् पश्यन्नास्ते चलन्नपि । पश्चाद्धस्ताद् विनिष्क्रान्त इन्द्रः सर्वामरेश्वरः । हस्तहीनममुं प्राहुर्न देहः पतितस्तदा । शृण्वन् पिबन् वदन् जिघ्रन् पश्यन्नास्ते चलन्नपि । लोचनाभ्यां विनिष्क्रान्तः सूर्यस्तेजस्विनां वरः । तदा काणममुं प्राहुर्न देहः पतितस्तदा । शृण्वन् पिबन् वदन् नैव पश्यन्नास्ते चलन्नपि । घ्राणात् पश्चाद् विनिष्क्रान्तौ नासत्यौ विश्वभेषजौ । अजिघ्राणममुं प्राहुर्न देहः पतितस्तदा । शृण्वन् पिबन् वदन् नैव जिघ्रन्नास्ते चलन्नपि । श्रोत्राद् दिशो विनिष्क्रान्ता न देहः पतितस्तदा । तदाऽमुं बधिरं प्राहुर्न देहः पतितस्तदा । पिबन् वदन् तथा जिघ्रन्नशृण्वन् प्रचलन्नपि । वरुणो रसनायास्तु विनिष्क्रान्तस्ततः परम् । तदाऽरसज्ञमेवाहुर्न देहः पतितस्तदा । जीवंश्चलन्वदन्नास्ते तथा जानन् श्वसन्नपि । ततो वाचो विनिष्क्रान्तो वह्निर्वागीश्वरो विभुः । तदा मूकममुं प्राहुर्न देहः पतितस्तदा । जीवंश्चलन्वदन्नास्ते तथा जानन् श्वसन्नपि । पश्चाद् रुद्रो विनिष्क्रान्तो मनसो बोधनात्मकः । तदा जडममुं प्राहुर्न देहः पतितस्तदा । जीवंश्चलन्वदन्नास्ते तथाऽजानन् श्वसन्नपि । पश्चात् प्राणो विनिष्क्रान्तो मृतमेनं**

**हरेर्विरिञ्चस्य च मद्ध्यसंस्थितेस्तदन्यदेवाधिपतिः स मारुतः ।**
**ततो विरिञ्चो भुवनानि सप्त ससप्तकान्याशु चकार सोऽब्जात् ॥ २६ ॥**

**तस्माच्च देवा ऋषयः पुनश्च वैकारिकाद्याः सशिवा बभूवुः ।**
**अग्रे शिवोऽहम्भव एव बुद्धेरुमा मनोजौ सह शक्रकामौ ॥ २७ ॥**

---

**तदा विदुः । पुनरेवं तदा प्राहुर्देवा विस्मितमानसाः । देहमुत्थापयेद् यस्तु पुनरेवं व्यवस्थितः । स एव ह्यधिकोऽस्मासु युवराजो भविष्यति । इत्येवं तु प्रतिश्रुत्य विविशुश्च यथाक्रमम् । जयन्तः प्राविशत् पादौ नोत्तस्थौ तत् कळेबरम् । इन्द्रो हस्तौ विवेशाथ नोत्तस्थौ तत् कळेबरम् । चक्षुः सूर्यः प्रविष्टोऽभून्नोत्तस्थौ तत् कळेबरम् । दिशः श्रोत्रे प्रविविशुर्नोत्तस्थौ तत् कळेबरम् । वरुणः प्राविशज्जिह्वां नोत्तस्थौ तत् कळेबरम् । नासां विविशतुर्दस्रौ नोत्तस्थौ तत् कळेबरम् । वह्निश्च प्राविशद् वक्त्रं नोत्तस्थौ तत् कळेबरम् । मनश्च प्राविशद् रुद्रो नोत्तस्थौ तत् कळेबरम् । पश्चात् प्राणो विवेशासौ तदोत्तस्थौ कळेबरम् । तदा देवा विनिश्चित्य प्राणं देवाधिकं विभुम् । बले ज्ञाने च धैर्ये च वैराग्ये प्राणनेऽपि च । तदाऽभिषेचयाश्चक्रुर्यौवराज्ये महाप्रभुम्'** [वै.खं. वैशा.मा.१९.३४–५७] इति स्कान्दे । **'तस्मात् प्राणः सर्वजीवाधिकोऽभूद् बलाधिकः सर्वजीवान्तरात्मा । प्राणात् कोऽपि ह्यधिको वा समो वा शास्त्रे दृष्टः श्रुतपूर्वो नचाऽस्ते'** [६१] **'शेषाहिशिवशक्राद्याश्चेतनाश्च जडा अपि । वासुदेवादृते कोऽपि नैनं परिभविष्यति । सर्वदेवात्मकः प्राणः सर्वदेवमयो विभुः । वासुदेवानुगो नित्यं तथा विष्णुवशः स्थितः । वासुदेवप्रतीपं तु न शृणोति न पश्यति । देवाः प्रतीपं कुर्वन्ति रुद्रेन्द्राद्याः सुरेश्वराः । प्रतीपं क्वापि कुरुते न प्राणः सर्वगोचरः । तस्मात् प्राणं महाविष्णोर्बलमाहुर्मनीषिणः'** [६३–६६] इति च । बहुधा च गीतमेतदुपनिषत्सु च ॥ २५ ॥ हरेर्विरिञ्चस्य च मध्यसंस्थितेः । मध्यं माध्यस्थ्यं संश्रित्य स्थितिः, उभयोर्विवादकोट्योर्मध्ये समीक्षकतया ताटस्थ्येन वा स्थितिर्मध्यसंस्थितिस्तस्याः । तटस्थत्वादिति यावत् । 'सर्वसुराः प्रसूताः' इत्युक्तमनुसर्गं विवृणोति–तत इत्यादिना । ततः तदनन्तरम्, ततः यत्र विरिञ्चोऽजनि तस्माल्लोकात्मकात् अब्जात् अब्जं द्वारीकृत्य । सप्त भूरादीनि । ससप्तकानि अतळवितळादिनाऽधोभुवनसप्तकेन सहितानि । आशु अनायासेन ससर्ज । अथच विरिञ्चगतो विरिञ्चनामा नारायणः अब्जात् । **'अद्भ्यः सम्भूतो हिरण्यगर्भः'** इति श्रुतेरब्जं हिरण्यगर्भं द्वारीकृत्य, नाभिकमलादेव, आशु, ब्रह्मवाय्वादीनां सृष्टौ यथा मध्ये विलम्बस्तथा कालविलम्बमकृत्वा, अथ च आशु समन्तात् सुखयुक्तं यथा स्यात् तथा लीलया ससर्ज । आनन्दमयी हि तस्य सृष्टिः । ततः सर्वगतो वा नारायणः । विरिञ्चगतेन रूपविशेषेण ससर्ज । पुनः सृष्टेषु पदार्थेषु ततो बभूव । **'तथ् सृष्ट्वा तदेवानुप्राविशत्'** इति श्रुतेः ॥ २६ ॥ वैकारिका वैकारिकाहङ्कारभवास्तत्वाभिमानिन इन्द्राद्याः । मनो बुद्धिरहङ्कार इत्यन्तःकरणत्रयम् । तत्र ब्रह्मणोऽहङ्कारभवः शिवः । अहं भवत्यनेनेति च । बुद्धिजा तूमा । ततो मनोजौ शक्रकामावष्टमकक्ष्यागतौ । एतेनैतदपि सूचितम्– यद्यपि विद्वत्प्रसिद्ध्या शक्रकामावुभावपि मनोजौ । अथाप्यज्ञप्रसिद्ध्या काम एव मनोज इति प्रथितो बभूवेति । अज्ञानां मनस्येव चायं विशेषतो जायते वर्द्धते च ॥ २७ ॥

**गुरुर्म्मनुर्दक्ष उतानिरुद्धः सहैव पश्चान्मनसः[1] प्रसूताः ।**
**चक्षुःश्रुतिभ्यां स्पर्शात्[2] सहैव रविः शशी धर्म्म इमे प्रसूताः ॥ २८ ॥**

**[3]जिह्वाँभवो वारिपतिर्न्नसोश्च नासत्यदस्रौ क्रमशः प्रसूताः ।**
**ततः सनाद्याश्च मरीचिमुख्या देवाश्च सर्वे क्रमशः प्रसूताः ॥ २९ ॥**

ततो गुरुः स्वायम्भुवमनुर्दक्षोऽनिरुद्धश्च । उपलक्षणमेतत् । शक्रकामयोः पत्न्यौ शचीरती च सहैव पश्चान्मनसः प्रसूताः । तस्माच्छक्रकामयोरनन्तरमेते सर्वेऽपि मनोभिमानिनो दशमकक्ष्यागताः । वक्ष्यति हि– **'बृहस्पतिः सहैव शच्या मनसोऽभिजातः'** इति । चक्षुर्मानी रविः । श्रवणमानी शशी । स्पर्शमानी धर्मः यमापरनामधेयः । एते क्रमेण विरिञ्चिचक्षुःश्रुतिभ्यां स्पर्शेन्द्रियाच्च जाताः । त एते द्वादशकक्ष्यागताः समाना इति सहैव प्रसूताः । चक्षुःश्रुतिभ्यामपि स्पर्शे सन्निकर्षाधिक्यादानन्दाधिक्यं विशेषेणानुभवति । दूरतः शृणोति । सन्निकृष्टं पश्यति । सन्निकृष्टतमं स्पृशति तमेतमानन्दमनुभावयन्निव विश्लिष्य प्रयुयोज– **'स्पर्‌शात्'** इति । क्षैप्रसन्धिषु प्रचुरोऽयं वैदिकः पन्थाः । तद् यथा– त्र्यम्बकमिति लिखन्ति । त्रियम्बकमिति पठन्ति । वरेण्यमिति लिखन्ति । वरेणियमिति पठन्ति । **'सहस्रशीर्षं देवम्'** इति लिखन्ति । **'सहस्रशीरुषं देवम्'** इति पठन्ति । पिङ्गलनागोऽप्याह– **'क्षैप्रसंयोगान् व्यूहेत'** इति । एवमुत्तरत्रापि ॥ २८ ॥ ततस्त्रयोदशकक्ष्यागतो जिह्वामानी वरुणः । ततो नासामानिनौ अष्टादशकक्ष्यागतौ नासत्यदस्राविति पञ्च-ज्ञानेन्द्रियमानिनः कथिताः । नासिकाशब्दस्य शस्प्रभृतिप्रत्ययेषु 'नस्' आदेशे [अ.सू.६.१.६३] नासिकाया नासिक-योर्नासिकानामित्येतेषां स्थाने 'नसः नसोः नसाम्' इति रूपाणि । नसोः सकाशात् नसोर्मानिनौ । अश्विनोरेको नासत्यः, अपरो दस्रः । नासत्यश्च दस्रश्च नासत्यदस्रौ । वस्तुतस्त्वनयोरेकनामत्वादुभावपि नासत्यौ । उभावपि दस्रौ । तथाच नासत्यौ च तौ दस्रौ च नासत्यदस्रौ । नासायां गतौ हि नासत्यौ । सहैव नासायां भवतः । वैयाकरणास्तु यत्किमपि निर्वदन्ति शब्दसाधुत्वमात्रभराः– **'न सत्यं ययोस्तावसत्यौ, न असत्यौ नासत्यौ'** इति । एवं दासित्वा, दासृ दाने, आरोग्यं दत्वा, दसित्वा, दसु उपक्षये, रोगं विनाश्य वा रमयत इति दस्रौ । स्वर्वैद्यौ हि तौ । **'दस्यतेरुपक्षयार्थस्य रक्प्रत्ययः'** इति वैयाकरणाः । वरुणानन्तरं नारदः, ततो भृगुः प्रधानाग्निः प्रसूतिश्च, ततो विश्वामित्रः सप्तर्षयः वैवस्वतमनुश्च, ततो मित्रो निरृतिः प्रावही च, ततः पश्चान्नासत्यदस्राविति सूचयितुं क्रमश इत्याह । सनाद्यास्त्रयः । सनकः सनन्दनः सनातन इति । सनत्कुमारस्येन्द्रेण सह गतत्वात् । मरीचिः भूतमानी मरुत् । **'मरीचिर्मरुतामस्मि'** इति हि गीतायाम् । मरीचिमुख्या देवा एकान्नविंशकक्ष्यागताः । ननु कोऽयं मरीचिर्मरीचिरिति, अश्रुतपूर्वनामा? केचिदेवं व्याचक्षते– **'मरीच्याद्याः सूर्यरश्मिसंस्था वसुपुत्राः'** इति । स्वोक्तार्थे च च्छन्दोगोपनिषद्भाष्यगतमुदाहरन्ति सामसंहितावचनम्-

१. **'सहैव शच्या मनसः'**

२. **'स्पर्‌शात्'** इति विश्लिष्य पठनीयम् ।

३. हस्तलिखितादर्शेषु **'जिंह्वा'** इति लिख्यते । यत्र क्षैप्रा यरलवा अनुनासिकतयोच्चार्यन्ते तत्र तत्सूचनायानुस्वारः प्रतनैर्लिख्यते, द्विधा हि क्षैप्रा भवन्ति– य र ल व इति; यँ रँ लँ वँ इति । तद्वदत्रापि वकारस्यानुनासिकत्वम्– **'जिह्वाँ'** इति ।

**'तत्पुत्रास्तु मरीच्याद्याः सूर्यरश्मिषु संस्थिताः'** [३.१.१] इति। भगवान् भ्रमोऽयम्। अनधिगतप्रमाणवचनार्था अप्यहो व्यर्थं व्याचक्षते। नहि प्रमाणवचने तत्पुत्रा इति वसुपुत्रा उच्यन्ते। तर्हि यत्पुत्रा उच्यन्ते? शृणु, यद्यस्ति यथार्थजिज्ञासा– तत्पुत्रा इति तस्य वायोः पुत्राः। ननु कथं निरणैष्टाः, तत्पुत्रा इति तस्य वायोः पुत्रा इति? नैवमवदिष्यः, यदि प्रमाणवचनमादितः स्वयमवहितोऽपठिष्यः। तथाहि शृणु पूर्ववचनम्–**'–मध्वपूपस्तु मारुतः। तस्मिन् सन्निहितो विष्णुर्विशेषेण यतः सदा। सोऽन्तरिक्षमिति प्रोक्तः स्वान्तः सम्यग्घरीक्षणात्। अन्तरिक्षस्थितश्चासौ वस्वाद्या मधुकारिणः। तत्पुत्रास्तु मरीच्याद्याः–'** इति। **'अन्तरिक्षमपूपो मरीचयः पुत्राः'** [छ.उ.३.१.१] इत्युपनिषद्वचनस्य किलेदं व्याख्यानम्। तथाच **'वस्वाद्या मधुकारिणः'** इति मध्यगतं वाक्यं पृथगन्वेति। **'एवं त्वयि, नान्यथेतोऽस्ति, न कर्म लिप्यते नरे' इतिवत्।** तथाच यो मध्वपूपः, यश्चान्तरिक्षमिति प्रोक्तः, तस्य मारुतस्य पुत्रा मरीच्याद्या इत्येव प्रमाणवचनार्थः। गीतातात्पर्योदाहृते प्रमाणवचने स्फुटमेतत्**–'प्रधानवायुजो भूतवायुर्नाम्ना मरीचिकः'**[१३.२७] इति। अथापि नान्ततः शङ्कानिस्तारः। यत् केचिदाचक्षते–**'मरीचिरिति न देवतान्तरम्। किन्तु प्रवह एव मरीचिरुच्यते'** इति। अभियुक्तवचनं चात्र संवादयन्ति–**'मरीचिनामान्तरवान् प्रवहो मुख्यवायुजः। कोणाधिपः स एवोक्त आतिवाहिकनामवान्' इति।** अयुक्तमिदमभियुक्तवचनं भाति। तथाहि षट्प्रश्नभाष्ये तत्वविवेकवचनम्**–** [६.४]– **'आकाशदेवता विघ्नस्ततो वायोः सुतो मरुत्'** इति। बहवो भवन्ति वायोः सुता मरुतः। तत्र कोऽयं वायोः सुत इति शङ्काऽवशिष्यते। तामेतां शङ्कां गीतातात्पर्यगं वचनं परिहरति–**'प्रधानवायुजो भूतवायुर्नाम्ना मरीचिकः'** इति। तेन मरीचिः प्रवह इत्यनर्थान्तरमित्यभियुक्तवचनं गर्भस्रावेण गतम्। प्रवहो हि विघ्नेशादुत्तमः। मरीचिस्तु ततोऽवरस्ततो जात इति। एवं स्थिते किमिति प्रज्ञावादान् भाषन्ते–**'मरीचिनामान्तरवान् प्रवहः'** इति। ननु भोः, मा नाम गर्वीः, अभियुक्तानपि व्यजेषीति। यदि मरीचिर्न प्रवहः, तर्हि एकोनपञ्चाशति मरुद्गणे कोऽयमिति ननु भवताऽपि भणितव्यं भवति। न भणितव्यम्। चतुर्ष्वर्थेषु हि मरुच्छब्दः श्रूयते– मरुदिति मुख्यप्राणः। मरुत इति सर्वे देवाः। मरुत इति एकोनपञ्चाशद्गणपठिता मा रुदतेति मघवता सान्त्विता इति मरुत्पदगदिताः। मरुत इति म्रियन्ते यदभावादिति व्युत्पत्त्या मरुत्पदगदिता मरीच्याद्याश्चेति। तेन नायं मरीचिर्मरुद्गणप्रविष्टः। भवतु नायं मरीचिर्मरुद्गणप्रविष्ट इति। अथापि मरीच्याद्या नैके पठ्यन्ते। केके च ते? कति च ते? शास्त्रेषु न स्फुटं क्वापि। अथापि बृहद्भाष्यपठिताश्चक्रगन्धर्वान्तरिक्षा मरीच्याद्याः स्युः। तथाहि बृहद्भाष्ये ब्रह्माण्डवचनम् [५.६]– **'आ पिबन्त्यखिलान् भोगानित्यापश्चक्रवर्तिनः। मुक्तास्तेषां वायुसुतश्चक्रो नाम व्यपाश्रयः। मुक्तस्तस्य च मुक्तस्तु मरुद् गन्धर्वनामवान्। सुतो वायोस्तत्सुखानां मौक्ताना-मन्तरिक्षगाः। मरुतामेक एवासावन्तरिक्षश्च वायुजः' इति।** अन्तरिक्षनामा च मरुदयमन्तरिक्षमानी चेति गम्यते। **'अन्तरिक्षाभिमानी तु तत्सूनुरुदरे स्थितः'** [बृ.उ.भा.३.१.१] इति ब्रह्मतर्कवचनात्। तत्सूनुरिति पूर्वप्रस्तुतनभोभि-मानिविघ्नेशसूनुरित्यर्थः। तथाच प्रथमं मुख्यवायुसूनुस्ततो विघ्नेशसूनुर्बभूवेत्यर्थः। नन्वङ्ग चतुरोऽसि, सर्वं प्रमाणजातं समनुगमय्य विरोधं पर्यहरः। इदमिदानीं वग्धि, यदि मरीच्याद्या न मरुद्गणान्तर्गताः, तर्हि तान् कस्यां कक्ष्यायां पठसि? अष्टादश्यां कक्ष्यायां पठिताद् विघ्नेशादवरत्वकथनात् स्फुटमेकान्नविंश्यां कक्ष्यायाम्। नन्विदानीं पराजितोऽसि। ऐतरेय-भाष्यविरोधात्। तथाहि भाष्यवचनम्–**'भगवतः पक्षस्तु समत्वमेव वाय्वाकाशयोरिति'** [मैहै.उ.भा.२.७.४] इति।

तेन भूतवायुमानी मरीचिरप्याकाशमानिना विनायकेन साकमष्टादश्यामेव कक्ष्यायां पठनीयः, नैकोनविंश्यामिति । सत्यम्, मुखतस्तथा प्रतीयते । मुखतो वचनमात्रेण निर्वृतो भवान् नान्तरङ्गं भावं पर्यग्रहीष्ट । तत्र ह्युपासनायां साम्यमुच्यते । न स्वरूपसाम्यम् । तथाह्युत्तरभाष्यम्–**'आकाशस्य पितृत्वात्, वायोर्बलाधिकत्वाच्च, उभयोरुपासनास्थानत्वे साम्यम् । तस्मादुभावपि ग्राह्यौ । त्वगिन्द्रियदेवतात्वेनाऽकाशात् पूर्वमेव वायोः सात्विकाहङ्कारजत्वाद् वायोराकाशाद् गुणाधिक्यम् । तथाऽप्यत्राऽकाशस्य पितृत्वं व्याप्तिश्चाधिकेत्युपासनायां साम्यम्'** इति । एतेन भूतवायुमानिनो मरीचेस्त्रेधा जननमुक्तं भवति– प्रथमं प्रधानवायुना, ततः सात्विकाहङ्कारमानिना शिवेन, अन्ते चाऽकाशमानिना विनायकेनेति । यद्यपि प्रवहोऽपि भूतमानी । तथाऽपि षट्प्रश्नभाष्यानुसारेण तारतम्यानुगुणा भूतवायुमानिता मरीचेरेवेति तस्य मुख्यत्वम् । मधुविद्याङ्गत्वाच्च । तदेतदुक्तं गीतायाम्– **'मरीचिर्मरुतामस्मि'** इति । अतः साधूक्तं भगवत्पादेन– **'मरीचिमुख्या देवाश्च'** इति । एतेनैतदपि सूचितम्– एकोनविंश्यां कक्ष्यायां पठितोऽपि मरीचिः, येये तत्कक्ष्यापठिताः तेभ्यः सर्वेभ्यः किञ्चिदुत्तमतया मुख्यश्चेति । मरीचिमुख्याः सप्तर्षयोऽपि भवन्ति । अत आह–मरीचिमुख्या देवाश्चेति । तदुपरितनाः पर्जन्यादयश्च देवा गङ्गाद्याश्च देव्यः ॥ २९ ॥

तथाचायमिह सृष्टिक्रमसङ्ग्रहः–

## नारायणात् सृष्टिः

१. वासुदेवः+माया= जीवमानी कालमानी पुरुषाख्यो विरिञ्चः ।

२. सङ्कर्षणः+जया= ,, ,, सूत्रनामा वायुः ।

३. प्रद्युम्नः+कृतिः= १. प्रकृतिमानिनी सरस्वती । २. जीवश्रद्धामानिनी भारती ।

४. अनिरुद्धः+शान्तिः= १. महत्तत्वमानी चित्तमानी स्थूलात्मा विरिञ्चः । २. वाङ्मयमानिनी सरस्वती ।

५. वासुदेवः+सत्वमानिनी माया (श्रीः) = विष्णुः स्थितिहेतुः ।

,, + रजो ,, ,, (भूः) = ब्रह्मगतो ब्रह्मनामा नारायणः स्रष्टा ।

,, + तमो ,, ,, (दुर्गा)= शर्वगतः शर्वनामा नारायणः संहर्ता ।

६. विष्णुः+श्रीः= नाभिकमलसम्भवो जगत्स्रष्टा विरिञ्चः ।

## चतुर्मुखात् सृष्टिः

१. जीवमानी कालमानी विरिञ्चः + प्रकृतिमानिनी सरस्वती = जीवमानी शेषः (वारुणी च) ।

२. महन्मानी चित्तमानी ,, + वाङ्मयमानिनी ,, = १. अहङ्कारमानी रुद्रः । २. बुद्धिमानिन्युमा ।

३. जीवमानी कालमानी ,, + प्रकृतिमानिनी ,, = १. स्थूलतनुः शिवः (उमा च) ।

४. नाभिपद्मजो विरिञ्चः+(सरस्वती)= १. अण्डाद् बहिः सर्वसुराः । २. अण्डान्तः शिवाद्याः सर्वसुराः ।

**ततोऽसुराद्या ऋषयो मनुष्या जगद् विचित्रं च विरिञ्चतोऽभूत् ।**
**उक्तक्रमात् पूर्वभवस्तु[1] योयः श्रेष्ठः सस ह्यासुरकानृते च ॥ ३० ॥**

---

**वायोः सृष्टिः**

१. जीवकालमानी वायुः+जीवश्रद्धामानिनी भारती= १. कालमानी गरुडः । २. विष्वक्सेनः । ३. जीवमानी शेषः, कालमानी शिवः, मनोमानी इन्द्रः ।

**गरुडात् सृष्टिः**

१. कालमानी गरुडः+(सुपर्णी)= काला नाम विष्णुपार्षदाश्चत्वारः ।

**शेषात् सृष्टिः**

१. जीवमानी शेषः+(वारुणी)= जीवहृदयद्वारपाला वैकुण्ठबाह्यद्वारपालाश्च जयविजयाद्या अष्टौ ।

**शिवात् सृष्टिः**

१. चित्तमानिविरिञ्चजातः सात्विकाहङ्कारमानी शिवः+(सात्विकबुद्धिमानिन्युमा) = १. मनः ।
२. इन्द्रियमानिनो दोवाः ।

२. राजसाहंकारमानी शिवः+(राजसबुद्धिमानिन्युमा)= दशेन्द्रियाणि ।

३. तामसाहङ्कार '' +(तामस '' '' ) = १. पञ्चतन्मात्राः । २. पञ्चभूतानि । ३. तदभिमानिदेवाः ।

४. जीवमानिविरिञ्चजातः शिवः+ (उमा)= सर्वे देवाः ।

**इन्द्रात् सृष्टिः**

१. इन्द्रः+शची= ततोऽवरा यज्ञमानिनः सर्वे सुराः ।

ततोऽदितिकाश्यपाभ्यां पुनर्देवतासृष्टिः । तत उत्तरं कामात् सर्वसृष्टिरिति क्रमः ॥ ✲ ॥

अथ तारतम्यक्रमरहितामदेवसृष्टिमाह– ततोऽसुराद्याः । ततो देवसृष्टयनन्तरम् । गन्धर्वाः पितरश्च देवपदेनोक्ताः । असुरा इति दैत्या दानवाश्च । आदिपदेन तत्परिवारभूताः, क्वचिद् देवानामपि परिवारभूता राक्षसाश्च पिशाचाश्च । परस्पर-विरुद्धानां सुराणामसुराणां च सृष्टिरुक्ता । ऋषयः सात्विकाः । मनुष्याः सात्विकादिभेदेन त्रिविधाः । जगद्विचित्रमिति तिर्यञ्चश्च स्थावराश्च । तत्र हि सृष्टिवैचित्र्यमनुभूयते । सात्विकेषु देवादिषूक्तं क्रममनुसृत्य । असात्विक्यां सृष्टौ नायं क्रम इत्याह– आसुरकानृते च । आसुरा अदैवस्वभावाः । अत एव आसुरकानिति कुत्सयामास । **'द्वौ भूतसर्गौ लोकेऽस्मिन् दैव आसुर एव च'** [भ.गी.१६.६] इति भगवद्वचनम् ॥ ३० ॥

---

१. **'–भवश्च'**

**पूर्वस्तु[1] पश्चात् पुनरेव जातो नाश्रेष्ठतामेति कथञ्चिदस्य ।**
**गुणास्तु कालात् पितृमातृदोषात् स्वकर्म्मतो वाऽभिभवं प्रयान्ति ॥ ३१ ॥**

**लयो भवेद् व्युत्क्रमतो हि तेषां ततो हरिः प्रळये[2] श्रीसहायः ।**
**शेते निजानन्दममन्दसान्द्रसन्दोहमेकोऽनुभवन्ननन्तः ॥ ३२ ॥**

**अनन्तशीर्षास्यकरोरुपादः सोऽनन्तमूर्त्तिः स्वगुणाननन्तान् ।**
**अनन्तशक्तिः परिपूर्ण्णभोगो भुञ्जन्नजस्रं निजरूप आस्ते ॥ ३३ ॥**

**एवं पुनः सृजते सर्वमेतदनाद्यनन्तो हि जगत्प्रवाहः ।**
**नित्याश्च[3] जीवाः प्रकृतिश्च नित्या कालश्च नित्यः किमु देवदेवः ॥ ३४ ॥**

**यथा समुद्रात् सरितः प्रजाताः पुनस्तमेव प्रविशन्ति शश्वत् ।**
**एवं हरेर्न्नित्यजगत्प्रवाहस्तमेव चासौ प्रविशत्यजस्रम् ॥ ३५ ॥**

---

अस्य स्वरूपतः श्रेष्ठस्यापि पुनःसृष्टौ पश्चाज्जातस्य, गुणास्तु, केवलं गुणा एव, तिरोहिता भवन्ति । नाश्रेष्ठस्य पूर्वजननेन स्वरूपसामर्थ्यस्य वृद्धिः । नापि श्रेष्ठस्य पश्चाज्जननेन ह्रासो वेति । कालात् कल्यादिप्रभावात्, योनिदोषात्, प्रारब्धकर्मणश्च । तामस्या राजस्या योनेर्जातानां तामसा राजसाश्च भावा आवृणते ॥ ३१ ॥ उक्तौ सर्गानुसर्गौ । अथ लयप्रकारमाह– लय इत्यादिना षड्भिः । आदौ जातस्यान्ते लय इति व्युत्क्रमेण, सृष्टौ यः क्रमस्तमुदस्य ततो विपरीतेन क्रमेण । श्रीसहायः । अथाप्येकः । अमन्दः पूर्णः, सोऽपि न क्रमिकः, किन्तु सान्द्रो निरन्तरः, अत एव एकक्षणे सर्वेषामानन्दानां सन्दोहो यत्र तादृशं स्वरूपानन्दमनुभवन् । अमन्दः सान्द्रः सर्वगुणसन्दोहश्चायं निजानन्द इति विशेषणसमासो वा । प्रळय इति रेफोत्तरस्य लस्य ळः । **'राल्लो ळः समानपदे'** इत्यपि पठनीयम् ॥ ३२ ॥ सर्वेऽपि मुक्ताः स्वयोग्यतानुगुणं पूर्णभोगा एव । अतः परिपूर्णभोग इत्याह । निरपेक्षं पूर्णं परिपूर्णम् । यतोऽधिकं पूर्णं नान्यदस्ति । अनन्तमित्येतत् । लोकावनं तस्याऽनन्दरूपमिति भुञ्जन्नित्याह । भुञ्जानः । निजरूपे स्वे महिम्नि आस्ते ॥ ३३ ॥ सृजते । स्वेच्छामात्रनियता सृष्टिरित्यात्मनेभाषयाऽऽह । मूलप्रकृतिश्च नित्या । जीवानां स्वभावाख्या प्रकृतिश्च नित्या । कालश्च, आकाशश्च नित्यः । तद्गता वर्णाश्च वेदाश्च ॥ ३४ ॥ यथा समुद्रात् पर्जन्यं गता आपः पुनर्भूमौ वृष्टाः सरितो भवन्ति । पुनश्च समुद्रमेवापियन्ति । शश्वत् पुनःपुनः । **'वारंवारं शश्वदर्थे वारंवारेण चेष्यते'** इत्यभिधानम् । शश्वत् निरन्तरं वा । हरेः प्रजातः नित्यजगत्प्रवाहः । नित्यं हरेः प्रजातः जगत्प्रवाहः । प्रवाहतो नित्यं च जगदिति । अजस्रं सदा । **'शश्वदभीक्ष्णं नित्यं सदा सततमजस्रमिति सातत्ये'** इत्यापिशलिः ॥ ३५ ॥

---

१. **'पूर्वश्च पश्चात्'** २. **'प्रलये'** ३. **'नित्या हि जीवाः'**

**एवं विदुर्य्ये परमामनन्तामजस्य शक्तिं पुरुषोत्तमस्य ।**
**तस्य प्रसादादथ दग्धदोषास्तमाप्नुवन्त्याशु परं सुरेशम् ॥ ३६ ॥**

**देवानिमान् मुक्तसमस्तदोषान् स्वसन्निधाने विनिवेश्य देवः ।**
**पुनस्तदन्यानधिकारयोग्यांस्तत्तद्गणानेव पदे नियुङ्क्ते ॥ ३७ ॥**

**पुनश्च मारीचत एव देवा जाता अदित्यामसुराश्च दित्याम् ।**
**गावो मृगाः पक्ष्युरगादिसत्वा दाक्षायणीष्वेव समस्तशोऽपि ॥ ३८ ॥**

---

तस्य प्रसादं प्राप्य, अथ तस्मादेव प्रसादात् । अथ कार्त्स्न्येन दग्धदोषा इति वा । अनुपदमेव वक्ष्यति हि–मुक्तसमस्तदोषानिति । सुखेन रमन्त इति सुरा मुक्ताश्च । मुक्तेशम् । परं परिपूर्णम् ॥ ३६ ॥ स्वसन्निधाने मुक्तौ । तत्तत्पदयोग्यानन्यानन्यानेवमनन्तकालं नियुङ्क्ते ॥ ३७ ॥ अथ प्रादुर्भावान् वक्तुमुपक्रममाणः पुनरवान्तरसृष्टिमाह– पुनश्चेत्येकेन । अयमप्यनुसर्गप्रभेद एव । यं विसर्ग इति चाऽहुः । दाक्षायणीष्वेव दक्षतनयास्वेव मारीचतः काश्यपत एव समस्तशः सर्वेऽपि सत्वप्रभेदा जाताः । **‘ब्रह्मणस्तनयो योऽभून्मरीचिरिति विश्रुतः । मारीचस्तस्य पुत्रोऽभूत् काश्यपो नाम नामतः’** [१०.३] इति मार्कण्डेये । दक्षस्य हि षष्टिः दुहितरो बभूवुः । तासु त्रयोदश काश्यपस्य भार्याः–अदितिः, दितिः, दनुः, खशा, अरिष्टा, मुनिः, सुरभिः, ताम्रा, क्रोधवशा, विनता कद्रूः, सुरसा, इळा चेति । इळामेव क्वचिदिरामाचक्षते । तासां सन्ततिरिहोच्यते– पुनश्च देवा अदित्यां जाता इत्यादिना । देवा द्वादशादित्याः– **‘विवस्वानर्यमा पूषा त्वष्टा च सविता भगः । धाता विधाता वरुणो मित्रः शक्र उरुक्रमः’** [भाग.६.६.३८] इति । उरुक्रमो वामनः । **‘धाताऽर्यमा च मित्रश्च वरुणोंऽशो भगस्तथा । इन्द्रो विवस्वान् पूषा च त्वष्टा च सविता तथा । कथितो विष्णुरित्येवं काश्यपेयो गणस्तथा । इत्येवं द्वादशादित्याः–’** [भ.प.६९.२०-२] इति हरिवंशेषु । अत्रांश इति विधाता । स एव पर्जन्यः । क्वचित् तमंशुमाहुः । असुराश्च दित्याम् । दितिजा असुरा दैत्याः । चकाराद् दनौ जाता असुरा दानवाः । ननु कथमसुराश्च दित्याम्? द्वावेव हि दितिपुत्रावसुरौ हिरण्याक्षश्च हिरण्यकशिपुश्च । सत्यं द्वावेव दैत्यौ । अत एव चकारं प्रायुङ्क्त–दित्यां च दनौ चासुरा जाता इति । एकषष्टिर्हि दनोः सुताः । तेन दैत्यांश्च दानवांश्च समाहृत्य एकयोक्त्या असुरा इत्याह । अथवा असुरा इति गोत्रापत्यवचनम् । द्वावदितिपुत्रौ, तत्पुत्राः प्रह्लादाद्याः, ततो विरोचनबलिबाणाद्या इति बहवो हि दितिजाः । **‘दितिश्च राक्षसान् पुत्रांस्तामसान् सुमहासुरान्’** [उ.ख.२३०.१०] इति पाद्मे । ततः खशायां यक्षरक्षांसि । अरिष्टायां गन्धर्वाः । मुनिदुहितरोऽप्सरसः । तदिदं सर्वं चशब्देनैवोपसञ्जग्राह । अथाभिमानिदेवतामुखेन तिरश्चां सृष्टिमाह– गावो मृगा इत्यादिना । सुरभेर्गावस्तदभिमानिन्यो देवता जाताः । गाव इति द्विशफानामुपलक्षणम् । **‘सुरभेर्महिषा गावो ये चान्ये द्विशफा नृप’** [६.६.२६] इति हि भागवते । तदन्ये मृगाः । तेषु केचिदेकशफा अश्वादयः । केचित् पञ्चनखा बिलाळादयः । एकशफाभिमानिनस्ताम्रातनयाः । पञ्चनखाभिमानिनः क्रोधवशातनयाः । एवं ताम्राविनतयोः पक्षिजात्यभिमानिनो देवाः । तत्र गरुडारुणौ वैतनेयौ । अन्ये पक्षि-

**ततः स मग्नामलयो लयोदधौ महीं विलोक्याऽशु हरिर्वराहः ।**
**भूत्वा विरिञ्चार्त्थ इमां[१] सशैलामुद्धृत्य वारामुपरि न्यधात् स्थिरम् ॥ ३९ ॥**

**अथाब्जनाभप्रतिहारपालौ शापात् त्रिशो भूमितळेऽभिजातौ[२] ।**
**दित्यां हिरण्यावथ राक्षसौ च पैतृष्वसेयौ च हरेः परस्तात् ॥ ४० ॥**

---

मानिनस्ताम्रातनयाः । कद्रूसुरसयोर्द्विविधा उरगाः नागाश्च सर्पाश्च । उरसा गच्छन्तीत्युरगाः । उरसा सर्पन्तीति सर्पाः । तेषु फणावन्तो नागाः । नागाः काद्रवेयाः । सर्पाः सौरसाः । सत्वाः प्राणिनः । सीदन्ति विषीदन्ति विशीर्यन्ते चेति सत्वाः । षद्लृ विशरणगत्यवसादनेषु । आदिपदेन स्थावरजीवाः । तदभिमानिन इति यावत् । ते च इळातनयाः । अत्र यदन्यथोच्यते भागवते तत् कल्पान्तरविषयमित्याहुः । अनुसन्धानान्तरं चात्र भवति–गाव इति ग्राम्याः पशवः । मृगा इत्यारण्याः । पक्षिण उपरिचराः । उरगा अधश्चराः । पाताळनिलया हि ते । गावो मृगाश्च भूचराः । पक्षिणः खेचराश्च भूचराश्च । केचिज्जलचराश्च । उरगा जलचरा भूचराश्च । केचित् खेचराश्च । **'नमो अस्तु सर्पेभ्यो ये के च पृथिवी-मनु । ये अन्तरिक्षे ये दिवि तेभ्यः सर्पेभ्यो नमः'** [तै.सं.४.२.८.७] इति श्रुतेः । **'येषामप्सु सदः कृतं तेभ्यः सर्पेभ्यो नमः'** [८] इति च ॥ ३८ ॥ अवसितोऽत्यपूर्वः सर्गानुसर्गलयनिर्णयः । अथ प्रादुर्भावो निरूपणीयः । तत्र रामावतारात् पूर्वतनान् मत्स्यादिभार्गवान्तान् षडवताराननुक्रमेण सङ्क्षेपतो निरूप्य रामकथामुपक्षिपति । तत्र प्रथमावतारकथामाह–ततः स मग्नाम् । स्वायम्भुवमन्वन्तरे । सूक्ष्मप्रकृत्यात्मके लयोदधौ । अत एव अलयोदधौ । न विद्यते लयोऽस्या इत्यलया मूलप्रकृतिः । तदात्मके उदधौ । नहि स्थूलं जलं सम्भवति । **'नासदासीन्नो सदासीत्'** इत्यादिश्रुतेः सर्वभूतलयो हि लयो नाम । विरिञ्चार्थ इति । तथाहि भागवते–**'परमेष्ठी त्वपां मध्ये तथा सन्नामवेक्ष्य गाम् । कथमेनां समुन्नेष्य इति दध्यौ धिया चिरम्'** [३.१४.१६] इति, **'सृजतो मे क्षितिर्वार्भिः प्लाव्यमाना लयं गता । अथात्र किमनुष्ठेयमस्माभिः सर्गयोजितैः । यस्याहं हृदयादासं स ईशो विदधातु शम् । इत्यभिध्यायतो नासाविवरात् सहसाऽनघ । वराहतोको निरगादङ्गुष्ठपरिमाणकः'** [१८–२०] इति च । सशैलामिति । शिलोच्चयभारभुग्नामत एव लयोदधौ मग्नाम् । स्वकक्ष्यातः परिच्युतामत एवाधोऽधः पतन्तीमित्येतत् ॥ ३९ ॥ अथ प्रसङ्गप्राप्तं वैवस्वतमन्वन्तरीयं वराहचरितमाह– अथेति । प्रति-ह्वियते आव्रियत इति प्रतिहारो द्वारम् । प्रतिहारपालौ वैकुण्ठबहिर्द्वारपालौ जयविजयौ । सनकादीनां शापात् । भगवतैव नौ मरणं स्यादित्यभिलष्य जातौ । कथं त्रिशः? प्रथमं दित्यां काश्यपात् हिरण्यौ हिरण्याक्षहिरण्यकशिपू । भूमि-तळे । तळ प्रतिष्ठायाम् । अर्वाचीना वैयाकरणाः **'तल प्रतिष्ठायाम्'** इति पठन्ति । एकयोक्त्योभयोर्ग्रहणसौकर्याय नामैकदेशग्रहणम् । अथ द्वितीयं राक्षसौ, राक्षस्यां सुमालिपुत्र्यां कैकस्यां जातौ रावणकुम्भकर्णौ । कैकस्या एव पुष्पोत्कटेति नामान्तरमासीदिति ज्ञायते । तथाहि भारते– **'पुष्पोत्कटायां जज्ञाते द्वौ पुत्रौ राक्षसेश्वरौ । कुम्भकर्ण-दशग्रीवौ बलेनाप्रतिमौ भुवि'** [व.प.२७६.७] इति । ननु तर्हि रामायणविरोधः । तत्र–**'राका पुष्पोत्कटा चैव कैकसी च शुचिस्मिता । कुम्भीनसी च इत्येते सुमालेः प्रसवाः स्मृताः'** [उ.कां. ५.४१] इति कैकसीसोदरी पुष्पोत्कटेति

---

१. **'विरिञ्चार्थमिमाम्'** २. **'–तले प्रजातौ'**

**हतो[१] हिरण्याक्ष उदारविक्रमो दितेः सुतो योऽवरजः सुरार्त्थे ।**
**धात्राऽर्त्थितेनैव वराहरूपिणा धरोद्धृतौ पूर्वहतोऽब्जजोद्भवः ॥ ४१ ॥**

पठ्यते । मैवम् । **'पुष्पोत्कटा चैव कैकसी'** इत्येकान्वयादविरोधः । या कैकसी सैव च पुष्पोत्कटेति । तथाहि भारत एव –**'पुष्पोत्कटा च राका च मालिनी च विशाम्पते'** [वन.प.२७६.४] इति । तेन ज्ञायते पुष्पोत्कटैव कैकसी । कुम्भीनस्येव मालिनीति । युक्तं च कामोत्कटायाः पुष्पोत्कटेत्यन्वर्थं नाम । आग्नेये च –**'ब्रह्मात्मजः पुलस्त्योऽभूत् विश्रवास्तस्य कैकसी । पुष्पोत्कटाऽभूत् प्रथमा तत्पुत्रोऽभूद् धनेश्वरः'** [११.२] इति । अयमर्थः– तस्य विश्रवसः दर्शनेन कैकसी पुष्पोत्कटा कामोद्रिक्ता सती भार्याऽभूत् । या च प्रथमा उद्रिक्तरजा भार्या तत्पुत्रो धनेश्वरोऽभूदिति । तथाहि रामायणे– **'ददौ विश्रवसे भार्यां स्वसुतां देववर्णिनीम् । प्रतिगृह्य तु धर्मेण भरद्वाजसुतां तदा । ..... जनयामास धर्मज्ञः सर्वैर्ब्रह्मगुणैर्युतम् । ... यस्माद् विश्रवसोऽपत्यं सादृश्याद् विश्रवा इव । तस्माद् वैश्रवणो नाम भविष्यत्येष विश्रुतः'** [उ.कां ३.३–८] इत्यादि । अथापि यः कथाभेदो भारतरामायणयोः स पुंव्यत्यासादिना वा योजनीयः । तद् यथा कैकसीपुत्रं मालिनीपुत्रमाह भारतम्–**'मालिनी जनयामास पुत्रमेकं विभीषणम्'** [८] इति । शत्रुभीषणत्वात् दूषण एवात्र विभीषणशब्दोक्त इति सर्वाविरोधः । परस्तात् तृतीयं हरेः पैतृष्वसेयौ । पितुर्वसुदेवस्य स्वसारौ पृथुश्रवा पृथुदेवा च । तयोः पुत्रौ शिशुपालदन्तवक्रौ । पितुष्वसुरपत्यमिति विग्रहे **'पैतृष्वस्रीयः'** इति रूपम् । **'पितृष्वसुश्छण्'** [अ.सू.४.१.१२०] । पितृष्वसाया अपत्यमिति विग्रहे, **'स्त्रीभ्यो ढक्'** [४.१.१२०] इति ढकि कृते **'पैतृष्वसेयः'** इति रूपम् । वैयाकरणास्तु पितृष्वसृशब्दादेव **'ढकि लोपः'** [अ.सू.४.१.१३३] इति ढकि परतो लोपमङ्गीकृत्य **'पैतृष्वसेयः'** इत्यपि रूपं निष्पादयन्ति । आकारान्तः पितृष्वसाशब्दः प्राचीनग्रन्थेषु पठ्यते । तथाहि भारत एव–**'पितृष्वसायाः पुत्रो मे सम्बन्धं नार्हति द्विषाम्'** [आ.प.२४५.१३], **'पितृष्वसामातुलजौ भ्रातरावपराजितौ'** [क.प.३४.१३] इत्यादि । **'पितृष्वसामनुज्ञाप्य राजानं च युधिष्ठिरम्'** [१०.६१.१४] इति भागवते । प्रयुक्तश्च भगवत्पादैः । तेनैव निर्वाहे **'ढकि लोपः'** इति सूत्रं शक्यमवक्तुम् । पितृष्वसाशब्दो लोके न प्रयुज्यत इत्येतदर्थं वा सूत्रमिति सन्तोष्टव्यम् । कथं स्वसा? सु असति शोभत इति स्वसा । अस दीप्तौ । सु अस्यति अस्यते वा । असु क्षेपणे । क्षेपणं प्रेरणम् । ततश्च सूपपदस्यासेः ऋन् प्रत्यय इति वैयाकरणाः । प्राचीनप्रयोगानुगुण्याय **'सोरसेर्विभाषा ऋन्'** इति वक्तव्यम् । तदपि चैकवचन एव । तेन स्वसारं स्वसामित्यादि रूपमिष्यते प्रतनैः ॥ ४० ॥ हिरण्येऽस्याक्षीति हिरण्याक्षः । यः साधकानां मनः प्रविश्य हिरण्यकामनां प्रचोदयति । उदारविक्रमः महापराक्रमः । पूर्वं हिरण्याक्षहननं विरिञ्चार्थ इत्युक्तम् । द्वितीयं तु हिरण्याक्षभयपीडितानां सुराणामर्थे । **'ततो देवगणाः सर्वे चुक्रुशुर्भयपीडिताः । शरणं प्रययुर्देवं नारायणमनामयम्'** [उ.खं.२३८.१४] इति हि पाद्मे । यत्तु तत्रैवोपरिष्टात्–**'एकया दंष्ट्रया दैत्यं जघान परमेश्वरः'**[१७] इति तत् कथाव्यत्यासेन योज्यम् । आदिदैत्यस्य हि दंष्ट्रया हननम् । द्वितीयस्य तु कर्णताडनात् । **'ब्रह्मजस्तु हिरण्याक्षः प्रथमं दंष्ट्रया हतः । स एव पार्षदाविष्टो द्वितीयं कर्णताडनात्'** [३.१४.३३.४] इति हि भागवततात्पर्ये । अतः पूर्वमप्येको हिरण्याक्षो हत इत्याह– धरोद्धृतौ पूर्वहतोऽब्जजोद्भवः । स्वायम्भुवमन्वन्तरे लयोदधौ मज्जन्तीं

१. **'ततो–'**

**अथो विधातुर्म्मुखतो विनिःसृतान् वेदान् हयास्यो जगृहेऽसुरेन्द्रः ।**
**निहत्य तं मत्स्यवपुर्ज्जुगोप मनुं मुनींस्तांश्च ददौ विधातुः ॥ ४२ ॥**

**मन्वन्तरप्रळये मत्स्यरूपो विद्यामदान्मनवे देवदेवः ।**
**वैवस्वतायोत्तमसंविदात्मा विष्णोः स्वरूपप्रतिपत्तिरूपाम् ॥ ४३ ॥**

---

भुवं वराह उद्धार । तदा प्रत्यवरुन्धानं ब्रह्मजातमादिदैत्यं हिरण्याक्षं जघान । पुनर्वैवस्वतेऽन्तरे दित्यां जातं तमेव हिरण्याक्षं भूमेराकर्षणशक्तिं विनीय तां नाशयितुमुद्युक्तं तेनैव वराहरूपेण जघानेति । एकयोक्त्या कथाद्वयकथन-सौकर्याय मत्स्यावतारानन्तरभाविनमपि वैवस्वतमन्वन्तरीयं हिरण्याक्षवधमत्रैव सञ्जग्राह । **'अथ भूम्युपरि स्थित्वा मर्त्या यक्ष्यन्ति देवताः । तेन तेषां बलं वीर्यं तेजश्चापि भविष्यति । इति मत्वा हिरण्याक्षः कृते सर्गे तु ब्रह्मणा । भूमेर्या धारणाशक्तिस्तां नीत्वा स महासुरः । विवेश तोयमध्ये तु रसातळतळं नृप । विना शक्त्या च जगती प्रविवेश रसातलम्'** [३९.७-९] इति नरसिंहपुराणे ॥ ४१ ॥ अथो अब्जजोद्भवहिरण्याक्षवधानन्तरम् । दितिजो हिरण्याक्षस्तु मत्स्यावतारानन्तरं हि निहतः । अथो इत्यवान्तरकथारम्भे वा । वेदान् हयास्यो जगृहे । **'कालेनाऽगतनिद्रस्य धातुः शिशयिषोर्जले । मुखतो निःसृतान् वेदान् हयग्रीवोऽन्तिकेऽहरत्'** [८.२२.८] इति भागवते । अस्यैव सोमक इति नामान्तरं पुराणान्तरेषु । तथाहि पद्मपुराणे–**'सोमकस्तु हयग्रीवो ब्रह्मलोकमुपागतः । ब्रह्माणं मोहयित्वाऽसौ वेदान् जग्राह वीर्यवान्'** [उ.खं.२३०.११] इति । अर्वाचीनास्तु **'मकरस्तु महावीर्यः'** इति पाठं पठन्ति । **'जघान सोमकं रक्षो व्युज्जहार त्रयीं ततः'** इति चान्यत्र । अस्यैव शङ्ख इति च नामान्तरम् । **'ततोऽवधीत् स तं शङ्खं विष्णुर्वै मत्स्यरूपधृक्'** [उ.खं.९१.४] इति च पाद्मे । वैवस्वतं मनुं तन्मन्वन्तरीयमुनींश्च भूमय्यां नावि जुगोप । समुद्रं प्रविष्टस्य, तमभिव्याप्य च स्थितस्य मत्स्यात्मनः विष्णोः स्वरूपप्रतिपत्तिरूपां विद्यामदाच्च । विधातुर्वेदान् ददौ च इति क्रियासमुच्चये च चकारः । तान् वेदांश्च जुगोपासुरहस्तात् , ददौ च विधातुरिति च । ब्रह्मणो मुखाद् वेदापहारो नाम वेदाभिमानिनाम-पहार एव । शब्दरूपस्य वेदस्य ज्ञानस्य वाऽपहारासम्भवात् । विधातुर्दानं च पुनर्वेदमानिनां तद्वशे स्थापनम् । चाक्षुषमन्वन्तरप्रळये । तथाहि भागवते– **'रूपं स जगृहे मात्स्यं चाक्षुषान्तरसम्प्लवे'** [१.३.१५] इति । एतेन ज्ञायते यदष्टमस्कन्धे पठ्यते– **'आसीदतीतकल्पान्ते ब्राह्मो नैमित्तिको लयः'** [८.२३.७] इति, तत्र च **'दधार शफरीरूपं भगवान् हरिरीश्वरः'** [९] इति च, तत्र अतीतकल्पपदेन अतीतं मन्वन्तरमेवोच्यते । उपक्रमे निरवकाशस्फुटवचना-दिति । तदनुगुणतया **'अहं त्वामृषिभिः साकं सहनावमुदन्वति । विकर्षन् विचरिष्यामि यावद् ब्राह्मी निशा प्रभो'** [३७] इत्यत्र ब्राह्मी निशेति मन्वन्तरप्रळय एवोच्यत इति च । मान्वन्तरी निशाऽपि ब्रह्माधीनतया ब्राह्मी भवति । ब्राह्मदिनकल्पपरिग्रहे तदानीं सर्वजीवनिकायविलयात् ४३२कोटिवर्षपर्यन्तं मनोर्नावि स्थित्यसम्भवाच्च । केचित्तु मत्स्यावतारोऽपि द्विरासीदिति वदन्ति । तथाऽपि नोक्तदोषनिस्तारः । वैवस्वताय मनवे । विद्यामदात् या सङ्गृहीता मत्स्यपुराणे । वराहावतारे द्विरपि बलकार्यमेव । मत्स्यावतारस्तु बलकार्यश्च ज्ञानकार्यश्चेत्यर्थः । तत्र प्रथमपद्येन बल-कार्यमाह । द्वितीयेन ज्ञानकार्यम् ॥ ४२–४३ ॥

**अथो दितेर्ज्येष्ठसुतेन शश्वत् प्रपीडिता ब्रह्मवरात् सुरेशाः ।**
**हरिं विरिञ्चेन सहोपजग्मुर्दौरात्म्यमस्यापि शशंसुरस्मै ॥ ४४ ॥**

**अभिष्टुतस्तैर्हरिरुग्रवीर्य्यो नृसिंहरूपेण स आविरासीत् ।**
**हत्वा हिरण्यं च सुताय तस्य दत्वाऽभयं देवगणानतोषयत् ॥ ४५ ॥**

**सुरासुराणामुदधिं विमथ्नतां दधार पृष्ठेन गिरिं स मन्दरम् ।**
**वरप्रदानादपरैरधार्य्यं हरस्य कूर्म्मो बृहदण्डवोढा ॥ ४६ ॥**

---

स्वायम्भुवमन्वन्तरभवं वराहावतारम्, सहोक्तिसौलभ्याय वैवस्वतमन्वन्तरीयं च वराहचरितं निरूप्य, ततश्चाक्षुषमन्वन्तर-प्रळये भवं मत्स्यावतारं च निरूप्य अथैतन्मन्वन्तरीयं नरसिंहावतारमाह । दितेर्ज्येष्ठसुतेन हिरण्यकशिपुना शश्वत् मुहुर्मुहुः निरन्तरं वा प्रपीडिताः स्वस्थानात् प्रच्याव्य पीडिताः । ब्रह्मसृष्टेभ्यो भूतेभ्यो मृत्युर्मा भूदिति, **'नान्तर्बहिर्दिवा नक्त-मन्यस्मादपि चाऽयुधैः । न भूमौ नाम्बरे मृत्युर्न नरैर्न मृगैरपि'** [भाग.७.३.३६–७] इति च ब्रह्मवरात् । **'न देवासुरगन्धर्वा न यक्षोरगराक्षसाः । न मानुषाः पिशाचाश्च निहन्युर्मां कथञ्चन । ऋषयो वा न मां शापैः क्रुद्धा लोकपितामह । शपेयुस्तपसा युक्ता वरमेतं वृणोम्यहम् । न शस्त्रेण नचास्त्रेण गिरिणा पादपेन वा । न शुष्केण नचाऽर्द्रेण स्यान्नचान्येन मे वधः । पाणिप्रहारेणैकेन सभृत्यबलवाहनम् । यो मां नाशयितुं शक्तः स मे मृत्युर्भविष्यति'** [ह.वं.प.४१. ५९-५२] इति हरिवंशेषु । ब्राह्मे चैवम् [२१३.५३–६] । उपस्थानेन गमनमुपगमनम् । उपजग्मुः, अस्य दौरात्म्यं शशंसुरपि । क्रियासमुच्चयेऽपिः । अथच हिरण्याक्षस्येव हिरण्यकशिपोर्दौरात्म्यमपि शशंसुरस्मै । दौरात्म्यमपि गर्हितं दौरात्म्यं शशंसुरिति च । गर्हायामपिः ॥ ४४ ॥ अभिमतलाभाय स्तुतः । अलप्सत चाभीप्सितमित्याह– नृसिंह-रूपेण स आविरासीत् । हिरण्यं हिरण्यकशिपुं हत्वा । यद्यपि हिरण्य इत्युभयोः समानम् । तथाऽपि नृसिंहरूपेण हत्वेति सिद्धपदस्य सान्निध्यतो हिरण्यकशिपुरिति पर्यवस्यति । कथं हिरण्यकशिपुः? कशिपुरित्युपधानमुच्यते । कशिपुरित्याच्छादन-मुच्यते । हिरण्यं शिरउपधानस्याध उपधाय शेते इति हिरण्यगृध्नुर्हिरण्यकशिपुरुच्यते । हिरण्यमेवाऽच्छाद्य शेत इति च । यः साधकमनसि हिरण्यलोभमभिवर्धयति । अहो अद्भुतावेतौ भ्रातरौ, एकः कामवर्धनः, अपरो लोभवर्धनः । कामलोभयोरुपहतौ क्रोधं च वर्धयत इति त्रिविधं नरकद्वारं विवृणाते । तस्य सुताय प्रह्लादाय अभयं दत्वा, न भेतव्यमिति सान्त्वयित्वा, अधःपातादिभयरहितं स्थानं च दत्वा ॥ ४५ ॥ अथ तदनन्तरभाविनं कूर्मावतारमाह– सुरासुराणाम् । हरस्य वरप्रदानाद् देवा अपि मन्दरं वोढुं न शेकुः । केवलं गरुडः शशाक । कूर्मस्य तु बृहदण्डवोढुः कियानयं मन्दरः? तथाहि वैभववचनं बृहद्भाष्ये–**'बिभर्त्यण्डं हरिः कूर्मः'** [३.२] इति । एवमनेन रैवतमन्वन्तरीयां वैवस्वतमन्वन्तरीयां च समुद्रमथनकथां सञ्जग्राह । अत्रैवं पुराणविदो वदन्ति– नरसिंहावतारादनन्तरं समुद्रमथनमिति दर्शयितुमत्र कूर्मावतार-कथनम् । अत एवामृतमथने बलिर्भागमुवाहेति युज्यते । नरसिंहावतारादनन्तरमेव हि प्रह्लादपौत्रस्य बलेर्जननमिति । तथाचायमवतारक्रमः– चाक्षुषमन्वन्तरप्रळये मत्स्यावतारः । ततो वराहनरसिंहौ । ततः कूर्मः । ततो वामनः । ततो यथाक्रमं

**वरादजेयत्वमवाप दैत्यराट् चतुर्म्मुखस्यैव बलिर्य्यदा तदा ।**
**अजायतेन्द्रावरजोऽदितेः सुतो महानजोऽप्यब्जभवादिसंस्तुतः ॥ ४७ ॥**

परशुरामादय इति । एतदेव व्यत्यस्य प्रातिलोम्येन पाद्मे पठितम्–**'प्रथमो नरसिंहस्तु द्वितीयश्चापि वामनः । तृतीयस्तु वराहश्च चतुर्थोऽमृतमन्थनः'** [सृ.खं.१३.१८०] इति । अत्र पूर्वार्धोत्तरार्धयोः प्रत्येकं प्रातिलोम्येनान्वयः– तृतीयप्रथमौ चतुर्थद्वितीयौ च क्रमेणेति । परशुरामादिषु च मनुष्यदृष्टेष्ववतारेष्वयं कालक्रमः–**'एकोनविंश्यां त्रेतायां सर्वक्षत्रान्तकृद् विभुः । जामदग्न्यस्तदा षष्ठो विश्वामित्रपुरस्सरः । चतुर्विंशे युगे रामो वसिष्ठेन पुरोधसा । सप्तमो रावणस्यार्थे जज्ञे दशरथात्मजः । अष्टमो द्वापरे विष्णुरष्टाविंशे पराशरात् । वेदव्यासस्ततो जज्ञे जातुकर्ण्यपुरःसरः । तथैव नवमो विष्णुरदित्याः कश्यपात्मजः । देवक्यां वसुदेवात्तु जातो गार्ग्यपुरःसरः । अप्रमेयोऽनियोज्यश्च स्वयं कामगमो वशी । क्रीडते भगवान् लोके बालः क्रीडनकैरिव । न प्रमातुं महाबाहुः शक्योऽसौ मधुसूदनः । परमात् परमेतस्माद् विश्वरूपान्न विद्यते । अष्टाविंशतिमे तद्वद् द्वापरस्याथ सङ्क्षये । नष्टे धर्मे तदा जज्ञे विष्णुर्वृष्णिकुले प्रभुः'** [उपो.पा.७३.९०–६] इति ब्रह्माण्डे । अथ कथं कूर्मस्य नियत्या पूर्वनिर्देशः? इत्थम्– पूर्वं तिर्यग्भवानामवताराणां निर्देशः, मत्स्यः कूर्मो वराह इति। तत्रापि जलचरः प्रथमं निरदिश्यत, तत उभयचरः कूर्मः, ततः स्थलचरो वराहः । ततोऽर्धनरो नरसिंहः । ततो देवलोकसम्भवो वामनः । ततो नरलोकसम्भवाः परशुरामाद्या यथाक्रममिति । ननु तर्हि भागवतं कुप्यति । तथाहि श्रूयते–**'दध्रे कमठरूपेण पृष्ठ एकादशं विदुः'** [१.३.१६] इति, **'चतुर्दशं नारसिंहम्–'** इति । सत्यं श्रूयते । केवलमवतारसङ्ख्यानमेव तत् । न तत्र क्रमविवक्षेति न विरोध इति वदन्ति । वराहनरसिंहावताराभ्यां पूर्वमप्यस्ति कूर्मावतार इति सूचनाय चैतदुक्तम् । यथा रामावतारात् पूर्वमप्यस्ति व्यासावतार इति ज्ञापयितुं **'ततः सप्तदशे जातः सत्यवत्यां पराशरात्'** इत्याह । अत्रोभयत्रापि उत्तरस्मात्पूर्वतनत्वमेव विवक्षितोऽर्थः । नतु पूर्वस्मादुत्तरत्वमपि । अथापि तत्र क्रमभङ्गे किं बीजमिति तु चिन्त्यं भवति । वस्तुतस्तु नायमवतारक्रमः । किन्त्वनुसन्धानक्रमः । अयमिह शास्त्रसम्प्रदायः यत् कूर्मावतारमनुस्मृत्यैव ततो नरसिंहरूपमनुसन्धेयमिति । दशावतारानुसन्धाने च मत्स्यकूर्मवराहाणामनन्तरम् । **'मत्स्यकूर्मवराहाश्च सिंहवामनभार्गवाः'** इत्यादिषु सर्वत्रापि तेनैव क्रमेण शास्त्रेषु नियत्या निर्देशादेतदवगम्यते । तत्रापीदमान्तरं कारणं भवति । प्रथमं वेदावाप्तिः । ततो मनोमन्दरेण वेदार्थमथनेन ज्ञानामृतप्राप्तिः । ज्ञाने स्थिरे ध्यानयोगाय स्थिरमासनं भूमौ । ततश्च पापपुरुषनिरासो नृसिंहाग्निनेति । **'चतुर्दशं नारसिंहम्'** इति नृसिंहावतारस्य कूर्मावतारानन्तर्यं कल्पभेदेनोपपादनीयमिति केचित् । अन्ये वदन्ति– द्विः किल समुद्रमथनं सम्बभूव । द्विः कूर्मोऽप्यवततार । रैवतान्तरे च वैवस्वतान्तरे च । तेन पूर्वमन्वन्तरीयकूर्मविवक्षया नृसिंहावतारात् पूर्वतरोऽयमिति । एतदपि नातिस्वरसम् । यदि पूर्वतनावतारविवक्षा तदा वराहस्य प्राथम्यम् । ततः कूर्मः । तेन वराहः कूर्मो मत्स्य इति वक्तव्यम् । न मत्स्यः कूर्मो वराह इति । वैवस्वतमन्वन्तरीयाणामेवावताराणां दशानामपि ग्रहणमिति युक्तं वचः । चाक्षुषान्तरसम्प्लवसम्भवोऽपि मत्स्यावतारः वैवस्वतमन्वन्तरसङ्गत एव । वैवस्वतमन्वन्तरीया हि फलभाजः ॥ ४६ ॥ चतुर्मुखस्य वरादेवाजेयत्वमवाप बलिर्न स्वशक्त्या । तथाहि हरिवंशे–**'दत्तं चैतद् भगवता वरदेन स्वयम्भुवा । इन्द्रत्वं चामरत्वं च युद्धे चाप्यपराजयः । ईशित्वं च वशित्वं च बलं चैवामितं शुभम् । सर्वभूतेश्वरत्वं च दैत्यराज सदा तव'** [भ.प.६३.६–७]

**स वामनात्माऽसुरभूभृतोऽध्वरं जगाम गां सन्नमयन्[1] पदेपदे ।**
**जहार चास्माच्छलतस्त्रिविष्टपं त्रिभिः क्रमैस्तच्च ददौ निजाग्रजे ॥ ४८ ॥**

**पितामहेनास्य पुरा हि याचितो[2] बलेः कृते केशव आह यद् वचः ।**
**नायाच्ञयाऽहं प्रतिहन्मि तं बलिं शुभाननेत्येव ततोऽभ्ययाचत ॥ ४९ ॥**

**बभूविरे चन्द्रललामतो वरात् पुरा ह्यजेया असुरा धरातळे[3] ।**
**तैरर्दिता वासवनायकाः सुराः पुरो निधायाब्जजमस्तुवन् हरिम् ॥ ५० ॥**

**विरिञ्चसृष्टैर्नितरामवध्यौ वराद् विधातुर्दितिजौ हिरण्यकौ ।**
**तथा हयग्रीव उदारविक्रमस्त्वया हता ब्रह्मपुरातनेन ॥ ५१ ॥**

---

इति, **'ब्रह्मणो वरदानेन हतं नो निखिलं जगत् । तपसा महता चैव विक्रमेण दमेन च । बलिना दैत्यमुख्येन–'** [७०.४६] इति च । अजोऽप्यजायत । महानपीन्द्रावरजो बभूव । अब्जभवादिसंस्तुतोऽप्यदितेः सुत आदित्येष्वेको बभूव । कुतः? अब्जभवादिसंस्तुतत्वादेव ॥ ४७ ॥ असुराणां भूभृतो बलेरध्वरम् । वामनात्माऽपि गां सन्नमयन् । **'अणोरणीयान् महतो महीयान्'** इति हि श्रुतिः । सामस्त्येन नमनं सन्नमनम्–**'स वामनो दृढगतिर्मृदु गच्छन् सपर्वताम् । साब्धिद्वीपवतीं सर्वां चालयामास मेदिनीम्'** [२४५.९०] इति मात्स्ये । **'यत्रयत्र पदं भूयो भूभागे वामनो ददौ । ददाति भूमिर्विवरं तत्रतत्रातिपीडिता'** [८९] इति च । **'गच्छतः पादविक्षेपाच्चचाल सकला मही । यज्ञभागान् न गृह्णन्ति दानवाश्च बलेर्मखात्'** [४५.१०] इति नारसिंहे । याच्ञाच्छलतः । **'अग्निकुण्डस्य पृथिवीं देहि दैत्यपते मम । मम त्रिविक्रमपदान्नान्यदिच्छामि मानद'** [उ.खं.२४०.१४] इति पाद्मे । निजाग्रजे इन्द्रे । इन्द्रायेत्येतत् । उपेन्द्रो ह्ययम् । **'अजघन्यो जघन्यजः'** इति च भारते ॥ ४८ ॥ अस्य बलेः पितामहेन प्रह्लादेन । बलेः कृते बलिरक्षार्थं याचितो हि । सूनृतवचनः शुभानन उच्यते । शुभं प्रशस्तं शोभनं वाऽननं चेष्टा यस्येति वा । साधुकर्मन्नित्यर्थः । इन्द्रस्य स्वपदभ्रंशनेन या हिंसा बलिना कृता तत्प्रतीकाराय क्रियमाणा हिंसा प्रतिहतिरुच्यते । तदेतदाह–'याच्ञामृते न प्रतिहन्मि तमपराधिनमपि बलिम्' इति । तत एव हेतोर्वामनो भूत्वा भिक्षमाण इव बलिमभिगत्यायाचत ॥ ४९ ॥ चन्द्रललामश्चन्द्रभूषणः । **'भूषावाजिप्रभावेषु ललामं स्याल्ललाम च'** इत्यभिधानम् । चन्द्रललामस्य वरादजेयाः, चन्द्रललामात् लब्धवरादिति वा । पुरा धरातळे भवनात् पूर्वमेव लब्धाद् वरात् । धरातळे राजानो बभूविरे उत्पन्नाः । **'भवतेरुत्पत्तावात्मनेपदमित्यादिनोत्पत्तिवाचित्वमवगम्यते'** इति तत्वमञ्जरी ॥ ५० ॥ विरचयतीति विरिञ्चः स्रष्टा । विशेषतः वरदानेन दधाति पोषयतीति विधाता । धाञ् दाने वा । तेन विलक्षणं वरं दधाति ददातीति वा विधाता । तमेतमर्थविशेषं द्योतयितुमेव विधातुर्वराद् विरिञ्चसृष्टैरवध्यावित्याह । अन्यथा विधातुर्वरात् तत्सृष्टैरवध्यावित्येवा-

---

१. **'संयमयन्'** २. **'पुराऽभियाचितो–'** ३. **'धरातले'**

**स चासुरान् रुद्रवरादवद्ध्यानिमान् समस्तैरपि देवदेव[१] ।**
**निःसीमशक्त्यैव निहत्य सर्वान् हृदम्बुजे नो निवसाथ शश्वत् ॥ ५२ ॥**

**इत्यादरोक्तस्त्रिदशैरजेयः स शार्ङ्गधन्वाऽथ भृगूद्वहोऽभूत् ।**
**रामो निहत्यासुरपूगमुग्रं [२]नदाननादिर्विदधेऽसृजैव ॥ ५३ ॥**

**ततः पुलस्त्यस्य कुले प्रसूतौ[३] तावादिदैत्यौ जगदेकशत्रू ।**
**परैरवद्ध्यौ वरतः पुरा हरेः सुरैरजेयौ च वराद् विधातुः ॥ ५४ ॥**

---

वक्ष्यत् । कुत्सितौ हिरण्यौ हिरण्यकौ । सत्यस्यापिधानेन हिरण्येनैव कं सुखं ययोस्तौ । हिरण्य एव कं मनो ययोस्तौ । एतेन हिरण्याक्षहिरण्यकशिपुपदयोरप्यर्थं सूचयामास । हिरण्य एवाक्षि यस्येति हिरण्यमेव यस्यान्नमाच्छादनं चेति । **'एकोक्त्या कशिपुर्भुक्ताच्छादने'** इत्यभिधानम् । ब्रह्मणोऽपि पुरातनेन । ब्रह्मजनकेन । अत एव विधातुर्वरादवध्या अपि त्वया हन्यन्ते । किमुत रुद्रवरादवध्याः ॥ ५१ ॥ अतः स त्वं रुद्रवरात् सर्वैरपि अवध्यानिमांश्च सर्वान् निहत्य । शश्वत् निरन्तरम् । शश्वदिति पुनरर्थे च । असुरावेशेन सतां हृदयादपगतस्त्वमथ तान् सर्वानसुरान् निःशेषतया हत्वा शश्वत् पुनरपि नो हृदम्बुजे नियत्या वस । हृदम्बुजमिति मधुरं श्लक्ष्णं च ते वासस्थानमित्याह । यतस्त्वमेव हृदम्बुजेनः हृदम्बुजस्येनः । हृदयेश्वरः, हृदयङ्गमश्च । हृदम्बुजस्य विकसने इनः सूर्य इव । अत एव च हृदम्बुजमिवेत्याह ॥ ५२ ॥ भृगुकुलोद्वहः भार्गवो रामोऽभूत् एकोनविंशयां त्रेतायाम् । स्वावतारेण भृगुकुलस्य उन्नतिं प्रापयन् उद्वहः । अन्यत्रापि ऊर्ध्वं नयतीत्युद्वहः पुत्रो गोत्रजो वोच्यते । **'पुरा देवगणैर्विष्णुः स्तुतः क्षीरोदधौ नृप । ऋषिभिश्च महाभागैर्जमदग्नेः सुतोऽभवत्'** [४६.२] इति नारसिंहे । शार्ङ्गधन्वाऽपि सर्वप्रहरणायुधोऽपि त्यक्तसर्वायुधः केवल-मिध्मप्रव्रश्चनं परशुं दधत् । कुरुक्षेत्रेऽसृजैव समन्तात् पञ्च नदान् ह्रदान् विदधे । नदो ह्रद इति समानार्थौ शब्दौ । निर्वचनसाम्यात् । ह्रादत इति ह्रदः । नदतीति नदः । ह्राद अव्यक्ते शब्दे । णद अव्यक्ते शब्दे । अगाधो जलाधारः पदार्थः । यत् समन्तपञ्चकं तीर्थमाहुः । अपिचार्थविशेषद्योतनाय च ह्रदान् नदानाह । तथाहि नारदीये स्मरन्ति– **'ततः पञ्चनदं गच्छेत् तीर्थं त्रैलोक्यविश्रुतम् । पञ्च नादाः कृता यत्र हरेणासुरभीषणाः । तेन पञ्चनदं नाम सर्वपातकनाशनम्'** [ना.उ.भा.६५.२५–६] इति कुरुक्षेत्रमाहात्म्ये । एतत् पौराणं निर्वचनं स्मारयितुमेव ह्रदानित्यनुक्त्वा नदानित्याह । यन्महिम्ना तज्जलमन्वर्थमसृग् बभूव– न सृजति पापमिति ॥ ५३ ॥ एवं प्राथमिकान् षडवतारान् सङ्क्षेपतो निरूप्याथ रामावतारकथां प्रस्तौति । पुलस्त्यस्य कुले प्रसूतौ । प्रजापतेर्मानसः पुत्रः पुलस्त्यः । तत्सुतो मुनिर्विश्रवाः । तस्मात् कैकस्यां प्रसूतो रावण इति स पौलस्त्य उच्यते । आदिदैत्यौ हिरण्याक्षो हिरण्यकशिपुश्च । सृष्टेरादौ सृष्टाविति । ननु कथं दैत्यौ? नहीमौ दितिपुत्रौ । लोकखण्डनी प्रकृतिर्दितिरुच्यते । दो अवखण्डने । दितेरिमाविति दैत्यावुच्येते इति का कथन्ता? । **'मयैव वध्यौ भवतम्'** इति तदाविष्टयोर्जयविजययोः प्रदत्तात् हरेर्वरतः ॥ ५४ ॥

---

१. 'देवदेवः ।' २. **'–मुग्रं ह्रदान–'** ३. **'प्रजातौ'**

**सर्वैरजेयः स च कुम्भकर्ण्णः पुरातने जन्मनि धातुरेव ।**
**वरान्नरादीनृत एव रावणस्तदातनात् तौ त्रिदशानबाधताम् ॥ ५५ ॥**

**तदाऽब्जजं शूलिनमेव चाग्रतो निधाय देवाः पुरुहूतपूर्वकाः ।**
**पयोम्बुधौ भोगिपभोगशायिनं समेत्य योग्यां स्तुतिमभ्ययोजयन् ॥ ५६ ॥**

**त्वमेक ईशः परमः स्वतन्त्रस्त्वमादिरन्तो जगतो[1] नियोक्ता ।**
**त्वदाज्ञयैवाखिलमम्बुजोद्भवा वितेनिरेऽग्र्याश्चरमाश्च येऽन्ये ॥ ५७ ॥**

ननु कुम्भकर्णो निद्रां वव्रे, नाजेयत्वम्? आह– पुरातन इति । पुरातने जन्मनि हिरण्याक्षत्वे । यतः स बहुधा वरं वव्रे सुरैरजेयः स्यामिति, सर्वैरजेयः स्यामिति, भाविनि जन्मन्यप्यजेयः स्यामिति । तथाहि भारते–**'हिरण्याक्षो महारौद्रो लेभे देवात् पितामहात् । वरानचिन्त्यानतुलान् शतशोऽथ सहस्रशः'** [शां.प.२०८.१०] इति । नरादीनिति । आदिपदेनर्क्षा वानराश्च । **'रावणः– गन्धर्वदेवासुरतो यक्षराक्षसतस्तथा । सर्पकिन्नरभूतेभ्यो न मे भूयात् पराभवः । ब्रह्मा– य एते कीर्तिताः सर्वे न तेभ्योऽस्ति भयं तव । ऋते मनुष्याद् भद्रं ते तथा तद् विहितं मया । मार्कण्डेयः – एवमुक्तो दशग्रीवस्तुष्टः समभवत् तदा । अवमेने हि दुर्बुद्धिर्मनुष्यान् पुरुषादकः'** [व.प.२७६.२५–७] इति रामोपाख्याने । **'नहि चिन्ता मनुष्येषु प्राणिष्वमरपूजित । तृणभूता हि ते मन्ये प्राणिनो मानुषादयः'** [उ.कां.१०.२१] इति ब्रह्माणं प्रति रावणवचनं वाल्मीकीये । तदातनात् रावणजन्मन्येव वृताद् वराद् । **'रावयामास लोकान् यत् तस्माद् रावण उच्यते । दशग्रीवः कामबलो देवानां भयमादधत्'** [व.प.२७६.४०] इति महाभारते । अबाधताम्, अबाधेताम् । बाधृ लोटने । **'लोटनं प्रतिघातः'** इति क्षीरस्वामी । लोकबाधनी चेयं बाधेति परस्मैभाषा ॥ ५५ ॥ तदैव अविलम्बेन, अब्जजं शूलिनं चाग्रतो निधाय । ब्रह्मैव वायुमपि प्रतिनिधत्त इति तावेव पुरुहूतपूर्वकाणां देवानामग्र्यौ, तस्मात् तावेवाग्रतो निधाय । गरुडशेषयोर्नारायणसन्निधावेव स्थितेः । अत एवाऽह–भोगिपभोगशायिनम् । अभितः भक्तिश्रद्धाभ्यां योजन-मभियोजनम् । अभिमुखीकरणार्थं च योजनमभियोजनम् । **'एतस्मिन्नेव काले तु देवाः सेन्द्रा महर्षयः । सिद्धा विद्या-धराश्चैव गन्धर्वाः किन्नरास्तथा । गुह्यका भुजगा यक्षा ये चान्ये स्वर्गवासिनः । ब्रह्माणमग्रतः कृत्वा शङ्करं च नरा-धिप । ते ययुर्हतविक्रान्ताः क्षीराब्धेस्तटमुत्तमम्'** [४७.११–१३] इति नारसिंहे ॥ ५६ ॥ त्वमेक एव सर्वस्येष्टे । यतः परमः सर्वोत्तमः । अत एव न परतन्त्रः । नाप्यतन्त्रः । किन्त्वात्मतन्त्रः । आदिः जगतः सृष्टेः पूर्वमपि वर्तमानः, जगत्कारणं च । अन्तः जगतः प्रळयेऽपि वर्तमानः, जगदन्तकश्च । **'अन्वयव्यतिरेकाभ्यां यत् स्यात् सर्वत्र सर्वदा'** [२.९.३५] इति हि भागवते । त्वमेवास्मदादिकं सर्वं जगत् स्वस्वकार्येषु नियुनङ्क्षि । अग्र्या अतीता अम्बुजोद्भवाः, चरमा आगामिनश्च वर्तमानश्च । वितेनिरे, वितनिष्यन्ते, वितनुते च । ये चान्ये रुद्रादयस्तेऽपि तथेति किमु वक्तव्यम् ॥ ५७ ॥

१. 'जगतां नि–'

**मनुष्यमानात् त्रिशतं सषष्टिकं दिवौकसामेकमुशन्ति वत्सरम् ।**
**द्विषट्सहस्रैरपि तैश्चतुर्य्युगं त्रेतादिभिः पादश एव हीनैः ॥ ५८ ॥**

**सहस्रवृत्तं तदहः स्वयम्भुवो निशा च तन्मानमितं शरच्छतम् ।**
**त्वदाज्ञया स्वाननुभूय भोगानुपैति सोऽपि त्वरितस्त्वदन्तिकम् ॥ ५९ ॥**

---

मनुष्यमानाद् वत्सराणां त्रिशतं सषष्टिकं दिवौकसामेकं वत्सरमुशन्ति अभिप्रयन्ति कालविदो व्यासादयः । त्रिवार-मावृत्तं शतं त्रिशतम् । द्विषट्सहस्रैरपि तैर्वत्सरैश्चतुर्युगमुशन्ति । तथाच मनुष्यमानेन चतुर्युगगणना–१२,०००x३६०=४३,२०,००० मानुषवत्सराः । अथ चतुर्णां युगानां वत्सरविभागमाह– त्रेतादिभिः पादश एव हीनैः । कृतस्य वत्सरा एकं मानमिति कृत्वा ततस्त्रेतादिषु क्रमशः पादोनता । तथा चायं युगानां विभागः–कृतयुगे ४,८०० वत्सराः । त्रेतायुगे ३,६०० वत्सराः । द्वापरयुगे २,४०० वत्सराः । कलियुगे १,२०० वत्सराः । संहत्य १२,००० वत्सराः ।

तथाच कृतयुगे मानुषमानेन – ४८००x३६० = १७,२८,००० वत्सराः ।
त्रेतायुगे ,, – ३६००x३६० = १२,९६,००० वत्सराः ।
द्वापरयुगे ,, – २४००x३६० = ८,६४,००० वत्सराः ।
कलियुगे ,, – १२००x३६० = ४,३२,००० वत्सराः ।

संहत्य ४३,२०,०००वत्सरा इति । अत्र कृते ८०० वत्सराः [२,८८,०००मा.वत्सराः] पूर्वोत्तरसन्धिकालः । एवं त्रेतायां ६०० वत्सराः [२,१६,०००मा.व.] । द्वापरे ४००वत्सराः [१,४४,००मा.व.] । कलौ च २०० वत्सराः [७२,०००मा.व.] इति कालज्ञाः ॥ ५८ ॥ सहस्रवारमावृत्तं चतुर्युगं स्वयम्भुवोऽहर्दिनमुशन्ति । तथाहि गणना–४३,२०,०००x१०००=४३२,००,००,०००वत्सरा ब्रह्मणो दिवा । तावती पुनर्निशा । संहत्य दिवानिशम्–८६४,००,००,००० मानुषवत्सरा ब्रह्मणो दिनमुच्यते । अष्टौ वृन्दानि, षडर्बुदानि, चतस्रः कोटयः । तथाहि प्राचां गणनाक्रमः– **'एकं दश शतमस्मात् सहस्रमयुतं ततः परं लक्षम् । प्रयुतं कोटिमथार्बुदवृन्दे खर्वं निखर्वं च । तस्मान्महासरोजं शङ्कं सरितां पतिं तथैवान्तम् । अर्धं परार्धमाहुर्यथोत्तरं दशगुणं तथा ज्ञेयम्'** इति । तथा हि सङ्ख्यानम्–

| | | | |
|---|---|---|---|
| एकम् | १ | दश | १० |
| शतम् | १०० | सहस्रम् | १००० |
| अयुतम् | १०००० | लक्षम् | १००००० |
| प्रयुतम् | १०००००० | कोटिः | १००००००० |
| अर्बुदम् | १०००००००० | वृन्दम् | १००००००००० |
| खर्वम् | १०००००००००० | निखर्वम् | १००००००००००० |

**त्वया पुरा कर्ण्णपुटाद् विनिर्म्मितौ महासुरौ तौ मधुकैटभाख्यौ ।**
**प्रभञ्जनावेशवशात् तवाऽज्ञया[1] बलोद्धतावाशु जले व्यवर्द्धताम्[2] ॥ ६० ॥**

**त्वदाज्ञया ब्रह्मवरादवद्ध्यौ चिक्रीडिषासम्भवया मुखोद्गतान् ।**
**स्वयम्भुवो वेदगणानहार्षतां तदाऽभवस्त्वं हयशीर्ष ईश्वरः ॥ ६१ ॥**

---

| | | | |
|---|---|---|---|
| महापद्मम् | १०००००००००००० | शङ्खः | १००००००००००००० |
| समुद्रः | १०००००००००००००० | अन्तः | १००००००००००००००० |
| अर्धम् | १०००००००००००००००० | परार्धम् | १००००००००००००००००० |

अनियतश्चायं नामनिर्देशः । अन्यान्यग्रन्थेष्वन्यान्यानि नामानि भवन्ति । तदिदं परार्द्धं च ब्रह्मणः परार्द्धकालादधिकम् । अतोऽन्यादृशी ब्रह्मणो वयोगणना भवति । गणितज्ञानां परार्द्धमष्टादशस्थानकं भवति । ब्रह्मणः परार्द्धं तु पञ्चदशस्थानकम् । ब्रह्मणो हि दिनमानेन तस्याऽयुर्मानमपि निश्चीयेत । तद् यथा– ८,६४,००,००,०००x३६०x१००= ३१,१०४,००,००,०००,०००मानुषवत्सराः। अयमेव परकाल इति शास्त्रेषु व्यपदिश्यते। तेन १५,५५२,००,००,०००, ०००मानुषवत्सरा ब्रह्मणः परार्द्धकालः ॥ ५९ ॥ देवैः कृतभगवत्स्तुतिव्याजेन हयग्रीवावतारकथां प्रस्तौति– त्वया पुरा कर्णपुटात् । कर्णाख्यः पुटः कर्णपुटः । पत्रादिनिर्मितः मध्येखातः पात्राकारः संस्थानविशेषः पुट इत्युच्यते । 'ದೊನ್ನೆ' इति भाषायाम् । स एव वेत्रादिनिर्मितः 'पुटी' इत्युच्यते । 'ಬುಟ್ಟಿ' इति भाषायाम् । **'अथ तस्य प्रसुप्तस्य देवदेवस्य शार्ङ्गिणः । श्रोत्राभ्यामपतत् तोये स्वेदबिन्दुद्वयं नृप । मधुकैटभनामानौ तस्माज्जातौ महासुरौ । महाकायौ महावीर्यौ महाबलपराक्रमौ'** [३७.३–४] इति नारसिंहे । मदयतीति मधुः काममयः । येन महान्तोऽपि कीटवदल्पा भान्ति स कीटभः क्रोधः । कैटभः क्रोधमयः । तवाऽज्ञया प्रभञ्जनो मधुकैटभाववाविवेश । तदावेशेन तौ बलोद्धतावास्ताम् । एतेन **'तौ विवेश स्वयं वायुर्ब्रह्मणा साधु चोदितः'** [स.प.४४.१०] इत्यर्घाहरणवचनं गदितार्थम्–ब्रह्मणा नारायणेन तदाज्ञया चोदित इति । व्यवर्धताम् । विष्वगवर्द्धेताम् । सेयं वृद्धिरपि भगवदिच्छानिमित्ता वाय्वावेशनिमित्ता चेति परस्मैभाषा । **'त्वां वर्धन्तु नो गिरः'** [ऋ.सं.१.५.८] इति, **'ईजानं देवावश्विनावभि सुम्नैरवर्धताम्'** [१०.१३२.१] इत्यादि चर्ग्वेदे ॥ ६० ॥ त्वदाज्ञयैव तयोर्ब्रह्मणा वरदानं च । नहि कस्यचित् स्वाच्छन्द्यं नाम । सा चाऽज्ञा भगवतः क्रीडारूपा । सा च क्रीडा स्वभावोऽस्य । **'देवस्यैषः स्वभावोऽयम्'** इति श्रवणात् । चिक्रीडिषयैव कर्णपुटाद् विनिर्मितौ । कर्णमलोत्थाविति लौकिकी भणतिभङ्गी । **'तौ कर्णमलसम्भूतौ विष्णोस्तस्य महात्मनः'** [स.प.४४.८] इति । कर्णपुटात् घर्मेणेव बिन्दुद्वयमपतत् । एकेन मधुर्बभूव । अपरेण कैटभ इत्यर्थः । **'पूर्वमेव च पद्मस्य पत्रे सूर्यांशुसप्रभे । नारायणकृतौ बिन्दू अपामास्तां गुणोत्तरौ । तावपश्यत् स भगवाननादिनिधनोऽच्युतः । एकस्तत्राभवद् बिन्दुर्मध्वाभो रुचिरप्रभः । स तामसो मधुर्जातस्तदा नारायणाज्ञया । कठिनस्त्वपरो बिन्दुः कैटभो राजसस्तु सः'** [शां.प.३५७.२४–६] इति मोक्षधर्मेषु । वेदगणान् वेदमानिदेवगणान् । अहार्षताम्, अहार्ष्टाम् । अकारप्रश्लेषेणापराधस्याक्षम्यतामाह ।

---

१. '–वशात् त्वदाज्ञया'। २. 'जलेऽभ्यवर्धताम्'

**आहृत्य वेदानखिलान् प्रदाय स्वयम्भुवे तौ च जघन्थ दस्यू ।**
**निष्पीड्य तावूरुतळे कराभ्यां तन्मेदसैवाऽशु चकर्त्थ मेदिनीम् ॥ ६२ ॥**

**एवं सुराणां च निसर्गजं बलं तथाऽसुराणां वरदानसम्भवम् ।**
**वशे तवैतद् द्वयमप्यतो वयं निवेदयामः पितुरेव तेऽखिलम् ॥ ६३ ॥**

**इमौ च रक्षोधिपती वरोद्धतौ जहि स्ववीर्य्येण नृषु प्रभूतः[१] ।**
**इतीरिते तैरखिलैः सुरेश्वरैर्बभूव रामो जगतीपतिः प्रभुः ॥ ६४ ॥**

**स कश्यपस्यादितिगर्भजन्मनो विवस्वतस्तन्तुभवस्य भूभृतः ।**
**गृहे दशस्यन्दननामिनोऽभूत् कौसल्यकानाम्नि तदर्त्थिनेष्टः ॥ ६५ ॥**

यतस्त्वमेवेश्वरः समर्थः मधुकैटभयोर्हनने, वेदगणप्रत्याहरणे च ॥ ६१ ॥ **'कृत्वा हयशिरोरूपं हत्वा तु मधुकैटभौ । ब्रह्मणे तेऽर्पिता वेदास्तेन सत्येन मोक्षय'** [भ.प.७२.७७] इति बलिवचनं हरिवंशे । **'तौ दानवौ हरिर्हत्वा कृत्वा हयशिरस्तनुम् । पुनः प्रवृत्तिधर्मार्थं तामेव विदधे तनुम्'** [शां.प.३५७.७२] इति च मोक्षधर्मेषु । **'ओं नमो वाजिशीर्षाय मधुकैटभघातिने । महोदधिजलस्थाय वेदाहरणकारिणे'** [५९.५५] इति ब्राह्मे । वेददस्यू । मेदसैवाशु चकर्थ मेदिनीम् । मधुकैटभमेदस्वतीत्येव चैनां मेदिनीमाहुः । कामक्रोधौ हि मेदिन्यां प्रभवतः । **'दैत्ययोर्मेदसा च्छन्ना सर्वा राजन् वसुन्धरा । ततःप्रभृति कौन्तेय मेदिनीति स्मृता मही'** [स.प.४४.२८] इति च । मधुकैटभौ मत्स्यरूपेण हताविति नरसिंहपुराणे । तच्च **'व्यत्यासः प्रातिलोम्यं च'** इत्युक्तनयेनेति स्फुटम् । दुष्टानां मदं हर्षं दर्पं वा स्यतीति हयग्रीवोऽपि हि मत्स्यः । सर्वेऽप्यवताराः सर्वपदवाच्याश्च । निरन्तरत्वात् । स्वयं च सदा माद्यतीति मत्स्यः । **'मदेः स्यन्'** [स.कं.२.३.१५] इति भोजः । अत एवोपरिष्टाद् स्फुटमुच्यते–**'तौ युध्वा सुचिरं तेन दानवौ मधुकैटभौ । हतौ शार्ङ्गविनिर्मुक्तैः शरैः कृष्णेन दुर्मदौ'** [न.पु.३७.३२] इति ॥ ६२ ॥ अस्मत्पितुर्जगत्पितुस्तव सविधे ॥ ६३ ॥ इमौ पौलस्त्यौ रक्षोधिपती रावणकुम्भकर्णौ । ब्रह्मवरस्याभङ्गेन तौ हन्तुं नृषु प्रभूतः प्रादुर्भूतः । हननक्रियातः पूर्वकालसम्बन्धः क्त्वार्थः । प्रादुर्भूय जहीत्यर्थः । तद्यथा–विश्रान्तो गच्छ । विश्रम्य गच्छेत्यर्थः । उदूढो रमस्व । उदुह्य रमस्वेत्यर्थः ॥ ६४ ॥ कश्यपस्य सकाशात् अदितेर्गर्भे जातो विवस्वान् । तस्य तन्तौ वंशे भवः । दशस्यन्दननामा भूभृत् । तस्य कौसल्या नाम गृहं भार्या । तत्र प्रादुरभूत् । तदर्थिना पुत्रार्थिना दशरथेन पुत्रेष्टिपूर्वेणाश्वमेधेनेष्टः । यद्यपि दशस्यन्दननाम्न इति पर्याप्तम् । अथापि नामिन इत्याह । तेनैतदाह, यथा पूर्वमहार्षामिति वक्तव्येऽहार्षतामित्याह । एवमिहापि नाम्न इति वक्तव्ये नामिन इत्याह । दशरथनाम तस्मिन् सार्थकतया प्रशस्तमासीदिति । तेनैतदपि सूचयामास नामन्शब्दाच्च

१. 'प्रजातः'

**तदाज्ञया देवगणा बभूविरे पुरैव पश्चादपि तस्य भूम्नः ।**
**निषेवणायोरुगुणस्य वानरेष्वथो नरेष्वेव च पश्चिमोद्भवाः ॥ ६६ ॥**

**स देवतानां प्रथमो गुणाधिको बभूव नाम्ना हनुमान् प्रभञ्जनः ।**
**स्वसम्भवः केसरिणो गृहे प्रभुर्बभूव वाली स्वत एव वासवः ॥ ६७ ॥**

---

प्राशस्त्येऽर्थ उपधालोपेन इनिठनौ भवत इति। तेनात्र चत्वारि रूपाणि भवन्ति–दशरथनामा, दशरथनामवान्, दशरथनामी, दशरथनामिक इति । अत एव पवित्राङ्गुलिमनामिकां वदन्ति । सोऽयं दशरथो वैवस्वतमनुरित्येके । **'भविष्यदन्तरे भूत्वा मनुर्वैवस्वतो भवान् । पुनर्दशरथो भूत्वा त्वमेवासि पिता मम'** इति वामनवचनेन ते स्वपक्षं समर्थयन्ते । सम्प्रति तु वामने नेदं वचनमुपलभ्यते । स्वायम्भुवमनुरिति सम्प्रदायविदः । तथाहि स्मर्यते–**'अस्याभूत् प्रथमं जन्म मनोः स्वायम्भुवस्य च । रघूणामन्वये पूर्वं राजा दशरथो ह्यभूत्'** [उ.खं.२४२.८–९] इति पाद्मे । कर्तुरनिर्णयेऽप्यविरोधादंशावतारवचनमपि संवादितयाऽऽदीयेत–**'राजा दशरथः पूर्वं मनुः स्वायम्भुवः स्मृतः'** [३९] इति । **'काश्यपस्य वरो दत्तस्तपसा तोषितेन मे । याचितः पुत्रभावाय तथेत्यङ्गीकृतं मया । स इदानीं दशरथो भूत्वा तिष्ठति भूतले'** [अ.रा;बा.कां.२.२५–६] इत्यध्यात्मरामायणवचनं त्वर्वाचीनत्वात् सन्दिग्धप्रामाण्यम् । अथापि तमेतमर्थं कटाक्षयतीव–**'कश्यपस्यादितिगर्भजन्मनः'** इति वदन्नाचार्यः । कश्यपवंशजत्वात् सोऽपि क्वचित् कश्यप उच्यत इत्यर्थः । अन्यथा विवस्वतः कश्यपाददितिजत्वं सिद्धमिति तद्विशेषणं नातीवोपयुक्तम् । यदि साक्षात् कश्यपत्वं दशरथस्य ग्रन्थकृदभ्यमनिष्यत तदा **'कश्यपस्य दशास्यन्दननामिनः'** इत्येवावक्ष्यत् । नतु परम्परया सूर्यविशेषणतया । एवं विवस्वतस्तन्तुभवत्वादेव क्वचिद् वैवस्वतो मनुरित्युच्यते । एवं विवक्षाभेदेन बहुविधा व्याहारा भवन्ति । वस्तुतस्तु स्वायम्भुवो मनुरिति प्रसिद्धिरेव युक्तेति । कुस्यन्ति परस्परं श्लिष्यन्तीति कोसलाः । कुस श्लेषणे । कुसेर्लः प्रत्यय इति वैयाकरणाः । तेषां राजाऽपि कोसलः । कोसलराजपुत्री कौसल्या । कौसल्यकेत्यनुकम्पायां कन् । भूत्वाऽपि भगवज्जननी पुत्रवियोगेन दुःखमनुबभूवेत्यनुकम्पते ॥ ६५ ॥ बभूविरे इति सूचितां क्रियाफलस्याऽत्मगामितामाह–तस्य भूम्नः परिपूर्णस्य नितरामवतारेऽपि सेवनाय । पुरैव केचिद् बभूविरे । केचित् पुराऽपि पश्चादपि । तदेव विवृणोति–वानरेषु पुरैव । अथो इति पक्षान्तरे नरेष्वेव पुराऽपि पश्चादपि । नरेषु पश्चिमोद्भवा लक्ष्मणाद्या एव च मुख्याः, न पूर्वोद्भवा दशरथाद्या इत्याधिक्यवचनश्चकारः । **'समुच्चये तथाऽऽधिक्ये न्यूनत्वे चः प्रयुज्यते'** इति शब्दनिर्णयवचनम् ॥ ६६ ॥ अथ देवानां भूमौ प्रादुर्भावमाह– स देवतानामित्यादिना । भक्तानां जन्मप्रभञ्जनः स्वयं केसरिणो भार्यायां बभूव । तथाहि वाल्मीकीये– **'सूर्यदत्तवरः स्वर्णः सुमेरुर्नाम पर्वतः । तत्र राज्यं प्रशास्त्यस्य केसरी नाम वै पिता । तस्य भार्या बभूवैषा ह्यञ्जनेति परिश्रुता । जनयामास तस्यां वै वायुरात्मजमुत्तमम्'** [उ.कां.३५.१९–२०] इति । **'अञ्जनात्वेन सञ्जाता मञ्जुला पुञ्जकस्थली'** [सं.रा;कि.कां.८.६१] इति पण्डिताचार्यवचनम् । रेतःसेकं योनिद्वारा प्रवेशं च विनाऽपि सम्भवितुं प्रभवतीति प्रभुः । तर्हि कथं सम्बभूव? स्वसम्भवः । स्वतन्त्रभगवदिच्छया स्वयमेव सम्बभूव । व्यवहारमात्रं केसरिणः पितृत्वं नाम । रेतःसिचं हि पितरमाहुः । नात्र रेतःसिग्योगः । नापि योनेः शरीरम् । पवमानस्पर्शमात्रेण किलाञ्जना

**सुग्रीव आसीत् परमेष्ठितेजसा युतो रविः स्वात्मत एव जाम्बवान् ।**
**य एव पूर्वं परमेष्ठिवक्षसस्त्वगुद्भवो धर्म्म इहाऽस्यतोऽभवत् ॥ ६८ ॥**

**य एव सूर्य्यात् पुनरेव सञ्ज्ञया नाम्ना यमो दक्षिणदिक्प आसीत् ।**
**स जाम्बवान् दैवतकार्य्यदर्शिना पुरैव सृष्टो मुखतः स्वयम्भुवा ॥ ६९ ॥**

---

सुषुवे । रुजां भञ्जनाच्च प्रभञ्जनः । एतेन यत् क्वचिद्धनुमतो रुद्रांशत्वमुच्यते तदपि दत्तोत्तरम् । **'रुजां द्रवणतो रुद्रो वायुः'** इति ह्यृग्भाष्ये । ननु नेदं सम्भवति । **'यो वै चैकादशो रुद्रो हनूमान् स महाकपिः । अवतीर्णः साहायार्थं विष्णोरमिततेजसः'** [स्कां.पु;माहे.खं;के.खं८.१००] इति निरवकाशस्कान्दवचनेन तस्य शिवावतारतानिश्चयात् । रुद्रा ह्येकादश प्रसिद्धाः । न वायव इति । अहो असुरावेशमहिमा ते । एकादश रुद्रा इति प्राणा एवोच्यन्ते । दश प्राणा हीन्द्रियमानिनः । अयं प्राणानां प्राण एकादश इति । प्राणाद्या नागाद्याश्च वा दश प्राणाः । अन्यथा निरवकाशं वायुतनयत्ववचनं कुप्यति । अस्मत्पक्षे तु सर्वाविरोध इति न कोऽपि दोषः । **'मारुतस्याऽत्मजः श्रीमान् हनुमान् नाम वानरः । वज्रसंहननोपेतो वैनतेयसमो जवे'** [वा.रा.१७.१६] इति बालकाण्डे । **'अनिलस्य च पुत्रोऽयं हनुमानिति विश्रुतः'** [३०.२४] इति युद्धकाण्डे । स्पर्शमात्रेणाऽत्मप्रभं सुतं जनयतीति च स प्रभञ्जनः । अथ कथं हनुमान्? वज्रायुधताडनेऽप्यक्षुण्णहनुमानिति । तथाहि रामायणे–**'एवमाधावमानं तु नातिक्रुद्धः शचीपतिः । हस्तान्तादतिमुक्तेन कुलिशेनेभ्याताडयत् । ततो गिरौ पपातैष इन्द्रवज्राभिताडितः । पवमानस्य चैतस्य वामो हनुरभज्यत'** [उ.कां.३५.४७] इति । 'अभज्यत?' इति काकुप्रश्नः । नाभज्यतेत्यर्थः । **'भङ्गे प्रसक्तेऽपि न भङ्गमाप हनुः शिशोर्यद्धनुमानतोऽयम्'** [सं.स;कि.कां.१.२३] इति सङ्ग्रहरामायणे । **'मत्करोत्सृष्टवज्रेण हनुरस्य यथाऽहतः । नाम्ना वै कपिशार्दूलो भविता हनुमानिति'** [३६.११] इति वाल्मीकीये । बाह्यमिदं निर्वचनम् । आन्तरं चेदं भवति–हनुरिति हिंसा । हनुरिति गतिः । हनुरिति ज्ञानम् । शत्रूणां हिंसकः, स्वयमप्रतिहतगतिरनूनज्ञानश्च । अथ चासतां हिंसकः सतां मतिदो गतिदश्च । वासवोऽपि स्वत एव विना गर्भवासं वाली बभूव ॥ ६७ ॥ एवं रविरपि स्वात्मत एव सुग्रीव आसीत् । योगनिरतस्य चतुर्मुखस्य नेत्राभ्यां रसोऽस्रवत् । तस्मिन्नश्रुकणे कश्चन वानरः सम्बभूव । स कदाचिन्मेरुशिखरे प्रसन्नसलिलं सरो ददर्श । सरसि च स्वस्य प्रतिबिम्बम् । स चापलात् तत्राप्लुत्योत्थितः सपदि मनोज्ञरूपा तरुणी बभूव । तामिन्द्रश्चकमे । आदित्यश्च । इन्द्रस्य स्कन्नं रेतस्तस्याः शिरसि पतितम् । आदित्यस्य च ग्रीवायाम् । वालेषु पतिते बीजे वाली नाम बभूव । ग्रीवायां पतिते सुग्रीवः । तस्यां निशायां व्युष्टायां स पुनर्वानररूपं प्रतिपेदे । यमेनमृक्षरजसं प्राहुरित्युत्तररामायणे कथा सम्प्रति पठ्यते । बहवः पुनरेतमध्यायं प्रक्षिप्तमाहुः । **'वानरेन्द्रं महेन्द्राभमिन्द्रो वालिनमूर्जितम् । सुग्रीवं जनयामास तपनस्तपतां वरः'** इति च बालकाण्डे [१७.१०] । **'अथर्क्षरजसः पुत्रो युधि राजा सुदुर्जयः'** इति युद्धकाण्डे [३०.२०] । स्वात्मत एव च जाम्बवान् । **'परमेष्ठितेजसा'** इति पूर्वप्रस्तुतः स्वात्मा स्वयम्भूः परमेष्ठी । तदेव विवृणोति– य एव पूर्वम् । परमेष्ठिवक्षस्त्वचा धर्मः प्रथमं बभूव । स एव पुनः सूर्याद् यमनामा बभूव । स एव स्वयम्भुव आस्यात् जाम्बवानिति बभूव । तथाहि ब्रह्मवचनं वाल्मीकीये–**'पूर्वमेव मया सृष्टो जाम्बवानृक्षपुङ्गवः । जृम्भमाणस्य सहसा**

**ब्रह्मोद्भवः सोम उतास्य सूनोरत्रेरभूत् सोऽङ्गद एव जातः ।**
**बृहस्पतिस्तार उतो शची च शक्रस्य भार्य्यैव बभूव तारा ॥ ७० ॥**

**बृहस्पतिर्ब्रह्मसुतोऽपि पूर्वं सहैव शच्या मनसोऽभिजातः ।**
**ब्रह्मोद्भवस्याङ्गिरसः सुतोऽभून्मारीचजस्यैव शची पुलोम्नः ॥ ७१ ॥**

**स एव शच्या सह वानरोऽभूत् स्वसम्भवो देवगुरुर्बृहस्पतिः ।**
**अभूत् सुषेणो वरुणोऽश्विनौ च बभूवतुस्तौ विविदश्च मैन्दः ॥ ७२ ॥**

---

**मम वक्त्रादजायत'** [बा.कां.१७.७] इति । **'जृम्भमाणस्य मे वक्त्राज्जाम्बवानुदपद्यत । ऋक्षो रक्षोविनाशार्थं धर्मो धर्मधरः पुरा'** [सं.रा;बा.कां ३.१४] इति सङ्ग्रहरामायणे । कथं जाम्बवान्? जम्बूफलं जाम्बवमुच्यते । जाम्बूनदं जाम्बवमुच्यते । जाम्बवं फलमस्त्यस्य भोज्यमिति जाम्बववान् । जम्बूफलसदृशवर्णत्वात्, स्वर्णवर्णत्वाद्वा जाम्बववान् । जाम्बववानेव जाम्बवान् । **'लोपः समाने'** इत्येकवकारलोपः । ननु जाम्बवान् गद्गदसुत इति, धूम्रनाम्न ऋक्षस्यानुज इति च श्रूयते । तथाहि वाल्मीकीये– **'गद्गदस्याथ पुत्रोऽयं जाम्बवानिति विश्रुतः'** [यु.कां.३०.२०] इति, **'सर्वर्क्षाणामधिपतिर्धूम्रो नामैष यूथपः । यवीयानस्य तु भ्राता पश्यैनं पर्वतोपमम् । भ्रात्रा समानो रूपेण विशिष्टस्तु पराक्रमैः । स एष जाम्बवान्नाम–'** [२७.९–११] इति च । सत्यं श्रूयते । अयमाशयो वक्तव्यः, यद्यर्वाचीनैर्न प्रक्षिप्तः–चतुर्मुखमुखान्निःसृतं जाम्बवन्तमृक्षराजो गद्गदः पुत्रत्वेन वरयामास । तेन स गद्गदपुत्रो बभूव । गद्गदस्य पूर्वमेव धूम्रो नाम पुत्र आसीत् । तेन जाम्बवान् धूम्रानुजो बभूव । वालिस्यालस्तारोऽपि यविष्ठो गद्गदपुत्र इति सम्प्रति पठ्यते । **'गद्गदस्यैव पुत्रोऽन्यो गुरुपुत्रः शतक्रतोः'** [यु.कां.३०.२२] इति हि रामायणे प्रचलितः पाठः । अगम्यः प्रक्षेपमहिमा । सुषेणतनयो हि तारः ॥ ६८– ६९ ॥ आदौ ब्रह्मोद्भवः सोमः । पुनरस्य ब्रह्मणः पुत्रादत्रेरनसूयायामभूत् । **'अत्रेः पत्न्यनसूया त्रीन् जज्ञे सुयशसः सुतान् । दत्तं दुर्वाससं सोममात्मेशब्रह्मसम्भवान्'** [४.१.१५] इति हि भागवते । ननु कथमनसूयायां जज्ञे? **'अत्रिनेत्रसमुद्भवः'** इति हि तं स्तुवन्ति । सत्यम् । अत्रिनेत्रादेवानसूयागर्भं विवेश, न रेतोद्वारेति हि तन्महिमानं स्तुवन्ति । अतो न विरोधः । **'वासवो वालिनामाऽऽसीदिन्दुस्तत्तनयोऽऽङ्गदः'** [सं.रा;बा.कां३.१७] इति सङ्ग्रहरामायणे । कथमङ्गदः? भगवत्सेवाकर्मणाऽङ्गं दायति शोधयतीति । दैप् शोधने । **'बृहस्पतिस्त्वजनयत् तारं नाम महाहरिम्'** [बा.कां.१७.११] इति च । अयं सुषेणतनयः । उतो अनन्तरं तदनुजात्वेन । वालिनः शक्रावतारत्वात् शक्रस्य भार्यैव तारा नाम वालिभार्या बभूव ॥ ७० ॥ पूर्वमप्येतौ सहजावेव, अत एव समानकक्ष्यौ चेत्याह– सहैव शच्या ब्रह्मणो मनसोऽभिजातः । मनोभिमानी च जातः । अतः पूर्वं ब्रह्मसुतोऽपि ब्रह्मसुतस्याङ्गिरसः सुतत्वेन पुनरभूत् । शची च पुलोम्नः सुताऽभूत् । कोऽयं पुलोमा? आह–मारीचजस्य । मरीचिपुत्रो मारीचः काश्यपः । तस्य सुतोऽयं पुलोमा । यं दक्षतनया दनुः सुषुवे । काश्यपाज्जात इन्द्रस्तस्य पौत्रीमुवाह ॥ ७१ ॥ बृहस्पतिरपि स्वसम्भव एव वानरो बभूव ।

**ब्रह्मोद्भवौ तौ पुनरेव सूर्याद् बभूवतुस्तत्र कनीयसस्तु ।**
**आवेश ऐन्द्रो वरदानतोऽभूत् ततो बलीयान् विविदो हि मैन्दात् ॥ ७३ ॥**

**नीलोऽग्निरासीत् कमलोद्भवोत्थः कामः पुनः श्रीरमणाद् रमायाम् ।**
**प्रद्युम्ननामाऽभवदेवमीशात् स स्कन्दतामाप स चक्रतां च ॥ ७४ ॥**

**पूर्वं हरेश्चक्रमभूद्धि दुर्गा तमःस्थिता श्रीरिति यां वदन्ति ।**
**सत्वात्मिका शङ्खमथो रजःस्था भूर्नामिका पद्ममभूद्धरेर्हि ॥ ७५ ॥**

---

विना रेतःसेकम् । वरुणादनन्तरं अश्विनौ च बभूवतुः । यौ बभूवतुस्तौ नासत्यदस्रौ मैन्दो विविद इति च बभूवतुः । तौ त्रिदशानां भिषग्वराविति प्रसिद्धाविति च । ननु विविदः कनीयान्, तत्कथं पूर्वनिर्देशः? कनीयस्त्वेऽपि पूर्वजातत्वात् पूर्वनिर्देशः । **'यमयोः पूर्वजातः कनीयान्'** इति हि वदन्ति । एतेनैव तयोर्यमळत्वं च सूचयामास । बलाधिकत्वाच्च विविदस्य पूर्वनिर्देश इति । तावश्विनावश्वरूपात् सूर्यात् अश्वरूपायां सञ्ज्ञायां पुनर्बभूवतुरित्यश्विनावुदितौ । मैन्दादधिकं बलं विविदो देवेभ्यो वव्रे । तदनुग्रहार्थमिन्द्रस्तमाविवेश । अधिकबलवरणादेव चासुरोऽपि तमाविवेश । येन कृष्णरामौ विरुरोध । बृहस्पतेस्तारायाश्च कपिजन्मनि जनकः सुषेणो वरुणात् जातोऽभूत् । **'वरुणो जनयामास सुषेणं नाम वानरम्'** [बा.कां.१७.१५४] इति । ननु युद्धकाण्डेऽन्यथा पठ्यते । तथाहि–**'सुषेणश्चापि धर्मात्मा पुत्रो धर्मस्य वीर्यवान्'** [३०.२३] इति । नात्र पूर्वोत्तरयोर्विरोधः शङ्क्यः । पवन एव स्वयं पवनतनयो बभूव । न तथा धर्म एव सुषेणो बभूव । किन्तु वरुणः सुषेणो बभूव । स च धर्मात् सम्बभूव । तद्यथा गजादयः स्वयं पञ्च प्राणा बभूवुः । धनदेन च सञ्जाता बभूवुरिति न कोऽपि दोषः । विविदस्यैव नामान्तरं द्विविद इति । **'सनीलमैन्दद्विविदाः सताराः–'** [६.५३] इति चोपरि । **'रूपद्रविणसम्पन्नावश्विनौ रूपसम्मतौ । मैन्दं च द्विविदं चैव जनयामासतुः स्वयम्'** [१७.१३] इति बालकाण्डे । **'मैन्दश्च द्विविदश्चोभौ बलिनावश्विसम्भवौ'** [३०.२६] इति युद्धकाण्डे । सावकाशमिदम् । **'मैन्दं च विविदं चैव', 'मैन्दश्च विविदश्चोभौ'** इत्यापि प्रतनः पाठः स्यादिति सम्भावनया रामायणवचनस्यानिर्णायकत्वात् । बादरायणवचनेन द्विविधं द्विविदस्य नामाऽसीदित्यवसीयते । तथाहि–भागवते सर्वत्र प्राचीनादर्शेषु विविदपदमेव पठ्यते–**'मुष्टिकारिष्टविविदपूतनाकेशिधेनुकैः'** [१०.३.१] इत्यादि । अत्र तु **'द्विविद'** इति पाठं छन्दोभङ्ग एव निरुणद्धि। **'नळनीलाङ्गदक्राथमैन्दद्विविदपालिता'** [ व.प.२८४.१९] इति भारते। तस्मादुभयविधमपि नाम प्रामाणिकमिति बोधयन्नाचार्यः स्वयमपि प्रयुयोज । कथं मैन्दः? कथं विविदो द्विविदो वा? मिन्दयति स्नेहशीलो भवतीति मिन्द एव मैन्दः । मिदि स्नेहने । मया ज्ञानेन इन्दति समर्थो भवतीति मेन्द एव मैन्दः । विविधा विदा विद्याऽस्येति विविदः । विशिष्य च द्विविधा स्वतन्त्रास्वतन्त्रविषया, ऐहिकी पारत्रिकी वेति द्विविदः ॥ ७२–३ ॥ **'पावकस्य सुतः श्रीमान् नीलोऽग्निसदृशप्रभः'** [बां.कां.१७.१२] इति च वाल्मीकीये । अग्निसदृशप्रभः रक्तवर्णो नीलवर्णश्च । सनत्कुमारत्वेन कमलोद्भवोत्थः कामः पुनः श्रीरमणात् प्रद्युम्न आसीत् । शिवाच्च स एव स्कन्दतामाप ॥ ७४ ॥ **'अजामेकां**

**गदा तु वायुर्बलसंविदात्मा शार्ङ्गश्च[1] विद्येति रमैव खड्गः ।**
**दुर्गात्मिका सैव च चर्म्मनाम्नी पञ्चात्मको मारुत एव बाणाः[2] ॥ ७६ ॥**

**एवं स्थितेष्वेव पुरातनेषु वराद् रथाङ्गत्वमवाप कामः ।**
**तत्सूनुतामाप च सोऽनिरुद्धो ब्रह्मोद्भवः शङ्खतनुः पुमात्मा ॥ ७७ ॥**

**तावेव जातौ भरतश्च नाम्ना शत्रुघ्न इत्येव च रामतोऽनु ।**
**पूर्वं सुमित्रातनयश्च शेषः स लक्ष्मणो नाम रघूत्तमादनु ॥ ७८ ॥**

---

**लोहितशुक्लकृष्णाम्'** इति श्रुतिं स्मारयन्नाह– पूर्वं हरेः । प्रद्युम्नाद्युत्पत्तेः पूर्वं प्रळयकालेऽपि । चक्रं कृष्णवर्णं तमोगुणेऽभिमन्तुं स्थिता दुर्गा । सत्वमानिनी श्रीः शुक्लवर्णं शङ्खम् । रजसि स्थिता भूर्नामिका लोहितवर्णं पद्ममिति । भूरिति रेफान्तमव्ययम् ॥ ७५ ॥ बलात्मा वायुर्गदा । संविदात्मा वायुः शार्ङ्गो नाम धनुः । कथं शार्ङ्गः? शृङ्गमुत्कर्षः । तेन शार्ङ्ग उत्कृष्टः । सर्वकार्मुकोत्तमः, सर्वायुधोत्तमः शार्ङ्गश्चापः, शार्ङ्गं वा चापम् । शृणातीति वा शार्ङ्गः । विद्याख्या रमा खड्गः । अत्र पुनर्विद्वांसो विवदन्ते । विद्येति विद्यामानिनी सरस्वती शार्ङ्ग इत्येकः पक्षः । विद्येति रमैव शार्ङ्गः खड्गश्चेत्यपरः । वायुः शार्ङ्गः, रमा खड्ग इति तृतीयः । मूलगतपदस्वारस्यं तृतीयं पक्षं कटाक्षयति । अथापि नैषां पक्षाणां महान् विरोधः । सरस्वतीनियम्यं वायुनियम्यं च हि भवति । सुतरां रमानियम्यम् । चर्मनाम्नी । यद्यपि मन्नन्तात् प्रातिपदिकात् ङीप् प्रत्ययो न भवतीति पाणिनिर्मन्यते–**'मनः'** [अ.सू.४.१.११] इति । अथाप्यनुपधालोपिन एवायं नियमः । तथा च बहुव्रीहौ नाम्न उपधालोपेन ङीप् स्यादेव । अत एव **'महानाम्नीनामुपसर्गानुपसृजति'** इत्यैतरेयब्राह्मणम् । एवं सामन् शब्दादपि, अबहुव्रीहावपि । अत एव छान्दसाः– साम्नी गायत्री, साम्नी बृहती' इत्यादीनि प्रयुञ्जते । प्राणोऽपानो व्यान उदानः समान इति पञ्चात्मको मारुत एव पञ्च बाणाः । पुत्र इव जनकोऽपि पञ्चबाणः । पञ्चैव असङ्ख्याता अपि भवन्ति ॥ ७६ ॥ वरादिति । भगवदङ्गसङ्गलौल्येन कृताभ्यर्थनो भगवान् प्रद्युम्नाय 'चक्रं मे भव' इति वरं ददौ । अतः स रूपान्तरेण रथाङ्गत्वमवाप । रथाङ्गमानित्वं च । प्रळयकाले दुर्गैव चक्रमासीत् । प्रद्युम्नादिसृष्टेरनन्तरं सोऽप्यवान्तरचक्रमानी बभूव । ततोऽनिरुद्धः पुरुषरूपः सन् रूपान्तरेण शङ्खतनुर्बभूव । पुरुषमानी सन् शङ्खमानी च बभूव ॥ ७७ ॥ पाद्मे पठ्यते–**'कैकेय्यां भरतो जज्ञे पाञ्चजन्यांशसम्भवः । सुमित्रा जनयामास लक्ष्मणं शुभलक्षणम् । शत्रुघ्नं च महाभागा देवशत्रुप्रतापनम् । अनन्तांशेन सम्भूतो लक्ष्मणः परवीरहा । सुदर्शनांशाच्छत्रुघ्नः सञ्जज्ञेऽमितविक्रमः'** [उ.खं. २४२.९४–९६] इति । **'सर्वेषामग्रजो रामो भरतस्तदनु स्मृतः । लक्ष्मणस्तदनु श्रीमान् शत्रुघ्नः सर्वतोऽवरः'** [पा.खं.५७.३३] इति च । तेन भरतः शङ्खात्मा शत्रुघ्नश्चक्रात्मेति प्रतीयते, भरतश्च लक्ष्मणाग्रज इति । अतो निर्णयमाह– तावेव जातौ । अत एवोपरि पाद्मे पठ्यते–**'अंशाभ्यां शङ्खचक्राभ्यां शत्रुघ्नभरतावुभौ'** [२४४.८८]

---

१. 'शार्ङ्ग च' २. 'बाणः ।'

इति । **'प्रद्युम्नो भरतो जज्ञे शत्रुघ्नो ह्यनिरुद्धकः । लक्ष्मणस्तु महाभागो स्वयं सङ्कर्षणः शिवः'** [ना.उ.भा.७५.५] इति चान्यत्र । यः कामः, यश्च तत्सुतोऽनिरुद्धः, पूर्वं ब्रह्मोद्भवः पुमात्मा पुंशरीरमानी, तावेव चक्रशङ्खमानिनौ जातौ । तावेव भरतशत्रुघ्नौ रामावतारे भ्रातरौ । तावेव कृष्णावतारे पुत्रपौत्रौ प्रद्युम्नानिरुद्धौ । रामतोऽनु रामादनन्तरम् । तयोः पूर्वं रघूत्तमादनु लक्ष्मण इति । पाद्मवचनं चानेन विवृतम् । भरतः लक्ष्मणश्च रामतोऽनु । तदनु तयोरनन्तरं शत्रुघ्न इति । व्यत्यासो नाम पुराणशैलीभेदोऽयमिति स्फुटं शास्त्रविदुषाम् । दुराग्रहग्रस्तानामविदुषां तु पौनःपुन्येन स्फुटतरं बोधनेऽपि यथार्थावधारणं न भवत्येव । यादृशी जीवयोग्यता तादृशं ग्रहणम् । भरतो लक्ष्मणाग्रज इति भावप्रकाशिकावचनं तु स्फुटं प्रक्षिप्तम् । सङ्ग्रहरामायणादिसर्वप्राचीनग्रन्थविरोधात् । वाक्यार्थानुपपत्तेश्च । ननु भरतस्य लक्ष्मणाग्रजत्वाभावे कथं रामस्य वनवासे भरतस्यैव राज्यं भविष्यतीत्याशा कैकेय्याः? नैवमाशा कदाऽप्यासीत् कैकेय्याः । अत एव भरतस्यैव राज्यमस्त्विति द्वितीयं वरं जग्राह । केचित् स्वप्नं पश्यन्ति– 'यदि लक्ष्मणो भरताग्रजः, रामादनन्तरमहमेव राज्ये नियोक्तव्य इति स प्रत्यवतिष्ठेत' इति । तदिदमाशामात्रम् । अनुजत्वमग्रजत्वं वा न प्रत्यवस्थानबीजम् । राज्याशा च प्रतीकारबुद्धिश्च हि तत्र बीजम् । यदि तदस्ति अनुजोऽपि प्रत्यवतिष्ठेत । यदि नास्ति नाग्रजोऽपि । नहि रामाशयविरुद्धं लक्ष्मणः कदाऽपि चिकीर्षेत् । एवं चिन्तनमपि पापहेतुः । ननु न वयं तथा चिन्तयामः । किन्तु कैकेयी तथा चिन्तयेदिति तर्कयाम इति । तदिदं कूपपतितस्य काशावलम्बनं नाम । कैकेयी नैवं चिन्तयेत्, लक्ष्मणो रामविरुद्धं न करोतीति स्फुटं जानन्ती । अत एव सोऽपि सह रामेण वनं गच्छत्विति न वरं जग्राह । नापि मन्थरा ग्राहयामास । प्रत्युत रीत्यन्तरेण भरतस्यैव राज्यक्रमं समर्थयामास– **'प्रत्यासन्नक्रमेणापि भरतस्यैव भामिनि । राज्यक्रमो निसृष्टस्तु तयोस्तावद् यवीयसोः'** [अ.कां.८.७] इति । तथाचायं वाल्मीकिवचनार्थः– लक्ष्मणस्य रामाद् यवीयसो नितान्तं रामानुगामित्वात्, शत्रुघ्नस्य भरताद् यवीयसो भरतानुगामित्वात् न तौ प्रतिरोद्धुमीशाते इति न तयोः सकाशाद् भयम् । अतो भरतस्यैव राज्यक्रमो निसृष्ट इति । अपिच युक्त्यन्तरमत्र मन्थरा स्मारयति । कौसल्यापुत्रस्य राज्याभावे द्वितीयमहिष्याः पुत्र एव राज्यमर्हति । कौसल्यातोऽनन्तरं प्रत्यासन्ना महिषी कैकेयी, न सुमित्रा । तेन प्रत्यासन्नक्रमेणापि भरतस्यैव राज्यक्रमो निसृष्टः । लक्ष्मणशत्रुघ्नयोः सुमित्रासुतत्वेन मातृक्रमेण यवीयस्त्वादिति । कथमन्यथा ज्येष्ठं भरतं विहाय लक्ष्मणमाहूय राम आह–**'राजा तरुणो भवाऽशु'** इति । तेषां पक्षे प्रत्यासन्नक्रमेण हि भरत एव यौवराज्यमर्हति । यदा लक्ष्मणो यौवराज्यं न स्वीचकार तदैव रामो भरताय तद्ददावित्याचार्यवचनं च लक्ष्मणस्यैवाग्रजत्वं स्फुटं प्रकटयतीति विभावनीयं विगतदुराग्रहैर्विद्वद्भिः । नास्त्यौषधं दुराग्रहस्य । एवं सङ्ग्रहरामायणविरोधात्[1], सर्वप्राचीनवचनविरोधाच्चैतदनादरणीयं दुराग्रहिणां दुर्मतम् । अपि च भगवत्पादेन रामादव्यवहितानन्तर्यसूचनायैव **'रघूत्तमादनु'** इति पुनरुक्तम् । अन्यथा **'रामतोऽनु'** इत्यनेनैवाऽनन्तर्यसिद्धौ पुनः **'रघूत्तमादनु'** इति वचनं व्यर्थम् । अस्मत्पक्षे तु **'रघूत्तमादनु'**, भरतशत्रुघ्नयोः **'पूर्वं सुमित्रातनयो लक्ष्मणो'** बभूवेति सार्थकं वचः । ननु वयमन्यथा

१. तथाहि सङ्ग्रहरामायणे बालकाण्डे– **'चैत्रे नवम्यां प्राक्पक्षे दिवा पुण्ये पुनर्वसौ । उदये गुरुगौरांशवोर्लग्ने कर्कटकाह्वये । मेषं पूषणि सम्प्राप्ते स्वोच्चस्थे ग्रहपञ्चके । आविरासीत् स्वकलया कौसल्यायाः परः पुमान्'** [३.२७–९] । **'अनन्तोऽनन्तपर्यङ्कः परिचर्यार्थमीशितुः । सर्पभेऽजनि सौमित्रिः कुळीरेऽभ्युदिते रवौ । चक्रायुधस्य यच्चक्रं दैत्यचक्रविदारणम् । तत्कामरूपं कैकेय्याः पुण्ये पुत्रत्वमाययौ । देवद्विड्जनजन्यघ्नः पाञ्चजन्यो व्यजायत । सुमित्रायाः सुतत्वेन स्वामिनः सेवनेच्छया ।**

व्याख्यास्यामः–**'यः पूर्वं शेषः स इदानीं लक्ष्मणो बभूव'** इति । अहो व्याख्यानपाटवम् । किमिदानीं शेषपदवीं परित्यज्य लक्ष्मणो बभूव, यतः पूर्वं शेष इत्युच्यते । पूर्वमपि शेषः, इदानीमपि शेषः, भविष्यति च शेष एव । तस्मात् तत्पक्षे

**चतुर्मूर्तेर्मुकुन्दस्य मूर्तिराद्याऽग्रतोऽभवत् । अन्येषु त्रिषु तिस्रोऽन्या आविशन्निति सन्मतम् । शतुघ्नस्त्वनिरुद्धोऽसौ प्रद्युम्नो भरतोऽभवत् । सङ्कर्षणस्तु संहारी लक्ष्मणोऽभवदत्र च'** [१.३.३६] इति । अत्र श्रीविश्वपतितीर्थीयं व्याख्यानम्–

'ननु वाल्मीकिरामायणादौ श्रीरामावतारानन्तरं भरतोत्पत्तिकथनात् तदनन्तरं च लक्ष्मणशत्रुघ्नयोरुत्पत्तिकथनाल्लक्ष्मणस्य भरतज्येष्ठत्वाङ्गीकारे तद्विरोध इति चेन्न । भिन्नमातृकयोः श्रीरामभरतयोरुत्पत्तिकथनानन्तरमेकमातृकयोः लक्ष्मणशत्रुघ्नयोरुक्ति-सौकर्याय जननकथनेऽपि तथोत्पत्तिक्रमो न विवक्षित इति ज्ञायते । अन्यथा **'ततो लक्ष्मणमासाद्य वैदेहीं च परन्तपः । अभ्य-वादयत प्रीतो भरतो नाम कीर्तयन्'** [यु.कां.१३०.३९] इति युद्धकाण्डान्तिमभागस्थवाल्मीकीयवाक्येनैव विरोधात् । **'इति लोकसमाक्रुष्टः पादेष्वस्य प्रसादयन् । रामस्य निपतिष्यामि सीताया लक्ष्मणस्य च'** [अ.कां.९९.१७] इत्ययोध्याकाण्डस्थ-भरतवाक्यविरोधाच्च । लवणासुरहननार्थं गमनसमये श्रीरामलक्ष्मणभरतानां क्रमेण शत्रुघ्नकृतप्रणामलक्षणवाल्मीकीयसिद्धलिङ्ग-विरोधाच्च । किञ्च यदि भरतो लक्ष्मणज्येष्ठः स्यात् तर्हि श्रीरामेण युवराजो भवेत्यभिधाय तेन च त्वत्पादसेवनादन्यन्नाऽकाङ्क्षित-मित्युक्ते सति कथं भरतोऽभिषिच्यते । नहि ज्येष्ठे सति कनिष्ठं प्रति तथा प्रश्नो युक्तः । लक्ष्मणप्रतिवचनं वा तथा युक्तम् । किञ्च पायसांशदानक्रमेणोत्पत्तिर्वक्तव्या । पायसांशस्य च कौसल्यायै प्रदानानन्तरमेव सुमित्रायै दशरथेन प्रदत्तत्वाल्लक्ष्मण-ज्येष्ठत्वमवश्यमभ्युपेयम् । उपक्रमोपसंहारानुसारेण मध्यस्थवाक्यार्थस्य निर्णेयत्वान्न वाल्मीकीयरामायणविरोधः । यत्तु दशरथेन पायसांशौ कौसल्यायै कैकेय्यै च साक्षाद् दत्तौ ताभ्यां चानन्तरमागतायै सुमित्रायै स्वांशौ विभज्यांशद्वयं दत्तमिति; तत्तु **'कौसल्यायै नरपतिः पायसार्धं ददौ तदा । अर्धादर्धं ददौ चापि सुमित्रायै नराधिपः । कैकेय्यै चापि शिष्टार्धं ददौ पुत्रार्थ-कारणात् । प्रददौ चावशिष्टार्धं पायसस्यामृतोपमम्'** [बा.कां.२७–८] इति वाल्मीकीयाननुसार्येव । यच्च लक्ष्मणशत्रुघ्नौ यमळावित्यतो न भरतस्य ज्यैष्ठ्यमित्युच्यते तच्च **'राज्ञः पुत्रा महात्मानश्चत्वारो जज्ञिरे पृथक् । गुणवन्तोऽनुरूपाश्च रुच्या प्रोष्ठपदोपमाः'** [बा.कां.१८.१६] इति तत्रत्यवाक्याननुसार्येव । न च लक्ष्मणस्य भरतज्येष्ठत्वे पुष्ये भरतजन्मोक्ति-विरोधः । मासभेदेनोपपत्तेः । नच पृथग्जन्मत्वे शत्रुघ्नस्य नक्षत्रानुक्तिदोषः । मासान्तराश्लेषायामेवोत्पन्न इत्यनुक्तिसम्भवात् । नचात्र ज्ञापकाभावः **'सार्पे जातौ तु सौमित्री'** [१८.१४] इत्युक्तेः । नचैवं **'वसिष्ठऋष्यशृङ्गाभ्यामनुज्ञानाद् ददौ हविः । कौसल्यायै सकैकेय्यै ह्यर्धमर्धं प्रयत्नतः । ततः सुमित्रा सम्प्राप्ता जगृहे पौत्रिकं चरुम् । कौसल्या तु स्वभागार्धं ददौ तस्यै मुदान्विता । कैकेयी च स्वभागार्धं ददौ प्रीतिसमन्विता । दशमे मासि कौसल्या सुषुवे पुत्रमद्वयम् । कैकेयी चाथ भरतमसूत कमलेक्षणम् । सुमित्रायां यमौ जातौ पूर्णेन्दुसदृशाननौ'** [अ.रा;बा.कां.३.३५–८] इत्यध्यात्मरामायणवाक्येन एतत्समानार्थपाद्मपुराणवाक्येन च विरोधो वाल्मीकीयवाक्यानामिति वाच्यम् । वाल्मीकीयोक्तस्यार्थस्य बहुकल्पानुसारित्वा-दन्यत्रोक्तस्यार्थस्य कल्पविशेषानुसारित्वादविरोध इति सर्वमनवद्यम् । एवञ्च ग्रन्थकारैराचार्यमतानुसारेण वाल्मीकीयरामायणानुसारेण यल्लक्ष्मणस्य भरतज्येष्ठत्वं बहुषु स्थलेषूच्यते तद् युक्तमेव' इति ।

सङ्ग्रहरामायणगता इमे च श्लोका अत्रानुसन्धेयाः– **'यापयामास भगवानाग्रतो भरताग्रजम् । रामः स्वयं पृष्ठतोऽयाज्जानकी मध्यतो ययौ'** [९.३८] इत्ययोध्याकाण्डे । **'सीताया लक्ष्मणस्यापि ववन्दे चरणावसौ'** [१५.५२] इति युद्धकाण्डे ।

व्यर्थमेव पूर्वपदम् । पूर्वमित्यस्य मूलरूपावस्थायामित्यर्थकरणेऽपि रामतोऽनु, रघूत्तमादनु इति द्विर्वचनस्य व्यर्थता गले रज्जुपाशायते । ननु प्रबलं दूषणान्तरं वर्तते– 'यमौ हि लक्ष्मणशत्रुघ्नौ । तन्मध्ये कथं भरतस्य जननम् । पुनर्वसौ रामजननम् । पुष्ये जातस्तु भरतः । आश्लेषायां लक्ष्मणशत्रुघ्नावित्यस्मत्पक्ष एव श्रेयान्' इति । अहो भगवान् भ्रमो न भवन्तमन्ततोऽपि मुञ्चति । न वाल्मीकिस्तौ यमावाह । नाप्याचार्यपादः । ननूक्तं रामायणे– **'अथ लक्ष्मणशत्रुघ्नौ सुमित्रा सुषुवे यमौ'** [बा.कां.१८.१३] इति । नहि स्वकपोलकल्पिताः पाठास्तत्वनिर्णयाय भवन्ति । **'सुमित्राऽजनयत् सुतौ'** इति सर्वव्याख्यानसम्मतः सर्वत्र प्रचुरश्च पाठः । अत एव रामायणे क्वापि तयोर्यमत्वस्य मुखतोऽकथनात् **'सार्पे जातौ तु सौमित्री'** इति द्विवचनेन यमत्वं सूच्यत इति कथञ्चिद् व्याचख्यौ माधवयोगीन्द्रः । ननु नैतद् युक्तम् । अध्यात्मरामायणविरोधात् । तथाहि तद्वचनम्–**'कैकेयी चाथ भरतमसूत कमलेक्षणा । सुमित्रायां यमौ जातौ पूर्णेन्दुसदृशाननौ'** [बा.कां.३.३८] इति । सत्यमुक्तम्, किं तेन? बहूनि किल भवादृशानां विभ्रमजनकानि रामायणानि भवन्ति । आनन्दरामायणमध्यात्मरामायणमद्भुतरामायणं वासिष्ठरामायणमित्यादीनि । तानि नातीव प्रतनानीति विदन्तो विदन्ति । पायसप्रविभागादिकं च बहुप्रमेयं रामायणादिविप्रतीपं तत्र पठ्यते । अद्वैतनिरूपणं चाध्यात्मरामायणादीनां प्रमुखमुद्देश्यम् । तत् तानि न शास्त्रज्ञाः प्रमाणत्वेन परिगणयन्ति । अनुपासितवृद्धानामप्रबुद्धानामेवैवंविधा विभ्रमविलासा भवन्ति । एतेनैव– **'सुमित्रातनयौ जातौ यमळौ द्वौ मनोहरौ'** [दे.भा.३.२८.५] इत्यादिपुराणान्तरवचनं च व्याख्यातम् । न केवलमध्यात्मरामायणादिकम्, प्रायो गोविन्दराजीयादीनि सर्वाण्यपि रामायणव्याख्यानानि भरतस्य लक्ष्मणाग्रजत्वं मन्यन्ते । **'अस्त्येव मन्युर्भरताग्रजे मे'** इत्यादि वदन्तः कवयः काळिदासादयोऽपि । एतादृशभ्रमपरम्परानिरासायैव भगवत्पादैर्निर्णय उदघुष्यत– **'पूर्वं सुमित्रातनयः'** इति । निर्णयग्रन्थार्थनिर्णयाय निर्णयग्रन्था भवन्ति । विचित्रमेतद् यत् सन्दिग्धार्थनिर्णयग्रन्थानुसारेण निर्णयग्रन्थार्थो व्यत्यस्यत इति । अथ चैतेन वासुदेवसङ्कर्षणादिमूलरूपक्रमोऽप्यनुसृतो भवति । पायसदानक्रमोऽपि । प्रथमं हि **'कौसल्यायै नरपतिः पायसार्द्धं ददौ'** । तेन रामो जातः । ततः सुमित्रायै ततोऽर्धं ददौ । तेन लक्ष्मणो जातः । ततः पायसस्यावशिष्टस्यार्धम्, अष्टमं भागं कैकय्या अदात् । तेन भरतो जातः । अन्तेऽवशिष्टमष्टमं भागं पुनः सुमित्रायै ददौ । तेन शत्रुघ्नो जात इति । ननु नृसिंहपुराणेऽन्यथा पायसक्रमः पठ्यते–**'दत्ते कौसल्यकैकेय्योर्द्वे पिण्डे मन्त्रमन्त्रिते । ते पिण्डप्राशने काले सुमित्राया महामते । पिण्डाभ्यामल्पमल्पं तु सुभागिन्याः प्रयच्छतः'** [४७.३७–८] इति । मैतन्मात्रेण स्वेष्टसिद्धिदुराशाजलधौ मज्जीः । एतच्छङ्कापरिहारायैव नारायणपण्डिताचार्यैः स्फुटमुदितम्–**'कौसल्यामथ कल्याणीमाहूय महिषीं प्रियाम् । परमान्नं ददावर्धं परं तस्यै नराधिपः । अर्धादर्धं ततो भक्तं विभक्तं भक्तिमान् हरौ । पवित्रं स सुमित्रायै सुस्मितायै ददावथ । तस्मादर्धादसावर्धं कैकेय्यै प्रतिदत्तवान् । परमर्धं सुमित्रायै पुनरेव प्रदत्तवान्'** [सं.रा.बा.कां.३.६–८] इति । तेन वाल्मीकिरामायणोक्तः पायसदानक्रम एवाऽचार्यसम्मत इति तावत् स्थितम् । तेन तदविरोधेन सर्वाणि वचनान्तराणि योजनीयानीति च स्फुटम् । का तर्हि

उत्तरकाण्डे च–**'शत्रुघ्नः प्राञ्जलिः प्रोचे प्रसीद पुरुषोत्तम । आर्यो मे मध्यमो धन्यस्त्वच्छुश्रूषां वनेऽकरोत् । भरतेन ममाऽर्येण मयि जीवति किङ्करे । चतुर्दश समास्तप्तं त्वत्प्रीत्यै भूमिशायिना । ब्रह्मघ्नं लवणं हत्वा त्वत्प्रसादेन केवलम् । सार्था शत्रुघ्नता स्यान्मे प्रोच्येति प्रणनाम सः'** [३.३२–४] इति च ।

योजना? अर्धम्, तुरीयांशः, अष्टमांशौ च द्वाविति चतुर्धा विभक्ते पायसे द्वे पिण्डे अर्धमेकोऽष्टमांशश्चेति द्वौ भागौ कौसल्याकैकेय्योर्दत्तौ । यद्येवमकृत्वा तिसृणां समं विभज्य दशरथोऽदास्यत्, इतोऽधिकं पायसभागमलप्स्यत कैकेयी । ऊनं च कौसल्या । नैवमभूत् । किन्तु कौसल्याऽल्पमधिकम्, कैकेयी चाल्पमूनम्, यथा राज्ञा दत्तम्, अवशिष्टं सुमित्रायै राजद्वारा प्रददतुरिवेति । तथाच गुह्यसमाधिभाषया प्रवृत्तमिदं वचनम् । अनेन वचनेन बहवः कवयोऽपि भ्रान्ताः । कल्पान्तरीया कथेयमिति केचिद् कत्थन्ते । **'स राजा तत्र दृष्ट्वा च पत्नीं ज्येष्ठां कनीयसीम् । विभज्य पायसं दिव्यं प्रददौ सुसमाहितः । एतस्मिन्नन्तरे पत्नी सुमित्रा तस्य मध्यमा । तत्समीपं प्रयाता सा पुत्रकामा सुलोचना । तां दृष्ट्वा तत्र कौसल्या कैकेयी च सुमध्यमा । अर्धमर्धं प्रददतुस्ते तस्यै पायसं स्वकम्'** [उ.खं.२४२.५९–६१] इति पाद्मवचनमप्यनेनैव दत्तोत्तरम् । दर्शनभाषा चेयमित्युक्तम् । कथमन्यथा दशरथ एकस्या पत्न्या वञ्चकः स्यात् । चतुर्णां विवाहक्रमोऽपि लक्ष्मणस्य भरताग्रजत्वमेव द्रढयति । तथाहि वाल्मीकीये–**'एवं दत्वा तदा सीतां मन्त्रोदकपुरस्कृताम् । अब्रवीज्जनको राजा हर्षेणाभिपरिप्लुतः । लक्ष्मणाऽगच्छ भद्रं ते ऊर्मिळामुद्यतां मया । प्रतीच्छ पाणिं गृह्णीष्व मा भूत् कालस्य पर्ययः । तमेवमुक्त्वा जनको भरतं चाभ्यभाषत । गृहाण पाणिं माण्डव्याः पाणिना रघुनन्दन । शत्रुघ्नं चापि धर्मात्माऽथाब्रवीज्जनकेश्वरः । श्रुतकीर्त्या महाबाहो पाणिं गृह्णीष्व पाणिना'** [बा.कां.७३.२७–३०] इतीति सर्वं रमणीयम् । एवं स्थितेऽपि दुराग्रहपिहितान्मौढ्याद् भरतमेव लक्ष्मणाग्रजं वदन्तः सर्वं मूलग्रन्थजातं व्याकुलयन्ति । चक्षुष्मतां तु रामायण एव स्फुटात् स्फुटतरं लक्ष्मणस्य भरताग्रजत्वम्– **'यदि त्वार्यं न शक्ष्यामि विनिवर्तयितुं वनात् । वने तत्रैव वत्स्यामि यथाऽऽर्यो लक्ष्मणस्तथा'** [अ.कां.८२.१८] इति हि भरतवाक्यम् । अग्रजजिज्ञासायामपि भरतवाक्यमेवैतत् । नह्यनुजमार्यं वदन्ति भाषाशास्त्रविदः क्वापि । **'ततो लक्ष्मणमासाद्य वैदेहीं च परन्तपः । अभिवाद्य ततः प्रीतो भरतो नाम चाब्रवीत्'** [ यु.कां.१२७.४२] इति चोपरि । यदनयोः श्लोकयोर्बलादाकृष्य यथाकथाचार्थान्तरकथनम्, तत् स्वाव्युत्पत्तिप्रदर्शनं विना नान्यत् किमपि । परैर्बलात् कृतादपि स नः किल मुख्यो भवति योऽर्थः स्वरसतः प्रतीयते ।। **'आरात् संस्थाप्य सेनां तां भरतो विनयान्वितः । ब्राह्मणैर्मन्त्रिभिः सार्धं रुदन्नागत्य पादयोः । रामस्य निपपाताथ वैदेह्या लक्ष्मणस्य च'** [४८.१४९–५०] इति नारसिंहे । तदेवं भरतज्यैष्ठ्यवादिनां सर्वविप्लवः । अत एव व्याख्यानपरम्पराप्राप्तमपार्थं निवारयितुमेव भगवानाचार्योऽन्यथा व्याचख्यौ– भरतशत्रुघ्नयोः पूर्वं सुमित्रातनय इति । एतेन लक्ष्मणशत्रुघ्नयोर्यमळत्वभ्रान्तिरपि वारिता भवति । एतां भविष्यन्तीं भ्रान्तिं सम्भाव्येव वाल्मीकिनाऽप्युक्तम्– **'राज्ञः पुत्रा महात्मानश्चत्वारो जज्ञिरे पृथक्'** [बा.कां.१८.१६] इति । क्वचिद् भरतस्य पूर्वनिर्देशस्तु मातृक्रमानुसारेण । कैकेयीं किल मध्यमाम्बामाहुः । **'अद्येदानीं सकामा सा या माता मम मध्यमा'** [अर.कां.२.२०] इति हि वाल्मीकीये । पाद्मे तु– **'कोसलस्य नृपस्यास्य पुत्री सर्वाङ्गशोभना । कौसल्या नाम तां कन्यामुपयेमे स पार्थिवः । मागधस्य नृपस्याथ तनया च शुचिस्मिता । सुमित्रा नाम नाम्ना च द्वितीया तस्य भामिनी । तृतीया केकयस्याथ नृपतेर्दुहिता तथा । भार्याऽभूत् पद्मपत्राक्षी कैकेयी नाम नामतः'** [उ.खं.२४२.३७–९] इति पठ्यते । अत्र क्रमो न विवक्षित इति वक्तव्यम्, यदि **'क्वचिद् ग्रन्थान् प्रक्षिपन्ति'** इत्यस्य नायं विषयः । व्यत्यासेन कथनमपि हि पुराणशैली । तद्यथा भरतस्य लक्ष्मणाग्रजत्वं क्वचित् । लक्ष्मणशत्रुघ्नयोरेकयोक्त्या उल्लेखसौकर्यं चात्र भवति । एकमातृकौ तावेकनक्षत्रौ चेति । अत एव **'रामलक्ष्मणशत्रुघ्नभरताश्चेति सञ्ज्ञया'** [९.८.८४] इति च भागवते ।

**कौसल्यकापुत्र उरुक्रमोऽसावेकस्तथैको भरतस्य मातुः ।**
**उभौ सुमित्रातनयौ नृपस्य चत्वार एते ह्यमरोत्तमाः सुताः ॥ ७९ ॥**

**सङ्कर्षणाद्यैस्त्रिभिरेव रूपैराविष्ट आसीत् त्रिषु तेषु विष्णुः ।**
**इन्द्रोऽङ्गदे चैव ततोऽङ्गदो हि बली नितान्तं स बभूव शश्वत् ॥ ८० ॥**

---

**'रामलक्ष्मणशत्रुघ्नाः भरतश्च महाबलः'** [व.प.२७५.७] इति भारते । नक्षत्रक्रमानुसारि च वाल्मीकिवचनम् । पुनर्वसौ रामजननम् । पुष्ये भरतजननम् । आश्लेषायां लक्ष्मणशत्रुघ्नयोरिति । तमिमं नक्षत्रक्रमं जननक्रम इति भ्रान्ता भरतमप्यग्रजं बभ्रमुः । लक्ष्मणशत्रुघ्नौ यमाविति च । वस्तुतस्तु भिन्नो जननक्रमो रामायाणादवगम्यते । तथाहि चैत्रे मेषमासे पुनर्वसुनक्षत्रस्य चतुर्थचरणे श्रीरामावतारः । तस्मिन्नेव वत्सरे कर्काटकमासे, सर्पदैवत्ये आश्लेषानक्षत्रे लक्ष्मणजननम् । तेन लक्ष्मणः श्रीरामाच्चतुर्भिर्मासैरवरः । कथमन्यथा **'कुळीरेऽभ्युदिते रवौ'** इति वाल्मीकिवचनं पण्डिताचार्यवचनं च सङ्गच्छेत । कर्काटकमास एव हि कर्काटके सूर्योदयः । यथाकथाच व्याख्यानं न सतां चित्ते लगति । मेषं गते पूषणि रामो जातः । कुळीरं गते लक्ष्मण इति स्फुटो हि मासभेदः । चन्द्रोऽपि कर्काटकगत इति सूर्यचन्द्रयोः समावेशात् प्राय आषाढेऽमायाम्, श्रावणे प्रतिपदि वा लक्ष्मणजननम् । ततः पुष्यमासे, सौरे मकरमासे, पुष्यनक्षत्रे, अत एव प्रायः पूर्णिमायां भरतजननम् । तेन श्रीरामान्नवभिर्मासैः, लक्ष्मणाच्च पञ्चभिर्मासैरवरो भरतः । अपरस्मिन् वत्सरे कर्काटक एव मासे, आश्लेषायां शत्रुघ्नो जातः । तेन स षोळशभिर्मासैः श्रीरामादवरः । लक्ष्मणाद् वत्सरोन इति सर्वं सुन्दरम् । तदेवं **'कुळीरेऽभ्युदिते रवौ'** इति वाल्मीकिवचनं श्रीरामादयः क्रमेण नवम्यादिनत्रयजाता इति वदतां गळपाशायते । तस्मात् **'सङ्कर्षणाद्यैः–'** इत्युक्त एव पुत्राणां जनिक्रमः । यदपि पाद्मे श्रूयते–**'सर्वेषामग्रजो रामो भरतस्तदनु स्मृतः । लक्ष्मणस्तदनु श्रीमान् शत्रुघ्नः सर्वतोऽवरः'** [पा.खं. ५७.३३] इति तदपि पूर्ववदेव व्यत्यस्य पठनमिति सन्तोष्टव्यम् । तदनङ्गीकारे **'भरतः पाञ्चजन्यांशः'** इत्यपि यथाश्रुतमेवाङ्गीकार्यं स्यात् । भरतस्तदनु रामादनन्तरं स्मृतः । लक्ष्मणश्च तदनु रामादनन्तरं स्मृत इति पुराणवचनार्थः । एतत्सूचनायैव **'भरतः शत्रुघ्नश्च रामतोऽनु'** इत्युक्तं ग्रन्थकृता । तथाहि विष्णुपुराणे–**'दशरथस्यापि श्रीभगवानब्जनाभो जगत्स्थित्यर्थमात्मांशेन राम-लक्ष्मण-भरत-शत्रुघ्न-रूपेण चतुर्धा पुत्रत्वमयासीत्'** [४.४.४०] इति, **'अशेषस्यास्य जगतो निष्पादितस्थितयो राम-लक्ष्मण-भरत-शत्रुघ्नाः पुनर्दिवमारूढाः'** [४६] इति च । येऽन्यथा प्रळपन्ति बालिशा एव त इत्यनुकम्पनीयाः पण्डितमण्डूकाः, ये स्वनिवासमन्धुमेव विश्वं मन्यमाना उच्छ्वसन्ति । उपेक्ष्यास्ते वरण्डगोष्ठीमण्डनाः कुण्ठतुण्डाः कुपण्डिताः ॥ ७८ ॥ कौसल्यकाजात एवोरुक्रमः । अन्ये तु तदाविष्टाः । कौसल्यकाया उरुक्रमो राम एकः पुत्रः । तथा भरतस्य मातुरपि स एकः पुत्रः । सुमित्राया द्वाविति चत्वारः सुताः । पुदिति नरकम् । नरकमिति दुःखम् । पुतो दुःखात् त्रायत इति पुत्रः । मुख्यार्थं चेदमुरुक्रम इति कौसल्यकापुत्र इत्याह । भरतोऽपि भगवदभिषेकभङ्गजनितेन पातकेन जनयित्रीमत्रायतेत्यन्वर्थं पुत्रः । लक्ष्मणशत्रुघ्नौ च जनन्या दर्शितं बन्धुस्नेहस्य पन्थानमनन्यतया तनुतो विस्तारयत इत्यन्वर्थतनयौ । पुनातीति पुत्र इति वैयाकरणाः । भगवांस्तु भुवनमखिलं पुनाति । तनय इति तनोतेः कयन् । **'वलिमलितनिभ्यः कयन्'** [८.१०] इदि दशपादिका ॥ ७९ ॥ न केवलं विविदे किन्त्वङ्गदे चेन्द्र एवाऽविष्ट आसीत् । शश्वत् सदा ॥ ८० ॥

येऽन्ये च भूपाः कृतवीर्य्यजाद्या बलाधिकाः सन्ति सहस्रशोऽपि ।
सर्वे हरेः सन्निधिभावयुक्ता धर्म्मप्रधानाश्च गुणप्रधानाः ॥ ८१ ॥

स्वयं रमा सीरत एव जाता सीतेति रामार्थमनूपमा या ।
विदेहराजस्य हि यज्ञभूमौ सुतेति तस्यैव ततस्तु साऽभूत् ॥ ८२ ॥

इत्यादिकल्पोत्थित एष सर्ग्गो मया समस्तागमनिर्ण्णयात्मकः[१] ।
सहानुसर्ग्गः कथितोऽत्र पूर्वो योयो गुणैर्न्नित्यमसौ वरो हि ॥ ८३ ॥

पाश्चात्त्यकल्पेष्वपि सर्ग्गभेदाः श्रुतौ पुराणेष्वपिचान्यथोक्ताः ।
नोत्कर्षहेतुः प्रथमत्वमेषु विशेषवाक्यैरवगम्यमेतत्[२] ॥ ८४ ॥

**इति श्रीमदानन्दतीर्त्थभगवत्पादविरचिते**
**श्रीमहाभारततात्पर्य्यनिर्ण्णये सर्ग्गानुसर्ग्गलयप्रादुर्भावनिर्ण्णयो नाम[३]**
**तृतीयोऽद्ध्यायः**

—०—

[आदितः श्लोकाः– ३२१+८४=४०५]

---

सहस्रमिति बहुवचनम् । बहुष्वपि भूपेषु, बहूनां वा भूपानां मध्ये केचन बलाधिकाः । बहुभ्योऽपि भूपेभ्यो बलाधिका इति वा । बलाधिका अपि भूपाः सहस्रशः बहवः सन्तीति वा । हरेः विशेषसन्निधानेन यो भावः भूतिरुन्नतिः तेन युक्ताः । सन्निधियुक्ताः, अत एव भावयुक्ताः भक्तियुक्ताश्चेति वा ॥ ८१ ॥ **'सीरत एव जाता'** इति सीताशब्दं निर्वक्ति । आद्यन्ताक्षरस्वीकारेण सीरजाता सीता भवति । सीरजातत्वादेव लाङ्गलपद्धतिमपि सीतामाहुः । अतिशयेनानुपमा अनूपमा । विदेहराजस्य यज्ञभूमौ प्रादुर्भूतेति तस्य सुतेत्येव प्रथिताऽभूत् । रामादिनामनिर्वचनं तु पण्डिताचार्येण कृतम्–**'रामः सर्वाभिरामत्वादात्मारामत्वतोऽपि वा । देवो मरतकश्याम इति वा रामनामकः । नित्यं रमाभिसम्बन्धाद् दानं श्रीरस्य हेति वा । रामाणां हृद्यभावाद् वा रामं तं सज्जना विदुः । साधुलक्ष्मगुणोपेतो लक्ष्मणो नामतोऽभवत् । सौमित्रिरग्रजो लोके शत्रुघ्नोऽवरजो मतः । कैकेय्यानन्दनं प्राहुर्भरतं भरितं गुणैः । कुमारास्ते कुमाराभा एवं नामानि भेजिरे'** [सं.रा.३.४३–६] इति । रमणीयत्वाद् रमयतीति रामः । स्वस्मिन्नेव रमत इति रामः । योगिनोऽस्मिन् रमन्त इति, अनेन रमन्त इति रामः । नीलवर्णत्वाद् रामः । रमाया अयं पतिरिति रामः । रा दानं मा श्रीश्चास्य स्त इति रामः । रामाणां स्त्रीणामयं हृदयहारीति रामः । अममभितं रमणमस्येति रामः । तथाहि श्रुतिः– **'आनन्दरूपो**

---

१. **'–निर्णयेन ।'** २. **'–गम्यते तत् ।'** ३. **'सर्गप्रादुर्भावनिर्णयो नाम'**

**निष्परीमाण एष लोकश्चैतस्माद् रमते तेन रामः'** इति। साधुलक्ष्मभिर्गुणैरुपेतो लक्ष्मणः। लक्ष्माण्यस्य सन्तीति लक्ष्मी-रस्यास्तीति च लक्ष्मण इति वैयाकरणाः। पदान्तस्य ईकारस्य अकारादेशः। पामादित्वान्मत्वर्थे नः प्रत्ययश्च। **'लक्ष्म्या अच्च'** इति पामादिगणसूत्रम् [अ.सू.५.२.१००]। भरति बिभर्ति वा गुणजातमिति भरतः। धातोरतच् प्रत्यय इति भोजः। **'भृञोऽतः'** [का.उ.सू.३.६] इति कातन्त्राः। शत्रुघ्न इति स्फुटम्॥ ८२॥ आदिकल्पो यत्र ब्रह्मणः सर्गः। ब्रह्माण्डपर्यन्तः प्राकृतः सर्गः। ब्रह्माण्डान्तर्वैकृतोऽनुसर्गः। आदिकल्पे योयः पूर्वसृष्टः सस गुणाधिक इति नियमः॥ ८३॥ पाश्चात्यकल्पेष्वन्यथाऽपि सृष्टिरुक्ता। तत्र न पूर्वं सृष्टिरुत्कर्षहेतुः। नापि परस्तादपकर्षहेतुः। एषु दिनकल्पेषु प्रथमजातत्वं नोत्कर्षहेतुः। एषु सृष्टिभेदादिकं तु विशेषवाक्यैरवगम्यं भवति। तथाहि ब्रह्माण्डवचनमाथर्वणभाष्ये– **'ब्रह्मणः प्रथमे कल्पे शिवः प्रथमजः सुतः। सनकाद्यास्तु वाराहे'** इत्यादि। **'मनोर्वैवस्वतस्याऽदावथर्वा ब्रह्मणोऽजनि'** इत्यादि च॥ ८४॥

अस्मिन्नध्याये चतुर्मूर्तिर्मत्स्यादिमूर्तिश्च नारायणो देवता। तत्वमानिनोऽवान्तरदेवताः। अथ च्छन्दांसि– तिस्रस्तावत् [४–६] अनुष्टुभः। एका च [७] षट्पदाऽनुष्टुबिति जगत्येव। तत्रापि प्रथमपादे नवाक्षरेति भुरिक्। द्विचत्वा-रिंशत् [९–१३; १५–२१; २३; २४; २७–३८; ४०;४३; ४४; ५२;५३;७०;७१; ७३–७७;८०–८२; ८४] त्रिष्टुभः। तत्रापि तिस्रस्त्रिष्टुभः [९;२४;७४] केवलयेन्द्रवज्रया, एका [१३] इन्द्रवज्रायास्ततजानां स्थाने तृतीयचरणे तभतैः, अपरा[३४] च प्रथमचरणे तभतैः, अपरा [४३] पूर्वार्धे तभतैश्छन्दोविच्छित्तिविशेषेण, अवशिष्टास्त्रिष्टुभ इन्द्र-वज्रोपेन्द्रवज्राभ्याम्। एकादश [२२;२५; ४२; ४५;५४;५७;६२;७२; ७८;७९;८३] भुरिक्त्रिष्टुभः, इन्द्रवज्रोपेन्द्र-वज्राभ्यां वंशस्थेनेन्द्रवंशया वा। चतस्रः [२; ३; ५१; ५५] स्वराट्-त्रिष्टुभः। सप्त [१;१४; २६;३९;४६; ६४;६५;] विराड्जगत्यः। सप्त [४१; ५८–६१; ६६; ६९] निचृज्जगत्यः। अष्टौ [४७–५०; ५६; ६३; ६७; ६८] जगत्यः। एका च [८] वसन्ततिलकाख्या शक्करी।

तदेवमा चतुश्चत्वारिंशदक्षरादाऽष्टचत्वारिंशदक्षरमत्र पञ्चविधं सङ्कीर्णच्छन्दो भवति– त्रिष्टुबिति (४४अक्षराणि), भुरिक् त्रिष्टुबिति (४५), स्वराट् त्रिष्टुबिति, विराड् जगतीति वा (४६), निचृज्जगतीति (४७), जगतीति (४८)। तत्र चतुर्विधश्छन्दःप्रभेदो विन्यासविशेषेणैव सूचितो भगवत्पादेन। तथाहि– चतुश्चत्वारिंशे पद्ये ४४ अक्षराणि। पञ्चचत्वारिंशे ४५ अक्षराणि। षट्चत्वारिंशे ४६ अक्षराणि। सप्तचत्वारिंशेऽष्टचत्वारिंशे च ४८ अक्षराणि। यद्यपि यथाक्रमं सप्तचत्वा-रिंशे सप्तचत्वारिंशदक्षरा निचृज्जगती निबन्द्धुं युक्ता। अथापि क्रमं बभञ्ज भगवत्पादः, विनेयानां बुद्धिशाणतां परीक्षमाण इव। चतुर्षु छन्दःप्रभेदेषु निबद्धेषु चतुरमतयः पञ्चमं किं न जानीयुरिति। अहो छन्दोविलासो भगवत्पादस्य। युक्तमुक्तं वाल्मीकिना–**'नह्यस्य कश्चित् सदृशोऽस्ति शास्त्रे वैशारदे छन्दगतौ तथैव'** [वा.रा.उ.कां.३६.४७] इति। दिङ्मात्रमत्र दर्शितम्। अन्यान्यपि च्छन्दोवैचित्र्याणि च्छन्दोभिज्ञैरभ्यूहनीयानि। एवमुत्तराध्यायेष्वपीत्युपरम्यते[१]॥ ॐ॥

१. छन्दःप्रभेदान् स्फुटमधिजिगमिषूणामयमिह समग्राध्यायच्छन्दोविलासः।

१. १२+११+११+१२= वंशस्थम्+उपेन्द्रवज्रा+उपेन्द्रवज्रा+इन्द्रवंशा।

२. ११+१२+११+१२= उपेन्द्रवज्रा+इन्द्रवंशा+उपेन्द्रवज्रा+इन्द्रवंशा।

आचार्यगोविन्दकृते
श्रीमद्भारततात्पर्यनिर्णयस्य ।
निर्णिक्ते व्याख्याने निर्णयभावचन्द्रिकाख्याने
प्रगतं तृतीयाध्यायविवरणं विदां हृदयाभरणम् ॥ ※ ॥

इत्याचार्यगोविन्दस्य कृतिषु श्रीमहाभारततात्पर्यनिर्णयपञ्चिकायां
निर्णयभावचन्द्रिकायां
तृतीयोऽध्यायः

—०—

---

३. ११+१२+११+१२=
उपेन्द्रवज्रा+वंशस्थम्+उपेन्द्रवज्रा+इन्द्रवंशा ।

४–७. ८x४=अनुष्टुप् । ८x६=सप्तमः भुरिगनुष्टुप् । षट्चरणत्वाद् भुरिग् जगती वा ।

८. १४x४=वसन्ततिलका

९. ११x४=इन्द्रवज्रा

१०. ११x४= इन्द्रवज्रा+उपेन्द्रवज्रा+ इन्द्रवज्रा+उपेन्द्रवज्रा ।

११. ११x४= इन्द्रवज्रा+इन्द्रवज्रा+उपेन्द्रवज्रा+ इन्द्रवज्रा ।

१२. ११x४= इन्द्रवज्रा+इन्द्रवज्रा+उपेन्द्रवज्रा+ इन्द्रवज्रा ।

१३. ११x४= प्रथमद्वितीयतुरीयेष्विन्द्रवज्रा । तृतीये ततजानां स्थाने तभता इति विच्छित्तिविशेषः ।

१४. १२+११+१२+११=
इन्द्रवंशा+इन्द्रवज्रा+ इन्द्रवंशा+इन्द्रवज्रा ।

१५. ११x४= इन्द्रवज्रा+इन्द्रवज्रा+ इन्द्रवज्रा+उपेन्द्रवज्रा ।

१६. ११x४= उपेन्द्रवज्रा+इन्द्रवज्रा+ इन्द्रवज्रा+उपेन्द्रवज्रा ।

१७. ११x४= इन्द्रवज्रा+उपेन्द्रवज्रा+उपेन्द्रवज्रा+उपेन्द्रवज्रा ।

१८. ११x४= इन्द्रवज्रा+उपेन्द्रवज्रा+इन्द्रवज्रा+इन्द्रवज्रा ।

१९. ११x४= इन्द्रवज्रा+इन्द्रवज्रा+ उपेन्द्रवज्रा+इन्द्रवज्रा ।

२०. ११x४= इन्द्रवज्रा+उपेन्द्रवज्रा+उपेन्द्रवज्रा+उपेन्द्रवज्रा ।

२१. ११x४= इन्द्रवज्रा+उपेन्द्रवज्रा+इन्द्रवज्रा+ इन्द्रवज्रा ।

२२. ११+१२+११+११=
उपेन्द्रवज्रा+वंशस्थम्+उपेन्द्रवज्रा+ इन्द्रवज्रा ।

२३. ११x४= इन्द्रवज्रा+इन्द्रवज्रा+इन्द्रवज्रा+उपेन्द्रवज्रा ।

२४. ११x४=इन्द्रवज्रा ।

२५. ११+१२+११+११=
उपेन्द्रवज्रा+इन्द्रवंशा+ इन्द्रवज्रा+इन्द्रवज्रा ।

२६. १२+१२+११+११=
वंशस्थम्+वंशस्थम्+उपेन्द्रवज्रा+ उपेन्द्रवज्रा ।

२७. ११x४= इन्द्रवज्रा+इन्द्रवज्रा+इन्द्रवज्रा+उपेन्द्रवज्रा ।

२८. ११x४= उपेन्द्रवज्रा+उपेन्द्रवज्रा+इन्द्रवज्रा+उपेन्द्रवज्रा ।

२९. ११x४= इन्द्रवज्रा+इन्द्रवज्रा+उपेन्द्रवज्रा+इन्द्रवज्रा ।

३०. ११x४= उपेन्द्रवज्रा+उपेन्द्रवज्रा+इन्द्रवज्रा+इन्द्रवज्रा ।

३१. ११x४= इन्द्रवज्रा+इन्द्रवज्रा+उपेन्द्रवज्रा+उपेन्द्रवज्रा ।

३२. ११x४= उपेन्द्रवज्रा+उपेन्द्रवज्रा+इन्द्रवज्रा+इन्द्रवज्रा ।

३३. ११x४= उपेन्द्रवज्रा+इन्द्रवज्रा+उपेन्द्रवज्रा+इन्द्रवज्रा ।

३४. ११X४=प्रथमपादे गणव्यत्ययेन तभता गौ च+उपेन्द्रवज्रा+ इन्द्रवज्रा+इन्द्रवज्रा ।

३५. ११X४=उपेन्द्रवज्रा+उपेन्द्रवज्रा+इन्द्रवज्रा+उपेन्द्रवज्रा ।

३६. ११X४= इन्द्रवज्रा+उपेन्द्रवज्रा+इन्द्रवज्रा+उपेन्द्रवज्रा ।

३७. ११X४= इन्द्रवज्रा+उपेन्द्रवज्रा+उपेन्द्रवज्रा+इन्द्रवज्रा ।

३८. ११X४= उपेन्द्रवज्रा+इन्द्रवज्रा+इन्द्रवज्रा+इन्द्रवज्रा ।

३९. १२+११+११+१२=
वंशस्थम्+उपेन्द्रवज्रा+इन्द्रवज्रा+ इन्द्रवंशा ।

४०. ११X४=उपेन्द्रवज्रा+इन्द्रवज्रा+इन्द्रवज्रा+इन्द्रवज्रा ।

४१. १२+११+१२+१२=
वंशस्थम्+उपेन्द्रवज्रा+इन्द्रवंशा+ वंशस्थम् ।

४२. १२+११+११+११=
वंशस्थम्+इन्द्रवज्रा+उपेन्द्रवज्रा+उपेन्द्रवज्रा ।

४३. ११X४=पूर्वार्धे गणव्यत्यासेन तभता गौ च+इन्द्रवज्रा+इन्द्रवज्रा ।

४४. ११X४=उपेन्द्रवज्रा+उपेन्द्रवज्रा+उपेन्द्रवज्रा+इन्द्रवज्रा ।

४५. ११+११+११+१२=
उपेन्द्रवज्रा+उपेन्द्रवज्रा+इन्द्रवज्रा+ इन्द्रवंशा ।

४६. १२+१२+११+११=
वंशस्थम्+वंशस्थम्+उपेन्द्रवज्रा+ उपेन्द्रवज्रा ।

४७–८. १२X४=वंशस्थम् ।

४९. १२X४=वंशस्थम्+वंशस्थम्+इन्द्रवंशा+वंशस्थम् ।

५०. १२X४=वंशस्थम्+वंशस्थम्+इन्द्रवंशा+ वंशस्थम् ।

५१. ११+१२+१२+११=
उपेन्द्रवज्रा+वंशस्थम्+वंशस्थम्+ उपेन्द्रवज्रा ।

५२. ११X४=उपेन्द्रवज्रा+उपेन्द्रवज्रा+इन्द्रवज्रा+उपेन्द्रवज्रा ।

५३. ११X४=इन्द्रवज्रा+उपेन्द्रवज्रा+इन्द्रवज्रा+उपेन्द्रवज्रा ।

५४. ११+११+१२+११=
उपेन्द्रवज्रा+इन्द्रवज्रा+वंशस्थम्+ उपेन्द्रवज्रा ।

५५. ११+११+१२+१२=
इन्द्रवज्रा+उपेन्द्रवज्रा+वंशस्थम्+ वंशस्थम् ।

५६. १२X४=वंशस्थम् ।

५७. ११+११+१२+११=
उपेन्द्रवज्रा+उपेन्द्रवज्रा+ वंशस्थम्+ उपेन्द्रवज्रा ।

५८. १२+१२+१२+११=
वंशस्थम्+वंशस्थम्+वंशस्थम्+ इन्द्रवज्रा ।

५९. १२+१२+११+१२=
वंशस्थम्+वंशस्थम्+उपेन्द्रवज्रा+वंशस्थम् ।

६०. १२+११+१२+१२=
वंशस्थम्+उपेन्द्रवज्रा+ वंशस्थम्+वंशस्थम् ।

६१. ११+१२+१२+१२=
उपेन्द्रवज्रा+इन्द्रवंशा+ वंशस्थम्+वंशस्थम् ।

६२. ११+११+११+१२=
इन्द्रवज्रा+उपेन्द्रवज्रा+ इन्द्रवज्रा+वंशस्थम् ।

६३. १२x४=इन्द्रवंशा+वंशस्थम्+वंशस्थम्+वंशस्थम् ।

६४. १२+११+११+१२=
वंशस्थम्+उपेन्द्रवज्रा+ उपेन्द्रवज्रा+वंशस्थम् ।

६५. १२+१२+११+११=
वंशस्थम्+वंशस्थम्+ उपेन्द्रवज्रा+इन्द्रवज्रा ।

६६. १२+११+१२+१२=
वंशस्थम्+उपेन्द्रवज्रा+ वंशस्थम्+वंशस्थम् ।

६७. १२x४=वंशस्थम् ।

६८. १२x४=इन्द्रवंशा+वंशस्थम्+वंशस्थम्+वंशस्थम् ।

६९. १२+११+१२+१२=
वंशस्थम्+इन्द्रवज्रा+ वंशस्थम्+वंशस्थम् ।

७०. ११x४=इन्द्रवज्रा+इन्द्रवज्रा+उपेन्द्रवज्रा+इन्द्रवज्रा ।

७१. ११x४=उपेन्द्रवज्रा+उपेन्द्रवज्रा+इन्द्रवज्रा+इन्द्रवज्रा ।

७२. ११+१२+११+११=
उपेन्द्रवज्रा+वंशस्थम्+ उपेन्द्रवज्रा+उपेन्द्रवज्रा ।

७३. ११x४=इन्द्रवज्रा+उपेन्द्रवज्रा+इन्द्रवज्रा+उपेन्द्रवज्रा ।

७४. ११x४=इन्द्रवज्रा ।

७५. ११x४=इन्द्रवज्रा+उपेन्द्रवज्रा+इन्द्रवज्रा+इन्द्रवज्रा ।

७६. ११x४=उपेन्द्रवज्रा+इन्द्रवज्रा+इन्द्रवज्रा+इन्द्रवज्रा ।

७७. ११x४=इन्द्रवज्रा+उपेन्द्रवज्रा+इन्द्रवज्रा+इन्द्रवज्रा ।

७८. ११+११+११+१२=

इन्द्रवज्रा+इन्द्रवज्रा+उपेन्द्रवज्रा+वंशस्थम् ।

७९. ११+११+११+१२=

इन्द्रवज्रा+इन्द्रवज्रा+ उपेन्द्रवज्रा+इन्द्रवंशा ।

८०. ११x४=इन्द्रवज्रा+इन्द्रवज्रा+इन्द्रवज्रा+उपेन्द्रवज्रा ।

८१. ११x४= इन्द्रवज्रा+उपेन्द्रवज्रा +इन्द्रवज्रा+इन्द्रवज्रा ।

८२. ११x४= उपेन्द्रवज्रा+इन्द्रवज्रा+उपेन्द्रवज्रा+उपेन्द्रवज्रा ।

८३. ११+१२+११+११=

इन्द्रवज्रा+वंशस्थम्+ उपेन्द्रवज्रा+इन्द्रवज्रा ।

८४. ११४= इन्द्रवज्रा+उपेन्द्रवज्रा+इन्द्रवज्रा+उपेन्द्रवज्रा ।

—०—

२२-१०-१२

# चतुर्थोऽद्ध्यायः

[श्रीरामावतारे अयोद्ध्याप्रवेशः]

ॐ ॥ अथाभ्यवर्द्धंश्चतुराः कुमारा नृपस्य गेहे पुरुषोत्तमाद्याः ।
नित्यप्रवृद्धस्य च तस्य वृद्धिरपेक्ष्य लोकस्य हि मन्ददृष्टिम् ॥ १ ॥

## तात्पर्यदीपिका[१]

**ओ३म् ॥ लक्ष्मीकान्तमनन्तसद्गुणतनुं दोषातिदूरं सदा**
**ब्रह्माहीन्द्रशिवेन्द्रपूर्वविबुधैराराधिताङ्घ्रिद्वयम् ।**
**भक्ताभीष्टकृतौ सतां[२] सुरतरुं भक्त्या सदोपास्महे**
**[३](दैत्यानामसतां) विदारणविधौ वज्रोपमानं सदा ॥ ✻ ॥**

**यः प्राणप्रवरः प्रणम्य विबुधैरभ्यर्थितो भूतळे**
**भूत्वा श्रीहरितत्व(बोध)नकृते श्रीमध्वनामा विभुः ।**
**कृत्वा भाष्य(वरं) च (सोपनिषदः सद्ब्रह्म)सूत्रावळे-**
**श्चक्रे भारतभावनिर्णयममुं जिष्णुं[४] भजामो मुदा ॥ ✻ ॥**

**[५]भूयासुर्विष्णुतीर्थाख्यसन्मुनीन्द्रकृपाबलात् ।**
**अन्तरेणान्तरायं नो मङ्गलानि निरन्तरम् ॥ ✻ ॥**

**अथ अवतारानन्तरम् । चतुराः कुशलाः । वृद्धिः, उच्यत इति शेषः ॥ १ ॥**

---

## निर्णयभावचन्द्रिका

ॐ ॥ मेघश्यामे पूरितनिजजनकामेऽथ रक्षसां भीमे ।
सीताहृदयारामे रामे रमतां मतिः सदा सा मे ॥ ✻ ॥

---

१. वेदाङ्गतीर्थै रचितेयं टीका पूर्वाध्यायत्रयस्य नोपलब्धा । चतुर्थाध्यायात् परमेव सर्वत्रोपलभ्यते ।

२. अनन्वितमिव । **'युक्ताभीष्टकृतौ सताम्'** इति पाठः स्यात् ।

३. () एतच्छिह्नान्तर्गतो भागः कोशे लुप्त इत्युपक्षिप्तः । एवमुत्तरत्रापि ।

४. **'विष्णुम्'** इत्यादर्शे पठ्यते । अयं सम्भावितः पाठः ।

५. **'भूयाद् वृष्णीन्द्रतीर्थाख्य–'** इत्यादर्शे । अयं च सम्भावितः पाठः ।

**निरीक्ष्य नित्यं चतुरः कुमारान् पिता मुदं सन्ततमाप चोच्चम् ।**
**विशेषतो राममुखेन्दुबिम्बमवेक्ष्य राजा कृतकृत्य आसीत् ॥ २ ॥**

**तन्मातरः पौरजना अमात्या अन्तःपुरा वैषयिकाश्च सर्वे ।**
**अवेक्षमाणाः परमं पुमांसं स्वानन्दतृप्ता इव सम्बभूवुः ॥ ३ ॥**

**(नित्यं)[1] निरीक्ष्य सन्ततं मुदमाप । उच्चमिति क्रियाविशेषणम् ॥ २ ॥ अन्तःपुराः अन्तःपुरस्थाः । स्वानन्दः स्वरूपानन्दः ॥ ३ ॥**

---

**असुरकुलधूमकेतुं रघुकुलकेतुं सतां विपत्तिमपनेतुम् ।**
**अवतीर्णं भवसेतुं चिन्तय रे चित्त मुक्तिपदहेतुम् ॥ ※ ॥**

अथ रामावतारकथामारभते । तत्रापि सीतामुदुह्यायोध्याप्रवेशपर्यन्तां बालकाण्डकथामस्मिन्नध्याये । अथाभ्यवर्धन् । अथशब्दो मङ्गलार्थः, रामावतारकथारम्भार्थश्च । अभितः रूपतो गुणतः शक्तितश्च अवर्धन्त । अथवा अभित इत्युभयतः । अन्तर्बहिश्च । अन्तः प्रज्ञानेन । बहिः पौरुषेण । लोकस्य मन्ददृष्टिमपेक्ष्य भगवतो वृद्धिः, अन्येषां कुमाराणां च देवांशत्वादिति परस्मैभाषा । **'अवर्धन्निन्द्रमरुतश्चिदत्र'** [ऋ.सं.१०.७३.१] इतिवदभ्यवर्धन् लोकान-भयदानेनावर्धयन्निति वा । प्रसङ्गावधानं चातुर्यम् । शस्त्रशास्त्रकुशलता च । स्वरूपतः पुरुषोत्तमः । अवतारे च मर्यादापुरुषोत्तमः । वृद्धिः पूर्वावधित उत्कर्षावाप्तिः । उत्तरावधिराहित्यं प्रकर्षः । वृद्धिरहितस्यापि वृद्धिर्मन्ददृष्टिमपेक्ष्य हि । **'न कर्मणा वर्धते नो कनीयान्'** इति हि श्रूयते । वास्तवग्रहणापाटवं मान्द्यम् ॥ १ ॥ पुत्रलाळनचतुरः पिता, चतुरः कुमारान् निरीक्ष्य । उच्चमिति क्रियाविशेषणमुत्तरान्वयि वा । उच्चं सर्वाधिकसौन्दर्यसारं राममुखेन्दु-मवेक्ष्य विशेषतश्च कृतकृत्यो लब्धसर्वाभीष्ट आसीत् । तथा हि रामायणे–**'तेषां केतुरिव ज्येष्ठो रामो रतिकरः पितुः । बभूव भूयः–'** [बा.कां.१८.२४] इति, **'तेषामपि महातेजा रामः सत्यपराक्रमः । इष्टः सर्वस्य लोकस्य शशाङ्क इव निर्मलः'** [२६] इति च ॥ २ ॥ पुरभवं सर्वं पौरमुच्यते । उद्यानमपि पौरम् । कत्तृणमपि पौरम् । अतः स्फुटत्वाय पौरजना इत्याह। पुरवासिनो मनुष्या इत्यर्थः। सर्वव्यवहारनिर्वहणे ये राज्ञा सह भवन्ति तेऽमात्याः । धीसचिवा इत्यर्थः । **'अव्ययात् त्यप्'** [अ.सू.४.२.१०४] इति पाणिनिः । **'अमेहक्वतसित्रेभ्यस्त्यप्'** इत्यर्थः । अन्तःपुरं राजदाराणां गृहम् । अन्तःपुरा राजदाराः । पञ्चाशच्च त्रीणि शतानि च । **'अर्धसप्तशतास्तासु प्रमदास्ताम्रलोचनाः'** [अ.कां.३४.१३] इति वाल्मीकीये । मातृपदेनैव तासां ग्रहणे अन्तःपुराधिकृता राजगृह-दासाः दास्यश्चान्तःपुरा उच्यन्ते । वैषयिका देशवासिनः । जानपदिका वा । **'विषयो गोचरे देशे तथा जनपदेऽपि च । प्रबन्धाद् यस्य यो ज्ञातस्तत्र रूपादिके पुमान्'** इति मेदिनी । वस्तुतो जनपदो जानपदो विषय इत्येकार्थानि

---

१. अयं सम्भावितः पाठः । **'मिलनं निरीक्ष्य'** इत्यादर्शे पठ्यते ।

**ततः सुवंशे शशिनः प्रसूतो गाधीति शक्रस्तनुजोऽस्य चाऽसीत् ।**
**वरेण विप्रत्वमवाप योऽसौ विश्वस्य मित्रं स इहाऽजगाम ॥ ४ ॥**

**ततः, शक्रः शशिनः सुवंशे गाधीति प्रसूतः, (अस्य) यस्तनुजः आसीत् असौ वरेण विप्रत्वमवाप । विश्वस्य मित्रं विश्वामित्रनामा । स तस्मिन् श्रीरामविलासप्रादुर्भावसमये इह आजगामेत्यन्वयः ॥ ४–५ ॥**

---

पदानि । अथापि जनानामधिष्ठानं जनपदः । स्थानमात्रं विषय इति विशेषः । तेन मृगा अपि वैषयिका भवन्ति, न जनपदाः । तदेतदाह–वैषयिकाश्च सर्वे मृगा अपि पक्षिणोऽपीति । किमिम इम इति पृथग्वचनेन । सर्वेऽपि सन्तुतुषुरिति वा। स्वानन्दतृप्ता मुक्ता इव । दुःखासम्भिन्नः स्वानन्दः । स्वरूपानन्दो वा । सम्बभूवुः सम्पूर्णकामा बभूवुः । परमं पुमांसम्, स्वरूपत आवेशतश्च चतुर्धाऽवस्थितम् ॥ ३ ॥ ततः रामस्य शैशवानन्तरम् । यदा स चतुर्दशवर्षो बभूव तदा विश्वस्य मित्रं विश्वामित्र इहायोध्यायामाजगाम । कोऽयं विश्वस्य मित्रम्? आह– यः शक्रो गाधिनामाऽऽसीत्, तस्य यस्तनुज आसीत् स इति । लोकसुखकारिणि वंशे । शशिनः शोभनो वंशो यस्य तस्मिन् कुशनाभे वा । गाधृ प्रतिष्ठालिप्सयोरित्यतो गाधत इति गाधीति गाधिरिति प्रथितो राजा प्रसूतः । **'कुशनाभसुतस्त्वासीद् गाधिरित्येव विश्रुतः । गाधेः पुत्रो महातेजा विश्वामित्रो महामुनिः'** [बा.कां.५१.१९] इति रामायणे । **'कुशस्य पुत्रो बलवान् कुशनाभश्च धार्मिकः । गाधिस्तस्य सुतो राजन् विश्वामित्रस्तु गाधिजः'** [आ.प.९८.६८] इति भारते । भागवते तु **'गाधिरासीत् कुशाम्बुजः'** [९.१३.५] इति पठ्यते । पुंव्यत्यासेन पठनं पुराणशैलीविदां नाविदितम् । कुशाख्येऽम्बुनि सरसि अम्बुजमिव कुलालङ्कारो जात इति व्याख्येयम् । कुशनाभस्यैव कुशिक इति नामान्तरम् । तत एव च विश्वामित्रं कौशिकमाचक्षते । **'कान्यकुब्जे महानासीत् पार्थिवो भरतर्षभ । गाधीति विश्रुतो लोके कुशिकस्याऽत्मसम्भवः । तस्य धर्मात्मनः पुत्रः समृद्धबलवाहनः । विश्वामित्र इति ख्यातो बभूव रिपुमर्दनः'** [आ.प.१९१.३–४] इति च भारते । **'गाधेः कुशिक इति नामान्तरम्'** इति वदन् माधवयोगी कतककृद् भ्रान्त इत्युपेक्ष्यः । चतुर्मुखस्य वरेण विप्रत्वमवाप । **'तपसा तु तथा युक्तं विश्वा-मित्रं पितामहः । अमन्यत महातेजा वरदोऽदर्शयत् तदा । स तु वव्रे वरं राजन् स्यामहं ब्राह्मणस्त्विति । तथेति चाब्रवीद् ब्रह्मा सर्वलोकपितामहः'** [श.प.४१.२७–८] इति ह्रदप्रवेशे । **'ततः सुरगणाः सर्वे पितामहपुरो-गमाः । विश्वामित्रं महात्मानं वाक्यं मधुरमब्रुवन् । ब्रह्मर्षे स्वागतं तेऽस्तु तपसा स्म सुतोषिताः । ब्राह्मण्यं तपसोग्रेण प्राप्तवानसि कौशिक'** [बा.कां.६५.१८–९] इति वाल्मीकीये । **'ब्रह्मर्षिस्त्वं न सन्देहः सर्वं सम्पत्स्यते तव'** [२५] इति च । **'अनृष्यानन्तर्ये–'** [अ.सू.४.१.१०४] इति सूत्रभाष्ये पतञ्जलिरप्याह– **'विश्वामित्रस्तपस्तेपे नानृषिः स्यामिति । तत्रभवानृषिः सम्पन्नः । स पुनस्तपस्तेपे नानृषेः पुत्रः स्यामिति । तत्रभवान् गाधिरपि ऋषिः सम्पन्नः । स पुनस्तपस्तेपे नानृषेः पौत्रः स्यामिति । तत्रभवान् कुशिकोऽपि ऋषिः सम्पन्नः'** इति । स गाधिसुतः विश्वस्य सज्जनलोकस्य मित्रं न केवलम् । विश्वस्य विष्णोरपि । मितिं प्रमितिं त्रायत इति मित्रम् । ऋषावभिधेये पूर्वपदस्य दीर्घः– **'मित्रे चर्षौ'**[अ.सू.६.३.१३०] इति ॥ ४ ॥

**तेनार्थितो यज्ञरिरक्षयैव कृच्छ्रेण पित्राऽस्य भयाद् विसृष्टः ।**
**जगाम रामः सह लक्ष्मणेन सिद्धाश्रमं सिद्धजनाभिवन्द्यः ॥ ५ ॥**

**अनुग्रहार्त्थं स ऋषेरवाप सलक्ष्मणोऽस्त्रं मुनितो हि केवलम् ।**
**ववन्दिरे ब्रह्ममुखाः सुरेशास्तमस्त्ररूपाः प्रकटाः समेत्य ॥ ६ ॥**

**अथो जघानाऽशु शरेण ताटकां वराद् विधातुस्तदनन्यवद्ध्याम् ।**
**ररक्ष यज्ञं च मुनेर्न्निहत्य सुबाहुमीशानगिरा विमृत्युम् ॥ ७ ॥**

**शरेण मारीचमथार्ण्णवेऽक्षिपद् वचो विरिञ्चस्य तु मानयानः ।**
**अवद्ध्यता तेन हि तस्य दत्ता जघान चान्यान् रजनीचरानथ ॥ ८ ॥**

**केवलं ऋषेरनुग्रहार्थं हि ॥ ६–८ ॥**

---

रक्षितुमिच्छा रिरक्षिषा । तेन रिरक्षिषयेति वक्तव्ये रिरक्षयेत्याह । तेनाक्षरलोपेन रामस्य यज्ञरक्षणं कियन्मात्रमित्याह । तथाहि भागवते– **'एष साक्षाद्धरेरंशो जातो लोकरिरक्षया'**[४.१४.५२] इति । अस्य विश्वामित्रस्य भयादेव पित्रा दशरथेन विसृष्टः प्रेषितो रामः । सिद्धजना ये योगसिद्धास्तपसा साक्षात्कृतपरब्रह्माणः । सिद्धाश्रमम् । **'एष पूर्वाश्रमो राम वामनस्य महात्मनः । सिद्धाश्रम इति ख्यातः सिद्धो यत्र महातपाः'** [बा.का.२९.३] इति वाल्मीकीये । **'बहवोऽत्र तपस्यन्तः सिद्धाः सिद्धत्वमाययुः । तस्मात् सिद्धाश्रमो नाम सिद्धेर्दाता ह्यधोक्षजः'** [ बा.कां. ५.८] इति सङ्क्षहरामायणे ॥ ५ ॥ ऋषेः भगवदुद्देशं जानतः, अत एव 'भगवतोऽनुग्रहोऽयं मयि' इति जानतश्च केवलमनुग्रहार्थम् । 'ऋष ज्ञाने' । नित्यं मननशीलाद् विश्वामित्रात् । ववन्दिरे अभिवादपूर्वकं तुष्टुवुः । अस्त्ररूपा अस्त्रमानिनः ब्रह्ममुखाः । ब्राह्मस्य ब्रह्मशिरसश्च ब्रह्मा । शैवस्य शिवः । वायव्यस्य वायुर्मानी । ब्रह्माद्याः सर्वे समागत्य ववन्दिरे । ते किलास्त्रेषु सन्निहिता इत्यस्त्राणि तेषां रूपाणि शरीराणीव । समेत्य सम्मुखमागत्य ॥ ६ ॥ अथो अस्त्रग्रहणानन्तरम्, 'हन्यतामियम्' इति मुनिकृताभ्यर्थनानन्तरं च । ततोऽन्येनावध्याम् । ततोऽनन्येन स्वेनैव वध्याम् । ताटकां दुहितरं सुकेतोः, भार्यां जम्भसुतस्य सुन्दासुरस्य, जननीं मारीचस्य । ताटयतीति ताटका । **'तट तड आघाते'** इति काशकृत्स्नः । उपसुन्दसुतं सुबाहुमीशानगिरा विमृत्युमपि निहत्य आग्नेयास्त्रेण । **'दिव्यमाग्नेयमद्भुतम् । सुबाहूरसि चिक्षेप–'** [वा.रा;बा.का.३०.२३] इति स्मरणात् ॥ ७ ॥ अथ सुन्दसुतं मारीचं विरिञ्चगिरा विमृत्युं विरिञ्चस्य वचो मानयानः अर्णवेऽक्षिपत् । विरिञ्चे प्रीत्यतिशयं प्रकाशयन्निति तुनाऽऽह । **'मारीचः सुन्दपुत्रस्तु ताटकायामजायत । दण्डके निहतः सोऽथ राघवेण बलीयसा'** [ब्र.पु.उपो.पा.५.२६] इति च । शरेण पवमानास्त्रेण । **'पवनास्त्रेण महता मारीचं तु निशाचरम् । सागरे पातयामास शुष्कपर्णमिवानिलः'**

**तदा विदेहेन सुतास्वयंबरो[१] विघोषितो दिक्षु विदिक्षु सर्वशः ।**
**निधार्य्य तद् गाधिसुतानुयायी ययौ विदेहाननुजानुयातः ॥ ९ ॥**

**निधार्य अवधार्य । तत् स्वयम्बरविघोषणं श्रुत्वेत्यर्थः ॥ ९ ॥**

---

[उ.खं. २४२.१२८] इति पाद्मे । **'स तेन परमास्त्रेण मानवेन समाहतः । सम्पूर्णं योजनशतं क्षिप्तः सागरसम्प्लवे'** [बा.का.३०.१७] इति वाल्मीकिवचनमप्येतेन गदितार्थम् । वायुर्हि मनुरुच्यते–**'यद्वै मनुरवदत् तद् भेषजम्'** इत्यादौ । **'सताटकं सुबाहुं तु हत्वा प्रक्षिप्य दूरतः । मारीचं मानवास्त्रेण विश्वामित्रमतोषयत्'** [उ.भा. ७५.१०] इति नारदीयवचनं च । **'मारीचं मानवास्त्रेण मोहितं दूरतोऽनयत्'** [अ.पु.५.८] इत्याग्नेयवचनं च । तेन विरिञ्चेन । तस्य मारीचस्य । ताटकाया विष्णोरन्येनावध्यत्वं विधात्रा दत्तम् । तदपि न स्वतस्ताटकया तपस्तप्त्वा लब्धो वरः । किन्तु तस्याः पित्रे सुकेतुनाम्ने यक्षाय दत्तः । स किल विधातारं तोषयंस्तपस्तेपे । तुष्टश्च विधाता तत्सुतायै विष्णोरन्येनावध्यतां वरं ददौ । युक्तं चैतत् । सुकेतोर्यक्षस्य विष्णुभक्तत्वात् । अतः स्वयं विष्णू रामो भूत्वा तां जघान । मारीचस्तु स्वरूपतो विष्णुद्वेषी स्वयमवध्यत्वं वव्रे । तदेतहाह– तेन हि तस्य मारीचस्यैव साक्षाद् दत्तेति । मानयानः मानयमानः । प्राञ्च एवं प्रयुञ्जते । जानान इति प्रयोक्तव्ये जानमान इति प्रयुञ्जते । मानयमान इति प्रयोक्तव्ये मानयान इति प्रयुञ्जते । अर्थाधिक्यायाधिकमक्षरं प्रयुञ्जते । अर्थह्रासाय चाक्षर-लोपम् । तेन मानयान इति भगवदपेक्षया विरिञ्चस्य शक्तिह्रासमाह । अथापि भक्तिपरवशतया विरिञ्चस्य वचो मानयमानः । एवं नूतनं पदं प्रयुञ्जानेन भगवद्गुणानुसन्धानायापूर्वं नामान्तरं चासूचि– मानं छन्दोभिधं प्रमाणं यानं वाहनमस्येति । **'छन्दोमयेन गरुडेन समुह्यमानः'** इति हि भागवते । न केवलं पीडाकारी सज्जनमारी च बभूवेति मारीचः । मां रमां सीतारूपां रेचयति वियोजयति रामादिति मारीचः । मारीभिर्मारकशक्तिभिश्चितश्च । मारयतीति वा मारीचः । ईचिवदीचोऽपि प्रत्ययः । अहो भगवदिच्छया पितरौ तथैव नाम कुरुतः, यदुपरिष्टाद् यथार्थं भविष्यति । अथ मारीचनिरासानन्तरं योद्धुमागतान् । अन्यान् सुबाहुमारीचयोरनुचरान् । अथ कात्स्न्येन जघान । न मारीचमिव कञ्चनान्यमवशेषयामासेत्यर्थः । **'मारीचश्च सुबाहुश्च तयोरनुचराश्च ये । आगम्य भीमसङ्काशा रुधिरौघमवासृजन्'** [बा.कां.३०.१२] इति हि रामायणे । **'शेषान् वायव्यमादाय निजघान महायशाः'** [३०.२२] इति च ॥ ८ ॥ विदेहपतिना सीरध्वजेन । विदेहान् मिथिलाम् । सुतास्वयम्बर इति । यत्र कन्या स्वयं कामयमाना बलोर्जितं जितवीर्यशुल्कं वा वरं वृणीते, वरो वा कामयमानां स्वयं बलादादत्ते स स्वयम्बरः । बलं प्रदर्श्य वरणं बलाद्धरणं च बरणम् । क्वचित् सर्वाधिकं विज्ञाय कमित्वा वरणं च बरणम् । ब कामने इति हि धातुपारा-यणिकाः स्मरन्ति । यत्र पित्रादिभिः कन्यायाः स्वाभीप्सितस्य वरस्य वरणं स स्वयंवरः । क्षत्रियेष्वेव चायं सम्प्रदायः । यथा रुग्मिण्या रुग्मिणोदिष्टः स्वयंवरः । सञ्जातः स्वयम्बरः । वाजपेयव्याजेन सुतास्वयम्बरो घोषितः । इममेव विशेषं द्योतयन् विघोषित इत्याह । **'वाजपेयं क्रतुं यष्टुमारेभे मुनिसत्तमैः । तं द्रष्टुं प्रययुः सर्वे**

---

१. **'–स्वयंवरो–'**

**अथो अहल्यां पतिनाऽभिशप्तां प्रधर्षणादिन्द्रकृताच्छिलीकृताम् ।**
**स्वदर्शनान्मानुषतामुपेतां सुयोजयामास स गौतमेन ॥ १० ॥**

**पतिनाऽभिशप्तामित्यत्र पतिशब्दस्य सम्बद्धशब्दत्वात् तेन अहल्याया इति पदेन योजनायां पतिशब्दस्य षष्ठी-युक्तत्वात् 'षष्ठीयुक्तश्छन्दसि वा' (अ.सू.१.४.९) इति घिसञ्ज्ञा । छन्दस्त्वं चास्य ग्रन्थस्य 'इतिहासपुराणः पञ्चमो वेदानां वेदः' इति छन्दस्त्वेन परिगृहीतेतिहासपुराणाद्यशेषसदागमार्थनिर्णायकत्वेन छन्दस्तुल्यत्वात् सिद्धम् । एवमुत्तरत्रापि वैदिकप्रयोगे गतिः । तां शिलीकृतामहल्याम्[1] ॥ १०–१२ ॥**

---

**विश्वामित्रपुरोगमाः'** [उ.खं.२४२.१३३] इति पाद्मे । **'मैथिलस्य नरश्रेष्ठ जनकस्य भविष्यति । यज्ञः परमधर्मिष्ठस्तस्य यास्यामहे वयम्'** [बा.कां.३१.६] इति वाल्मीकीये । तत् स्वयम्बरघोषणं स्वस्य स्वयम्बराह्वानमिति निधार्य निर्धार्य । मनसि कृत्वा वा ॥ ९ ॥ **'हलं नामेह वैरूप्यं हल्यं तत्प्रभवं भवेत् । यस्मान्न विद्यते हल्यं तेनाहल्येति विश्रुता'** [उ.का.३०.२२] इति वाल्मीकीये । प्रधर्षणादभिशप्ताम् । अभिशापाच्छिलीकृताम् । पतिनाऽभिशप्ताम् । 'स्वस्य पतिना' इत्यध्याहारेण घिसञ्ज्ञां समर्थयन्ते । **'षष्ठी युक्तश्छन्दसि वा'** [अ.सू.१.४.९] इति हि पाणिनिः । वस्तुतस्तु **'षष्ठीयुक्तः'** इत्यपि न वक्तव्यम् । **'छन्दसि वा'** इत्येव पर्याप्तमिति भगवत्पादाशयः । तथाहि प्रयोगः –**'गान्धारी चैव माद्री च कुन्ती च पतिना सह'** [शे.ध.३०.६६] इति । **'वियुक्ता पतिना तेन द्विजेन सहचारिणा'** [बा.कां.२.१२] इति, **'अपापा पतिना त्यक्ता परिपाल्या मया सदा'** [उ.कां.४९.२१] इति च वाल्मीकिवचनमुत्तरचरिते । **'नियुक्ता पतिना भार्या'** [आ.प.१२८.४८] इति सम्भवे । अर्थान्तरं चात्र भगवतोऽभिमतं भाति । पत्युर्गौतमस्यापि नाभिराश्रयः पतिनाभिर्भगवान् । पत्यौ स्थितेन भगवतैव शप्ता, रामरूपेण तेनैव चोद्धृतेति । रामावतारे स्वमहिमाविष्करणानुग्रह एवायं तस्यां भगवत इति । अथ च अभिशप्ता न भवतीति नाभिशप्ता । पत्या नाभिशप्ता पतिनाभिशप्ता । यद्यपि पत्या शप्ता । अथापि नाभिशप्ता । नाभिप्रायपूर्वं शप्ता । तेन नायमभिशापः । किन्तु रामपादस्पर्शलाभरूपो वर एवेत्यर्थः । प्रायो हि महतां शापोऽनुग्रहगर्भ एव भवतीति । एवमाद्यनेकाकूतगर्भोऽयं प्रयोगः । अत एव प्रधर्षणादिन्द्रकृताच्छिलीकृतामित्याह । प्रच्छन्नतया धर्षणं प्रधर्षणम् । ननु रामायणे स्मर्यते–**'मतिं चकार दुर्मेधा देवराजकुतूहलात्'** [बा.कां.४८.२०] इति । तेनेच्छापूर्वोऽयं सम्भोगः । न बलात्कारः । **'कृतार्थाऽस्मि सुरश्रेष्ठ गच्छ शीघ्रमितः प्रभो'** [२१] इति चोपरि सम्भोगमास्वादयति । तत् कथं प्रधर्षणमिदं स्यात्? स्यादेव । शुद्धस्वभावायास्तस्याः इन्द्रेण सह सम्बुभुक्षाऽपि मनोमानिना स्वयमिन्द्रेण कृतात् प्रधर्षणादेवेत्याशयात् । अत एवोपरि पठ्यते–**'सा त्वया धर्षिता शक्र कामार्तेन समन्युना'** [उ.का.३०.३०] इति ब्रह्मवचनम् । **'अज्ञानाद् धर्षिता नाथ त्वद्रूपेण दिवौकसा'** [४०] इति चाहल्यावचनम् ।

---

१. एतेन **'सुयोजयामास स गौतमेन ताम्'** इति वे.ती. सम्मतो मूलपाठः स्यादिति भाति । अथच **'स गौतमेन ताम्'** इति पाठे **'ताम्'** इति चतुर्ष्वपि पादेष्वन्त्यानुप्रासः, **'गौतमेन ताम्, गौतमे नताम्'** इति श्लेषश्च श्लिष्यति ।

**बलं स्वभक्तेरधिकं प्रकाशयन्ननुग्रहं च त्रिदशेष्वतुल्यम् ।**
**अनन्यभक्तां च सुरेशकाङ्क्षया विधाय नारीं प्रययौ तयाऽर्चितः ॥ ११ ॥**

**श्यामावदाते जगदेकसारे स्वनन्तचन्द्राधिककान्तिकान्ते ।**
**सहानुजे कार्म्मुकबाणपाणौ पुरीं प्रविष्टे तुतुषुर्विदेहजाः ॥ १२ ॥**

---

अज्ञानादित्यन्यथाज्ञानादित्यर्थः । **‘अतिरिक्तं तपो हर्तुं गौतमस्याऽश्रमेऽरिहा । सुरकार्यं सुरपतिः कुर्वन् भार्यां समस्पृशत्’** [बा.का.६.१८] इति सङ्ग्रहरामायणे । शापोऽपि लोकदृष्ट्यैव । लोकदृष्ट्यैव शिलीकृता च । न हि सा शिला बभूव । किन्तु लोकदृष्टेरगोचरा शिलायां स्थिता । अभूततद्भावे हि च्विं वदन्ति । तद्वद्भाव एव तद्भावः सर्वत्र । तेन स्वयमशिला शिलावत् सम्पद्यमाना कृतैव शिलीकृता । तथाहि वाल्मीकीये–**‘इह वर्षसहस्राणि बहूनि त्वं निवत्स्यसि । वायुभक्षा निराहारा तप्यन्ती भस्मशायिनी । अदृश्या सर्वभूतानामाश्रमेऽस्मिन् वसिष्यसि’** [बा.कां.५०.२९–३०] इति । **‘सा हि गौतमवाक्येन दुर्निरीक्ष्या बभूव ह । त्रयाणामपि लोकानां यावद् रामस्य दर्शनम् । शापस्यान्तमुपागम्य तेषां दर्शनमागता’** [बा.कां.४९.१५–६] इति च । एतेन वाल्मीकिनिरूपिता कथा एतत्कल्पसम्बन्धिनी । शिलाभावः कल्पान्तरीय इति वदन्तः परास्ताः । उभयोर्विरोधाभावादेव । **‘गच्छतस्तस्य रामस्य पादस्पर्शान्महात्मनः । अभूत् सुरूपा वनिता समाक्रान्ता महाशिला । साऽपि शप्ता पुरा भर्त्रा गौतमेन द्विजन्मना । अहल्या रघुनाथस्य पादस्पर्शाच्छुभाऽभवत्’** [उ.खं.२४२.१३४] इति पाद्मे । तेन **‘मानुषतामुपेताम्’** इत्येतदपि मानुषदृष्ट्यपेक्षया । मानुषदृष्टिगोचरतामुपेतामित्येव परमार्थः । मनुष्याणां दृष्टियोग्यं मानुषमिति वा । पादस्पर्शोऽपि लोकदृष्ट्यैव । वस्तुतो दर्शनमात्रेण स्वं रूपमास्थिता । सुयोजयामास, न यथा पुनरीदृशो वियोगः सम्भविता ॥ १० ॥ भक्तेर्बलं प्रकाशयन् भक्तामहल्यां भक्तेन गौतमेन सुयोजयामास । त्रिदशेष्वनुग्रहं प्रकाशयन् इन्द्रनिमित्तात् शिलीकृतां तामिन्द्रप्रार्थनया नारीं नरदृष्टिगम्यां विधाय प्रययौ । न केवलमिन्द्रप्रार्थनया । तस्या अनन्यभक्तत्वाच्च । **‘महेन्द्रस्य मनःशल्यं त्वद्भक्तस्य समुद्धर । करुणां कुरु कल्याण्यां भवान् हि करुणाकरः । कौशिकेनैवमुदितो मुदितो गत अश्रमम् । प्रैक्षत प्रेक्षणीयेन तामपाङ्गेन शार्ङ्गभृत् । सा तद्दर्शनमात्रेण कान्ता कान्तप्रिया बभौ’** [बा.कां.२२–४] इति सङ्ग्रहरामायणे ॥ ११ ॥ श्यामोऽप्यसितोऽप्यवदातः सित इति विरोधाभासः । वस्तुतः सिते वस्तुनि श्यामोऽङ्कः कलङ्कायते । अयं तु वर्णतः श्यामोऽपि अवदातः । परिशुद्धतया मनोज्ञः । अथच श्यामः शरीरे । अवदातः पीतोऽम्बरे । श्यायतेऽसौ चक्षुर्मनोभिरिति श्यामः मनोज्ञकृष्णवर्णः । श्यैङ् गतौ । **‘इषियुधीन्धिदसिश्याधूसूभ्यो मक्’**[ ७.३१] इति दशपादिका । **‘अवदातं तु विमले मनोज्ञे सितपीतयोः’** इत्यभिदधति । सारः वरः । जगतः सारेष्वयमेको मुख्यः । वरिष्ठ इत्येतत् । अनन्तचन्द्रेभ्योऽप्यधिकया सुकान्त्या अप्राकृतया कान्त्या सर्वलोकमनोहरे । अथच स्वनं वाग्व्यापारं तनोतीति स्वनन्तं मुखम् । स्वनन्तचन्द्रस्य मुखचन्द्रस्याधिका कान्तिः । स्वनन्तस्य वा चन्द्राधिका कान्तिः । दुष्टदमनकर्मणे प्रभवतीति कार्मुकम् । **‘कर्मण उकञ्’** [अ.सू.५.१.१०३] ॥ १२ ॥

पपुर्नितान्तं सरसाक्षिभृङ्गैर्वराननाब्जं पुरुषोत्तमस्य ।
विदेहनारीनरवर्य्यसङ्घा यथा [1]महापूरुषिकास्तदङ्घ्रिम् ॥ १३ ॥

तथा[2] विदेहः प्रतिलभ्य रामं सहस्रनेत्रावरजं गविष्ठम् ।
समर्च्चयामास सहानुजं तमृषिं च साक्षाज्ज्वलनप्रकाशम् ॥ १४ ॥

मेने च जामातरमात्मकन्यागुणोचितं रूपनवावतारम् ।
उवाच चास्मै[3] ऋषिरुग्रतेजाः कुरुष्व जामातरमेनमाश्विति ॥ १५ ॥

**महापूरुषिकाः महापुरुषस्य भगवतो भक्ताः । यथा महापूरुषिकास्तदङ्घ्रिमित्येतत् पपुः समर्चयामासेत्युभयत्र दृष्टान्तः ॥ १३–१४ ॥ रूपनवावतारम् । नूतनरूपेणावतीर्णम् । असदृशरूपमित्यर्थः ॥ १५ ॥**

---

सरसानि तदाननाब्जमधुपानलोलानि, सकुतूहलानीत्येतत् । ज्ञानिभिर्ध्यानयोगे वरणीयम्, कामिनीभिश्चुचुम्बिषया वरणीयम्, सर्वाधिकसौन्दर्यतया वरेण्यं च तदाननमिति वराननम् । नार्यस्त्वतिकुतूहलादधिकं पपुरिति पृथग-गृह्यन्त । यथा महापूरुषिकास्तदङ्घ्रिपद्मं पिबन्ति तथा पपुः । नितान्तं पायम्पायमतृप्ताः । अथच, यथा महा-पूरुषिकास्तदङ्घ्रिं समर्चयन्ति तथा विदेहः समर्चयामास रामम् । अथच विदेहोऽपि तथा सरसाक्षिभृङ्गाभ्यां तदाननाब्जमाधुर्यमधु पिबन्नेव रामं समर्चयामास । पुरुषः शरीरबद्धो जीवः । **'आधिक्येऽधिकम्'** इति पूरुषाः शरीरस्थास्तत्वाभिमानिनो देवाः । तेभ्योऽपि महानयमिति महापूरुषो नारायणः । स एषामस्ति भजनीयत्वेनेति महापूरुषिका भगवद्भक्ताः । महापूरुषिणश्च ते काः आनन्दरूपाः मुक्ता इति वा । महापूरुषं प्रभवन्ति प्रसादयितुमि-त्यर्थ इकप्रत्ययो वा ॥ १३ ॥ प्रतिलभ्य स्वागतादिना सत्कृत्य । अथच केवलं श्रुतपूर्वमिदानीं प्रत्यक्षं लब्ध्वा । गविष्ठं भूमौ स्थितं सहस्रनेत्रावरजमुपेन्द्रम् । अथच सहस्रनेत्रः अनन्तनेत्रो भगवान् । **'सहस्राक्षः सहस्रपात्'** इति श्रवणात् । पुरुषसूक्तप्रतिपाद्यो भगवान् इहावरेषु कृपया जायते दशरथादिषु स्वयमनवरः । अथच गविष्ठो दिविष्ठः । सहस्रनेत्रावरजः सूर्यः । सोऽपि ह्यदित्यां शक्रानुजः सन्नजायत । लुप्तोपमा । द्युस्थितं सूर्यमिव । गविष्ठं भूमौ गतं सूर्यमिवेति च । अथच गविष्ठः सूर्यः । **'गविष्ठो गां गतस्तदा'** इत्यादिप्रयोगात् । गविष्ठ इव गविष्ठः । सूर्यप्रभं रामम्, ज्वलनप्रकाशं पावकप्रभमृषिं च समर्चयामास । समुचितमर्चनं समर्चनम् ॥ १४ ॥ रूपस्य सौन्दर्यस्य नूतनमाविष्कारम् । **'परेशमेव तं मेने रामं दशरथात्मजम् । पूजयामास काकुत्स्थं धन्योऽस्मीति ब्रुवन् नृपः । प्रसादं वासुदेवस्य विष्णोर्मेने नरेश्वरः । दातुं दुहितरं तस्मै मनसा चिन्तयन् प्रभुः'** [उ.खं.२४२.१४२–३] इति पाद्मे । अस्मै जनकाय, तदनुग्रहार्थं तमुवाच । यत्र गुरुः शिष्यं बोधयन्नाह तत्र चतुर्थी भवति विभाषा–

---

१. **'महापौरुषिका–'** । यद्यपि प्राचीनकोशे **'महापूरिषिका–'** इति पठ्यते । स्खलनं सम्भाव्यते । मूलपाठानुसारिषु कोशान्तरेषु **'महापूरुषिका–'** इत्येव पाठः पठ्यते । २. **'तदा वि–'** ३. **'चास्मा ऋषि–'**

**स आह चैनं परमं वचस्ते करोमि नात्रास्ति विचारणा मे ।**
**शृणुष्व मेऽथापि यथा प्रतिज्ञा सुताप्रदानाय कृता पुरस्तात् ॥ १६ ॥**

**तपो मया चीर्ण्णमुमापतेः पुरा वरायुधावाप्तिधृतेन चेतसा ।**
**स मे ददौ दिव्यमिदं धनुस्तदा कथञ्चनाचाल्यमृते पिनाकिनम् ॥ १७ ॥**

**न देवदैत्योरगदेवगायका अलं धनुश्चालयितुं सवासवाः ।**
**कुतो नरास्तद्धरतो हि किङ्कराः सहानसैवात्र कृषन्ति कृच्छ्रतः ॥ १८ ॥**

**अथापि सुताप्रदाने सन्देहाभावेऽपि ॥ १६–१७ ॥ नालं (न) समर्थाः ॥ १८ ॥**

---

गुरुः शिष्यायोवाच, गुरुः शिष्यमुवाच । तत्र **'अस्मै ऋषिः'** इति प्रगृह्य प्रयोगेण विवाहसंयोजकस्यापि ऋषेः स्वयं निर्लिप्ततामाह । स्वयं च जामातरमनुरूपं मेने । ऋषिश्च तदेवोवाच । जामाता स तस्य भवति यो यस्माज्जातायां सन्ततेर्निर्माता भवति । दुर्गसिंहस्तु–**'पुत्रप्रतिनिधिर्जायत इति जामाता दुहितुः पतिः'** इत्याह [का.उ.सू.वृ.२.४२]। उग्रतेजा यो न मृष्यति स्ववचनातिक्रमम् ॥ १५ ॥ परमं शिरसा धार्यम् । अथापि विना विमर्शेन कर्तव्यत्वेऽपि ॥ १६ ॥ रामायणे बालकाण्डे, तद् धनुर्जनकपूर्वजाय देवराताय शिवेन दत्तमित्युच्यते । **'देवरात इति ख्यातो निमेः षष्ठो महीपतिः । न्यासोऽयं तस्य भगवन् हस्ते दत्तो महात्मना'** [बा.कां.६६.८] इति । **'तदेतद् देवदेवस्य धनूरत्नं महात्मनः । न्यासभूतं तदा न्यस्तमस्माकं पूर्वजे विभो'**[१२] इति च । तदेवं न्यासभूतं वस्तु कथं विवाहे पणं चकार? अथचायोध्याकाण्डे पुनरन्यथा श्रूयते, वरुण एतद् ददाविति– **'महायज्ञे तदा तस्य वरुणेन महात्मना । दत्तं धनुर्वरं प्रीत्या तूणी चाक्षयसायकौ'**[११८.३९] इति । तामेतां विसङ्गतिं परिहरति– तपो मया चीर्णमिति । तथाहि स्मर्यते–**'प्रीतश्च भगवानीशस्त्रिशूली नीललोहितः । प्रददौ शत्रुनाशार्थं जनकायाद्भुतं धनुः'** [कू.पु; पू.२१.२१] इति । न्यासत्वेन देवराताय देवैर्दत्तस्य स्वीयत्वापादनार्थं मया तपश्चीर्णम् । तस्मिंस्तपोरूपे महायज्ञे वरणीयेन महात्मना शिवेन तस्य मे धनुर्दत्तमिति रामायणवचनार्थ इति न कोऽपि विरोधः । उमापतेः सकाशात् वरायुधावाप्तौ कृतनिश्चयेन चेतसा । उमापतिमुद्दिश्य मया तपः कृतम् । इदमिति सदसि किञ्चिदिव व्यवहितमङ्गुल्या दर्शयन्नाह । पिनाकिनमिति । यद्यपि सीरध्वजस्य स्वं धनुर्ददौ शिवः । अथापि तदेव धनू रूपान्तरेण शिवसमीपेऽप्यासेत्यनेनाऽह । पाति नाकमिति पिनाकः पिनाकं वा । **'पिनाकः शिवकोदण्डे पांसुवृष्टित्रिशूलयोः'** इत्यभिधानम् । **'पिनाकादय आकप्रत्ययान्ता निपात्यन्ते । पिनष्टीति पिनाक ऐशं धनुः'** [भो.उ.सू.वृ.२.२.१४] इति दण्डनाथनारायणः । पिनाकिनमृते तदवरैर्देवैरप्यचाल्यम्, ऋते च तद्धरतः ॥ १७ ॥ तदेव स्फुटमाह– न देवदैत्योरगदेवगायकाः सवासवा इत्यादि । **'नृणां शतानि पञ्चाशद् व्यायतानां महात्मनाम् । मञ्जूषामष्टचक्रां तां समूहुस्ते कथञ्चन'** [बा.कां.६७.४] इति हि वाल्मीकीये । **'राजाज्ञयाऽथाऽचकृषेऽष्टचक्रमञ्जूषयाऽयःकृतयाऽभि-**

**अधार्य्यमेतद् धनुराप्य शङ्करादहं नृणां वीर्य्यपरीक्षणे धृतः ।**
**सुतार्त्थमेतां चकर प्रतिज्ञां ददामि कन्यां य इदं हि पूरयेत् ॥ १९ ॥**

**इतीरितां मे गिरमभ्यवेत्य दितेःसुता दानवयक्षराक्षसाः ।**
**समेत्य भूपाश्च समीपमाशु प्रगृह्य तच्चालयितुं न शेकुः ॥ २० ॥**

**नृणां वीर्यपरीक्षणे वीर्यपरीक्षणार्थं धृतः दैवेन स्थापित इत्यर्थः । चकरेत्युत्तमपुरुषैकवचनम् । 'णलुत्तमो वा' (अ.सू.७.१.९१) इति णित्त्वाभावे पक्षे वृद्ध्यभावः ॥ १९ ॥ अभ्यवेत्य ज्ञात्वा स(न्देशमुखेन) इत्यर्थः ॥ २०–२ ॥**

---

**गुप्तम् । वीरोत्तमैः पञ्चसहस्रसङ्ख्यैर्वराच्छिवस्यैव वरं शिवास्त्रम्'** [बा.कां. ७.१३] इति सङ्ग्रहरामायणे । नारदीयं त्वत्र विवदते– **'भृत्यत्रिशत्याऽऽनाय्यास्मै दर्शयामास सादरम्'** [ना.पु;उ.खं. ५५.१७] इति । विवादे कल्पभेदेन व्यवस्थेति वदन्ति । वस्तुतस्तु नैतद् युक्तम् । **'ऋते तु पाण्डवकथां कार्ष्णं रामायणं तथा'** [भाग.ता.४.१.३३] इति वाराहवचनेन रामायणकथासु कल्पभेदव्यवस्थाया भगवत्पादेन निरस्तत्वात् । तर्हि का गतिर्विभिन्नवचनानामिति शङ्कायाः समाधानं तु तत्रैवोक्तम्–**'मोहायैतेषु भिन्नता'** इति । एतेषु भारते कृष्णकथायां रामायणेषु च यदि कथानिरूपणे भिन्नता दृश्यते सा दुर्जनमोहायैवेति ज्ञेयमित्यर्थः । तेन नारदीये शतशब्दो बहुत्ववचनः । न सङ्ख्याविशेषवचनः । अथवा शतानीति षोळशशतान्युच्यन्ते । त्रिरावृत्तानां षोळशशतानां समाहारस्त्रिशती । अथापि द्वे शते न्यूने भवतः । इयमसुरमोहनी न्यूनोक्तिरित्यर्थः । एतेनैव **'त्रिशतोपनीतम्'** [भाग.९.८.८८] इति भागवतवचनमपि गदिताभिप्रायम् । अनः शकटम् । यद्यपि तुदादिः कृषतिः कृषिकर्मणि भूविलेखने प्रसिद्धः । भ्वादिः कर्षतिराकर्षणे । **'कर्षत्याकर्षणे शे तु कृषते कृषतीत्युभे'** [दै.१७८] इति देवः । **'कृष विलेखने । कर्षतिस्त्वाकर्षणे प्रसिद्धः'** [पु.का.] इति कृष्णलीलाशुकः । अथापि कृषन्तीत्याह । तेनेदं ज्ञापयति– लब्धवरा अपि किङ्करा न सहजमाकर्षन्ति । किन्तु महता प्रयत्नेन हलवद् विलिखंविलिखं कर्षन्तीति । तदेव स्फुटमाह– कृच्छ्रतः क्लेशेन कृषन्तीति ॥ १८ ॥ केनाप्यधार्यम् । शिवादवरेणेति हृदयम् । नारायण एवेदं धनुः पूरयेदिति जानन्नेव हि पणं चकार । वक्ष्यति हि–**'अयमेव मेऽर्थितः'** [२३] इति । उपरि च–**'अपाम्पतिश्च मैथिलः स्वयंवरङ्गतावपि । हरिं विनिश्चयादियं व्रजेदिति स्म चक्रतुः'** [१७.६०] इति च । वीर्यपरीक्षणे धृतः कृतनिश्चयः । नृणां नृलोके जातानां पुरुषाणाम् । न मनुष्याणाम् । कुतो नरा इति पूर्ववचनविरोधात् । यद्वा नृणां मनुष्याणां वीर्यमेतद्धनुरारोपणेऽसमर्थमिति परीक्षया स्थापयित्वा रामाय दातुं धृतः । नृणां भगवतोऽनुपमस्य वीर्यस्य परितः प्रत्यक्षमीक्षणार्थं वा । नृणामधार्यमिति वाऽन्वयः । सुतार्थम्, सुताया लोकोत्तरपतिवाञ्छया । यः पूरयेत् तस्मै ददामीति प्रतिज्ञां चकर अकरवम् । हीति प्रतिज्ञाया जनजनितताममाह ॥ १९ ॥ अभितः दिशिदिशि प्रसृतां गिरम-वेत्य । दितेःसुता इत्यलुगाक्रोशे । दैत्या अपि सीतामभ्यलिलषिषन्नित्याक्रोशति । दैवास्तु नाऽययुरेव । वक्ष्यति

**संस्विन्नगात्राः परिवृत्तनेत्रा दशाननाद्याः पतिता विमूर्च्छिताः ।**
**तथाऽपि मां धर्षयितुं न शेकुः सुताकृते ते वचनात् स्वयम्भुवः ॥ २१ ॥**

**पुरा हि मेऽदात् प्रभुरब्जजो वरं प्रसादितो मे तपसा कथञ्चन ।**
**बलान्न ते कश्चिदुपैति कन्यकां तदिच्छुभिस्ते नच धर्षणेति ॥ २२ ॥**

**ततस्तु ते नष्टमदा इतो गताः समस्तशो ह्यस्तन एव पार्थिवाः ।**
**ततो ममायं प्रतिपूर्य्य[1] मानसं वृणोतु कन्यामयमेव मेऽर्थितः ॥ २३ ॥**

**तथेति चोक्ते[2] मुनिना स किङ्करैरनन्तभोगोपममाशवथाऽनयत् ।**
**समीक्ष्य तद् वामकरेण राघवः सलीलमुद्धृत्य हसन्नपूरयत् ॥ २४ ॥**

**ह्यो भवः ह्यस्तनः, तस्मिन् ह्यस्तने काल इत्यर्थः ॥ २३–४ ॥**

---

हि–**'विजानमाना जगतां हि मातरं पुराऽर्थितुं नाऽययुरत्र देवताः'** [३४] इति । धनुषोऽचाल्यतामजानन्तः, सीतालाभसम्भ्रमेणाऽशु समीपमेत्य प्रगृह्य महता प्रयत्नेन गृहीत्वा ॥ २० ॥ स्वेदेन स्नानेनेव सर्वात्मना क्लिन्नं संस्विन्नम् । परिवृत्तं पर्याकुलपरिप्लवकनीनिकम् । निष्पन्दतया चिरमूर्छालता विमूर्छा । सुतानिमित्तं धर्षयितुमभिभवितुम् । धृष प्रसहने । प्रसहनमभिभवनशक्तिः । सुताकृते त्वां मा कोऽपि स्म धर्षयदिति वचनात् स्वयम्भुवः ॥ २१ ॥ ननूमापतेस्तपश्चीर्णम् । कथं स्वयम्भूर्वरं ददौ? आह–पुरा हि । तपसा मे मया प्रसादितः । हिमे हिममये स्थाने, हिमालय इति वा । रामायणे देवगणान् प्रति तपश्चकारेत्युक्तम्– **'ततो देवगणान् सर्वान् तपसाऽहं प्रसादयम्'**[बा.कां.६६.२३] इति । न हि शिववरेण रक्षितस्तदवरान् देवान् रक्षार्थमेयायेति युक्तम् । अतो देवगणनायकः स्वयम्भूरेव तपसा तोषितः । देवगणनायके प्रसादिते सर्वे देवाश्च प्रसादिता अभवन्निति रामायणवचनस्य भावं स्फुटयति ॥ २२ ॥ ततस्तु ते नष्टमदाः । **'नानादेशादथाऽयाता जनकस्य निवेशनम् । राजपुत्रा महावीर्याः पूर्वं सीताभिकाङ्क्षिणः'** [४७.१०१], **'क्रमादादाय ते तत्तु सज्यीकर्तुमथाभवन् । धनुषा ताडिताः सर्वे क्रमात् तेन महीपते । विधूय पतिता राजन् विलज्जास्तत्र पार्थिवाः'** [१०६–७] इति नरसिंहपुराणे । **'तच्च दृष्ट्वा धनुःश्रेष्ठं गौरवाद् गिरिसन्निभम् । अभिवाद्य नृपा जग्मुरशक्तास्तस्य तोलने'** [अ.कां.११८.४३] इति वाल्मीकीये । चिरकालं प्रतीक्षितं मम मनोऽभिलाषं धनुश्च साकं पूरयित्वा । अयमेव मेऽर्थितः । एतदर्थमेव मया प्रतिज्ञा कृता ॥ २३ ॥ तथाऽस्तु 'धनुःपूरणमस्तु' इति, 'तवेच्छापूरणं चास्तु' इति च मुनिनोक्ते सति । वामकरेणेति । अनादरेणाप्रयत्नेन च । तदेव स्फुटमाह– सलीलं हसन् ॥ २४ ॥

---

१. **'ममायं परिपूर्य'** २. **'चोक्तो मु–'**

**विकृष्यमाणं तदनन्तराधसा परेण निःसीमबलेन लीलया ।**
**अभज्यतासह्यममुष्य तद् बलं प्रसोढुमीशं कुत एव तद् भवेत् ॥ २५ ॥**

**स मद्ध्यतस्तत् प्रविभज्य लीलया यथेक्षुदण्डं शतमन्युकुञ्जरः ।**
**विलोकयन् वक्त्रमृषेरवस्थितः सलक्ष्मणः पूर्णतनुर्य्यथा शशी ॥ २६ ॥**

**तमब्जनेत्रं पृथुतुङ्गवक्षसं श्यामावदातं चलकुण्डलोज्ज्वलम् ।**
**शशक्षतोत्थोपमचन्दनोक्षितं ददर्श विद्युद्वसनं नृपात्मजा ॥ २७ ॥**

**अथो कराभ्यां प्रतिगृह्य मालामम्लानपद्मां जलजायताक्षी ।**
**उपेत्य मन्दं ललितैः[1] पदैस्तां तदंस आसज्य च पार्श्वतोऽभवत् ॥ २८ ॥**

**अनन्तराधसा अनन्तानि (राधांसि यस्मात् सः अनन्तराधाः । तेन) इष्टसिद्धिप्रदात्रा । तद् धनुः । अमुष्य रामस्य । तद् बलं निस्सीममसह्यं च बलम् ॥ २५–६ ॥ (शशक्षतोत्थं) हि रुधिरम् ॥ २७ ॥ उपेत्य, राममिति शेषः ॥ २८–९ ॥**

---

विभङ्क्तुमेव कृष्यमाणम् । भनजानीदं धनुरितीच्छयैव कृष्यमाणमित्यर्थः । अनन्तराधसा । राध इत्यन्नम् । अनन्तमपि विश्वं यस्यान्नं प्रळये सोऽनन्तराधाः । विश्वसंहर्तुः कियदिदं धनुः? अनन्तो भविष्यन्, धनुःप्रदाता पिनाकपाणिरपि यस्यान्नम् । **'मृत्युर्यस्योपसेचनम्'** इति श्रुतेः । राध इति घृणा । अपारकरुणोऽयं स्वभक्तजनकदयावशंवदतया धनुर्विचकर्ष । राध इतीष्टप्रदानम् । भक्तानां मोक्षान्तानन्ताभीष्टदाता भक्ताभीष्टपूरणायैव धनुः पूरयामास । राध इति समृद्धिः । पिनाकिना दत्तं धनुरपि तस्यैव हि स्वम् । राध इति सामर्थ्यम् । अनन्तराधसा सर्वसमर्थेन । तद् बलम्, ज्ञानिलोकप्रसिद्धं श्रुतिशतसिद्धं च । शिववरलब्धप्रकर्षबलेनापि सोढुम् । तद् धनुः ॥ २५ ॥ यथेक्षुदण्डं शतमन्युकुञ्जरः । **'रामश्चण्डीशचापं तद् वामदोष्णोद्धरन् क्षणात् । सज्यं विकृष्य सहसा बभञ्जेक्षुमिवेभराट्'** [ना.उ.भा.७५.१८] इति नारदीये । सर्वलोकस्य पश्यतः प्रकटं विभज्य । कलाभिः पूर्णा तनुर्यस्य स पूर्णतनू राकाचन्द्रः । सर्वलक्षणैः गुणैश्च पूर्णा तनुरस्येति पूर्णतनू रामचन्द्रः । शशाख्येन लक्ष्मणा युक्त इति चन्द्रोऽपि सलक्ष्मणः । एतत्सूचनायैव चन्द्र इत्यनुक्त्वा 'शशी' इत्याह ॥ २६ ॥ उपरि श्यामः, अधोऽवदातः पीतः पीताम्बरत्वात् । वक्ष्यति हि–**'विद्युद्वसनम्'** इति । शशाक्षतः शशाङ्कः । तस्मादुद्गतेनेवाऽऽह्लादकेन शीतलेन च चन्दनेनोक्षितः । शशस्य क्षतोत्थं क्षतजं तद्वल्लोहितेन कुङ्कुमेन रक्तचन्दनेन चोक्षितः पत्रलेखाङ्कितश्च । आर्षसम्प्रदायसिद्धं चेदं क्षतजोपमानं चन्दनस्य । तथाहि वाल्मीकीये–**'शशक्षतजकल्पेन सुशीतेन सुगन्धिना । चन्दनेन परार्द्ध्येन स्वनुलिप्तौ स्वलङ्कृतौ'** [सुं.कां.१०.१९] इति ॥ २७ ॥ अथो कृतधनुर्भङ्गस्य रामस्य दर्शनानन्तरम् । परम-

---

१. **'ललितैः'**

**ततः प्रमोदो नितरां जनानां विदेहपुर्य्यामभवत् समन्तात् ।**
**रामं समालोक्य नरेन्द्रपुत्र्या समेतमानन्दनिधिं परेशम् ॥ २९ ॥**

**लक्ष्म्या समेते प्रकटं रमेशे सम्प्रेषयामास तदाऽऽशु पित्रे ।**
**विदेहराजो दशदिग्रथाय स तन्निशम्याऽशु तुतोष भूमिपः ॥ ३० ॥**

**अथाऽत्मजाभ्यां सहितः सभार्य्यो ययौ गजस्यन्दनपत्तियुक्तया ।**
**स्वसेनयाऽग्रे प्रणिधाय धातृजं वसिष्ठमाश्वेव स यत्र मैथिलः ॥ ३१ ॥**

**स मैथिलेनातितरां समर्च्चितो विवाहयामास सुतं मुदम्भरः ।**
**पुरोहितो गाधिसुतानुमोदितो जुहाव वह्निं विधिना वसिष्ठः ॥ ३२ ॥**

**प्रकटमङ्गदृष्ट्यपेक्षयाऽपि ॥ ३०–२ ॥**

---

माङ्गलिकश्चायं प्रसङ्ग इति चाऽह– अथो इति । धनुर्भङ्गविजयमालाम् । दासीहस्तात् प्रतिगृह्य । रामांस आसञ्जनं च प्रतीक्षमाणा गृहीत्वा कराभ्याम् । जलजायताक्षी । आदावक्षिपातजलजमालाया रामांस आसजनम् । ततः करगतमालाया इत्यर्थः । ललितैः सुकुमारैः । अनाचार्योपदिष्टः स्त्रीणां भावविलासो वा ललितम् । **'लड विलासे'** इति पठन्ति । लळ विलासे इत्यपि पठनीयम् । अज्मध्यस्थतया वा डस्य ळः । ननु रामायणेऽनुदितेयं कथा? मालां नासञ्जयदिति च नोक्तं रामायणे । मा स्म वाचि । कथमासञ्जयदिति निर्णयसे? वचनान्तरादिति ब्रूमः । तथा हि नरसिंहपुराणे–**'आकृष्यमाणं तु बलात् तेन भग्नं महद् धनुः । सीता च मालामादाय शुभां रामस्य मूर्धनि । क्षिप्त्वा संवरयामास सर्वक्षत्रियसन्निधौ'** [४७.११९] इति । सरणिरियं प्राचाम् । यदेकत्र सर्वं न वदन्ति । किञ्चिदत्र, किञ्चिदन्यत्र विक्षिप्यविक्षिप्य निक्षिपन्ति– यच्छास्त्रेष्वधीतिनो बहुदर्शिनो भूयासुरिति ॥२८॥ रमन्ते जना अनेनेति रामः ॥ २९ ॥ रमाया अप्ययमीश इति च रामः । तदाह–रमेश इति । तदा सम्भ्रमेण सन्तुष्टः सन्नाशु दूतान् प्रेषयामास । रामस्य पित्रे । तच्च रामेण धनुर्भञ्जनं च वृत्तं सन्दिश्य प्रेषयामास । दश रथा अस्येति न भ्रमितव्यम् । किन्तु दशसु दिक्ष्वस्य रथ इति दशरथः स प्रथित इत्याह– दशदिग्रथाय ॥३०॥ आत्मजाभ्यां भरतशत्रुघ्नाभ्याम् । गजस्यन्दनपत्तियुक्तया । स्यन्दनपदेन तुरगा अप्युपलक्ष्यन्ते । एवं चतुरङ्गिण्या स्वसेनया च सहितः । अग्रे प्रणिधाने हेतुः– धातृजत्वादिति । यत्र मैथिलस्तां मिथिलां ययौ । आशु सम्प्रेषयामासेति, आशु तुतोषेति, आशु ययाविति त्रिराशुपदं प्रयुञ्जानस्तयोः सन्तोषातिरेकेण विलम्बासहत्वं नाम सम्भ्रमातिशयं ग्राहयति ॥ ३१ ॥ अतितरां सम्यगर्चित इति अर्चने गौरवातिशयं व्यनक्ति । ज्ञानेन वयसा च वृद्ध इत्यर्चितः । महति रघुकुले जात इति समर्चितः । सम्बन्धी जात इत्यतिशयेन समर्चितः । रामपितेत्यतितरां समर्चितः । वह्निं

'तदा विमानावलिभिर्नभस्तळं[१] दिदृक्षतां सङ्कुलमास नाकिनाम् ।
सुरानका दुन्दुभयो विनेदिरे' जगुश्च गन्धर्ववराः सहस्रशः ॥ ३३ ॥

विजानमाना जगतां हि मातरं पुराऽर्थितुं नाऽययुरत्र देवताः ।
तदा तु रामं रमया युतं प्रभुं दिदृक्षवश्चक्रुरलं नभस्तळम्[१] ॥ ३४ ॥

यथा पुरा सागरजास्वयंबरे[२] सुमानसानामभवत् समागमः ।
तथा ह्यभूत् सर्वदिवौकसां तदा तथा मुनीनां सहभूभृतां भुवि ॥ ३५ ॥

प्रगृह्य पाणिं च नृपात्मजाया रराज राजीवसमाननेत्रः ।
यथा पुरा सागरजासमेतः सुरासुराणाममृताब्धिमन्थने ॥ ३६ ॥

**सुरानकाः दुन्दुभयोऽपि विनेदिरे, नभसीति शेषः ॥ ३३–४ ॥ तथा सर्वदिवौकसां (समागमः अभूत् । स्वयम्बरं द्रष्टुमि)ति शेषः ॥ ३५ ॥ अमृताब्धिमन्थने अमृतार्थमब्धिमन्थने ॥ ३६–८ ॥**

---

जुहाव हविर्दानेन प्रीणयामासेत्यर्थः । हु दाने प्रीणने च ॥ ३२ ॥ तदेति । पद्यमिदं भागवतेऽपि पठ्यते [७.८.३७] विना तुरीयचरणम् । **'गन्धर्वमुख्या ननृतुर्जगुः स्त्रियः'** इति भागवतपाठस्तुरीयचरणे । एतेन भागवतेऽन्वयं च दर्शयामास– गन्धर्वमुख्या जगुः, स्त्रियो ननृतुरिति । सुरानकाः सुरदुन्दुभयश्च विस्पष्टं नेदिरे यथा सर्वोऽपि लोकः शुश्राव । आनकः पटहः । एकमुखं बृहत् तालवाद्यम् । आनयति श्रोतॄनुत्साहयतीति । दुन्दुभिर्भेरी । विजयघोषणार्थं ताड्यमानं तालवाद्यम् । दुन्दुमिति ध्वनन् भातीति । ध्वनन्नम्बुदोऽप्यानक उच्यते । तद्व्यावृत्त्यर्थं सुरानका इति । जगुश्च, ननृतुश्चाप्सरसः । **'ननृतुश्चाप्सरःसङ्घा गन्धर्वाश्च जगुः कलम्'** [बा.कां.७३.३८] इति हि रामायणे ॥ ३३ ॥ विजानमानाः । विज्ञानमपरोक्षज्ञानम् । अवतारविशेषैः सह च ज्ञानम् । जानाना इति वक्तव्ये जानमाना इत्याह । तेनाक्षराधिक्येन देवानां ज्ञानाधिक्यमाह । ज्ञानफलं सुखाधिक्यमात्मगामीत्यात्मनेभाषा । अधिकं पुरस्तादुक्तम् [३.२४] । अपिच जानं जननादारभ्य वर्धमानं नैसर्गिकं मानं ज्ञानं येषां तेऽपि जानमाना उच्यन्ते । प्रसिद्धं च देवानामीदृशं विज्ञानमिति हीत्याह । नभस्तळमलश्चक्रुः ॥ ३४ ॥ सागरजास्वयम्बरे । स्वयम्बरशब्दार्थः पूर्वं [९] विवृतः । सर्वाधिकं कमित्वा वरणमपि बरणमिति । तेन सागरजायाः स्वयम्बर एव । सागरजायां सीतायां च मातृत्वं मनसा मानयन्तः समागता इति सुमानसानामिति साकूतं पदम् । भूभृद्भिः सहिताः सहभूभृतो मुनयः । जनकस्य सहचरा भूभृतो वा सहभूभृतः । सहेति भिन्नं वा पदम् । सुरैः सह मुनीनां भूभृतां च समागमोऽभूदिति ॥ ३५ ॥ प्रगृह्य, नित्यगृहीतपाणिरपि तदात्वे प्रकटं च गृहीत्वा । सुरासुराणाममृताब्धिमन्थने । सुरासुरकर्तृके अमृतनिमित्तेऽब्धिमन्थने । **'मुदा धरणिजां तस्मै प्रददौ मिथिलाधिपः । केशवाय श्रियमिव**

---

१. '–स्तलम्' २. '–स्वयंवरे'

**स्वलङ्कृतास्तत्र विचेरुरङ्गना विदेहराजस्य च या हि[1] योषितः ।**
**मुदा समेतं रमया रमापतिं विलोक्य रामाय ददौ धनं नृपः ॥ ३७ ॥**

**प्रियाणि वस्त्राणि रथान् सकुञ्जरान् [2]पराद्ध्यर्यरत्नान्यखिलस्य चेशितुः ।**
**ददौ च कन्यात्रयमुत्तमं मुदा तदा स रामावरजेभ्य एव[3] ॥ ३८ ॥**

**महोत्सवं तं त्वनुभूय देवता नराश्च सर्वे प्रययुर्य्यथागतम् ।**
**पिता च रामस्य सुतैः समन्वितो ययावयोद्ध्यां स्वपुरीं मुदा ततः ॥ ३९ ॥**

**तदन्तरे सोऽथ ददर्श भार्ग्गवं सहस्रलक्षामितभानुदीधितिम् ।**
**विभासमानं निजरश्मिमण्डले धनुर्द्धरं दीप्तपरश्वधायुधम् ॥ ४० ॥**

**ततः विदेहनगर्याः ॥ ३९ ॥ तदन्तरे विदेहनगरायोध्ययोर्मध्ये । सहस्रलक्षामितेति द्रष्टॄणां योग्यतापेक्षया ॥ ४०–२ ॥**

---

**यथा पूर्वं महार्णवः'**[ उ.खं.२४२.१४७] इति पाद्मे ॥ ३६ ॥ पौराङ्गनाः, विदेहराजस्य योषितश्च । मुदा स्वलङ्कृताः । मुदा धनं ददौ नृपः ॥ ३७ ॥ पराद्ध्यर्यानि श्रेष्ठानि रत्नानि । परार्धसङ्ख्यावत् सर्वोपरि स्थानमर्हतीति परार्ध्यमित्येके । परस्मिन्नर्धे स्थाने भवं परार्ध्यमित्यन्ये । **'अर्धाद् यत्'** [अ.सू.४.३.४], **'परावराधमोत्तमपूर्वाच्च'** [५] इति पाणिनिः । अखिलेशितुरपि ददाविति विस्मयते । **'रत्नानि दिव्यानि बहूनि दत्वा रामाय वस्त्राण्यतिशोभनानि । हस्त्यश्वदासानपि कर्मयोग्यान् दासीजनांश्च प्रवराः स्त्रियश्च'** [४७.१३४] इति नरसिंहपुराणे । तदैव तस्मिन्नेवावसरे । रामावरजेभ्यः । लक्ष्मणायोर्मिळां स्वतनयाम् । स्वानुजस्य साङ्काश्यपतेः कुशध्वजस्य तनये माण्डवीश्रुतकीर्ती भरतशत्रुघ्नाभ्याम् । ऊर्मिमन्तः कुन्तला अस्या इत्यूर्मिळा । रेफात् परस्य लो ळः समानपदे । उरवो गुणा अत्र मिलन्तीति वा । मण्डयन्तीति मण्डवः लज्जासौशील्यादयः । तेषामियं निधानमिति माण्डवी । मन्यत इति मण्डुर्ज्ञानी । **'तनि-मनि-कणिभ्यो डुः'** [स.कं.२.१.५१] इति भोजः । मण्डोरियं माण्डवीति वा । श्रुतकीर्तिरिति स्फुटम् ॥ ३८ ॥ तं तु अभूतपूर्वम् । न किल कल्पेऽस्मिन् नरैर्नारायणोद्वाहमहोत्सवस्तावन्तमनेहसमनुभूतः । देवा एव देवताः । देवशब्दात् स्वार्थे तलमामन्नौ पाणिनिः [अ.सू.५.४.२७] । प्रययुः । अपूर्वमहोत्सवदर्शनात् प्रहृष्टा ययुः । ततः सुराणां नराणां च प्रयाणानन्तरं पिता च रामस्य मुदा ययौ । मुदा ततः आनन्दसम्भृत इति वा ॥ ३९ ॥ ज्ञानिभिः स्वहृदये दृश्यमानं रूपमाह– सहस्रेति । अमितभानुदीधितित्वेन स्वेन सदा दृश्यमानम् । अन्यैश्च देवैरृषिभिश्च यथायोग्यं शतसहस्रलक्षादिभानुदीधिततया । अत एव विभासमान-

---

१. **'–राजस्य हि याश्च योषितः'** २. **'परार्घ्य–** ३. **'एव च ।'**

**अजानतां राघवमादिपूरुषं समागतं ज्ञापयितुं निदर्शनैः ।**
**समाह्वयन्तं रघुपं स्पृधेव नृपो ययाचे प्रणिपत्य भीतः ॥ ४१ ॥**

**न मे सुतं हन्तुमिहार्हसि प्रभो वयोगतस्येत्युदितः स भार्ग्गवः ।**
**सुतत्रयं ते प्रददामि राघवं रणे स्थितं द्रष्टुमिहाऽगतोऽस्म्यहम् ॥ ४२ ॥**

**स इत्थमुक्त्वा नृपतिं रघूत्तमं भृगूत्तमः प्राह निजां तनुं हरिः ।**
**अभेदमज्ञेष्वभिदर्शयन्[1] परं पुरातनोऽहं हरिरेष इत्यपि ॥ ४३ ॥**

**शृणुष्व राम त्वमिहोदितं मया धनुर्द्वयं पूर्वमभून्महाद्भुतम् ।**
**उमापतिस्त्वेकमधारयत् ततो रमापतिश्चापरमुत्तमोत्तमम् ॥ ४४ ॥**

**तदा तु लोकस्य निदर्शनार्थिभिः समर्थितौ तौ हरिशङ्करौ सुरैः ।**
**रणस्थितौ[2] वां प्रसमीक्षितुं वयं समर्थयामोऽत्र निदर्शनार्थिनः ॥ ४५ ॥**

**सः भृगूत्तमो हरिः नृपतिं प्रति इत्थमुक्त्वा निजां तनुं रघूत्तमं प्राह । अहमेषोऽपि पुरातनो हरिरिति परम-भेदमज्ञेष्वपि दर्शयन् । अभेदस्य परत्वं नाम तथाज्ञानस्य मोक्षसाधनत्वम् ॥ ४३–६ ॥**

---

मित्याह । योगिनां विविधतया भासमानम् । अयोग्यानां पुनर्नायं भगवानिति विरुद्धतया भासमानम् । अथापि निजरश्मिमण्डले सर्वविलक्षणतया विशिष्टतया च भासमानम् । यद्यपि तदानीं तत्र सर्वे नैवं ददृशुः । अथापि वसिष्ठदशरथादयः किञ्चिदिव तथा ददृशुः । केचित्तु भार्गवस्य पूर्णावतारत्वमेव नाङ्गीकुर्वन्ति तामसप्रज्ञाः । ते पेचका इव दीधित्यन्धा इति ज्ञापयितुमेव चात्र भगवत्पादो भार्गवं भगवन्तमनन्तभानुदीधितिमुज्जुघोष । सम्प्रति रामाय दातुं धनुर्धरम् । सदा दीप्तपरश्वधायुधम् ॥ ४० ॥ वस्तुतस्तु राघवमादिपूरुषं सम्प्रति भूमावागतं ज्ञापयितुमेव स्वयमागतम् । ज्ञापयितुमेव च स्पृधा स्पर्धया सङ्गरायाऽह्वयन्तमिव दर्शयन्तम् । स्वात्मानं चाऽदिपुरुषं समागतं राघवेणाभिन्नं दर्शयितुम् ॥ ४१ ॥ **'हे सुत, ते ज्ञानं भक्तिं वैराग्यं चेति त्रयं प्रददामि'** इति भगवतो गूढाभिसन्धिरित्याहुः । स भार्गवः 'इत्याह' इति शेषः ॥ ४२ ॥ नायमिन्द्रार्जुनयोरिवाभेदः । किन्तु सर्वात्मनेत्याह– अभेदं परमिति । रूपगुणक्रियादिष्वभितोऽभेदं दर्शयन् । अदर्शनेऽपि जानन्ति ज्ञानिनः । अतोऽज्ञविषयमेतदित्याह– अज्ञेषु । अहं हरिः, एषोऽपि हरिरिति ॥ ४३ ॥ उमापतिधृतादुत्तमादप्युत्तमम् ॥ ४४ ॥ हेतुदर्शनपूर्वकं प्रमेयावधारणं निदर्शनम् । इदमित्थं दृष्टम्, तस्मादिदमित्थम्भूतमेवेति । प्रसमीक्षितुम्, प्रकटं सङ्गतावीक्षितुम् । समर्थयामः सङ्गत्य

---

१. **'–मज्ञेष्वपि दर्शयन्'** । वे.ती.पाठोऽपि तथा।

१. **'रणे स्थितौ'**

**ततो हि युद्धाय रमेशशङ्करौ व्यवस्थितौ ते[१] धनुषी प्रगृह्य ।**
**यतोऽन्तरस्यैष नियामको हरिस्ततो हरोऽग्रेऽस्य शिलोपमोऽभवत्[२] ॥ ४६ ॥**

**शशाक नैवाथ यदाऽभिवीक्षितुं प्रस्पन्दितुं वा कुत एव योद्धुम् ।**
**शिवस्तदा देवगणाः समस्ताः शशंसुरुच्चैर्जगतो हरेर्बलम् ॥ ४७ ॥**

**यदीरणेनैव विनैष शङ्करः शशाक न प्रश्वसितुं च केवलम् ।**
**किमत्र वक्तव्यमतो हरेर्बलं हरात् परं सर्वत एव चेति ॥ ४८ ॥**

**ततः प्रणम्याऽऽशु जनार्दनं हरः प्रसन्नदृष्ट्या हरिणाऽभिवीक्षितः ।**
**जगाम कैलासममुष्य तद् धनुस्त्वया प्रभग्नं किल लोकसन्निधौ ॥ ४९ ॥**

**धनुर्य्यदन्यद्धरिहस्तयोग्यं तत्कार्म्मुकात् कोटिगुणं पुनश्च ।**
**वरं हि हस्ते तदिदं गृहीतं मया गृहाणैतदतो हि वैष्णवम् ॥ ५० ॥**

**हरेर्बलं उच्चैः हरबलादुत्तमं (जगतः) शशंसुः ॥ ४७ ॥ पूर्वश्लोकोक्तं विविच्याऽह—यदीरणेनेत्यादिना ॥ ४८–९ ॥ तत्कार्मुकात् रुद्रकार्मुकात् । कोटिगुणं कोटिगुणाधिकम् । पुनश्च वरमुत्तमम् । अतो हि,**

---

याचाम इति । समर्थितौ प्रार्थितौ ॥ ४५ ॥ अस्य हरस्य अन्तर्नियामको हरिः । सर्वेषामन्तरस्यान्तःकरणस्य च । **'एष त आत्माऽन्तर्यामी'** इति श्रुतेः । **'सर्वान्तर्यामको विष्णुः'** इति स्मरणाच्च । **'तदा तु जृम्भितं शैवं धनुर्भीमपराक्रमम् । हुङ्कारेण महादेवः स्तम्भितोऽथ त्रिलोचनः'** [बा.का.७५.१७] इति वाल्मीकीये । जृम्भितं शिथिलीकृतमित्यर्थः ॥ ४६ ॥ अभिमुखं वीक्षितुम्, प्रकटं स्पन्दितुं वा । हरेर्बलं जगतः समस्तजीवजातादुच्चैरधिकमिति प्रशशंसुः । जगतः सर्वलोकस्य एतत् प्रमेयमुपदेशादिनाऽन्वशासन्निति च । **'जृम्भितं तद् धनुर्दृष्ट्वा शैवं विष्णुपराक्रमैः । अधिकं मेनिरे विष्णुं देवाः सर्षिगणास्तदा'** [१९] इति च ॥ ४७ ॥ यदीरणेन विना एष शङ्कर एव प्रयत्यापि श्वसितुं न शशाक । किमुतान्ये? तस्मात् हरेर्बलं हरादेव परम् । किमु वक्तव्यं हराधीनात् सर्वतश्च जीवजातात् परमिति? ब्रह्मवाय्वोस्त्वविवादान्न रङ्गप्रवेशः ॥ ४८ ॥ जनं जननमर्दयतीति मोक्षप्रदो जनार्दनः । हरति संसारमिति हरिः । यः कल्पान्ते हरमपि हरतीति । अभिवीक्षितः । अभीष्टवितरणेनेक्षितः । मदीयोऽयमिति प्रीतिविशेषेण चेक्षितः । प्रकामं भग्नं प्रभग्नम् । प्रसह्य वा भग्नम् । **'वार्तायामरुचौ किल'** इति त्रिकाण्डशेषः ॥ ४९ ॥ यस्माद्धरिहस्तयोग्यम्, अतो हि वैष्णवम् । यद्यपि शैवं धनुरपि संहारकर्मणे प्रभवति । तथाऽपि तस्य

---

१. '–स्थितौ तौ ध–' २. '–पमोऽभूत् ।'

यदीदमागृह्य विकर्षसि त्वं तदा हरिर्न्नात्र विचार्य्यमस्ति ।
इति ब्रुवाणः प्रददौ धनुर्वरं प्रदर्शयन् विष्णुबलं हराद् वरम् ॥ ५१ ॥

प्रगृह्य तच्चापवरं स राघवश्चकार सज्यं निमिषेण लीलया ।
चकर्ष सन्धाय शरं च पश्यतः समस्तलोकस्य च संशयं नुदन् ॥ ५२ ॥

प्र दर्शिते विष्णुबले समस्ततो[१] हराच्च निःसङ्कचतया महाधिके ।
जगाद मेघौघगभीरया गिरा स राघवं भार्ग्गव आदिपूरुषः ॥ ५३ ॥

अलं बलं ते जगतोऽखिलाद् वरं परोऽसि नारायण एव नान्यथा ।
विसर्ज्जयस्वेह शरं तपोमये महासुरे लोकमये वराद् विभोः ॥ ५४ ॥

**अत एव, विष्णुना मया स्वीयतया गृहीतत्वादेव ततो वरम्[२] ॥ ५०–३ ॥ अलं परिपूर्णम् । इह मयि स्थिते तपोमये तपःप्रधाने । लोकमये लोकव्याप्ते ॥ ५४ ॥**

---

कार्मुकत्वं सावधिकम् । वैष्णवं तु ततोऽपि कोटिगुणम् । न तावन्मात्रम् । पुनश्च वरम् । निरवधिकं तस्य प्राभवमित्यर्थः । अथ च शैवात् कार्मुकाद् कोटिगुणं वरमिति व्यपदेशमात्रम् । वस्तुतस्तु पुनरपि कोटिगुणादपि वरं हि । अतश्च वैष्णवम् । यतो वैष्णवम्, विष्णुनैव धार्यम्, अतो मया धृतम् । यतो मया विष्णुना धृतम्, अतश्च वैष्णवं हि ॥ ५० ॥ सज्याबन्धं ग्रहणमाग्रहणम् । नतु दण्डवद् ग्रहणम् । लक्षवेधाय कर्षणं विकर्षणम् । तदिदमुत्तरपद्ये स्फुटम् । प्रकटं सर्वजनसमक्षं रामाय ददौ । तेन रामे विष्णुबलं प्रकटमज्ञानामपि दर्शयन् ॥५१॥ प्रग्रहवदनायासेन ग्रहणं प्रग्रहणम् ॥ ५२ ॥ समस्तलोकस्य प्रकाशं दर्शिते । समस्ततः सर्वस्मादपि प्रकृष्टे विष्णु-बले दर्शिते इति वा । समस्ततो देवगणात् हराचेति वा । मेघौघगभीरयेति । मेघ इति मेघध्वनिरुच्यते । तस्य ओघः परम्परा । तद्वद् गभीरया । **'ओघो वेगे जलस्य च । परम्परायां वृन्दे च'** इत्यभिधानम् । न पराभूतस्येव कुण्ठिता गीः । किन्तु निरन्तरा गभीरा च वाग्धारा निस्ससारेति । एतेन यत् क्वचित् भार्गवस्य पराभवदैन्यम्– **'निर्वीर्यो जामदग्न्योऽसौ रामो राममुदैक्षत'** [रामा.बा.कां.७६.११] इत्यादि तद् दर्शनभाषामाश्रित्येति सूचि-तम् । यच्चाज्ञानवचनम्–**'राम राम महाबाहो न वेद्मि त्वां सनातनम्'** [पा.पु.उ.खं.२४२.१६९] इति, तद् गुह्य-भाषामयं तामसजनमोहनमिति च । वस्तुतस्तु न वेद्मीति काकाक्षेपः । न वेद्मि किम्? वेद्म्येवेति परमार्थः । हे अन सर्वचेष्टक, त्वां वेद्मीति वा ॥ ५३ ॥ तपोमये महातपःसञ्चितशक्तिशालिनि । लोकमये सर्वलोकहृदयं प्रविश्य जनमनोमालिन्यकारिणि । नेयं तस्य स्वशक्तिः । किन्तु तपसा प्रतोषितस्य विभोर्ब्रह्मणो वरात् ॥ ५४ ॥

---

१. **'समस्तशो–'**

२. रुद्रकार्मुकाद् वरम् । अथवा जगतो वरमित्युत्तरान्वयि ।

पुराऽतुलो नाम महासुरोऽभवद् वरात् स तु ब्रह्मण आप लोकताम् ।
पुनश्च तं प्राह जगद्गुरुर्य्यदा हरिर्जितः स्याद्धि तदैव वद्ध्यसे ॥ ५५ ॥

अतो वधार्थं जगदन्तकस्य सर्वाजितोऽहं जितवद् व्यवस्थितः ।
इतीरिते लोकमये स राघवो मुमोच बाणं जगदन्तकेऽसुरे ॥ ५६ ॥

पुरा वरोऽनेन शिवोपलम्भितो मुमुक्षया विष्णुतनुप्रवेशनम् ।
स तेन रामोदरगो बहिर्गतस्तदाज्ञयैवाऽशु बभूव भस्मसात् ॥ ५७ ॥

इतीव रामाय स राघवः शरं विकर्षमाणो विनिहत्य चासुरम् ।
तपस्तदीयं प्रवदन् मुमोद तदीयमेव ह्यभवत् समस्तम् ॥ ५८ ॥

**तदेव विविच्याऽह–पुराऽतुलो नामेति । जगद्गुरुर्ब्रह्मा प्राह ॥ ५५–६ ॥ तपोमय इत्युक्तं विवृणोति– पुरा वरोऽनेनेत्यादिना । तदाज्ञया भृगूत्तमाज्ञया ॥ ५७ ॥ इति हेतोः दैत्यनिधनार्थं रामायेव शरं विकर्षमाणः असुरं विनिहत्य च तदीयं भार्गवस्य विद्यमानं तपो मया नाशितमिति प्रवदन् मुमोद । भार्गवः पराजित इति विमोहयन् मुमोदेति भावः । असुरं विनाश्य तदीयं तपो नाशितमिति कथम-वोचदित्यत आह– तदीयमेवेति । समस्तं चेतनाचेतनात्मकं तदीयं तस्य परशुरामस्य (अधीनमेव अभवद्धि) ॥ ५८ ॥**

---

‘इमां वा त्वद्गतिं राम तपोबलसमार्जिताम् । लोकानप्रतिमान् वा ते हनिष्यामि यदीच्छसि’[बा.कां.७६.७], **‘लोकास्त्वप्रतिमा राम निर्जितास्तपसा मया । जहि तान् शरमुख्येन मा भूत् कालस्य पर्ययः’**[७६.१६], **‘स हतान् दृश्य रामेण स्वान् लोकांस्तपसाऽऽर्जितान् । जामदग्न्यो जगामाऽशु महेन्द्रं पर्वतोत्तमम्’**[७६.२२] इत्यादिवचनानामान्तरमाह– पुराऽतुलो नाम । लोकताम् । लोकव्याप्तताम् । हरिर्जितः स्याद्धि । हिशब्दो हरेरजितत्वप्रसिद्धिं स्मारयति । अजितोऽपि हरिर्यदा जितः स्यात् तत्काल एव वध्यसे नान्यथा म्रियस इति । यद्यपि हरिर्न जीयते । अथाप्यात्मानं जितमिव दर्शयतीति विशेषं हीत्याह ॥ ५५ ॥ व्यवहारार्थं स्थितिर्व्यवस्थितिः ॥ ५६ ॥ परशुरामोदरगः तदाज्ञया । आशु बहिर्गमनक्षण एव, रामे जितवद् व्यवस्थितमात्र एव ॥ ५७ ॥ रामाय परशुरामपराभवाय शरं विनोदतः लीलया कर्षमाण इव नाटयन् । लीलाऽपि स्वरूपमेवेति विकर्षमाण इत्याह । भार्गवस्य तपो विनोदेनैव निहतं प्रकटं वदन् । अतुलस्य तपोऽपि भगवदिच्छाधीनमिति भगवदीयमेव हि ॥ ५८ ॥

[1]निरन्तरानन्तविबोधसारः स जानमानोऽखिलमादिपूरुषः ।
वदञ्छृणोतीव विनोदतो हरिः स एक एव द्वितनुर्म्मुमोद ॥ ५९ ॥

स चेष्टितं चैव निजाश्रयस्य जनस्य सत्तत्वविबोधकारणम् ।
विमोहकं चान्यतमस्य कुर्वन् चिक्रीड एकोऽपि नरान्तरे यथा ॥ ६० ॥

ततः स कारुण्यनिधिर्न्निजे जने नितान्तमैक्यं स्वगतं प्रकाशयन् ।
द्विधेव भूत्वा भृगुवर्य्य आत्मना रघूत्तमेनैक्यमगात् समक्षम् ॥ ६१ ॥

समेत्य चैक्यं जगतोऽभिपश्यतः प्रणुद्य शङ्कामखिलां जनस्य ।
प्रदाय रामाय धनुर्वरं तदा जगाम रामानुमतो रमापतिः ॥ ६२ ॥

**निरन्तरानन्तविबोधसारः अत एवाखिलं जानमानः आदिपूरुषः स हरिः वदन् शृणोतीव मुमोद द्वितनुः एक एव । एकत्वादेव वदन् शृणोतीवेत्युक्तम् ॥ ५९ ॥ एवं विडम्बनस्य प्रयोजनमाह–स चेष्टितमिति । नरान्तरे पुरुषान्तरे ॥ ६०–१ ॥ अखिलां शङ्कां रूपादिभेदविषयशङ्काम् ॥ ६२–४ ॥**

---

निरन्तरोऽविच्छिन्नः । **'जामदग्न्य इति ख्यातः प्रादुर्भावश्च वैष्णवः'** [स.प.४९.१] इति, **'स एष कृष्णो गोविन्दो जातो यदुषु वीर्यवान्'** [६] इति चार्घाहरणे ॥ ५९ ॥ सत् निर्दुष्टं तत्वं भगवान् । विबोधो विशिष्टतया विलक्षणतया च बोधः । अपरोक्षज्ञानं वा । निजाश्रयस्य जनस्यैव विबोधकारणम् । अतिशयेनान्योऽन्यतमः । तामसो जनः । चिक्रीडे, अनुसम्परीणामयोगेऽपि तद्विवक्षायामात्मनेपदं भवति । तत्रतत्र तत्तद्योग्यतानुगुणं क्रीडते । अथ च वैदिकेषु प्रयोगेषु अर्थविशेषविवक्षया सर्वस्मादुभयं पदं भवति । क्रीडा चेयं भगवतः स्वभाव एवेति आत्मनेपदम् । तथाहि प्रयुञ्जते **'क्रीडते पुरुषोत्तमः'** इति । अथ च 'चिक्रीड' इत्येव वा प्रतृण्णम् । **'तमेवैकं जानथ आत्मानम्'** इतिवद् विश्लिष्य प्रयोगः सर्वविलक्षणत्वज्ञापनाय, एकोऽपि भगवानेवं विश्लिष्य द्विधाऽत्मानं दर्शयामासेति ज्ञापनाय च ॥ ६० ॥ सर्वजनसमक्षम् । तथाहि नृसिंहपुराणे स्मर्यते– **'ततः परशुरामस्य देहान्निर्गत्य वैष्णवम् । पश्यतां सर्वलोकानां तेजो राममुपागमत्'** [४८.५०] इति ॥ ६१ ॥ प्रदाय रामाय धनुर्वरम् । रामश्च तद्धनुर्भार्गवात् स्वीकृत्य वरुणे विसर्जयामास । तथाहि रामायणे–**'गते रामे प्रशान्तात्मा रामो दाशरथिर्धनुः । वरुणायाऽप्रमेयाय ददौ हस्ते ससायकम्'** [बा.का.७७.१] इति । एवं देवलोकं प्रति गतं तद्धनुः पुनर्महेन्द्रेणागस्त्याय दत्तम् । स पुना रामाय ददावित्युपरिष्टाद् वक्ष्यते । रमापतिः । तेन रमाया अयं पती राम इति निर्वचनं स्मारयति ॥ ६२ ॥

---

१. 'निरन्तरानन्दवि–'

ततो नृपोऽत्यर्थमुदाऽभिपूरितः सुतैः समस्तैः स्वपुरीमवाप ह ।
रेमेऽथ रामोऽपि रमास्वरूपया तयैव राजात्मजया हि सीतया ॥ ६३ ॥

यथा पुरा श्रीरमणः श्रिया तया रतो नितान्तं हि पयोब्धिमद्ध्ये[1] ।
तथा त्वयोद्ध्यापुरिगो[2] रघूत्तमोऽप्युवास कालं सुचिरं रतस्तया ॥ ६४ ॥

इमानि कर्म्माणि रघूत्तमस्य हरेर्विचित्राण्यपि नाद्भुतानि ।
दुरन्तशक्तेरथ चास्य वैभवं स्वकीयकर्त्तव्यतयाऽनुवर्ण्यते ॥ ६५ ॥

**इति श्रीमदानन्दतीर्थभगवत्पादविरचिते**
**श्रीमहाभारततात्पर्य्यनिर्ण्णये श्रीरामावतारे**
**अयोद्ध्याप्रवेशो नाम**
**चतुर्त्थोऽद्ध्यायः**

—०—

[आदितः श्लोकाः– ४०५+६५=४७०]

**एवं वि(चित्रत)चरितानुवर्णनं किमर्थमित्यत आह– स्वकीयेति । अनेन (कर्तव्यं) क्रियत इत्युक्तं भवति ॥ ६५ ॥**

इति श्रीमहाभारततात्पर्यनिर्णयटीकायां
श्रीवेदाङ्गतीर्थभट्टारकविरचितायां तात्पर्यदीपिकायां
चतुर्थोऽध्यायः

—०—

स्वपुरीमवाप ह । हेति रामस्य रामस्य च समागमं स्मारंस्मारं विस्मयजलधौ मग्नः ॥६३॥ पयोब्धिः क्षीराब्धिः । अयोध्यापुरिगः, अयोध्यानगरे निवसन् । पुरिग इति सप्तम्या अलुक् । पुरीगो वा पुरिगः । ङ्यन्तस्य ह्रस्वः– **'ङ्यापोः सञ्ज्ञाछन्दसोर्बहुलम्'** [अ.सू.६.३.६३] इति । गमिर्निवासार्थे प्रचुरं प्रयुज्यते । सुचिरमिति । द्वादशवर्षाणीत्यर्थः । **'तत्र द्वादशवर्षाणि सीतया सह राघवः । रमयामास धर्मात्मा नारायण इव श्रिया'** [उ.खं.२४२.१८३] इति पाद्मे । स्वयं रममाणो लोकान् रमयामासेत्यर्थः । **'ततो द्वादशवर्षाणि रेमे रामस्तया सह'** [पा.खं.३६.१७] इति च । स्कान्दे चैवम् । रतस्तया सीतारूपया श्रिया । तदेवमेकेनाध्यायेन बालकाण्डकथा सविमर्शं समगृह्यत ॥ ६४ ॥ हरेः कर्माणि । विचित्राण्यपि नाद्भुतानीति विरोधाभासः । लोकविचित्राण्यपि हरेर्नाद्भुता-

१. **'पयोधिमध्ये'** २. **'–पुरगो–'**

नीत्यर्थः । कुतः? दुरन्तशक्तित्वात् । नञर्थे दुः । अनन्तशक्तेरित्यर्थः । **'दुर्निषेधे च कष्टे च'** इति मेदिनी । दुःखस्य दुष्टानां चान्तो यया साऽपि दुरन्ता शक्तिः । अनन्तशक्तेरनन्ता हि लीला । अथापि कर्तव्यमिति किञ्चिद् वर्ण्यते । यद्यपि इतोऽप्यधिकं शक्यं वर्णयितुम् । तथाऽप्यज्ञजनताऽपि यथा बुध्येत तथा तदनुगुणं किञ्चिदेव वर्ण्यते । अथ, अतः दुःखान्तहेतुत्वात् लोकानां दुःखपरिहाराय तदनुकूलं किञ्चिद् वर्ण्यते । परस्परविरोधपरिहारेण सर्वशास्त्रानुगुणं च वर्ण्यते । सज्जनदुःखपरिहारस्य स्वावतारकर्तव्यत्वात् । निरन्तरं भगवद्गुणानामनुसन्धानं च स्वस्य सहजं नित्यं च कर्तव्यम् ॥ ६५ ॥ उपसंहारवाक्ये श्रीरामावतार इति । यद्यपि श्रीरामावतारकथा पूर्वाध्याय एवा-कथ्यत । तेन चोत्तराध्यायेष्विव **'श्रीरामचरिते'** इत्येव वक्तुमुचितम् । अथापि रामकथावतारोऽयमिति युक्तं रामावतार इति नाम । अपि च श्रीरामस्य पुरः परशुरामावतारोऽप्यत्रैवेति युक्ततरम् । अथवा सतिसप्तमीयम्–रामावतारे सतीति । रामावतारानन्तरमित्यर्थः । तद्यथा पुत्रे जाते नाम करोति । जननानन्तरं नाम करोतीत्यर्थः । तथाच रामावतारानन्तरभाविनी अयोध्याप्रवेशपर्यन्ता कथाऽत्र निरूपितेत्यर्थः ॥ ✲ ॥

**आचार्यगोविन्दकृते**
**श्रीमद्भारततात्पर्यनिर्णयस्य ।**
**निर्णिक्ते व्याख्याने निर्णयभावचन्द्रिकाख्याने**
**प्रगतं चतुर्थाध्यायविवरणं सतां हृदयाभरणम् ॥ ✲ ॥**

**इत्याचार्यगोविन्दस्य कृतिषु**
**श्रीमहाभारततात्पर्यनिर्णयपञ्चिकायां**
**निर्णयभावचन्द्रिकायां**
**चतुर्थोऽध्यायः**

—०—

२२-१०-१२

## पञ्चमोऽध्यायः

[श्रीरामचरिते हनूमद्दर्शनम्]

ॐ ॥ इत्थं विश्वेश्वरेऽस्मिन्नखिल[1]जगदवस्थाप्य सीतासहाये
भूमिष्ठे सर्वलोकास्तुतुषुरनुदिनं वृद्धभक्त्या नितान्तम् ।
राजा राज्याभिषेके प्रकृतिजनवचो मानयन्नात्मनोऽत्थ्र्यं
दध्रे तन्मन्थरायाः श्रुतिपथमगमद् भूमिगाया अलक्ष्म्याः ॥ १ ॥

पूर्वं क्षीराब्धिजाता कथमपि तपसैवाप्सरस्त्वं प्रयाता
तां नेतुं तत् तमोऽन्धं कमलजनिरुवाचाऽशु रामाभिषेकम् ।
भूत्वा दासी विलुम्प स्वगतिमपि ततः कर्म्मणा प्राप्स्यसे त्वं
सेत्युक्ता मन्थराऽऽसीत् तदनु[2] कृतवत्येव चैतत् कुकर्म्म ॥ २ ॥

---

ॐ ॥ अथ पञ्चमेन अयोध्यारण्यकाण्डयोः कथां सङ्गृह्णाति । आदौ रामयशःस्रग्धरया स्रग्धरयाऽरण्यकाण्डकथा-भूमिकामारचयति । अखिलं जीवजातं स्वस्वधर्मेऽवस्थाप्य । अवगमय्य स्थापनमवस्थापनम् । **'यदेव विद्यया करोति–'** इत्यादेः । अवस्थाप्य भूमिष्ठे, भूमौ स्थित्वा अवस्थापयति सतीति यावत् । भूमिष्ठत्वमपदेशमात्रम् । जगदवस्थापनं तु सार्वकालिकमिति हृदयम् । सीता सहैवायते न कदाऽप्यपगच्छतीति सहाया अनपगामिनी अनुचरी यस्य । अनुदिनं नितान्तं च वृद्धया भक्त्या अनुदिनं तुतुषुः । नितान्तं च तुतुषुः । प्रकृतिजनः पौरवर्गः, अमात्यादयो वा प्रकृतयः । पुरोहिताः, अमात्याः, सुहृदः, पुरप्रमुखाः, सैन्याश्च । आत्मनोऽप्यर्थ्यमपेक्षितम् । रामो यौवराज्येऽ-भिषिच्यतामिति राज्याभिषेकविषये प्रकृतिजनवचो मानयन् राज्याभिषेकाय दध्रे कृतनिश्चयो बभूव ॥ १ ॥ ननु कथं मन्थराया अलक्ष्मीत्वम्? **'मन्थरा नाम कार्यार्थमप्सराः प्रेषिता सुरैः । दासी काचन कैकेय्यै दत्ता केकयभूभृता'** इति हि स्मरन्ति । **'तेषां समक्षं गान्धर्वीं दुन्दुभीं नाम नामतः । शशास वरदो देवो गच्छ कार्यार्थसिद्धये । पितामहवचः श्रुत्वा गन्धर्वी दुन्दुभी ततः । मन्थरा मानुषे लोके कुब्जा समभवत् तदा'** [व.प.२७७.१२–३]

---

१. **'–स्मिन्निखिल–'** २. **'तदनु च कृत–'**

**तद्वाक्यात् कैकयी सा पतिगवरबलादाजहारैव राज्यं**
**रामस्तद्गौरवेण त्रिदशमुनिकृतेऽरण्यमेवाऽविवेश ।**
**सीतायुक्तोऽनुजेन प्रतिदिनसुविवृद्धोरुभक्त्या समेतः**
**संस्थाप्याशेषजन्तून् स्वविरहजशुचा त्यक्तसर्वैषणार्थान् ॥ ३ ॥**

**ॐ ॥ १– २ ॥ पतिगवरबालदिति । (स्वगत)विद्याबलात् युद्धे कैकेय्या रक्षितेन भर्त्रा दशरथेन प्रतिज्ञात-वरद्वयबलादेवेत्यर्थः । तद्गौरवेण पित्राज्ञागौरवेण । त्रिदशमुनिकृते (देवमुनिरक्षणार्थमेव) । प्रतिदिन-सुविवृद्धोरुभक्त्या, समेतेनेति शेषः । त्यक्तसर्वैषणार्थान् त्यक्तसर्वकामार्थान् ॥ ३ ॥**

---

इति च भारते। किन्तु तस्याः शीलं न गन्धर्वीणामिव । किन्त्वासुरीणामिव । **'मन्थरा पापदर्शिनी'** [अ.कां.७.१३] इति च प्राचेतसः । तेन तामेतामाशङ्कामुभयसङ्गमनेन शमयति–पूर्वं क्षीराब्धिजातेति । प्रगाढं याता प्रयाता । कथमपि तपस्तप्त्वा महता क्लेशेनाप्सरा बभूवेत्यर्थः । दृढं वा याता । **'प्रगाढं स्याद् दृढे कृच्छ्रे'** इत्यभिदधति । तत् तस्या उचितं तमस्तामाशु नेतुम् । आशु रामाभिषेकं विलुम्प । ततस्तेन कर्मणाऽऽशु स्वगतिं प्राप्स्यसे । अस्य कुकर्मणः समग्रं पातकं तस्या एवेत्यात्मनेभाषा । कैकयी तु पुण्यह्रासमेवाऽप, न पापमिति भावः । इत्युक्ता सा अलक्ष्मीर्मन्थराऽऽसीत् । मन्दगामिनीं मन्थरामाहुर्नैघण्टुकाः । इयं तु कुकर्मणि अमन्दगामिनी बभूव । अथापि मन्थति क्लेशयति हिनस्ति वा कौसलं सामरस्यमित्यन्वर्थाभिधानैव बभूव । **'मथि हिंसाक्लेशनयोः'** । कृत-वत्येव । सपदि स्वपदप्राप्त्याशया निःशङ्कं चकार । तदनु मन्थराभावानन्तरम् । तदनु चतुर्मुखवचनानुगणं स्वस्वरूपानुगुणं च कृतवती । तदेतत् कुकर्म अनुकृतवत्येव केवलम् । यदेवान्तःस्थितेन भगवता प्रेरितं रामा-वतारे लीलाविशेषाविष्करणाय तदेवानुचकार । स्रग्धराबद्धे पद्येऽस्मिन् चतुर्थचरणे न्यूनमेकमक्षरमिति निचृत्पादोऽ-यम् । तदनेनाक्षरह्रासेन, तस्यास्तपसा चीर्णं स्वरूपाननुगणं पुण्यमपि जहासेति च्छन्दोगत्याऽभिनीय दर्शयतीव ॥ २ ॥ के आनन्दे कायन्ति गायन्तीति केकयाः जनपदाः । तानेतान् केगायान् सतः केकयानाचक्षते परोक्षेण । कै शब्दे । केकयानां राजाऽपि केकयः । वैयाकरणास्तु **'कित ज्ञाने'** इत्यतः चिक्यतीति वा, **'कित निवासे'** इत्यतः केतन्तीति वा, **'केत श्रवणे निमन्त्रणे वा'** इत्यतो केतयन्तीति वा केकया इत्ययनूप्रत्ययान्तं पदं निपात-यन्ति । **'किसलय-गय-गवय-मुकय-केकयादयः'** [स.कं.२.३.७] इति भोजः । **'कितः कश्च । केकयः'** इति दण्डनाथनारायणः । कैकयी केकयराजपुत्री । **'जनपदशब्दात् क्षत्रियादञ्'** [अ.सू.४.१.१६८] । तेन केकय-स्यापत्यं स्त्री कैकयी । ननु चात्र यकारादेरिय आदेशो भवतीति वैयाकरणा मन्यन्ते? सत्यं ते मन्यन्ते । नतु वयमनुमन्यामहे । अयोगव्यवच्छेद एवायम् । विभाषावादिनो वयम् । भवति नवा भवति । द्विधाऽपि बहुलं प्रयोगदर्शनादिति तत्वज्ञाः । **'तस्याभिषेकसम्भारान् दृष्ट्वा भार्याऽथ कैकयी'** [बा.कां.१.२१] इति रामायणे । **'कैकेयी कैकयी'** इति शब्दभेदप्रकाशिका । **'प्राक् कैकयीतो भरतस्ततोऽभूत्'** इति भट्टिः । एतेन यन्माधवयोगिनोक्त-ममृतकतकाख्ये रामायणव्याख्याव्याजे ग्रन्थे–'**अपि माषं मषं कुर्याच्छन्दो भङ्गं न कारयेदिति न्यायेन कैकयीति**

**वृक्षान् पश्वादिकीटान्[१] पितरमथ सखीन् मातृपूर्वान् विसृज्य**
**प्रोत्थां गङ्गां स्वपादाद्धर इव[२] गुहेनार्चितः सोऽथ तीर्त्वा ।**

---

**पदप्रयोगः'** इति, तदप्रबुद्धमित्युपेक्ष्यम् । भिन्द्युरपि च्छन्दांसि, सर्वतन्त्रस्वतन्त्रत्वात्, नापशब्दं प्रयुञ्जीरन्निति तु सूक्तम् । मन्थरावाक्यात् कलुषितमनाः कैकेयी काले गृह्णामीति पत्यावेव निधापितस्य वरस्य बलादेव राज्यमाजहार रामाद् वियोज्य स्वायत्तं चकार । **'देवासुरे पुरा युद्धे शम्बरेण हताः सुराः । रात्रौ भर्ता गतस्तत्र रक्षितो विद्यया त्वया । वरद्वयं तदा प्रादाद् याचेदानीं नृपं च तत् । रामस्य च वने वासं नववर्षाणि पञ्च च । यौवराज्यं च भरते तदिदानीं प्रदास्यति'** [६.१४–५] इत्याग्नेये मन्थरावचनम् । **'पुरा दैवासुरे युद्धे सह राजर्षिभिः पतिः । अगच्छत् त्वामुपादाय देवराजस्य साह्यकृत् । दिशमास्थाय कैकेयि दक्षिणां दण्डकान् प्रति । वैजयन्तमिति ख्यातं पुरं यत्र तिमिध्वजः । स शम्बर इति ख्यातः शतमायो महासुरः । ददौ शक्रस्य सङ्ग्रामं देवसङ्घैरनिर्जितः । तस्मिन् महति सङ्ग्रामे पुरुषान् क्षतविक्षतान् । रात्रौ प्रसुप्तान् घ्नन्ति स्म तरसाऽऽसाद्य राक्षसाः । तत्राकरोन्महद् युद्धं राजा दशरथस्तदा । असुरैश्च महाबाहुः शस्त्रैश्च शकलीकृतः । अपवाह्य त्वया देवि सङ्ग्रामान्नष्टचेतनः । तत्रापि विक्षतः शस्त्रैः पतिस्ते रक्षितस्त्वया । तुष्टेन तेन दत्तौ ते द्वौ वरौ शुभदर्शने । स त्वयोक्तः पतिर्देवि यदेच्छेयं तदा वरौ । गृह्णीयामिति तत् तेन तथेत्युक्तं महात्मना । अनभिज्ञाऽसि तद् देवि त्वयैव कथिता पुरा । कथैषा तव तु स्नेहान्मनसा धार्यते मया । रामाभिषेकसम्भारान् निगृह्य विनिवर्तय । तौ च याचस्व भर्तारं भरतस्याभिषेचनम् । प्रव्राजनं च रामस्य वर्षाणि तु चतुर्दश'** [अ.कां.९. ११–२०] इति वाल्मीकीये । प्रथमं युद्धरङ्गादपवाहितः । पुना रात्रौ सुप्तप्रदेशे तैरसुरैराक्रान्ते ततोऽप्यपवाह्य रक्षितः । एवं द्विवारं रक्षणाद् द्वौ वरौ दत्तौ । सम्प्रत्यनभिज्ञाऽसि तद् विस्मरणेन । तद्गौरवेण पित्रोर्वचनगौरवेणेति लौकिकं कारणम् । वस्तुतस्तु त्रिदशमुनिकृत एवारण्यमाविवेश । त्रिदशानां मुनीनां च कृते । त्रयश्च त्रिरावृत्ता दश च सङ्ख्या येषां ते त्रिदशाः । त्रयस्त्रिंशद्धि प्रधानदेवाः सोमपाः । तिस्रो दशा सृष्टिः सत्ता संहारश्चेति येषामिति वा । त्रीन् तापान् दशन्तीति वा । तृतीया यौवनाख्या दशा केवलमेषामिति वा । **'देवानां सदा पञ्चविंशवर्षात्मकत्वेन तृतीये दशति सदा वर्तमानाः'** इति केचित् । **'दशग्रीववधार्थाय पितुर्वचनहेतुना । वनं जगाम काकुत्स्थो लक्ष्मणेन च सीतया'** [उ.खं.२४२.१८७–८] इति पाद्मे । एवेति अविलम्बार्थे च । कैकेयीवचनं श्रुत्वा सपदि अरण्यमाविवेश प्रविवेश । आनन्देन विवेश । स्वस्य आवेशं निवासस्थानं च चकार । सुविवृद्धोरुभक्तिना । यथा भार्या भर्तारं सेवते तादृश्या भक्त्येति सूचयितुं लिङ्गव्यत्ययः । भक्त्या उपलक्षितेनानुजेन वा समेतः । प्रतिदिनसुविवृद्धोरुभक्त्या हेतुना अन्वेव जातेन, अनुजत्वेन जननानन्तरमपि तादृश्या भक्त्या समेतेनानुजेन समेत इति च । देवांशत्वाद् भक्त्या समेतः । नरत्वादुरुभक्त्या । पर्यङ्कत्वेन नित्यसान्निध्यात् प्रतिदिनवृद्ध्या । अवतारेऽपि सहभावाद् विवृद्ध्या । तत्राप्यनुजत्वेन सेवार्थमवकाशदानात् सुविवृद्ध्या । एषणार्थाः इच्छाविषयाः पदार्थाः पुत्रवित्ताद्याः । **'पुत्रैषणायाश्च वित्तैषणायाश्च लोकैषणायाश्च'** इति हि श्रूयते । ईषणार्था वा । संस्थाप्य सान्त्वयित्वा, वनगमनायोद्यतानयोध्यायामेव स्थापयित्वा ॥ ३ ॥

---

१. **'पक्षीभकीटान्'** । **'इभशब्दः पशुसामान्यवाची'** इति भारतश्रीनिवासाचार्यव्याख्यानम् । २. **'इव च गुहे–'**

देवार्च्यस्यापि पुत्रादृषिगणसहितात् प्राप्य पूजां प्रयातः
शैलेशं चित्रकूटं कतिपयदिनान्यत्र[१] मोदन्नुवास ॥ ४ ॥

एतस्मिन्नेव काले दशरथनृपतिः स्वर्ग्गतोऽभूद् वियोगाद्
रामस्यैवाथ पुत्रौ विधिसुतसहितैर्म्मन्त्रिभिः केकयेभ्यः ।
आनीतौ तस्य कृत्वा श्रुतिगणविहितप्रेतकार्य्याणि सद्यः
शोचन्तौ राममार्ग्गं पुरजनसहितौ जग्मतुर्म्मातृभिश्च ॥ ५ ॥

**गुहेन (तन्नाम)केन गुहाख्यदाशराजेन (गुहाख्येन सुतेन) हर इवार्चितः । तीर्त्वाऽथेति सम्बन्धः । देवार्च्यस्य पुत्रात् बृहस्पतिपुत्राद् भरद्वाजात् ॥ ४ ॥ रामस्य वियोगादेवेति सम्बन्धः ॥ ५ ॥**

न केवलमयोध्यावासिनो जनान् । वृक्षान् पश्वादिकीटान्तान् तिर्यक्प्राणिनश्च संस्थाप्य । पश्वादयोऽन्ते च कीटा येषां तान् जन्तून् । वृक्षान् पश्वादींश्च विसृज्य आमन्त्र्य । पशवश्चतुष्पदा ग्राम्या गोअश्वादयः । आदिना द्विपदाः पतत्रिण आदीयन्ते शुकसारिकादयः । कीटाः पतङ्गादयः षट्पदा बहुपदाश्च । **'व्यसृजन् कवळान् नागा गावो वत्सान् न पाययन्'** [अ.कां.४१.१०] इत्यादि च वाल्मीकीये । अथ पितरं सखीन् सवयसः मातृपूर्वान् प्रवयसश्च आमन्त्र्य । अथशब्देन पश्वादीनां प्रथममामन्त्रणं सूचितम् । तेन तेषु मनुष्येभ्योऽप्यधिकं रामचन्द्रस्य प्रेमनिर्भरां करुणामाह । गुहेन स्कन्देन हर इव गुहेन शृङ्गिबेरपतिनाऽर्चितः । अत्रापि न्यूनोपमेयमिति न्यूनाक्षरेण च्छन्दसा द्योतयति । **'जनान् निवर्त्य रामोऽसौ जगाम च गुहाश्रमम् । गुहस्तु रामभक्तोऽसौ स्वभावादेव वैष्णवः'** [४८.९०] इति नारसिंहे । अर्चितः, अथ गुहस्य राज्ये इङ्गुदीवृक्षमूले निशात्ययानन्तरम् । देवार्च्यस्य देवगुरोर्बृहस्पतेः पुत्राद् भरद्वाजात् । **'लक्ष्मणेन सह भ्रात्रा राघवः सीतया सह । भरद्वाजाश्रमे तत्र विश्रान्तस्तेन पूजितः'** [९५] इति च । स्वयं मोदमान ऋषींश्च मोदयन्नुवास । मोदमानस्य तस्य दिनान्यपि ह्रसिष्ठान्यन्वभूयन्तेति पुनरक्षरह्रासेन सूचयति । तदियमत्र नूतना च्छन्दोगतिर्दर्शिता । द्वितीयपद्ये तुरीयचरण एव विंशतिरक्षराणि । अत्र पुनर्द्वितीये च तुरीये च । मध्यविरामे चान्त्यविरामे च । प्रथमतृतीययोरेकविंशतिरेव । तदेतदक्षरलोपेन विरतिविधानं गीतज्ञानां नापरिचितमिति गन्धर्वविद्यानिपुणस्य भगवतः सुष्ठु शोभते । एवं लौकिकच्छन्दसामपि निचृत्त्वादिसम्पादनेनार्थ-विशेषस्फोरणं वैदिकीकरणं च परमवैदिकस्याऽचार्यस्य नितरां शोभते ॥ ४ ॥ रामस्य वियोगादेव स्वर्गतोऽ-भूत् । एवकारेण मुनिशापं स्मारयति–**'पुत्रव्यसनजं दुःखं यदेतन्मम साम्प्रतम् । एवं त्वं पुत्रशोकेन राजन् कालं करिष्यसि'** [अ.कां.६४.५४] इति । पुत्रौ भरतशत्रुघ्नौ । विधिसुतो वसिष्ठः । दूतमुखेनाऽनीतौ । तस्य स्वर्गतस्य नृपतेः । श्रुतिगणविहितप्रेतकार्याणि । द्विविधा संस्कारा भवन्ति–अश्रौतपुरोधःप्रज्ञावादमूलाः श्रुतिमूला इति । प्रथमं स्वार्थमूलम् । द्वितीयं धर्ममूलम् । तदेतद् ग्राहयन्नाह– श्रुतिगणविहितानि तानि प्रेतकार्याण्यासन्निति । मृतं पितरं

१. **'–पयदिवसान् यत्र'** । **'–पयदिवसानत्र'** इति च क्वचित् ।

धिक्कुर्वन्तौ नितान्तं सकलदुरितगां मन्थरां कैकयीं च
प्राप्तौ रामस्य पादौ मुनिगणसहितौ तत्र चोवाच नत्वा ।
रामं राजीवनेत्रं भरत इह पुनः प्रीतयेऽस्माकमीश
प्राप्याऽशु स्वामयोद्ध्यामवरजसहितः पालयेमां धरित्रीम् ॥ ६ ॥

इत्युक्तः कर्त्तुमीशः सकलसुरगणाप्यायनं रामदेवः
सत्यां कर्त्तुं च वाणीमवददतितरां नेति सद्भक्तिनम्रम् ।
भूयोभूयोऽर्त्थयन्तं द्विगुणितशरदांसप्तके त्वभ्यतीते
कर्त्तैतत् ते वचोऽहं सुदृढमृतमिदं मे वचो नात्र शङ्का ॥ ७ ॥

**तत्र तयोर्मध्ये ॥ ६ ॥ सकलसुरगणाप्यायनं रक्षोनिग्रहेण सुरगण(प्रीणनम्) । वाणीं चतुर्दशसंवत्सरं वनवासं करिष्यामीति कैकेयीं प्रति स्वोक्तवचनम् । अतितरां सद्भक्तिनम्रमिति सम्बन्धः ॥ ७ ॥**

---

शोचन्तौ । रामस्य मार्गं मार्गणं प्रति च शोचन्तौ, रामेणानुसृतं मार्गं वनवासाख्यं च शोचन्तौ । रामगतं मार्गं चानुसरन्तौ पितुः संस्कारानन्तरं कालातिपातमसहमानौ सद्यः जग्मतुः । मातृभिश्च सहितौ ॥ ५ ॥ सकलानि दुरितान्यत्र सङ्गतानीति सकलदुरितगा मन्थरा । गमिं स्थितावपि पठन्ति धातुज्ञा इत्युक्तम् । स्वकृतानि सकलानि दुरितानि अवगतवतीति सकलदुरितगा पश्चात्तापदग्धा कैकेयी च । तत्र चित्रकूटे । तत्र तयोः मध्ये भरत उवाचेति वा । कैकेयीप्रीतये वनमगाः । इह इदानीं पुनः कैकेयीसहितानामस्माकं प्रीतये पुनरयोध्यां प्राप्य पालय धरित्रीमवरजैः सहितः । साक्षादवरजेन लक्ष्मणेन वा सहितः । यस्त्वां विपिनेऽप्यनुवव्राज । त्वं राजा भव । लक्ष्मणश्च युव-राजः । एवं युवराजेनावरजेन सहितः पालयेमां त्वदीयामधिकारप्राप्तां धरित्रीम् । यतस्त्वमेव ईशः । विशिष्य चास्माकमीशः । तदपि न चतुर्दशसमा अतीत्य । किन्त्वाशु इदानीमेव । नन्वयोध्या भवते दत्ता? अवैधं तद् दानम् । अपिच मयैव भवते समर्पिता । तस्माद् भवदीयैवायोध्येत्याह– स्वामयोध्याम् ॥ ६ ॥ नेत्यवदत्, न त्वदुक्तं साधु । न ममायोध्या किन्तु तवैव । नाहमागमिष्यामि, त्वमेव पालयेत्यवदत् । स्वयं सर्वेशः, अतः सकलसुरगणाप्यायनं कर्तुमीशः, भरतप्रार्थनां स्वीकर्तुमपीशः, सकलसुरगणाप्यायनं कर्तुं, 'वने वत्स्यामि' इति स्वोक्तां वाणीं पित्रोर्वाणीं च सत्यां कर्तुं च । सत्या निर्व्याजया निरन्तरया च भक्त्या अतितरां नम्रम् । 'शरदांसप्तके' इत्यलुक् । द्विगुणिते शरदांसप्तके । अभीप्सितः अत्ययः । अभीष्टश्चायं देवानामृषीणां च चतुर्दश समा वने वासः । ततस्तावति काले अतीते तु अतीते सत्येव, 'अयोध्यां प्राप्य धरित्रीं पालय' इति वचः, सु अतिशयेन, निर्विशङ्कमिति यावत्, दृढं नितान्तम्, निश्चप्रचं कर्ता करिष्यामि । शक्यं वनस्थेनापि धरित्री पालयितुम् । अथापि ते वचः स्वीकरिष्यामीति भ्रातरि वात्सल्यातिशयं दर्शयति । तदिदं मदुक्तं ऋतमविचाल्यम् । श्रद्धत्स्व वत्स । रामो द्विर्नाभिभाषते । ततस्त्वया नात्र शङ्का कर्तव्या इति चावदत् । नारसिंहपुराणे तु द्वादशाब्दो वनवासः पठ्यते–

**श्रुत्वैतद् रामवाक्यं हुतभुजि पतने स प्रतिज्ञां च कृत्वा**
**रामोक्तस्यान्यथात्वे नतु पुरमभिवेक्ष्येऽहमित्येव तावत् ।**
**कृत्वाऽन्यां स प्रतिज्ञामवसदथ बहिर्ग्रामके नन्दिनाम्नि**
**श्रीशस्यैवास्य कृत्वा शिरसि परमकं पौरटं पादपीठम् ॥ ८ ॥**

**स (भरतः ए)तद् रामवाक्यं श्रुत्वा तावद् भगवदागमनपर्यन्तं[१] अहं पुरं न प्रवेक्ष्य इति सप्रतिज्ञाम्, स्थण्डिलशयनादिप्रतिज्ञान्तरसहितां प्रतिज्ञाम् । (रामो)क्तस्यान्यथात्वे हुतभुजि अग्नौ पतने अन्यां च प्रतिज्ञां कृत्वा बहिः पुरात् ग्रामकेऽल्पग्रामेऽवसदिति योजना ॥ ८–१० ॥**

---

**'द्वादशाब्दं निवसतु त्वद्वाक्याद् दण्डके वने । अभिषेकश्च राज्यं च भरतस्य भविष्यति'** [४८.५०] इति कैकेयीवचनम् । **'वने वस महाबाहो गत्वा त्वं द्वादशाब्दकम्'** [५५] इति च । **'द्वादशाब्दिकमेतन्मे व्रतं पितृमुखेरितम्'** [१५६] इति च रामवचनम् । सर्वग्रन्थानुगुण्याय शतेपञ्चाशन्न्यायेनेदमुदितमिति वक्तव्यम् । वस्तुतस्तु गुह्यसमाधिभाषेयम्– द्वौ द्वौ च दश च द्वादशेति । तेन न कोऽपि विरोधः ॥ ७ ॥ स भरतः 'द्विगुणिते शरदां सप्तके ते वचः करिष्यामि' इत्येतद् रामवाक्यं श्रुत्वा, कदाचिदस्य रामोक्तस्याऽश्वासनस्य अन्यथात्वे हुतभुजि पतनविषये प्रतिज्ञां कृत्वा, पुनश्च स एव 'यावत् रामस्य वनवासः तावदहमपि नैव पुरमयोध्यामभिलषन् प्रविशामि' इत्यन्यां प्रतिज्ञां च कृत्वा । न प्रविशामीति ममायमभिषङ्गः शपथ इति वा । अभिषङ्गेण न प्रवेक्ष्ये । अथचाभिवेक्ष्ये अभिनिवेक्ष्य इत्यर्थः । निगर्भोयमभिरिति सूचनायैव चाऽत्मनेभाषा । **'नेर्विशः'** [अ.सू.१.३.१७] इति हि पाणिनिः । मनसोऽतिशयेन लगनमभिनिवेशः । स मा भूदित्यर्थः । **'अभिनिविशश्च'** [अ.सू.१.४.४७] इति पुरस्य कर्मसञ्ज्ञा । सप्रतिज्ञां 'नतु पुरमभिवेक्ष्ये' इति प्रतिज्ञासहिताम्, अन्यां हुतभुजि पतने प्रतिज्ञां च कृत्वा स बहिर्ग्रामकेऽवसदिति वा । अथ चित्रकूटादागमनानन्तरम् । अल्पो ग्रामो ग्रामकः । यद्वा सारभूता प्रतिज्ञा सप्रतिज्ञा । सा च सा प्रतिज्ञेति । **'सारत्वात् स इति प्रोक्तः'** इत्यादि स्मरणात् । अथ च सः भ्रातृषु सारभूतः स भरत इति च पदद्वयसार्थक्यम् । दुर्जनमोहनाय चैवंविधा भगवत्पादप्रयोगा भवन्ति । अस्य रामरूपस्य श्रीशस्य विष्णोरेव पादपीठम् । अथच श्रीशस्यैव साक्षाद् विष्णोरिव पादपीठम् । **'एवौपम्ये परिभवे ईषदर्थेऽवधारणे'** इत्यभिदधति । पौरटं सौवर्णम् । **'बहुरूपं च पुरटं कार्तस्वरमितीर्यते'** इति ह्यभिदधति । पुरु रटन्ति, पुरेष्वटन्ति चानेनेति पुरटम् । पुरतीति वा । पुर अग्रगमने । पिपर्ति जनानामभीष्टमिति वा । पॄ पालनपूरणयोः । पिपुरति निगूह्य पालयन्ति जना एनदिति वा । परमकं रामपादस्पर्शात् । रामपादोदकक्लिन्नम् । येन धृतेन भरतस्य कं शिरोऽपि परममुत्कृष्टं बभूव । परमसुखदं च । परमकमिति द्वे वा पदे । पिपर्ति पूरयति सुखेन साधूनिति परम् । न विद्यते कं सुखं यस्मादसतां मन्थरादीनामित्यकम् ॥ ८ ॥

---

१. **'भवदागमनपर्यन्तम्'** इति पर्याप्तम् ।

समस्तपौरानुगतेऽनुजे गते स चित्रकूटे भगवानुवास ह ।
अथाऽजगामेन्द्रसुतोऽपि वायसो महासुरेणाऽऽत्मगतेन चोदितः ॥ ९ ॥

स[१] आसुरावेशवशाद् रमास्तने यदा व्यधात् तुण्डमथाभिवीक्षितः ।
जनार्द्दनेनाऽऽशु तृणे प्रयोजिते चचार तेन ज्वलताऽनुयातः ॥ १० ॥

स्वयम्भुशर्वेन्द्रमुखान्त्सुरेश्वरान् जिजीविषुस्ताञ्छरणं गतोऽपि ।
बहिष्कृतस्तैर्हरिभक्तिभावतो ह्यलङ्घ्यशक्त्या परमस्य चाक्षमैः ॥ ११ ॥

**हरिभक्तिभावतः हरिभक्तिमत्त्वात् ॥ ११–४ ॥**

---

अनुजे भरते । उवास ह । चित्रमेतत् । यत् सर्वजगन्निवासश्चित्रकूटे न्युवास । इन्द्रसुतोऽपि वायसः । गर्हायामपिः ॥ ९ ॥ असुरावेशादेव च वायसरूपं दधार । बलिभक्षणाय गृहाद् गृहं वयत इति मौकुलिर्वायस उच्यते । वय गतौ । **'कदाचिदङ्के वैदेह्याः शेते रामो महामनाः । ऐन्द्रिः काकः समागम्य तस्मिन्नेव चचार ह । स दृष्ट्वा जानकीं तत्र कन्दर्पशरपीडितः । विददार नखैस्तीक्ष्णैः पीनोन्नतपयोधरम् । तं दृष्ट्वा वायसं रामस्तृणं जग्राह पाणिना । ब्रह्मणोऽस्त्रेण संयोज्य चिक्षेप धरणीधरः'** [उ.ख.२४२.१९५–७] इति पाद्मे । न केवलं नखैः । तुण्डेनापि विकृतं वर्तयामास । तदेतद् रामायणादवगम्यते– **'ततो मांससमायुक्तो वायसः पर्यतुण्डयत्'** [सुं.कां.३८.१५] इति । **'पर्यायेण प्रसुप्तश्च ममाङ्के भरताग्रजः । स तत्र पुनरेवाथ वायसः समुपागमत् । ततः सुप्तप्रबुद्धां मां रामस्याङ्कात् समुत्थिताम् । वायसः सहसाऽऽगम्य विददार स्तनान्तरे'** [२१–२], **'स मां दृष्ट्वा महाबाहुर्वितुन्नां स्तनयोस्तदा । आशीविष इव क्रुद्धः श्वसन् वाक्यमभाषत । केन ते नागनासोरु विक्षतं वै स्तनान्तरम् । कः क्रीडति सरोषेण पञ्चवक्त्रेण भोगिना । वीक्षमाणस्ततस्तं वै वायसं समुदैक्षत । नखैः सरुधिरैस्तीक्ष्णैर्मामेवाभिमुखं स्थितम् । पुत्रः किल स शक्रस्य वायसः पततां वरः । धरान्तरगतः शीघ्रं पवनस्य गतौ समः'** [२४–७], **'स दर्भं संस्तराद् गृह्य ब्राह्मेणास्त्रेण योजयत् । स दीप्त इव कालाग्निर्जज्वालाभिमुखो द्विजम् । स तं प्रदीप्तं चिक्षेप दर्भं तं वायसं प्रति'** [३०–१] इति च । अथ सीताया उत्सङ्गे सुप्तस्य रामस्य तया बोधितस्य, उत्सङ्गादुत्थानानन्तरमिति कथाविशेषमथशब्देन सूचयति । अथ सीतया लोष्टमुद्यम्य निवारणानन्तरमपि रमास्तने तुण्डं व्यधादिति च कथाऽनेन सूचिता । अभियुञ्जन् कलहायाऽऽह्वयन्निव वीक्षितः ॥ १० ॥ स्वयम्भुशर्वेन्द्रमुखान् । **'ब्रह्माणमिन्द्रं रुद्रं च यमं वरुणमेव च । शरणार्थी जगामाऽऽशु वायसः शस्त्रपीडितः । तं दृष्ट्वा वायसं सर्वे रुद्राद्या देवदानवाः । न शक्ताः स्मो वयं त्रातुमिति प्राहुर्मनीषिणः । अथ प्रोवाच भगवान् ब्रह्मा त्रिभुवनेश्वरः । भोभो बलिभुजां श्रेष्ठ तमेव शरणं व्रज । स एव रक्षकः श्रीमान् सर्वेषां करुणानिधिः'** [उ.खं.२४२.२०१–३] इति

---

१. 'स चाऽसुरा–'

पुनः प्रयातः शरणं रघूत्तमं विसर्ज्जितस्तेन निहत्य चासुरम् ।
तदक्षिगं साक्षिकमप्यवद्ध्यं प्रसादतश्चन्द्रविभूषणस्य ॥ १२ ॥

स वायसानामसुरोऽखिलानां वरादुमेशस्य बभूव चाक्षिगः ।
निपातितोऽसौ सह वायसाक्षिभिस्तृणेन रामस्य बभूव भस्मसात् ॥ १३ ॥

ददुर्हि तस्मै विवरं बलार्थिनो यद् वायसास्तेन तदक्षिपातनम् ।
कृतं रमेशेन तदेकनेत्रा बभूवुरन्येऽपि तु वायसाः सदा[1] ॥ १४ ॥

भविष्यतामप्यथ यावदेव द्विनेत्रता काककुलोद्भवानाम् ।
तावत् तदक्ष्यस्य कुरङ्गनाम्नः शिवेन दत्तं दितिजस्य चाक्षयम् ॥ १५ ॥

अतः पुनर्भावममुष्य हिन्वन् भविष्यतश्चैकदृशश्चकार ।
स वायसान् राघव आदिपूरुषस्ततो ययौ शक्रसुतस्तदाज्ञया ॥ १६ ॥

**अक्षयमिति क्रियाविशेषणम् । अक्षयं वाऽवध्यत्वम् ॥ १५–२२ ॥**

---

पाद्मे । हरिभक्तिरेव भावः स्वभावस्तस्मात् । स्वभावतो हरिभक्तत्वात्, रामास्त्रनिवारणेऽक्षमत्वाच्च बहिष्कृतः । **'ततोऽसौ सर्वदेवैस्तु देवलोकाद् बहिष्कृतः'** [न.पु.४९.११] इति नारसिंहे ॥ ११ ॥ प्रयातः, गत्यन्तराभावात् प्रसभं यातः । अन्तर्गतस्य दैवस्वभावस्य प्राकट्याच्च यातः । विसर्जितः विसृष्टः । विसर्जयति, विसर्जयामासेत्यादिबहुलप्रयोगात् स्वार्थे णिच् । **'सर्ज अर्जने'** इत्यस्य वा रूपम् । तदक्षिगं जयन्ताक्षिगतं तमसुरं रुद्रवरादवध्यमपि साक्षिकं स्वाश्रयेण वायसरूपस्य जयन्तस्याक्ष्णा सहितं निहत्य । तस्मान्न मूलरूपे जयन्तस्याक्षिहानिरास । एतेन **'दत्वा स दक्षिणं नेत्रं प्राणेभ्यः परिरक्षतः'** [सुं.कां.३८.३६] इति वचनस्यायमर्थः– वायसानां दक्षिणं नेत्रं दत्वा, वाममक्षि निहत्य, जयन्तः परिरक्षित इति ॥ १२ ॥ ननु जयन्तनयनगतोऽसुरः । तत् किमिति सर्ववायसानां वामनयनभञ्जनम्? आह– अखिलानां वायसानामक्षिगो बभूवेति । एतेन–**'ततः प्रभृति काकानां सर्वेषामेकनेत्रता । चक्षुषैकेन पश्यन्ति हेतुना तेन पार्थिव'** [न.पु.४९.१५] इति पुराणवचनं गदिताशयम् ॥ १३–१४ ॥ तर्हि अक्षिद्वयमपि पातनीयम् । किमेकाक्षिपातनेन? आह–यावदेव द्विनेत्रतेति । कुत्सितं रङ्गतीति कुरङ्गः । रगि गतौ । तदक्षि तस्याक्षयं स्थानं दत्तम् । आक्षयं वाऽऽवासस्थानम् । क्षि निवासगत्योः ॥ १५ ॥ भविष्यतश्च वायसान् ॥ १६ ॥

---

१. **'तदैकनेत्रा बभूवुरन्येऽपिच वायसास्तदा'**

**रामोऽथ दण्डकवनं मुनिवर्य्यनीतो लोकाननेकश उदारबलैर्न्निरस्तान् ।**
**श्रुत्वा खरप्रभृतिभिर्वरतो हरस्य सर्वैरवद्ध्यतनुभिः प्रययौ सभार्य्यः ॥ १७ ॥**

**आसीच्च तत्र शरभङ्ग इति स्म जीर्ण्णो लोकं हरेर्ज्जिगमिषुर्म्मुनिरुग्रतेजाः ।**
**तेनाऽदरोपहृतसार्घ्यसपर्य्यया सः प्रीतो[1] ददौ निजपदं परमं रमेशः ॥ १८ ॥**

**धर्म्मो यतोऽस्य वनगस्य नितान्तशक्तिह्रासे स्वधर्म्मकरणस्य हुताशनादौ ।**
**देहात्ययः स तत एव तनुं निजाग्नौ सन्त्यज्य रामपुरतः प्रययौ परेशम्[2] ॥ १९ ॥**

**रामोऽपि तत्र ददृशे धनदस्य शापाद् गन्धर्वमुर्वशिरतेरथ यातुधानीम् ।**
**प्राप्तं दशां सपदि तुम्बुरुनामधेयं नाम्ना विराधमपि शर्ववरादवद्ध्यम् ॥ २० ॥**

---

लोकान् विशिष्य मुनिलोकान् । अनेकशः अनेकान्, अनेकधा वा । उदारबलैः महाबलैः । अवध्यतनुभिः । ननु तनुरेव वधमर्हति । नाऽत्मा । तेनावध्यैरिति पर्याप्तम् । सत्यम् । अवध्यैरिति पर्याप्तम् । अथाप्यवध्यतनुभिरित्याह । तेनैतदाह– तनुरिति काय उच्यते । त्वगप्युच्यते । अत्र त्वग्वचनोऽयं शब्दः । तेन त्वचोऽप्यच्छेद्यत्वमाह । अथाप्यकारवाच्येन भगवता वध्यतनवश्छेद्यभेद्यतनवश्चेति । अवतारकार्यस्य रावणसंहारस्य नान्दीयमिति प्रहृष्टो ययौ सभार्यः । भार्यया सीतया भार्येण लक्ष्मणेन च सहितः । ननु भरणीयो हि भृत्यो भवति, न भार्यः । न भोः । शृणु श्रतिवचनम्–**'स हैवालं भार्येभ्यो भवति'** [बृ.उ.३.३.१८] इति ॥ १७ ॥ एवं सप्तदशभिः पद्यैरयोध्याकाण्डकथां सङ्क्षिप्याथारण्यकाण्डकथामाचष्टे– आसीच्चेत्यादि । सार्घ्यया सपर्यया सत्कारेण । **'सपर पूजायाम्'** । अर्घ्यं हस्तावनेजनम् । भगवत्प्राप्त्या शरस्य शरीरस्य भञ्जनाद् वियोजनाच्छरभङ्गः । 'सः प्रीतः' इति प्रग्रहेण सर्ववैलक्षण्यं भगवत आह । अः इति ब्रह्म' इतिवत् । अथवा सशब्दोऽयम् । न तच्छब्दः । सः सर्वोत्तमः । तच्छब्दत्वेऽपि संयुक्तपकारे परे वा विसर्गलोप इति प्राचीनानां सम्प्रदाय इत्युक्तं द्वितीये [२.७४] ॥ १८ ॥ स्वधर्मकरणस्य याऽपेक्षिता शक्तिस्तस्या ह्रासे हुताशनादौ देहात्ययः वनगस्य धर्मः । आदिना गङ्गादितीर्थेषु अनशनाग्नौ च । निजे योगाग्नौ । ब्रह्मार्पणं ब्रह्महविरिति भावेन त्यागः सन्त्यागः । समिति भगवन्नाम । तेन भगवदर्पणबुद्ध्या त्यागः सन्त्यागः । **'स तु दृष्ट्वाऽथ काकुत्स्थं सद्यः सङ्क्षीणकल्मषः । प्रययौ ब्रह्मलोकं तु गन्धर्वाप्सरसान्वितम्'** [उ.खं.२४२.२२२] इति पाद्मे ॥ १९ ॥ आदौ विराधदर्शनम् । ततः शरभङ्गाश्रमगमनं च रामायणे श्रूयते । वस्तुतस्तु शरभङ्गदर्शनं प्रथममिति यथावृत्तं तां कथां प्रथममाह, मङ्गलादीनि रामकार्याणि बभूवुरिति सूचयन् । **'प्रविवेश महारण्यं शरभङ्गाश्रमं प्रति'** [व.प.२७८.४६] इति भारते । उर्वशिरतेः कारणात् धनदस्य

---

१. **'स प्रीतो–'**

२. **'–ययौ रमेशम्'**

**भङ्क्त्वाऽस्य बाहुयुगळं[1] बिलगं चकार सम्मानयन् वचनमम्बुजजन्मनोऽसौ ।**
**प्रादाच्च तस्य सुगतिं निजगायकस्य भक्षार्थमंसकमितोऽपि सहानुजेन ॥ २१ ॥**

**प्रीतिं विधित्सुरगमद् भवनं निजस्य कुम्भोद्भवस्य परमादरतोऽमुना च ।**
**सम्पूजितो धनुरनेन गृहीतमिन्द्राच्छार्ङ्गं तदादिपुरुषो निजमाजहार ॥ २२ ॥**

---

शापः । शापान्निमित्ताद् यातुधानीं दशां प्राप्तः । **'अपि शापादहं घोरां प्रविष्टो राक्षसीं तनुम् । तुम्बुरुर्नाम गन्धर्वः शप्तो वैश्रवणेन हि'** [अर.कां.४.१६] इति हि रामायणे । तुबि अर्दने । तुम्बति स्वाङ्गमर्दनेन कामिन्यङ्गमर्दयतीति तुम्बुरुः । **'तुम्बेरुरुः'** [स.कं.२.१.१०२] इति भोजः । उरु तुम्बतीति वा । केचिदेनं चुरादौ पठन्ति । केचिद् भ्यादौ च चुरादौ च । केचित् **'तुबि अदर्शने'** इत्यपि पेठुः । तदा न दर्शयत्यात्मानम्, आत्मनो वा गीतपाटवमिति तुम्बुरुः । यद्यपि रम्भारतेर्धनदस्य शाप इति श्रूयते– **'इति वैश्रवणो राजा रम्भासक्तं पुराऽनघ । अनुपस्थीयमानो मां सङ्क्रुद्धो व्याजहार ह'**[१९] इति । न केवलं रम्भासक्तः । उर्वशीसक्तश्च । अत एव न केवलं क्रुद्धः । किन्तु सङ्क्रुद्धः । उर्वशिरतेरिति सञ्ज्ञायां ह्रस्वत्वम् । तद्यथा–देवकिनन्दन । ददृशे, असम्पूर्वस्यापि भवत्यात्मनेपदम् । सकर्मकादपि । तद् यथा– **'यदा पश्यः पश्यते रुग्मवर्णम्'** । विराधजन्मनि शर्ववरादवध्यम् । यद्यपि रामायणे ब्रह्मवरादवध्यतेति श्रूयते– **'तपसा चापि मे प्राप्ता ब्रह्मणो हि प्रसादजा । शस्त्रेणावध्यता लोके'**[३.६] इति । वरद्वयं चात्र मन्तव्यम् । शस्त्रेणावध्यत्वमित्यभेद्यत्वं शर्वदत्तम् । ब्रह्मदत्तत्वे लक्ष्मणेन वामबाहुच्छेदासम्भवात् । शस्त्रेणावध्यत्वमिति शस्त्रेण मरणरहितत्वं ब्रह्मदत्तम् । अत एव ब्रह्मणो वचनं सम्मानयन् तं न शस्त्रेण मारयामास । किन्तु बिलगं चकार । **'अवध्यतां प्रेक्ष्य महासुरस्य तौ बिले विराधस्य वधं प्रचक्रतुः'** [अर.कां.४.३०] इति हि रामायणे ॥ २० ॥ अनुजेन सहांसकमितः । अंसकमिति कुत्सायामनुकम्पायां च । शापग्रस्तस्यांसोऽयं छेदमर्हतीति कुत्सा । छेदनेन शापान्मोचनीय इत्यनुकम्पा । अनुजेन सहैव बाहुयुगळं भङ्क्त्वा । तथाहि–**'तस्य रौद्रस्य सौमित्रिर्बाहुं सव्यं बभञ्ज ह । रामस्तु दक्षिणं बाहुम्'** [अर.कां.४.५] इति रामायणे ॥ २१ ॥ **'राम प्रीतोऽस्मि भद्रं ते परितुष्टोऽस्मि लक्ष्मण । अभिवादयितुं यन्मां प्राप्तौ स्थः सह सीतया'** [अर.१३.१] इत्यगस्त्यवचनस्य भावं स्फुटयन्नेव श्रीरामचन्द्रस्य भक्तवात्सल्यनिदर्शनं लीलान्तरमाह– प्रीतिं विधित्सुः । निजभक्तस्य कुम्भोद्भवस्य अगस्त्यस्य । सम्पूजित इति । **'सुतीक्ष्णस्याप्यगस्त्यस्य अगस्त्यभ्रातुरेव च । क्रमेण प्रययौ रामस्तैश्च सम्पूजितस्तथा'** [उ.खं.२४२.२२३] इति पाद्मे । तदेतत् **'अमुना च सम्पूजितः'** चशब्देन कथितम् । समिति विष्णुवचनम् । तेन सम्पूजितः, साक्षाद् विष्णुरयमिति बुद्ध्या, परमादरेण सर्वाधिकतया भक्त्या पूजितः । **'स्वागतं ते रघुश्रेष्ठ जगद्वन्द्य सनातन । दर्शनात् तव काकुत्स्थ पूतोऽहं मुनिभिः सह'** [सु.खं.३८.२१], **'त्वं हि नित्यं बहुमतो गुणैर्बहुभिरुत्तमैः । अतस्त्वं पूजनीयो वै मम नित्यं हृदि स्थितः'** [२३] इति चागस्त्य-

---

१. '–युगलम्'

**आत्मार्थमेव हि पुरा हरिणा प्रदत्तमिन्द्रे तदिन्द्र उत रामकरार्थमेव ।**
**प्रादादगस्त्यमुनये तदवाप्य रामो रक्षन्नृषीनवसदेव स दण्डकेषु ॥ २३ ॥**

**काले तदैव खरदूषणयोर्बलेन रक्षःस्वसा पतिनिमार्ग्गणतत्पराऽऽसीत् ।**
**व्यापादिते निजपतौ हि दशाननेन प्रामादिकेन विधिनाऽभिससार रामम् ॥ २४ ॥**

**साऽनुज्ञयैव रजनीचरभर्त्तुरुग्रा भ्रातृद्वयेन सहिता वनमावसन्ती ।**
**रामं समेत्य भव मे पतिरित्यवोचद् भानुं यथा तम उपेत्य सुयोगकामम् ॥ २५ ॥**

**तां तत्र हास्यकथया जनकासुताग्रे गच्छानुजं म इह नेति वचः स उक्त्वा ।**
**तेनैव दुष्टचरितां हि विकर्ण्णनासां चक्रे समस्तरजनीचरनाशहेतोः ॥ २६ ॥**

**ऋषीन् रक्षन्नेवेति सम्बन्धः ॥ २३ ॥ (प्रामादिकेन) शत्रुरयं हन्यत इति भ्रान्तिजनितेन विधिना कर्मणा व्यापादिते मारिते ॥ २४–५ ॥ जनकासुताग्रे । जनकस्य (आ)सुता । जनकासुता । (आ)सुतेत्य-**

---

वचनं पाद्मे शम्बूकप्रसङ्गे । अनेन अगस्त्येन इन्द्राद् गृहीतम् । **'दत्तो मम महेन्द्रेण'**[अर.कां.१२.३२] इति हि रामायणे ॥ २२ ॥ परशुरामदत्तं वैष्णवं रामेण वरुणाय दत्तम् । वरुणेन हरये दत्तम् । हरिणा पुना रामरूपस्य स्वस्योपयोगार्थमेवेन्द्रे निहितम् । रामकरार्थमेव रामकरेऽर्पयितुमेव । न केवलं धनुः–**'तद्धनुस्तौ च तूणीरौ शरं खड्गं च मानद । जयाय प्रतिगृह्णीष्व वज्रं वज्रधरो यथा'** [अर.कां.१२.३७] इति हि वाल्मीकीये । दण्डकेष्वेव चिरमवसत् । आश्रमबाहुल्यात्तेषुतेष्वाश्रमेष्ववसदिति बहुवचनम् ॥ २३ ॥ रक्षःस्वसा शूर्पणखा । रावणकुम्भकर्णयोरनुजा विभीषणज्येष्ठभगिनी हि सा । प्रामादिकेन विधिना शत्रुपक्षीयोऽयमिति भ्रान्त्या दशाननेन व्यापादिते निजपतौ विद्युज्जिह्वे प्रामादिकेन विधिनाऽभिससार रामम् । **'स्वसारं कालकेयाय दानवेन्द्राय राक्षसीम् । ददौ शूर्पणखां नाम विद्युज्जिह्वाय नामतः'** [उ.कां.१२.२] इति वाल्मीकीये । **'दृष्ट्वा तं राक्षसी रामं कन्दर्पशरपीडिता'** [उ.खं. २४२.२३४] इति पाद्मे ॥ २४ ॥ भ्रातृद्वयेन खरेण दूषणेन च । शूर्पणखाया मातृष्वसुस्तनयौ हि तौ । खरस्तु राकातनय इति भारते–**'राकाया मिथुनं जज्ञे खरः शूर्पणखा तथा'** [व.प.२७६.८] इति । अत्र शूर्पणखेति शूर्पसदृशनखा काचिदन्यैव राक्षसी । प्रसिद्धा हि शूर्पणखा कैकसीतनया । खरस्य तनयो मकराक्षः । दूषणस्तु कैकसीभगिन्या बलाकायास्तनय इति वदन्ति । वनमावसन्ती । आक्रम्य वसन्ती, आगारीकृत्य वा वसन्ती आवसन्ती । **'उपान्वध्याङ् वसः'** [अ.सू.१.४.४७] । वियोगासमानाधिकरणो योगः सुयोगः । योग एवासम्भव-ग्रस्तः । किमुत सुयोग इत्यर्थः ॥ २५ ॥ जनकस्य आसुता । आङ् ईषदर्थे । ईषत्सुता । अगर्भजातत्वात् । अयोनिजा सुतेत्येतत् । सत्यं स जनकः । अथापीयमसुता तस्येति च । जननी जनकेति भूमिरुच्यते, जनानां

**तत्प्रेरितान् सपदि भीमबलान् प्रयातांस्तस्याः खरत्रिशिरदूषणमुख्यबन्धून् ।**
**जघ्ने चतुर्दशसहस्रमवारणीयकोदण्डपाणिरखिलस्य सुखं विधातुम् ॥ २७ ॥**

**योनिजा । 'अयोनिजा तु या नारी साऽऽसुतेत्यभिधीयते' इत्यभिधानात् ॥ २६–७ ॥**

---

कं ययेति । तेन भूमिजाता च जनकासुता । **'जनकस्य भार्या जनका । तस्याः सुता'** इत्यपि व्याचक्षते । यद्यपि जनकभार्या नैतां सुषुवे । अथापि सुतात्वेन स्वीकृतेति वक्तव्यम् । **'वैवस्वतान्वये जातो राजाऽभूज्जनकः पुरा । सोऽपाम्पतेस्तु तनुजामुपयेमे गुणार्णवाम् । धर्मार्थकाममोक्षाणां जनकां जनको नृपः । अनुरूपगुणत्वाच्च तस्य भार्या गुणार्णवा'** [ब्रा.पु.गौ.२७.२–३] इति च । यद्वा **'जनकासुता'** इति संहितापाठेऽपि **'जनकसुता'** इत्येव पदपाठः । **'संहितायां यत्र दैर्घ्यं पदे यत्र न दृश्यते । उक्तार्थस्य महाधिक्यम्–'** इति हि स्वयमेवाऽऽहर्ग्भाष्ये भगवत्पादः । सीतापितृत्वाज्जनकवंशीयेष्वधिकोऽयं जनक इति संहितायां दैर्घ्यम् । मेऽनुजं गच्छ । इह मयि, इह जानकीसविधे न युक्तस्ते प्रणय इत्युक्त्वा । **'कृतदारोऽस्मि भवति भार्येयं दयिता मम । त्वद्विधानां तु नारीणां सुदुःखा ससपत्नता । अनुजस्त्वेष मे भ्राता शीलवान् प्रियदर्शनः । श्रीमानकृदारश्च लक्ष्मणो नाम वीर्यवान् । अपूर्वभार्यया चार्थी तरुणः प्रियदर्शनः । अनुरूपश्च ते भर्ता रूपस्यास्य भविष्यति'** [अर.कां.१८.२–४] इति वाल्मीकीये । ननु रामः कथं वितथमाह– 'अकृतदारो लक्ष्मणः' इति, 'भार्यया चार्थी' इति च । **'अनृतं नोक्तपूर्वं मे नच वक्ष्ये कदाचन'** इति स्ववचनविरोधादित्यत आह– हास्यकथया । परिहासार्थं मिथ्याकथने न दोष इति भावः । यतः परिहासविजल्पितं जानद्भिः परमार्थेन न गृह्यते । रामायण एव चैतत् स्फुटम्–**'मन्यते तद्वचस्तथ्यं परिहासाविचक्षणा'** [१३] इति । एतेनैतदपि निरस्तम्, यत् कतककृत् स्वमौर्ख्यं व्यञ्जयन्नाह–**'अनेनानृतवचनेनैव कारणेन रामस्य सीतावियोगः समजनि'** इति । तेन लक्ष्मणेनैव विकर्णनासां चक्रे । एतेन **'इत्युक्त्वा राक्षसीं सीतां ग्रसितुं वीक्ष्य चोद्यताम् । श्रीरामः खड्गमुद्यम्य नासाकर्णौ प्रचिच्छिदे'** इति पाद्मवचनं [उ.खं.२४२.२४६] व्याख्यातम् । लक्ष्मणद्वारा प्रचिच्छिद इत्यर्थः । **'इमां विरूपामसतीमतिमत्तां महोदरीम् । राक्षसीं पुरुषव्याघ्र विरूपयितुमर्हसि । इत्युक्तो लक्ष्मणस्तस्याः क्रुद्धो रामस्य पश्यतः । उद्धृत्य खड्गं चिच्छेद कर्णनासे महाबलः'** [अर.कां१८.२०–१] इति च वाल्मीकीये ॥ २६ ॥ एतावन्तमनेहसं प्रच्छन्ना भूत्वेदानीं प्रकाशं यातान् । तस्या बन्धून् । त्रिशिरः त्रिशिराः । **'सहस्रपादाक्षिशिरोरुबाहवे'** इत्यादिवत् । **'शिरोवाची शिरोऽदन्तो रजोवाची रजस्तथा'** इति चाभिदधति । अपिचेदमंशतो भागवतवचनोद्धरणम्–**'रक्षःस्वसुर्व्यकृत रूपमशुद्धबुद्धेस्तस्याः खरत्रिशिरदूषणमुख्यबन्धून् । जघ्ने चतुर्दशसहस्रमवारणीयकोदण्डपाणिरटमान उवास कृच्छ्रम्'** [९.८.९१] इति हि भागवते । त्रिशिरा इति कश्चन रावणपुत्रोऽप्यस्ति । यो लङ्कायां हनुमताऽहन्यत । तद्व्यावृत्त्यर्थं च त्रिशिर इत्याह । केचिदेनं दूषणभ्रातरं बलकातनयमाचक्षते । तर्हि त्रयोऽपि भ्रातर आसन् । सन्तु, किं तेन? आचार्यवचनविरोधः स्यात् । केन वचनेन? **'भ्रातृद्वयेन'**[२५] इति पूर्ववचनेन । यदि त्रयोऽपि भ्रातरः, तदा भ्रातृत्रयेण इत्येवावक्ष्यत् । न भ्रातृद्वयेनेति । तेन नायं भ्रातेति विज्ञायते । चतुर्दश च चतुर्दशसहस्राणि च रक्षांसि यत्र तद्

दत्तेऽभये रघुवरेण महामुनीनां दत्ते भये च रजनीचरमण्डलस्य ।
रक्षःपतिः स्वसृमुखादविकम्पनाच्च श्रुत्वा बलं रघुपतेः परमाप चिन्ताम् ॥ २८ ॥

स त्वाशु[1] कार्य्यमवमृश्य जगाम तीरे क्षेत्रं नदीनदपतेः श्रवणं धरित्र्याः ।
मारीचमत्र तपसि प्रतिवर्त्तमानं भीतं शराद् रघुपतेर्न्नितरां ददर्श ॥ २९ ॥

तेनार्त्थितः सपदि राघववञ्चनार्त्थे[2] मारीच आह शरवेगममुष्य जानन् ।
शक्यो न ते रघुवरेण हि विग्रहोऽत्र जानामि [3]संस्पर्शमस्य शरस्य पूर्वम् ॥ ३० ॥

**परं बलमिति सम्बन्धः ॥ २८ ॥ धरित्र्याः श्रवणं क्षेत्रं गोकर्णक्षेत्रम् । नितरां भीतम् ॥ २९–३३ ॥**

---

रक्षःसैन्यम् । ज्यया कुवन् दण्डः कोदण्डः । कु शब्दे । को दण्डनीयः को नेति विमृश्य दण्डयतीति च । को दण्डनीय इत्यन्वेषमन्वेषं दण्डयतीति च । अखिलस्य सज्जनसमुदायस्य, मुनिगणस्य वा ॥ २७ ॥ अविकम्पनाच्च । मृतावशिष्टः खरानुचरः अकम्पन इति रामायणे– **'त्वरमाणस्ततो गत्वा जनस्थानादकम्पनः । प्रविश्य लङ्कां वेगेन रावणं वाक्यमब्रवीत्'** [अर.कां.३१.१] इति । अविकम्पन इत्येनेनैतदाह– नाम्नाऽकम्पनोऽपि अविरिव कम्पमानो रावणमाजगामेति । अकम्पन इत्यन्यो रावणसचिवः कश्चिदस्ति सुमालिनः पुत्रः कैकसीभ्राता । यो हनुमता हतः । तद्भिन्नोऽयमिति सूचनाय चाकम्पनं सन्तमविकम्पनमाह । केचित्तु स एवायमिति मन्यन्ते । परं बलं श्रुत्वा परां चिन्तामाप ॥ २८ ॥ स तु । तुना सम्भ्रान्तिविशेषमाह । अत एवाऽशु । स्त्रीदेवता नद्यः । पुन्देवता नदाः । केचिदेवमाचक्षते–**'पुंवाचकाकृत्रिमखातावच्छिन्नजलप्रवाहो नदः । स च सिन्धुभैरवशोण-दामोदरब्रह्मपुत्रादिः'** इति । **'अष्टसहस्रधनुरन्यूनव्याप्ततोया नदी । सा च गङ्गायमुनासरस्वतीकावेरीगोदावरी-प्रभृतिः'** इति च । अलक्षणमेतत् । यन्नदीलक्षणं नदेऽप्यतिव्याप्तम् । नदलक्षणं च समन्तपञ्चकेऽव्याप्तम् । यतस्तान् पञ्चह्रदान् पञ्चनदानप्याचक्षते तद्विदः । किमिति ते पुम्पदेनोच्यन्त इति च न स्फुटं कारणम् । तस्मादभिमानिविवक्षयैव लिङ्गभेद इति वक्तव्यम् । यदपि छन्दोगपरिशिष्टवचनम्–**'धनुःसहस्राण्यष्टौ च गतिर्यासां न विद्यते । न ता नदीशब्दवाच्या गर्तास्ताः परिकीर्तिताः'** इति, तदपि न नदीलक्षणवचनम् । किन्तु खातपदार्थनिर्णयाय प्रवृत्तमिति न कोऽपि दोषः । नदीनदपतेः समुद्रस्य तीरे गतं क्षेत्रम् । धरित्र्याः श्रवणं गोकर्णाख्यम् । गोरूपाया भूमेः कर्णस्था-नीयम् । अत्र गोकर्णे । नितरां भीतम् । अत एव तपसि प्रतिष्टभ्य वर्तमानम् । प्रतीकारप्रतीक्षया च वर्तमा-नम् । **'तत्राभ्यगच्छन्मारीचं पूर्वामात्यं दशाननः । पुरा रामभयादेव तापसं प्रियजीवितम्'** [व.प.२७८. ६३] इति भारते ॥ २९ ॥ अत्र सीताविषये । हि त्वमपि जानासि हि । अत एव सरळं पन्थानं विहाय वञ्चयितुं

---

१. **'श्रुत्वाऽऽशु'** २. **'–वञ्चनार्थं मा–'** ३. **'संस्पर्‌शमस्य'** इति विश्लिष्य पठनीयम् ।

इत्युक्तवन्तमथ रावण आह खड्गं निष्कृष्य हन्मि यदि मे न करोषि वाक्यम् ।
तच्छ्रुश्रुवान् भययुतोऽथ निसर्गतश्च पापो जगाम रघुवर्य्यसकाशमाशु ॥ ३१ ॥

स प्राप्य[१] हैममृगतां बहुरत्नचित्रः सीतासमीप उरुधा विचचार शीघ्रम् ।
निर्द्दोषनित्यवरसंविदपि स्म देवी रक्षोवधाय जनमोहकृते तथाऽह ॥ ३२ ॥

देवेममाशु परिगृह्य च देहि मे त्वं क्रीडामृगं त्विति तयोदित एव रामः ।
अन्वक् ससार ह शरासनबाणपाणिर्म्मायामृगं निशिचरं निजघान जानन् ॥ ३३ ॥

तेनाऽहतः शरवरेण भृशं ममार विक्रुश्य लक्ष्मणमुरुव्यथया स पापः ।
श्रुत्वैव लक्ष्मणमचूचुदुग्रवाक्यैः सोऽप्याप रामपथमेव सचापबाणः ॥ ३४ ॥

**लक्ष्मणं विक्रुश्य लक्ष्मणेत्याहूय । उग्रवाक्यैः मामपेक्ष्य राममुपेक्षस इति निष्ठुरवचनैः ॥ ३४–५ ॥**

---

प्रवृत्तः । पूर्वतनं संस्पर्शं वर्तमानमिव सम्प्रत्यपि जानामि । अत एव संस्पर्‌शमिति भयकम्पमभिनीय दर्शयति । वैदिकश्चायं पन्था यद् विश्लिष्योच्चारणं क्षैप्राणाम् । तद्यथा– **'सहस्रशीर्षं देवम्'** ॥ ३० ॥ रावणेन स्वहननाख्य-स्यानिरीक्षितस्य नाटकस्यायमारम्भ इत्यथशब्देन परिजहासेव । गमने राघवाद् भयम् । अगमने रावणात् । उभय-थाऽपि मरणमेव शरणमिति भययुतः । तर्हि कथमेककोटिकनिर्धारः? आह– निसर्गतः पापश्च । अतो गमनमेव वरमिति निर्दधार । अथ अत एव कारणात्, अथ श्रवणसमनन्तरमेव, आशु विलम्बमकृत्वा जगाम ॥ ३१ ॥ हैम इव हैमः । हेम्नो विकारः हैमः । अण् टिलोपश्च । रत्नचित्र इव बिन्दुखचितः । **'मनोहरः स्निग्धवर्णो रत्नै-र्नानाविधैर्युतः । क्षणेन राक्षसो जातो मृगः परमशोभनः'** [अर.कां.४२.१९] इति हि रामायणे । **'नानावर्णविचित्राङ्गो रत्नबिन्दुसमाचितः'**[४३.१३] इति च । नानावर्णमिति सुवर्णम् । वरा भगवत्संविदमनुगता संविदस्याः । रक्षोवधाय तथा दुर्जनमोहकृते च । **'भाविकर्मवशाद् राममुवाच पतिमात्मनः'** [४९.७१] इति नारसिंहे ॥ ३२ ॥ परिगृह्य परित्राणपूर्वं निगृह्य । क्रीडार्थो मृगः क्रीडामृगः । अयमेव मे विशिष्य क्रीडार्थं रोचत इति तुनाऽऽह । उदित एव, अविलम्बेन । अन्वक् पृष्ठतः ससार ह पत्नीप्रियकाङ्क्षयेवेति विस्मयते । मायया मृग इव । निजघान, पूर्वं विश्वामित्राश्रमे केवलं जघान । इदानीं नितरां जघान यथा न पुनर्जीवेत् । जानन् । नतु जीवन्तं ग्रहीतुम-प्रभवन् । **'निशाचरं विदित्वा तं राघवः प्रतिभानवान् । अमोघं शरमादाय जघान मृगरूपिणम्'** [व.प.२७९.२१] इति भारते ॥ ३३ ॥ भृशमाहतः । विक्रुश्य आर्तस्वरेण रामस्वरानुकारेण सीतालक्ष्मणावाह्वयन्निव महानादं रोदं

---

१. **'सम्प्राप्य'**

**यांयां परेश उरुधैव करोति लीलां तान्तां करोत्यनु तथैव रमाऽपि देवी ।**
**नैतावताऽस्य परमस्य तथा रमाया दोषोऽणुरप्यनुविचिन्त्य उरुप्रभू यत् ॥ ३५ ॥**

**क्वाज्ञानमापदपि मन्दकटाक्षमात्रसर्गस्थितिप्रळयसंसृतिमोक्षहेतोः[१] ।**
**देव्या हरेः किमु विडम्बनमात्रमेतद् विक्रीडतोः सुरनरादिवदेव तस्मात् ॥ ३६ ॥**

**देव्याः समीपमथ रावण आससाद साऽदृश्यतामगमदप्यविषह्यशक्तिः ।**
**सृष्ट्वाऽऽत्मनः प्रतिकृतिं प्रययौ च शीघ्रं कैलासमर्चितपदा न्यवसच्छिवाभ्याम् ॥ ३७ ॥**

**देव्या अज्ञानादि (क?) ततोऽधिकस्य हरेः किमु? ॥ ३६–७ ॥**

कृत्वेत्यर्थः । **'क्रुश आह्वाने रोदे च'** इति धातुपाठात् । **'स प्राप्तकालमाज्ञाय चकार च ततः स्वरम् । सदृशं राघवस्यैव हा सीते लक्ष्मणेति च'** [अर.कां.४४.१८] इति वाल्मीकीये । श्रुत्वैव सीता लक्ष्मणमचूचुदत् । सावधारणं निष्ठुरं च चोदयामास । 'चुद सञ्चोदने' । **'सुदुष्टस्त्वं वने राममेकमेकोऽनुगच्छसि । मम हेतोः प्रतिच्छन्नः प्रयुक्तो भरतेन वा'** [अर.कां.४५.२४] इति ॥ ३४ ॥ उरुधा बहुधा । एवकारः केवलार्थः । यत् करोति सा केवलं लीला । ईशात् शिवात् परः अन्य उत्तमश्च ईशः । सर्वस्मात् परश्च ईशः । पराणामुत्तमानां ब्रह्मादीनामपीशः । तथैव उरुधैव अनुकरोति । साऽपि तथैव केवललीलैव । अनुविचिन्त्यः । शास्त्रानुगुणं वास्तवानुगुणमिति वा विपरीतं चिन्तनमनुविचिन्तनम् । अनुरूप इति वा चिन्तनम् । सहार्थे वाऽनुः । अणुरपि दोषो भगवतः सहयोगेन न विचिन्त्य इत्यर्थः । **'अनु हीने सहार्थे च पश्चात्सादृश्ययोरपि'** इत्यभिधानम् । उरूणां महतां प्रभूणामपि प्रभू ॥ ३५ ॥ आपद् दुःखमप्रिययोगो वा, प्रियविरहो वा । मन्दकटाक्षः अपाङ्गलवः, केवलं मन्दकटाक्षो मन्दकटाक्षमात्रम् । जगाद चान्यत्र **'विश्वस्थितिप्रळयसर्गमहाविभूतिवृत्तिप्रकाशनियमावृतिबन्धमोक्षाः । यस्या अपाङ्गलवमात्रत ऊर्जिता सा श्रीः–'** इति । तस्मादेतद् विडम्बनमात्रं लीलानटनमात्रम् । **'डबि क्षेपे'** इति पठन्ति । अनुकारे च ॥ ३६ ॥ अथ लक्ष्मणनिर्गमनानन्तरम् । अविषह्यशक्तिरपि । दृश्या सत्येव रावणमवष्टब्धुं शक्ताऽपि । कैलासं प्रययौ । तत्र न्यवसच्च । यदि शक्ता तर्हि किमिति ययौ? शिवाभ्यामपेक्षितमर्चनं स्वीकर्तुम् । रामायणेऽनुक्तमेतत् । प्रमाणान्तरसिद्धम् । तथा हि कूर्मपुराणे–**'अथावसथ्याद् भगवान् हव्यवाहो महेश्वरः । आविरासीत् सुदीप्तात्मा तेजसा निर्दहन्निव । सृष्ट्वा मायामयीं सीतां स रावणवधेच्छया । सीतामादाय रामेष्टां पावकोऽन्तरधीयत'** [उ.३४.१२५–६] इति । हव्यवाहनान्तर्गतेन शिवेनैव सीतायाः प्रत्यर्पणं प्रतिकृतेः प्रत्यादानं च । तदेतत् महेश्वरपदेन पुराणे सूचितम् । सीताऽपि लोकमोहनाय शिवमेव प्रार्थयामासेति च पुरस्तादुक्तम्–**'प्रपद्ये शरणं**

१. **'–मात्रात् सर्गस्थितिप्रलय–'**

**तस्यास्तु तां प्रतिकृतिं प्रविवेश शक्रो देव्याश्च सन्निधियुतां व्यवहारसिद्ध्यै ।**
**आदाय तामथ ययौ रजनीचरेन्द्रो हत्वा जटायुषमुरुश्रमतो निरुद्धः ॥ ३८ ॥**

**मार्ग्गे व्रजन्तमभियाय ततो हनूमान् संवारितो रविसुतेन च जानमानः ।**
**दैवं तु कार्य्यमथ कीर्त्तिमभीप्समानो रामस्य नैनमहनद् वचनाद्धरेश्च ॥ ३९ ॥**

**'उरुश्रमतो निरुद्धः' इत्यनेन जटायुषो भक्त्यतिशय उक्तः ॥ ३८–९ ॥**

---

**रुद्रं महाग्रासं त्रिशूलिनम्'** [१२०] । ब्रह्मवैवर्ते च– **'सीतापहारकालोऽयं तवैव समुपस्थितः । मत्प्रसूं मयि सन्न्यस्य च्छायां रक्षान्तिकेऽधुना । दास्यामि सीतां तुभ्यं च परीक्षासमये पुनः । रामस्तद्वचनं श्रुत्वा न प्रकाश्य च लक्ष्मणम् । स्वच्छन्दं स्वीचकारासौ हृदयेन विदूयता । वह्निर्योगेन सीतावन्मायासीतां चकार ह । तत्तुल्यगुणरूपां तां ददौ रामाय नारद । सीतां गृहीत्वा स ययौ गोप्यं वक्तुं निषेध्य च । लक्ष्मणो नैव बुबुधे सीतामन्यस्य का कथा'** [प्र.खं.१४.३०–५] इति नारदं प्रति नारायणवचनम् । रावणवधानन्तरं च– **'तां च वह्निपरीक्षां वै कारयामास सत्वरम् । हुताशनस्तत्र काले वास्तवीं जानकीं ददौ'** [१४.४८] इति ॥ ३७ ॥ तां प्रतिकृतिं शक्रः प्रविवेश । न केवलं शक्रः । तेन सह शची च प्रविवेशेति च ब्रह्मवैवर्तादवगम्यते । अत इयं मायासीता पश्चात् पार्थपत्नी द्रौपदी बभूवेति सङ्गच्छते । तथाहि तद्वचनम्– **'तच्छाया द्रौपदी देवी द्वापरे द्रुपदात्मजा'** [१४.५४] इति च । देव्याश्च सन्निधियुताम् । **'अग्निहोत्रगतो वह्निस्तं ज्ञात्वा रावणोद्यमम् । आदाय सीतां पाताळे स्वाहायां सन्निवेश्य च । तेनैव रक्षसा स्पृष्टां पुरा वेदवतीं शुभाम् । अग्नौ विसृष्टदेहां तां संहर्तुं रावणं पुनः । सीताया रूपसदृशीं कृत्वा चैवोत्ससर्ज ह । सा रावणहृता भूत्वा लङ्कायां च निवेशिता । हते तु रावणे पश्चात् पुनरग्निं विवेश सा'** [स्कां.पु.५.२१–४] इत्यादि वेङ्कटाचलमाहात्म्ये । **'कृते युगे वेदवती कुशध्वजसुता शुभा । त्रेतायां रामपत्नी च सीतेति जनकात्मजा'** [प्र.खं.१४.५३] इति ब्रह्मवैवर्ते । रामायणे च–**'शप्तोऽहं वेदवत्या च यदा सा धर्षिता पुरा । सेयं सीता महाभागा जाता जनकनन्दिनी'** [यु.कां.६०.१०] इति । सर्वत्राप्यविरुद्धं ग्राह्यम् । अन्यदविरोधेन योज्यम् । उक्तं हि–**'व्यत्यासः प्रातिलोम्यं च'** इत्यादि । अर्वाचीनेऽध्यात्मरामायणेऽपि–**'रावणो भिक्षुरूपेण आगमिष्यति तेऽन्तिकम् । त्वं तु च्छायां त्वदाकारां स्थापयित्वोटजे विश । अग्नावदृश्यरूपेण वर्षं तिष्ठ ममाऽऽज्ञया । रावणस्य वधान्ते तु पूर्ववत् प्राप्स्यसे शुभे'** [अ.रा.अर.कां.७.२–३] इत्यादि रामवचनम् । अत्तीत्यग्निरिति रुद्रोऽप्यग्निरुच्यते । आदाय तामिति । **'भर्त्सयित्वा तु रूक्षेण स्वरेण गतचेतनाम् । मूर्धजेषु निजग्राह ऊर्ध्वमाचक्रमे ततः'** [व.प.२७९.४४] इति भारते । उरुश्रमतो जटायुषा निरुद्धस्तं उरुश्रमतः हत्वा क्षतविक्षतं कृत्वा । **'सखा दशरथस्याऽसीज्जटायुररुणात्मजः । गृध्रराजो महावीरः सम्पातिर्यस्य सोदरः'** [व.प.२८०.१] इति च ॥ ३८ ॥ अभियाय अभीयाय । अभियानं न शत्रुवधायेति अक्षरह्रासेन स्फोरयति । अथवा अभियाय अभ्येत्य । अभ्येत्यापि किं निववृते? किमिति नाहन् रावणम्? यतो रविसुतेन सुग्रीवेण समाधाय वारितः । स्थूलमेतत्, वास्तवं त्वन्यदेवेत्याह– दैवं तु । रामेण रावणो वध्य इति

**प्राप्यैव राक्षस उताऽऽत्मपुरीं स तत्र सीताकृतिं प्रतिनिधाय ररक्ष चाथ ।**
**रामोऽपि तत्तु विनिहत्य सुदुष्टरक्षः प्राप्याऽऽश्रमं स्वदयितां नहि पश्यतीव ॥ ४० ॥**

**अन्वेषमाण इव तं च ददर्श गृध्रं [1]सीतारिरक्षिषुमथो रिपुणा विशस्तम् ।**
**मन्दात्मचेष्टममुनोक्तमरेश्च कर्म्म श्रुत्वा मृतं तमदहत् स्वगतिं तथाऽदात् ॥ ४१ ॥**

**अन्यत्र चैव विचरन् सहितोऽनुजेन प्राप्तः करौ स सहसाऽथ [2]कवन्धनाम्नः ।**
**धातुर्वरादखिलजायिन उज्झितस्य मृत्योश्च वज्रपतनादतिकुञ्चितस्य ॥ ४२ ॥**

**(राक्षस उत) राक्षसश्च स्वपुरीं प्राप्य अथ ररक्ष ॥ ४० ॥ विशस्तं (ह)तम् ॥ ४१–२ ॥**

---

देवानामपेक्षितं कार्यविशेषं जानमानः । अक्षराधिक्येन तदेव स्वापेक्षितं चेति ध्वनयति । **'आधिक्येऽधिकम्'** इति सूत्रात् । तदेवाऽऽह– रामस्य कीर्तिमभीप्समानः । भगवद्यशःप्रथनार्थमेव हि स्वस्यावतारः । न केवलं स्वस्य देवानां च । हरेरप्यभीष्टमेतदित्यान्तरतमं कारणमाह– **'मयैव वध्यौ भवतम्'** इति जयविजययोराश्वासनरूपाद् वचनाद्धरेश्च । हरेरभीष्टत्वादेव स्वस्य देवानां चाभीष्टम् । अहन्नित्यर्थे अहनदित्यपि प्राचीनं रूपम् । लटि हनतीत्यपि । तद् यथा–**'वृत्रं हनति वृत्रहा'** ॥ ३९ ॥ राक्षस उत राक्षसोऽपि । प्राप्यैव प्राप्तिसमनन्तरमेव । तत्र आत्मपुर्यां लङ्कायाम् । प्रतिष्ठब्धां निधाय । अथेति प्रसङ्गान्तरारम्भे– अथ रामोऽपीति । तत्तु हरिणरूपेण कृतप्रतारणं ब्रह्मवरादवध्यमपि सुदुष्टरक्षः मारीचम् । नीचतातिशयद्योतनार्थं नपुंसकप्रयोगः । सकृच्छिक्षितमपि दौष्ट्यं न जहाविति सुदुष्टमित्याह । सदा सर्वं पश्यन्न पश्यतीव विडम्बयामास हि । रामायणेऽप्येतदुक्तम्– **'उन्मत्त इव लक्ष्यते'** [अर.कां. ६०.१०] इति । उन्मत्तवदात्मानं दर्शयामासेत्यर्थः ॥ ४० ॥ अन्वेषमाणः । एषृ गतौ । अथो तस्मादेव । सीतारक्षार्थं प्रयतनादेव । आत्मनि शरीरे मनसि च मन्दचेष्टम् । अमुना गृध्रेण जटायुषा । सीतापहाररूपं कर्म । स्वगतिम्, स्वस्य जटायुषः योग्यां गतिम् । स्वस्य विष्णोर्गतिं वैकुण्ठलोकं च । **'मया त्वं समनुज्ञातो गच्छ लोकाननुत्तमान्'** [अर.कां. ६८.३०] इति हि रामायणे । **'स्वपदं च ददौ तस्मै योगिगम्यं सनातनम्'** [उ.खं.२४२.२६५] इति, **'मुक्तिं प्राप खगोत्तमः'** [२६६] इति च पाद्मे ॥ ४१ ॥ अन्यत्रेति स्थलान्तरे । अथेति कथान्तरे । विचरन्नेव सीतार्थं निरन्तरं विविधस्थलेषु चरन् । छित्वाऽस्य बाहुयुगळं सहितोऽनुजेन । **'दक्षिणो दक्षिणं बाहुमसक्तमसिना ततः । चिच्छेद रामो वेगेन सव्यं धीरस्तु लक्ष्मणः'** [अ.कां.७०.९] इति वाल्मीकीये । **'छिन्ध्यस्य दक्षिणं बाहुं छिन्नः सव्यो महाभुजः'** [वन.२८०.३७] इति तु भारते । तदियं व्यत्यस्य कथनशैली । **'व्यत्यासः प्रातिलोम्यं च'** इति वक्ष्यति । यद्वा दक्षिणं प्रवृद्धम् । विततमित्येतत् । दक्षत इति दक्षिणम् । दक्ष वृद्धौ । सव्यमिति दक्षिणम् । **'सव्यं वामे च दक्षिणे'** इत्यभिधानम् । नाम्ना दनुम् । सम्प्रति रामायणे– **'पुत्रं दनोस्त्वं विद्धि'**

---

१. 'सीतां रिर–' २. 'कबन्ध–'

छित्वाऽस्य बाहुयुगळं[1] सहितोऽनुजेन तं पूर्ववत् प्रतिविधाय सुरेन्द्रभृत्यम् ।
नाम्ना दनुं त्रिजटयैव पुराऽभिजातं गन्धर्वमाशु च ततोऽपि तदर्च्चितोऽगात् ॥ ४३ ॥

दृष्ट्वा तमेव शबरी परमं हरिं च ज्ञात्वा विवेश दहनं पुरतोऽस्य तस्यै ।
प्रादात् स्वलोकमिममेव हि सा प्रतीक्ष्य पूर्वं मतङ्गवचनेन वनेऽत्रसाऽभूत् ॥ ४४ ॥

शापाद् वराप्सरसमेव हि तां विमुच्य[2] शच्या कृतात् पतिपुरस्त्वतिदर्प्पहेतोः[3] ।
गत्वा ददर्श पवनात्मजमृश्यमूके स ह्येक एनमवगच्छति सम्यगीशम् ॥ ४५ ॥

**अनुजेन सहितः छित्वेति । उभाभ्यां बाहुद्वयं छिन्नमिति भावः । पूर्ववत् प्रतिविधाय गन्धर्वं कृत्वेत्यर्थः । पुरा नाम्ना (दनुं) गन्धर्वम् । अत्र त्रिजटयाऽभिजातम् ॥ ४३ ॥ सा पूर्वं मतङ्गवचनेन रामागमनं प्रतीक्षस्वेति मतङ्गवचनेन, अत्रसा भयरहिता अभूदतिष्ठदिति योजना ॥ ४४–५ ॥**

---

[अर.कां.७१.७] इति पठ्यते । अपपाठोऽयम् । **'वाक्यं दनुरनुत्तमं प्रोवाच'** [अर.कां.७१.२६] इत्युत्तरवचन-विरोधात् । अपि च दनोः सुतो दानवः स्यान्न गन्धर्वः । गन्धर्वश्चायम् । अतः साधूक्तम्– **'त्रिजटयैव पुराऽभि-जातं गन्धर्वम्'** इति । तेनायं प्राचीनो रामायणपाठः सम्भाव्यते– **'त्रिजटायाश्च मां पुत्रं दनुं त्वं विद्धि लक्ष्मण'** इति । **'दनुर्नाम श्रियः पुत्रः शापाद् राक्षसतां गतः'** [कि.कां.४.१५] इति चोपरि । कवन्धः कबन्धः । कस्य शिरस उरसि वानादन्धः कवन्धः, रुण्डम् । जनानां कं सुखं बध्नाति निरुणद्धीति कबन्धः । शिरसा सम्बद्धश्च देहभागः कबन्धः । धातुर्वरात् । **'अहं हि तपसोग्रेण पितामहमतोषयम् । दीर्घमायुः स मे प्रादात्'** [अर.कां.७१.८] इति च । **'दीर्घमायुर्मया प्राप्तं किं मे शक्रः करिष्यति । इत्येवं बुद्धिमास्थाय रणे शक्रमधर्षयम् । तस्य बाहु-प्रमुक्तेन वज्रेण नतपर्वणा । सक्थिनी चैव मूर्धा च शरीरे सम्प्रवेशितम्'** [अर.कां.७१.९.१०] इति च । सक्थिनी च मूर्द्धा चेत्येतत्त्रयं शरीरे सम्प्रवेशितमित्यर्थः । प्रतिविधाय गन्धर्वपदे प्रतिष्ठितं विधाय ॥ ४२–४३ ॥ दृष्ट्वैव तम् । भगवदभिमतं गच्छत्यवगच्छतीति मतङ्गो मुनिः । प्रादात् स्वलोकम् । **'अनुज्ञाता तु रामेण हुत्वाऽत्मानं हुताशने । ज्वलत्पावकसङ्काशा स्वर्गमेव जगाम सा'** [७४.३३] इति च । एतेन **'स्वर्गं विष्णुलोकं जगाम'** इति विवृतं भवति । नहीन्द्रलोकमात्रप्राप्त्यर्थं रामदर्शनप्रतीक्षा करणीया । अथ चेन्द्रलोकगमनं च तस्या उप-पन्नम् । शापमोक्षे स्वस्थानस्थितिः किल सहजेत्युत्तरपद्येनाऽह । **'फलान्यास्वाद्य काकुस्त्थस्तस्यै मुक्तिं ददौ पराम्'** [उ.खं.२४२.२७०] इति पाद्मे । भगवद्वेदनादेव अत्रसा निर्भया । त्रसी उद्वेगे । उद्वेगो भयम् । सा स्त्रीवृन्दसारभूता सा शबरी अत्र वने दण्डकारण्येऽभूदिति वा ॥ ४४ ॥ शच्या कृताद् दत्तात् । विमुच्य मोक्षयित्वा । मुच्लृ मोक्षणे । एवमरण्यकाण्डकथां सङ्गृह्याथ किष्किन्धाकाण्डमुपस्थापयति– ददर्श पवनात्मजमिति । ऋश्यो गौरपादो

---

१. **'–युगलम्'** २. **'विमोच्य'** ३. **'–पुरस्त्विति दर्पहेतोः'**

देहेऽपि यत्र पवनोऽत्र हरिर्य्यतोऽसौ तत्रैव वायुरिति वेदवचः प्रसिद्धम् ।
कस्मिन् न्वहं त्विति तथैव हि सोऽवतारे तस्मात् स मारुतिकृते रविजं ररक्ष ॥ ४६ ॥

एवं स कृष्णतनुरर्ज्जुनमप्यरक्षद् भीमार्त्थमेव तदरिं रविजं निहत्य ।
पूर्वं हि मारुतिमवाप रवेः सुतोऽयं तेनास्य वालिनमहन् रघुपः प्रतीपम् ॥ ४७ ॥

एवं सुराश्च पवनस्य वशे यतोऽतः सुग्रीवमत्र तु परत्र च शक्रसूनुम् ।
सर्वे श्रिता हनुमतस्तदनुग्रहाय तत्रागमद् रघुपतिः सह लक्ष्मणेन ॥ ४८ ॥

'यत्पादपङ्कजरजः शिरसा बिभर्त्ति श्रीरब्जजश्च गिरिशः सह लोकपालैः' ।
सर्वेश्वरस्य परमस्य हि सर्वशक्तेः 'किं तस्य शत्रुहनने कपयः सहायाः' ॥ ४९ ॥

समागते तु राघवे प्लवङ्गमाः ससूर्य्यजाः ।
विपुप्लुवुर्भयार्दिता न्यवारयच्च मारुतिः ॥ ५० ॥

**इति (एतस्मिन् विषये) । कस्मिन् न्वहं त्विति, 'कस्मिन् न्वहमुत्क्रान्त उत्क्रान्तो भविष्यामि कस्मिन्नहं प्रतिष्ठिते प्रतिष्ठास्यामि' इत्यादि वेदवचः प्रसिद्धम् । स भगवानवतारे (तथैव अ)विभक्त एव हि ॥ ४६–७ ॥ (तदनुग्रहाय तत्) तस्मात् सर्वसुराश्रयत्वात् हनुमतोऽनुग्रहाय सुग्रीवपरित्राणलक्षणाय ॥ ४८–५० ॥**

---

मृगविशेषः । ऋषीणां तपोभङ्गभिया यत्र मूका ऋश्यास्तस्मिन् गिरौ ॥ ४५ ॥ यतोऽसौ यत्र हरिः । **'कस्मिन् न्वहमुत्क्रान्त उत्क्रान्तो भविष्यामि । कस्मिन् वा प्रतिष्ठिते प्रतिष्ठास्यामीति । स प्राणमसृजत'** [ष.उ.६.३] इति वेदवचः ॥ ४६ ॥ अस्य रविजस्य मारुतेश्च प्रतीपं प्रतिकूलम् ॥ ४७ ॥ परत्र भीमावतारे । तत् तस्मात् हनुमतोऽनुग्रहाय ॥ ४८ ॥ **'यत्पादपङ्कजरजः–'** [१०.६२.४२] इति भागवतवाक्येन स्ववचनं समयोजयद् भगवत्पादः स्वग्रन्थस्यापि पञ्चमवेदताज्ञापनार्थम् । दशमस्कन्धे द्विषष्टितमेऽध्याये नीलापरिणयप्रसङ्गे कोसलपतेर्नग्नजितो वचनमिदम् । **'यत्पादपङ्कजरजः शिरसा बिभर्ति श्रीरब्जजश्च गिरिशः सह लोकपालैः । लीलातनूः स्वकृतसेतुपरीप्सया यः काले दधत् स भगवान् स्वकृतेन तुष्येत्'** इति समग्रः श्लोकः । **'किं तस्य शत्रुहनने कपयः सहायाः'**[९.९.२०] इति च नवमे । **'नेदं यशो रघुपतेरिह विश्वमूर्तेर्लीलातनोरधिकशान्तविमुक्तधाम्नः । रक्षोवधो जलधिबन्धनमस्त्रपाणेः किं तस्य शत्रुहनने कपयः सहायाः'** इति समग्रं पद्यम् ॥ ४९ ॥ **'समागते तु राघवे'** इति प्लुतगत्याऽनुष्टुभा प्रमाणिकाख्यया कपीनां विप्लवोऽभिनीय दर्शित इव । अहो प्लवङ्गमा विप्लवङ्गमा जाता इत्यपहसति । **'नानारूप-**

संस्थाप्याऽऽशु हरीन्द्रान् जानन् विष्णोर्ग्गुणाननन्तान् सः ।
साक्षाद् ब्रह्मपिताऽसावित्येनेनास्य[१] पादयोः पेते ॥ ५१ ॥

**इति श्रीमदानन्दतीर्त्थभगवत्पादविरचिते**
**श्रीमहाभारततात्पर्य्यनिर्ण्णये**
**रामचरिते हनूमद्दर्शनं नाम**
**पञ्चमोऽद्ध्यायः**

—०—

[आदितः श्लोकाः– ४७०+५१=५२१]

**स हनुमान् विष्णोरनन्तान् गुणान् जानन्, असौ विष्णुः ब्रह्मपिता इति (च) जानन् यस्मात् एनेन एतेन कारणेन अस्य पादयोः पेत इत्यन्वयः । एवं सम्यङ्माहात्म्यज्ञानेन तत्पादौ प्रपन्न इति भावः ॥ ५१ ॥**

इति श्रीमहाभारततात्पर्यनिर्णयटीकायां
श्रीवेदाङ्गतीर्थभट्टारकविरचितायां तात्पर्यदीपिकायां
पञ्चमोऽध्यायः

—०—

धरावेतौ तापसं वेषमाश्रितौ । वालिदूताविह प्राप्ताविति निश्चित्य सूर्यजः । उत्पपात भयत्रस्त ऋश्यमूकाद् वनान्तरम् । वानरैः सहितः सर्वैरगस्त्याश्रममुत्तमम्' [५०.३–४] इति नारसिंहे ॥ ५० ॥ ब्रह्मपिताऽसाविति च जानन् । तेन साक्षात् स्वपिता चेत्येनेन हेतुना । पेते साष्टाङ्गं पपात । पादपतनफलं समग्रमात्मगामीत्यात्मनेपदम् ॥ ५१ ॥

आचार्यगोविन्दकृते
श्रीमद्भारततात्पर्यनिर्णयस्य ।
निर्णिक्ते व्याख्याने निर्णयभावचन्द्रिकाख्याने
प्रगतं पञ्चमाध्यायविवरणं सतां हृदयाभरणम् ॥ ✲ ॥

इत्याचार्यगोविन्दस्य कृतिषु
श्रीमहाभारततात्पर्यनिर्णयपञ्चिकायां निर्णयभावचन्द्रिकायां
पञ्चमोऽध्यायः

—०—

१. '–वित्येतेनास्य'

२२-१०-१२

# षष्ठोऽध्यायः

**[श्रीरामचरिते समुद्रतरणनिश्चयः]**

**ॐ ॥ उत्थाप्य चैनमरविन्ददलायताक्षश्चक्राङ्कितेन वरदेन कराम्बुजेन ।**
**कृत्वा च संविदमनेन नुतोऽस्य चांसं प्रीत्याऽऽरुरोह स हसन् सह लक्ष्मणेन ॥ १ ॥**

**आरोप्य चांसयुगळं[1] भगवन्तमेनं तस्यानुजं च हनुमान् प्रययौ कपीन्द्रम् ।**
**सख्यं चकार हुतभुक्प्रमुखे च तस्य रामेण शाश्वतनिजार्त्तिहरेण शीघ्रम् ॥ २ ॥**

**श्रुत्वाऽस्य दुःखमथ देववरः प्रतिज्ञां चक्रे स वालिनिधनाय हरीश्वरोऽपि ।**
**सीतानुमार्ग्गणकृतेऽथ स वालिनैव क्षिप्तां हि दुन्दुभितनुं समदर्शयच्च ॥ ३ ॥**

**ॐ ॥ संविदं सम्भाषणम् ॥ १–३ ॥**

---

ॐ ॥ अथ षष्ठेन समग्रां किष्किन्धाकाण्डकथामाह । अरविन्ददलायताक्ष इत्यनुग्रहातिशयमाह । चक्ररेखाङ्कितेन अभीष्टदानपटुना । मूलरूपे चक्रेण वरदमुद्रया चाङ्कितेन । कराम्बुजद्वयेन । **'संवित् स्त्रियां प्रतिज्ञायामाचारे ज्ञान-सङ्गरे । सम्भाषणे–'** इत्यभिधानम् । 'सह, सन्' इति, 'सः, हसन्' इति चात्र प्रतृण्णम् । सदैव सह सन्नपि सः, इदमप्यस्तु लीलानाटकमिति हसन् ॥ १ ॥ एनमिति । आ समन्तादिनं सर्वस्वामिनं च । प्रहृष्यन् ययौ । भगवान् रामो दृष्ट इति हर्षः । भगवन्तं वहन् यामीति प्रहर्षः । सुग्रीवोद्धरणकालः सन्निहित इति च प्रहर्षः । तस्य कपीन्द्रस्य सुग्रीवस्य । **'सुग्रीवस्यानुगो वीरो हनूमान् नाम वानरः । वायुपुत्रो महातेजा रामस्याऽसीत् प्रियः सदा'** [२१.३४] इति कौर्मे । निजस्य स्वस्य, हनुमत इत्यर्थः । संसारार्तिं शाश्वतं जहार । निजस्य सुग्रीवस्य च शाश्वतीमार्तिं हरिष्यति । हरति चायं सर्वेषां निजानां भक्तानामार्तिं संसाररूपाम् ॥ २ ॥ अथ हनुमता रामसुग्रीवयोः सख्यकरणानन्तरम्, अथ सख्यादेव हेतोः, अस्य सुग्रीवस्य जीवने निर्वृत्तां दुःखवार्तां तेनैवोक्तां

---

१. **'–युगलम्'**

**वीक्ष्यैव तां निपतितामथ रामदेवः सोऽङ्गुष्ठमात्रचलनादतिलीलयैव ।**
**सम्प्रास्य योजनशतेऽथ तयैव चोर्वीं सर्वां[1] विदार्य्य दितिजानहनद् रसास्थान् ॥ ४ ॥**

**रसास्थान् रसातळस्थान् ॥ ४ ॥**

---

श्रुत्वा, इच्छामात्रेण तदिष्टसम्पादनक्षमो देववरोऽपि स रामो लोकसङ्ग्रहार्थं प्राकृतवत् प्रतिज्ञां चक्रे । वालिनिधनाय वालिनं हन्तुम् । वालिनं हन्मीति प्रतिज्ञां चक्र इति यावत् । अथ हरीश्वरः सुग्रीवोऽपि सीतानुमार्गणकृते प्रतिज्ञां चक्रे । सीतारामयोः पुनःसमागमानुगुणं मार्गणमनुमार्गणम् । मार्ग अन्वेषणे । अथ प्रतिज्ञाकरणानन्तरमपि रामसामर्थ्ये सन्दिहानः स सुग्रीवः । रावणेनापह्रियमाणया सीतया क्षिप्तानामाभरणानां वीक्षणानन्तरमिति कथान्तरसूचकश्चाथशब्दः । वालिनैव हतस्य दुन्दुभिनाम्नोऽसुरस्य महिषरूपस्य तनुम् । **'महिषो दुन्दुभिर्नाम कैलासशिखरप्रभः । बलं नागसहस्रस्य धारयामास वीर्यवान्'** [कि.कां.११.७] इति वाल्मीकीये । यो वालिना हतः, यस्य च कायं वाली योजनदूरं चिक्षेप । **'चिक्षेप बलवान् वाली वेगेनैकं तु योजनम्'** [४७] इति च । दुन्दुभिरयं मयसुतः । मायावी चास्य पूर्वजः । मण्डोदरी चास्य स्वसा । **'मायावी नाम तेजस्वी पूर्वजो दुन्दुभेः सुतः'** [कि.कां.९.४] इति वाल्मीकीये । दुन्दुभेः पूर्वजः, मयस्य सुत इत्यर्थः । **'सुत इति भ्रातेत्यर्थः'** इत्यन्ये । **'हेमा नामाप्सरा तात श्रुतपूर्वा यदि त्वया'** [उ.कां.१२.६], **'इयं ममाऽत्मजा राजंस्तस्याः कुक्षौ विवर्धिता'** [१०], **'पुत्रद्वयं ममाप्यस्यां भार्यायां सम्बभूव ह । मायावी प्रथमस्तात दुन्दुभिस्तदनन्तरः'** [११-२] इति मयवचनं वाल्मीकीये । इयं ममाऽत्मजा मण्डोदरीत्यर्थः । समदर्शयत् रामसामर्थ्यसंवादायादर्शयत् । असीमसामर्थ्यकथनपूर्वकमदर्शयत्, प्रार्थयत च–**'एतस्य महिषस्यास्थि पादेनैकेन लक्ष्मण । उत्क्षिप्याथ प्रक्षिपेच्चेत्, तरसा द्वे धनुःशते'** [७२] तदा–**'वालिनं निहतं मन्ये दृष्ट्वा रामस्य विक्रमम्'** [७१] इति ॥ ३ ॥ अथ सुग्रीवस्य मनसि निलीनमविश्वासकीटमवगत्य । अथ दुन्दुभितनुदर्शनानन्तरमिति च । रामदेवः । दिवु क्रीडायाम् । क्रीडन् रामस्तां तनुं सम्प्रास्यत् । सुग्रीवस्य सम्प्रत्ययाय स्वसामर्थ्यं प्रकाशयितुमसनं सम्प्रासनम् । असु क्षेपणे । अथ सुग्रीवसान्त्वनानन्तरमपि, देवकार्यस्यावशिष्टत्वात् तत् सम्पिपादयिषन् दितिजान् रसास्थानहन् । अहनदित्यक्षराधिक्येन निःशेषहननमाह । तदेव चाथशब्देन सूचयामास–अथाहनत् । कार्त्स्न्येनाहन्निति । लोकमङ्गलं चेदं कर्मेत्याह । योजनशतमिते प्रदेशे । रामायणे सम्प्रति पठ्यते–**'राघवो दुन्दुभेः कायं पादाङ्गुष्ठेन लीलया । तोलयित्वा महाबाहुश्चिक्षेप दशयोजनम्'**[कि.कां.११.८४] इति । **'चिक्षेप शतयोजनम्'** इत्याचार्यसम्मतः पाठ इति भाति । दशेति शतार्थमिति वा वक्तव्यम् । युक्तं चैतत् । वाली यमेकयोजनं चिक्षेप तं दुन्दुभिदेहं शतयोजनं क्षिपन् रामः शताधिकबलो हन्तुं समर्थ इति लोकरीतिं दर्शयामासेव । सर्वामुर्वीं विदार्य । यद्यपि न सर्वाऽप्युर्वी विदीर्णा । तथाऽपीयं विदारणक्रिया भूकम्प इव सर्वामुर्वीं क्षोभयामासेति फलान्वयात् क्रियान्वयः । रसास्था इति भूमावेवान्तर्निलीय स्थिताः ॥ ४ ॥

---

१. **'सर्वान्'**

**शर्वप्रसादजबलाद् दितिजानवद्ध्यान् सर्वान् निहत्य कुणपेन पुनश्च सख्या ।**
**भीतेन वालिबलतः कथितः स्म सप्त सालान्[1] प्रदर्श्य दितिजान् सुदृढांश्च वज्रात् ॥ ५ ॥**

**एकैकमेषु स विकम्पयितुं समर्थः पत्राणि लोप्तुमपि तूत्सहते न शक्तः ।**
**विष्वक् स्थितान् यदि भवान् प्रतिभेस्त्यतीमानेकेषुणा तर्हि[2] वालिवधे समर्थः ॥ ६ ॥**

**जेतुं चतुर्ग्गुणबलो हि पुमान् प्रभुः स्याद्धन्तुं शताधिकबलोऽतिबलं सुशक्तः ।**
**तस्मादिमान् हरिहयात्मजबाह्वलोप्यपत्रान् विभिद्य मम संशयमाशु भिन्धि ॥ ७ ॥**

**दितिजान्, पूर्वमिति शेषः ॥ ५ ॥ एषु वृक्षेषु । लोप्तुं छेत्तुम् । विष्वक् परितः ॥ ६ ॥ अतिबलं जेतुं**

---

शर्वप्रसादजम्, नतु सहजम् । रामः कुणपेन रसास्थान् सर्वान् निहत्य । नीचलोकगमनाय हननं निहननम् । निभृतं च हननं निहननम् । यत् सुग्रीवोऽपि न बुबुधे । मा तामसा अपि ज्ञासिषुरिति वाल्मीकिरपि न जगाद । जगाद च भगवत्पादः–मा च सतामपि देवगुह्यमज्ञेयं भूदिति । क्वण्यते श्वापदैरिति कुणपः मृतशरीरम् । क्वण शब्दे । क्वणतेः कपन् प्रत्ययः सम्प्रसारणं चेति वैयाकरणाः । **'क्वणेः सम्प्रसारणं च'** [७.१०] इति दशपादिका । कपः प्रत्यय इति चाक्रवर्मणः । स्वरे प्रभेदः । **'कपश्चाक्रवर्मणस्य'** [११] इति च । आद्यपक्षे नित्त्वादाद्युदात्तः । कुणप इति । द्वितीये कुणप इत्यन्तोदात्तः । पुनश्च शुष्कस्य कुणपस्य निक्षेपमात्रेण कथं बले सम्प्रत्यय इति सन्दिहानेन, अत एव भीतेन सख्या सुग्रीवेण सप्त सालान् प्रदर्श्य, **'एकैकमेषु–'** इत्यादि **'संशयमाशु भिन्धि'** इत्यन्तं कथितः, तान् सालान् प्रविभेदेत्यन्वयः । सालः 'ಮತ್ತು' इति भाषायाम् । वृक्षसामान्यवचनं वा । **'पुंसि भूरुहमात्रेऽपि सालो वरणसर्जयोः'** इत्यभिधानम् । अयं सालस्ताल इत्यपि वदन्ति । प्रदर्श्य । **'अलं विमर्शेन मम प्रियं ध्रुवं कुरुष्व राजात्मज शापितो मया'** [९२] इति प्रणयेन प्रसादनपूर्वकं प्रश्रयेण दर्शयित्वा । वज्रादपि दृढाः कठोरा एव दुर्लभाः? किमुत सुदृढा अतिकठोराः । विक्रम्य कथञ्चित् कम्पयितुं समर्थः । पत्राणि लोप्तुमपि तूत्सहते न शक्तः । तथाहि रामायणे– **'यत्रैकं घटते वाली निष्पत्रयितुमोजसा'** [कि.कां.११.६७] इति । निष्पत्रयितुं घटते केवलम्, न प्रभवतीत्यर्थः । **'सपत्रनिष्पत्रादतिव्यथने'** [अ.सू.५.४.६१] इति सूत्रसम्मुग्धेन यत् केनचिदत्र प्रळपितं रामायणव्याख्याव्याजे ग्रन्थे– **'निष्पत्रयितुं अतिव्यथयितुम् । ननु केनातिव्यथयितुम्? बाणेन । कथं कपेर्बाणः? अप्राकृतकपित्वात्'** इति, तत् तस्यैव कपिचापलमसह्यमित्युपेक्ष्यम् । अपिचैवं व्याचक्षाणेन व्याकरणाशयोऽपि नावगतः । **'सपत्रनिष्पत्रशब्दाभ्यामतिव्यथनेऽर्थे गम्यमाने डाच् प्रत्ययो भवति कृञो योगे सति'** इति हि वैयाकरणा मन्यन्ते । नात्र कृञ् डाच् वा श्रूयते । कृञ्योग एव सपत्रनिष्पत्रशब्दाभ्यामतिव्यथनमर्थो गम्यत इति सम्प्रदायः । तेनातिव्यथनेऽर्थे निष्पत्रयतीति प्रयोगोऽसाधुरेव । विष्वक् विश्वतः वनमभिव्याप्य । प्रत्येकं सर्वेषां सकृद् भेदनं प्रतिभेदनम् । **'तर्हि'** इति विश्लेषेण रामसामर्थ्ये सन्दिहानः सकम्पमाहेत्यभिनीय दर्शयति ॥ ५–६ ॥ हन्तुं

---

१. **'कथितश्च सप्त तालान्'**

२. **'तर्हि'** इति विश्लिष्य पठनीयम् ।

श्रुत्वाऽस्य वाक्यमवमृश्य दितेः सुतांस्तान् धातुर्वरादखिलपुम्भिरभेद्यरूपान् ।
ब्रह्मत्वमाप्तुमचलं तपसि प्रवृत्तानेकेषुणा सपदि तान् प्रविभेद[1] रामः ॥ ८ ॥

सन्धाय कार्म्मुकवरे निशिते तु बाणेऽथाऽकृष्य दक्षिणभुजेन तदा प्रमुक्ते ।
रामेण सत्वरमनन्तबलेन सर्वे चूर्ण्णीकृताः सपदि ते तरवो रवेण ॥ ९ ॥

भित्त्वा च तान् सगिरि कुं भगवत्प्रमुक्तः [2]पाताळसप्तकमथात्र च ये त्ववद्ध्याः ।
नाम्नाऽसुराः कुमुदिनोऽब्जजवाक्यरक्षाः सर्वांश्च तानदहदाशु शरः स एकः ॥ १० ॥

**प्रभुः स्यात् । अतिबलं हन्तुं सुशक्तः स्यादिति सम्बन्धः । संशयं वालिवधशक्तिविषयसंशयम् ॥ ७ ॥ अवमृश्य ज्ञात्वा । अचलमिति क्रियाविशेषणम् ॥ ८–९ ॥ सगिरिकुं पर्वतसहितां धराम् ॥ १० ॥**

---

सुशक्तः सुखेन हन्तुं शक्तः । अन्यस्तु महता यत्नेन यथाकथाच हन्यादपि । विभिद्य विश्रब्धं भित्त्वा ॥ ७ ॥ अचलं ब्रह्मत्वमाप्तुम् । अचलं तपसि प्रवृत्तान् । अत एवाचलं वृक्षरूपं बिभ्रतः प्रविभेद यथा न पुनरङ्कुरिताः स्युः । प्रबिभेदेति वक्तव्ये प्रविभेदेत्याह । वबयोरभेदात् । अत्र कश्चिद् विवक्षाविशेषोऽप्यस्ति । क्षैप्रान्तादुपसर्गात् परस्य धातोरभ्यस्तपवर्गीयाक्षरस्य क्षैप्रादेशो विभाषा भवतीति– प्रबभूव, प्रवभूव, प्रबिभेद प्रविभेद । प्रबभाण, प्रवभाण । उदन्तस्य न भवति–प्रबुभुजे । तमेतं प्रयोगविशेषं ग्राहयन्नाचार्यः प्रविभेदेति प्रयुयोजेति भाति ॥ ८ ॥ निशिते तु बाणे । तुना बाणस्य मारुतात्मकत्वं नाम वैलक्षण्यमाह । उक्तं हि–**'पश्चात्मको मारुत एव बाणाः'** [३.७६] इति । कार्मुकवरे सन्धाय, अथ दक्षिणभुजेनाऽकृष्य, बाणे रामेण प्रमुक्ते । सुग्रीवप्रत्ययाय मुक्तेन एकेन बाणेन अमिता असुराः प्रमीता इति परममाङ्गलिकत्वमस्य प्रसङ्गस्याऽह अथेति । सतां पुनः प्रहर्षाय मुक्त इति प्रमुक्तः । असतां प्रमथनाय मुक्त इति च । बाणमोक्षणदक्षभुजेन रामेण, दक्षिणेन च भुजेन । सत्वरं मुक्ते सपदि चूर्णीकृताः । रवेण सह ॥ ९ ॥ सगिरि तान् भित्त्वा । गिरिणा सहिता कुरित्येकं पदं वा । पश्चभूतावरेति पापचरणस्थानमिति भूमिं कुरिति कुत्सयन्ति । ते यत्र गिरौ प्रवृद्धास्तेन गिरिणा सहेत्यर्थः। सहैव च कुं पृथिवीं पाताळसप्तकं च भित्त्वा । ननु कथं पाताळसप्तकम्? सप्तस्वेकं हि पाताळम् । सत्यम्, सप्तस्वेकं च पाताळम् । सप्त च पाताळनि । पतन्त्यत्रेति पाताळमिति निर्वचनसाम्याद् भूमेरधस्तना लोकाः पाताळानि । पततेरालञ् प्रत्यय इत्यळकारा वैकायकरणाः । पातस्य तळमाधारभूमिः पाताळमिति तु वयम् । **'भित्त्वा सालान् गिरिप्रस्थं सप्त भूमिं विवेश ह । प्रविष्टश्च मुहूर्तेन रसां भित्त्वा महाजवः । निष्पत्य च पुनस्तूर्णं स्वतूर्णी प्रविवेश ह'**[कि.कां.१२.३–४] इति रामायणे । **'येन सप्त महासाला गिरिर्भूमिश्च दारिताः । बाणेनैकेन काकुत्स्थ स्थाता ते को रणाग्रतः'** [१२.९] इति च । **'सप्तसालव्यधाकृष्टध्वस्तपाताळदानवः–'** [उ.खं.७१ २२२] इति पाद्मे सूचितेयं कथा ।

---

१. 'प्रबिभेद' २. 'पाताल–'

**नैतद् विचित्रममितोरुबलस्य विष्णोर्य्यत्प्रेरणात् सपवनस्य भवेत् प्रवृत्तिः ।**
**लोकस्य सप्रकृतिकस्य सरुद्रकालकर्म्मादिकस्य तदपीदमनन्यसाद्ध्यम् ॥ ११ ॥**

**दृष्ट्वा बलं भगवतोऽथ हरीश्वरोऽसावग्रे निधाय तमयात्[1] पुरमग्रजस्य ।**
**आश्रुत्य रावमनुजस्य बिलात् स चाऽगादभ्येनमाशु दयिताप्रतिवारितोऽपि ॥ १२ ॥**

**तन्मुष्टिभिः प्रतिहतः प्रययावशक्तः सुग्रीव आशु रघुपोऽपि हि धर्म्ममीक्षन् ।**
**नैनं जघान विदिताखिललोकचेष्टोऽप्येनं स आह युधि वां न मया विविक्तौ॥ १३ ॥**

**सरुद्रकालकर्मादिकस्येत्यत्र काल इति कालाभिमानी गरुडः । 'कालात्मकः सोऽथ सुपर्ण आसीत्' इति भगवत्पादैरेवोक्तत्वात् । कर्मेति कर्माभिमानी इन्द्रः । 'क्रियात्मा पाकशासनः' इत्युक्तत्वात् । तदपि तथाऽपि ॥ ११–१२ ॥ धर्ममीक्षन् धर्मं दर्शयन् ॥ १३ ॥**

---

नाम्ना कुमुदिनः । कुत्सितमोदिन इत्यर्थः ॥ १० ॥ प्रकृतिः प्रधानं तन्मानिनी श्रीश्च । प्रकृतेः कस्य पुरुषमानिनः चतुर्मुखस्य चेति वा । शरीरे पवनस्य विशेषप्रवृत्तिरिति तस्य पृथङ् निर्देशः । **'यस्मिन् स्थिते स्थास्यामि'** इत्यादिश्रवणात् । शेषो भविष्यन्निति रुद्रपदेन शेषोऽपि गृह्यते । काल इति कालात्मकः सुपर्णः, कर्मेति कर्मेन्द्रिय-मानी शक्रश्च । कालकर्मादीनामवान्तराभिमानिनश्च गृह्यन्ते । अभिमन्यमानानां कालकर्मादीनां सत्ता च । **'द्रव्यं कर्म च कालश्च'** इत्यादेः प्रकृतिब्रह्मवायुभ्योऽवरत्वं च रुद्रादीनां कनाऽऽह– कर्मादिकस्येति । यद्यपि स्वार्थे कन् भवति । तथाऽपि सम्भवति महार्थलाभे किमिति नार्थान्तरमनुसन्धीयते ॥ ११ ॥ अथ, परिष्वज्य रामोदितम्– **'क्षिप्रं गच्छ त्वमग्रतः । गत्वा चाऽह्वय सुग्रीव वालिनं भ्रातृगन्धिनम्'** [कि.कां.१२.१३] इति प्रोत्साहकं वचः श्रुत्वा च । भ्रातृगन्धिनं भ्रातृपीडकम् । गन्ध अर्दने । तं राममग्रे निधाय । पुरं किष्किन्धाम् । **'आरामगृहवापीभिः प्रासादायतनादिभिः । विश्वकर्मकृतैर्विश्वैर्विशेषैरुपशोभितम्'** [सं.रा;कि.कां.६.२३] इति पण्डिताचार्यवचनम् । **'सर्वे ते त्वरितं गत्वा किष्किन्धां वालिनः पुरीम् । वृक्षैरात्मानमावृत्य व्यतिष्ठन् गहने वने'** [१२] इति च । किङ्किमपूर्वं धत्त इति किष्किन्धा । प्रथमस्यानुस्वारस्य षादेषः । **'किष्किन्धा गुहा'** इति पारस्करप्रभृतिषु [अ.सू. ६.१.१५७] पठन्ति पाणिनीयाः । आश्रुत्य आश्चर्यवत् श्रुत्वा, आह्वानमिव श्रुत्वा अभ्यागात् ॥ १२ ॥ प्रतिहतः वारंवारं हतः । वीप्सायां प्रतिः । धर्ममीक्षन् स्वयं पश्यन् । अन्येषां च दर्शयन् । स्वस्य धर्मातीतत्वात् परस्मै-पदम् । एनं वालिनं न जघान । एनं सुग्रीवं स राम आह । वां युवाम् । युतौ वात इति युवाम् । इमौ तु सम्प्रति वियुताविति द्योतयितुं वामित्याह साकूतम् । अपि च युधि युवामिति वक्तव्ये युधि वामित्याह । सकृदुदितं 'यु' इत्यक्षरमुभयत्रापि संयुक्षीरन्नक्षरमुखा इति । व्यवधानेऽप्यक्षरयोजनं शास्त्रसिद्धम् । तद् यथा– नराशंसमिति

---

१. **'तमगात्'**

**सौभ्रात्रमेष यदि वाञ्छति वालिनैव नाहं निरागसमथाग्रजनिं हनिष्ये ।**
**दीर्घः सहोदरगतो न भवेद्धि कोपो दीर्घोऽपि कारणमृते विनिवर्त्तते च ॥ १४ ॥**

**कोपः सहोदरजने पुनरन्तकाले प्रायो निवृत्तिमुपगच्छति तापकश्च ।**
**एकस्य भङ्ग इति नैव झटित्यपास्तदोषो निहन्तुमिह योग्य इति स्म मेने ॥ १५ ॥**

**तस्मान्न बन्धुजनगे जनिते विरोधे कार्य्यो वधस्तदनुबन्धिभिराश्विवतीह[1] ।**
**धर्म्मं प्रदर्शयितुमेव रवेः सुतस्य भावी न ताप इति विच्च न तं जघान ॥ १६ ॥**

**यः प्रेरकः सकलशेमुषिसन्ततेश्च तस्याज्ञता कुत इहेशवरस्य विष्णोः ।**
**तेनोदितोऽथ सुदृढं पुनरागतेन वज्रोपमं शरममूमुचदिन्द्रसूनोः[2] ॥ १७ ॥**

**धर्ममीक्षन्नित्यत्र प्रकृतं धर्मस्वरूपं दर्शयति– सौभ्रात्रमित्यादिश्लोकत्रयेण । सौभ्रात्रं स्नेहम् । वालिनैवेत्यवधारणेन विरोधिनाऽपीत्यर्थः सूचितः । निरागसमपराधरहितम् । अथशब्दोऽप्यर्थः ॥ १४–१५ ॥ आशु अवि(चार्य) । इति (धर्मम्) ॥ १६ ॥ इह वालिसुग्रीवविवेकविषये । पुनरागतेन युद्धार्थमिति शेषः ॥ १७ ॥**

---

वक्तव्ये नरा वा शंसमित्याह । आद्यस्यान्त्यस्य वा ग्रहणे सर्वसङ्ग्रहश्च शास्त्रसिद्धः । अथ वां युधि युवयोर्युद्धे युवां न मया विविच्य ज्ञाताविति च शक्यं व्याख्यातुम् । एवं बहवोऽत्र विवक्षाविशेषा भवन्ति । विविक्तौ– विचिर् पृथग्भावे ॥ १३ ॥ य इदानीं भ्रातृव्यः सञ्जातस्तेन वालिनैव सहजत्वाद्यदि सौभ्रात्रमिच्छति । स्नेहमयं भ्रातृभावम् । अथ तस्मादेव सौभ्रात्रात् । पत्नीहरणेन भ्रात्रे कृतागसम्, अथापि स्वभावतो निरागसम् । न हनिष्ये । आत्मलाभार्थं न हनिष्यामि । आत्मलाभार्थं निरागसो न हन्तव्या इति लोकान् शिक्षयितुमित्यर्थः । नहि भगवतः कश्चन स्वात्मलाभो नाम । वक्ष्यति हि स्वयमेव–**'धर्मं प्रदर्शयितुमेव'** इति । तेनास्वाङ्गकर्मकस्यापि अनाङ्पूर्वस्यापि हन्तेर्युक्तामात्मनेपदमाशयविशेषविवक्षयेत्याचार्याशयः । **'आजघ्ने विषमविलोचनस्य वक्षः'** इति भारविः ॥ १४ ॥ एकस्य भङ्गो नाशः अपरस्य तापकश्च भवति इत्यतः स्वभावतोऽपास्तदोषो वाली नेह झटिति निहन्तुं योग्य इति मेने । कः? यः सदाऽप्यपास्तसर्वदोषो भगवान् ॥ १५ ॥ इह भ्रात्रोर्विरोधविषये लोकधर्मं प्रदर्शयितुमेव । ननु सुग्रीवस्य तापः स्यादिति शङ्कया । यतः भावी न ताप इति वेत्ति सः । तस्माद् विदन्नपि लोकशिक्षार्थमेव न जघान । एवमहननेनापि न तस्य तापो भावी, यतः परस्ताद् घानिष्यते स इति भाविकार्यं जानन्नपि न तं जघान ॥ १६ ॥ शेमुषीणां सन्ततिः । **'ङ्यापोः सञ्ज्ञाछन्दसोर्बहुलम्'** [अ.सू.६.३.६३] इति

---

१. '–श्विवतीव।' २. '–दिन्द्रसूनौ'

**रामाज्ञयैव लतया रविजे विभक्ते वायोः सुतेन रघुपेण शरे च मुक्ते[१] ।**
**श्रुत्वाऽस्य शब्दमतुलं हृदि तेन विद्ध इन्द्रात्मजो गिरिरिवापतदाशु सन्नः ॥ १८ ॥**

**लतयेति पुष्पस्रजेति भावः । अस्य शरस्य । तेन शरेण । सन्नः मूर्छितः ॥ १८–१९ ॥**

ह्रस्वः समासान्तः । अथवा शेमुषीसन्ततेरित्येव पदपाठः । सकलजीवानां शेमुषीसन्ततिः भगवत्प्रज्ञायाः पुरः अत्यल्पेति द्योतयितुं संहितायां ह्रस्वः । इह सुग्रीवशेमुषीविषये । ईश्वरपदं निर्वदन्नाह– ईशवरस्य । अथेति कथान्तरारम्भे । सकृत्पराभवानन्तरं पुनरागतेनेति च । अथ पुनरागतेन सुग्रीवेण 'इदानीं पुनर्वाली हन्तव्य एव' इति सुदृढमुदितो रामः । दृढमिति नियतम् । सुदृढमिति विनाऽपवादम् । इन्द्रसूनोरुपरि ॥ १७ ॥ ननु कथं वायोः सुतेन? लक्ष्मणेन हि गजपुष्पीलता सुग्रीवकण्ठे न्यस्ता । तथाहि वाल्मीकिराह– **'गजपुष्पीमिमां फुल्लामुत्पाट्य शुभलक्षणाम् । कुरु लक्ष्मण कण्ठेऽस्य सुग्रीवस्य महात्मनः'**[कि.कां.१२.३९] इति, **'लक्ष्मणो गजपुष्पीं तां तस्य कण्ठे व्यसर्जयत्'** [१२.३०] इति, **'कृताभिज्ञानचिह्नस्त्वमनया गजसाह्वया । लक्ष्मणेन समुत्पाट्य यैषा कण्ठे कृता तव'**[१४.८] इति च । न भोः । बहुग्रन्थद्रष्टाऽऽचार्यः सर्वाविरोधायैवमाह– **'वायोः सुतेन लतया रविजे विभक्ते'** इति । तथाहि भारते– **'न विशेषस्तयोर्युद्धे यदा कश्चन दृश्यते । सुग्रीवस्य तदा मालां हनुमान् कण्ठ आसजत्'** [व.प.२८१.३४] इति । तर्हि वाल्मीकिवचनस्य का गतिः? नात्र कोऽपि विरोधः । हनुमानिति निरवकाशम् । लक्ष्मणेनेति सावकाशम् । निरवकाशानुगुणं सावकाशं व्याख्येयमिति शास्त्रनियमः । लक्ष्मीवान् हि लक्ष्मण उच्यते । तेनोभावपि लक्ष्मणौ भवतः । वायोः सुतोऽपि, रामानुजोऽपि । **'रामभ्रातरि पुंसि स्यात् सश्रीके चाभिधेयवत्'** इति चाभिदधति । एवं सन्दिग्धमेव प्रयुञ्जते परोक्षप्रिया ऋषयोऽपि । निर्णिनाय चाऽचार्य-स्तत्वबुभुत्सुषु वात्सल्यातिशयात्–'लक्ष्मणेन वायोः सुतेन' इति । दिव्यलक्षणसम्पन्नेन हनुमतेत्येतत् । स्कान्दे पुनरन्यथैवोच्यते–**'ततो रामो महाबाहुः सुग्रीवस्य शिरोधरे । लतामाबद्धय चिह्नं तु युद्धायाचोदयत् तदा'** [ब्र.खं. २.२१] इति । हनुमद्द्वारा आबद्धयेत्यर्थः । एवं दुर्गमाः शास्त्रमार्गा भवन्ति । 'श्रुत्वा विद्धः' श्रवणसमकालं विद्ध इत्यर्थः । तेन शरस्य वेगातिशयमाह । सन्नः विषण्णः विशीर्णगात्रश्च । नन्वथापि शङ्काशङ्कुर्बाधते । इन्द्रदत्तां काञ्चनमालां सदा धारयति स्म वाली । तेनैव शक्यं वालिज्ञानम् । यो माली स वाली, अपरः सुग्रीव इति । यया धृतया वाली पुरःस्थितस्य प्रत्यर्थिनः सारसर्वस्वमाजहारेति, अत एव तं रामः प्रच्छन्नः सञ्जहारेति वृथा कथा ववृधे । यं मोहमपोहितुं भगवानाचार्योऽपि श्लोकमेकमत्र जग्रन्थ–**'यः प्रेरकः सकललोकबलस्य–'** [२१] इति । तत् किमनेन गजपुष्प्या द्राविडप्राणायामेनेति । अत्र केचिदाहुः–तदानीं वाली तां मालामधृत्वैवाऽजगामेति । चिन्त्यमेतत् । गमकाभावात् । मालां धृत्वैवाऽजगामेत्यत्र गमकसद्भावाच्च । तथाहि भारते– **'हेममाली ततो वाली तारां ताराधिपाननाम् । प्रोवाच वचनं वाग्मी तां वानरपतिः पतिः'** [व.प.२८१.१९] इति । स्फुटवचनाच्च सङ्ग्रह-रामायणे–**'उक्त्वेति मोहमापेदे वाली प्राणान् न मुक्तवान् । इन्द्रदत्तां दधन्मालां काञ्चनीं मृतिनाशनीम्'** [कि.कां.-

१. **'शरे प्रमुक्ते'**

भक्तो ममैष यदि मामभिपश्यतीह
पादौ ध्रुवं मम समेष्यति निर्विचारः ।
योग्यो वधो नहि जनस्य पदानतस्य
राज्यार्थिना रविसुतेन वधोऽर्थितश्च ॥ १९ ॥

कार्य्यं ह्यभीष्टमपि तत् प्रणतस्य पूर्वं शस्तो वधो न पदयोः प्रणतस्य चैव ।
तस्माददृश्यतनुरेव निहन्मि शक्रपुत्रं त्वितीह तमदृष्टतया[1] जघान ॥ २० ॥

यः प्रेरकः सकललोकबलस्य नित्यं पूर्णाव्ययोच्चबलवीर्य्यतनुः स्वतन्त्रः ।
किं तस्य दृष्टिपथगस्य च वानरोऽयं [2]कर्त्तैशचापमपि येन पुरा विभग्नम् ॥ २१ ॥

सन्नेऽथ वालिनि जगाम च तस्य पार्श्वं प्राहैनमार्द्रवचसा यदि वाञ्छसि त्वम् ।
उज्जीवयिष्य इति नैच्छदसौ त्वदग्रे को नाम नेच्छति मृतिं पुरुषोत्तमेति ॥ २२ ॥

**एवमपि प्रण(तवधस्य) गर्हितत्वे(ऽपि), प्रणतस्यावध्यत्वेऽपीत्यर्थः । पदयोः प्रणतस्य वधो नैव शस्तो यस्मात् तस्मादेवादृश्यतनुरिति सम्बन्धः ॥ २० ॥ वालिदर्शने स्वबलं तमुपैतीति भिया अदृश्यतनुर्जघानेति मोहं सोपपत्तिकं परिहरति– यः प्रेरक इत्यादिना ॥ २१ ॥ इति वदन् नैच्छदित्यन्वयः ॥ २२ ॥**

---

४.४८] इति । **'इयं च माला भवता सुग्रीवाय प्रदीयताम् । प्रोच्येति मालामुन्मुच्य रामपादारविन्दयोः । सम्यगर्पितवान् वाली स्वात्मानं चाऽत्मवित्तमः'** [७७] इति च । तर्हि का गतिः? इयमत्र गतिः । सुग्रीवोऽपि काञ्चनमालां बभार । किन्तु लौकिकी सा, नेन्द्रदत्ता । तस्मादुभयोरपि मालयोः काञ्चनमयत्वात् समानरूपत्वाच्च न ताभ्यां विशेषज्ञानमिति युक्तं हनुमता गजपुष्पीक्षेपणमिति ॥ १८ ॥ इह अभिमुखे पुरत एव स्थितं पश्यति । समेष्यति शरणमेष्यति ॥ १९ ॥ प्रणतस्य च वधो न शस्त एव इत्यालोच्येव तमदृष्टतया स्थितो जघान ॥ २० ॥ पूर्णं स्वरूपतोऽनन्तम् । अव्ययं कालतोऽनन्तम् । उच्चं सर्वाधिकत्वादद्वितीयम् । दृष्टिपथगस्य च । चकारेणेन्द्रदत्तविजयमालां बिभ्रच्च । ईशस्येदमैशं चापम् । विभग्नं द्विधा विश्लिष्य भग्नम् ॥ २१ ॥ करुणार्द्रवचसा । उज्जीवयिष्ये । आत्मगतमनुकम्पातिशयमात्मनेभाषयाऽऽह । त्वदग्रे–**'त्वत्तोऽहं वधमाकाङ्क्षन् वार्यमाणोऽपि तारया । सुग्रीवेण सह भ्रात्रा द्वन्द्वयुद्धमुपागतः'** [वा.रा;किं.कां.१८.५८] इति च ॥ २२ ॥

---

१. **'त्विति स्म तमदृश्यतया'** २. **'कर्तेशचापमपि येन पुरा प्रभग्नम्'**

काय्र्याणि तस्य चरमाणि विधाय पुत्रं त्वग्रे निधाय रविजः कपिराज्य आसीत् ।
रामोऽपि तद्गिरिवरे चतुरोऽथ मासान् दृष्ट्वा घनागममुवास सलक्ष्मणोऽसौ ॥ २३ ॥

अथातिसक्ते क्षितिपे कपीनां प्रविस्मृते रामकृतोपकारे ।
प्रसह्य तं बुद्धिमतां वरिष्ठो रामाङ्घ्रिभक्तो हनुमानुवाच ॥ २४ ॥

न विस्मृतिस्ते रघुवर्य्यकार्य्ये कार्य्या कथञ्चित् स हि नोऽभिपूज्यः ।
न चेत् स्वयं कर्त्तुमभीष्टमद्य ते ध्रुवं बलेनापि हि कारयामि ॥ २५ ॥

स एवमुक्त्वा हरिराजसन्निधौ द्वीपेषु सप्तस्वपि वानरान् प्रति ।
[1]सम्मेळनायाऽशुगतीन् स्म वानरान् प्रस्थापयामास समस्तशः प्रभुः ॥ २६ ॥

हरीश्वराज्ञाप्रणिधानपूर्वकं हनूमता ते प्रहिता हि वानराः ।
समस्तशैलद्रुमषण्डसंस्थितान् हरीन् समादाय तदाऽभिजग्मुः ॥ २७ ॥

**पुत्रमङ्गदम् । अथानन्तरम् । गिरिवरे (माल्यवति) । घनागमं वर्षर्तुम् ॥ २३–२५ ॥ सप्तसु द्वीपेषु स्थितान् समस्तशः वानरान् प्रति (प्रस्थापयामास) इति वाक्यभङ्गः ॥ २६ ॥ द्रुमषण्डेषु वनेषु ॥ २७–३४ ॥**

---

तस्य वालिनः । पुत्रमङ्गदमग्रे निधाय तन्मुखेन तस्य पितुः कार्याणि विधाय । एवं तमङ्गदमग्रे यौवराज्ये निधाय स्वयं कपिराज्ये राजाऽसीत् । गिरिवरे माल्यवन्नामके– **'माल्यवत्कन्दरे देवो दिव्यकन्दफलाशनः । अनुकूलजलाधारे सानन्दं सानुजोऽवसत्'** [सं.रा;कि.कां.५.४०] इति पण्डिताचार्यः ॥ २३ ॥ स्त्रीभोगलोलुपतया प्रमादेन विस्मृते । प्रसह्य बलात् तं भर्त्सयित्वा ॥ २४ ॥ अभित उभयतः । इह च परत्र च श्रेयसे ॥ २५ ॥ द्वीपेषु स्थितान् वानरान् प्रति समस्तशः सर्वास्वपि दिक्षु । समस्तशः समस्तानां सम्मेळनाय वा । समस्तानां कपीनां, जीवानां वा प्रभुः प्रभञ्जन इति वा । समस्तशः गिरिगुहावृक्षेभ्यः प्रस्थापयामासेति वा । कथमेते सप्तभ्यो द्वीपेभ्य आगताः, ये लङ्कायाः शतयोजनमध्वानं लङ्घयितुमप्रभवः? अस्त्यत्र तात्पर्यविशेषः– सर्वे कपयो देवांशसम्भवा अपि क्वचित्क्वचिदपारेऽकूपारे प्लवमानाः, प्लवनजनितश्रमाः क्वचित्क्वचित् पवनप्रेङ्खोलिते वियति समुत्पतन्तः किष्किन्धामभ्याजग्मुः । नाऽञ्जनेय इव सकृदुत्पतनेन डयमाना महान्तमध्वानमञ्जसाऽतीयुरिति । प्रस्थापयामास । समेषामेकत्र मेलनं सम्मेळनम् । संयोगे मेलनस्य लो ळः ॥ २६ ॥ आज्ञायाः प्रणिधानमुद्धरणम् । निवेदनं वा । सङ्गतानामानयनं समादानम् । अभिजग्मुः किष्किन्धाभिमुखमाजग्मुः ॥ २७ ॥

---

१. **'सम्मेलना–'**

**तदैव रामोऽपि हि भोगसक्तं प्रमत्तमालक्ष्य कपीश्वरं प्रभुः ।**
**जगाद सौमित्रिमिदं वचो मे प्लवङ्गमेशाय वदाऽशु याहि ॥ २८ ॥**

**यदि प्रमत्तोऽसि मदीयकार्य्ये नयाम्यहं त्वेन्द्रसुतस्य मार्ग्गम् ।**
**प्रायः स्वकार्य्ये प्रतिपादिते हि मदोद्धता न प्रतिकर्त्तुमीशते ॥ २९ ॥**

**इतीड्यरामेण समीरिते तदा ययौ सबाणः सधनुः स लक्ष्मणः ।**
**दृष्ट्वैव तं तेन सहैव तापनिर्भयाद् ययौ रामपदान्तिकं त्वरन् ॥ ३० ॥**

**हनूमतः साधुवचोभिराशु प्रसन्नचेतस्यधिपे कपीनाम् ।**
**समागते सर्वहरिप्रवीरैः सहैव तं वीक्ष्य ननन्द राघवः ॥ ३१ ॥**

**ससम्भ्रमं तं पतितं पदाब्जयोस्त्वरन् समुत्थाप्य समाश्लिषत् प्रभुः ।**
**स चोपविष्टो जगदीशसन्निधौ तदाज्ञयैवाऽदिशदाशु वानरान् ॥ ३२ ॥**

---

प्रमत्तं प्रमादिनम्, स्त्रीभोगपानादिव्यसनैः प्रकर्षेण मत्तं च मदोद्धतं च । आलक्ष्य ईषदिव लक्षयित्वा ॥ २८ ॥ यदि प्रमत्तः । **'न स सङ्कुचितः पन्था येन वाली हतो गतः । समये तिष्ठ सुग्रीव मा वालिपथमन्वगाः'** [कि.कां. ३०.८१] इति च । प्रतिपादिते सामस्त्येन सम्पादिते सति । प्रतिकर्तुं प्रत्युपकर्तुम्, नेशते न प्रभवन्ति । नेच्छन्तीति पर्यवसितम् । इयं हि लोकरीतिः ॥ २९ ॥ सधनुः । धनुषः प्रायः षष्ठीयोग एव **'धनुषश्च'** [अ.सू.५.४.१३२] इति बहुव्रीहावनङादेशः । शोभनं धनुरस्येति सुधन्वा । नतु सहार्थयोगे । धनुषा धनुना वा सह वर्तत इति सधनुः । तापनिस्तपनतनयः सुग्रीवः । त्वरन् । सर्वमपि लोकहितरक्षणफलमिति परस्मैभाषा ॥ ३०–३१ ॥ त्वरन् समुत्था-प्येति भक्तपारवश्यं परस्मैभाषार्थः । द्वाभ्यां कराभ्यां सङ्गृह्य प्रीतिपूर्वमुत्थापनं समुत्थापनम् । समाश्लिषत् । यद्यपि **'श्लिष आलिङ्गने'** [अ.सू.३.१.४६] इत्यङमपोद्य क्सः विहितः । तेनाऽलिङ्गनार्थे **'समाश्लिक्षत्'** इति रूपमिति पाणिनीयाः । आलिङ्गनं चात्र विवक्षितोऽर्थः । अथापि समाश्लिषदित्याह । तेनैतज्ज्ञापयत्याचार्यः–आलिङ्गन एव क्स इति नियमः । नत्वालिङ्गने क्स एवेति । अपिचाऽलिङ्गनमानन्दविशेषाय भवति । तदेतत् क्सेनोच्यते–**'कन्यां दृढं समाश्लिक्षद् युवा'** इति । नहि भगवति कश्चनालिङ्गनेन विकार इति सूचयितुं च **'समाश्लिषत्'** इत्ये-वाऽह । अपिचाक्षरलोपेन समाश्लेषस्य किञ्चिदिव न्यूनतामाह, विस्मरणेन कृतापराधत्वात् । अथाप्य-नुग्रहपूर्णोऽयमाश्लेष इति समाश्लेष एव ॥ ३२–३३ ॥

**समस्तदिक्षु प्रहितेषु तेन प्रभुर्हनूमन्तमिदं बभाषे ।**
**न कश्चिदीशस्त्वदृतेऽस्ति साधने समस्तकार्य्यप्रवरस्य मेऽस्य ॥ ३३ ॥**

**अतस्त्वमेव प्रति याहि दक्षिणां दिशं समादाय मदङ्गुलीयकम् ।**
**इतीरितोऽसौ पुरुषोत्तमेन ययौ दिशं तां युवराजयुक्तः ॥ ३४ ॥**

**समस्तदिक्षु प्रतियापिता हि ते हरीश्वराज्ञामुपधार्य्य मासतः ।**
**समाययुस्तेऽङ्गदजाम्बवन्मुखाः सुतेन वायोः सहिता न चाऽययुः ॥ ३५ ॥**

**समस्तदुर्ग्गप्रवरे दुरासदं विमार्ग्गतां विन्ध्यगिरिं महात्मनाम् ।**
**गतः स कालो हरिराडुदीरितः समासदंश्चाथ बिलं महाद्भुतम् ॥ ३६ ॥**

**उपधार्य अवधार्य । मासतः प्रागिति शेषः । नचाऽययुः नैवाऽययुः ॥ ३५ ॥ विन्ध्यगिरिम्, प्राप्येति शेषः ॥ ३६ ॥**

---

दक्षिणां दिशं प्रति याहि । त्वमेव मम प्रतिनिधिर्भूत्वा याहीति च । युवराजेन अङ्गदेन युक्तः । एतेन–**'अथाङ्गदं पुरस्कृत्य ये गता वानरोत्तमाः'** [न.पु.५०.१३७] इति पुराणवचनं विवृतम् । वस्तुतो हनुमानेव पुरोगः । अथापि लोकदृष्ट्या युक्तमङ्गदस्य यूथनेतृताव्यवहारो युवराजत्वादिति ॥ ३४ ॥ अयमस्यां दिशि, अयमस्यामिति प्रत्येकं विभज्य यापिताः । उपधार्य सबहुमानं शिरसि धृत्वा । दक्षिणां दिशं विनाऽन्यसमस्तदिक्षु प्रतियापितास्ते वानराः मासतः निर्दिष्टे मासकाल एव, मासस्यान्तरेवेति यावत्, स्वकार्यं सम्पूर्याऽययुः । अथ ये वायोः सुतेन सहिता गतास्त एव नाऽययुः ॥ ३५ ॥ समस्तदुर्गप्रवरेषु दुरासदं विन्ध्यगिरिं सीतार्थं विमार्गताम् । मार्ग अन्वेषणे । मार्गयति । मार्गति । देशतः कालतश्चात्यन्तसंयोग उपसगार्थः । ननु किष्किन्धायां कपयोऽवात्सुः । तत उत्तरो हि विन्ध्यः । तत् किं दिगन्तरभ्रमेण ते विन्ध्यमासेदुः? ममार्गुश्च? अत्र विवदन्ते विदन्तः । मेरुं मर्यादीकृत्य दिग्व्यवस्थेत्येकः पक्षः । तेन मेरोर्दक्षिणभागः समग्रं भारतं तेषां मार्गणक्षेत्रम् । यत्र सीतामपाहार्षीद् रावणस्तमाश्रमं केन्द्रीकृत्य दिग्व्यवस्थेत्यपरः पक्षः । नायमगस्त्यप्रतिस्तब्धो विन्ध्यः । किन्तु पश्चिमघट्टस्यैवायमेकः कूट इति तृतीयः पन्थाः । वस्तुतस्तु भारतमध्यगो विन्ध्य एवात्र विवक्षितो विन्ध्य इति सूक्तम् । लोकोऽपि हि तथा व्यवहरति । विन्ध्यादुत्तरमुत्तरभारतमिति । दक्षिणं दक्षिणभारतमिति । उत्तरं भारतं पुनस्त्रेधा विभज्यते । मध्यभागः पूर्वभागः पश्चिमभाग इति । प्राग्ज्योतिषादिः पूर्वभागः । गान्धारादिः पश्चिमभागः । ततो यथासम्भवं खण्डान्तरगमनं द्वीपान्तरगमनं च । यथा दक्षिणभारते सीतामनुपलभ्य लङ्कां नाम द्वीपान्तरं जगाम हनुमान् । तत आर्यावर्ताद् दक्षिणो भागस्तेषामन्वेषणक्षेत्रमिति तत एव सीतामार्गणमारभन्तेति वदन्ति । तथाहि श्रूयते रामायण एव–

**कृतं मयेनातिविचित्रमुत्तमं समीक्ष्य तत् तार उवाच चाङ्गदम् ।**
**वयं न यामो हरिराजसन्निधिं विलङ्घितो नः समयो यतोऽस्य ॥ ३७ ॥**

**दुरासदोऽसावतिचण्डशासनो हनिष्यति त्वामपि किं मदादिकान् ।**
**अगम्यमेतद् बिलमाप्य तत् सुखं वसाम सर्वे किमसाविहाऽचरेत् ॥ ३८ ॥**

**नचैव रामेण सलक्ष्मणेन प्रयोजनं नो वनचारिणां सदा ।**
**नचेह नः पीडयितुं स च क्षमस्ततो ममेयं सुविनिश्चिता मतिः ॥ ३९ ॥**

**इतीरितं मातुलवाक्यमाशु स आददे वालिसुतोऽपि सादरम् ।**
**उवाच वाक्यं च न नो हरीश्वरः क्षमी भवेल्लङ्घितशासनानाम् ॥ ४० ॥**

**राज्यार्थिना येन हि घातितोऽग्रजो हृताश्च दाराः सुनृशंसकेन ।**
**स नः कथं [१]रक्ष्यति शासनातिगान् निराश्रयान् दुर्बलकान् बले स्थितः ॥ ४१ ॥**

**समयः (मासतः प्रागागन्तव्यमिति समयः) ॥ ३७–४३ ॥**

---

**'विन्ध्यमेवाऽदितः कृत्वा विचेरुस्ते ततस्ततः'** [कि.कां.४९.२२] इति । गतः गतप्रायः । अथ बिलम् । **'दुर्गमृक्षबिलं नाम दानवेनाभिरक्षितम्'** [कि.कां.५०.७] इति च । दानवेन मयेन ॥ ३६ ॥ तदेवाऽह–कृतं मयेन । मयस्य शिल्पकौशलेनातिविचित्रम्, काञ्चनैर्विमानैः, तपनीयगवाक्षैः, मणिकाञ्चनचित्रैः शयनासनैः, महार्घैर्यानैः, हैमराजतैर्भाजनैः, दिव्यैश्चाम्बरैः । सहजवैचित्र्यं पूर्वमुक्तम्–महान्ति प्राकृतिकानि अद्भुतानि यत्र तन्महाद्भुतमिति । कानि तानि? हिरण्मयाः पादपाः, काञ्चनानि पद्मानि, जातरूपमया मत्स्या इत्यादीनि । विपदस्तारयति सुहृद इति तारः । स्वयं तरति वा विपज्जलधिम् । अरीणामङ्गं द्यतीत्यङ्गदः । दो अवखण्डने । सुहृदामङ्गं दयते वा । देङ् रक्षणे । समयो नियमबन्धः मासावधिः कालश्च ॥ ३७ ॥ लङ्घितशासनैः दुरासदः दुष्प्रापः । हनिष्यति हिंसिष्यति । **'कर्तनं वा करिष्यामि अन्यथा कर्णनासयोः'** [५०.१२४] इति नारसिंहे कपीन् प्रति सुग्रीववचनम् ॥ ३८ ॥ न केवलं सुग्रीवः । स च रामोऽपि । नचेत्यवधारणे । नैव क्षमः । गते हनिष्यति, अतो न गन्तव्यमिति निश्चिता मतिः । बिलेऽत्र तस्य न पादप्रसर इति विनिश्चिता । रामलक्ष्मणावप्यत्र न पीडयितुं समर्थाविति सुविनिश्चिता ॥ ३९ ॥ क्षमी क्षन्ता ॥ ४० ॥ नृशंसः क्रूरः न केवलम् । किन्तु सुनृशंसकः अतिक्रूरः ।

---

१. **'रक्षति शास–'**

इतीरिते शक्रसुतात्मजेन तथेति होचुः[१] सह जाम्बवन्मुखाः ।
सर्वेऽपि तेषामथ चैकमत्यं दृष्ट्वा हनूमानिदमाबभाषे ॥ ४२ ॥

विज्ञातमेतद्धि मयाऽङ्गदस्य राज्याय ताराभिहितं हि वाक्यम् ।
साध्यं नचैतन्न हि वायुसूनू रामप्रतीपं वचनं सहेत ॥ ४३ ॥

नचाहमाक्रष्टुमुपायतोऽपि शक्यः कथञ्चित् सकलैः समेतैः ।
सन्मार्गगतो नैव च[२] राघवस्य दुरन्तशक्तेर्बिलमप्रधृष्यम् ॥ ४४ ॥

वचो ममैतद् यदि चाऽदरेण ग्राह्यं भवेद् वस्तदतिप्रियं मे ।
न चेद् बलादप्यनये प्रवृत्तान् प्रशास्य सन्मार्गगतान् करोमि ॥ ४५ ॥

इतीरितं तत् पवनात्मजस्य श्रुत्वाऽतिभीता धृतमूकभावाः ।
सर्वेऽनुजग्मुस्तमथाद्रिमुख्यं [३]महेन्द्रमासेदुरगाधबोधाः ॥ ४६ ॥

**सन्मार्गतः आक्रष्टुम् ॥ ४४–५ ॥ ईरितं वचनम् । 'नपुंसके भावे क्तः' (अ.सू.३.३.११४) इति (क्तप्रत्ययः) । अगाधबोधाः गम्भीरज्ञानिनः ॥ ४६ ॥**

---

यत्क्रौर्यस्य नान्तो विद्यते । नाप्यकार्यं नाम । अत एवातिकुत्सितश्चेति सुनृशंसकः । अतिमुख्यमत्युग्रं च शासनमतिशासनम् । तदतिगान् नः स कथं रक्षी कथं रक्षिष्यति? यद्वा षलोपेन रक्ष्यति रक्षिष्यतीत्येवार्थः । अथच रक्षधातुः श्यन्विकरणे दिवादिगणेऽपि पठनीयः । तेन रक्ष्यति रक्ष्यतः रक्ष्यन्ति– इत्यादिरूपसिद्धिः । पुराणेषु चायं दिवादिः पठ्यते–**'अहं रक्ष्यामि ते भार्यां स्थीयतामत्र शोभन'** [न.पु.४९.३२] इति जटायुवचनं नारसिंहे । 'रक्षति शासनातिगान्' इति पाठे स्वरसोऽर्थः । दुर्बलान्, दुर्बलतयाऽनुकम्पनीयानपि ॥४१॥ आबभाषे आकर्ण्य बभाषे । आलोच्य बभाषे । तेषामाशयमाक्षिप्य बभाषे । सर्वानामन्त्र्य च बभाषे ॥ ४२ ॥ प्रसिद्धा किलाङ्गदराज्यकामना तारस्येति राज्याय हीत्याह । तथा कामनयैव तारेणाभिहितमित्येतत् मया विज्ञातं हि । हीति स्वस्य परेङ्गितज्ञतां स्मारयति । आशामात्रमेतत् । नच साधयितुं शक्यम् । हि यस्मात् वायुसूनू रामप्रतीपं वचनं न सहेतेति दाढर्याय परोक्षतयाऽऽह ॥ ४३ ॥ सन्मार्गत आक्रष्टुमपगमयितुम् ॥ ४४ ॥ अदरेण भयरहितेन आदरेण गौरवेण प्रेम्णा च । अथ आदरेण ईषद्भयेन वा । अपि वा मयि रामे च आदरेण समन्तात् अतिशयभयेन वा ॥ ४५ ॥ सुग्रीवचण्डशासनादपि हनूमतः प्रशासनादतिभीताः । तेन प्रशासनेन राममहिमावगमेन विगतमोहतया पश्चात्तापेन

---

१. 'चोचुः' २. **'नैव हि राघ–'** ३. **'माहेन्द्र–'**

**निरीक्ष्य ते सागरमप्रधृष्यमपारमेयं सहसा विषण्णाः ।**
**दृढं निराशाश्च मतिं हि दध्रुः प्रायोपवेशाय तथा च चक्रुः ॥ ४७ ॥**

**प्रायोपविष्टाश्च कथा[1] वदन्तो रामस्य संसारविमुक्तिदातुः ।**
**जटायुषः पातनमूचुरेतत्[2] सम्पातिनाम्नः श्रवणं जगाम ॥ ४८ ॥**

**तस्याग्रजोऽसावरुणस्य सूनुः सूर्य्यस्य बिम्बं सह तेन यातः ।**
**जवं परीक्षन्नथ तं सुतप्तं गुप्त्वा पतत्रक्षयमाप्य चापतत् ॥ ४९ ॥**

**स दग्धपक्षः सवितृप्रतापाच्छ्रुत्वैव रामस्य कथां सपक्षः ।**
**भूत्वा पुनश्चाऽऽशु मृतिं जटायुषः शुश्राव पृष्ट्वा पुनरेव सम्यक् ॥ ५० ॥**

**अप्रधृष्यं अलङ्घ्यम् । अपारमेयं अमेयपारावारम् ॥ ४७–८ ॥ तस्य जटायुषः ॥ ४९ ॥ पुनश्च सपक्षो**

धृतमूकभावाः । मनसा कायेन च पवनात्मजमनुसृत्य जग्मुः । प्रकृते रामप्रतीपभाषणेऽपि तेषां तामसत्वं न शङ्क्यम् । देवांशत्वादगाधबोधा हि सर्वे । जलमतळस्पर्शमगाधम् । बोधस्तु तळस्पृगगाध उच्यते । सम्प्रति तु तात्कालिकतया चागाधबोधा अप्रतिष्ठबोधाः । **'गाधृ प्रतिष्ठायाम्'** ॥ ४६ ॥ पारेण मेयः परिच्छेद्यो न भवतीत्य-पारमेयः । अज्ञातापरपारम् । अप्रधृष्यमजेयम् । अशक्यक्रमणम् । विषादो नाम चिकीर्षितस्य करणे विहतोपायतया, उपायान्तरादर्शनेन च जीवितेऽप्यनुत्साहजननी काचन चित्तविक्रिया । सागरलङ्घने सीतान्वेषणे च निराशाः । मरणपर्यन्तमनशनं प्रायः । **'प्रायो मरणानशने'** इत्यभिधानम् । तथा प्रायोपवेशं चक्रुश्च ॥ ४७ ॥ सतां संसारविमुक्तिदातुः । सद्यो जटायुषः संसारविमुक्तिदातुः । राजसानां संसारदातुः । तत्तद्योग्यतानुसारेण सतामसतां च विविधमुक्तिदातुः । सतां नित्यसुखरूपा । असतां नित्यदुःखरूपा । सतां च सालोक्यादिभेदेन, आनन्दतारतम्येन च विविधा मुक्तिः । संसारादमुक्तिश्च विमुक्तिः । **'विमुक्त इत्यमुक्त उच्यते'** इति हि भगवद्वचनम् । जटां यातीति जटायुः । तस्य शिरसि जटासदृशी रोमराजिरासीदित्यर्थः । **'अपष्ठु-दुष्ठु-सुष्ठु-हरिद्रु-मितद्रु-शतद्रु-शङ्कु-धनु-मयु-पशु-देवयु-जटायु-कुमारयु-मृगयवः एते शब्दा कुप्रत्ययान्ता निपात्यन्ते'** [१.१५] इति कातन्त्रीयवृत्तौ दुर्गसिंहः । सम्पातिनाम्नः पतत्रिणः । सम्पतनात् सम्पातिः ॥ ४८ ॥ कोऽयं सम्पातिनामा? आह– तस्य जटा-युषोऽग्रज इति । भ्रातराविमौ पुरा जवे परस्परजयैषिणावादित्यमुपयातौ । आदित्यसारथेररुणस्य सूनू किल । गगनमध्यं प्राप्ते दिनकरे जटायुरवससाद । तं तदा सुतरां तप्तमुत्पतनायाप्रभवन्तं स्नेहात् सम्पातिः पक्षाभ्यां प्रच्छादयामास । तेन दग्धपक्षोऽत्र विन्ध्ये पपातेति कथा । परीक्षन्निति । परीक्षाऽपि भ्रातृवात्सल्यादेव न स्वजिगी-षयेति परस्मैभाषा ॥ ४९ ॥ प्रतापात् तापप्रकर्षात् । रामकथाश्रवणेन पुनश्च सम्यक् सपक्षो भूत्वा । बहोः

१. **'कथाम्'** २. **'–मूचिरे तत्'**

स रावणस्याथ गतिं सुतोक्तां निवेद्य दृष्ट्वा जनकात्मजाकृतिम् ।
स्वयं तथाऽशोकवने निषण्णामवोचदेभ्यो हरिपुङ्गवेभ्यः ॥ ५१ ॥

ततस्तु ते ब्रह्मसुतेन पृष्टा न्यवेदयन्नात्मबलं पृथक्पृथक् ।
दशैव चाऽरभ्य दशोत्तरस्य क्रमात् पथो योजनतोऽतियाने[1] ॥ ५२ ॥

सनीलमैन्दद्विविदाः[2] सताराः सर्वेऽप्यशीत्याः परतो न शक्ताः ।
गन्तुं यदाऽथाऽत्मबलं स जाम्बवान् जगाद तस्मात् पुनरष्टमांशम् ॥ ५३ ॥

**भूत्वा पृष्ट्वा पुनः सम्यगशेषं शुश्राव ॥ ५० ॥ सुतोक्तां सुतेन सुपार्श्वेनोक्ताम् । निवेद्य ज्ञापयित्वा ॥ ५१ ॥ ततः ब्रह्मसुतेन पृष्टास्ते योजनतः दशैव चाऽरभ्य क्रमाद् दशोत्तरस्य दशयोजनोत्तरस्य पथः मार्गस्य अतियाने अतिक्रमणे क्षममात्मबलं पृथक्पृथक् न्यवेदयन्निति वाक्यभङ्गः ॥ ५२ ॥ पुनरष्टमांशम् । अशीत्या अष्टमांशयुक्तम् । अयं भावः– अशीत्या अष्टमांशो दश, दशयुक्ताशीतिम्, नवतिमिति यावत् ॥ ५३–४ ॥**

---

कालादनन्तरं पुनः सलीलं पतनपाटवं सम्यक्त्वम् । श्रुत्वैवेत्येवकारः केवलार्थः । श्रवणमात्रेण सपदि । विवरज्ञानार्थं पुनरेव पुनःपुनः पृष्ट्वा किंकिमासीत् कथङ्कारं मृत इति, पुनरपि मृतिवार्तां शुश्रावेति भ्रातरि प्रेमातिशयं दर्शयति ॥ ५० ॥ **'तं मामेवङ्गतं पुत्रः सुपार्श्वो नाम नामतः । आहारेण यथाकालं बिभर्ति पततां वरः'** [कि.कां.५९.८], **'स कदाचित् क्षुधार्तस्य ममाऽहाराभिकाङ्क्षिणः । गतसूर्येऽहनि प्राप्तो मम पुत्रो ह्यनामिषः । स मया वृद्धभावाच्च कोपाच्च परिभत्सितः । क्षुत्पिपासापरीतेन कुमारः पततां वरः । स मामाहारसंरोधात् पीडितं प्रीतिवर्धनः । अनुमान्य यथातत्वमिदं वचनमब्रवीत् । अहं तात यथाकालमामिषार्थी खमाप्लुतः । महेन्द्रस्य गिरेर्द्वारमावृत्य च समास्थितः'** [१०–३], **'तत्र कश्चिन्मया दृष्टः सूर्योदयसमप्रभाम् । स्त्रियमादाय गच्छन् वै भिन्नाञ्जनचयप्रभः'**[१५], **'...सिद्धैः परमशोभनैः । स च मे रावणो राजा रक्षसां प्रतिवेदितः । हरन् दाशरथेर्भार्यां रामस्य जनकात्मजाम्'** [२०] इति सुतोक्तां रावणस्य गतिम्, सीतामादाय गगने गमनम् । स्वयं च दृष्ट्वा । हरणवेलायां सम्प्रति च । **'ह्रियमाणा मया दृष्टा रावणेन दुरात्मना'** [५८.१५] इति । **'इहस्थोऽहं प्रपश्यामि रावणं जानकीं तथा'** [२९] इति । **'आयोजनशतात् साग्राद् वयं पश्याम नित्यशः'** [३०] इति च ॥ ५१ ॥ ब्रह्मसुतेन जाम्बवता । अङ्गदेन पृष्टा इति रामायणे । जाम्बवता चाङ्गदेन च पृष्टा इत्यविरोधः । वयसा ज्येष्ठो जाम्बवान् प्रथमं पप्रच्छेति युक्तम् । तेनानुमतश्चाङ्गदः युवराजत्वादधिकृतं पप्रच्छेति सर्वं सुन्दरम् । योजनानां दशावराण्यारभ्य दशोत्तरस्य पथः अतियानेऽतिक्रमणे, तदपि समुद्रस्य, मध्ये मार्गं सम्भावितांश्च विघ्नानतीत्य याने ॥ ५२ ॥ नीलति नीलवर्णो

---

१. '–तोऽभियाने' २. '–मैन्दविविदाः'

**बलेर्य्यदा विष्णुरवाप लोकांस्त्रिभिः क्रमैर्नन्दिरवं प्रकुर्वता ।**
**तदा मया भ्रान्तमिदं जगत्त्रयं सवेदनं जानु ममाऽस मेरुतः ॥ ५४ ॥**

**अतो जवो मे नहि पूर्वसम्मितः पुरा त्वहं षण्णवतिप्लवोऽस्मि ।**
**ततः कुमारोऽङ्गद आह चास्माच्छतं प्लवेयं न ततोऽभिजाने ॥ ५५ ॥**

**अस्मात् पर्वतात् । ततः गमनानन्तरं नाभिजाने, सीतामार्गणादिकार्यक्षमत्वमिति शेषः ॥५५–५६॥**

---

भवतीति नीलः । णील वर्णे । अनीकं लातीति वा । सकृदेव द्विविदपदमत्र भगवत्पादः प्रयुयोज । उपरिष्टाद् विविद इत्येव । रामायणे तु द्विविद इत्येव सर्वत्र साम्प्रतिकः पाठः । **'नळनीलाङ्गदक्राथमैन्दद्विविदपालिता'** [व.प.२८४.१९] इति च भारते । योजनानि दश प्लवेयेति गज आह । विंशतिं गवाक्षः । त्रिंशतं गवयः । चत्वारिंशतमृषभः । पञ्चाशतं गन्धमादनः । षष्टिं मैन्दः । सप्ततिं विविदः । तारोऽशीतिम् । नीलोऽपि प्रायोऽशीतिम् । यद्यपि रामायणे सुषेणोऽशीतिमिति पठ्यते । **'सुषेणस्तु हरिश्रेष्ठः प्रोक्तवान् कपिसत्तमान् । अशीतिं योजनानां तु प्लवेयं प्लवगर्षभाः'** [कि.कां.६५.९] इति । सत्यं पठ्यते । किन्त्वपपाठोऽयम् । सुषेणः पश्चिमां दिशं जगाम; न दक्षिणाम् । **'पश्चिमां तु भृशं घोरां सुषेणः प्लवगेश्वरः'** [कि.कां.४६.६] इति पूर्ववचनात् । तस्मात् **'तारश्चापि हरिश्रेष्ठः–'** इत्येव साधुः पाठः । अत एवाऽह भगवत्पादोऽपि–**'सनीलमैन्दद्विविदाः सताराः–'** इति । हनुमता सहाऽगताः सर्वेऽपि कपयो नीलाद्याः, अशीत्याः परतो न शक्ताः । ननु सप्तद्वीपेभ्य आगताः कपयः कथं न लङ्कां पतितुं पारयन्ति? अत्र प्राचीना द्वेधा समादधते–**'तेषु सप्तसमुद्रेषु आसन्नानां द्वीपानां बाहुल्यात् सुकरं पतनम् । लङ्काद्वीप एव परितः शतयोजनसमुद्रमध्यगतः । अत एव रावणो विगतशङ्कां लङ्कामध्युवास'** इत्येके । **'यद्यपि गजादयोऽपि शतयोजनलङ्घने शक्ताः । 'भूतळे सागरे वाऽपि शैलेषु च वनेषु च । पाताळस्यापि वा मध्ये न ममाऽच्छिद्यते गतिः । इत्येकैकं तदा तत्र वानरा बलदर्पिताः । ऊचुश्च वचनं तस्य हरिराजस्य सन्निधौ'** [कि.कां.४५.१६–१७] इति तैः स्वशक्तेः ख्यापितत्वात् । **'नहि वो गमने सङ्गः कदाचित् कस्यचित् क्वचित्'** [६५.२२] इत्यङ्गदोक्तेश्च । **'तथाऽपि रावणाधिष्ठितलङ्काप्रवेशसीतान्वेषणादिकं दुष्करमन्येनेति तत्साधकहनुमत्प्रचोदनाय तथोक्तवन्त इति समाधेयम्'** इत्यपरे । वस्तुतस्तु द्वीपान्तरादागतानां कपीनां दशोत्तरं योजनमेव गगने गमनसामर्थ्यम् । ततोऽधिकं पन्थानं जले प्लवमानाः, आसन्नं द्वीपान्तरमासाद्य विश्रान्ता वा समागता इति समीचीनम् ॥ ५३ ॥ नन्दिरवमानन्दघोषम् । तथाहि भागवते– **'जाम्बवानृक्षराजस्तु भेरीशब्दैर्मनोजवः । विजयं दिक्षु सर्वासु महोत्सवमघोषयत्'** [८.२०.९] इति ॥ ५४ ॥ अस्तिवत् अस्मीत्यपि त्रैकालिकम् । षण्णवतिप्लव आसम् । अथवा पुरा अस्मि आसमित्यर्थः । **'पुरि लुङ् चास्मे'** [अ.सू.३.२.१२२] । **'पुराशब्द उपपदे स्मशब्दवर्जिते भूतानद्यतनेऽर्थे विभाषा लुङ्प्रत्ययो भवति लट् च'** इति हि वैयाकरणाः । अस्मि पुरा षण्णवतिप्लवः । आसं पुरा षण्णवतिप्लवः । स्मयोगे तु **'अस्मि पुरा स्म षण्णवतिप्लवः'** इत्येव । साम्प्रतं तु केवलं नवतिप्लवः । **'नवतिं**

अपूरिते[१] तैः सकलैः शतस्य गमागमे शत्रुबलं च वीक्ष्य ।
सुदुर्ग्गमत्वं च निशाचरेशपुर्य्याः स धातुः सुत आबभाषे ॥ ५६ ॥

अयं हि गृध्रः शतयोजनं गिरिं त्रिकूटमाहेत उतात्र विघ्नाः ।
भवेयुरन्येऽपि ततो हनूमानेकः समर्त्थो न परोऽस्ति कश्चित् ॥ ५७ ॥

उक्त्वा स इत्थं पुनराह सूनुं प्राणस्य निःसीमबलं प्रशंसयन्[२] ।
त्वमेक एवात्र परं समर्त्थः कुरुष्व चैतत् परिपाहि वानरान् ॥ ५८ ॥

इतीरितोऽसौ हनुमान् निजेप्सितं तेषामशक्तिं प्रकटां विधाय ।
अवर्द्धताऽशु प्रविचिन्त्य रामं सुपूर्ण्णशक्तिं चरितोस्तदाज्ञाम् ॥ ५९ ॥

**इति श्रीमदानन्दतीर्त्थभगवत्पादविरिचिते श्रीमहाभारततात्पर्यनिर्ण्णये**
**श्रीरामचरिते समुद्रतरणनिश्चयो नाम**
**षष्ठोऽध्यायः**

—०—

[आदितः श्लोकाः– ५२१+५९=५८०]

**अन्येऽपि सुदुर्गमत्वादेरन्येऽपि ॥ ५७ ॥ प्राणस्य सूनुम् । निःसीमबलं हनूमतः । परं केवलम् । अत्र एतत्कार्यसाधने ॥ ५८ ॥ निजेप्सितं स्वाभिलषितं इतीरितः असौ हनूमानवर्धत । तदाज्ञां चरितोः कर्तुमीश्वरः । 'ईश्वरे तोसुन्कसुनौ' (अ.सू.३.४.१३) इति तोसुन् प्रत्ययः ॥ ५९ ॥**

इति श्रीमहाभारततात्पर्यनिर्णयटीकायां श्रीवेदाङ्गतीर्थभट्टारकविरचितायां
तात्पर्यदीपिकायां षष्ठोऽध्यायः

—०—

---

**योजनानां तु गमिष्यामि न संशयः'** [किं कां.६५.१३] इति वाल्मीकीये । ततः परं तत्र सीतान्वेषणे, राक्षसनिग्रहे, प्रत्यागमने च मम शक्तिरस्तीति नाहमभिजाने । तादृशसामर्थ्यस्यानुभवमूला स्मृतिरभिज्ञानम् । न मयैतत् साहसमनुभूतपूर्वम्, नापि कर्तुमुत्सह इत्याहेति ॥ ५५ ॥ जलदुर्गेण दुर्गमम् । वरोन्मत्तरक्षोरक्षितमिति सुदुर्गमम् ॥ ५६ ॥ न परोऽस्ति कश्चित्–**'इत्युक्तो जाम्बवान् प्राह सर्वे शक्तास्तु वानराः । सागरोत्तरणे किन्तु कार्यमन्यस्य**

---

१. 'आपूरिते' २. 'प्रकाशयन्'

**सम्भवेत् । तत्र दक्षोऽयमेवात्र हनूमानिति मे मतिः'** [५०.१६१–२] इति नारसिंहे । प्लवनेन डयनेन वा यथाकथाच सागरोत्तरणे सर्वेऽपि समर्थाः । समग्रकार्यनिर्वहणं त्वन्यस्य हनूमत एव सम्भवेदिति पुराणवचनार्थः ॥ ५७ ॥ अधिकं प्रशंसन् प्रशंसयन् । **'आधिक्येऽधिकम्'** इति सूत्रात् । तस्य सामर्थ्यविशेषं प्रशंसयन् स्तुत्या प्रकाशयन्निति च । स्वयं प्रशंसन्नन्यैश्च प्रशंसयन्निति च ॥ ५८ ॥ स्वाभिलषितमेव लङ्कागमनं तैरप्युक्त्वा प्रेरितः । यथा निजेप्सितं तथा तेषामशक्तिं च प्रकटय्य । रामाज्ञां सीतामार्गणरूपां चरितोश्चरितुमवर्धत । यतश्चरितोः चरितुमीश्वरः । ईश्वर उपपदे तोसुन् भवतीति पूर्वे व्याख्यातारः । स्यात् तदपि । क्वचिदनीश्वरेऽपि भवति । यद्यपि–**'ईश्वरशब्द उपपदे छन्दसि विषये तुमर्थे धातोस्तोसुन्कसुन्प्रत्ययौ भवतः । ईश्वरोऽभिचरितोः । अभिचरितुमित्यर्थः । ईश्वरो विलिखः । विलेखितुमित्यर्थः'** इति जयादित्यः । अथापि यथा **'षष्ठीयुक्तश्छन्दसि वा'** [अ.सू.१.४.९] इत्यत्र षष्ठीयुक्त इति शक्यमवक्तुम्, केवलस्यापि प्रयोगदर्शनात्, एवम् **'ईश्वरे तोसुन्कसुनौ'** [३.४.१३] इत्यत्रापि तोसुनि ईश्वर इति न वक्तव्यम्, कसुनि तु स्यादिति भगवत्पादाशयः । ननु 'चरितोरीश्वरः' इत्यध्याहारेण शक्यं सूत्रसङ्गमनम्? अयि किमाह भवान्? अध्याहारेणेति । तेनाप्रयोगेऽपीत्येवोक्तं भवति । अप्रयुक्तं ह्यध्याह्रियते । यत्रानवसरस्तत्र किलाध्याहारः । न ह्यनवसराभावेऽपि सूत्रे प्रोक्तमिति युक्तमध्याहर्तुम् । सोऽयं 'पुत्रवती गृहिणी' इति वचनसार्थक्यायापुत्रया दत्तपुत्रस्वीकारः । सा वक्तव्या–'भवति, अपुत्राऽपि गृहिणी भवति' इति ॥ ५९ ॥

**आचार्यगोविन्दकृते**
**श्रीमद्भारततात्पर्यनिर्णयस्य ।**
**निर्णिक्ते व्याख्याने निर्णयभावचन्द्रिकाख्याने**
**प्रगतं षष्ठाध्यायविवरणं विदुषां हृदयाभरणम् ॥ ❊ ॥**

**इत्याचार्यगोविन्दस्य कृतिषु**
**श्रीमहाभारततात्पर्यनिर्णयपञ्चिकायां**
**निर्णयभावचन्द्रिकायां**
**षष्ठोऽध्यायः**

—०—

२२-१०-१२

# सप्तमोऽध्यायः

**[श्रीरामचरिते हनूमत्प्रतियानम्]**

ॐ ॥ रामाय शाश्वतसुविस्तृतषड्गुणाय सर्वेश्वराय [1]सुखसारमहार्ण्णवाय ।
नत्वा लिलङ्घयिषुरर्ण्णवमुत्पपात निष्पीड्य तं गिरिवरं पवनस्य सूनुः ॥ १ ॥

चुक्षोभ वारिधिरनुप्रययौ च शीघ्रं यादोगणैः सह तदीयबलाभिकृष्टः ।
वृक्षाश्च पर्वतगताः पवनेन पूर्वं क्षिप्तोऽर्ण्णवे गिरिरुदागमदस्य हेतोः ॥ २ ॥

स्यालो[2] हरस्य गिरिपक्षविनाशकाले क्षिप्त्वाऽर्ण्णवे[3] स मरुतोर्वरितात्मपक्षः ।
हैमो गिरिः पवनजस्य तु विश्रमार्त्थमुद्दिश्य वारिधिमवर्द्धदनेकसानुः ॥ ३ ॥

**ॐ ॥ १ ॥ तदीयबलाभिकृष्टः तत्सम्बन्धिवेगजनितपवनबलाभिकृष्टः । वृक्षाश्च अनुप्रययुः । उदागमत् उद्गतोऽभूत् ॥ २–३ ॥**

---

ॐ ॥ सप्तमेन सुन्दरकाण्डकथासङ्ग्रहः । शाश्वताः कालतोऽनन्ताः, विस्तृताः स्वरूपतोऽनन्ताः षड्गुणा ज्ञान-शक्तिबलैश्वर्यवीर्यतेजांसि, ऐश्वर्यवीर्ययशःश्रीज्ञानवैराग्याणि वा । स्विति तेषां निर्दुष्टत्वमाह । ऐश्वर्या-देरनैश्वर्यादिसमानाधिकरणत्वमेव दोषो नाम । तदेव स्फुटं निदर्शयति– **सर्वेश्वरायेति** । सर्वत्र सर्वदा सर्वस्येश्व-रायेति । सारं दुःखासम्भिन्नतयाऽनन्ततया च श्रेष्ठं सुखं सुखसारम् । तस्य महार्णव इव निधानम् । सुखस्य सारस्य बलस्य च महार्णवो वा । **'सारो बले त्रिषु वरे'** इत्यभिधानम् । रामशब्दार्थोऽयम् । **'आनन्दरूपो निष्परीमाण एषः'** इत्यादेः । रामाय रामानुग्रहं सम्पादयितुं नत्वा । रामाय रामकार्यार्थमर्णवं लिलङ्घयिषुरर्णवगतं च नारायणं नत्वा । **'सागरं सरितश्चैव प्रणम्य शिरसा कपिः'** [न.पु.५१.३] इति नारसिंहे । गिरिवरादुत्पतिष्णुर्गिरिवरगतं च तं नत्वा ॥ १ ॥ जलजन्तवो यादांसि । यदा वारिधिः क्षुब्धो भवन्नवशतयाऽनुप्रययौ तदा वारिधिगता यादोगणाश्चानु-प्रययुः । न केवलम्, पर्वतगता वृक्षाश्चोत्कृत्तमूला अनुप्रययुः उदाजग्मुः । अहो तदानीमेव पवनेन पूर्वं क्षिप्तो गिरिरप्युदा-गमत् ऊर्ध्वमागतः । न तदीयबलाभिकर्षात् । किन्तु अस्य हनूमतः सम्मानहेतोः ॥ २ ॥ हरस्य स्यालो भार्यासोदरः,

---

१. **'–राय बलवीर्यमहा–'** २. **'श्यालो–'** ३. **'क्षिप्तोऽर्णवे'**

नैवात्र विश्रमणमैच्छत[1] निःश्रमोऽसौ निःसीमपौरुषगुणस्य[2] कुतः श्रमोऽस्य ।
आश्लिष्य पर्वतवरं स ददर्श गच्छन् दैवैस्तु[3] नागजननीं प्रहितां वरेण ॥ ४ ॥

जिज्ञासुभिर्निजबलं तव भक्षमेतु यद्यत् त्वमिच्छसि तदित्यमरोदितायाः ।
आस्यं प्रविश्य सपदि प्रविनिःसृतोऽस्माद् देवाननन्दयदुत स्वृतमेषु रक्षन् ॥ ५ ॥

**नागजननीं सुरसाख्याम् । वरेण प्रहितां वरं दत्त्वा प्रेषितामित्यर्थः ॥ ४ ॥ निजबलम् । निजशब्देन हनूमान-भिप्रेतः । स्वृतम्, शोभनमृतं सत्यम्, वचनमिति शेषः । सत्यवचनरक्षणं नाम तदमोघकरणम् ॥ ५ ॥**

---

मैनाकः । **'हिमवद्दुहिता साऽभून्मेनायां द्विजसत्तम । तस्या भ्राता तु मैनाकः सखाऽम्भोधेरनुत्तमः'** [मा.पु.५२.१३] इति मार्कण्डेये । इन्द्रेण गिरिपक्षच्छेदकाले मरुताऽर्णवे क्षिप्त्वाऽवशेषितात्मपक्षः । हैमो हेममयः । अवर्धत् । केवलं हनुमदुपचरणार्थमेव वृद्धिरिति परस्मैपदम् । एतदेवाऽह–पवनजस्य विश्रमार्थं तु विश्रमार्थमेवेति ॥ ३ ॥ स्वस्य निःश्रम-त्वाविष्करणार्थमेवेयमिच्छेत्यात्मनेपदमैच्छतेति । पौरुषं पुरुषभावः पुरुषकारस्तेजश्च । **'पौरुषं पुरुषस्य स्याद् भावे कर्मणि तेजसि'** इत्यभिधानम् । जीवेष्वयं हि पुरुषोत्तमः, सर्वजीवकर्मप्रेरकश्चायं महातेजाः । **'प्राण ओजः सहो बलम्'** इति हि भागवते । दैवैस्तु । हनुमद्विजयं काङ्क्षद्भिः, अथापि जिज्ञासया विघ्नं कुर्वद्भिरिति विशेषं तुनाऽऽह । देवा एव दैवाः, देवसम्बन्धिनश्च । **'ततो देवाः सगन्धर्वाः सिद्धाश्च परमर्षयः । अब्रुवन् सूर्यसङ्काशां सुरसां नागमातरम्'** [वा.रा;सुं.कां.१.१४५] इति हि वाल्मीकिः । एवं सर्वग्रहणार्थं दैवैरित्याह । **'देवैस्तु'** इति पाठे स्फुटोऽर्थः । वरेण सहितां प्रहिताम् । वबयोरभेदात् 'प्रहिता अम्बरेण' इति च प्रतृण्णम् । या दैवैः अम्बरेण अम्बरमार्गेण प्रहिता प्रेषिता, तां हि प्रकटं ददर्श । काम्? नागजननीं सुरसाम् । **'सुरसाऽजनयन्नागान् राम कद्रूस्तु पन्नगान्'** [अ.कां.१४.२८] इति हि रामायणे । **'सुरसायाः सहस्रं तु सर्पाणामभवद् द्विजाः । अनेकशिरसां तद्वत् खेचराणां महात्मनाम्'** [कू.पु.१८.९] इति कौर्मे । **'सुरसायां सहस्रं तु सर्पाणामभवत् पुरा'** [पा.पु;सृ.खं.६.६९] इति पाद्मे । **'सुरसायां सहस्रं तु सर्पाणाममितौजसाम्'** [वि.पु.१.२०.१९] इति वैष्णवे । ननु भागवतेऽन्यथा पठ्यते–**'दन्दशूकादयः सर्पा राजन् क्रोधवशात्मजाः'** [६.६.२] इति, **'यातुधानाश्च सौरसाः'** इति च । सत्यं पुराणेष्वन्यथाऽन्यथा पठ्यन्ते । यथा तामसानामन्यथाज्ञानं स्यात् । सात्विकानां तु न विपरीतज्ञानावकाशः । तथाहि स्मरन्ति–**'पुराणेषु च वैषम्यं युगकल्पव्यवस्थया । नचाप्रामाण्यशङ्का ते कथाया व्यत्यये क्वचित्'** [स्कां.पु;वै.खं;मा.मा.१३.७०] इति । **'कश्चिदेव हि जानाति विरक्तो विष्णुतत्परः'** [७२] इति च । एवमन्यत्रापि ॥ ४ ॥ कीदृशेन वरेण? आह– **जिज्ञासुभिः** । निजबलं जिज्ञासुभिर्दैवैः 'यद्यत् त्वं भक्षमिच्छसि तत्तत् तव भक्षं सत् त्वामेतु' इति वरेण च्छन्दयित्वा प्रहितामिति पूर्वश्लोकेनान्वयः । सम्पन्नं च देवानामिष्टमित्याह– इत्येवममरोदितायाः, अत एव मुखं व्यादाय स्थितायाः सुरसाया

---

१. **'–मैच्छदविश्रमो–'** २. **'–पौरुषबलस्य'** ३. **'देवैस्तु'**

**दृष्ट्वा सुरप्रणयितां बलमस्य चोग्रं देवाः प्रतुष्टुवुरमुं सुमनोभिवृष्ट्या ।**
**तैरादृतः पुनरसौ वियतैव गच्छन् छायाग्रहं प्रतिददर्श च सिंहिकाख्यम् ॥ ६ ॥**

**लङ्कावनाय सकलस्य च निग्रहेऽस्याः सामर्थ्यमप्रतिहतं प्रददौ विधाता ।**
**छायामवाक्षिपदसौ पवनात्मजस्य सोऽस्याः शरीरमनुविश्य बिभेद चाऽशु ॥ ७ ॥**

**निस्सीममात्मबलमित्यनुदर्शयानो हत्वैव तामपि विधातृवराभिगुप्ताम् ।**
**लम्बे स लम्बशिखरे निपपात लङ्काप्राकाररूपकगिरावथ सञ्चुकोच ॥ ८ ॥**

**छायां गृह्णातीति छायाग्रहः ॥ ६ ॥ छायामवाक्षिपदिति । छायाया अवक्षेपणेन सोऽस्या आस्येऽवक्षिप्तः ॥ ७ ॥ लम्बे लम्बनाम्नि लम्बशिखरे लम्बमानशिखरे । सञ्चुकोच सूक्ष्मरूपोऽभूदिति भावः ॥ ८ ॥**

---

आस्यं प्रविश्य । अस्मादास्यात् सपदि प्रविनिःसृतः । निःसृतः इति पर्याप्तम् । अथापि विनिःसृत इत्याह । तावदेव पर्याप्ततरम् । अथापि प्रविनिःसृत इत्याह । तेनैतदाह–आत्मन इतरेभ्यो विलक्षणतां प्रकाशयन्, विशिष्टं चाऽत्मनः सामर्थ्यं प्रकटयन् निःसृत इति । प्रकारविशेषेण निःसृत इति कथाविशेषं च सूचयाम्बभूव– योजनायतं तदास्यं अङ्गुष्ठमात्रो भूत्वा प्रविश्य निर्गत इति । अस्मादेव कारणाद् देवाननन्दयदुत । उतेति चार्थे । तेन गन्धर्वादीनृष्या-दींश्च । यथोक्तपालनाख्यं शोभनं व्रतं स्वृतम् । यद्वा शोभनं ऋतं यथार्थविज्ञानं यस्मिन् कर्मणि तत् स्वृतम् । यथार्थ-ज्ञानपूर्वकं वरदानम् । हनुमत्प्रभावं विज्ञायैव देवैर्दत्तं वरं रक्षन्नित्यर्थः । यद्यपि देवानामपि वरं विहन्तुमयं समर्थः । अथापि मैषां वचो मृषा भूदिति कृपया तेषु अवितथवचनरूपं महिमानं रक्षन् ॥ ५ ॥ अत एव सत्यपि सामर्थ्ये देवानां स्वृतरक्षणरूपामस्य सुरप्रणयितां दृष्ट्वा प्रहृष्टास्तुष्टुवुः । सुमनोऽभिवृष्ट्या सह । छाययैव बिम्बं गृह्णातीति छायाग्रहः । अत एव तत्तनयो राहुरपि सूर्यचन्द्रयोः पतितस्य भूच्छायस्य नियन्ता ग्रहो बभूव । प्रतिददर्श गमनप्रतिबन्धरूपं ददर्श । सेयं सिंहिका हिरण्यकशिपुतनया राहुजननी विप्रचित्तिभार्या ॥ ६ ॥ भूमेरलङ्कारोऽयमिति लङ्का नाम पुरी । वैयाकरणास्तु–**'लातेरङ्कः प्रत्ययः । लातीति लङ्का'** इत्याहुः । यदा हिरण्यकशिपू रावणो बभूव तदा लङ्काया अवनाय । लङ्कां निजिघृक्षोः सकलस्य शत्रुगणस्य निग्रहाय च । निग्रहेणैव हि समग्रमवनं साध्यते । अस्याः सिंहिकायाः । अवस्तादाक्षिपत् अध आचकर्ष । अनुविश्य प्रवेशानुरूपेणाणुरूपेण प्रविश्य ॥ ७ ॥ घटनाङ्घटनामनु दर्शयानः । विधातृवरेणाभितो गुप्तामपि । लम्बशिखरे ऊर्ध्वं लम्बमानशिखरे । गगनचुम्बिशिखरे । लबि शब्दे अवस्रंसने च । निपपात नीचैर्जगाम । अवततार । प्राकाररूपकगिराविति प्राकृतिकं दौर्गम्यमाह । यस्याः समुद्र एव परिखा-रूपकः । गिरिरेव प्राकाररूपकः । यद् यस्य कृत्यं करोति तत् तस्य रूपकमुच्यते । जलदुर्गे महान् बभूव । अथ गिरिदुर्गे सञ्चुकोच ॥ ८ ॥

भूत्वा बिलाळसमितो[१] निशि तां पुरीं च
प्राप्स्यन् ददर्श निजरूपवतीं स लङ्काम् ।
रुद्धोऽनयाऽऽश्वथ विजित्य च तां स्वमुष्टि-
पिष्टां तयाऽनुमत एव विवेश लङ्काम् ॥ ९ ॥

मार्ग्गमाणो बहिश्चान्तः सोऽशोकवनिकातळे[२] ।
ददर्श [३]शिंशपावृक्षमूलस्थितरमाकृतिम् ॥ १० ॥

**निजरूपवतीं आविर्भूतनिजरूपां लङ्कां लङ्काभिमानिदेवताम् ॥ ९ ॥ बहिश्चान्तः लङ्कापुरस्येति शेषः ॥१०॥**

---

विलाळसमितः । विडाल इति बिडाल इति चार्वाचीनाः । आखुमार्गणाय बिले अडतीति बिलाळः । अड उद्यमे । बिलम्बिल-मटति वा । बिलाट एव बिलाडः । तृतीयोऽतिशये । अज्मध्यस्थडस्य ळः । तमेतं बिलाडं सन्तं बिडालमाचक्षते वर्ण-व्यत्ययेन । वैयाकरणास्तु **'बिड आक्रोशे'** इत्यतः कालन्प्रत्यये वेडतीति विडाल इति पदं निष्पादयन्ति । **'सूर्ये चास्तं गते रात्रौ देहं सङ्क्षिप्य मारुतिः । पृषदंशकमात्रः सन् बभूवाद्भुतदर्शनः'**[सुं.कां.२.४९] इति । प्राप्स्यन्निति प्रेप्सन्नित्यर्थः । इच्छगर्भो हि सर्वत्र लृङ् भवति । तद्यथा कश्चन क्षेत्रं द्रक्ष्यामीत्याह । क्षेत्रं दिदृक्षामीत्येव तदाह । रूप्य-पीठं गमिष्यामीत्याह । रूप्यपीठं जिगमिषामीत्येव तदाह । लङ्कामानिनीं देवताम् । आशु अनायासेन । अथ बिलाळमात्रः सन्नेव तां जिगायेति विस्मयावहमेतदित्याह । तयाऽनुमतः । **'स्वयम्भुवा पुरा दत्तं वरदानं यथा मम । यदा त्वां वानरः कश्चिद् विक्रमाद् वशमानयेत् । तदा त्वया हि विज्ञेयं रक्षसां भयमागतम्'** [सुं.कां.३.४७] इति, **'तत् प्रविश्य हरिश्रेष्ठ पुरीं रावणपालिताम् । विधत्स्व सर्वकार्याणि यानियानीह वाञ्छसि'** [३.५०] इति च ॥ ९ ॥ गृहाणामन्तर्बहिश्च मार्गमाणः । मार्गणे समर्थः । शक्तौ चानश् । **'ताच्छील्यवयोवचनशक्तिषु चानश्'**[अ.सू.३.२.१२९] इति हि शाब्दिकाः । मार्ग अन्वेषणे । णिजभावपक्षे मार्गतीत्यादि रूपम् । पक्षे मार्गते वा । मार्गस्य मार्गणस्य मानं ज्ञानं यस्येति च मार्गमाणः । तेन मार्गणमपि नरलोकविडम्बनमित्युक्तं भवति । सर्वं मार्गणजं पुण्यमात्मगतमिति चाऽत्मनेभाषा । अल्पं वनं वनिका । उद्यानमित्येतत् । अशोकप्रधाना वनिका अशोकवनिका । तस्यास्तळे अधस्तात् । शिंशपा अशोकप्रभेदः । शिवंशपा शिंशपा भवति । शिं शिवं प्रमाणीकृत्य शपति । यद्यहं न शोकमपनुद्यां मा शिवो मां क्षमिष्टेति । शासेरपप्रत्ययेन वर्णागमविपर्ययाभ्यां च शास्तीति शिंशपेति वैयाकरणाः । तथाहि भोजः–**'विटप-विष्टप-उलप-कुणप-कुतप-चातप-शिंशपादयः'** [स.कं२.२.२१२] इति । 'शिंशुपा–' इति पाठं पठन्तो भ्रान्ताः । **'दुःखितो वायुपुत्रस्तु सम्पातेर्वचनं स्मरन् । अशोकवनिकां प्राप्तो नानापुष्पसमन्विताम् । जुष्टां मलयजातेन चन्दनेन सुगन्धिना । प्रविश्य शिंशपावृक्षमाश्रितां जनकात्मजाम् । रामपत्नीं समद्राक्षीत् राक्षसीभिः सुरक्षिताम्'** [५१.१७–९] इति नारसिंहे ॥ १० ॥

---

१. **'बिडालसमितो–'** २. **'–तले'** ३. **'शिंशुपा–'**

नरलोकविडम्बस्य जानन् रामस्य हृद्गतम् ।
तस्य चेष्टानुसारेण कृत्वा चेष्टाश्च संविदः[१] ॥ ११ ॥

तादृक्चेष्टासमेताया अङ्गुलीयमदात् ततः ।
सीताया यानि चैवाऽसन्नाकृतेस्तानि सर्वशः ॥ १२ ॥

भूषणानि द्विधा भूत्वा तान्येवाऽसंस्तथैव च ।
अथ चूळामणिं[२] दिव्यं दातुं रामाय सा ददौ ॥ १३ ॥

यद्यप्येतन्न पश्यन्ति निशाचरगणास्तु ते ।
द्युलोकचारिणः सर्वं[३] पश्यन्त्यृषय एव च ॥ १४ ॥

**संविदः कथाः ॥ ११ ॥ तादृक्चेष्टासमेतायै लोकविडम्बकरामचेष्टासदृशचेष्टायुक्तायै । अथ चूळामणिमिति चूळामणिदानं वक्ष्यते । सीताचूळामणिस्तदाकृतेः कथमासीदित्यतस्तद् घटयति– सीताया इति । यानि भूषणानि कटकादीन्यासन् तानि सर्वशः आकृतेः सीताकृतेरासन् । कथमेतदित्यत आह– द्विधेत्यादि । तान्येव सीताभूषणान्येव तथैव तत्प्रकारेणैव द्विधा भूत्वाऽऽसन्निति योजना । अथ अङ्गुलीयप्रदानानन्तरम् । नरलोकविडम्बस्येत्यादिना रामविडम्बनानुसारेण सीताकृतेः हनुमति विडम्ब उक्तः ॥ १२–१३ ॥ उपांशु क्रियमाणत्वेन द्रष्टृभावात् व्यर्थोऽयमित्याशङ्क्य द्रष्टृक्त्या तस्य सार्थक्यमुपपादयति– यद्यपीत्यादिना । एतद् विडम्बनम् । ते सीतापरिरक्षणे विनियुक्ता न पश्यन्ति । (सुप्तत्वा)दिति भावः । द्युलोकचारिण ऋषयश्च पश्यन्त्येव ॥ १४ ॥**

---

नरलोकविडम्बस्य नरलोकमनुकुर्वतः । डबि क्षेपे इति हि पठन्ति चन्द्रादयः । विपूर्वश्चायमनुकारे वर्तते । स्वयमपि नरलोकविडम्बनीः चेष्टाः संविदः सङ्कथाश्च कृत्वा । एतेनास्याः सीताप्रतिकृतित्वं देवगुह्यं मानुषे लोके सीतारामौ हनुमांश्चेति त्रयो व्यज्ञासिषुरिति ज्ञापयति । देवलोके तु शिवेन्द्राग्न्यादयो बहवो व्यजानत । ज्ञानिनश्च ऋषयः । अत एव 'तेषां विडम्बनायैव' इति वक्ष्यति ॥ ११ ॥ तादृक्चेष्टासंवित्समेताया रमाकृतेः । समेतायै वा रमाकृतये । सर्वशः सर्वाणि भूषणानीत्युत्तरान्वयः ॥ १२ ॥ तान्येव सीताया भूषणानि द्विधा भूत्वा, तथैव च भूत्वा सीताकृतेरप्यासन् ॥ १३ ॥ ते लङ्काचारिणः । द्युलोकचारिणः देवाः । ऋषयश्च द्युलोकचारिण एव सर्वं पश्यन्ति । न भूलोकगताः ॥ १४ ॥

---

३. 'संविदम्' २. 'चूडामणिम्' ३. 'सर्वे'

तेषां विडम्बनायैव दैत्यानां वञ्चनाय च ।
पश्यतां कलिमुख्यानां विडम्बोऽयं कृतो भवेत् ॥ १५ ॥

कृत्वा कार्यमिदं सर्वं विशङ्कः पवनात्मजः ।
आत्माविष्करणे चित्तं चक्रे मतिमतां वरः ॥ १६ ॥

अथ वनमखिलं तद् रावणस्यावलुप्य[1]
क्षितिरुहमिममेकं वर्जयित्वाऽशु वीरः ।
रजनिचरविनाशं काङ्क्षमाणोऽतिवेलं
मुहुरतिरवनादी तोरणं चाऽरुरोह ॥ १७ ॥

अथाशृणोद् दशाननः कपीन्द्रचेष्टितं परम् ।
दिदेश किङ्करान् बहून् कपिर्निगृह्यतामिति ॥ १८ ॥

समस्तशो विमृत्यवो वराद्धरस्य किङ्कराः ।
समासदन् महाबलं सुरान्तरात्मनोऽङ्गजम् ॥ १९ ॥

**कृतः अयं विडम्बः तेषां पश्यतां द्युलोकचार्यादीनां विडम्बनायैव भवेत् । वञ्चनं च 'न विडम्बनमेतत् किन्तु सत्यमेव' इत्यज्ञानोत्पादनम् । कल्यादीनां द्रष्टृत्वं च सर्वगतत्वाद् युज्यते ॥ १५–१६ ॥ इमं शिंशपाख्यम् । अतिवेलमत्यर्थम् ॥ १७ ॥ निगृह्यतां वध्यताम् ॥ १८–१९ ॥**

---

तेषां देवानामृषीणां च विडम्बनाय विनोदनायैव । पश्यतां कलिमुख्यानां दैत्यानां राम आपन्नः सीदतीति विभ्राम्य वञ्चनाय च । विडम्ब आपन्नानुकारः ॥ १५–६ ॥ अवलुप्य । लुप्लृ छेदने । अवज्ञया लोपनमवलोपनम् । 'अवलुम्प्य' इति पाठोऽपदज्ञानामज्ञानमूलः । इममेकं यत्र सीता स्थिता । काङ्क्षमाणः । भगवत्प्रसादातिशय आत्मगामि फलम् । अधिकमुपरिष्टात् [९.४६] । मुहुः क्रियासमभिहारेण । तोरणं पुरप्रवेशद्वाराद् बहिरट्टम् ॥ १७ ॥ परं अविषह्यम् । दिदेश किङ्करान् । **'आत्मनः सदृशान् शूरान् किङ्करान् नाम राक्षसान् । व्यादिदेश महातेजा निग्रहार्थं हनूमतः । तेषामशीतिसाहस्रं किङ्कराणां तरस्विनाम्'** [सुं.कां.४२.२४] इत्यादि । निगृह्यतां बध्यतां वध्यतां वा ॥ १८ ॥ समस्तशः सर्वेऽपि सर्वस्मादपि विमृत्यवः । सुराणामप्यन्तरात्मनः । समासदन् सङ्ग्रामाय समवेता आगमन् ॥ १९ ॥

---

१. **'अवलुम्प्य'** इति पाठः प्रामादिकः ।

**अशीतिकोटियूथपं पुरस्सराष्टकायुतम् ।**
**अनेकहेतिसङ्कुलं कपीन्द्रमावृणोद् बलम् ॥ २० ॥**

**समावृतस्तथाऽऽयुधैः स ताडितश्च तैर्भृशम् ।**
**चकार तान् समस्तशः[१] तळप्रहारचूर्णितान्[२] ॥ २१ ॥**

**पुनश्च मन्त्रिपुत्रकान् स रावणप्रचोदितान् ।**
**ममर्द सप्त पर्वतप्रभान् वराभिरक्षितान् ॥ २२ ॥**

**बलाग्रगामिनस्तथा स शर्ववाक्सुगर्वितान् ।**
**निहत्य सर्वरक्षसां तृतीयभागमक्षिणोत् ॥ २३ ॥**

**पुरःसराष्टकायुतं पुरःसराष्टकायुक्तम् ॥ २०-२ ॥ तृतीयभागम्, रावणसेनाया इति शेषः ॥ २३-६ ॥**

---

अशीतिसाहस्रं किङ्करा इति रामायणे । अशीतिकोटय इति चान्यत्रोक्तमिति प्रतीयते । अतोऽविरोधायोभे अपि वचने सङ्गमय्य किङ्करसङ्ख्यामाह–अशीतिकोटियूथपम् । अशीतिकोटिसङ्ख्यस्य यूथस्य पालकं पुरःसरं अष्टकायुतम् । अयुतानामष्टकम् । अशीतिसाहस्रमित्येतत् ॥ २० ॥ बलेन समावृतः, सहैव युगपदावृतः । आयुधैश्च समावृतः । ताडितश्च । भृशं ताडितः । अथापि नेषदपि पीडितः । समस्तशः सर्वानपि तळप्रहारचूर्णितान् चकार । करतळेन प्रहारश्चपेटः । पादसंहितोऽयं श्लोकः–**'समावृतस्तथायुधैः । स ताडितश्च तैर्भृशम् । चकार तान् समस्तशः । तळप्रहारचूर्णितान् ।'** इति । याजुषोऽयं सम्प्रदायः । यथा–**'सहस्रशीर्षा पुरुषः । सहस्राक्षः सहस्रपात्'** इत्यादि ॥ २१ ॥ गात्रतः पर्वतप्रभान् । सप्तकुलपर्वतप्रभान् । मन्त्रिण इव तत्पुत्रा अपि कुत्सितबुद्धय इत्याह–मन्त्रिपुत्रकान् । शक्तितः पुनर्ब्रह्मणो वरेण अभितः देवैरप्यवध्यत्वेन रक्षितान् । ननु कथं ब्रह्मणो वरेणेति ज्ञायते । अभीत्युपसर्गेणेत्यवैहि । केनापि जीवेनावध्यत्वं ह्यभितो रक्षणं नाम । विष्णुस्तावन्न दैत्यानां वरदः । तेन ज्ञायते ब्रह्मण एवायं वर इति । शक्यं च भाविब्रह्मणैव स भङ्क्तुम्, नान्येन केनापि । अन्यथा व्यर्थमभीत्युपसर्जनं स्यात् । अर्थापत्तिश्चात्र भवति । **'मया वरा विलङ्घिता ह्यनेकशः स्वयम्भुवः'** [३३] इति वक्ष्यमाणवचनान्यथानुपपत्त्याऽयं वरो ब्रह्मदत्त इत्यवसीयते । तथाहि–पूर्वमेकैव श्रूयते हनुमता हता विधातृवरगुप्ता । तत्कथमनेकवरोल्लङ्घनम्? तस्मादन्यथाऽनुपपद्यमानमनेकवरोल्लङ्घनं गमयति मन्त्रिपुत्रकाणां विधातृवराभिरक्षितत्वमिति ॥ २२ ॥ बलाग्रगामिन इति । **'स विरूपाक्षयूपाक्षौ दुर्धरं चैव राक्षसम् । प्रघसं भासकर्णं च पञ्च सेनाग्रनायकान् । सन्दिदेश दशग्रीवः–'** [सुं.कां.४६.२–३] इति वाल्मीकीये ।

---

१. प्राचीनादर्शे–**'समस्तशः तळप्रहार–'** इति विश्लिष्यैव पठ्यते । २. **'–शस्तलप्रहार–'**

**अनौपमं हरेर्बलं निशम्य राक्षसाधिपः ।**
**कुमारमक्षमात्मनः समं सुतं न्ययोजयत्** ॥ २४ ॥

**स सर्वलोकसाक्षिणः सुतं शरैर्ववर्ष ह ।**
**शितैर्वरास्त्रमन्त्रितैर्नचैनमभ्यचालयत्** ॥ २५ ॥

**स मण्डमद्ध्यकासुतं समीक्ष्य रावणोपमम् ।**
**तृतीय एष चांशको बलस्य हीत्यचिन्तयत्** ॥ २६ ॥

**निधार्य्य एव रावणः स राघवस्य[१] नान्यथा ।**
**यदीन्द्रजिन्मया हतो नचास्य शक्तिरीक्ष्यते** ॥ २७ ॥

**निधार्यः निक्षेप्तव्यः । मया न हन्तव्य इति भावः ॥ २७-८ ॥**

दुर्धर एव दुर्धर्षः । तथाहि सङ्ग्रहरामायणे– **'–दुर्धर्षयूपाक्षविरूपमुख्यान् । सभासकर्णप्रघसानुवाच–'** [सं.रा;सुं.कां.६.९] इति । एतदनुसारेण **'–दुर्धर्षं चैव राक्षसम्'** इत्येव प्रतनो रामायणपाठः । प्रघसभासकर्णौ प्रायः सुमालितनयौ कैकसी-भ्रातरौ । अन्यश्च प्रघसो सुग्रीवेण हतः श्रूयते–**'वानरेन्द्रस्तु सुग्रीवः प्रघसेन समागतः'** [यु.कां.४३.१०] इति । अनयोरेकतरः सुमालितनय इति तु स्फुटम् । यूपाक्षः सेनापतिरेकः । **'यूपाक्षः सचिवो राज्ञः'** [यु.कां. ६०.७१] इत्युपरिष्टाद् वक्ष्यमाणः सचिवोऽन्यः । विरूपाक्षश्चान्यः सचिवेष्वेकः । अत्र प्रस्तुतौ यूपाक्षविरूपाक्षौ हनुमता हतौ । रामरावणयोर्युद्धे हतौ तु यूपाक्षविरूपाक्षौ सुग्रीवेण हतावित्युपरिष्टात् स्फुटम् । सनामानो बहुनामानश्च राक्षसाः कपयश्चाऽसन्निति रामायणादेवावगम्यते । स्वतो बलगर्विताः । शर्ववरेण सुगर्विताः ॥ २३ ॥ हरेर्नारायणस्येव हरेर्वायोरिव हरेर्हनुमतो बलम् । **'हरिं हृषीकेशमुदाहरन्ति'** इति, **'सदागतिर्गन्धवहो हरिः प्रोक्तो महाबलः'** इति, **'हरिः कपिः कीश इमे च शब्दाः शाखामृगो वानर इत्यभिन्नाः'** इति चाभिधानरत्नमाला । **'अर्कमर्कटमण्डूकविष्णुवासव-वायसाः । तुरङ्गः सिंहशीतांशुयमाश्च हरयो दश'** इति च । अतितरामनुपमं अनौपमम् ॥ २४ ॥ सर्वं जीवलोकं साक्षादीक्षते, जीवकलामानित्वात् । सर्वलोकस्य कर्मसाक्षी च । **'तस्मिन्नपो मातरिश्वा दधाति'** इति श्रवणात् । हेति तामपूर्वां पूर्वावतारकथां स्मरन्नास्वदत इव । नच नैव ॥ २५ ॥ मण्डमध्यका मण्डोदरी । यस्या मध्यं समग्रस्य देहस्य मण्डनायते सा मण्डमध्या । अथापि अक्षकुमारसदृशं कुतनयं जनयामासेति कुत्सयति मण्डमध्यकेति । रक्षोबलाग्रण्यश्च त्रयः । रावण इन्द्रजिदक्षकुमारश्चेति । कुम्भकर्णस्य सुप्तप्रायत्वात् । तस्मादेषोऽक्षकुमारस्तृतीयो बलस्यांश इति । तथाऽपि हनुमतः कियानयमिति कुत्सयामास– **अंशक** इति ॥ २६ ॥ राघवस्य भाग इति निधार्यः

१. **'राघवाय ना–'**

**अतस्तयोः समो मया तृतीय एष हन्यते ।**
**विचार्य्य चैवमाशु तं पदोः प्रगृह्य पुप्लुवे ॥ २८ ॥**

**स चक्रवद् भ्रमातुरं विधाय रावणात्मजम् ।**
**अपोथयद् धरातळे[1] क्षणेन मारुती तनुः ॥ २९ ॥**

**विचूर्ण्णिते धरातळे[1] निजे सुते स रावणः ।**
**निशम्य शोकतापितस्तदग्रजं समादिशत् ॥ ३० ॥**

**अथेन्द्रजिन्महाशरैर्वरास्त्रसम्प्रयोजितैः ।**
**ततक्ष वानरोत्तमं नचाशकद् विचालने ॥ ३१ ॥**

**अथास्त्रमुत्तमं विधेर्य्युयोज सर्वदुष्षहम्[2] ।**
**स तेन ताडितो हरिर्व्यचिन्तयन्निराकुलः ॥ ३२ ॥**

**मारुती मरुत्सम्बन्धिनी तनुः स्वरूपम् । हनूमानिति यावत् ॥ २९-३० ॥ हन्मीति बुद्ध्या ततक्षेति भावः ॥ ३१ ॥ अच्छेद्यत्वाद्धनुमतः ताडितः आवृतः ॥ ३२-३ ॥**

---

जीवन् स्थापनीयः ॥ २७ ॥ प्रगृह्य लीलया गृहीत्वा । पश्यतः प्रकटं गृहीत्वा ॥ २८ ॥ भ्रमणेनातुरं सम्भ्रान्तम् । अपोथयत् सङ्घट्टयामास ॥ २९ ॥ निजे सुते हनुमता धरातळे पोथयित्वा विचूर्णिते सति, स रावणस्तां शोकवार्त्तां निशम्य तापितस्तप्तः । तपिश्चुरादिश्च भ्यादिश्च । तळशब्दोऽधोवचनः । धरातळे अधस्ताद् धरायाम् । पृष्ठवचनो वा । धरापृष्ठे । स्वरूपवचनो वा । धरातळे धरायाम् ॥ ३० ॥ वरास्त्रैः संयोजितैः, हनूमति प्रयोजितैश्च महाशरैः । ततक्ष ताडयामास, अथापि नाशकच्च विचालनेऽपि ॥ ३१ ॥ विधेरस्त्रं ब्रह्मास्त्रम् । ननु दुःसहमिति पदं पदज्ञाः पठन्ति । **'सुविनिर्दुर्भ्यः सुपिसूतिसमाः'** [अ.सू.८.३.८८] इति सूत्रे सहस्यापाठात् । दुःषुप्तिरिति स्यात् । दुःषूतिरिति स्यात् । दुःषममिति स्यात् । न दुःषहमिति । तत् कथं सर्वदुष्षहमित्याह? उक्तं किल– न हि न सूत्रमस्तीति न प्रयुञ्जते । किन्तु महान्तः प्रायुञ्जतेति सूत्रं प्रणयन्ति । अत्राप्युपसङ्ख्यानसूत्रं प्रणेयं भवति–'दुरो विभाषा सहस्य' इति । तेन वैकल्पिकं रूपद्वयम्– दुःसहं दुःषहमिति । तेनार्थविशेषोऽपि ध्वन्यते । दुःसहेषु मूर्धन्यं दुःषहं भवति । तद्यथा–दुःसहमिह भविनो दुःखम् । दुष्षहं तमसि । ताडितोऽपि निराकुलः असम्भ्रान्तः । व्यथानिमित्तवेधभेदाद्यजननात् । ताडित एव केवलं न पीडित इति । देहे लगनमात्रमिह ताडनं विवक्षितम् ॥ ३२ ॥

---

१. **'–तले'** २. **'सर्वदुःसहम्'**

मया वरा विलङ्घिता ह्यनेकशः स्वयम्भुवः ।
स माननीय एव मे ततोऽत्र मानयाम्यहम् ॥ ३३ ॥

इमे च कुर्य्युरत्र किं प्रहृष्टरक्षसां गणाः ।
इतीह लक्ष्यमेव मे स रावणश्च दृश्यते ॥ ३४ ॥

इदं समीक्ष्य बद्धवत् स्थितं कपीन्द्रमाशु ते ।
बबन्धुरन्यपाशकैर्जगाम चास्त्रमस्य तत् ॥ ३५ ॥

अथ प्रगृह्य तं कपिं समीपमानयंश्च ते ।
निशाचरेश्वरस्य तं [1]स पृष्टवांश्च रावणः ॥ ३६ ॥

कपे कुतोऽसि कस्य वा किमर्थमीदृशं कृतम् ।
इतीरितः स चावदत् प्रणम्य राममीश्वरम् ॥ ३७ ॥

**मे इह अस्त्रेण बद्धवदवस्थाने इति च लक्ष्यं उद्देश्यम्, प्रयोजनमिति यावत् । उद्देश्यान्तरं चाऽह–स रावणश्च दृश्यत इति ॥ ३४ ॥ इदं समीक्ष्य कार्यमेतद् विचार्य ॥ ३५–६ ॥ कुतः समागतः? कस्य वा, दूत इति शेषः ॥ ३७–३९ ॥**

---

अनेकशः अनेके वराः । अनेकेषु च । स स्वयम्भूः । अत्र एतद्वरविषये । अस्मिन् ब्रह्मास्त्रप्रसङ्गे वा ॥ ३३ ॥ कपिर्विजित इति भ्रमेण हर्षः । बद्धो निश्चेष्टः कृत इति भ्रमेण प्रहर्षः । अत्र रक्षसां निवासे, स्वस्थान इत्येतत् । एकाकिनो वैदेशिकस्यापि मम इति हेतोरिह रावणिना बन्धने मया बद्धवदवस्थानं मम स्वयम्भूवरमानानारूपं लक्ष्यमेव साधयेदितीष्टसिद्धिः । स रावणश्चानायासेन दृश्यत इति द्विगुणमिष्टसाधनम् ॥ ३४॥ पाशकैः क्षुद्रपाशैः । तत् तस्मादन्यपाशैर्बन्धनात् तच्च अस्य मारुतेरङ्गलग्नमपि ब्रह्मास्त्रमपजगाम । अस्य भाविब्रह्मणो मारुतेरेव हि तत् । **'अस्त्रबन्धः स चान्यं हि न बन्धमनुवर्तते'** [सुं.कां.४८.४८] इति च ॥ ३५ ॥ प्रगृह्य प्रयासेन गृहीत्वा । पृष्टवान् प्रहस्तमुखेन स्वयं च । **'स राजा रोषताम्राक्षः प्रहस्तं मन्त्रिसत्तमम् । कालयुक्तमुवाचेदं वचो विपुलमर्थवत् । दुरात्मा पृच्छ्यतामेष कुतः किं वाऽस्य कारणम्'** [सुं.कां.५०.४–५] इति च । अत एवोपरि हनुमद्वचनम्– **'दृष्ट्वा सम्भाषितश्चाहं रावणेन दुरात्मना । पृष्टश्च लङ्कागमनं राक्षसानां च तं वधम्'** [५८.१३०] इति च ॥ ३६–७ ॥

---

१. 'तं प्रपृष्टवांश्च'

अवैहि दूतमागतं दुरन्तविक्रमस्य माम् ।
रघूत्तमस्य मारुतिं कुलक्षये तवेश्वरम् ॥ ३८ ॥

न चेत् प्रदास्यसि त्वरन् रघूत्तमप्रियां तदा ।
सपुत्रमित्रबान्धवो विनाशमाशु यास्यसि ॥ ३९ ॥

न रामबाणधारणे क्षमाः सुरेश्वरा अपि ।
विरिञ्चशर्वपूर्वकाः किमु त्वमल्पसारकः ॥ ४० ॥

प्रकोपितस्य तस्य कः पुरःस्थितौ क्षमो भवेत् ।
सुरासुरोरगादिके जगत्यचिन्त्यकर्म्मणः ॥ ४१ ॥

इतीरिते वधोद्यतं न्यवारयद् विभीषणः ।
स पुच्छदाहकर्म्मणि न्ययोजयन्निशाचरान् ॥ ४२ ॥

अथास्य वस्त्रसञ्चयैः पिधाय पुच्छमग्नये ।
ददुर्ददाह नास्य तन्मरुत्सखो हुताशनः ॥ ४३ ॥

**अल्पसारकः अल्पवीर्यः ॥ ४०–४३ ॥**

---

अवैहि दूतमागतम् । अवैहीति प्राचीनम् । अवेहीत्यर्वाचीनम् । सर्वत्र पुराणादिष्ववैहीत्येव प्रमितः प्रयोगः । न काप्यवेहीति । तेन **'अवैहीत्यसाधुरेव'** इत्याहोपुरुषिकामात्रम् । **'तदवैहि परं नरेन्द्र'** [११.३.३६] इति श्रीभागवते । दुष्टानां दुरन्तो विक्रमो यस्य । नञर्थे च दुरिष्यत इत्युक्तम् । तेन दुरन्तविक्रम इत्यनन्तविक्रमः ॥ ३८ ॥ क्षम्यतामपराध इति प्रार्थनापूर्वकं दानं प्रदानम् । त्वरणं न केवलं तव, सर्वरक्षसां च भूतये भवेदिति त्वरन्नित्याह ॥ ३९ ॥ अल्पसारकः अत्यल्पकुत्सितबलः । **'कश्च लक्ष्मणमुक्तानां रामकोपानुवर्तिनाम् । शराणामग्रतः स्थातुं शक्तो देवासुरेष्वपि'** [सुं.कां.५१.१९] इति च । **'अपकुर्वन् हि रामस्य साक्षादपि पुरन्दरः । न सुखं प्राप्नुयादन्यः किं पुनस्त्वद्विधो जनः'** [५१.३३] इति च ॥ ४० ॥ ईषत् कुपितः क्षमेतापि क्वचिदनुकम्पामृदुः । प्रकोपितस्य पुनः पुरःस्थितौ कः क्षमः समर्थः? न कोऽपि ॥ ४१ ॥ हनुमता इतीरिते तस्य वधोद्यतं रावणम् ॥ ४२ ॥ पुच्छमग्नये ददुः । यथा कश्चिद् दूरगतं सखायं सख्ये ददाति । पुच्छेऽग्निं ददुरिति यावत् । अथापि नाग्निः पुच्छं ददाह । यतः मरुत्सखो हुताशनः । यद्यपि हुतं सर्वमश्नाति । हुतं च पुच्छमग्नौ । अथापि हितः सखा हनुमानिति न ददाह ॥ ४३ ॥

**ममर्ष सर्वचेष्टितं स रक्षसां निरामयः ।**
**बलोद्धतश्च कौतुकात् प्रदग्धुमेव तां पुरीम् ॥ ४४ ॥**

**ददाह चाखिलं पुरं[1] स्वपुच्छगेन वह्निना ।**
**कृतिस्तु विश्वकर्म्मणोऽप्यदह्यतास्य तेजसा ॥ ४५ ॥**

**सुवर्ण्णरत्नकारितां स राक्षसोत्तमैः सह ।**
**प्रदह्य सर्वशः[2] पुरीं मुदाऽन्वितो जगर्ज्ज च ॥ ४६ ॥**

**स रावणं सपुत्रकं तृणोपमं विधाय च ।**
**तयोः प्रपश्यतोः पुरं[3] विधाय भस्मसाद् ययौ ॥ ४७ ॥**

**विलङ्घ्य चार्ण्णवं पुनः स्वजातिभिः प्रपूजितः ।**
**प्रभक्ष्य वानरेशितुर्म्मधु प्रभुं समेयिवान् ॥ ४८ ॥**

**रामं सुरेश्वरमगण्यगुणाभिरामं सम्प्राप्य सर्वकपिवीरवरैः समेतः ।**
**चूळामणिं[4] पवनजः पदयोर्न्निधाय सर्वाङ्गकैः प्रणतिमस्य चकार भक्त्या ॥ ४९ ॥**

**ममर्ष सेहे ॥ ४४–९ ॥**

---

ममर्ष । मृषु सहने । पुरीं प्रदग्धुं कौतुकादेव ममर्ष किमयमनेन जाल्मः कर्तुं प्रभवेदिति । **'कौतुकं नर्मणीच्छायामुत्सवे कुतुके मुदि'** इत्यभिधानम् । निरामयत्वाच्च । निरवशेषं दाहः प्रदाहः । त्रिभुवनसुन्दरी नारीव सा पुरी पुराऽऽसेति पुरीमिति स्त्रीलिङ्गेनाऽह ॥ ४४ ॥ हनुमता दाहे सति षण्ढ इव निराकर्षकं निस्तेजश्च जातमिति पुरमिति नपुंसकलिङ्गेनाऽह ॥ ४५ ॥ सर्वशः सर्वासु दिक्षु, सर्वां पुरीं प्रकामं निरवशेषं दग्ध्वा ॥ ४६ ॥ असहायतया प्रकटं पश्यतोः ॥ ४७ ॥ प्रपूजितः कार्यसिद्धिजनितेन प्रहर्षेण प्रकामं पूजितः । प्रभक्ष्य स्वच्छन्दं यथेच्छं च भक्षयित्वा । प्रभुं लोकदृष्ट्या सुग्रीवम् । वस्तुतः स्वप्रभुं रामचन्द्रम् ॥ ४८ ॥ तदेवोत्तरश्लोके स्पष्टमाचष्ट– रामं सम्प्राप्येति । अगण्यगुणाभिराममिति रामशब्दं निर्वक्ति । कृतकार्यतया प्राप्तौ सम्भ्रमातिशयं सन्तोषातिशयं चाऽह– सम्प्राप्येति । स्वस्य सर्वाण्यप्यङ्गानि भूमौ निपात्य शास्त्रोक्तामष्टाङ्गोपेतां प्रणतिं चकार । **'उरसा शिरसा दृष्ट्या वचसा मनसा तथा । पद्भ्यां कराभ्यां जानुभ्यां प्रणामोऽष्टाङ्ग ईरितः'** इति हि स्मरन्ति । रामस्य महिमातिशयं जानतस्तदपि किञ्चिदेवेत्याह– सर्वाङ्गकैरिति

---

१. **'चाखिलां पुरीं स्व–'** २. **'सर्वतः पुरीम्'** ३. **'पुरीं वि–'** ४. **'चूडामणिम्'**

रामोऽपि नान्यदनुदातुममुष्य योग्य-
मत्यन्तभक्तिपरमस्य[१] विलक्ष्य किञ्चित् ।
स्वात्मप्रदानमधिकं पवनात्मजस्य
कुर्वन् समाश्लिषदमुं परमाभितुष्टः ॥ ५० ॥

**इति श्रीमदानन्दतीर्थभगवत्पादविरचिते**
**श्रीमहाभारततात्पर्य्यनिर्ण्णये श्रीरामचरिते**
**हनूमत्प्रतियानं नाम[२]**
**सप्तमोऽद्ध्यायः**

—०—

[आदितः श्लोकाः– ५८०+५०=६३०]

**अत्यन्तभक्तिभरितस्य अत्यन्तभक्त्या परिपूर्णस्य ॥ ५० ॥**

इति श्रीमहाभारततात्पर्यनिर्णयटीकायां वेदाङ्गतीर्थभट्टारकविरचितायां
तात्पर्यदीपिकायां सप्तमोऽध्यायः

—०—

कप्रत्ययेन ॥ ४९ ॥ कृतस्य कार्यस्यानुगुणं दानमनुदानम् । भक्तिपरमस्य भक्त्या परिपूर्णस्य । पॄ पालनपूरणयोः । उत्कृष्टस्य वा । सम्यग् गाढमाश्लिषत् आश्लिक्षत् । अत्रापि ककारलोपेन अस्याऽश्लेषस्य रमाश्लेषात् किञ्चिदिव न्यूनतामाह । परमं अभितुष्टः । पवनात्मजस्य परा च या मा प्रज्ञा तया चाभीक्ष्णं तुष्टः । पवनजोऽपि स्वयं पवनात्मैवेति पवनात्मजः । पवनस्याऽत्मजः पवनात्मैव सन् जायत इति ॥ ५० ॥

आचार्यगोविन्दकृते
श्रीमद्भारततात्पर्यनिर्णयस्य ।
निर्णिक्ते व्याख्याने निर्णयभावचन्द्रिकाख्याने
प्रगतं सप्तमाध्यायविवरणं सतां हृदयाभरणम् ॥ ❊ ॥

इत्याचार्यगोविन्दस्य कृतिषु
श्रीमहाभारततात्पर्यनिर्णयपञ्चिकायां निर्णयभावचन्द्रिकायां
सप्तमोऽध्यायः

—०—

१ **'–भक्तिभरितस्य'** । स एव वे.ती.पाठ इति भाति । २. **'सुन्दरकाण्डकथानिरूपणं नाम'**

२२-१०-१२

# अष्टमोऽद्ध्यायः

[**श्रीरामचरितम्**]

**ॐ ॥ श्रुत्वा हनूमदुदितं कृतमस्य सर्वं प्रीतः प्रयाणमभिरोचयते स रामः ।**
**आरुह्य वायुसुतमङ्गदगेन युक्तः सौमित्रिणा सरविजः सह सेनयाऽगात् ॥ १ ॥**

**सम्प्राप्य दक्षिणमपान्निधिमत्र देवः शिश्ये जगद्गुरुतमोऽप्यविचिन्त्यशक्तिः[1] ।**
**अग्रे हि मार्द्दवमनुप्रथयन् स धर्म्मं पन्थानमर्त्थितुमपाम्पतितः प्रतीतः ॥ २ ॥**

**तत्राऽजगाम स विभीषणनामधेयो रक्षःपतेरवरजोऽप्यथ रावणेन ।**
**भक्तोऽधिकं रघुपताविति[2] धर्म्मनिष्ठस्त्यक्तो जगाम शरणं च रघूत्तमं तम् ॥ ३ ॥**

**ॐ ॥ अस्य हनूमतः सर्वं कृतं कर्म । प्रयाणमभिरोचयते । प्रयाणाभिरुचिं चकारेत्यर्थः ॥ १ ॥ प्रतीतः ख्यातः ॥ २–९ ॥**

---

ॐ ॥ अथाऽदौ त्रयोविंशत्या वसन्ततिलकया युद्धकाण्डकथामुपस्थापयति । कृतं कृतिः । कर्मेति यावत् । अभिरोचयते अभिललाषेत्यर्थः । रुच दीप्तावभिप्रीतौ च । अभिप्रीतिरभिलाषः । तेन रोचयत इति पर्याप्तम् । अथाप्यभिरोचयत इत्याह । तेन हनुमतोऽप्यभिमतमिति स्वयमरोचयतेत्याह । अङ्गदगेन सौमित्रिणा युक्तः । अत एव रामलक्ष्मणाभ्यां हनुमता सुग्रीवाङ्गदाभ्यां च पञ्चभिरिनैः सहिता सेना । **'मुखमासीत्तु सैन्यस्य हनूमान् मारुतात्मजः । जघनं पालयामास सौमित्रिरकुतोभयः'** [व.प.२८४.१६] इति रामोपाख्याने मार्कण्डेयः ॥ १ ॥ समीपतः प्राप्तिः सम्प्राप्तिः । अत्र अपान्निधेः समीपे, तीर इति यावत् । जगद्गुरुतमोऽपि, अविचिन्त्यशक्तिरपि पन्थानमर्थितुम् । अर्थयितुमिति वक्तव्ये अर्थितुमित्याह । तेनेदमाह–अर्थनमपि न मुख्यम् । किन्तु लोकसङ्ग्रहार्थं विडम्बनमात्रमिति । **'अनित्यण्यन्ताश्चुरादयः'** इति पक्षे स्वरसं रूपम् । मार्दवमनुगुणमनुरूपमनुकूलं च धर्मं प्रथयन् । इतः लङ्कां प्रति । प्रतीतः प्रथितः । स्वभावोऽयं भगवतो यल्लोकविडम्बनमिति च ॥ २ ॥ अथ अपान्निधितीरे शयनानन्तरम्, तत्राऽजगाम । स इति कः? यो विभीषणनामधेयः । स इति सात्विकः । रामभक्त इति प्रथितश्च । रक्षःपतेरवरजः । अथापि तेन त्यक्तः । अवरजः सन्नपि त्यक्तः । अथ, 'अयुक्तं त्वया कृतं सीतापहरणम्' इति तेन हितवचनश्रवणसमनन्तरमेव कुपितेन रावणेनेति च । रघुपतौ भक्त इति त्यक्तः । धर्मनिष्ठ इति त्यक्तः ।

---

१. **'–ऽप्यविषह्यशक्तिः'** २. **'–तावतिधर्म–'**

**ब्रह्मात्मजेन रविजेन बलप्रणेत्रा नीलेन मैन्दविविदाङ्गदतारपूर्वैः ।**
**सर्वैश्च शत्रुसदनादुपयात एष भ्राताऽस्य न ग्रहणयोग्य इति स्थिरोक्तः ॥ ४ ॥**

**अत्राऽह रूपमपरं बलदेवताया ग्राह्यः स एष[1] नितरां शरणं प्रपन्नः ।**
**भक्तश्च रामपदयोर्विनशिष्णु रक्षो विज्ञाय राज्यमुपभोक्तुमिहाभियातः ॥ ५ ॥**

---

धर्मनिष्ठत्वादेव रघूत्तमं शरणं रक्षितारं जगाम । चकारो दौर्लभ्यवचनः । रक्षःकुले जातस्य दुर्लभा नन्वेतादृशी धर्मनिष्ठेति, दुर्लभतरा च रामेण रक्षेति । तं अपान्निधितीरे शयानम् । **'तत्रस्थं स तु धर्मात्मा समागच्छद् विभीषणः । भ्राता वै राक्षसेन्द्रस्य चतुर्भिः सचिवैः सह'** [२८४.४६] इति च । **'अनलानिलसम्पातिहर्याख्यैः सचिवैर्निजैः'** [यु.कां.३.४७] इति पण्डिताचार्यवचनम् । तत्र द्वयोर्नामान्तरं वाल्मीकीये–**'अनलः शरभश्चैव सम्पातिः प्रघसस्तथा'** [सं.रा;यु.कां.३७.७] इति । **'अनलश्चानिलश्चैव सम्पातिश्च हरिस्तथा'** इत्यपि प्राचीनपाठः स्यात् । तथाह्युपरि पठ्यते–**'अनिलश्चानलश्चैव हरः सम्पातिरेव च । एते विभीषणामात्या मालेयास्तु निशाचराः'** [उ.कां.५.४४] इति । अत्रापि **'हरिः सम्पातिरेव च'** इति साधुः पाठः । अर्वाचीना हरिं हरमकुर्वन् ॥ ३ ॥ **'बद्धवैराच्च पापाच्च राक्षसेन्द्राद् विभीषणः । अदेशकाले सम्प्राप्तः सर्वथा शङ्क्यतामयम्'** [यु.का.१७.४४] इति ब्रह्मात्मजेन जाम्बवता । **'प्रकृत्या राक्षसो ह्येष भ्राताऽमित्रस्य ते प्रभो । आगतश्च रिपोः पक्षात् कथमस्मिन् हि विश्वसेत्'** [१७.२३] इति रविजेन सुग्रीवेण । **'वध्यतामेष दण्डेन तीव्रेण सचिवैः सह । रावणस्य नृशंसस्य भ्राता ह्येष विभीषणः'** [२७] इति सेनाप्रणेत्रा नीलेन । यद्यपीदं वाक्यं सुग्रीववचनमिव रामायणे पठ्यते । तथाऽपि– **'एवमुक्त्वा तु तं रामं संरब्धो वाहिनीपतिः । वाक्यज्ञो वाक्यकुशलं ततो मौनमुपागमत्'** [२८] इत्युत्तरवचनात् सेनापतेर्नीलस्येदं वचनमित्युचितमिति सूचयितुं **'बलप्रणेत्रा नीलेन'** इत्याह । तथाच **'सुग्रीवस्य तु तद् वाक्यम्–'** [२९] इत्युत्तरवचने 'नीलस्य च वाक्यम्' इत्युपस्कर्तव्यमित्यर्थः । कपिराजत्वात् सुग्रीवस्य मुखतो ग्रहणम् । तदेतत् **'सुग्रीवस्य तु'** इति तुना सूचितम् । **'भावमस्य तु विज्ञाय ततस्तत्वं करिष्यसि'** [४] इति मैन्देन । विविदस्य वचनं रामायणे न पठ्यते । तथाऽपि मैन्दोक्तं विविदोऽप्यन्वमन्यतेत्याशयेन भगवत्पादो 'विविदाङ्गतारपूर्वैः' इत्याह । **'शत्रोः सकाशात् सम्प्राप्तः सर्वथा शङ्क्य एव हि । विश्वासयोग्यः सहसा न कर्तव्यो विभीषणः'** [३७] इत्यङ्गदेन । तारवचनं च रामायणे न पठ्यते । तथाऽप्यङ्गदमातुलस्तमन्वमन्यतेति स्फुटम् । अथच देवगुरोरवतारोऽयं बृहस्पतेः कथं नीतिमवदंस्तूष्णीं तिष्ठेदित्यर्थः । पूर्वैरिति गजाद्याः पञ्च गृह्यन्ते । तथा च ये हनुमता सह सीतान्वेषणार्थं दक्षिणां दिशं गताः कपिप्रधानास्ते **'मैन्दविविदाङ्गदतारपूर्वैः'** इत्येकयोक्त्याऽत्र सङ्गृहीताः । अस्य शत्रोः भ्राता ॥ ४ ॥ बलदेवतायाः । वायुर्हि बलदेवता । मूलरूपादपरमवताररूपम् । हनूमानित्यर्थः । निर्भयत्वं हि बलदेवताधर्मः । अतो विभीषणान्न भेतव्यमित्याह । ज्ञानबलदेवता च सा । अतो भक्तोऽयं

---

१. **'स एव नि–'**

**इत्युक्तवत्यथ हनूमति देवदेवः सङ्गृह्य तद्वचनमाह यथैव पूर्वम् ।**
**सुग्रीवहेतुत इमं स्थिरमाग्रहीष्ये पादप्रपन्नमिदमेव सदा व्रतं मे ॥ ६ ॥**

**सब्रह्मकाः सुरगणाः सहदैत्यमर्त्याः सर्वे समेत्य च मदङ्गुलिचालनेऽपि ।**
**नेशा भयं न मम रात्रिचरादमुष्माच्छुद्धस्वभाव इति चैनमहं विजाने ॥ ७ ॥**

**इत्युक्तवाक्य उत तं स्वजनं विधाय राज्येऽभ्यषेचयदपारसुसत्वराशिः ।**
**मत्वा तृणोपममशेषसदन्तकं तं रक्षःपतिं[1] त्ववरजस्य ददौ स लङ्काम् ॥ ८ ॥**

**कल्पान्तमस्य निशिचारि[1]पतित्वपूर्वमायुः प्रदाय निजलोकगतिं तदन्ते ।**
**रात्रित्रयेऽप्यनुपगामिनमीक्ष्य सोऽब्धिं चुक्रोध रक्तनयनान्तमयुञ्जदब्धौ ॥ ९ ॥**

---

ग्राह्य इत्याह । नितरां सर्वात्मना प्रपन्नः । नितरां भक्तश्च । रक्षो रावणाख्यमिति रामभक्तानुजप्रतीपतया निकृष्याऽह । रामानुग्रहादुपलब्धं राज्यं भोक्तुम् । अभिमानपूर्वमायातः । रामानुग्रहमभिलषन्नायातः । रावणाद् व्यावृत्तमुखः सन् रामाभिमुखः आयातः । आभिमुख्यं स्नेहाकाङ्क्षा । **'उद्योगं तव सम्प्रेक्ष्य मिथ्यावृत्तं च रावणम् । वालिनश्च वधं श्रुत्वा सुग्रीवं चाभिषेचितम् । राज्यं प्रार्थयमानश्च बुद्धिपूर्वमिहाऽगतः'** [१७.६३] इति च ॥ ५ ॥ अथ सर्वैर्निरा-करणानन्तरं केवलं हनूमति इत्युक्तवति । तद्वचनं सङ्गृह्य स्वीकृत्य । सुग्रीवहेतुतः यथा पूर्वं हनूमद्वचनं समगृह्णात् तथेदानीमपि तद्वचनं स्वीकृत्याऽह । किमाह– इमं स्थिरमाग्रहीष्य इत्यादि । आग्रहीष्ये आत्मीयत्वेन ग्रहीष्ये । तदेतन्मम व्रतमित्यात्मनेभाषयाऽऽह । **'सकृदेव प्रपन्नाय तवास्मीति च याचते । अभयं सर्वभूतेभ्यो ददाम्येतद् व्रतं मम'** [यु.कां.१८.३३] इति वाल्मीकीये ॥ ६ ॥ सब्रह्मकाः । ब्रह्मणा केन वायुना च सहिताः सब्रह्मकाः । **'को ब्रह्मणि समीरणे'** इत्यभिदधति । सहदैत्यमर्त्याः । **'वोपसर्जनस्य'** [अ.सू.६.३.८२] इति बहुव्रीहौ सहस्य स इत्यादेशो वैकल्पिकः । **'यस्य सर्वेऽवयवा उपसर्जनीभूताः स सर्वोपसर्जनो बहुव्रीहिर्गृह्यते । तदवयवस्य सह-शब्दस्य वा स इत्ययमादेशो भवति सपुत्रः, सहपुत्रः'** [का.] इति वामनः । समेत्यापि । किमुतैकैकशः । यदि च दुष्टबुद्ध्याऽऽगतः, अथाप्यमुष्मान्न मे भयम् । वस्तुतस्तु शुद्धस्वभाव इति चाहं विजाने । रक्षःसु विशिष्टं रक्षोगण-विलक्षणं जाने ॥ ७ ॥ उत वचनसमनन्तरमेव सद्यः । अभ्यषेचयत् । स्वयमभ्यषिञ्चत् । कपिवीरैश्चाभ्यषेचयत् । **'सर्वराक्षसराज्ये चाऽप्यभ्यषिञ्चद् विभीषणम्'** [व.प.२८४.४९] इति च । अपारं शुभं जगद्रक्षाकेवलोद्योगि सत्वं सामर्थ्यम् । तस्य राशिः समूहोऽयम् । अवरजस्य तु । तस्य योग्यतातिशयं तुनाऽऽह ॥ ८ ॥ रात्रित्रयेऽ-तीतेऽप्यनुपगामिनम् । **'स त्रिरात्रोषितस्तत्र नयज्ञो धर्मतत्परः । उपास्ते स्म सदा रामः सागरं मार्गसिद्धये ।**

---

१. **'–पतेस्त्ववर–'** २. **'निशिचारपति–'**

**स क्रोधदीप्तनयनान्तहतः परस्य शोषं क्षणादुपगतो दनुजादिसत्वैः ।**
**'सिन्धुः शिरस्यर्हणं[1] परिगृह्य रूपी पादारविन्दमुपगम्य बभाष एतत् ॥ १० ॥**

**'तं त्वा वयं जडधियो न विदाम भूमन् कूटस्थमादिपुरुषं जगतामधीशम् ।**
**'त्वं सत्वतः सुरगणान् रजसो मनुष्यांस्तार्त्तीयतोऽसुरगणानभितस्तथाऽस्राः ॥ ११ ॥**

**नयनान्तः कटाक्षः । तेन हतः । दनुजा(दिसत्वैः सह) ॥ १० ॥ तार्तीयतः तमोगुणतः । अभितः सर्वदेशकालेषु । अस्राः अस्राक्षीः ॥ ११ ॥**

---

**नच दर्शयते मन्दस्तदा रामस्य सागरः'** [ब्र.खं.२.६०] इति स्कान्दे । **'समुद्राय ततः क्रुद्धो रामो रक्तान्त-लोचनः'**[२.६२] इति च । युञ्जतेर्लङि अयुनगिति रूपम् । लुङि अयुजदिति । अयुजदिति वक्तव्येऽयुञ्जदित्याह । बिन्दुरप्यवधारणे । तद् यथा–**'अशनायां हि मृत्युः'** इति । अपराधी सिन्धुः शिक्षार्ह इत्यवधृत्य बाणग्रहणपूर्वकं रक्तनयनान्तमयुजदिति । अथवा भवन्त्येतादृशाः प्रयोगाः आर्षाः । तद् यथा– अबिभरिति वक्तव्ये अबिभ्रदिति प्रयुञ्जते–**'अबिभ्रदर्यमा दण्डम्'** [भाग.१.१२.१५] इति । एवमयुनगिति वक्तव्येऽयुञ्जदित्याह । तथाच द्वेधा रूपाणि भवन्ति– अयुनक्, अयुङ्क्ताम्, अयुञ्जन्निति; अयुञ्जत्, अयुञ्जताम्, अयुञ्जन्निति च । यस्य दैवी वाक् परकीया भाषा स व्याकरणमधीत्य यथाकथाचान्विष्यान्विष्य पदानि महता क्लेशेन भाषते । यस्य त्वात्मीया स स्वच्छन्दं वाङ्मयरङ्गे रिङ्गन् नृत्यन्निव विहरति । तदनुसारीणि च व्याकरणानि भवन्ति ॥ ९ ॥ हतः पीडितः । दनुजादयः जलचरत्वेन जाताः सत्वा जन्तवः । रामकोपस्य प्रधानपात्रं त एव नाब्धिरिति द्योतयितुं दनुजादीत्याह । **'सागरं शोषयिष्यामि पद्भ्यां यान्तु प्लवङ्गमाः'** [ब्र.खं.२.६७] इति, **'महार्णवं शोषयिष्ये महादानवसङ्कुलम्'** [६९] इति, **'दीप्ता बाणाश्च ये घोरा भासयन्तो दिशो दश । प्राविशन् वारिधेस्तोयं दृप्तदानवसङ्कुलम्'** [७२] इति च स्कान्दे । शिरस्यरहणं परिगृह्येति क्षैप्रविश्लेषेण विळम्बापराधजं कम्पमभिनीय दर्शयतीव । रूपी धृतपुरुषरूपः । तथाहि भागवते– **'यद्रोषतीव्रपरिवृत्तकटाक्षपातसम्भ्रान्तनक्रमकरो भयगीर्णघोषः । सिन्धुः शिरस्यर्हणं परिगृह्य रूपी पादारविन्दमुपगम्य बभाष एतत्'**[९.८.९५] इति ॥ १० ॥ इतः परम्, **'तं त्वा वयम्–'** इति, **'कामं प्रयाहि–'** इति च पद्यद्वयमविकलं भागवतादुद्धृतम् [९६–७] । एवं व्यासोक्तिभिः स्वोक्तीः सङ्गमय्य स्वग्रन्थस्य इतिहासपुराणतुल्यतां सूचयन्नुपादेयतातिशयं द्योतयति । जडा तत्वग्रहणायासमर्था धीः । विदाम वेदाम । एवं गुणमनाश्रित्य द्विषाम, दुहाम, विदाम इत्यादीनि रूपाणि प्रतनानामभिमतानि । कूटस्थो निर्विकारः । तृतीयमेव तार्तीयं तमः । सृष्टिस्थितिसंहारेषु तृतीयः संहारः । तत्सम्बन्धित्वाद्वा तार्तीयं तमः । तृतीयप्रकृतेरिदं वा । अस्राक्षीरिति वक्तव्येऽस्रा इत्याह । तेनाक्षरलोपेन भगवतः सृष्टिरयत्नसाध्येत्याह । तथाहि वैदिकः प्रयोगः– **'प्र बाहू अस्राक् सविता सवीमनि'** [ऋ.सं.४.५३.३] इत्यादि । यद्यपि भारते–**'सागरस्तु ततः स्वप्ने दर्शयामास राघवम्'**[व.प.२८४.३३] इति पठ्यते । तत्र राघवस्य स्वप्न इति नार्थः । सर्वग्रन्थान्तरविरोधात् । अस्वप्नत्वाच्च भगवतः । सागरस्यैवायं

---

१. **'अर्हणम्'** इति विश्लिष्य पठनीयम् ।

**'कामं प्र याहि जहि विश्रवसोऽवमेहं त्रैलोक्यरावणमवाप्नुहि वीर पत्नीम् ।**
**'बध्नीहि सेतुमिह ते यशसो वितत्यै गायन्ति दिग्विजयिनो यमुपेत्य भूपाः' ॥ १२ ॥**

**इत्युक्तवन्तममुमाश्वनुगृह्य बाणं तस्मै धृतं दितिसुतात्मसु चान्त्यजेषु ।**
**शार्वाद् वराद् विगतमृत्युषु दुर्ज्जयेषु निःसङ्कचकेष्वमुचदाशु ददाह सर्वान् ॥ १३ ॥**

**कृत्वेरिणं[१] तदथ मूलफलानि चात्र सम्यग् विधाय भवशत्रुरमोघचेष्टः ।**
**बद्धुं दिदेश सुरवर्द्धकिनोऽवतारं[२] तज्ज्ञं नळं[३] हरिवरानपरांश्च सेतुम् ॥ १४ ॥**

**अवमेहं अपत्यमिति यावत् । इह मयि ॥ १२ ॥ अनुगृह्य अभयं दत्त्वा ॥ १३ ॥ तदीरिणं ऊषरस्थलं सम्यक् कृत्वा सुभूमिं कृत्वा । अत्र च मूलफलानि विधाय ॥ १४–९ ॥**

---

स्वप्नः । स्वस्याऽपनं हि स्वप्न उच्यते । **'स्वं ह्यपीतो भवति'** इत्यादिश्रवणात् । ज्ञानेनाऽग्निरेवात्राऽग्निर्नाम । ध्यानेन भगवानयमिति प्रतिभाने सतीति यावत् । **'वैडूर्यमणिसङ्काशो नानामणिविभूषितः । गङ्गादिभिर्वृतो दारै रामं नत्वाऽभ्यभाषत'**[सं.रा;यु.कां.२.४३] इति सङ्ग्रहरामायणे ॥ ११ ॥ कामं समुद्रमतीत्य याहि । लङ्कां प्रति याहीति वा । प्रत्यर्थे प्रः । हे प्र परमात्मन्निति वा । **'अकयप्र–'** इत्यादेः । विश्रवसोऽवमेहम् । अवमं मेहजातं सुतं जहि । मिह सेचने । अत्र रेतःसेचनम् । अवमेहं मलमिति वा । त्रैलोक्यं रावयति यस्तं रावणं जहि । तथाहि वाल्मीकीये–**'यस्माल्लोकत्रयं चैतद् रावितं भयमागतम् । तस्मात् त्वं रावणो नाम नाम्ना राजन् भविष्यसि'** [उ.कां.१६.३७] इति शिववचनम् । अग्निना च कैलासादानयनाख्येनावदानेनार्पितां सीतामाप्नुहि । अग्निप्रवेशरूपेण वाऽवदानेन । अपहृतस्य पुनराप्तिश्चावाप्तिः । इह मदीयजलमध्ये । गायन्ति ते यशः । **'अस्ति त्वत्र नळो नाम वानरः शिल्पिसम्मतः । त्वष्टुः काकुत्स्थ तनयो बलवान् विश्वकर्मणः । स यत् काष्ठं तृणं वाऽपि शिलां वा क्षेप्स्यते मयि । सर्वं तद् धारयिष्यामि स ते सेतुर्भविष्यति'** [व.प.२८४.४१–२] इति रामोपाख्याने ॥ १२ ॥ अन्त्यजेषु स्वभावतः । **'मम कुक्षौ दुकूलाख्ये मरुदेशे महासुरान् । निसूदयेदयं देव शरो मोघेतरस्तव । इत्यर्थितः सागरेण सगरान्वयशेखरः । आभीरजन्मनो दैत्यानवधीत् तेन पत्रिणा'** [सं.रा;यु.कां.२.४९–५०] इति सङ्ग्रहरामायणे । लोकस्यान्त्याय नाशाय जाताः अन्त्यजाः । आ भियं रान्तीति लोकभयङ्करा आभीराः । अमुचदिति मुञ्चतेर्लुङि रूपम् । **'व्यत्ययो बहुलमिति वचनादमुचत् अमुञ्चदित्यर्थः'** इति भावप्रकाशिकावचनं स्फुटं प्रक्षिप्तम् ॥ १३ ॥ **'भवेदिरिणमूषरः'** इत्यभिधानम् । इरिणं कृत्वा नाशयित्वा । कृञ् हिंसायाम् । ईरिणं वा । ऋच्छतेरिनन्

---

१. **'कृत्वेरणम्'**

२. हृषीकेशतीर्थीयादर्शे– **'–वर्धकिणो–'** इति लिखितम् । स्खलितं सम्भाव्यते । इतरत्र प्राचीनकोशेषु **'–वर्धकिनो–'** इत्येव पाठः ।

३. **'नलम्'**

**'बध्वोदधौ रघुपतिर्विविधाद्रिकूटैः सेतुं कपीन्द्रकरकम्पितभूरुहाङ्गैः ।**
**'सुग्रीवनीलहनुमत्प्रमुखैरनीकैर्लङ्कां[1] विभीषणदृशाऽविशदाशु दग्धाम्' ॥ १५ ॥**

**प्राप्तं निशाम्य[2] परमं भुवनैकसारं निःसीमपौरुषमनन्तमसौ दशास्यः ।**
**त्रासाद् विषण्णहृदयो नितरां बभूव कर्त्तव्यकर्म्मविषये च विमूढचेताः ॥ १६ ॥**

---

ईनन् वा । **'ईरिणं तूषरे शून्ये'** इति, **'इरिणं निराश्रये भूभागे कथितमूषरे'** इति चाभिधानम् । इरिणं सम्यक् कृत्वा । ऊषरमनूषरं विधायेति वा । डु कृञ् करणे । कथम्? अत्र मूलफलानि विधाय । अत्र मरुस्थले मूलफलानि च सम्यक् समृद्धतया विधाय । ननु कथं मूलफलानि? **'लघ्वक्षरं पूर्वं निपततीति वक्तव्यम्'** इति हि वार्तिकम् [अ.सू.२.२.३४] । न भगवान् सर्वात्मनाऽर्वाचीनान् वैयाकरणाननुसरतीति वस्तुस्थितिः । यद्यन्वसरिष्यत्, अक्षौहिणीत्येव प्रायोऽवक्ष्यत् । अथापि वार्तिकमेवानुसुसूर्षसि, अयि वार्तिकमुग्ध, अवधत्स्व–स एव पुनराह वार्तिककारः–**'अभ्यर्हितं च पूर्वं निपततीति वक्तव्यम्'** इति । अभ्यर्हितं हि मूलम् । कथम्? अफलानि हि मूलानि भवन्ति । न त्वमूलानि फलानि । अपिच कन्दभावे मूलानि फलान्यपि भवन्ति । न फलानि मूलान्यपीति । **'ततो मयोत्क्षिप्तशरो मरुदेशो ह्यपां कृतः'** [सृ.खं.४०.६१] इति पाद्मे । मरुदेशो ह्यपां देशः कृत इत्यर्थः । यं मरुकान्तारमाहुः । **'सीताकान्तप्रसादेन मरुकान्तारनामकम् । वनं तदभवत् पुण्यम्–'** [सं.रा;यु.कां.२.५१] इति सङ्ग्रहरामायणे । सुरवर्धकिनो विश्वकर्मणोऽवतारं न केवलम्, तस्मादेव जातं च । नळं सेतुं बद्धुं दिदेश । बद्धुमित्येव प्रतनं रूपम् । बन्द्धुमित्यर्वाचीनाः । **'बध बन्धने'** इत्यस्य वेदं रूपम् । नळति शत्रूनर्दयतीति नळः । नळ गन्धे । नड वा । **'गन्धोऽर्दनम्'** इति क्षीरस्वामी । पाणिनीयास्तु **'णल गन्धे'** इति पठन्ति । त्यक्तळकाराणां गतिरन्या न विद्यते ॥ १४ ॥ **'बध्वोदधौ–'** इति पुनर्भागवतवचनम् [९८] । अद्रिकूटैः अद्रिशिखरैः । कम्पितानि सकम्पमुत्पाटितानि भूरुहाङ्गानि वृक्षशाखाः येषु तानि कूटानि । कम्पितैर्भूरुहाङ्गैर्वा । ननु **'अल्पाच्तरम्'** [अ.सू.२.२.३४] इति नीलपदं पूर्वं निपतेत् । **'अभ्यर्हितं च पूर्वं निपततीति वक्तव्यम्'** इति हनुमत्पदं वा । **'लघ्वक्षरं पूर्वं निपततीति वक्तव्यम्'** इति हनुमत्पदमेव वा । तत् किमिदं **'सुग्रीवनीलहनुमत्प्रमुखैः'** इति । विस्मृत-पदज्ञसम्प्रदायोऽसि । द्विपदे द्वन्द्व एवायं नियमः । यदाह जयादित्यः–**'बहुष्वनियमः । शङ्खदुन्दुभिवीणाः । वीणाशङ्खदुन्दुभयः'** [का.] इति । अथाप्यत्र काचनास्ति विवक्षा– कपिराज इति प्रथमं सुग्रीवः । ततः सेनापतिरिति नीलः । ततो हनुमानिति । अनीकैः सैनिकैः । **'अनीकोऽस्त्री रणे सैन्ये'** इत्यभिधानम् । विभीषणस्य दृष्टिपातमात्रेण दग्धप्रायाम् । अथच, आशुदग्धामित्येकं पदम् । लङ्कां प्रति पतितुं यो नभो व्यानशे स आशुराशुगतिर्हनुमान् । तेन दग्धाम्, अतश्च विश्वकर्मणा पुनर्निर्मिताम्, लङ्कां विभीषणदृशा, विभीषणदर्शितेन पथा, अविशदित्यर्थः ॥ १५ ॥ निशाम्य दृष्ट्वा । शमयति दुःखम् । परिहरतीत्यर्थः । निशमयति गानम् । शृणोतीत्यर्थः । निशामयति

---

१. **'–रनेकैर्ल–'** २. **'निशम्य'**

**प्रस्थाप्य वालिसुतमेव च राजनीत्यै रामस्तदुक्तवचनेऽप्यमुनाऽगृहीते ।**
**द्वारो रुरोध स चतस्र उदीर्णसैन्यो रक्षःपतेः पुर उदारगुणः परेशः ॥ १७ ॥**

**द्वारां निरोधसमये स दिदेश पुत्रं वाराम्पतेर्दिशि सुरेश्वरशत्रुमुग्रम् ।**
**प्राच्यां प्रहस्तमदिशद् दिशि वज्रदंष्ट्रं प्रेताधिपस्य शशिनः स्वयमेव चागात् ॥ १८ ॥**

**विज्ञाय तत् स भगवान् हनुमन्तमेव देवेन्द्रशत्रुविजयाय दिदेश चाऽशु ।**
**नीलं प्रहस्तनिधनाय च वज्रदंष्ट्रं हन्तुं सुरेन्द्रसुतसूनुमथाऽदिदेश ॥ १९ ॥**

---

काननसुषमाम् । पश्यतीत्यर्थः । त्रासाद् विषण्णः । विषादाच्च विमूढचेताः । विमूढं किं कर्तव्यमिति निर्णेतुमसमर्थम् ॥ १६ ॥ प्रस्थाप्य । **'निवेश्योपवने सैन्यं स शूरः प्राज्यवानरम् । प्रेषयामास दूत्येन रावणस्य ततोऽङ्गदम्'** [व.प.२८४.५४] इति रामोपाख्याने । प्रस्थाप्यैव द्वारो रुरोध । न ततः पूर्वम् । कुतः? राजनीत्या एव । आदौ साम, ततो दण्ड इति हि राजनीतिः । तां राजनीतिं दर्शयितुमेव । कं दूतम्? वालिसुतमेव । न यङ्कश्चन । किन्तु युवराजमेव । तत्रापि वालिनाऽनुभूतपराभवरुचेर्वालिसुतमेव प्रस्थाप्य । राजनीत्यै च । तव निग्रहीतुरयं सुत इत्यङ्गदस्य वीर्यप्रकाशनार्थं च । उक्तवचनेऽपि । तेन हितवचने उक्तेऽपीत्यर्थः । अमुना रावणेन अगृहीते अस्वीकृते । प्रत्युत आगृहीते आग्रहेण तिरस्कृते सति । 'मामवमन्तुमेव राम एनं प्रेषयामास । तस्मान्नैतदङ्गीकार्यम्' इत्याग्रहः । रक्षःपतेः पुरः पुरस्य द्वारः गोपुराणि रुरोध । तदपि रक्षःपतेः पुरस्तादेव। उदीर्ण उद्गतः समृद्धो वा । उदारा महान्तोऽस्य गुणाः ॥ १७ ॥ स रावणः वाराम्पतेर्दिशि प्रतीच्यामिन्द्रजितम् । शत्रुप्रमथनो हस्तोऽस्येति प्रहस्तं प्राच्याम् । हस्तावेवास्य प्रहरणमिति वा । प्रेताधिपस्य दिशि वज्रदंष्ट्रम् । वज्रकठोरे दंष्ट्रे अस्येति वज्रदंष्ट्रः । यद्यपि रामायणे **'दक्षिणस्यां महावीर्यौ महापार्श्वमहोदरौ'** [यु.कां.३६.१७] इत्युक्तम् । तौ सहायकौ । वज्रदंष्ट्रः दक्षिणस्यां दिशि सेनाग्रणीरित्यभिप्रायः । अत एव **'अङ्गदो दक्षिणद्वारम्'** [४१.३९] इति दक्षिणद्वारगतोऽङ्गदो वज्रदंष्ट्रं जघानेति सङ्गच्छत इत्याचार्याशयः । रामायणे चोपरिष्टात् स्फुटमेतत्– **'अब्रवीद्राक्षसं शूरं वज्रदंष्ट्रं महाबलम् । गच्छ त्वं वीर निर्याहि राक्षसैः परिवारितः'** [यु.कां.५३.२–३] इति; **'प्रावृट्काले यथा मेघा नर्दमानाः सविद्युतः । निःसृता दक्षिणद्वारादङ्गदो यत्र यूथपः'** [१३] इति च । रावणचमूपतिष्वेकोऽयम् । शशिनः दिश्युदीच्याम् । **'उत्तरस्यां पुरद्वारि व्यादिश्य शुकसारणौ । स्वयं चात्र भविष्यामि–'** [३६.१९] इति, **'उत्तरं नगरद्वारं रावणः स्वयमास्थितः'** [३७.१३] इति च ॥ १८ ॥ हनुमन्तमेव च । शत्रुपक्षप्रधानस्य विजयाय स्वपक्षप्रधानमेव दिदेशेति चकारेणाऽह । प्राधान्यार्थो हि चः । विजयाय केवलम् । न हन्तुम् । लक्ष्मणेन हि स हन्तव्यः । नीलं प्रहस्तनिधनाय । अङ्गदं च वज्रदष्ट्रं हन्तुम् । न केवलं जेतुम् । नीलं च । प्रहस्ताद् हीनबलं चेत्यर्थः । नीचत्वार्थे चः । विभीषणेन साकं नीलोऽपि प्रभविष्यतीति जानन्नित्यर्थः । अथ हनुमतः नीलस्य च देशनानन्तरम् । सुरेन्द्रसुतसूनुं

**मद्ध्ये हरीश्वरमधिज्यधनुर्न्नियुज्य यस्यां स राक्षसपतिर्द्दिशमेव तां हि ।**
**उद्दिश्य संस्थित उपात्तशरः सखड्गो देदीप्यमानवपुरुत्तमपूरुषोऽसौ ॥ २० ॥**

**विद्रावितो हनुमतेन्द्रजिदाशु हस्तं तस्य प्रपन्न इव वीर्य्यममुष्य जानन् ।**
**नीलो विभीषण उभौ शिलया च शक्त्या सञ्चक्रतुर्य्यमवशं गमितं प्रहस्तम् ॥ २१ ॥**

**मध्ये सेनामध्ये ॥ २०–२ ॥**

---

वालिसुतमङ्गदम् ॥ १९ ॥ हरीश्वरं सुग्रीवम् । ननु कथमधिज्यधनुः? **'धनुषश्च'** [अ.सू.५.४.१३२] इति हि पाणिनिः स्मरति । तथाहि जयादित्यः–**'धनुःशब्दान्तस्य बहुव्रीहेरनङादेशो भवति समासान्तः । शार्ङ्गं धनुरस्य शार्ङ्गधन्वा । गाण्डीवधन्वा । अधिज्यधन्वा'** इति । ननूक्तमत्र समाधानं विभाषावादिनस्तत्ववादिन इति । न भोः । नात्र तत्ववादिनः किल नासान्यासः शक्यसम्भवः । यतोऽनेन सूत्रेण नित्यः प्राप्तोऽनङ्प्रत्यय उत्तरसूत्रेण न्यषिध्यत–**'वा सञ्ज्ञायाम्'**[१३३] इति । अनङादेशो वा भवति सञ्ज्ञायां विषय इति । तथाह्युदाहरन्ति–**'शतधनुः, शतधन्वा । दृढधनुः, दृढधन्वा'** इति । तर्हीदमिहावगन्तव्यं भवति भवता । सर्वाण्यपि विशेषणवचनानि विद्वद्रूढ्या नामपदान्येव भवन्ति भगवति विषये । सर्वाधिका अभेद्या ज्या सर्वातिशायि सर्वविजयि धनुश्चास्येति अधिज्य-धनुरिति भगवतो योगरूढं नाम । तस्मात् सञ्ज्ञायां वेति वचनादधिज्यधनुरिति, अधिज्यधन्वेत्युभयमपि भगवति विषये साधु भवति । यथा पुष्पधन्वेति कामस्य नाम । तेन पुष्पधनुरिति च स्यादेव । गाण्डीवधन्वेति पार्थस्य नाम । तेन गाण्डीवधनुरिति च स्यादेव । संस्थितः प्रस्थितः । समेत्य सङ्गराय सज्जः स्थित इति वा । दिशमेव तामुदीचीम् ॥ २० ॥ तस्य हनुमतः हस्तं प्रपन्न इव । क्षणमात्रेण हस्तग्राहं निग्रहीष्यति इति भीतः । अस्य हनुमतः वीर्यं लङ्कादहनसमये स्वयमनुभूतं स्मरन्नयुध्यमान एव विद्रावितः । **'इन्द्रजित् पश्चिमद्वारं राक्षसैर्बहुभिर्वृतः'** [यु.कां.३७.११] इति, **'हनुमान् पश्चिमद्वारम्'**[२८] इति च रामायणे । तेनार्थात् सूचितमर्थमाह– विद्रावितो हनुमतेति । लक्ष्मणेन समागमः पाश्चात्योऽपि रामायणे भारते च पूर्वमुक्तः । सञ्चक्रतुः सङ्गत्य चक्रतुः । प्रहस्तं सेनापतिम् । **'प्रहस्तस्य शिलां नीलो मूर्ध्नि तूर्णमपातयत्'** [यु.कां.५८.५३] इति रामायणे । **'अत्र प्रहस्तो नीलेन हतो राक्षसपुङ्गवः'** [सृ.खं.४०.६७] इति पाद्मे । **'ततः प्रगृह्य विपुलां शतघण्टां विभीषणः । अनुमन्त्र्य महाशक्तिं चिक्षेपास्य शिरः प्रति । पतन्त्या स तया वेगाद् राक्षसोऽशनिवेगया । हृतोत्तमाङ्गो ददृशे वातरुग्ण इव द्रुमः'** [व.प.२८७.३–३] इति च भारते । वचनद्वयमपि सङ्गमय्याविरोधेन व्याचष्टे– नीलो विभीषण उभौ शिलया च शक्त्येति । प्रहस्तोऽयं विभीषणमातुलः कैकसीभ्राता सुमालितनयः । प्रधानो वाहिनीपतिः । एतेन **'अकम्पनं प्रहस्तं च युध्यन्तं नील आवधीत्'** [अ.पु.१०.८] इत्याग्नेयवचनम्, **'ततः प्रगृह्य विपुलामष्टघण्टां विभीषणः । अभिमन्त्र्य महाशक्तिं चिक्षेपास्य शिरः प्रति । पतन्त्या स तदा वेगाद् राक्षसोऽशनिना यथा । हृतोत्तमाङ्गो ददृशे वातरुग्ण इव द्रुमः'** [ब्र.खं;से.मा.४४.२६–७] इति, **'त्रिदिनेन प्रहस्तस्य नीलेन विहितो**

**नीलस्य नैव वशमेति स इत्यमोघशक्त्या विभीषण इमं प्रजहार साकम् ।**
**तस्मिन् हतेऽङ्गद उपेत्य जघान वज्रदंष्ट्रं निपात्य भुवि शीर्षममुष्य मृद्नन् ॥ २२ ॥**

**सर्वेषु तेषु निहतेषु दिदेश धूम्रनेत्रं स राक्षसपतिः स च पश्चिमेन ।**
**द्वारेण मारुतसुतं समुपेत्य दग्धो गुप्तोऽपि शूलिवचनेन दुरन्तशक्तिम् ॥ २३ ॥**

**अकम्पनोऽपि राक्षसो निशाचरेशचोदितः ।**
**उमापतेर्वरोद्धतः क्षणाद्धतो हनूमता ॥ २४ ॥**

**तेष्विति बहुवचनं प्रहस्तवज्रदंष्ट्रतदनुगापेक्षया ॥ २३–५ ॥**

---

**वधः'**[ब्र.खं;ध.मा.३०.६१] इति स्कान्दवचनं च गदिताभिप्रायम् । अत एवाऽह– साकं प्रजहारेति । ननु नील-विभीषणयोः को हन्तेति विरोधः परिहृतः । अथापि न निस्तारः । भारतं शतघण्टामाह शक्तिम् । स्कान्दमष्टघण्टाम् । कतीति समन्वयसे? समन्वीयते यावता न विरोधः । कथम्? शृणु । अष्टौ महाघण्टाः । बहवश्च क्षुद्रघण्टाः, याः किणिकिणायन्त इति किङ्किण्य उच्यन्ते । तेन न कोऽपि विरोधः । शतमिति च न सङ्ख्यावचनम् । बहुघण्टा-मित्यर्थः । निपात्य भुवि शीर्षमिति– **'–खड्गेनास्य महच्छिरः । जघान वज्रदम्ष्ट्रस्य वालिसूनुर्महाबलः । रुधिरोक्षितगात्रस्य बभूव पतितं द्विधा'** इति रामायणे [यु.कां.५४.३५–६] ॥ २१–२ ॥ सर्वेषु तेषु निहतेषु । ननु द्वावेव निहतौ, प्रहस्तश्च वज्रदंष्ट्रश्च । उक्तौ द्वौ । अनुक्ता अनेके । केके? येऽनुयायिनस्तयोः । वक्ष्यति हि स्वयमेव– **'विदुद्रुवुस्तस्य तु येऽनुयायिनः कपिप्रवीरैर्निहतावशेषिताः । यथैव धूम्राक्षमुखेषु पूर्वम्'** [६९] इति । दुरन्तशक्तिं मारुतसुतम् । रुद्रवरेण रक्षितोऽपि दग्धः । **'विद्राव्य राक्षसं सैन्यं हनुमान् मारुतात्मजः'** [५२.३२] **'धूम्राक्षस्य शिरोमध्ये गिरिशृङ्गमपातयत्'** [३६] इति च । हनुमत्तेजसा दग्ध इव नाशित इत्यर्थः । निःशेषनाशोऽत्र दाहः । **'स निर्यातो महावीर्यो धूम्राक्षो राक्षसैर्वृतः । प्रहसन् पश्चिमद्वारं हनूमान् यत्र यूथपः'** [५१.२९] इति च । **'कपिसैन्यं समालोक्य विद्रुतं पवनात्मजः । धूम्राक्षमाजघानाऽशु शरेण रणमूर्धनि'** [ब्र.खं;से.मा.४४.२९] इति स्कान्दे । शरेण शरवत् तीक्ष्णेन, शृणातीति हिंसकेन वा गिरिशृङ्गेण–**'हनुमान् गिरिशृङ्गेण धूम्राक्षमवधीद् रिपुम्'** [१०.८] इत्याग्नेये । अयं प्रहस्तानुजः । रावणसचिवेष्वेकः । उभावपि सुमालितनयावपि भिन्ने अनयोर्जनन्यौ । केतुमती प्रहस्तजननी । सुन्दरी धूम्राक्षस्य ॥ २३ ॥ अथ द्वाभ्यां प्रमाणिकाभ्यां हनूमतः कपीनां च प्लुतगतिमाह । **'तान् मृत्युवशमापन्नानकम्पनवशं गतान् । समीक्ष्य हनुमान् ज्ञातीनुपतस्थे महाबलः'** [५६.८] इति, **'स वृक्षेण हतस्तेन सक्रोधेन महात्मना । राक्षसो वानरेन्द्रेण पपात च ममार च'** [३०] इति च । ननु पुनर्विरोधः । **'अकम्पनं प्रहस्तं च युध्यन्तं नील आवधीत्'** इति प्रागुद्धृताग्नेयवचनेनाकम्पनं नीलो जघानेति प्रतीयते । हनुमानिति वाल्मीकीये । विरोधाभासोऽयम्, न विरोधः । शत्रूणां पुरोऽप्यप्रकम्पं प्रहस्तमित्याग्नेयवचनार्थः । तत् को विरोधः? अस्ति

**अथास्त्रसम्प्रदीपितैः समस्तशो महोल्मुकैः ।**
**रघुप्रवीरचोदिताः पुरं निशि स्वदाहयन् ॥ २५ ॥**

**ततस्तौ निकुम्भोऽथ कुम्भश्च कोपात् प्रदिष्टौ दशास्येन कुम्भश्रुतेर्हि ।**
**सुतौ सुप्रहृष्टौ रणायाभियातौ कपींस्तान् बहिः सर्वशो यातयित्वा[1] ॥ २६ ॥**

**कुम्भश्रुतेः कुम्भकर्णस्य ॥ २६–३५ ॥**

---

विरोधः । स्कान्द एव द्विधा पठ्यते–**'अकम्पनं चाप्यवधीत् कुमुदो वानरर्षभः'** [ब्र.खं;से.मा.४४.३४] इति, **'द्वादश्यामाञ्जनेयेन धूम्राक्षस्य वधः कृतः । त्रयोदश्यां तु तेनैव निहतोऽकम्पनो रणे–'** [ब्र.खं;ध.मा.३०.५८] इति च । ननूत्तरवचनानुसारेणैव पूर्ववचनस्यार्थो निर्धार्यते । उत्तरत्र धर्मारण्यमाहात्म्येऽकम्पन आञ्जनेयेन हत इति निरवकाशमुच्यते । सावकाशं च पूर्ववचनम् । वानरर्षभो हनुमानेवासुरहननेन पृथ्वीमानन्दयन् कुमुद उच्यते सकला कुरमोमुद्यतानेनेति । अयमकम्पनोऽपि सुमालितनयेष्वेकः प्रहस्तानुजः । राक्षसानां चमूपतिः ॥ २४ ॥ समस्तशः सर्वे । सङ्गताः कपय इत्यर्थः । समस्तं पुरं वा । उल्मुकानि ज्वलन्ति काष्ठानि । अग्निसंयोगेन दीपितानि । महान्तीति प्रदीपितानि । अस्त्रमन्त्रैः प्रयोजितानीति सम्प्रदीपितानि । सुष्ठु यथा निश्यपि दिशिदिश्यपि दिवाभ्रमः स्यात् तथाऽदाहयन् । **'ततोऽस्तं गत आदित्ये रौद्रे तस्मिन् निशामुखे । लङ्कामभिमुखाः सोल्का जग्मुस्ते प्लवग-र्षभाः'**[७५.४] इति, **'तेषां गृहसहस्राणि ददाह हुतभुक् तदा'**[६] इति च । पूर्वं हनुमता दग्धम्, पश्चाद् विश्वकर्मणा पुनारचितमपि पुरं पुनः कपयोऽदाहयन्नित्यर्थः । रामायणे क्रमव्यत्यासस्तु **'व्यत्यासः प्रातिलोम्यं च'** इत्यादिवचनानुसारेण योजनीयः । अवश्यं चैतदेवं वक्तव्यम् । तत् किल युद्धतन्त्रं यदादौ परसैन्ये भीतिजननाय परस्वं दहन्ति । न प्रमुखेषु हतेषु, अवसितप्राये चाऽयोधने । नापि रामः पुरं दग्धं शासितुं विभीषणाय ददाविति साम्प्रतम् । तस्मादा-दावेव दाह इति सूक्तम् । ततश्च कुम्भादीनां वधः कुम्भकर्णवधात् पूर्वमेवेति च ॥ २५ ॥ तौ महाबलाविति सम्मतौ । निकुम्भोऽथ कुम्भः । वयसाऽग्रजोऽपि कुम्भः शक्त्या निकुम्भादनन्तर इत्यनेनाह । अग्रजो हि कुम्भः– **'निकुम्भाग्रज वीर्यं ते बाणवेगवदद्भुतम्'** [७६.७२] इति हि वाल्मीकीये । कुं कुलं भूमिं वा भापयति स्वपौरुषेणेति कुम्भः । भा दीप्तौ । कुं बिभर्ति वा । कुम्भ इव वा कुम्भः । निपुणतरः कुम्भो निकुम्भः । दशास्येन कोपात् प्रदिष्टौ । कोपाद् रणायाभियातौ । हृदि कोपं निधाय । कुम्भश्रुतेः कुम्भकर्णस्य हि प्रसिद्धौ सुतौ । जयः पाणाविवाऽहित इति भ्रान्त्या हृष्टौ । रामं जेष्याव इति प्रहृष्टौ । कियदिदं कपिबलमिति सुप्रहृष्टौ । तान् दग्ध-प्रायपुरान्, दाहेन पुरं विभ्राम्य तरसाऽन्तर्धावतः । रणाङ्गणाद् पुराद्वा बहिर्यातयित्वा निष्कास्य । **'यत निरा-करणे'** । **'यत निकारे'** इत्यपि पठन्ति । निकारः परिभवः । न्यक्कार इत्येतत् ॥ २६ ॥

---

१. **'यापयित्वा'**

**स कुम्भो विधातुः सुतं तारनीलौ नळं[1] चाश्विपुत्रौ जिगायाङ्गदं च ।**
**सुयुद्धं च कृत्वा दिनेशात्मजेन प्रणीतो यमस्याऽशु लोकं सुपापः ॥ २७ ॥**

**ततो निकुम्भोऽद्रिवरप्रदारणं महान्तमुग्रं परिघं प्रगृह्य ।**
**ससार सूर्य्यात्मजमाशु भीतः स पुप्लुवे पश्चिमतो धनुःशतम् ॥ २८ ॥**

**तं भ्रामयत्याशु भुजेन वीरे भ्रान्ता दिशो द्यौश्च सचन्द्रसूर्य्या[2] ।**
**सुराश्च तस्योरु बलं वरं च शर्वोद्भवं वीक्ष्य विषेदुरीषत् ॥ २९ ॥**

**अनन्यसाद्ध्यं तमथो निरीक्ष्य समुत्पपाताऽशु पुरोऽस्य मारुतिः ।**
**प्रकाशबाह्वन्तर[3] आह चैनं किमेभिरत्र प्रहराऽयुधं ते ॥ ३० ॥**

---

विधातुः सुतं जाम्बवन्तम् । अश्विपुत्रौ मैन्दविविदौ । सुयुद्धं पूर्वतनयुद्धापेक्षयाऽधिकमुद्भणं च युद्धं कृत्वा अङ्गदादीन् जिगाय । ततः दिनेशात्मजेन सुग्रीवेण च सुयुद्धं कृत्वा तेनैव यमस्य लोकं नरकं प्रापितः । यतः सुपापः । महापातकानामाकरः । **'ततः कुम्भः समुत्पत्य सुग्रीवमभिपत्य च'** [७६.८६] । **'मुष्टिनाऽभिहतस्तेन निपपाताऽशु राक्षसः'** [९२] इति च ॥ २७ ॥ भूयिष्ठशिलोऽभेद्योऽद्रिरद्रिवरः । तमपि द्विधा प्रभज्य दारयतीति । महान्तमित्युग्रत्वस्यापि विशेषणम् । अत्युग्रम् । परिघः अयोमयो निशिताग्रो लगुडविशेषः । प्रगृह्य । आविध्य कपिकुलं प्रदहन्निव गृहीत्वा । निकुम्भ आशु ससार । सूर्यात्मज आशु पुप्लुवे । प्लवतिं गतौ पठन्ति प्लुङ् गताविति । द्रुत गतौ प्रयुञ्जते । कपयो हि उत्प्लवमुत्प्लवं प्लवमानाः प्लवङ्गा उच्यन्ते । पश्चिमतः पृष्ठतः ॥ २८ ॥ भ्रान्ता इव हतप्रभाः । सचन्द्रसूर्या द्यौश्च भ्रान्ता । **'सतारग्रहनक्षत्रं सचन्द्रं समहाग्रहम् । निकुम्भपरिघाघूर्णं भ्रमतीव नभस्तळम्'** [७७.८] इति च । रात्राविदं सञ्जातमिति रामायणे सनक्षत्रं सचन्द्रमित्याह । भूमेरपरभागस्थः सूर्योऽपि बभ्रामेवेति सूचयन्नाचार्यः 'सचन्द्रसूर्या द्यौः' इत्याह । वाल्मीकिरपि 'महाग्रह'पदेन सूर्यमेव कटाक्षयति । अभिमानिविवक्षया चेदमवादीत्याचक्षते । दिगभिमानिन्यो देवताः, सचन्द्रसूर्या द्युमानिनी च भयसम्भ्रान्ता बभूवुरिति । तदात्वे सुरा इति तदितरदेवता उच्यन्त इति व्याख्येयम् । **'सह चैवामरावत्या'** [८] इत्युक्तं विवृणोति– सुराश्च । उरुबलं वीक्ष्य दृष्ट्वा । उरुवरं च वीक्ष्य विमृश्य ॥ २९ ॥ अथो सुग्रीवादीनामपि प्लवनानन्तरम् । अथो निकुम्भस्यानन्यसाध्यत्वादेव । तं समापयितुमुत्पपात । प्रकाशं प्रकटं बाह्वन्तरमुरो यस्य । 'प्रकाश्यबाह्वन्तर आह' इति पाठे तु– प्रकाशनं न दुरभिमानतः, किन्तु शत्रुदमनाय प्रकाशनीयं सम्पन्नमिति सूचयितुम्–'प्रकाश्यबाह्वन्तरः' इत्याह ।

---

१. **'नलम्'** २. **'–न्द्रसूर्याः ।'**

३. **'प्रकाश्यबाह्वन्तरमाह' । प्राचीनादर्शेऽधस्तात् '–श्य' इति लिखितमिव । नातिस्फुटम् । तदा तु–'प्रकाश्यबाह्वन्तर–' इत्येव प्रा. पाठः स्यात् ।**

**इतीरितस्तेन स राक्षसोत्तमो वरादमोघं प्रजहार वक्षसि ।**
**विचूर्णितोऽसौ तदुरस्यभेद्ये यथैव वज्रो विपतौ वृथाऽभवत्** ॥ ३१ ॥

**विचूर्णिते निजायुधे निकुम्भ एत्य मारुतिम् ।**
**प्रगृह्य चाऽत्मनोंऽसके निधाय जग्मिवान् द्रुतम्** ॥ ३२ ॥

**प्रगृह्य कण्ठमस्य स प्रधानमारुतात्मजः ।**
**स्वमाशु मोचयंस्ततो न्यपातयद् धरातळे**[१] ॥ ३३ ॥

'प्रकाश्य, बाह्वन्तरे' इति वा प्रतृण्णम् । 'बाह्वन्तरे' इति द्विवचनम् । उभयोरेकरूपत्वद्योतनायाप्रगृह्य प्रयोगः । तथाचायमर्थः– बाह्वोरन्तरे सव्यापसव्यभागौ प्रदर्श्याऽहेति । केचिद् वामप्रहरणा भवन्ति । केचिद् दक्षप्रहरणाः । यः को वा भव । यत्रकुत्र वा प्रहर । उभयत्रापि शक्तोऽहं ते परिघप्रहरणं प्रसोढुमिति । अथच बाह्वन्तरे वक्षसि प्रकाश्य हस्तनिक्षेपेण प्रहरणक्षमतां प्रकटीकृत्य । **'हनुमांस्तु विवृत्योरस्तस्थौ तस्याग्रतो बली'** [११] इति च ॥ ३० ॥ वरादमोघं परिघम् । स्वस्याजेयत्वमिव स्वायुधस्यामोघत्वमपि वरं शर्वाद् वव्रे । अनेनामोघेन परिघेण युध्यमानोऽवध्यो भूयासमिति । विचूर्णितः विदलितः । मृत्पिण्डमिव विशदं दलितः । **'चूर्ण प्रेरणे । प्रेरणं दलनम्'** इति क्षीरस्वामी । **'चूर्ण पेषणे'** इति चन्द्रः । विचूर्णितः सन् वृथाऽभवत् । यथैव वज्रः । एवकारेण परिघस्य वज्रादनूनत्वमाह । विपतौ गरुडे । **'पक्षी विर्विष्किरस्तथा विकिरः'** इति हलायुधः । वीनां पतिः । विर्विष्णुः पतिरस्येति वा । कद्रूश्च विनता च पस्पर्धाते किंवर्ण उच्चैःश्रवा इति । श्वेत इति विनता जगाद । नेत्याह कद्रूः । वालधौ कृष्ण इति व्यवदत । पराजिताया दासीभावाय ते समयं चक्रतुः । ततस्ते भगिन्यौ दास्ये कृतपणे द्रष्टुमुच्चैः-श्रवसं जग्मतुः । तदा नागाः कद्रूनिदेशादश्ववालधिं श्वेतमाच्छाद्य कृष्णा वाला इव स्थिताः । विनता कृष्ण-वालधिमुच्चैःश्रवसं वीक्ष्य विषण्णाऽभवत् । यथापणं कद्रूस्तां दास्ये न्ययोजयत् । अथ गरुडो मातरं पप्रच्छ, मातः, किङ्कारणमिदं दास्यं तव च मम चेति । सा प्राह सपत्न्या पणेन वञ्चितोऽस्मि ताततेति । स सर्पानित्योवाच– 'किं कृत्वा दास्याद् वो विमुच्येय' इति । तदा सर्पा आहुः–'आहरामृतमोजसा । ततो दास्याद् विमोक्षस्तव मातुस्तव च भविता' इति । ततो वैनतेयो जगाम देवलोकम् । देवान् विजित्य बलादमृतकलशमाजहार । तममृतमादाय व्रजन्तं वज्रेणेन्द्रोऽभ्यताडयत् । वज्राहतो वीन्द्रः प्रहसन्निन्द्रमुवाच–**'ऋषेर्मानं करिष्यामि वज्रं यस्यास्थिसम्भ-वम् । वज्रस्य च करिष्यामि तवैव च शतक्रतो । एतत् पत्रं त्यजाम्येकं यस्यान्तं नोपलप्स्यसे । न च वज्रनिपातेन रुजा मेऽस्तीह काचन'** [आ.प.३३.२१–३] इति कथा भारते ॥ ३१ ॥ अथ तिसृभिः प्रमाणिकाभिर्हनुमत्कृतं निकुम्भनिग्रहमाह । प्रगृह्य बलादुद्धृत्य । कुत्सितेंऽसे ॥३२॥ अस्य कण्ठं प्रगृह्य बलान्निष्पिष्य निगृह्यापातयत् । **'हनुमानुन्ममाथाऽशु निकुम्भं मारुतात्मजः'** [७७.२१] इति, **'परिगृह्य च बाहुभ्यां परिवृत्य शिरोधराम् । उत्पाट-**

१. '–तले ।'

**चकार तं रणात्मके मखे रमेशदैवते ।**
**पशुं प्रभञ्जनात्मजो विनेदुरत्र देवताः ॥ ३४ ॥**

**सुप्तघ्नो यज्ञकोपश्च शकुनिर्देवतापनः[१] ।**
**विद्युज्जिह्वः प्रमाथी च शुकसारणसंयुताः ॥ ३५ ॥**

**रावणप्रेरिताः सर्वान् मथन्तः[२] कपिकुञ्जरान् ।**
**अवद्ध्या ब्रह्मवरतो निहता रामसायकैः ॥ ३६ ॥**

**मथन्तः मथ्नन्तः विलोळयन्तः ॥ ३६–४४ ॥**

---

**यामास शिरो भैरवं नदतो महत्'** [२२] इति च । अत्रापि स्कान्दे पुंव्यत्यासेन पठ्यते–**'हनूमता हतौ युद्धे कुम्भकर्णसुतावुभौ'** [ब्र.खं;से.मा.४४.३६] इति । निकुम्भः स्वयं हनुमता, कुम्भस्तु सुग्रीवान्तःस्थेन जीवमानिना हनुमतेति परमार्थः । त एते सर्वेऽपि गुह्यभाषाप्रभेदाः । एवं सर्वत्राप्यनयैव दिशा पुराणवचनानामविरोधः सम्पाद्यः । भगवद्वचनप्रामाण्यात् । दिङ्मात्रमत्र प्रादर्शि । मा नाम भूद् ग्रन्थस्य वृथा विस्तर इति नाधिकं वितन्यते ॥ ३३ ॥ विनेदुः विजयघोषं चक्रुः ॥ ३४ ॥ सुप्तघ्नो यज्ञकोपश्च माल्यवतस्तनयौ । अन्ये चैते रावणसचिवाः । विद्युज्जिह्व इति नायं कालकेयः शूर्पणखाभर्ता । तस्य रामवनगमनात् पूर्वमेव हतत्वात् । अन्य एवायं कश्चन रावणसचिवः । तमेतं रावणस्य सापत्नभ्रातरमाचक्षते । विश्रवसः पुत्रोऽयं बलाकायां जात इति चाऽहुः । **'अग्निकेतुश्च दुर्धर्षो रश्मिकेतुश्च राक्षसः । सुप्तघ्नो यज्ञकोपश्च रामं निर्बिभिदुः शरैः । तेषां चतुर्णां रामस्तु शिरांसि निशितैः शरैः । क्रुद्धश्चतुर्भिश्छिच्छेद–'** [यु.कां. ४३.२६–७] इति वाल्मीकीये । **'ससुप्तघ्ना यज्ञकोपरश्मिकेत्वग्निकेतवः । प्रेषिता रावणेनाऽजौ क्षणाद् रामेण सूदिताः'** [सं.रा;यु.कां.६.३८] इति सङ्ग्रहे । एतेन रश्मिकेतुरिति शकुनेः आग्निकेतुरिति देवतापनस्य नामान्तरमिति प्रतीयते । सुप्तानपि हन्ति सुप्तघ्नः । यज्ञे यज्ञकर्मणि नारायणे च कुप्यत्ययमिति यज्ञकोपः । शक्नोतीति शकुनिः । **'शकेरुनिः'** [स.कं.२.१.२१८] । विद्योतमानाऽग्निशिखेव जिह्वाऽस्येति विद्युज्जिह्वः । शत्रून् प्रति शोकति इति शुकः । शुक गतौ । केचित्तु शु गतावित्यतः कप्रत्यये शवतीति शुक इत्याहुः । शत्रूनपसारयतीति सारणः । रावणस्य चारौ स्पशावेतौ । सम्प्रति रामायणे–**'वज्रदंष्ट्रो महाकायस्तौ चोभौ शुकसारणौ'** [यु.कां.४४.२०] इति पठ्यते । अयमङ्गदेन हताद् वज्रदंष्ट्रादन्यो वज्रदंष्ट्रः, तस्यैव विद्युज्जिह्व इति नामान्तरं स्यात् । महाकाय एव प्रमाथी च स्यात् । महता कायेनैव प्रममाथ शत्रूनिति ॥ ३५ ॥ मथन्तः । मथे विलोडने । भ्वादिः । मथति । मथन्तः । मन्थ विलोडने । क्र्यादिः । मथ्नाति । मथ्नन्तः । निहता रामसायकैः । ब्रह्मवरस्य हनुमताऽपि प्रायः पालनीयत्वात् ॥ ३६ ॥

---

१. **'–तापनिः।'** २. **'सर्वे मथ्नन्तः'**

**युद्धोन्मत्तश्च मत्तश्च देवान्तकनरान्तकौ ।**
**त्रिशिरा अतिकायश्च निर्य्ययू रावणाज्ञया ॥ ३७ ॥**

**नरान्तको रावणजो हयवर्य्योपरि स्थितः ।**
**अभीः ससार समरे प्रासोद्यतकरो हरीन् ॥ ३८ ॥**

**तं दहन्तमनीकानि युवराजोऽङ्गदो बली ।**
**उत्पपात निरीक्ष्याऽशु समदर्शयदप्युरः ॥ ३९ ॥**

**तस्योरसि प्रासवरं प्रजहार स राक्षसः ।**
**द्विधा समभवत् तत्तु वालिपुत्रस्य तेजसा ॥ ४० ॥**

**अथास्य हयमाश्वेव निजघान मुखे कपिः ।**
**पेततुश्चाक्षिणी तस्य स पपात ममार च ॥ ४१ ॥**

**स खड्गवरमादाय प्रससार रणे कपिम् ।**
**आच्छिद्य खड्गमस्यैव[१] निहतो वालिसूनुना ॥ ४२ ॥**

---

युद्धोन्मत्तश्च मत्तश्च रावणस्य मातृष्वस्रीयौ भ्रातरौ । अन्ये पत्न्यन्तरजाता रावणपुत्राः । देवान्तकनरान्तकौ गन्धर्वकन्यातनयौ । त्रिशिराः पत्न्यन्तरजातः । अतिकायो धान्यमालिन्यास्तनयः । एकमातृकाविति ज्ञापयितुमेव देवान्तकनरान्तकाविति समस्य निर्दिदेश । देवान्तकस्य ज्यायस्त्वात् पूर्वनिपातः । **'भ्रातुश्च ज्यायसः पूर्वनिपातो वक्तव्यः'** इति वार्तिकात् [अ.सू.२.२.३४] । कथं र्हि कृष्णबलरामौ? अल्पाच्तरत्वात् । कृष्णस्य स्वरूपतोऽभ्यर्हित-त्वाच्च । **'श्रुत्वा त्रिशिरसो वाक्यं देवान्तकनरान्तकौ । अतिकायश्च तेजस्वी बभूवुर्युद्धहर्षिताः'** [यु.कां.६९.९] इति, **'स पुत्रान् सम्परिष्वज्य भूषयित्वा च भूषणैः । आशीर्भिश्च प्रशस्ताभिः प्रेषयामास संयुगे । युद्धोन्मत्तं च मत्तं च भ्रातरौ चापि रावणः । रक्षणार्थं कुमाराणां प्रेषयामास संयुगे'** [१५–६] इति च वाल्मीकीये । युद्धोन्मत्तस्य महोदर इति मत्तस्य महापाश्र्व इति नामान्तरमपि पठ्यते रामायणे ॥ ३७ ॥ नरान्तकः 'स्वसामर्थ्येनैव परान् जिगीषामि, किं वरबलेन' इति मदोन्मत्तः प्रायो न देवान् प्रसाद्य वरं वरयामास । अतः स्वसामर्थ्यविषयेऽ-तिमानेनाभीः । प्रासः कुन्तः यः प्रास्यते । 'ಭಲ್ಲೆ' इति भाषायाम् ॥ ३८ ॥ दहन्तं तापयन्तम् ॥ ३९ ॥ प्रासाख्यं वरमायुधम् । तत् प्रासाख्यमायुधम् । तु शत्रुभीषणमपि ॥ ४०–१ ॥ **'स मुष्टिमुद्यम्य महाप्रभावः'** [६९.९४]

---

१. **'आच्छिद्य चास्य खड्गं तं निहतो–'**

**गन्धर्वकन्यकासूते निहते रावणात्मजे ।**
**आजगामाग्रजस्तस्य सोदर्य्यो देवतान्तकः ॥ ४३ ॥**

**तस्याऽपतत एवाऽशु शरवर्षप्रतापिताः ।**
**प्रदुद्रुवुर्भयात् सर्वे कपयो जाम्बवन्मुखाः ॥ ४४ ॥**

**स शरं तरसाऽऽदाय रविपुत्रायुधोपमम् ।**
**अङ्गदं प्रजहारोरस्यपतत् स मुमोह च ॥ ४५ ॥**

**अथ तिग्मांशुतनयः शैलं प्रचलपादपम् ।**
**अभिदुद्राव सङ्गृह्य चिक्षेप च निशाचरे ॥ ४६ ॥**

**तमापतन्तमालक्ष्य दूराच्छरविदारितम् ।**
**सुरान्तकश्चकाराऽशु दधार च परं शरम् ॥ ४७ ॥**

**रविपुत्रायुधोपमं यमदण्डोपमम् ॥ ४५–८ ॥**

---

इति, **'अथाङ्गदो वज्रसमानवेगं संवर्त्य मुष्टिम्'**[९०] इति च रामायणं सर्वाविरोधाय 'सखड्गं मुष्टिम्' इति व्याख्येयमित्याह–आच्छिद्य खड्गमस्यैव । यं नरान्तकः परान्तकं खड्गवरं मेने तत् सामान्यं खड्गमात्रं वालि-सूनोः । आच्छिद्य तद्धस्तादाकृष्य । छिदिर् द्वैधीभावे ॥ ४२ ॥ देवान्तकोऽपि गन्धर्वकन्यकासूत इत्याह–सोदर्य इति । अतिकायोऽपि गन्धर्वीतनयः । अतो विशेषमाह–गन्धर्वकन्यकासूत इति । इयं गन्धर्वसुता कन्यैव सती रावणेनापाह्रियत । नत्वन्येनोढा । कन्यामेव तामपहृत्य रावणः सम्बुभुजे । एवं सा प्रथमं राक्षसेन क्षतयोनिर्बभूवेति तामनुचकम्पे– कन्यकेति । कुत्सयामास च राक्षसभोगभुग्नं कन्यात्वम् । अतिकायस्य जननी तु गन्धर्वस्य स्त्री । अन्येन गन्धर्वेणोढेत्यर्थः । अथापि सा दुर्भगा राक्षसभोगभाजनं बभूवेति गन्धर्विकां तामाह– **'गन्धर्विकायां जनितः'** [५५] इति । देवतान्तकः देवसमूहान्तकः । न यस्यकस्यचिद् देवस्य । नापि कतीनाञ्चन देवानाम् । किन्तु देवकुलस्यान्तक इति देवतान्तक इत्याह । अन्तक इवान्तकः । **'ग्राम-जन-बन्धु-सहायेभ्यस्तल्'** [अ.सू.४.२.४३] इत्यत्र दुःखदेवाभ्यां चेति वक्तव्यम् । दुःखानां समूहो दुःखता । देवानां समूहो देवता । स्वार्थे वा तल् । देवा एव देवताः । इन्द्राद्याः । अयं तु महादेवाद् वरमापेति तेनाप्यवध्यः ॥ ४३ ॥ तस्य शरवर्षेण प्रगाढं तापिताः, यत्रकुत्र वा प्रकीर्णा दुद्रुवुः ॥ ४४ ॥ अश्विनावपि रविपुत्रौ । शनिरपि रविपुत्रः । अथापि मारकायुधप्रसङ्गाद् रविपुत्रोऽत्र यमो विवक्षितः । स्फुटं वक्ष्यति च स्वयमेव–'यमदण्डोपमम्' [४८] इति ॥ ४५ ॥ अथ तिग्मांशुतनयः

**स तमाकर्ण्णमाकृष्य यमदण्डोपमं शरम् ।**
**अविद्ध्यद्धृदये राज्ञः कपीनां स पपात ह ॥ ४८ ॥**

**बलमप्रतिमं वीक्ष्य सुरशत्रोस्तु मारुतिः ।**
**आह्वयामास युद्धाय केशवः कैटभं यथा ॥ ४९ ॥**

**तमापतन्तमालोक्य रथं सहयसारथिम् ।**
**चूर्ण्णयित्वा धनुश्चास्य समाच्छिद्य बभञ्ज ह ॥ ५० ॥**

**अथ खड्गं समादाय पुर आपततो रिपोः ।**
**हरिः प्रगृह्य केशेषु पातयित्वैनमाहवे ॥ ५१ ॥**

**सुरशत्रोः देवतान्तकस्य ॥ ४९ ॥ समाच्छिद्य हस्तादाकृष्य ॥ ५०–२ ॥**

---

सुग्रीवः । इदमेव पद्यमक्षरशः सङ्ग्रहरामायणेऽपि पठ्यते [सं.रा;यु.कां.६.५३] । अभिमुखं दुद्राव । अभ्यर्णं दुद्राव ॥ ४६–८ ॥ **'बलमप्रतिमं वीक्ष्य सुरशत्रोस्तु मारुतिः । तमाह्वायाऽह्वयत कैशवः कैटभं यथा'** [५६] इति च सङ्ग्रहे । भगवतः पुरः कीटाभः कैटभः स्वयमेव सम्प्रजिहीर्षया चापलादादधाव, अनेन युत्सीयेति, अमुं विजया इति । तं केशवोऽपि लीलयाऽऽजुहुवे । एवं मारुतिरपि मुमूर्षयेव युयुत्सन्तं देवान्तकमन्तकाय प्रेषयिष्यन् लीलयाऽऽह्वयतेत्यर्थः । अत एवोपरिष्टादपि हरिः केशव इव हरिर्हनुमान् केशेषु प्रगृह्य ममर्देति श्लेषेणाह । कथमाह्वयामास? न ह्वयतेराम् विहितः । नतरां कृभ्वस्तयः । तेन 'आजुहुवे' इति वक्तव्यम् । अस्पर्धायाम् 'आजुहाव' इति वा । सत्यमाजुहुव इति वक्तव्यमासीत् । आजुहावेति वा । अथापि 'आह्वयामास' इत्याह । तेनेदं ज्ञापयति । ह्वेञोऽपि आङ्योगे लिट्याम्प्रत्ययो भवत्यन्यतरस्यामिति । ततश्च **'उष-विद-जागृभ्योऽन्यतरस्याम्'** [अ.सू.३.१.३८] इत्यतः परम्–**'ह्वेञोऽप्याङः'** इत्युपस्कर्तव्यम् । **'आह्वयामास सुजवैर्वाजिभिः समलङ्कृतम्'** [पा.पु;पा.खं.४९.६८] इति रामाश्वमेधे । नेदं रूपं पाणिनिना विहितमिति पाणिनिप्रियानपि प्रीणयन् पण्डिताचार्यः–**'तमाह्वायाऽह्वयत'** इति पपाठ ॥ ४९ ॥ **'तस्याऽपतत एवाऽशु रथं सहयसारथिम् । चूर्णयित्वा धनुश्चास्य चिच्छेदाऽच्छिद्य मारुतिः'** [५७] इति च । पृथक्करणं छेदः । बलादाच्छेदः । सत्वरं च बलाच्च समाच्छेदः । हेति हनुमत्पौरुषं कपीनां मुदावहमासीत्, रक्षसां च विस्मयावहमित्याह । स्वयं च पूर्वावतारकथां स्मरन् स्वदत इव ॥ ५० ॥ एवमङ्गदेन नरान्तकः, हनुमता देवान्तकश्च निहताविति स्थितम् । एतेन **'सुग्रीवेण हतौ युद्धे देवान्तकनरान्तकौ'** [ब्र.खं;से.मा.४४–३६] इति स्कान्दवचनमपि पुंव्यत्यासेन गुह्यभाषानिबद्धमिति गदितप्रायाभिप्रायम् । सुग्रीवप्रेरितेनाङ्गदेन हनुमता

**शिरो ममर्द तरसा पवमानात्मजः पदा ।**
**वरदानादवद्ध्यं तं[1] निहत्य पवनात्मजः ।**
**समीडितः सुरवरैः प्लवगैर्वीक्षितो मुदा ॥ ५२ ॥**

**विद्राविताखिलकपिं वरात् त्रिशिरसं विभोः ।**
**भङ्क्त्वा रथं धनुः खड्गमाच्छिद्याशिरसं व्यधात् ॥ ५३ ॥**

**युद्धोन्मत्तश्च मत्तश्च पार्वतीवरदर्पितौ ।**
**प्रमथन्तौ[2] कपीन् सर्वान् हतौ मारुतिमुष्टिना ॥ ५४ ॥**

**रथं तत्रस्थं धनुः खड्गं चाऽच्छिद्य ॥ ५३ ॥ प्रमथ्नन्तौ विलोळयन्तौ ॥ ५४–५ ॥**

---

च हताविति । **'अथोवाच महातेजाः सुग्रीवो वानराधिपः । कुमारमङ्गदं वीरं शक्रतुल्यपराक्रमम् । गच्छ त्वं राक्षसं वीरो योऽसौ तुरगमास्थितः । क्षोभयन्तं हरिबलं क्षिप्रं प्राणैर्वियोजय'** [यु.कां.६९.८१–२] इति हि वाल्मीकीये । लोकसिद्धश्चायं व्याहारः– सैनिके जयिनि राजा जयतीत्याचक्षते । सुन्दरग्रीवेणाङ्गदेन हनुमता चेत्येक-योक्त्योभयनिर्देशश्चायम् ॥ ५१ ॥ शिवस्य वरदानादवध्यम् । अतः शिवेन तदवरेण वा न स निहन्तुं शक्य इति पवनात्मजस्तं जघान ॥ ५२ ॥ विभोः वरात् । विभुरिति शिव उच्यते । ब्रह्मोच्यते । विष्णुरपि । नात्र विष्णु-प्रसङ्गः । ब्रह्मरुद्रौ हि दैत्यानां वरदातारौ । मुख्यपरित्यागे कारणाभावादत्र विभुरिति विधिरेवोच्यते । विष्णोर्भवतीति निर्वचनाच्च । शत्रुविद्रावणमेव स वरं ययाचे । नावध्यत्वम् । अतः पवनात्मजस्तं त्रिशिरसमशिरसं व्यधात् । तस्य रथं धनुश्च भङ्क्त्वा, तस्यैव च खड्गमाच्छिद्य ॥ ५३ ॥ पुंव्यत्यासेन गुह्यभाषादिना च कथानिरूपणं पुराणेष्विव रामायणेऽपि समानमिति सूचयन्नाह– युद्धोन्मत्तश्च । अयं महोदरापरनामा युद्धोन्मत्तो नीलेन हत इति प्रचलितेनानन्वितेन रामायणपाठेन प्रतीयते । तथाहि प्रचलितं पद्यं **'महोदरं शैलेन नीलो मूर्ध्नि जघान'** इति प्रस्तुत्य– **'ततः स शैलेन्द्रनिपातभग्नो महोदरस्तेन महाद्विपेन । विपोथितो भूमितळे गतासुः पपात–'** [यु.कां.७०.३२] इति । अत्र महाद्विपेनेति नातीव सङ्गतम् । यथाकथाचोपपादनीयम् । तेन ज्ञायतेऽन्यादृशो मूलपाठ आसीदिति । **'महोदरो गन्धवहात्मजेन', 'महोदरो वातगणाधिपेन'** इत्यादिः प्राचीनपाठः स्यात् । अथच मत्तो महापार्श्वापरनामा त्वृषभाख्येन पञ्चप्राणेष्वेकेन कपिना हत इति रामायणे [७०.६४–६] । पुंव्यत्यासोऽयम् । अत्रर्षभ इति प्राणर्षभो हनुमानेवोच्यत इति भगवत्पादाशयः । तत्र हेतुं च सूचयति– पार्वतीवरदर्पितौ । कथं पार्वतीवररक्षितं रक्षः अग्न्यंशो नीलो वा मरुद्गणेष्वेक ऋषभो वा हन्यात्? नहि रुद्रादवरः कोऽपि तं हन्तुं प्रभवेदिति भावः । एतेन **'अतिकायो लक्ष्मणेन हतश्च त्रिशिरास्तथा'** [स्कां.पु;ब्र.खं.से.मा.४४.३५] इति स्कान्दवचनं चोक्तार्थम्– रामानुजेनातिकायः,

---

१. **'तमीशानगिराऽवध्यं निहत्य'**

२. **'प्रमथ्नन्तौ'** । वे.ती.पाठोऽपि तथेति भाति ।

**ततोऽतिकायोऽतिरथो रथेन स्वयम्भुदत्तेन हरीन् प्रमृद्नन् ।**
**चचार कालानलसन्निकाशो गन्धर्विकायां जनितो दशास्यात् ॥ ५५ ॥**

**बृहत्तनुः कुम्भवदेव कण्णार्वस्येत्यतो नाम च कुम्भकण्णर्ः ।**
**इत्यस्य सोऽर्कात्मजपूर्वकान् कपीन् जिगाय रामं सहसाऽभ्यधावत् ॥ ५६ ॥**

**तमापतन्तं शरवर्षधारं महाघनाभं स्तनयित्नुघोषम् ।**
**निवारयामास यथा समीरः सौमित्रिरात्तेष्वसनः शरौघैः ॥ ५७ ॥**

**ववर्षतुस्तावतिमात्रवीर्य्यौ शरान् सुरेशाशनितुल्यवेगान् ।**
**तमोमयं चक्रतुरन्तरिक्षं स्वशिक्षया क्षिप्रतमास्तबाणैः[१] ॥ ५८ ॥**

**ग्रन्थान्तरेऽतिकायोऽपि कुम्भकर्ण इत्युक्तः । अतः अतिकायः कुम्भकर्ण इति नामद्वयं तस्मिन् निरुक्त्या घटयति– बृहत्तनुरित्यादिना ॥ ५६ ॥ समीरः यथा मेघमिति शेषः ॥ ५७–९ ॥**

---

लक्षणवता हनुमता त्रिशिरा इति । अहो चमत्कृतिर्गुह्यभाषायाः ॥ ५४ ॥ अथैकपश्चाशता पद्यैर्युद्धस्यौत्कट्य-माह । अतिक्रान्तो रथं रथिनं यः सोऽतिरथः । **'अमितान् योधयेद् यस्तु सम्प्रोक्तोऽतिरथस्तु सः'** इत्यभिद-धति । गन्धर्विकायां धान्यमालिन्याम् । **'तनयं धान्यमालिन्या अतिकायमिमं विदुः'** [७१.३०] इति हि रामायणे ॥ ५५ ॥ ननु शापग्रस्तौ जयविजयौ रावणकुम्भकर्णौ बभूवतुः । तद्वधार्थमेव च रामावतारः । तत् कथं लक्ष्मणः कुम्भकर्णं जघानेति क्वचित् पठ्यते? तथाहि महाभारते–**'तं ब्रह्मास्त्रेण सौमित्रिर्ददाराद्रिचयोपमम्'** [व.प.२८८.१९] इति, **'ते दृष्ट्वा वृत्रसङ्काशं कुम्भकर्णं तरस्विनम् । गतासुं पतितं भूमौ राक्षसाः प्राद्रवन् भयात्'** [२१] इति च । **'आगतं कुम्भकर्णं तं ब्रह्मास्त्रेण तु लक्ष्मणः । जघान समरे क्रुद्धो गतासुर्न्यपतच्च सः'** [४४.३२] इति च स्कान्दे । एतामाशङ्कामपनेतुमाह–कुम्भवदेव कर्णावस्येति । भारतेऽप्येतत् सूचितम्– **'स बभूवातिकायश्च बहु-पादशिरोभुजः'** [१९] इति । स्कान्द एव स्फुटमेतदुपरि–**'कुम्भकर्णोऽकरोद् युद्धं नवम्यादिचतुर्दिनैः । रामेण निहतो युद्धे बहुवानरभक्षकः'** [ब्र.खं.ध.मा.३०–६३] इति । ननु नायं कुम्भकर्णो नामातिकाय इति युक्तं वक्तुम् । **'शयानमतिनिद्रालुं कुम्भकर्णमयोजयत्'** [२८७.२] इति पूर्ववचनविरोधात् । मैवम् । पश्चाद्भावि कुम्भकर्णोत्थानं पूर्वमुक्त्वा ततोऽतिकायवधो निरूपित इत्यविरोधात् । रामायणेऽपि कुम्भकर्णोत्थापनं पूवमुक्तम् । तद्वधश्च । तदेतद् **'व्यत्यासः प्रातिलोम्यं च'** इत्यादिना दत्तोत्तरमिति सर्वं सुन्दरम् । बृहत्तनुत्वादतिकाय इति नाम । कुम्भकर्ण इति चास्य नाम । कपयश्च तं दृष्ट्वा कुम्भकर्णोऽयमित्यमन्यन्त । मत्वाऽचपलायन्त च पलायन्त च । एवं दर्शनभाषया चातिकायं कुम्भकर्णमाहुरित्यवगन्तव्यम् ॥ ५६–५७ ॥ मात्रां परिमाणमतिक्रान्तमतिमात्रम् ।

---

१. **'सुशिक्षया क्षिप्रतरास्त्रबाणैः'**

शरैः शरानस्य निवार्य्य वीरः सौमित्रिरस्त्राणि महास्त्रजालैः ।
चिच्छेद बाहू शिरसा सहैव चतुर्भुजोऽभूत् स पुनर्द्विशीर्षः ॥ ५९ ॥

छिन्नेषु तेषु द्विगुणास्यबाहुः पुनःपुनः सोऽथ बभूव वीरः ।
उवाच सौमित्रिमथान्तरात्मा समस्तलोकस्य मरुद् विषण्णम् ॥ ६० ॥

ब्रह्मास्त्रतोऽन्येन न वद्धच एष वराद् विधातुः सुमुखेत्यदृश्यः ।
रक्षःसुतस्याश्रवणीयमित्थमुक्त्वा समीरोऽरुहदन्तरिक्षम् ॥ ६१ ॥

अथानुजो देवतमस्य सोऽस्त्रं ब्राह्मं तनूजे दशकन्धरस्य ।
मुमोच दग्धः सरथाश्वसूतस्तेनातिकायः प्रवरोऽस्त्रवित्सु ॥ ६२ ॥

हतेषु पुत्रेषु स राक्षसेशः स्वयं प्रयाणं समरार्थमैच्छत् ।
सज्जीभवत्येव निशाचरेशे खरात्मजः प्राह धनुर्द्धरोत्तमः ॥ ६३ ॥

नियुङ्क्ष्व मां मे पितुरन्तकस्य वधाय राजन् सहलक्ष्मणं तम् ।
कपिप्रवीरांश्च निहत्य सर्वान् प्रतोषये त्वामहमद्य सुष्ठु ॥ ६४ ॥

**पुनःपुनः छिन्नेषु पुनःपुनः द्विगुणास्यबाहुः । विषण्णं विगतच्छविम् ॥ ६०–५ ॥**

---

क्षिप्रतममस्तैर्बाणैः । अयोमयोऽग्रभागो बाण इत्युच्यते । शर इति दण्डः । क्वचिदुभयमप्युभयवाचि ॥ ५८ ॥ मन्त्रसंयोजितान्यस्त्राणि । इतराणि शस्त्राणि ॥ ५९–६० ॥ अश्रवणीयं शत्रुणा श्रोतुमयोग्यं गुह्यं वचः । अत एवादृश्यः सन्नुक्त्वा । अरुहत् अरुक्षत् । यद्यपि वैयाकरणाः **'शलः इगुपधादनिटः क्सः'** [अ.सू.३.१.४५] इति पाणिनिस्मरणाद् रुहेर्लुङि 'अरुक्षत्' इति रूपं पठन्ति । अयमयोगव्यवच्छेद एव नान्ययोगव्यवच्छेद इति प्राचीनाचार्याणां सम्प्रदायः । अत एव 'अश्लिषत्', 'आरुहत्' इत्यादि बहुलं प्रयुञ्जते । **'यत् सानोः सानुमारुहत्'** इति च श्रुतिः । अथवा **'श्लिष आलिङ्गने'** इतिवत्, **'रुहेः स्थावरकर्मणि'** इति वक्तव्यम् । तद्यथा– वृक्षोऽरुक्षदन्तरिक्षस्पृक् । अस्थावरकर्मणि तु विभाषा भवति–वृक्षमारुक्षद् देवदत्तः । वृक्षमारुहद् देवदत्तः । समीरोऽरुहदन्तरिक्षम् ॥ ६१–२ ॥ कः खरात्मजः? वक्ष्यति–'मकराक्षनामा' [६५] इति ॥ ६३ ॥ युद्धकौशलप्रदर्शनेन तोषये । कपिप्रवीरान् निहत्य प्रतोषये । सहलक्ष्मणं रामं निहत्य सुष्ठु प्रतोषये ॥ ६४ ॥

इतीरितेऽनेन[1] नियोजितः स जगाम वीरो मकराक्षनामा ।
विधूय सर्वांश्च हरिप्रवीरान् सहाङ्गदान् सूर्य्यसुतेन साकम् ॥ ६५ ॥

अचिन्तयन् लक्ष्मणबाणसङ्घानवज्ञया राममथाऽह्वयद् रणे ।
उवाच रामं रजनीचरोऽसौ हतो जनस्थानगतः पिता त्वया ॥ ६६ ॥

केनाप्युपायेन धनुर्द्धराणां वरः फलं तस्य ददामि तेऽद्य ।
इति ब्रुवाणः स सरोजयोनेर्वरादवद्ध्योऽमुचदस्त्रसङ्घान् ॥ ६७ ॥

प्रहस्य रामोऽस्य निवार्य चास्त्रैरस्त्राण्यमेयोऽशनिसन्निभेन ।
शिरः शरेणोत्तमकुण्डलोज्ज्वलं खरात्मजस्याथ समुन्ममाथ ॥ ६८ ॥

विदुद्रुवुस्तस्य तु येऽनुयायिनः कपिप्रवीरैर्निहतावशेषिताः ।
यथैव धूम्राक्षमुखेषु पूर्वं हतेषु पृथ्वीरुहशैलधारिभिः ॥ ६९ ॥

**केनाप्युपायेन हतः । नतु वीर्येणेति भावः ॥ ६६-८ ॥ पृथ्वीरुहशैलधारिभिः कपिप्रवीरैरिति सम्बन्धः ॥ ६९-७१ ॥**

---

मकरस्येवाक्षिणी अस्येति मकराक्षः, अक्षरलोपेन मदकराक्षो वा ॥ ६५ ॥ आह्वयत् । यद्यपि स्पर्धयाऽऽह्वयत । अतः **'स्पर्धायामाङः'** [अ.सू. १.३.३१] इत्यात्मनेभाषया भाव्यम् । अत आह– अवज्ञयेति । नायं मम स्पर्धापदमित्यवज्ञयैव मौर्ख्यादाह्वयत्, न स्पर्धयेत्यर्थः । अथचास्पर्धिष्ट, कामं स्पर्धताम्, अथापि का चाटकैरस्य वैनतेयेन स्पर्धेति परिहसन्नाचार्यः 'आह्वयत्' इत्येवाऽह ॥ ६६ ॥ केनापि कपटोपायेन ॥ ६७ ॥ शरेण पावकास्त्रसंयोजितेन । **'पावकास्त्रं ततो रामः सन्दधे तु शरासने । तेनास्त्रेण हतं रक्षः काकुत्स्थेन तदा रणे'** [यु.कां.-७९.३०] इति वाल्मीकीये । समुन्ममाथ, कुण्डलाभ्यां सह उन्ममाथ, उच्चकर्त । उत्तमं पद्मरागमणिशोणं कुण्डलद्वयमपि ज्वलदङ्गारखण्डद्वयमिव पतितस्य शिरसोऽभितः परिज्वलदद्दश्यतेत्याह– उत्तमकुण्डलोज्ज्वलमिति । **'विभीषणेन निहतो मकराक्षः खरात्मजः'** [ब्र.खं.से.मा.४४.३७] इति स्कान्दवचने विभीषण इति रामः । यदवोचदाचार्यः–**'रघूत्तमः शत्रुविभीषणत्वात् । विभीषणेत्येव सुरैरभिष्टुतः'** [१६७] इत्युपरि ॥ ६८ ॥ वित्रस्ताः कान्दिशीका दुद्रुवुः । विक्षिप्य सर्वतोदिशं दुद्रुवुः । अवशेषिताः अवज्ञया शेषिताः, किमेते जीवन्तोऽपि जाल्माः कुर्युरिति । शिष असर्वोपयोगे । चुरादिः । **'असर्वोपयोगोऽनुपयुक्तत्वम्'** इति क्षीरस्वामी ॥ ६९ ॥

---

१. 'इतीरिते तेन'

ततः स सज्जीकृतमात्तधन्वा[१] रथं समास्थाय निशाचरेश्वरः ।
वृतः सहस्रायुतकोट्यनीकपैर्निशाचरैराशु ययौ रणाय ॥ ७० ॥

बलैस्तु तस्याथ बलं कपीनां नैकप्रकारायुधपूगभग्नम् ।
दिशः प्रदुद्राव हरीन्द्रमुख्याः [२]समार्दयन्नाशु निशाचरांस्तदा ॥ ७१ ॥

गजो गवाक्षो गवयो वृषश्च सगन्धमादा धनदेन जाताः ।
प्राणादयः पञ्च मरुत्प्रवीराः स कत्थनो वित्तपतिश्च जघ्नुः ॥ ७२ ॥

**धनदेन जाताः गजादयः पञ्च । कत्थनश्च जघ्नुरिति योजना । गजादयः पूर्वं के कत्थनश्च क इत्यत आह– प्राणादय इति । प्राणादयः पञ्च मरुत्प्रवीराः, पूर्वमिति शेषः । कत्थनः पूर्वं वित्तपतिः । (सः) गजादि-जनकत्वेन प्रकृतः कुबेरः ॥ ७२–३ ॥**

सहस्राणि अयुतानि कोटयश्च अनीकानि अनीकिन्यः । तानि पान्तीति अनीकपाः सेनाप्रमुखाः । तैर्वृतः । रणो वाऽनीकः । **'अनीकोऽस्त्री रणे सैन्ये'** इति हि मेदिनी । सहस्रायुतकोटिसङ्ख्येषु सङ्ख्येषु विदितसमरतत्वैः ख्यातसत्वैः सेनाप्रमुखैर्वृतः ॥ ७० ॥ तस्य रावणस्य बलैः सेनाभिः । अथ बलं कपीनां कृत्स्नं बलम् । अथशब्दः कात्स्न्र्य-वचनः । हरीन्द्रमुख्याः सुग्रीवप्रमुखाः । समेता आर्दयन् ॥ ७१ ॥ गज इव गजति मत्तो भवतीति गजः । गज मदने । बलेन गज इवेति वा । गवामिवाक्षिणी अस्येति गवाक्षः । गवामिवायनं गतिरस्येति गवयः । वृषभगतिरि-त्यर्थः । गवत इति गवय इत्यप्याहुः । बलेन गवय इवेति वा । वन्यो गौर्गवय उच्यते । वृष इव वृषः । वृषवद् भाति पौरुषेणेति वृषभश्च । वृषेरभच्प्रत्यय इति वैयाकरणाः । शत्रूणां गन्धेनार्दनेन स्वजनान् मादयतीति गन्दमादो गन्धमादनः । गन्ध अर्दने । गन्धमादन इवाचलो वा । कत्थते आत्मीयेष्वात्मानं श्लाघत इति कत्थनः । कत्थ श्लाघायाम् । धनदेन जाताः । न तु धनद एव जातः । यतस्ते प्राणादयः पञ्च मरुत्प्रवीराः मरुत्प्रवराः । देवेषु ये वरा भवन्ति ते वीरा अपि भवन्तीत्येवमाह । सप्तचत्वारिंशन्मरुतोऽष्टादश्यां कक्ष्यायां पठिताः प्रायः समानाः । तेषु नागादयः पञ्च किञ्चिद्वराः । प्राणादयस्ततोऽपि किञ्चिदधिका इति प्रवरा उच्यन्ते । एतेन **'धनदस्य सुतः श्रीमान् वानरो गन्धमादनः'** [बा.कां.१७.१२] इति रामायणवचनं च गदिताभिप्रायम् । ननु युद्धकाण्डे पुनरन्यदेवोच्यते– **'पुत्रा वैवस्वतस्यात्र पञ्च कालान्तकोपमाः । गजो गवाक्षो गवयः शरभो गन्धमादनः'** [३०.२७] इति । तत् कथं श्रद्धेयवचनः स्याद् वाल्मीकिर्मुनिपुङ्गव इति? सत्यं पठ्यते । नहि पूर्वोक्तविरुद्धं परस्तात् पठन्ति मुनिपुङ्गवाः । पुरस्ताच्च गन्धमादनो धनदेन जात इत्युक्तम् । पश्चापि सोदरा इति पञ्चानामपि धनदजातत्वमुक्तं भवति । नहि पूर्वमुक्तं महान्तो विस्मरन्ति । अथापि पुत्रा वैवस्वतस्येत्याह । तेन ज्ञायते लुप्तोपमेयमिति । वैवस्वतस्य

१. **'सज्जीकृत आत्तधन्वा'** २. **'समर्दयन्नाशु'**

**शरैस्तु तान् षड्भिरमोघवेगैर्न्निपातयामास दशाननो द्राक् ।**
**अथाश्विपुत्रौ च सजाम्बवन्तौ प्रजह्नतुः शैलवरैस्त्रिभिस्तम् ॥ ७३ ॥**

**गिरीन् विदार्य्याऽशु शरैरथान्याञ्छरान् दशास्योऽमुचदाशु तेषु ।**
**एकैकमेभिर्विनिपातितास्ते ससार तं शक्रसुतात्मजोऽथ ॥ ७४ ॥**

**शिलां समादाय तमापतन्तं बिभेद रक्षो हृदये शरेण ।**
**दृढाहतः सोऽप्यगमद् धरातळं[१] रवेः सुतोऽथैनमभिप्रजग्मिवान् ॥ ७५ ॥**

**तद्धस्तगं भूरुहमाशु बाणैर्द्दशाननः खण्डश एव कृत्वा ।**
**ग्रीवाप्रदेशेऽस्य मुमोच बाणं भृशाहतः सोऽपि पपात भूमौ ॥ ७६ ॥**

**एकैकममुचत् । विनिपातिता बभूवुः ॥ ७४–८ ॥**

---

पुत्रा इव पश्चापि कालान्तकोपमा इत्यर्थः । अथच रामायणे– 'शरभः' पश्चस्वेकः पठ्यते । लिपिकृत्प्रमादोऽयम् । तद्यथा कत्थनः क्रथन इति सम्प्रति रामायणे पठ्यते– **'युद्धेष्वकत्थनो नित्यं क्रथनो नाम यूथपः'** [यु.का.२७.२४] इति । **'युद्धेष्वकत्थनो नित्यं कत्थनो नाम–'** इति शुद्धः पाठः । गजादयः पश्च कत्थनश्च जघ्नुः । स च कत्थनः वित्तपतिर्धनदांशः । तथाहि रामायणे– **'ततो गवाक्षो गवयः सुदंष्ट्रस्तथर्षभो ज्योतिमुखो नभश्च । शैलान् समुद्यम्य विवृद्धकार्याः प्रदुद्रुवुस्तं प्रति राक्षसेन्द्रम्'** [५९.४२] इति। सुदंष्ट्र इति गजः। ज्योतिर्मुख इति गन्धमादनः । नभते शत्रून् हिनस्तीति नभः कत्थनः । णभ हिंसायाम् । जघ्नुः रावणं च तदनुगान् निशाचरांश्च ॥ ७२ ॥ 'अथाश्विपुत्रौ च सजाम्बवन्तौ' इति । रामायणानुक्तेयं कथा ॥ ७३ ॥ एकैकम् । वीप्सायां सुपो लोपो नेष्यते । वृक्षंवृक्षं सिश्चति । दिनेदिने वर्धते । द्वौद्वौ गच्छतः । त्रीणित्रीणि फलानि ददौ । एवं स्थिते पाणिनिराह–**'एकं बहुव्रीहिवत्'** [अ.सू.८.१.९] इति । केवलमेकशब्दस्य वीप्सायां बहुव्रीहिवत् पूर्वस्याभ्यासस्य विभक्तिलोपः, द्वितीयस्याभ्यस्तस्य विशेष्यनिघ्नता च । एकैक आयातु । एकैकस्मिन् दशदश प्राणाः । एकैका आहुतिः । तेषु मैन्दादिषु त्रिषु एकैकं प्रत्यपि बहून् शरानमुचत् । एभिः शरैः वितुद्य नीचैः पातिताः । अथ शक्रसुतात्मजोऽङ्गदः ससार । इयमपि रामायणेऽनुदिता कथा ॥ ७४ ॥ अथ रवेः सुतः सुग्रीवोऽभिप्रजग्मिवान् अभिमुखं प्रजग्मिवान् । अन्ये तमनुजग्मुः । प्रमुखगमनं प्रथमगमनं वा प्रगमनम् ॥ ७५ ॥ खण्डश एव कृत्वा । वीप्सायां शस् । खण्डङ्खण्डं कृत्वा ॥ ७६ ॥

---

१. **'–तलम्'**

अथो हनूमानुरगेन्द्रभोगसमं स्वबाहुं भृशमुन्नमय्य ।
तताड वक्षस्यधिपं तु रक्षसां मुखैः स रक्तं प्रवमन् पपात ॥ ७७ ॥

स लब्धसञ्ज्ञः प्रशशंस मारुतिं त्वया समो नास्ति पुमान् हि कश्चित् ।
कः प्रापयेदन्य इमां दशां मामितीरितो मारुतिराह तं पुनः ॥ ७८ ॥

अत्यल्पमेतद् यदुपात्तजीवितः पुनस्त्वमित्युक्त उवाच रावणः ।
गृहाण मत्तोऽपि समुद्यतं त्वं मुष्टिप्रहारं त्विति तं पुपोथ ॥ ७९ ॥

किञ्चित् प्रहारेण तु विह्वलाङ्गवत् स्थिते हि तस्मिन्निदमन्तरं मम ।
इत्यग्निसूनुं प्रययौ स रावणो निवारितो मारुतिनाऽपि वाचा ॥ ८० ॥

तमापतन्तं प्र समीक्ष्य नीलो धनुर्ध्वजाग्राश्वरथेषु तस्य ।
चचार मूर्द्धस्वपि चञ्चलोऽलं [1]जळीकृतस्तेन स रावणोऽपि ॥ ८१ ॥

स क्षिप्रमादाय हुताशनास्त्रं मुमोच नीले रजनीचरेशः ।
स तेन भूमौ पतितो नचैनं ददाह वह्निः स्वतनुर्य्यतोऽसौ ॥ ८२ ॥

**पु(पोथ) सम्प्राहरत् ॥ ७९–८४ ॥**

---

उन्नमय्य तताड मूर्छयित्वा ताडयामास । **'भूरादिनवगणोक्ताः स्वार्थे णिजन्ता अपि भवन्ति'** इति **'चुरादिणिचो बहुलं निदर्शनम्'** इति च बहवो वैयाकरणा मन्यन्ते । तेन चोरति ताडतीत्याद्यपि भवति । प्रवमन् प्राज्यं वमन् ॥ ७७–७८ ॥ मुष्टिप्रहारं तु । महावीरैरपि सोढुमशक्यम् । पुपोथ । पुथ हिंसायाम् ॥ ७९ ॥ प्रहारेण किञ्चिद् विह्वलाङ्गवत् आत्मानं दर्शयामास । रावणस्यावकाशदानार्थमेव । नतु वस्तुतो विह्वलाङ्गः । ह्वल चलने । अग्निसूनुं नीलम् । केवलं वाचा निवारितः । नतु स्वयं गत्वा ॥ ८० ॥ प्रसमीक्ष्य प्रसभं समीपे ईक्षित्वा । समीक्ष्य प्रचचारेति वा । प्रथमं सम्भ्रान्त्या धनुर्ध्वजाग्रादिषु चचार, पश्चात् तस्य मूर्धस्वपि प्रकामं चचार । तेन मूर्द्धादिषु चरणेन करणेन, तेन नीलेन कर्त्रा । तेन रावणोऽपि सः, यः पूर्वमन्यानेव जळीचकार, न स्वयं जळीबभूव । जळीकृतः जडीकृतः । किङ्कर्तव्यतामूढः स्तब्धः कृतः । अचोर्मध्यगस्य डस्य ळत्वं बह्वृचानामिव प्रायो नियतमाचार्यप्रयोगेषु ॥ ८१ ॥ **'शरैरादीपयामास नीलं हरिचमूपतिम्'** [यु.कां.५९.७१] इति वाल्मीकिवचनाशयमाह–हुताशनास्त्रं

---

१. **'जडीकृत–'**

**ततो ययौ राघवमेव रावणो निवारयामास तमाशु लक्ष्मणः ।**
**ततक्षतुस्तावधिकौ धनुर्भृतां शरैः शरीरावरणावदारणैः ॥ ८३ ॥**

**निवारितस्तेन स रावणो भृशं[1] रुषाऽन्वितो बाणममोघमुग्रम् ।**
**स्वयम्भुदत्तं प्रविकृष्य[2] चाऽशु ललाटमद्ध्ये प्रमुमोच तस्य ॥ ८४ ॥**

**भृशाहतस्तेन मुमोह लक्ष्मणो रथादवप्लुत्य दशाननोऽपि ।**
**क्षणादभिद्रुत्य बलात् प्रगृह्य स्वबाहुभिर्नेतुमिमं समैच्छत् ॥ ८५ ॥**

**सम्प्राप्य सञ्ज्ञां स सुविह्वलोऽपि सस्मार रूपं निजमेव लक्ष्मणः ।**
**शेषं हरेरंशयुतं नचास्य स[3] चालनायापि शशाक रावणः ॥ ८६ ॥**

**प्रगृह्य बलान्ने(तुं स)मैच्छत् ॥ ८५–६ ॥**

---

मुमोचेति ॥ ८२ ॥ शरीरावरणं तनुत्रम् । अवदारणं विदारणं द्विधाभावः । शरीरावरणमवदारयन्तीति तादृशैः । अवदारणः कुद्दालः । शरीरावरणस्य अवदारणा इवेति वा ॥ ८३ ॥ भृशं निवारितः । भृशं रुषाऽन्वितः । सज्ये धनुषि बाणं प्रयुज्य बलविशेषाधानपूर्वकं कर्षणं प्रविकर्षणम् । प्रकर्षेण मुमोच येन शत्रुर्नियतमाहतः स्यात् । **'–लक्ष्मणमाजघान । शरेण कालाग्निसमप्रभेण स्वयम्भुदत्तेन ललाटदेशे'** [५९.१०४] इति रामायणे । यद्यपि रामायणे तदा तच्चापं लक्ष्मणश्चिच्छेदेति पठ्यते । तस्मिन्नपि चापे च्छिन्ने पुनः स्वयम्भुदत्तां शक्तिं मुमोच । तेन लक्ष्मणः पपातेति च । इदमत्र चिन्तनीयं भवति । स्वयम्भुदत्तः शरः कथं लक्ष्मणे वितथो बभूव? न हि शक्यं वितथयितुं शरः स लक्ष्मणेन । तेनैवं व्याख्येयम् – सशक्तिक्षेपमन्त्रं शरं स्वयम्भू रावणाय ददौ । स पूर्वं विना शक्त्याधानं केवलं शरं चिक्षेप । स लक्ष्मणं विद्ध्वा रावणनिषङ्गे पुनरागत्य स्थितः । स रावणस्तदा सशक्त्याधानं तमेव शरं पुनश्चिक्षेप। तदा लक्ष्मणः पपातेति । ननु रामायणे **'विवेश शक्तिर्बाह्वन्तरम्'** [१०९] इत्युच्यते । तत् कथमत्र 'ललाटमध्ये' इत्याह? अवधत्स्व । स्थानव्यत्यासोऽयम् । केवलं शरं वक्षसि चिक्षेप । सशक्तिं ललाटमध्ये । वाल्मीकिस्तु व्यत्यस्याऽह– केवलं शरं ललाटमध्ये चिक्षेप । सशक्तिं वक्षसीति ॥ ८४ ॥ अवतीर्य प्लुतिरवप्लुतिः । शत्रोरभिमुखं द्रुतिरभिद्रुतिः । उन्नमय्य ग्रहणं प्रग्रहः । यत्करणेन स्वस्य समस्यानिवृत्तिस्तदिच्छा समिच्छा। **'रथादवप्लुत्य स रावणोऽपि क्षणादभिद्रुत्य बलाच्चकर्ष'** [सं.रा;यु.कां.८.२५] इति सङ्ग्रहे ॥ ८५ ॥ सत्वरं प्राप्तिः सम्प्राप्तिः । सु नितराम् । यत्र सत्वरं सञ्ज्ञालाभसम्भावनाऽपि नास्ति । स महाबलोऽपि रावणः । नच नैव शशाक ॥ ८६ ॥

---

१. **'–स्तेन दशाननो भृशम्'** २. **'–दत्तं परिकृष्य'** ३. **'सश्चालना–'**

**बलात् स्वदोर्भिः प्रतिगृह्य[१] चाखिलैर्य्यदा स वीरं प्रचकर्ष रावणः ।**
**चचाल पृथ्वी सहमेरुमन्दरा ससागरा नैव चचाल लक्ष्मणः ॥ ८७ ॥**

**सहस्रमूर्ध्नोऽस्य बतैकमूर्ध्नि[२] ससप्तपाताळ[३]गिरीन्द्रसागरा ।**
**धराऽखिलेयं ननु सर्षपायति प्रसह्य को नाम हरेत् तमेनम् ॥ ८८ ॥**

**प्रकर्षति त्वेव निशाचरेश्वरे तथैव रामावरजं त्वरान्वितः ।**
**समस्तजीवाधिपतेः परा तनुः समुत्पपातास्य पुरो हनूमान् ॥ ८९ ॥**

**बलात् (प्र)चकर्ष ॥ ८७–९० ॥**

प्रत्येकं ग्रहणं प्रतिग्रहणम् । सर्वबलेन प्रयत्नपूर्वकं कर्षणं प्रकर्षणम् । पृथ्वी पत्युर्विपत्तिं वीक्ष्य भीतेव महिळा । यस्या मेरुमन्दरौ स्तनद्वयायेते, सागरश्चाम्बरायते । **'गिरिस्तनी सप्तसमुद्रवस्त्रा मही चकम्पे महिळेव भीता'** [२६] इति च ॥ ८७ ॥ पाताळान्यधोभुवनानि सप्त । गिरीन्द्राः कुलाचलाश्च सप्त । सागराश्च । **'भूमण्डलं सर्षपकल्पमल्पं विभाति पाताळसमेतमेतत् । सहस्रमूर्ध्नोऽस्य बतैकमूर्ध्नि प्रसह्य को नाम हरेत् तमेनम्'** [२७] इति च । बतेति विस्मये च हर्षे च । लोकस्य विस्मयः । स्वस्य हर्षः । बतेति खेदे चानुकम्पायां च । रावणस्य खेदः । रावणं दृष्ट्वा हनुमदादीनामनुकम्पा । बतेत्यामन्त्रणे । अध्येतॄन् नः 'बत जिज्ञासवः' इत्यामन्त्र्य कृपया तत्वं बोधयत्याचार्यः । **'बत खेदेऽनुकम्पायां हर्षे सम्बोधनेऽद्भुते'** इत्यभिधानम् । सर्षप इवाऽचरति सर्षपायति । कथं सर्षपायतीत्याह? आचारार्थे कर्तुः क्यङि **'सर्षपायते'** इति किल रूपं सम्पद्यते । सत्यं सम्पद्यते । क्वचिदपवादश्च भवति । तद्यथा–तपश्चरतीत्यर्थे तपसः क्यङि तपस्यतीति रूपं सम्पद्यते । ननु तत्र वार्त्तिकं भवति–**'तपसः परस्मैपदं च'** [अ.सू.३.१.१५] इति । तर्हि **'सर्षपस्य वा'** इति पठ्यताम् । येन वार्त्तिकं पूर्णं स्यात् । अथवाऽलं वैयाकरणैः साकं प्रहसनेन । एवं वक्ष्यामः– नायं क्यङ् । किन्तु भवनार्थे क्यष् । असर्षपः सर्षपो भवति सर्षपायति सर्षपायते वा । सर्षपकल्पा भवतीत्यर्थः । अत एव पण्डिताचार्य आह–**'भूमण्डलं सर्षपकल्पमल्पं विभाति'** इति । तथाच सूत्रम्–**'लोहितादिडाज्भ्यः क्यष्'** [अ.सू.३.१.१३] इति । आकृतिगणश्चायं लोहितादिः । ननु लोहितादिगणे न सर्षपः पठ्यते । न प्राचीनैरपाठि, अदर्शनात् प्रयोगस्य । वयमिदानीं पठामः, दर्शनादेव प्रयोगस्य । तेन युक्तः सर्षपस्याप्युपसङ्ग्रहः । सरति स्नेहोऽस्मादिति सर्षपः । सरतेरपः प्रत्ययः षुगागमश्चेति वैयाकरणाः । 'ಸಾಸುವೆ' इति भाषायाम् । **'हिमवान् मन्दरो मेरुस्त्रैलोक्यं वा सहामरैः । शक्यं भुजाभ्यामुद्धर्तुं न सङ्ख्ये भरतानुजः'** [यु.कां. ५९.१११] इति वाल्मीकिः । भरतानुज इति पुनरनधीतशास्त्राणां मन्दानां मोहनी गुह्यभाषा । भरतः अनुजो यस्येति तु परमार्थः । एवमन्यत्रापि । भरत इति वायुरुच्यते । आदिसृष्टौ वायोरनन्तरं जात इति भरतानुजः शेषः । स्यादपि **'भरताग्रजः'** इत्येव प्राचीनः पाठः । स्यादपि परैरज्ञैः पाठो व्यत्यासीति ॥ ८८ ॥ प्रयत्नपूर्वकं कर्षत्येव सति ।

१. **'–दोर्भिः परिगृह्य'** २. **'बतैकमूर्धनि'** ३. **'–पाताल–'**

**स मुष्टिमावर्त्त्य[१] च वज्रकल्पं जघान तेनैव च रावणं रुषा ।**
**प्रसार्य्य बाहूनखिलैर्म्मुखैर्वमन् स रक्तमुष्णं व्यसुवत् पपात ॥ ९० ॥**

**निपात्य रक्षोधिपतिं स मारुतिः प्रगृह्य सौमित्रिमुरङ्गशायिनः ।**
**जगाम रामाख्यतनोः समीपं सौमित्रिमुद्धर्त्तुमलं ह्यसौ कपिः ॥ ९१ ॥**

**स रामसंस्पर्शनिवारितक्लमः समुत्थितस्तेन समुद्धृते शरे ।**
**बभौ यथा राहुमुखात् प्रमुक्तः शशी सुपूर्णो [२]विकचस्वरश्मिभिः ॥ ९२ ॥**

**अलं समर्थः ॥ ९१ ॥ (विकचः) निष्कलः निर्मलः ॥ ९२–३ ॥**

---

एवकारेण नैरन्तर्यमाह । एवं महता यत्नेन निरन्तरं कर्षणमपि व्यर्थं जातमिति तुनाऽपहसति । साक्षादवरजो हि मुख्योऽर्थः । तेन रामावरज इति रामानुज इति लक्ष्मणस्यैव प्रथमप्रतीतिः । सम्यक् क्रीडन्निव उत्पपात ॥७८॥ मुष्टिमावर्त्य आवेष्टय । निबद्धचेत्येतत् । तेन मुष्टिनैवेति आयुधनैरपेक्ष्यमाह । आवर्त्य चेति चकारेण मुष्टिबन्धस्यापूर्वं दार्ढ्यमाह । तदेव स्फुटयति वज्रकल्पमिति । तेनैव चेति रोषस्याप्यभूतपूर्वतामाह । दौर्लभ्येऽपि किल चः प्रयुज्यते । **'तेन मुष्टिप्रहारेण रावणो राक्षसेश्वरः । जानुभ्यामपतद् भूमौ चचाल च पपात च । आस्यैः सनेत्रश्रवणैर्ववाम रुधिरं बहु'** [५९.११५] इति च ॥ ९० ॥ सौमित्रिरेव हि स उरङ्गो यत्र भगवान् शेते । अतः स्वयमुद्धर्तुं समर्थोऽपि रामसमीपं निनायेति ध्वनयति– उरङ्गशायिन इति । कथमुरङ्गः? उरस्यपि गमेः खच् वक्तव्यः । **'उरसो लोपश्च'** [अ.सू.३.२.४८] इति वार्तिकेन टिलोपः । डश्च । उरङ्गः, उरङ्गम इत्यादिप्रयोगदर्शनान्महताम् । उरग एवोऽरङ्गः । अवधारणे वा बिन्दुः । यं चालयितुमपि नाशकद् रावणस्तमुद्धर्तुमुद्धृत्य च रामसमीपं नेतुमलं समर्थो ह्ययं कपिः । अपि च यथा कृते सौमित्रेरुद्धारः स्यात् तथा कर्तुमयं समर्थो हि । अतश्च रामसमीपं निनाय । रामाख्या तनुर्यस्यासौ रामाख्यतनुः । रामाख्या तनुरेव च सः ॥९१॥ अनुग्रहसम्भृतः स्पर्शः संस्पर्शः । निःशेषतया नितरां वारितो निवारितः । अक्लमतया सन्तुष्टमुत्थानं समुत्थानम् । अव्रणतयोद्धारः समुद्धारः । सुष्ठु अकलङ्कतया पूर्ण इत्यभूतोपमा । विकचस्वरश्मिभिः । अत्र द्वेधा प्रतृण्णं सम्भवति– 'विकचस्वरश्मिभिः' इत्येकं पदमिति, 'विकचः स्वरश्मिभिः' इति द्वे पदे इति । विकचैर्विकसितैः स्फुटं भासमानैः स्वरश्मिभिरुपलक्षितः । स्वरश्मिभिः सुपूर्ण इति वा । भिन्नपदत्वे स्वरश्मिभिर्विकचः स्फुटप्रकाश इति स्फुटोऽर्थः । आ सूर्यास्तमयं सूर्यरश्मिभिर्लीनः, रात्रौ स्वरश्मिभिः प्रकटो भवतीति भावः । लक्ष्मणोऽपि शरबाधया विहतदेहप्रभः, शरे समुद्धृते स्वभावसहजया देहप्रभया स्फुटितो बभूव । **'प्रद्योतगभस्तिरश्मिकिरणाः'** इति, **'शिखाप्रभारश्मयः समानार्थाः'** इति च हलायुधः ॥ ९२ ॥

---

१. **'–मावृत्य च'**

२. **'विकचत्स्वर–'** । **'विकचः स्वरश्मिभिः'** इति वे.ती. सम्मतः पदपाठः ।

स शेषभोगाभमथो जनार्द्दनः प्रगृह्य चापं सशरं पुनश्च ।
सुलब्धसञ्ज्ञं रजनीचरेशं जगाद सज्जीभव रावणेति ॥ ९३ ॥

रथं समारुह्य पुनः सकार्म्मुकः समार्ग्गणो रावण आशु रामम् ।
अभ्येत्य सर्वाश्च दिशश्चकार शरान्धकाराः परमास्त्रवेत्ता ॥ ९४ ॥

रथस्थिते[1]ऽस्मिन् रजनीचरेशे न मे पतिर्भूमितळे[2] स्थितः स्यात् ।
इति स्म पुत्रः पवनस्य रामं स्कन्धं समारोप्य ययौ च राक्षसम् ॥ ९५ ॥

प्रहस्य रामोऽस्य हयान् निहत्य सूतं च कृत्वा तिलशो ध्वजं रथम् ।
धनूंषि खड्गं सकलायुधानि च्छत्रं च सञ्छिद्य चकर्त्त मौलिम् ॥ ९६ ॥

कर्त्तव्यमूढं तमवेक्ष्य रामः पुनर्ज्जगादाऽशु गृहं प्रयाहि ।
समस्तभोगाननुभूय शीघ्रं प्रतोष्य बन्धून् पुनरेहि मर्त्तुम् ॥ ९७ ॥

इतीरितोऽवाग्वदनो ययौ गृहं विचार्य्य कार्य्यं सह मन्त्रिभिः स्वकैः ।
हतावशेषैरथ[3] कुम्भकर्ण्णप्रबोधनायाऽशु मतिं चकार ॥ ९८ ॥

**समार्गणः सशरः ॥ ९४–५ ॥ सूतं च निहत्य । ध्वजं रथं च तिलशः कृत्वा ॥ ९६ ॥ रथाद् द्रुतं (धाव)ने परं कर्तव्ये मूढम् ॥ ९७–८ ॥**

---

चापः शेषभोगाभः । शरश्च विषदन्ताभः । सुलब्धसञ्ज्ञं सञ्ज्ञां लब्ध्वा समुत्थाय युद्धाय सन्नद्धम् ॥ ९३ ॥ जेतव्यमेवेति सम्भ्रमेण आरोहः समारोहः । शरेणान्धकारो यासु ताः ॥ ९४ ॥ आदरेणाऽरोपः समारोपः । ययौ च राक्षसम् । नीचं राक्षसं ययावित्यर्थः । नीचत्वेऽपि च हि चः प्रयुज्यते । रावणो रामं ययौ । धृतरामो हनुमांश्च रावणं ययाविति समुच्चये च ॥ ९५ ॥ तिलशः कृत्वा । तिलशब्दोऽल्पवचनः । तिलवदल्पान् कणान् कृत्वेत्यर्थः । **'बह्वल्पार्थाच्छस् कारकादन्यतरस्याम्'** [५.४.४२] इति हि पाणिनिः । अथवा तिलशब्दोऽल्पतरखण्डवचनः । वीप्सायां शस् । खण्डङ्खण्डं कृत्वा चकर्तेत्यर्थः । कृत्त्वा छित्वा वा । छत्रं च सञ्छिद्य तिलश एव छित्वा । मौलिं किरीटम् । **'किरीटे मौलिरक्लीबे चूडासंयतकेशयोः'** इत्यभिधानम् ॥ ९६॥ यथेच्छं प्रभूतं तोषणं प्रतोषणम् । चरमं हीदं बन्धुतोषणं भवति ॥ ९७ ॥ अवशेष्यन्त इत्यवशेषाः । रामसैन्यैर्बहुषु हतेषु सत्सु येकेचिद-

---

१. **'रथे स्थिते'** २. **'–तले'** ३. **'–वशिष्टैरथ'**

स शैलशृङ्गासिपरश्वधायुधैर्निशाचराणामयुतैरनेकैः ।
तच्छ्वासवेगाभिहतैः कथञ्चिद् गतैः समीपं कथमप्यबोधयत् ॥ ९९ ॥

शैलोपमानस्य च[1] मांसराशीन् विधाय भक्षानपि शोणितह्रदान् ।
सुतृप्तमेनं परमादरेण समाह्वयामास सभातळाय[2] ॥ १०० ॥

उवाच चैनं रजनीचरेन्द्रः पराजितोऽस्म्यद्य हि जीवति त्वयि ।
रणे नरेणैव च[3] रामनाम्ना कुरुष्व मे प्रीतिममुं निहत्य ॥ १०१ ॥

इतीरितः कारणमप्यशेषं श्रुत्वा जगर्हाग्रजमेव वीरः ।
अमोघवीर्य्येण हि राघवेण त्वया विरोधश्चरितो बताद्य ॥ १०२ ॥

प्रशस्यते नो बलिभिर्विरोधः कथञ्चिदेषोऽतिबलो मतो मम ।
इतीरितो रावण आह दुर्नयोऽप्यहं त्वयाऽव्यो हि किमन्यथा त्वया ॥ १०३ ॥

चरन्ति राजान उताक्रमं क्वचित् त्वयोपमान् बन्धुजनान् बलाधिकान् ।
समीक्ष्य हीत्थं गदितोऽग्रजेन स कुम्भकर्ण्णः प्रययौ रणाय ॥ १०४ ॥

**स रावणः शैलशृङ्गाद्यायुधवद्भिः कथञ्चित् समीपं गतै राक्षसैः कथमपि कथञ्चिदबोधयत् ॥ ९९ ॥ सुतृप्तम् (भक्षणेन पानेन च)॥ १००–५ ॥**

---

वशेषिताः । हताः नितरां पीडिताः, अथाप्यवशेषिता इति वा । अवज्ञया शेषिताः । नत्वशक्यहननतया ॥९८॥ अयुतैरनेकैः । **'दशराक्षससाहस्रा युगपत् पर्यवारयन्'** [यु.कां.६०.४३] इति च ॥ ९९ ॥ शैलोपमानस्य अस्य शैलोपमान् मांसराशीन् । परमादरेण गौरवगर्भेण प्रीत्यतिशयेन । भ्रातेति प्रीतिः । नूनमयं मे जयं साधयिष्यतीति गौरवम् । आपद्बन्धुरयं बभूवेति तयोरतिशयः । अत एव समाह्वयामास । सम्भ्रमेणाऽजुहाव । युद्धवार्तासंलापायाऽजुहाव ॥ १०० ॥ नरेणैव च । नीचेन मनुष्यमात्रेणेति रावणमनोगतं तिरस्कारं चकारो व्यनक्ति ॥ १०१ ॥ बत शोचनीयमेतत् कृत्यम् । त्वं चानुकम्पनीयः ॥ १०२ ॥ नो बलिभिर्विरोधः कथञ्चित् प्रशस्यते । न कयाऽपि विधया, न केनापि विवेकिना प्रशस्तत्वेन कथ्यते ॥ १०३ ॥ उपमीयत एभिरित्युपमाः सदृशाः । अक्रममप्याचरन्ति हि ॥ १०४ ॥

---

१. '–नस्य तु मांस–' २. '–तलाय' ३. '–व हि राम–'

**प्राकारमालङ्घ्य स पञ्चयोजनं यदा ययौ शूलवरायुधो रणम् ।**
**कपिप्रवीरा अखिलाः प्रदुद्रुवुर्भयादतीत्यैव च सेतुमाशु ॥ १०५ ॥**

**[1]शतवलिपनसाख्यौ तत्र वस्वंशभूतौ पवनगणवरांशौ श्वेतसम्पातिनौ च ।**
**निरृतितनुमथोग्रं दुर्म्मुखं केसरीति प्रवरमथ मरुत्सु प्रास्यदेतान् मुखे सः ॥ १०६ ॥**

**रजनिचरवरोऽसौ कुम्भकर्ण्णः प्रतापी कुमुदमपि जयन्तं पाणिना सम्पिपेष ।**
**नळमथ[2] च गजादीन् पञ्च नीलं सतारं गिरिवरतरुहस्तान् मुष्टिनाऽपातयच्च ॥ १०७ ॥**

**तत्र (द्रु)तावशिष्टान् एतान् शतवल्यादीन् मुखे प्रास्यदित्यन्वयः । केसरीति, प्रसिद्धमिति शेषः ॥ १०६–८ ॥**

---

पञ्चयोजनः प्राकार इति शतयोजनो वृक्ष इतिवद् यथासम्भवं योजनीयम् । योजनमिति व्याममानं वा स्यात् । पौरुषमानं वा । तत्सदृशमन्यद् वा । दुरारोहमत्युन्नतं प्राकारमिति तात्पर्यार्थः ॥ १०५ ॥ अथ लघुगतिभ्यां द्वाभ्यां मालिनीभ्यां कुम्भकर्णस्य गतिलाघवमाह । शतं वलयोऽस्य देह इति शतवलिः । शतवलिमेव सन्तं केचित् शतबलिमाहुः । पनायते स्तौति भगवन्तमिति पनसः । पन स्तुतावित्यतोऽसच्प्रत्यय इति वैयाकरणाः । पनस-फललोलुपत्वाद् वा पनसः । श्वेतवर्णत्वात् श्वेतः । शत्रून् पातयन् सम्पाती । किञ्चिदिव दुर्वर्णं मुखमस्येति दुर्मुखः । केसरीव रोमशश्च बली च केसरी । मुखे प्रास्यत् प्राक्षिपत् । असु क्षेपणे । श्वेतश्च सम्पाती च मरीचिः प्रवहश्च स्याताम् । तौ हि भूतवायुमानिनौ पवनगणवरौ । **'मरीचिर्मरुतामस्मि'** इति हि गीतासु । निरृतेस्तनु-र्यस्य । निरृतितनुमिति विरेफमिव विश्लथं पठनीयम् । तेन छन्दः प्रीणाति । निरृतिरिति च साधुपदम् । नियता ऋतिर्घृणा ज्ञानं वा यस्य, शुभं वा यस्मात् । राक्षसोऽप्ययं न निर्घृणो नाप्यशुभ इति । निश्चिता ऋतिरिति निरृतिः । **'ऋतिर्गतौ घृणायां च स्पर्धायां च शुभेऽपिच'** इत्यभिदधति । उभयथाऽपि समान उच्चारः–निरृतिरिति-वत् । रेफस्य स्वरेण संयोगेऽपि न पूर्वाक्षरस्य गुरुता । व्यञ्जनद्वयसंयोग एव पूर्वस्य गुरुत्वमिति प्रायोवादः । तथाहि प्रयोगः–**'नासत्यौ निरृतिर्मरुद्गणयुताः'** इति । केसरीति प्रथितम् । स मरुत्सु प्रवरोऽहम्प्राणः स्यात् । अत एव पूर्वोक्तौ केवलं वरौ । अयं तु प्रवरः । शतवलिपनसौ वसुषु काविति विमर्शनीयम् । प्रथमत्यागे कारणाभावाद् द्रोणप्राणौ वा ॥ १०६ ॥ जयन्तांशं कुमुदम् । जयतीति जयन्तः । जयतेरन्तच् । कुमुदकुसुमसमवर्णः कुमुदः । कौ मोदत इति वा । सम्यक् पिपेष यथा शत्रोरङ्गभङ्गः स्यात् । कुमुदस्याप्ययं सम्पेष एव बभूव । यतोऽङ्गभङ्गो न बभूव । गजादीन् पञ्च नळनीलतारांश्चेत्यष्टौ मुष्टिनाऽऽहत्यापातयत् ॥ १०७ ॥

---

१. **'शतबलि–'** २. **'नलमथ'**

**अथाङ्गदश्च जाम्बवानिनात्मजश्च वानरैः ।**
**निजघ्निरे निशाचरं सवृक्षशैलसानुभिः ॥ १०८ ॥**

**विचूर्णिताश्च पर्वतास्तनौ निशाचरस्य ते ।**
**बभूव काचन व्यथा नचास्य बाहुषालिनः[१] ॥ १०९ ॥**

**अथापरं महाचलं प्रगृह्य भास्करात्मजः ।**
**मुमोच राक्षसेऽथ तं प्रगृह्य तं जघान सः ॥ ११० ॥**

**तदा पपात सूर्यजस्तताड चाङ्गदं रुषा ।**
**सजाम्बवन्तमाशु तौ निपेततुस्तळाहतौ[२] ॥ १११ ॥**

**बाहुशालिनः बाहुबलवतः ॥ १०९–१६ ॥**

---

अथ तेनैव लाघवेन कपिवीराणां प्रतिक्रियामाह द्रुतगतिभिः प्रमाणिकाभिः । इनात्मजः सुग्रीवश्च, वानरैश्च सह । यद्यपि हनधातोरकर्मकक्रियावचनादाङ्पूर्वादेवाऽत्मनेपदं विधत्ते पाणिनिः–**'आङो यमहनः'** [१.३.२८] इति । क्वचिदपवदते चायम् । **'आजघ्ने विषमविलोचनस्य वक्षः'** इति भारविरित्युक्तम् । तेनाकर्मकक्रियावचनादित्यपोदितम् । निपूर्वादप्यात्मनेपदं प्रयुङ्क्ते । तेनाऽङ्पूर्वादिति च गतम् । तेन हि प्रायोवादोऽयम्–**'आङः'** इति । आत्मपौरुषख्यापनं फलमित्यात्मनेपदम् । अत एव महाकायमपि तं न्यक्कृत्य जघ्नुरित्याह–निजघ्निर इति । वृक्षमण्डितैः शैलसानुभिः । वृक्षैश्च शैलसानुभिश्च वा ॥ १०८ ॥ निशाचरस्य तनौ पतितास्ते पर्वताश्च वृक्षाश्च विचूर्णिताः शकलशश्चूर्णिता बभूवुः । बाहुभ्यां सलति शत्रूनिति बाहुषाळी । सल गतौ । षत्वं सामासिकम् । ताच्छील्ये णिनिः । बाहू एव सालौ दुर्गप्राकाराविवास्य स्त इति वा बाहुषाळी । बाहुशालीत्यनार्षं पदम् । सर्वत्र पुराणादिषु बाहुषाळीत्येव पठ्यते । न क्वापि बाहुशालीति । **'प्रजापतिमुपादाय नृपाणां जयषालिनाम्'** [बा.कां.५.१] इति रामायणे । **'जयषालिनाम् । शलाभेदः षळयोः'** [क.व्या.] इति माधवयोगी ॥ १०९ ॥ महाचलं महोपलम् । महान्तमचलसानुमित्यर्थः । तं महाचलं तद्धस्तात् प्रगृह्य स्वदेहस्पर्शात् पूर्वमेव हस्ते गृहीत्वा तेनैव तं सुग्रीवं जघान स कुम्भकर्णः ॥ ११० ॥ सः कुम्भकर्णः अङ्गदं जाम्बवन्तं च तळेन तताड । सजाम्बवन्तं जाम्बवता सहितमङ्गदं वा ॥ १११ ॥

---

१. **'बाहुशालिनः'** । तथैव वे.ती.पाठ आदर्शे । लिपिकृत्प्रमादोऽपि स्यात् । **'बाहुषालिनः बाहुबलवतः'** इति तु स्वरसः पाठः ।

२. **'–स्तलाहतौ'**

**अथ प्रगृह्य भास्करिं ययौ स राक्षसो बली ।**
**जगाम चानु मारुतिः सुसूक्ष्ममक्षिकोपमः ॥ ११२ ॥**

**यदैनमेष बाधते तदा विमोचयाम्यहम् ।**
**यदि स्म शक्यतेऽस्य तु स्वमोचनाय तद् वरम् ॥ ११३ ॥**

**इति व्रजत्यनु स्म तं मरुत्सुते निशाचरः ।**
**पुरं विवेश चार्चितः स्वबन्धुभिः समस्तशः ॥ ११४ ॥**

**तुहिनसलिलमाल्यैः सर्वतोऽभिप्रवृष्टे रजनिचरवरेऽस्मिंस्तेन सिक्तः कपीशः ।**
**विगतसकलयुद्धग्लानिरा वञ्चयित्वा रजनिचरवरं तं तस्य नासां ददंश ॥ ११५ ॥**

---

भास्करिं सुग्रीवम् । मारुतिश्च तमन्वेव जगाम सुग्रीवरक्षायै । मषन्तीति मक्षिकाः । मष हिंसायाम् । मषेः कीकन्-प्रत्यय इति भोजः । विस्मृतमक्षधातूनामिदं निर्वचनं भवति । **'मक्ष रोषे'** इति क्षीरस्वामी । **'मक्ष सङ्घाते'** इत्यन्ये । **'मक्ष दशने'** इति काशकृत्स्नः । मक्षन्ति रोषेण दशन्ति, सङ्घशश्चरन्तीति वा मक्षिकाः । स्थूला अपि मक्षिका भवन्ति । अतः सूक्ष्ममक्षिकेत्याह । ततोऽपि सूक्ष्मतरा भवन्ति । याः परिचक्षुः पतन्तोऽपि चक्षुःपथं नावतरन्ति । ताः सुसूक्ष्ममक्षिकाः । तथा दृश्यादृश्यरूपो मारुतिर्बभूवेत्यर्थः ॥ ११२ ॥ यदि अस्य तु अस्यैव स्वमोचनाय स्वं मोचयितुं शक्यते पार्यते, तत् परापेक्षां विना स्वमोचनं वरमुत्तमम् । यदि न शक्यते, तदा शत्रुहस्ताद् विकृष्यापि, विक्रुश्यापि, विरुध्यापि मोचयामि तम् । अथवा यदि शक्यते, अस्यतु निरस्यतु तर्हि शत्रुबन्धनम् । स्यतु नाशयतु वा । षो अन्तकर्मणि । अथच **'शक विभाषितो मर्षणे'** इति दिवादौ पठन्ति । विभाषित इत्युभयपदीत्यर्थः । शक्यति शक्यते वा, मर्षयतीत्यर्थः । यद्ययं शक्यते शत्रुबाधां सोढुं क्षमते, तर्हि तन्मर्षणमेव अस्य स्वमोचनाय वरमुत्तममं विधानमित्यर्थः । अस्य स्वमोचनाय यद्ययं स्वयं शक्यते क्षमते तत् स्वमोचनं वरम् । एवमादयो बहवोऽर्थाः प्रतिभान्ति भाषातत्वविदुषाम् । स्मेति माङ्गलिकीमेतां परकृतिमाह । **'स्मातीते पादपूरणे । स्मान्मङ्गले परकृतौ'** इति मेदिनी ॥ ११३ ॥ इत्यालोच्य तमनुव्रजति सति । स्मेति तां घटनां स्मरन्निवाऽह । **'स्मेति संस्मरणादिषु'** इति हलायुधः । समस्तशः सर्वैः ॥ ११४ ॥ अथ द्वाभ्यां सुग्रीवस्य प्लुतिलाघवं पौरुषं चाऽह । सर्वतः सर्वत्र यत्रयत्र गच्छति । अभिमुखं निरन्तरं च वृष्टे । तुहिनं सुगन्धि च सलिलम् । 'ಪನ್ನೀರು 'इति भाषायाम् । माल्यानि कुसुमानि । **'माल्यं कुसुमतत्स्रजोः'** इति हि मेदिनी । आवञ्चयित्वा आशु हस्तादाप्लुत्य वञ्चयित्वा । अथच 'आ' इति पूर्ववृत्तं स्मरन्निवाऽह । **'आ प्रगृह्यं स्मृतौ'** इति मेदिनी ॥ ११५ ॥

**कराभ्यामथ[1] कण्र्णौ च नासिकां दशनैरपि ।**
**सञ्छिद्य क्षिप्रमेवासावुत्पपात हरीश्वरः ॥ ११६ ॥**

**तळेन[2] चैनं निजघान राक्षसः पिपेष भूमौ पतितं ततोऽपि ।**
**समुद्गतोऽसौ विवरेऽङ्गुलीनां जघान शूलेन पुनः स राक्षसः ॥ ११७ ॥**

**अमोघशूलं प्रपतत् तदीक्ष्य रवेः सुतस्योपरि मारुतात्मजः ।**
**प्रगृह्य जानौ प्रणिधाय शीघ्रं बभञ्ज तं प्रेक्ष्य ननाद चोच्चैः ॥ ११८ ॥**

**अथैनमावृत्य जघान मुष्टिना स राक्षसो वायुसुतं स्तनान्तरे ।**
**जगर्ज तेनाभिहतो हनूमानचिन्तयंस्तत् प्रजहार चैनम् ॥ ११९ ॥**

**तळेन[2] वक्षस्यभिताडितो रुषा हनूमता मोहमवाप राक्षसः ।**
**पुनश्च सञ्ज्ञां समवाप्य शीघ्रं ययौ स यत्रैव रघुप्रवीरः ॥ १२० ॥**

**विचिन्तयामास ततो हनूमान् मयैव हन्तुं समरे हि शक्यः ।**
**असौ तथाऽप्येनमहं न हन्मि यशो हि रामस्य दृढं प्रकाशयन् ॥ १२१ ॥**

**ततोऽपि भुवोऽपि ॥ ११७–८ ॥ तत् ताडनम् ॥ ११९–२० ॥ रामस्य यशः कुम्भकर्णवध(जनितं)**

---

कराभ्यामथ । एतेन–**‘करेण कर्णौ दशनैश्च नासाम्’** [६७.६८] इत्याचार्याभिमतो रामायणपाठ इति ज्ञायते । सम्प्रति तु **‘खरैश्च कर्णौ–’** इति पाठं पठन्ति । सञ्छिद्य सम्भ्रमेण वेगातिशयेन छित्वा ॥ ११६ ॥ अथ पञ्चदशभिः पद्यैः कुम्भकर्णवधमाह । विवरेण समुद्गतः । विवरे लब्धान्तरो वा ॥ ११७ ॥ प्रपतत् वेगेन पतत् । प्रगृह्येति, प्रणिधायेति, प्रेक्ष्येति त्रिः प्रेत्युपसृजता हनुमतः प्रहर्षोत्कर्षं प्रकटयति । जानुमर्धर्चादिं मन्यन्ते । **‘अर्धर्चादयः पुंसि च’** [अ.सू.२.४.३१] । तेन जानुरित्यपि भवति ॥ ११८ ॥ आवृत्य किञ्चित्परिवृत्य, मुष्टिमाबद्ध्य वा । तत् मुष्टिना हननम् । तळेन प्रजहार वक्षसि ॥ ११९ ॥ ‘ताडनीय एवायं जाल्मः’ इति मनसाऽभिलष्य ताडितः । **‘अभीत्थम्भूतकथने चाऽभिमुख्याभिलाषयोः’** इति मेदिनी । अभितः शीघ्रं ताडितः । **‘अभितः शीघ्रसाकल्यसम्मुखोभयतोऽन्तिके’** इति च । अवाप गाढमापेत्यर्थः । यथा चिरमनुत्थानं स्यात् । अथापि शीघ्रं सञ्ज्ञां समवाप्य । राक्षसकुलसम्भ्रमायावाप्येत्यर्थः । शीघ्रमवाप्य शीघ्रं ययौ स कुम्भकर्णः ॥ १२० ॥ विचिन्तयामास ।

---

१. **‘–भ्यामस्य कर्णौ’** २. **‘तलेन’**

अनन्यवद्ध्यं तमिमं निहत्य स्वयं स रामो यश आहरेत ।
दत्तो वरो द्वारपयोः स्वयं च जनार्द्दनेनैव पुरा ततश्च[1] ॥ १२२ ॥

मयैव वद्ध्यौ भवतं त्रिजन्मसु प्रवृद्धवीर्य्याविति केशवेन ।
उक्तं ममैवैष[2] यदप्यनुग्रहं वधेऽस्य कुर्य्यान्नतु मे स धर्म्मः[3] ॥ १२३ ॥

इति स्म सञ्चिन्त्य कपीशयुक्तो जगाम यत्रैव कपिप्रवीराः[4] ।
स कुम्भकर्ण्णोऽखिलवानरांस्तु प्रभक्षयन् राममुपाजगाम ॥ १२४ ॥

ते भक्षितास्तेन कपिप्रवीराः [5]सर्वे विनिर्ज्जग्मुरमुष्य देहात् ।
स्रोतोभिरेवाथ च रोमकूपैः केचित् तमेवाऽरुरुहुर्य्यथा गिरिम् ॥ १२५ ॥

**प्रकाशयन् हनूमान् इति विचिन्तयामास । प्रकाशयन्नहमेनं न हन्मीति (वि)चिन्तयामासेति वा ॥१२१॥ कथं यशःप्रकाश इत्यतस्तद् विवृणोति–अनन्यवध्यमिति । न हन्मीत्यत्र कारणान्तरं चाह–दत्तो वर इत्यादिना । ततश्च सोऽहं न हन्मीति सम्बन्धः ॥ १२२ ॥ वरदानप्रकारमाह–मयैवेति । यदपि यद्यपि, मयाऽस्य वधे, कृतेऽपीति शेषः । अनुग्रहमेव कुर्यात् । न क्रोधम्, तथाऽपीति सम्बन्धः । मे स्वधर्मो नतु नैव ॥ १२३–४ ॥ स्रोतोभिः नवद्वारैः । करणे तृतीया ॥ १२५ ॥**

---

निश्चितचिन्तनं विचिन्तनम् । पूर्वमेव निश्चितं प्रमेयं सम्प्रति चिन्तयामासेत्यर्थः । हेतुचिन्तनं च विचिन्तनम् । स्वेन कुम्भकर्णस्याहनने हेतुभूतं प्रमेयं चिन्तयामासेत्यर्थः । विज्ञाय चिन्तनं च विचिन्तनम् । सम्प्रति स्वस्य किं कर्तव्यं किमकर्तव्यमिति विज्ञाय चिन्तयामासेत्यर्थः । एवं बहवोऽर्था विस्फुरन्ति–**'वि निग्रहे नियोगे च तथैव पदपूरणे । निश्चयेऽसहने हेतावव्याप्तिविनियोगयोः । ईषदर्थे परिभवे शुद्धावालम्बनेऽपिच । विज्ञाते–'** इति च । सर्वेऽप्यर्था अत्र यथासम्भवमनुसन्धेयाः । यथा ईषदर्थे–विचिन्तयामास ईषच्चिन्तयामास, क्षणं चिन्तयामासेत्यर्थः ॥ १२१ ॥ द्वारपयोर्जयविजययोः । पूर्वं जनयित्वाऽर्दयति, अन्ते च जननमेवार्दयति नाशयतीति जनार्दनः । जनाभ्यां द्वारपाभ्यामर्द्यते याच्यते शापमोक्षार्थम्, जनौ दैत्यावर्दयतीति च । अर्द याचने यातने च । आहरेत आत्मच्छन्दानुगुणं लभेत ॥ १२२ ॥ यद्यपि अस्य मयैव वधेऽपि एष भगवान् रामो मम अनुग्रहमेव कुर्यात् । अथापि भगवद्वचनातिक्रमो नैव मे धर्मः ॥ १२३ ॥ सञ्चिन्त्य भगवच्चिन्तनसमानम्, अत एव शोभनं चिन्तयित्वा । **'सं तु शोभनार्थसमार्थयोः'** इति च । प्रभक्षयन् यथेच्छं भक्षयन् ॥ १२४ ॥ स्रोतोभिः श्रोत्रादिभिः ।

---

१. **'पुरातनश्च ।'** २. **'मयैवैष–'** । स एव वे.ती.पाठ इति भाति । ३. **'मे स्वधर्मः'** इति वे.ती.पाठः ।
४. **'कपिप्रवीरः ।'** ५. **'सर्वेऽपि निर्जग्मु–'**

स तान् विधूयाऽशु यथा महागजो जगाम रामं समरार्थमेकः ।
प्रभक्षयन् स्वानपरांश्च सर्वशो मत्तः समाघ्राय च शोणितं पिबन् ॥ १२६ ॥

न्यवारयत् तं शरवर्षधारया स लक्ष्मणो नैनमचिन्तयत् सः ।
जगाम रामं गिरिशृङ्गधारी समाह्वयत् तं समराय चाऽशु ॥ १२७ ॥

अथो समादाय धनुः सुघोरं शरांश्च[1] वज्राशनितुल्यवेगान् ।
प्रवेशयामास निशाचरे प्रभुः स राघवः पूर्वहतेषु यद्वत् ॥ १२८ ॥

यावद्बलेन न्यहनत् खरादिकान् न तावतैव न्यपतत् स राक्षसः ।
अथ प्रहस्याऽत्मबलैकदेशं प्रदर्शयन्[2] बाणवरान् मुमोच ॥ १२९ ॥

द्वाभ्यां स बाहू निचकर्त्त तस्य पदद्वयं चैव तथा शराभ्याम् ।
अथापरेणास्य शिरो निकृत्य सम्प्राक्षिपत् सागरतोय आशु ॥ १३० ॥

**एकः असहायः ॥ १२६ ॥ नाचिन्तयत् न गणयामास ॥ १२७ ॥ पूर्वहतेषु खरादिषु ॥ १२८ ॥ रा(घवः खरादिका)न् यावद्बलेन प्रकाशितेन यावता बलेन न्यहनत् स राक्षसः तावता बलेनैव न न्यपतदिति सम्बन्धः । अथ प्रहस्याऽत्मबलैकदेशं प्रकाशयन्निति । भगवतो बलस्य प्रकाशनं च शक्तताव्यक्त(ता)-रूपविशेषबलाद् घटते ॥ १२९–३५ ॥**

---

**'खमक्षमिन्द्रियं स्रोतो हृषीकं करणं स्मृतम्'** इत्यभिधानम् ॥ १२५ ॥ शोणितं समाघ्राय मत्तः । पुनश्च शोणितं पिबन् । मदादेव विवेक्तुमप्रभवन्, स्वानपरांश्च प्रभूतं भक्षयन् । सर्वशः सर्वान् । सर्वत्र च । **'मत्तः शोणितगन्धेन स्वान् परांश्चैव खादति'** [यु.कां.६७.१२८] इति च ॥ १२६ ॥ स लक्ष्मणः । यः कुम्भकर्णापरनामानं रावणात्मज-मतिकायं जघान स लक्ष्मणो रावणानुजं कुम्भकर्णमपि न्यवारयत् । स च कुम्भकर्णः नैनं प्रतिभटममन्यत । किन्तु राममेव जगाम । गत्वा च 'एहि मन्ये[3] रामचन्द्र, कुम्भकर्णं विजेष्यसे' इति सम्बोध्याऽह्वयच्च ॥ १२७ ॥ वज्राशनि-तुल्यवेगान् । वज्राशनिरिन्द्रायुधम् । **'वज्राशनिं विदुर्वज्रम्'** इति पुरुषोत्तमः । **'बाणेन वज्राशनिसन्निभेन'** [५९.१३८] इति, **'वज्राशनिसमैः शरैः'** [८८.१०] इति च वाल्मीकिः । वजति शत्रूनश्नाति चेति । वज गतौ । वर्जयति साधूनश्नात्यसाधूनिति वा । वज्रश्चासावशनिश्च । पूर्वहतेषु यद्वत् यावद्बलेन प्रवेशयामास तावद्बलेन कुम्भकर्णेऽपि शरान् प्रवेशयामास ॥ १२८ ॥ प्रदर्शयन् प्रकाशं दर्शयन् ॥ १२९ ॥ बाहुपादं शिरश्चेति समग्रं

---

१. **'शरान् सुरेशाशनि–'**
२. **'प्रकाशयन्'** इति वे.ती.पाठ इति भाति ।
४. **'एहि मन्ये प्रहासे लृट्'** (अ.सू.८.१.४६) । न विजेष्यस इत्यर्थः ।

**अवर्द्धताब्धिः पतितेऽस्य काये महाचलाभे क्षणदाचरस्य ।**
**सुराश्च सर्वे ववृषुः प्रसूनैर्म्मुदा स्तुवन्तो रघुवर्य्यमूर्ध्नि[1] ॥ १३१ ॥**

**योजनानां त्रिलक्षं हि कुम्भकर्ण्णो व्यवर्द्धत[2] ।**
**पूर्वं पश्चात् सञ्चुकोच लङ्कायामुषितुं स्वयम् ॥ १३२ ॥**

**स तु स्वभावमापन्नो म्रियमाणो व्यवर्द्धत ।**
**तेनास्मिन् पतिते त्वब्धिरवर्द्धदधिकं तदा ॥ १३३ ॥**

**अथापरे ये रजनीचरास्तदा कपिप्रवीरैर्न्निहताश्च सर्वशः ।**
**हतावशिष्टास्त्वरिताः प्रदुद्रुवुर्भ्रातुर्वधं चोचुरुपेत्य रावणम् ॥ १३४ ॥**

**स दुःखतप्तो निपपात मूर्च्छितो निराशकश्चाभवदात्मजीविते ।**
**तमाह पुत्रस्त्रिदशेशशत्रुर्न्नियुङ्क्ष्व मां शत्रुवधाय माचिरम् ॥ १३५ ॥**

---

देहखण्डं प्राक्षिपत् ॥ १३० ॥ प्रसूनैर्ववृषुः प्रसूनानि ववृषुरित्यर्थः । 'षट्सु द्वितीया' इति प्राचीनं व्याकरणम् । वस्तुतस्तु बिन्दुवृष्टिमपि पुष्पवृष्टिमाहुः । तद्व्यावर्तनाय कुसुमैर्ववृषुरित्याह । वृषु सेचने । कुसमैरभिषेकं चक्रुरित्यर्थः । सेचनकर्मणो धात्वर्थ एवान्तःप्रवेशादकर्मकत्वम् । तथाहि वाक्यपदीयम्–**'धातोरर्थान्तरे वृत्तेर्धात्वर्थेनोपसङ्ग्रहात् । प्रसिद्धेरविवक्षातः कर्मणोऽकर्मिका क्रिया'** इति । मूलत इदं भागुरिवचनम्, समुद्धृतं भर्तृहरिणेति वदन्ति ॥ १३१ ॥ अथ द्वाभ्यामब्धिवृद्धिकारणमाह– योजनानामित्यादिना । अत्रापि योजनशब्दो व्यामादिपरः । अन्यथा लक्षयोजनोच्छ्रितादाकाशादप्युच्छ्रयप्रसङ्गात् । लक्षयोजनविस्तृतेऽब्धौ खण्डितस्यापि देहस्य पातनासम्भवाच्च । त्रयाणां लक्षाणां समाहारः । लोकविलक्षणा विपरीता चेयं वृद्धिरित्याह–व्यवर्धतेति । उषितुम् । निवसितुम् । वस निवासे । तर्हि कथमुषितुम्? वस्तुमिति वसितुमिति वा वक्तव्यम् । सत्यम्, वस्तुमिति वसितुमिति वा वक्तव्यं पाणिनिमात्रशरणैः । बहुव्याकरणज्ञैरन्यथाऽपि प्रयुज्यते । तथाहि– तुमुनि गुणाभावपक्षे उषितुम्, गृहीतुमित्यादीनि रूपाणि प्राचीनैरङ्गीकृतानि ॥ १३२ ॥ अब्धिवृद्ध्या तत्तीरवासिनां महत् सङ्कटमापतितमिति सूचयत्यवर्धदिति परस्मैभाषया ॥ १३३ ॥ सर्वशः सर्वे, सर्वैश्च, सर्वत्र च । इतः परं रामायणे रावणपुत्राणां चतुर्णामतिकायदेवान्तकनरान्तकत्रिशिरसां वधः कथ्यते । स तु पूर्ववृत्त इति भगवत्पादेन पूर्वमेव न्यरूपि ॥ १३४ ॥ अथ पुनरष्टादशभिर्नागपाशबन्धनमाह । त्रिदशेशशत्रुरिन्द्रजित् । माचिरम् । सत्वरम् ॥ १३५ ॥

---

१. **'–मूर्धनि'** २. **'–कर्णोऽभ्यवर्धत'**

मया गृहीतस्त्रिदशेश्वरः पुरा विषीदसे किं नरराजपुत्रतः ।
स एवमुक्त्वा प्रजुहाव पावकं शिवं समभ्यर्च्च्य समारुहद् रथम् ॥ १३६ ॥

स आत्तधन्वा सशरो रथेन वियत् समारुह्य ययावदर्शनम् ।
स नागपाशैर्वरतः शिवस्य बबन्ध सर्वान् कपिवीरसङ्घान् ॥ १३७ ॥

पुराऽवताराय यदा स विष्णुर्दिदेश सर्वांस्त्रिदशांस्तदैव ।
ममापि सेवा भवते[1] प्रयोज्येत्येवं गरुत्मानवदद् वृषाकपिम् ॥ १३८ ॥

तमाह विष्णुर्न्न भुवि प्रजातिमुपैहि सेवां तव चान्यथाऽहम् ।
आदास्य एवात्र यथा यशः स्याद् धर्म्मश्च कर्त्तव्यकृदेव च स्याः ॥ १३९ ॥

**विषीदसे किं किमर्थम्? शिवं समभ्यर्च्य, पावक इति शेषः ॥ १३६–७ ॥ गरुडागमनं वक्तुं कारणतयेतिहासमाह–पुरेति । वृषाकपिं वृषाकाणामिन्द्रियाणां पतिम् ॥ १३८ ॥ अन्यथा भुव्यवतारं विनाऽपि ।**

प्रजुहाव समन्त्रं विधिवज्जुहाव । लोहितेन वाससा स्रुवेण कार्ष्णायसेन । प्रतापेन जुहाव । शत्रुप्रतापनाय जुहाव । प्राणिबलिपूर्वकं जुहाव । **'छागस्य कृष्णवर्णस्य गलं जग्राह जीवतः'** [७३.२५] इति च । अग्न्यन्तर्गतं शिवं समभ्यर्च्य । नहि वैष्णवं यागमसुरा वितन्वते । समभ्यर्च्य । सर्वोपकरणानामभिमन्त्रणपूर्वकं सर्वाधिकत्वेनार्चनं समभ्यर्चनम् । समारुहद् रथम् । समारुक्षत् । पूर्वाचार्याः क्सं वैकल्पिकं मन्यन्त इत्युक्तम् । अनेन चाक्षरलोपेन तस्य युद्धे विजयलोपं च सूचयामासेति सुन्दरम् ॥ १३६ ॥ रथेन व्योमयानेन । सुखेनानायासेनऽरोहः समारोहः । **'सं कल्याणे सुखे–'** इति मेदिनी । रामायणे रामलक्ष्मणावेव नागपाशेन बद्धाविति प्रतीयते । अतस्तत्रास्फुटमर्थं स्फुटमाह– सर्वान् कपिवीरसङ्घानिति । सूचितमेतत् रामायणेऽपि–**'यूथपानपि तान् सर्वांस्ताडयामास रावणिः'** [४६.१७] इति ॥ १३७ ॥ वृषेण सुकृतेन आचरितेन आ समन्तात् कं येभ्यस्तानि वृषाकाणि इन्द्रियाणि । तैर्विषयान् आनन्दमयान् पिबत्यनुभवतीति वृषाकपिः । **'शुभं पिबत्यसौ नित्यम्'**, **'ऋतं पिबन्तौ सुकृतस्य लोके'** इत्यादेः । वृषेण धर्मेण समन्तात् सुखं पाययति च । स्वयं धर्मस्वरूपत्वाद्, अभिमतवर्षणाच्च वृषः । समन्तात् सुखभोक्ता च । वर्षति कामानिति वृषः । आकम्पयति पापिन इत्याकपिः । वृषा इन्द्रः आकम्पतेऽस्मादिति च । **'भीषाऽस्मादग्निश्चेन्द्रश्च'** इत्यादेः । यद्वा वर्षणाद् वृषः । कं पिबतीति कपिः । वृषश्चासौ कपिश्च वृषाकपिः । **'अन्येषामपि दृश्यते'** [६.३.१३७] इति हि वैयाकरणाः । **'यत्र दीर्घत्वं न विहितम्, दृश्यते च प्रयोगे, तदनेन कर्तव्यम्'** इति हि काशिका । वृषार्थं धर्मरक्षार्थं पापिनामकं दुःखं पाययति वा । नागपाशेन कपय एव बद्धाः,

१. 'भवता'

वरेण शर्वस्य हि रावणात्मजो यदा निबध्नाति कपीन् सलक्ष्मणान् ।
उरङ्गपाशेन तदा त्वमेव समेत्य सर्वानपि मोचयस्व ॥ १४० ॥

अहं समर्थोऽपि स लक्ष्मणश्च तथा हनूमान् न विमोचयामः ।
तव प्रियार्थं गरुडैष एव कृतस्तवाऽऽदेश इमं कुरुष्व ॥ १४१ ॥

तदेतदुक्तं हि पुराऽऽत्मना यत् ततो हि रामो न मुमोच कश्चन ।
न लक्ष्मणो[१] नैव च मारुतात्मजः स चैव जानाति हि[२] देवगुह्यम् ॥ १४२ ॥

अथो निबद्ध्याऽऽशु हरीन् सलक्ष्मणान् जगाम रक्षः स्वपितुः सकाशम् ।
ननन्द चासौ पिशिताशनेश्वरः शशंस पुत्रं च कृतात्मकार्य्यम् ॥ १४३ ॥

स पक्षिराजोऽथ हरेर्निदेशं स्मरंस्त्वरावानिह चाऽऽजगाम ।
तत्पक्षवातस्पर्शेन[३] केवलं विनष्ट एषां स उरङ्गबन्धः ॥ १४४ ॥

स राममानम्य परात्मदैवतं ययौ सुमाल्याभरणानुलेपनः ।
कपिप्रवीराश्च[४] तरूञ्छिलाश्च प्रगृह्य नेदुर्बलिनः प्रहृष्टाः ॥ १४५ ॥

**अत्र भुवि । कर्तव्यकृदेव स्याः मत्सेवाकृदेव भवेः ॥१३९॥ का सेवेत्यत आह– वरेणेत्यादिना ॥ १४०॥ समर्थोऽहमपि, शस्त्र(मोचन)समर्थः । लक्ष्मणश्च तथा समर्थः सन् । हनूमानपि । एते वयं न विमोचयामः । आदेश आज्ञा ॥ १४१ ॥ सः लक्ष्मणः देवगुह्यं जानात्येव हि । हनूमांश्च ॥ १४२–७ ॥**

---

न वृषाकपिरपीतीन्द्रजित्साहसमनेन परिहसतीव ॥ १३८–४० ॥ सः योग्यतायां त्वत्समानः शेषांशो लक्ष्मणश्च । सलक्ष्मणः हनूमांश्च मोचयितुं समर्थः । अथापि वयं त्रयोऽपि तव प्रियार्थं न विमोचयाम इति वा ॥ १४१ ॥ स च मारुतात्मजश्च, चशब्दाल्लक्ष्मणश्च जानात्येव हि देवगुह्यम् ॥ १४२–३ ॥ तत्पक्षवातस्पर्शेन इति विश्लिष्य पाठश्छन्दःसौहित्याय । ईषन्मात्रेण स्पर्शेनेति विश्लेषार्थः ॥ १४४ ॥ परमुत्तमं आत्मदैवतम् । परात्मनां ब्रह्मादीनामपि

---

१. **'कश्चन । सलक्ष्मणो–'**
२. **'स एव जानाति च देव–'**
३. **'–स्पर्शेन'** इति विश्लिष्य पठनीयम् ।
४. **'–प्रवीरास्तु तरू–'**

श्रुत्वा निनादं प्लवगेश्वराणां पुनः सपुत्रोऽत्रसदत्र रावणः ।
बन्धादमुष्मात् [1]प्रतिनिस्सृतास्ते किमत्र कार्य्यं त्विति चिन्तयानः ॥ १४६ ॥

पुनश्च हुत्वा स हुताशमेव रथं समारुँह्य ययावदर्शनम् ।
ववर्ष चास्त्राणि महान्त्यजस्रं वरादुमेशस्य तथाऽब्जजस्य ॥ १४७ ॥

पुनश्च तस्यास्त्रनिपीडितास्ते निपेतुरुर्व्यां कपयः सलक्ष्मणाः ।
स्पृशन्ति नास्त्राणि दुरन्तशक्तिं तनुं समीरस्य हि कानिचित् क्वचित् ॥ १४८ ॥

विज्ञातुकामः पुरि सम्प्रवृत्तिं विभीषणः पूर्वगतस्तदाऽऽगात् ।
ददर्श सर्वान् पतितान् स वानरान् मरुत्सुतं त्वेकमनाकुलं च ॥ १४९ ॥

**सलक्ष्मणाः कपयो निपेतुरिति लक्ष्मणस्य पतनमत्रानुसरणमात्रम् । 'रामस्य मनोऽनुसारतः पुराऽस्त्र-मेवानुसरन्'(१६२) इति वक्ष्यमाणत्वात् ॥ १४८–५७ ॥**

---

दैवतम् । परात्मा च परदैवतं च । सुमाल्यान्याभरणानि गन्धानुलेपनं च यस्येति तस्य पुरुषरूपतामाह । कपिप्रवीराश्चेति चकारः क्रियायोगे । स गरुडो ययौ कपिप्रवीरा नेदुश्चेति । तरूञ्छिलाश्चेति द्रव्ययोगे । तरूंश्च शिलाश्च प्रगृह्येति ॥ १४५ ॥ अत्रसत् । त्रसी उद्वेगे । **'उद्वेगो भयम्'** इति क्षीरस्वामी । त्रसेर्लङि 'अत्रसत्', अत्रस्यत्' इति रूपद्वयम् । बन्धात् प्रतिमुच्य निःसृताः । प्रतिकृत्य च निःसृताः । प्रतिकारश्च गरुडपक्षवातस्पर्शः ॥ १४६–७ ॥ निपीडिताः नागपाशनिबन्धनेन पीडिताः । मारुतिं विनाऽन्ये कपयः सलक्ष्मणाः । यद्यप्ययं नागपाश उमेशवरलब्ध इति शक्यं लक्ष्मणेनापि वारयितुम् । अथापि **'बाणावपातांस्त्वमिहाद्य धीमन् मया सहाव्यग्रमनाः सहस्व'** [यु.कां.७३.७०] इति रामाज्ञया स्वयमपि निपीडितमिवाऽत्मानं दर्शयामास । अथापि ब्रह्मवराद् रामेच्छया च किञ्चिदिव तं बबन्ध । रामं तु सर्वात्मना न बबन्ध । केवलं दर्शयामास ॥ १४८ ॥ अस्तु तावदिदम् । विभीषणः कथं न बद्धः । नहीन्द्रजिता पितृव्यं विहायेत्यभिमन्त्र्य नागास्त्रं प्रयुक्तम् । अथापि अस्वपक्षीयाणां रणक्षेत्रे युध्यमानानामिदमस्त्रमित्यभिमन्त्र्य प्रायुङ्क्त । तेन विभीषणस्तदा न रणक्षेत्र आसेत्यमुच्यतेत्याह– विज्ञातुकामः । केवलं रामपक्षीयाणामित्यनुसन्धाने पुरि गता सीताऽपि, सरमाद्या अपि, कैकस्याद्या अपि, मण्डोदर्याद्या अप्यस्त्र-विषया भवेयुरिति रणक्षेत्रे युध्यमानानामित्यभिमन्त्रयामास । तावन्मात्रग्रहणे राक्षसा अपि पाशबद्धाः स्युरिति पूर्वदलम् । कथं तत्र नाऽस विभीषणः? यतः पुरि राक्षसानां सम्प्रवृत्तिं समग्रां युद्धवार्त्तां विज्ञातुकामः पूर्वमेव पुरं गतः । तस्मान्न तमस्त्राण्यबाधन्त ॥ १४९ ॥

---

१. **'प्रविनिस्सृता–'**

स तं समादाय ययौ विधातृजं विमूर्च्छितं चोदकसेकतस्तम् ।
आश्वास्य किं जीवसि हीत्युवाच[१] तथेति स प्राह च मन्दवाक्यः ॥ १५० ॥

ऊचे पुनर्ज्जीवति किं हनूमान् जीवाः स्म[२] सर्वेऽपि हि जीवमाने ।
तस्मिन् हते निहताश्चैव सर्व इतीरितेऽस्मीत्यवदत् स मारुतिः ॥ १५१ ॥

इत्युक्तो जाम्बवानाह हनूमन्तमनन्तरम् ।
योऽसौ मेरोः समीपस्थो गन्धमादनसञ्ज्ञितः[३] ।
गिरिस्तस्मात् समाहार्य्यं [४]त्वयौषधचतुष्टयम् ॥ १५२ ॥

मृतसञ्जीवनी मुख्या सन्धानकरणी परा ।
सवर्ण्णकरणी चैव विशल्यकरणीति च ॥ १५३ ॥

इत्युक्तः स क्षणेनैव प्रापतद् गन्धमादनम् ।
अवाप चाम्बरचरो राममुक्तः शरो यथा ॥ १५४ ॥

---

विधातृजं जाम्बवन्तम् ॥ १५० ॥ जीवा धृतप्राणाः । **'तस्मिन् जीवति वीरे तु हतमप्यहतं बलम् । हनुमत्युज्झितप्राणे जीवन्तोऽपि वयं हताः'** [७४.२२] इति च । जीवमाने सर्वजीवानामभिमानिनि तस्मिन् जीवमाने जीवति सति । सर्वेषामात्मलाभोऽयमित्यात्मनेभाषा । **'अनर्हधर्षणा हीमे जीवमानेषु पाण्डुषु'** [व.प.२५०.२] इति च भारते । **'न स शक्यः क्रतुश्रेष्ठो जीवमाने युधिष्ठिरे'** [२५६.१४] इति च ॥ १५१ ॥ अथ सङ्ख्यानुगुणेनानुष्टुभां सार्धेन चतुष्टयेनौषधकथामाह– इत्युक्त इति ॥ १५२ ॥ **'मृतसञ्जीवनीं चैव विशल्यकरणीमपि । सावर्ण्यकरणीं चैव सन्धानकरणीं तथा'** [७४.३३] इति च । सन्धानकरणी या भग्नान्यस्थीनि अङ्गानि वा सन्दधाति । सवर्णकरणी, या व्रणादिना विवर्णं चर्म पूर्वसमानवर्णं करोति । विशल्यकरणी, या शस्त्रशङ्कुभिर्विद्धं देहभागं विरुजं करोति । मृतसञ्जीविनी मुख्या । जीवतो हि सन्धानादिना कृत्यम् । सन्धानकरणी च परा तदनन्तरमुख्या । सन्धानकरण्येव छिन्नं सन्धाय प्ररोहयतीति छिन्नप्ररोहिणी च भवति । वक्ष्यति हि –**'छिन्नप्ररोहिणश्चैव विशल्याः पूर्ववर्णिनः'** [२०५] इति । सवर्णकरण्येव, केवलं सवर्णकरणी । अतो न पूर्वद्वयसमानयोगक्षेमतया मुख्या । अथाप्यन्यत्र दुर्लभेति चकारेणाऽऽह । पद्यमिदमखिलं पठ्यते सङ्ग्रहेऽपि [सं.रा;यु.कां.१०.३८] ॥ १५३–४ ॥

---

१. **'हीत्यवोचत् तथेति'** २. **'जीवाम'** ३. **'–सञ्ज्ञकः।'** ४. **'त्वयौषधिचतु–'**

**अन्तर्हिताश्चौषधीस्तु तदा विज्ञाय मारुतिः ।**
**उद्बबर्ह गिरिं क्रोधाच्छतयोजनमण्डलम् ॥ १५५ ॥**

**स तं समुत्पाट्य गिरिं करेण प्रतोळयित्वा[1] बलदेवसूनुः ।**
**समुत्पपाताम्बरमुग्रवेगो यथा हरिश्चक्रधरस्त्रिविक्रमे ॥ १५६ ॥**

**अवाप चाक्ष्णोः स निमेषमात्रतो निपातिता यत्र कपिप्रवीराः ।**
**तच्छैलवातस्पर्शात्[2] समुत्थिताः समस्तशो वानरयूथपाः क्षणात् ॥ १५७ ॥**

**अपूजयन्मारुतिमुग्रपौरुषं [3]रघूत्तमोऽस्यानुजनिस्तथाऽपरे ।**
**पपात मूर्ध्न्यस्य च पुष्पसन्ततिः प्रमोदितैर्देववरैर्विसर्ज्जिता ॥ १५८ ॥**

**स देवगन्धर्वमहर्षिसत्तमैरभिष्टुतो रामकरोपगूहितः ।**
**पुनर्गिरिं तं शतयोजनोच्छ्रितं न्यपातयत् संस्थित एव तत्र च[4] ॥ १५९ ॥**

**रघूत्तमः अपूजयदित्यमानयदित्यर्थः ॥ १५८–९ ॥**

---

ता ओषधयोऽपि भवन्ति; औषधानि च भवन्ति । **'ओषधेरजातौ'** [अ.सू.५.४.३७] इति हि पाणिनिः । ओषधिरेवौषधम् । ओषधयः प्ररोहन्ति । औषधानि सेव्यन्ते । अन्तर्हिताश्चौषधीस्तु । दुर्लभा ओषधीः । चकारो दौर्लभ्यवचनः । हनुमत्प्रतापातिशयप्रकाशनार्थत्वं नाम विशेषं तुनाऽऽह । न केवलं दुर्लभत्वादन्तर्हिताः । हनुमत्-प्रतापाविष्कारार्थमेवान्तर्हिता इति भावः । क्रोधादिव ॥ १५५ ॥ पद्यानां द्वाविंशत्या मेघनादवधान्तमुदन्तमाह । प्रतोळयित्वा यथाऽचलोऽपि चलन् हस्तान्न च्यवेत तथा समन्तात् समीकृत्य । त्रिविक्रमेऽवतारे ब्रह्माण्डकटाहभेदनाय यथाऽम्बरमुद्गतः । हरिरिति हरिपादो वा ॥ १५६ ॥ निमेषमात्रतः । निमिषितयोरक्ष्णोरुन्मेषात् पूर्वमित्यर्थः । यत्र निपातितास्तं देशमवाप । वातस्पर्ॠशादिति शिथिलपाठः पूर्ववत् । समस्तशः सर्वे ॥ १५७ ॥ अपूजयदिति, अपूजयन्निति च प्रतृण्णम् । रघूत्तमः अपूजयत् अभिननन्द । अपरे अपूजयन् अभिननन्दुरभ्यर्हयाञ्चक्रिरे च । वियतः सर्जिता, विविधं सर्जिता च । सृज विसर्गे । ण्यन्तात् क्तः । यद्वा 'सर्ज अर्जने' इत्यस्येदं रूपम् । सर्जने इति पठनीयम् ॥ १५८ ॥ अभितः भुव्यन्तरिक्षे च स्तुतः । अभिमानपूर्वं स्तुतः । उपगूहितः । गुहू संवरणे ।

---

१. **'प्रतोलयित्वा'**

२. **'स्पर्ॠशात्'** इति श्लथमुच्चारणं पूर्ववत् ।

३. **'रघूत्तमस्यानु–'**

४. **'एव तत्र ।'**

स पूर्ववन्मारुतिवेगचोदितो निरन्तरं श्लिष्टतरोऽत्र चाभवत् ।
पुनश्च सर्वे तरुशैलहस्ता रणाय चोत्तस्थुरलं नदन्तः ॥ १६० ॥

पुनश्च तान् प्रेक्ष्य समुत्थितान् कपीन् भयं महच्छक्रजितं विवेश ।
स पूर्ववद्धव्यवहे समर्च्य शिवं तथाऽदर्शनमेव जग्मिवान् ॥ १६१ ॥

वराश्रयेणाजगिरीशयोस्तथा पुनर्म्महास्त्रैः[1] स बबन्ध तान् कपीन् ।
अथाऽह रामस्य मनोऽनुसारतः पुराऽस्त्रमेवानुसरन् स लक्ष्मणः ॥ १६२ ॥

पितामहास्त्रेण निहन्मि दुर्म्मतिं तवाऽज्ञया शक्रजितं सबान्धवम् ।
इतीरिते तेन[2] स चाऽह राघवो भयाददृश्ये न विमोक्तुमर्हसि ॥ १६३ ॥

न सोढुमीशोऽसि यदि त्वमेतदस्त्रं तदाऽहं शरमात्रकेण ।
अदृश्यमप्याशु निहन्मि सन्तं रसातळे[3]ऽथापि हि सत्यलोके ॥ १६४ ॥

**निरन्तरं नष्टः च्छेदाङ्कः यथा भवति तथा श्लिष्टतरः संश्लेषं प्राप्तः ॥ १६०–१ ॥ रामस्य मनोऽनुसारतः एवमस्त्रमनुसरेल्लक्ष्मण इति । अनुसर(न्) बद्धवद् वर्तमानः ॥ १६२ ॥ न विमोक्तुमर्हसि, ब्रह्मास्त्रमिति शेषः ॥ १६३ ॥ न सोढुमीशोऽसीति । सोढुमनीश(त्व)ममर्षितयैव । नतु तद्बद्धत्वेन । तथात्वे पितामहास्त्रेण निहन्मीत्युक्तिविरोधात् । तदा तर्हि ॥ १६४ ॥**

---

गूहनमाच्छादनम् । उपगूहनमालिङ्गनम् । उदित्त्वादिडभावपक्षे तूपगूढः । रामकरेत्यनेनेदमाह–रमकराभ्यां सर्वाङ्गमाव्रियमाण इव गाढमुपगूढ इत्यर्थः । शतयोजनोच्छ्रितम् । वृक्षस्येव गिरेरप्युच्छ्रयो यथासम्भवं योजनीयः । प्रायोऽत्र योजनमिति व्यायतौ बाहू । 'ಮಾರು' इति भाषायाम् । तत्रैव संस्थित एव न्यापतयच्च । संस्थितः सात्मविश्वासं स्थितः ॥ १५९ ॥ श्लिष्टतरश्चाभवत् । उभयथाऽपि दुर्लभं साहसमिति च चकारद्वयेनाऽह–तत्र च, अत्र चेति । रणाय च रणायैव ॥ १६०–१ ॥ पुनस्तथा पूर्ववदेव ॥ १६२ ॥ पितामहास्त्रेण ब्रह्मास्त्रेण ॥ १६३ ॥ भयाददृश्ये न मन्त्रपूतान्यस्त्राणि प्रयुज्यन्ते । अहं तु विनाऽस्त्रप्रयोगं क्षुद्रेण शरमात्रेण तं निहन्यामिति । रसातळे पाताळे ॥ १६४ ॥

---

१. '–गिरीशयोः पुनः सम्मोहनास्त्रैः' २. 'इतीरितस्तेन' ३. '–तले–'

इति स्म वीन्द्रस्य हनूमतश्च बलप्रकाशाय पुरा प्रभुः स्वयम् ।
सम्मानयित्वाऽस्त्रममुष्य रामो दुरन्तशक्तिः शरमाददेऽथ ॥ १६५ ॥

अनेन दृष्टोऽहमिति स्म दुष्टो विज्ञाय बाह्वोर्बलमस्य चोग्रम् ।
विनिश्चयं देवतमस्य पश्यन् प्रदुद्रुवे प्राणपरीप्सुराशु ॥ १६६ ॥

हाहाकृते प्रद्रुत इन्द्रशत्रौ रघूत्तमः शत्रुविभीषणत्वात् ।
विभीषणेत्येव सुरैरभिष्टुतो विज्ञानमस्त्रं त्वमुचत् स्वसैन्ये ॥ १६७ ॥

निशाचरास्त्रं ह्यगमत् क्षणेन रामास्त्रवीर्य्याद्धरयो नदन्तः ।
उत्तस्थुरुच्चोरुगिरीन् प्रगृह्य प्रशंसमाना रघुवीरमुच्चैः ॥ १६८ ॥

सुरैश्च पुष्पं [१]वर्षद्भिरीडितस्तस्थौ धनुष्पाणिरनन्तवीर्य्यः ।
स रावणस्याथ सुतो निकुम्भिलां पुनः समासाद्य जुहाव पावकम् ॥ १६९ ॥

**सम्मानयित्वा स्वयममोचयित्वेति भावः ॥१६५॥ प्राणपरीप्सुः प्राणान् परिरक्षितुमिच्छन् ॥ १६६ ॥ विभीषणे(ती)ति प्रातिपदिकमात्रम् ॥ १६७–७६ ॥**

---

सर्वसमक्षं माननं सम्माननम् । सम्प्रीत्या माननं सम्माननम् ॥ १६५ ॥ बाह्वोर्बलं च विज्ञाय प्रकाशं दुद्रुवे ॥ १६६ ॥ विभीषणेन विज्ञानास्त्रं प्रायोजीति ग्रन्थान्तरवचनमविरोधेन समन्वयते– विभीषणेत्येव सुरैर्भिष्टुतः । 'जयजय हे शत्रुविभीषण' इति सुरैरभिष्टुतः । एतेन महाभारतवचनमपि दत्तोत्तरम् । तथाहि भारते पठ्यते– **'ततस्तं देशमागम्य कृतकर्मा विभीषणः । बोधयामास तौ वीरौ प्रज्ञास्त्रेण प्रमोहितौ'** [व.प.२९०.५] इति । अयं विभीषणो राम एव न रावणानुज इति सूचयितुमेव **'कृतकर्मा'** इति विशेषणमुपादत्त । **'कृतकर्मा कृतागमः'** इति विष्णु-सहस्रनामसु । नन्वत्र रामलक्ष्मणौ प्रज्ञास्त्रेण विभीषणो बोधयामासेत्युच्यते । तत् कथं विभीषणो रामः? वचन-व्यत्यासेन गुह्यभाषयैवमुदितमिति । तौ वीराविति तान् कपिवीरानित्यर्थः । **'सुग्रीवः कपिभिः सार्द्धं परिवार्योपतस्थिवान्'** [३] इति पूर्ववचनं चैतच्छ्लोकानन्तरमन्वेतव्यमिति कथाव्यत्यासोऽयम् । तौ बोधयामासेति सुग्रीवं कपिसार्थं च बोधयामासेति च वाचनिकोऽर्थः ॥ १६७ ॥ प्रभूतं गृहीत्वा प्रज्ञानेन प्रकृष्टैः प्रतनवचनैः शंसमानाः स्तुवन्तः । स्तुतिफलमानन्दातिशय आत्मगामीत्यात्मनेभाषः ॥ १६८ ॥ पुष्पं वर्षद्भिरिति हर्षगद्गदतामभिनीय दर्शयति ।

---

१. **'वर्षद्भिः'** इति विश्लिष्य पठनीयम् ।

विभीषणोऽथाऽह रघूत्तमं प्रभुं नियोजयाद्यैव वधाय दुर्म्मतेः ।
कृताग्निपूजो नहि वद्ध्य एष वरो विधातुः प्रथितोऽस्य तादृशः ॥ १७० ॥

न वै वधं राम इयेष तस्य पलायितस्याऽत्मसमीक्षणात् पुनः ।
सत्वोज्झितोऽसावपि[१] कूटयोधी न मे वधार्होऽयमिति स्म स प्रभुः ॥ १७१ ॥

स आदिदेशावरजं जनार्द्दनो हनूमता चैव विभीषणेन ।
सहैव सर्वैरपि वानरेन्द्रैर्य्ययौ महात्मा स च तद्वधाय ॥ १७२ ॥

स जुह्वतस्तस्य चकार विघ्नं प्लवङ्गमैः सोऽथ युयुत्सया रथम् ।
समास्थितः कार्म्मुकबाणपाणिः प्रत्युद्ययौ लक्ष्मणमाशु गर्ज्जन् ॥ १७३ ॥

---

निकुम्भिलां निगूढां वनीम् । **'निकुम्भलामभिययौ चैत्यं रावणिपालितम्'** [८५.२९] इति हि रामायणे । **'ततो निकुम्भिला नाम लङ्कोपवनमुत्तमम्'** [उ.कां.२५.२] इति च । निकुम्भः वज्रदन्त्याख्य ओषधिविशेषोऽस्त्यस्यामिति निकुम्भिला । **'निकुम्भः कुम्भकर्णस्य तनये दन्तिकौषधौ'** इति हि मेदिनी । **'स्यात् साकेतमयोध्यायां लङ्कायां तु निकुम्भिला'** इति वागुरिवचनात् निकुम्भिलां लङ्कां समासाद्य तत्रत्यं निकुम्भिलाख्यं काननं च समासाद्येत्यपि व्याचक्षते । निकुम्भिलां समासाद्य तस्मिन् गहने वने दुष्प्रवेशं न्यग्रोधं समासाद्य पुनः पावकं जुहाव । तथाहि वाल्मीकीये–**'अविदूरं ततो गत्वा प्रविश्य च महद् वनम् । दर्शयामास तत् कर्म लक्ष्मणाय विभीषणः । नीलजीमूतसङ्काशं न्यग्रोधं भीमदर्शनम् । तेजस्वी रावणभ्राता लक्ष्मणाय न्यवेदयत् । इहोपहारं भूतानां बलवान् रावणात्मजः । उपहृत्य ततः पश्चात् सङ्गाममभिवर्तते । अदृश्यः सर्वभूतानां ततो भवति राक्षसः । निहन्ति समरे शत्रून् बध्नाति च शरोत्तमैः । तमप्रविष्टन्यग्रोधं बलिनं रावणात्मजम् । विध्वंसय शरैस्तीक्ष्णैः सरथं साश्वसारथिम्'** [यु.कां.८७.२–६] इति ॥ १६९ ॥ प्रभुं कृताग्निपूजस्यापि इन्द्रजितो वधे समर्थम् । निकुम्भिलायां कृताग्निपूजो न वध्यो हि । **'निकुम्भिलामसम्प्राप्तमहुताग्निं च यो रिपुः । त्वामाततायिनं हन्यादिन्द्रशत्रो स ते वधः'** [८५.१४] इति हि ब्रह्मवचनं रामायणे । तावत्पर्यन्तं शिवमाराध्य जुहाव । यदा निकुम्भिलां प्राप्य ब्रह्माणमाराध्य जुहोति, तदा लक्ष्मणस्याप्यवध्यो भवतीति भावः ॥ १७० ॥ कूटमिति माया । कूटमिति डम्भः । कूटमित्यनृतम् । कूटमिति तुच्छम् । सर्वेऽप्यर्था अन्वर्था इन्द्रजितीति सर्वथा स कूटयोधी ॥ १७१ ॥ निकुम्भिलां गत्वेन्द्रजितं हन्तुमादिदेश । वानरेन्द्रैः यूथपैः प्रधानवानरैः ॥ १७२ ॥ चकार कारयामासेत्येतत् ॥ १७३ ॥

---

१. **'–वतिकूट–'**

**उभौ च तावस्त्रविदां वरिष्ठौ शरैः शरीरान्तकरैस्ततक्षतुः ।**
**दिशश्च सर्वाः प्रदिशः शरोत्तमैर्विधाय शिक्षास्त्रबलैर्निरन्तराः ॥ १७४ ॥**

**अस्त्राणि तस्यास्त्रवरैः स लक्ष्मणो निवार्य्य शत्रोश्चलकुण्डलोज्ज्वलम् ।**
**शिरः शरेणाऽशु समुन्ममाथ सुरैः प्रसूनैरथ चाभिवृष्टः ॥ १७५ ॥**

**निपातितेऽस्मिन् नितरां निशाचरान् प्लवङ्गमा जघ्नुरनेककोटिशः ।**
**हतावशिष्टास्तु दशाननाय शशंसुरत्याप्तसुतप्रणाशम् ॥ १७६ ॥**

**स तन्निशम्याप्रियमुग्ररूपं भृशं विनिश्वस्य विलप्य दुःखात् ।**
**संस्थापयामास मतिं पुनश्च मरिष्य इत्येव [१]विनिश्चितार्थः ॥ १७७ ॥**

**मरणाभिमुखः शीघ्रं रावणो रणकर्म्मणे[२] ।**
**सज्जीभवन्नन्तरैव दिदेश बलमूर्जितम् ॥ १७८ ॥**

**विनिश्चितार्थः सन्, अवशेनापि (मर्तव्य)मिति विनिश्चितार्थः, मरिष्य इत्येव मतिं संस्थापयामास ॥ १७७–८७ ॥**

---

दिशः प्रदिशश्च निरन्तरा निरवकाशा विधाय । शिक्षा अभ्यासपाटवम् । **'शिक्ष विद्योपादाने'** । शिक्षया मन्त्रास्त्रै-श्चाऽत्तबलैः शरोत्तमैः । **'निरन्तरमिवाऽकाशं बभूव तमसाऽऽवृतम्'** [९०.३३] इति च । **'दिशश्च प्रदिशश्चैव बभूवुः शरसङ्कुलाः । तमसा संवृतं सर्वमासीद् भीमतरं महत्'** [३४] इति च ॥ १७४ ॥ समुन्ममाथ च, अथ तस्मात्, अभिवृष्टश्च । अहो इन्द्रजितमैन्द्रेणैवास्त्रेण जघानेति सन्तुष्टैः सुरैः । समुन्ममाथेति । अस्त्रमन्त्रसंयोजनसामर्थ्येन शिर उत्कृत्य ममाथेत्यर्थः । मथे विलोडने । एवमभिमानेन वृष्टोऽभिवृष्टः । अभिनन्दितुं वृष्टोऽभिवृष्टः । **'ऐन्द्रास्त्रेण समायोज्य लक्ष्मणः परवीरहा । स शिरः सशिरस्त्राणं श्रीमज्ज्वलितकुण्डलम् । प्रमथ्येन्द्रजितः कायात् पातयामास भूतळे'** [९१.७४] इति । **'हर्षं च शक्रो भगवान् सह सर्वैः सुरर्षभैः । जगाम निहते तस्मिन् राक्षसे पाप-कर्मणि । आकाशे चापि देवानां शुश्रुवे दुन्दुभिस्वनः । नृत्यद्भिरप्सरोभिश्च गन्धर्वैश्च महात्मभिः । ववृषुः पुष्पवर्षाणि तदद्भुतमभूत् तदा'** [८७–९०] इति च ॥ १७५ ॥ अनेककोटिशः अनेककोटीन् निशाचरान् ॥ १७६ ॥ मरिष्य इत्येव विनिश्चितोदर्कः कथञ्चिन्मतिं संस्थापयामास । दृढमना बभूवेत्यर्थः । **'जेतव्यमिति काकुत्स्थो मर्तव्यमिति रावणः'** [यु.कां.१०९.७] इति रामायणे ॥ १७७ ॥ अन्तरा मध्ये । निर्धारानन्तरं स्वस्य रणगमनात् पूर्वम् ।

---

१. 'इत्येव सुनि–'    २. '–कर्मणि ।'

**त्रिंशत् सहस्राणि महौघकानामक्षोहिणीनां[1] सह षट्सहस्रम् ।**
**श्रमेण संयोजयताऽशु रामं सज्जो भवामीति[2] दिदेश रावणः ॥ १७९ ॥**

ऊर्जितं बलिष्ठम् । ऊर्ज बलप्राणनयोः ॥ १७८ ॥ **'त्रिंशत्सहस्राणि महौघकानामक्षोहिणीनामपि षट्सहस्रम् । समादिदेशाऽशु रणाय यास्यन् स रक्षसां राक्षसयूथनाथः'** [सं.रा;यु.कां.११.४] इति सङ्ग्रहे । महान् ओघः अपारा परम्परा । अक्षोहिणीनाम् । **'अक्षादूहिन्यां वृद्धिर्वक्तव्या'** इति न पठनीयम् । अक्षोहिणीत्येव प्राचां प्रयोगः । सर्वत्र पुराणेषु च तथेत्युक्तम् । एको गजो रथश्च, त्रयस्तुरगाः, पञ्च पदातयः पत्तिरित्युच्यते । ततस्त्रिगुणं सेनामुखम् । ततस्त्रिगुणो गुल्मः । ततस्त्रिगुणो गणः । ततस्त्रिगुणा वाहिनी । ततस्त्रिगुणा पृतना । ततस्त्रिगुणा चमूः । ततस्त्रिगुणाऽनिकीनी । ततो दशगुणाऽक्षोहिणी । तथाचायमत्र गणनाक्रमः–

| | गजाः | रथाः | तुरगाः | पदातयः |
|---|---|---|---|---|
| पत्तिः | १ | १ | ३ | ५ |
| सेनामुखम् | ३ | ३ | ९ | १५ |
| गुल्मः | ९ | ९ | २७ | ४५ |
| गणः | २७ | २७ | ८१ | १३५ |
| वाहिनी | ८१ | ८१ | २४३ | ४०५ |
| पृतना | २४३ | २४३ | ७२९ | १२१५ |
| चमूः | ७२९ | ७२९ | २१८७ | ३६४५ |
| अनीकिनी | २१८७ | २१८७ | ६५६१ | १०९३५ |
| अक्षोहिणी | २१८७० | २१८७० | ६५६१० | १०९३५० |

रावणसेना चाक्षोहिणीनां षट्त्रिंशत्सहस्राणि–

२१८७० x ३६००० = ७८,७३,२०,००० गजा रथाश्च ।
६५६१० x ३६००० = २३६,१९,६०,०० तुरगाः ।
१०९३५० x ३६००० = ३९३,६६,००,००० पदातयः ।

महौघकानामित्यस्य सङ्ख्यापरतया योजनं न स्वरसम् । यद्यपि रामायणे महौघसङ्ख्यापरिमाणमुक्तम्– **'शतं शतसहस्राणां कोटिमाहुर्मनीषिणः । शतं कोटिसहस्राणां शङ्ख इत्यभिधीयते । शतं शङ्खसहस्राणां महाशङ्ख इति स्मृतम् । महाशङ्खसहस्राणां शतं बृन्दमिति स्मृतम् । शतं वृन्दसहस्राणां महावृन्दमिति स्मृतम् । महावृन्दसहस्राणां शतं पद्ममिति स्मृतम् । शतं पद्मसहस्राणां महापद्ममिति स्मृतम् । महापद्मसहस्राणां शतं खर्वमिहो-**

१. '–मक्षौहिणीनाम्' २. 'सज्जीभवानीति'

**तदप्रधृष्यं वरतः स्वयम्भुवो युगान्तकालार्ण्णवघूर्ण्णितोपमम् ।**
**प्रगृह्य नानाविधमस्त्रशस्त्रं बलं कपीञ्छीघ्रतमं जगाम ॥ १८० ॥**

**आगच्छमानं तदपारमेयं बलं सुघोरं [1]प्रळयार्ण्णवोपमम् ।**
**भयात् [2]समुद्विग्नविषण्णचेतसः कपिप्रवीरा नितरां प्रदुद्रुवुः ॥ १८१ ॥**

**वरो हि दत्तोऽस्य पुरा स्वयम्भुवा धरातळे[3]ऽल्पेऽपि निवासशक्तिः ।**
**अजेयता चेत्यत एव सार्क्कजाः प्लवङ्गमा द्रष्टुमपि स्म नाशकन् ॥ १८२ ॥**

---

**च्यते । शतं खर्वसहस्राणां महाखर्वमिति स्मृतम् । महाखर्वसहस्राणां समुद्रमभिधीयते । शतं समुद्रसाहस्रमोघ इत्यभिधीयते । शतमोघसहस्राणां महौघ इति विश्रुतः'** [यु.कां.२८.३३–८] इति । तदपि सर्वसङ्ख्याशास्त्रविरोधात् पुराणादिविरोधाच्चान्यथा व्याख्येयम् । अयमिह रामायणवचनार्थः– शतसहस्राणां लक्षाणां शतं कोटिरिति यथाश्रुत एवार्थः [१,००,००,०००] । ततः परं काचन गुह्यभाषा वाल्मीकिनाऽनुसृता । कोटिसहस्राणां शततमो भागः, दशकोटिरित्येतत्, शङ्ख इत्युच्यते [१०,००,००,०००] । शङ्खसहस्राणां शततमो भागः महाशङ्ख उक्तः [१००,००,००,०००] । एवं क्रमेण गणने ओघ इति परार्द्धसङ्ख्या भवति–[१,००,००,००, ००,००,००,००,०००] । महौघ इति परसङ्ख्या– [१०,००,००,००, ००,००,००,००,०००] । नास्य ब्रह्मणः परकालेन सम्बन्धः । नाप्यत्र **'महौघकानामक्षोहिणीनाम्'** इत्याचार्यवचने महौघसङ्ख्याविवक्षा । किन्तु महान् ओघः सेनासमुदाय इत्येव साधुरर्थः । त्रिंशत्सहस्रैः सह षट्सहस्रं च । षण्णां सहस्राणां समाहारः षट्सहस्रम् । समाहारद्विगुः । अक्षोहिणीनां षट्त्रिंशत्सहस्राणीति यावत् । रामं श्रमेण संयोजयत, यावत् सज्जो भवामि ॥१७९॥ घूर्णितमुच्चलितम् । घूर्ण भ्रमणे । उत्सेक इत्येतत् । यदस्यते क्षिप्यते बाणादि तदस्त्रम् । यत् करे धृत्वैव प्रयुज्यते खड्गादि तच्छस्त्रम् । शस्यतेऽनेनेति । शसु हिंसायाम् । अस्त्राणि च शस्त्राणि च अस्त्रशस्त्रम् । **'द्वन्द्वश्च प्राणितूर्यसेनाङ्गानाम्'** [अ.सू.२.४.२] सेनाङ्गानामेकवद्भावेन समाहारद्वन्द्वः ॥ १८० ॥ आगच्छमानम् । अप्रयुक्तोऽपि सम् वर्तते । आसङ्गच्छमानम् । समन्तादभिव्याप्य चाऽक्रम्य च कपिभिः सार्धं सङ्ग्रामयितुमागच्छदित्यर्थः । तद् रावणप्रहितं बलं प्रळयार्णवोपमम्, आसीदिति शेषः । **'अस्तिर्भवन्तीपरः प्रथमपुरुषोऽप्रयुज्यमानोऽप्यस्तीति गम्यते'** इत्याह पतञ्जलिः । एवम्, **'आसीदित्यपि भूतकालपरः प्रथमपुरुषोऽप्रयुज्यमानोऽप्यस्तीति गम्यते'** इत्यपि वक्तव्यम् । भीरूणां भयजननं घोरम् । धीराणामपि भयजननं सुघोरम् । अर्णवोपमं घोरम् । प्रळयार्णवोपममिति सुघोरम् । अपारमेयत्वाच्च । पारेण मेयं ज्ञेयं परिच्छेद्यं च पारमेयम् । न पारेण मेयमित्यपारमेयम् । अपारममेयं च वा नितरां भयात् । समुद्विग्नं भावोद्वेगेन किङ्कर्तव्यतामूढम् । विषण्णं दुःखग्रस्तम् । नितरां समुद्विग्नविषण्णचेतसः । नितरां प्रदुद्रुवुः । हनुमन्तं विहाय कपिषु नैकोऽप्यप्रद्रुत आसीदित्यर्थः । दिङ्मूढतैव

---

१. **'प्रलया–'** २. **'समुद्वीक्ष्य वि–'** ३. **'–तले'**

प्रगृह्य रामोऽथ[1] धनुः शरांश्च समन्ततस्तानवधीच्छरौघैः ।
स एव सर्वत्र च दृश्यमानो विदिक्षु दिक्षु प्रजहार[2] सर्वशः ॥ १८३ ॥

क्षणेन सर्वांश्च निहत्य राघवः प्लवङ्गमानामृषभैः स पूजितः ।
अभिष्टुतः सर्वसुरोत्तमैर्म्मुदा भृशं प्रसूनोत्करवर्षिभिः प्रभुः ॥ १८४ ॥

अथाऽययौ सर्वनिशाचरेश्वरो हतावशिष्टेन बलेन संवृतः ।
विमानमारुह्य च पुष्पकं त्वरन् शरीरनाशाय महायुधोद्धतः ॥ १८५ ॥

विरूपनेत्रोऽथ च यूपनेत्रस्तथा महापार्श्वमहोदरौ च ।
ययुस्तमावृत्य सहैव मन्त्रिणो मृतिं पुरोधाय रणाय यान्तम् ॥ १८६ ॥

अथास्य सैन्यानि निजघ्नुरोजसा समन्ततः शैलशिलाभिवृष्टिभिः ।
प्लवङ्गमास्तानभिवीक्ष्य वीर्य्यवान् ससार वेगेन महोदरो रुषा ॥ १८७ ॥

वीक्ष्यातिकायं तमभिद्रवन्तं स कुम्भकर्ण्णोऽयमिति ब्रुवन्तः ।
प्रदुद्रुवुर्वानरवीरसङ्घास्तमाससादाऽशु सुतोऽथ वालिनः ॥ १८८ ॥

**अतिकायं बृहच्छरीरम् । अथ वीरः स वालिनः सुतः तिष्ठध्वमिति वदन् समाससाद । इदं विभीषिकामात्रं न यात (इति) ईरयन् वदन् महोदरस्याग्रतः पुप्लुव इति योजना ॥ १८८–९१ ॥**

द्रवणे प्रकर्षो नाम ॥ १८१–२ ॥ **'ते तु रामसहस्राणि रणे पश्यन्ति राक्षसाः । पुनः पश्यन्ति काकुत्स्थमेकमेव महाहवे'** [यु.कां.९३.२७] इति च । सर्वशः सर्वान् ॥ १८३–५ ॥ विरूपनेत्र इति विरूपाक्षः । **'महोदरमहापार्श्वौ विरूपाक्षं च राक्षसम्'** [९६.५] इति हि रामायणे । इमौ महोदरमहापार्श्वौ पूर्वहताभ्यां युद्धोन्मत्तमत्तापरनामभ्यां महोदरमहापार्श्वाभ्यामन्यौ । तौ रावणभ्रातरौ । इमौ मन्त्रिणौ । अत्र यूपनेत्रो रामायणेऽनुक्तः । यूपे यज्ञाङ्गे पशुबन्धने नेत्रे अस्येति यूपनेत्रः । यज्ञविध्वंसकत्वात् ॥ १८६ ॥ अस्य रावणस्य सैन्यानि प्लवङ्गमा निजघ्नुः । अभीक्ष्णं वृष्टयोऽभिवृष्टयः । अभितः सर्वतोदिशं प्लवमानान् वीक्ष्य ॥ १८७ ॥ महाकायं तं महोदरं वीक्ष्य, 'यो रामेण हतः स एवायं कुम्भकर्णः पुनर्जीवन्नागतः' इति ब्रुवन्तः यथा रावणतनयमतिकायं कुम्भकर्ण इति बभ्रमुस्तथाऽमुमप्यतिकायं

१. 'रामोऽपि धनुः' २. 'प्रजघान सर्व–'

वदन् स तिष्ठध्वमिति स्म वीरो विभीषिकामात्रमिदं न यात ।
इतीरयन्नग्रत एष[1] पुप्लुवे महोदरस्येन्द्रसुतात्मजो बली ॥ १८९ ॥

अथो शरानाशु विमुञ्चमानं शिरः परामृश्य निपात्य भूतळे[2] ।
ममर्द पद्भ्यामभवद् गतासुर्म्महोदरो वालिसुतेन चूर्ण्णितः ॥ १९० ॥

अथो महापार्श्व उपाजगाम प्रवर्षमाणोऽस्य शराम्बुधाराः ।
प्रसँह्य चाऽच्छिद्य धनुः करस्थं समाददे खड्गममुष्य सोऽङ्गदः ॥ १९१ ॥

निगृह्य केशेषु निपात्य भूतळे[2] चकर्त्त वामांसत ओदरं[3] परम् ।
यथोपवीतं स तथा द्विधाकृतो ममार मन्त्री रजनीचरेशितुः ॥ १९२ ॥

**वामांसतः वामांसात् उदरं आ (उदर)पर्यन्तं परं शत्रुं चकर्त ॥ १९२–२०३ ॥**

---

दृष्ट्वेति पूर्ववृत्तनिदर्शनाय 'अतिकायम्' इति पदमुपादत्त ॥ १८८ ॥ तिष्ठध्वमिति । **'प्रकाशनस्थेयाख्ययोश्च'**[१.३.२३] इत्यात्मनेपदम् । स्थिरं स्थित्वाऽऽत्मशक्तिं प्रकाशयतेत्यर्थः । प्राणिनो भीषयितुं निर्मिता तृणमयी पुरुषाकृति-र्विभीषिका । 'ಬೆದರುಬೊಂಬೆ' इति भाषायाम् । न यातेति च तानीरयन् प्रोत्साहयन् ॥ १८९ ॥ विमुञ्चमानं निरन्तरं मुञ्चमानम् । वालिसुतेन चूर्णितः । अयं महोदरः सुग्रीवेण हत इति रामायणे । पुंव्यत्यासेन व्याख्येयम् । सुन्दरग्रीवत्वात् सुग्रीवो नामाङ्गद इति च । यथाऽतिकायः कुम्भकर्ण इत्युक्तः । पाद्मे चैवं पठ्यते–**'महोदरातिकायौ च सुग्रीवेण महात्मना'** [सृ.खं.३०.६८] इति । अत्र महोदरः सुकण्ठेनाङ्गदेन, अतिकायः सुकण्ठेन लक्ष्मणेनेति एकयोक्त्या द्वयोर्वचनमित्यवगन्तव्यम् ॥ १९० ॥अम्बुधारा इव प्रकर्षेण वर्षमाणः । अविच्छेदः प्रकर्षः । वृषु सेचने । शत्रुनाशाय वृष्टं स्वनाशे फलितमित्यात्मनेभाषा । आच्छिद्य आरात् दूरादेव च्छित्वा । **'दूरस्थितस्य परिघं रविरश्मिसम-प्रभम् । महापार्श्वस्य चिक्षेप वधार्थं वालिनः सुतः । स तु क्षिप्तो बलवता परिघस्तस्य रक्षसः । धनुश्च सशरं हस्ताच्छिरस्त्रं चाप्यपातयत्'** [९८.१३–५] इति च । ततः परश्वधमङ्गदस्य वामांसे चिक्षेपेति रामायणे । ततः खड्गमादायाऽजगामेत्युपस्कर्तव्यम् । तमेवामुष्य खड्गमाच्छिद्य वामांसत एव तमङ्गदोऽच्छिनदिति सर्वं सुन्दरम् ॥ १९१ ॥ आ वामांसत आ उदरं परम् । उदरस्य दक्षिणपार्श्वम् । यथोपवीतम् । **'दक्षिणं बाहुमुद्धृत्य शिरोऽवधाय सव्येंऽसे प्रतिष्ठापयति । दक्षिणं कक्षमन्ववलम्बं भवतीत्येवं यज्ञोपवीती भवति'** इति गोभिलः । रावणानुजौ महोदरमहापार्श्वावन्याविति स्मारयन् पुनराह–'ममार मन्त्री रजनीचरेशितुः' इति ॥ १९२ ॥

---

१. 'एव पु–' २. 'भूतले' ३. 'औदरम्'

**अथैनमाजग्मतुरुद्यतायुधौ विरूपनेत्रोऽप्यथ यूपनेत्रः ।**
**यथैव मेघौ दिवि तिग्मरश्मिं तथा समाच्छादयतां शरौघैः ॥ १९३ ॥**

**ताभ्यां स बद्धः शरपञ्जरेण विचेष्टितुं नाशकदत्र वीरः ।**
**हरीश्वरः शैलमतिप्रमाणमुत्पाट्य चिक्षेप तयोः शरीरे ॥ १९४ ॥**

**उभौ च तौ तेन विचूर्णितौ रणे रवेः सुतस्योरुबलेरितेन ।**
**निशाचरेशोऽथ शरेण सूर्यजं बिभेद वक्षस्यपि सोऽपतद् भुवि ॥ १९५ ॥**

**ततः स सर्वांश्च हरिप्रवीरान्[१] विधूय बाणैर्बलवान् दशाननः ।**
**जगाम रामाभिमुखस्तदैनं रुरोध रामावरजः शरौघैः ॥ १९६ ॥**

**तदा दशास्योऽन्तकदण्डकल्पां मयाय दत्तां कमलोद्भवेन ।**
**मयाद् गृहीतां च विवाहकाले प्रगृह्य शक्तिं विससर्ज लक्ष्मणे ॥ १९७ ॥**

**तया स वीरः सुविदारितोराः पपात भूमौ सुभृशं विमूर्च्छितः ।**
**मरुत्सुतः शैलमतिप्रमाणं चिक्षेप रक्षःपतिवक्षसि[२] द्रुतम् ॥ १९८ ॥**

---

बाणः शर उच्यते । जलं शरमुच्यते । यथा स्वगर्भगैः जलवृन्दैः मेघौ तिग्मरश्मिमादित्यं समूह्य आच्छादयत एवमिमौ राक्षसावङ्गदं शरजालैः समन्तादावृत्याच्छादयताम् ॥ १९३ ॥ वीरोऽङ्गदः । हरीश्वरः सुग्रीवः । यूपनेत्रो रामायणे न पठ्यते विरूपनेत्रस्य वधश्चान्यादृशः सम्प्रति पठ्यते–**'महेन्द्राशनिकल्पेन तळेनाभिहतः क्षितौ । पपात रुधिरक्लिन्नः शोणितं च समुद्रमन् । स्रोतोभ्यस्तु विरूपाक्षो जलं प्रस्रवणादिव'** [९७.३१–२] इति । अत्र तळेनेति शिला-तळेनेत्यर्थः । अतो न विरोधः । कल्पभेदेन व्यवस्थेत्येके ॥ १९४ ॥ निशाचरेशो रावणः ॥ १९५–६ ॥ मयाद् गृहीताम्–**'अमोघां तस्य शक्तिं च प्रददौ परमाद्भुताम् । परेण तपसा लब्धां जघ्निवान् लक्ष्मणं यया'** [उ.कां. १२.२१] इति च ॥ १९७ ॥ चर्मच्छेदेन दारितोरा भवति । अस्त्थ्नां भङ्गेन विदारितोराः । विशरणेन सुविदारि-तोराः । चर्मच्छेदो मूर्च्छितं करोति । अस्थिवेधेन विमूर्च्छितो भवति । अस्थिभङ्गेन भृशं विमूर्च्छितः । विशरणेन सुभृशं विमूर्च्छित इति 'सुविदारितोराः सुभृशं विमूर्च्छितः' इत्याह । शैलं शिलाखण्डम् ॥ १९८ ॥

---

१. **'ततस्तु सर्वांश्च कपिप्रवीरान्'** २. **'रक्षः प्रति वक्षसि'**

तेनातिगाढं व्यथितो दशाननो मुखैर्वमञ्छोणितपूरमाशु ।
तदन्तरेण[1] प्रतिगृह्य लक्ष्मणं जगाम शक्त्या सह रामसन्निधिम् ॥ १९९ ॥

समुद्बबर्हाथ च तां स राघवो दिदेश च प्राणवरात्मजं पुनः ।
प्रभुः समानेतुमथो वरौषधीः स चाऽनिनायाऽशु गिरिं पुनस्तम् ॥ २०० ॥

तद्गन्धमात्रेण समुत्थितोऽसौ सौमित्रिरात्तोरुबलश्च पूर्ववत् ।
शशंस चाऽश्लिष्य मरुत्सुतं प्रभुः स राघवोऽगण्यगुणार्ण्णवः स्मयन् ॥ २०१ ॥

प्राक्षिपत् तं गिरिवरं लङ्कास्थः सन् स मारुतिः ।
अर्द्धलक्षे योजनानां यत्रासौ पूर्वसंस्थितः ॥ २०२ ॥

तद्बाहुवेगात् संश्लेषं प्राप पूर्ववदेव सः ।
मृताश्च ये प्लवङ्गास्तु तद्गन्धात् तेऽपि जीविताः ॥ २०३ ॥

रामाज्ञया हि रक्षांसि हरयोऽब्धाववाक्षिपन् ।
नोज्जीवितास्ततस्ते तु वानरा [2]निरुजोऽभवन् ॥ २०४ ॥

**ते तु राक्षसा एव । वानरास्तु (निरुजः) नरुग्णाः ॥ २०४–७ ॥**

---

व्यथितो बभूव । वमन् भूमौ पपातेति पूर्वश्लोकादनुवृत्तेन वाऽन्वयः । रामं प्रति नेतुं प्रतिनिधितया ग्रहणं प्रतिग्रहणम् । रावणनिसृष्टया हृदि गाढं लग्नया शक्त्या सहैव ॥ १९९ ॥ उद्बबर्ह उत्कृष्य पृथक्चकार । बृहू उद्यमने । पृथक्करणे चेति वक्तव्यम् । **'तां स्वाच्छरीरात् प्रवृहेत्'** इति श्रौतप्रयोगात् ॥ २००–३ ॥ रामाज्ञयैव । **'यदाप्रभृति लङ्कायां युध्यन्ते कपिराक्षसाः । तदाप्रभृति मानार्थमाज्ञया राघवस्य च । ये हन्यन्ते रणे तत्र राक्षसाः कपिकुञ्जरैः । हताहतास्तु क्षिप्यन्ते सर्व एव तु सागरे'** [७४.७५–६] इति च । मानार्थं हतानां रक्षसां सङ्ख्यानार्थम् । एतेन रामायणपाठोऽपि शुद्धः सम्पद्येत । यतोऽर्वाचीना असङ्गतं पठन्ति–**'तदा प्रभृति मानार्थमाज्ञया रावणस्य च'** इति । अहो मतिवैकल्यं पुराणविदुषाम् । निवृत्तरुजो निरुजः ॥ २०४ ॥

---

१. 'तदन्तरे च प्रति–' । 'तदन्तरे स प्रति' इति क्वचित् । २. 'नीरुजो–'

छिन्नप्ररोहिणश्चैव विशल्याः पूर्ववर्ण्णिनः ।
औषधीनां[१] प्रभावेन सर्वेऽपि हरयोऽभवन् ॥ २०५ ॥

अथाऽससादोत्तमपूरुषं प्रभुं विमानगो रावण आयुधौघान् ।
प्रवर्षमाणो रघुवंशनाथं तमात्तधन्वाऽभिययौ च रामः[२] ॥ २०६ ॥

सम्मानयन् राघवमादिपूरुषं निर्य्यातयामास रथं पुरन्दरः ।
सहायुधं मातलिसङ्गृहीतं समारुरोहाऽशु स लक्ष्मणाग्रजः ॥ २०७ ॥

आरुह्य तं रथवरं[३] जगदेकनाथो लोकाभयाय रजनीचरनाथमाशु ।
अभ्युद्ययौ दशशतांशुरिवान्धकारं लोकानशेषत इमान् निगिरन्तमुद्यन् ॥ २०८ ॥

आयान्तमीक्ष्य रजनीचरलोकनाथः शस्त्राण्यथास्त्रसहितानि मुमोच रामे ।
रामस्तु तानि विनिहत्य[४] निजैर्म्महास्त्रैस्तस्योत्तमाङ्गदशकं युगपन्यकृन्तत् ॥ २०९ ॥

**उद्यन् दशशतांशुरन्धकारमिव ॥ २०८–१३ ॥**

---

**'छिन्नप्ररोहिणः–'** इति पद्यमविकलं सङ्ग्रहेऽपि पठ्यते [सं.रा;यु.कां.१३.४२] । औषधीनामुत्तमौषधानाम् । अतिथः अत्यन्त एवातिथिरिति यथा । ओषधय एव औषधयः । यथाऽनुपम एवानूपमः । **'आधिक्येऽधिकम्'** इति सूत्रात् ॥ २०५ ॥ अथ द्वाभ्यां रामरावणयोर्महायुद्धारम्भः । यावच्छक्ति प्रभूतं वर्षमाणः । एतावत्सु युद्धेषु यथा न ववर्ष तथा प्रववर्ष । अहो जीविताशा महतीति परिहसत्यात्मनेभाषया ॥ २०६ ॥ सहायुधमिति । **'सहस्राक्षेण काकुत्स्थ रथोऽयं विजयाय ते । दत्तस्तव महासत्त्व श्रीमञ्छत्रुनिबर्हण । इदमैन्द्रं महच्चापं कवचं चाग्निसन्निभम् । शराश्चाऽदित्यसङ्काशाः शक्तिश्च विमला शिता । आरुह्येमं रथं वीर राक्षसं जहि रावणम्'** [यु.कां. १०२.११–१३] इति रामायणे मातलिवचनम् ॥ २०७ ॥ अथ चतुर्भिः रामविजयवसन्तोत्सवमाह– आरुह्येत्यादिभिः । निगिरन्तम् । गॄ निगरणे । **'निगरणं गिलनम्'** इति क्षीरस्वामी । अशेषान् लोकान् व्याप्य कबळयन्तमन्धकारमिव लोकान् हिंसित्वा ग्रसन्तं लोकभयङ्करं रजनीचरनाथम् । लोकस्य तमोभयनिरासाय उदयन् सहस्रांशुरिव शत्रुनिबर्हणेन सर्वलोकस्याभयदानाय जगदेकनाथो रामोऽभ्युद्ययौ । अन्धकारोऽपि रजनीचरैश्चोरैः कामिभिश्च नाथ्यत इति

---

१. **'ओषधीनां प्रभावेन'** । **'प्रभावेण'** इति च क्वचित् ।
२. **'–ययौ स राघवः'** । **'ययौ स रामः'** इति क्वचित् ।
३. **'तद्रथवरम्'**
४. **'विनिकृत्य'**। **'विनिवार्य'** इति क्वचित् ।

कृत्तानि तानि पुनरेव समुत्थितानि दृष्ट्वा वराच्छतधृतेर्हृदयं बिभेद ।
बाणेन वज्रसदृशेन स भिन्नहृत्को रक्तं वमन् न्यपतदाशु महाविमानात्॥ २१० ॥

तस्मिन् हते त्रिजगतां परमप्रतीपे ब्रह्मा शिवेन सहितः सह लोकपालैः ।
अभ्येत्य पादयुगळं[१] जगदेकभर्त्तू रामस्य भक्तिभरितः शिरसा ननाम ॥ २११ ॥

अथैनमस्तौत् पितरं कृताञ्जलिर्गुणाभिरामं जगतः पितामहः ।
जितञ्जितं तेऽजित लोकभावन प्रपन्नपालाय नताः स्म ते वयम् ॥ २१२ ॥

त्वमेक ईशोऽस्य[२] नचाऽदिरन्तस्तवेड्य कालेन तथैव देशतः ।
गुणा ह्यगण्यास्तव तेऽप्यनन्ताः प्रत्येकशश्चाऽदिविनाशवर्ज्जिताः ॥ २१३ ॥

नचोद्भवो नैव तिरस्कृतिस्ते क्वचिद् गुणानां परतः स्वतो वा ।
त्वमेक आद्यः परमः स्वतन्त्रो भृत्यास्तवाहं शिवपूर्वकाश्च ये ॥ २१४ ॥

**परतः कारणान्तरात् । स्वतः स्वभावतः ॥ २१४–७ ॥**

---

रजनीचरनाथः । सूर्योऽपि तमोनिरासाय लोकैनर्थ्यित इति लोकनाथः । रामोऽपि मत्स्यादिदशरूपो नारायणादि-शतरूपो विश्वादिदशशतरूप इति दशशतांशुः । अंशव इत्यंशा अवताराः ॥ २०८–९ ॥ पुनरेव समुत्थितानि– **'छिन्नमात्रं तु तच्छीर्षं पुनरन्यत् स्म दृश्यते । तदप्यशनिसङ्काशैश्छिन्नं संयति सायकैः । एवमेकशतं च्छिन्नं शिरसां तुल्यवर्चसाम्'** [यु.कां.१०७.७६–७] इति च । भिन्नानि हृदयं च कानि शिरांसि चास्येति भिन्नहृत्कः । पूर्वं शिरस्सु बाणपातनेनापि यानि न निरभेदिषत तानि सम्प्रति हृदये विदीर्णे स्वयमेवाभिदन्निति । **'हृतानि यानि शीर्षाणि पूर्वमग्नौ त्वयाऽनघ । पुनस्तानि भविष्यन्ति तथैव तव राक्षस'** [उ.कां.१०. २३–४] इति ब्रह्मणो वरः ॥ २१० ॥ ब्रह्मा शिवेन सहितः । **'अत्र सम्भाषितुं प्राप्तो ब्रह्मा लोकपितामहः । पार्वत्या सहितो देवः शूलपाणिर्वृषध्वजः । महेन्द्राद्याः सुरगणाः सगन्धर्वाः सकिन्नराः'** [सृ.खं.४०.६९–७०] इति हि पाद्मे ॥२११॥ अथ भरतसमागमान्तां कथामाह सप्तदशभिः । ते त्वया जितं सर्वोत्कृष्टतया स्थितम् । लोकान् भावयतीति लोकभावनः । **'सृष्टिः स्थितिश्च संहारो भावनेत्यभिधीयते'** ॥ २१२ ॥ स्वरूपनाशः, देहनाशः, दुःखप्राप्तिः, अपूर्णतेति चतुर्विधो नाशो विनाशः । युक्तं चैतद्, गुणानां भगवत्स्वरूपत्वात् । अथ च स्वभावतो नाशवर्जिता न केवलम् । केनाप्यचिन्त्येन निमित्तविशेषेणापि नाशवर्जिता इति विनाशवर्जिता इत्याह ॥ २१३ ॥ तदेव

---

१. **'–युगलम्'** २. **'ईशोऽसि नचा–'**

**यथाऽर्चिषोऽग्नेः पवनस्य वेगा मरीचयोऽर्कस्य नदीषु चाऽपः ।**
**गच्छन्ति चाऽयान्ति च सन्ततास्त्वत्[1] तद्वन्मदाद्याः शिवपूर्वकाश्च ये ॥ २१५ ॥**

**येये च मुक्तास्त्वथ ये च बद्धाः सर्वे तवेशेश वशे सदैव ।**
**वयं सदा त्वद्गुणपूगमुच्चैः सर्वे वदन्तोऽपि न पारगामिनः ॥ २१६ ॥**

**किमेष ईदृग्गुणकस्य ते प्रभो रक्षोवधोऽशेषसुरप्रपालनम् ।**
**अनन्यसाध्यं हि तथाऽपि तद् द्वयं कृतं त्वया तस्य नमोनमस्ते ॥ २१७ ॥**

**इतीरिते त्वब्जभवेन शूली समाह्वयद् राघवमाहवाय ।**
**वरं मदीयं त्वगणय्य रक्षो हतं त्वया तेन रणाय मेहि[2] ॥ २१८ ॥**

**मा माम्, इहि आगच्छ ॥ २१८–२० ॥**

---

स्फुटमाह– परत इत्यादिना । परतः वरेण शापेन वा ॥ २१४ ॥ अर्चिषो ज्वाला अग्नेर्देवस्य प्रतिमास्थानीयाः । तथा वायोर्देवस्य स्पर्शगम्या वेगाः । एवं सूर्यदेवस्य मरीचयः । नदीदेवतानां चाऽपः । तथाहि श्रुतिः–**‘अग्निर्यथैको भुवनं प्रविष्टो रूपंरूपं प्रतिरूपो बभूव’** [का.उ. २.२.९] इति, **‘वायुर्यथैको भुवनं प्रविष्टः–’** [१०] इत्यादि च । भाष्ये च कौर्मवचनम्–**‘अग्निर्यथैको लोकेषु प्रविष्टोऽन्यो न विद्यते । पाकादिकर्ताऽथाप्यस्य देवस्य प्रति-रूपकाः । रूपंरूपं प्रति ह्येते सन्त्यचेतनवह्नयः । एवं देवो वायुरपि धारकोऽन्यो न विद्यते । रूपंरूपं तथाऽप्यस्य प्रत्यभूत् पररूपकः । अचेतनः स्पर्शगम्यो योऽयमेवं जनार्दनः’** इत्यादि । नदीदेवतानां बहुत्वात् ‘नदीषु’ इति बहुवचनम् । नदीषु विषये । नदीपात्रेषु वा । पूर्वोदाहरणेषु एक एव बिम्बः । अत्र तु बहव इति । मदाद्याः अहं वायुः सरस्वती भारती च ॥ २१५–६ ॥ अनन्यनियोज्यत्वमेव पालने प्रकर्षो नाम । तस्य तस्मै ते नमो नमः । षष्ठ्यर्थे चतुर्थी चतुर्थ्यर्थे षष्ठी च बहुलं भवति वेदेषु वैदिकेषु च । तस्य हेतोस्ते नम इति वा ॥२१७॥ संस्पर्धयेवाऽह्वयत् । समाह्वयत् । पाणिनिस्तु सम्पूर्वाद् ह्वयतेरात्मनेपदं भवतीति मन्यते–**‘निसमुपविभ्यो ह्वः’** [अ.सू.१.३.३०] इति । स्पर्धायामाङ्पूर्वादपि–**‘स्पर्धायामाङः’** [३१] इति । अत्र च स्पर्धमानः शूली राघवमा-ह्वयत । तेन संयोगादायोगाच्च समाह्वयतेति वक्यव्यम् । अथापि समाह्वयदित्याह । तेनेदमाह– न वस्तुतः शूली स्पर्धमान आह्वयत । अन्तरङ्गभक्तत्वात् । स्वस्य तमोमानित्वात् तमोगुणस्यादम्यं प्रभावं लोकानामवगमयितुम्, हरेश्च लोकोत्तरं प्राभवं प्रत्याययितुम्, तेन च सतां हर्षोत्कर्षमसतां विभ्रमं च जनयितुमाह्वयदिति । आह्वानफलं

---

१. **‘सन्तताश्च तद्व–’** २. **‘मैहि’**

**इतीरितेऽस्त्वित्यभिधाय राघवो धनुः प्रगृह्याऽशु शरं च सन्दधे ।**
**विकृष्यमाणे[१] चलिता वसुन्धरा पपात रुद्रोऽपि धराप्रकम्पतः ॥ २१९ ॥**

**अथोत्थितश्चाऽसुरभाववर्जितः क्षमस्व देवेति ननाम पादयोः ।**
**उवाच च त्वद्वशगोऽस्मि सर्वदा प्रसीद मे त्वद्विषयं मनः कुरु ॥ २२० ॥**

**अथेन्द्रमुख्याश्च तमूचिरे सुरास्त्वयाऽविताः स्मोऽद्य निशाचराद् वयम् ।**
**तथैव सर्वापद एव नस्त्वं प्रपाहि सर्वे भवदीयकाः स्म[२] ॥ २२१ ॥**

**अविताः रक्षिताः ॥ २२१ ॥**

---

पातकं नेषदपि शूलिनं पस्पर्शेति च । तमोमानित्वात् शूलिनस्तामसानां मोहनाय तेन तथा वर्तितव्यं हि । सा किलाज्ञजनमोहनी भगवतोऽपचितिरेव भगवन्माहात्म्यसाधनी । अथापि क्रियाजनिततमपराधफलं पापमनुभवितुं कश्चनासुरोऽपि शिवादीनाविशति यदा ते भगवन्तं विरुन्धन्ति । पूजाफलं शिवादीनाम् । विरोधफलमसुराणा-मिति हृदयम् । अगणय्य अगणयित्वा । नञ्पूर्वेऽपि समासे ल्यब् भवति विरळतया । सर्वेऽपि हि विधयो विकल्प्यन्ते । अवगणय्येति किलार्थः । मदीयं मद्वरगुप्तं अगणय्यरक्षः असङ्ख्यमसुरजातं त्वया हतमिति च शक्यं व्याक्यातुम् । मा माम् । 'मा+आ+इहि' इति पदपाठः । यथर्ग्वेदे–**'स्वा तनूर्बलदेयाय मेहि'** [ऋ.सं.१०.८३.५] इति । **'तन्नेजति'** इत्यादिवत् पररूपम् ॥ २१८ ॥ अस्तु । तव यथाऽभिलषितमस्तु । तेन मम माहात्म्याविष्करण-मस्तु । तेन स विरोधोऽपि वरिवस्याऽस्तु । अर्हणाफलमर्हस्य तवैवास्तु । अपराधजं तमः पापस्यासुरस्यास्तु । तेन दुर्जनानां मोहोऽस्तु । सतां च विनोदनमस्त्विति बह्वर्थोऽयमस्तुः । सज्याबन्धं ग्रहणं प्रग्रहणम् । विकृष्यमाणे सज्ये धनुषि । विमोहाय विनोदाय चेषत्कर्षणमत्र विकर्षणम् । नतु विमोक्षाय कर्षणम् । तथात्वे विकृष्टाया ज्यायाः कार्यनिष्पत्तिं विनाऽपकर्षासम्भवात् । अमोघसन्धानो हि भगवान् । **'रामो द्विर्नाभिसन्धत्ते'** इत्यादिस्मरणात् । अत एव 'विकृष्यमाणे' इत्याह । न 'अभिकृष्यमाणे' इति । भयेन कम्पः प्रकम्पः । धरामानिनी भिया चकम्प इत्यर्थः । या सर्वं धरते साऽपि हरं न दध्र इत्याह–धराप्रकम्पत इति । पूर्वमपि परिजहासेव–या वसुं धरते सा न रुद्रं दधारेति ॥ २१९ ॥ सर्वदा प्रसीद । तेन सर्वदा त्वद्विषयमासुरभाववर्जितं मनः कुरु ॥ २२० ॥ प्रपाहि सर्वात्मना पाहि । भवदीयकाः, भवदीयास्तृणमात्राः । स्तनन्धया बाला इव भवदालम्बाः । स्मेति शास्त्रसिद्धमनुभवसिद्धं चैतदित्याह ॥ २२१ ॥

---

१. **'विगृह्यमाणे'** २. **'स्मः ।'**

सीताकृतिं तामथ तत्र चाऽगतां दिव्यच्छलेन प्रणिधाय पावके ।
कैलासतस्तां पुनरेव चाऽगतां सीतामगृह्णाद्धुतभुक्समर्पिताम् ॥ २२२ ॥

जानन् गिरीशालयगां स सीतां समग्रहीत् पावकसम्प्रदत्ताम् ।
मुमोद सम्प्राप्य च तां स रामः सा चैव देवी भगवन्तमाप्य ॥ २२३ ॥

अथो गिरेरानयनात् परस्ताद् ये वानरा रावणबाणपीडिताः ।
तारापिता तान् निरुजश्चकार सुषेणनामा भिषजां वरिष्ठः ॥ २२४ ॥

तदा मृतान् राघव आनिनाय यमक्षयाद् देवगणांश्च सर्वशः ।
समन्वजानात् पितरं च तत्र समागतं गन्तुमियेष चाथ ॥ २२५ ॥

विभीषणेनार्प्पितमारुरोह स पुष्पकं तत्सहितः सवानरः ।
पुरीं जगामाऽशु निजामयोद्ध्यां पुरो हनूमन्तमथ[1] न्ययोजयत् ॥ २२६ ॥

**दिव्यच्छलेन शपथव्याजेन ॥ २२२–३१ ॥**

---

अथेति कथान्तरारम्भे । हुतभुक्समर्पिताम् । तथाहि कूर्मपुराणे–**'सा प्रत्ययाय भूतानां सीता मायामयी पुनः । विवेश पावकं क्षिप्रं ददाह ज्वलनोऽपि ताम् । दग्ध्वा मायामयीं सीतां भगवानुष्णदीधितिः । रामायादर्शयत् सीतां पावकोऽभूत् सुरप्रियः'**[३४.१३०] इति । स्वस्य निरागस्त्वख्यापनायाग्निस्पर्शादिना परीक्षाऽग्निदिव्यमित्युच्यते । तथाहि च्छन्दोगोपनिषदि–**'अपहार्षीत् स्तेयमकार्षीत् परशुमस्मै तपतेति । स यदि तस्य कर्ता भवति स दह्यते । अथ यदि तस्याकर्ता भवति स न दह्यते'** इत्यादि । तदेवमग्निदिव्यच्छलेन ॥ २२२ ॥ समग्रहीत् स्व्यकार्षीत् । सम्प्रदत्तां समानीय भक्त्या प्रत्यर्पिताम् । सम्प्राप्य सर्वलोकसमक्षं प्रकटं समागममाप्य । सा च, सम्प्रेति वर्तते, भगवन्तं सम्प्राप्य मुमोद । दर्शनभाषेयम् । दुःखप्रहाणेन तदात्व एव प्राप्तमोदाविव दर्शयामासतुरित्यर्थः । अथच एवकार उपमार्थः । **'एव चौपम्ये नियोगे पादपूरणे'** इति मेदिनी । सम्प्राप्यैव सम्प्राप्येवेत्यर्थः । एवं दुर्जनमोहनी सज्जननन्दिनी चेयं लीलेति परस्मैभाषा ॥ २२३–४ ॥ प्रणामसम्भाषणादिना सम्भाव्य गन्तुमनुजज्ञौ । स्वयं च गन्तुमियेष । अथ देवानां पितुश्च स्वर्लोकगमनानन्तरम् ॥ २२५ ॥ अथेत्युत्तरत्राप्यन्वेति । अथ विभीषणस्य रक्षोराज्येऽभिषेकानन्तरं विभीषणेनार्पितं पुष्पकमारुरोह विभीषणसहितः । अथ भरद्वाजाश्रमप्राप्त्यनन्तरं पुरस्ताद्

---

१. **'–मथो न्ययो–'**

दर्दर्श चासौ भरतं हुताशनं प्रवेष्टुकामं जगदीश्वरस्य ।
अदर्शनात् तं विनिवार्य्य रामं समागतं चास्य शशंस मारुतिः ॥ २२७ ॥

श्रुत्वा प्रमोदोरुभरः स तेन सहैव पौरैः सहितः समातृकः ।
शत्रुघ्नयुक्तोऽभिसमेत्य राघवं ननाम बाष्पाकुललोचनाननः ॥ २२८ ॥

उत्थाप्य तं रघुपतिः सस्वजे प्रणयान्वितः ।
शत्रुघ्नं च तदन्येषु प्रतिपेदे यथावयः ॥ २२९ ॥

पुरीं प्रविश्य मुनिभिः साम्राज्ये चाभिषेचितः ।
यथोचितं च सम्मान्य सर्वानाहेदमीश्वरः ॥ २३० ॥

सर्वैर्भवद्भिः सुकृतं विधाय देहं मनोवाक्सहितं मदीयम् ।
एतावदेवाखिलसद्विधेयं यत् कायवाक्चित्तभवं मदर्चनम् ॥ २३१ ॥

मुक्तिप्रदानात् प्रतिकर्त्तृता मे सर्वस्य चाथो भवतां भवेत ।
हनूमतो न प्रतिकर्त्तृता स्यात् स्वभावभक्तस्य निरौपधं मे ॥ २३२ ॥

**स्वभावभक्तस्य मोक्षादिनिमित्तरहितभक्तिमतः । निरौपधं निर्व्याजम् । क्रियाविशेषणमेतत् ॥ २३२ ॥**

---

हनूमन्तं न्ययोजयद् भरतसान्त्वनाय ॥ २२६–७ ॥ न केवलं लोचने बाष्पाकुले । आननं च । बाष्पाधिक्यात् । एतेनानन्दातिशयं भरतस्याऽह ॥ २२८ ॥ अथ सोदराभ्यामभिनन्दितस्य रामस्य प्रत्यभिनन्दनमाह– उत्थाप्येत्यादि । प्रतिपत्तिः प्रतिसभाजनम् । यथावयः । कांश्चित् प्रणामेन । कांश्चिदाश्लेषेण । कांश्चिद्धस्तलाघवेन । कांश्चिदाशीर्वादेन ॥ २२९ ॥ मुनिभिरिति । केके मुनयः ? आह वाल्मीकिः–**'वसिष्ठो वामदेवश्च जाबालिरथ काश्यपः । कात्यायनः सुयज्ञश्च गौतमो विजयस्तथा । अभ्यषिञ्चन्नरव्याघ्रं प्रसन्नेन सुगन्धिना । सलिलेन सहस्राक्षं वसवो वासवं यथा'** [१२८.६०–१] इति ॥ २३० ॥ अथ द्वाभ्यां श्रीरामसन्देशमुपक्रमते । मनोवाक्सहितं देहं मदीयं मदर्पितं मत्पूजासाधनं विधाय भवद्भिः सुकृतम् साधुकृतम् । अखिलानामपि सतामेतावदेव विधेयम् ॥ २३१ ॥ सर्वस्य सज्जनगणस्य मुक्तिप्रदानादेव मे प्रतिकर्तृता । अथो तस्मात् भवतां च सर्वेषां मुक्तिप्रदानादेव प्रतिकर्तृता भवेत । **'एतद् व्रतं मम'** इत्यात्मनेभाषयाऽऽह । भवतां सर्वेषां सर्वस्य सुकृतस्येति वा । उपधिरिति

**मद्भक्तौ ज्ञानपूर्त्तावनुपधिकबलप्रोन्नतौ[1] स्थैर्य्यधैर्य्य-**
**स्वाभाव्याधिक्यतेजःसुमतिदमशमेष्वस्य तुल्यो न कश्चित् ।**
**शेषो रुद्रः सुपर्ण्णोऽप्युरुगुणसमितौ नो सहस्रांशतुल्या**
**अस्येत्यस्मान्मदैशं[2] पदमहममुना सार्द्धमेवोपभोक्ष्ये ॥ २३३ ॥**

**पूर्वं जिगाय भुवनं दशकन्धरोऽसावब्जोद्भवस्य वरतो नतु तं कदाचित् ।**
**कश्चिज्जिगाय पुरुहूतसुतः कपित्वाद् विष्णोर्वरादजयदर्ज्जुन एव चैनम् ॥ २३४ ॥**

**बलस्यानुपधिकत्वं नाम वरास्त्रादिनिरपेक्षत्वम् । बलस्य प्रोन्नतिः । स्वाभाव्याधिक्यं नामान्यावेशादि-निमित्तरहितत्वम् । न कश्चित् तुल्य इति कथम्? शेषादिसद्भावादित्यत आह– शेष इत्यादि । शेषो रुद्रः सुपर्णोऽप्यस्य हनूमतः उरुगुणसमितौ सहस्रांशतुल्या नो इति यस्मात् तस्मात् मदुपासकेषु सर्वाधिक्यकारणात् मदंशं मत्प्रतिबिम्बं मत्स्थानप्रतिबिम्बभूतमित्यर्थः ॥ २३३ ॥ हनुमदाधिक्यं प्रतिपादयितुमितिहासमाह– पूर्वमित्यादिना । अर्जुनः कार्तवीर्यार्जुनः ॥ २३४ ॥**

---

कपटमुच्यते । उपधेरिदं औपधम्, डाम्भिकमाचरणम् । उपधिरेव वा औपधम् । निरौपधं निर्व्याजम् ॥ २३२ ॥ अथैकया महागुणस्रग्धरया स्रग्धरया हनुमन्महिमानमाह । अनुपधिकं निरुपाधिकं स्वभावसहजम् । न वरादिसम्भवमित्यर्थः । स्वाभाव्यं स्वाभाविकमाधिक्यं सर्वजीवोत्तमत्वम् । स्वतन्त्रो भावः स्वभावः, नारायणः । स्वाभाव्यं तदधीनत्वम् । तन्मात्रनियतत्वम् । तदितरेभ्य आधिक्यमिति वा । सुमतिः सत्वैकताना मतिः । साधु-कर्मणि निष्ठा विकर्मविरतिश्च । दम इन्द्रियनिग्रहः । मनसो भगवन्मयत्वं शमः । निरन्तरा भगवन्निष्ठा । अस्य उरुगुणसमितौ शेषरुद्रसुपर्णा अपि न सहस्रांशतुल्याः । अयुतोनगुणा हि ते । किमुतापरे? इत्यस्माद्धेतोः । मदैशं मयैव केवलमीशोपेतम् । नान्यः कश्चन तस्य पदस्येष्टे । सर्वाधिकं पदमित्येतत् । पण्डिताचार्योऽप्यह– **'सहभुज-मकरोद् रामनामा मुकुन्दः'** इति । आदौ सत्यलोकाधिपत्यमन्ते सर्वाधिकं सायुज्यमोक्षं च दास्यामीत्यर्थः ॥२३३॥ इतः परमुत्तरकाण्डकथासङ्ग्रहः । अथ द्वाभ्यां रावणपूर्ववृत्तान्तपूर्वकं स्वमहिमानमाह भगवान् रामः । ततश्चैकया मात्राच्छन्दसाऽऽर्यया । तत्रैकमात्रान्यूनेन च प्रथमपादेन बलिद्वारपालनं रावणासनं च मे न प्रयासहेतुः, किन्तु लीलामात्रमित्याह । अथावशिष्टैर्द्वादशभिर्हनूमति श्रीरामानुग्रहमाह । पुरुहूतसुतः वाली कपित्वात् । **'जहार रावणं वाली पवनस्तोयदं यथा'** [उ.कां.३४.२२] इति रामायणे । अन्यथा कथं तं विजयेत यः पुरुहूतमपि जिगाय । तथाहि वालिविजयकथा– कदाचित् रावणो वालिना युद्धप्रेप्सुः किष्किन्धां जगाम । तमाह तारः–'राक्षसेन्द्र, नेह वाली विद्यते । चतुर्ष्वपि समुद्रेषु सन्ध्यामुपास्य सपदि स आयाति । मुहूर्तं तिष्ठ । यावत् तं पश्यसि तदन्तं

---

१. **'–प्रोन्नतिस्थैर्यधैर्य–'**

२. **'मदंशम्'** । वे.ती.पाठोऽपि तथा ।

**दत्तो वरो न मनुजान् प्रति वानरांश्च धात्राऽस्य तेन विजितो युधि वालिनैषः ।**
**अब्जोद्भवस्य वरमाश्वभिभूय रक्षो जिग्ये त्वहं रणमुखे बलिमाह्वयन्तम् ॥ २३५ ॥**

**अहं त्विति तुशब्देनाऽत्मनो विशेषमाह ॥ २३५ ॥**

---

जीवितम् । अथवा त्वरसे मर्तुं गच्छ दक्षिणसागरम्' इति । अथ रावणस्तारं भत्सयित्वा विमानमारुह्य दक्षिणार्णवं जगाम । तत्र वालिनं दृष्ट्वा पुष्पकादवरुह्य वालिनं ग्रहीतुं निःशब्दपदं पृष्ठतोऽव्रजत् । वाली यदृच्छया तं दृष्ट्वाऽपि अजानन्निव तूष्णीं तस्थौ । ततस्तं रावणं हस्तग्राह्यं विज्ञाय पृष्ठतः सहसा जग्राह गरुड इव पन्नगम् । गृहीत्वा च खमुत्पपात । रावणामात्यास्तमभिद्रुत्य हतसत्वा विषेदुः । वाली राक्षसं स्वकक्षे निक्षिप्य, पवन इव गगने प्लवमानः क्रमेण पश्चिममुत्तरं पूर्वं च जलधिमासाद्य सर्वास्वपि दिक्षु दिग्देवता अवन्दत । ततः किष्किन्धोपवनेऽ-पतत् । रावणं च स्वकक्षादुन्मुमोच । विस्मितो रावणस्तमुवाच–'वानरेन्द्र, अहो तव बलम् । अहो वीर्यम् । येनाहं पशुवद् भ्रामितः । कोऽन्य एवं चिकीर्षेदपि । सोऽहं दृष्टबलस्तव सख्यमिच्छामि' इति । वाली तं परिष्वज्य स्वीचकार सख्यम् । ततस्तौ कृतसन्धानौ किष्किन्धां विविशतुः । स च रावणस्तत्र मासमुवास । तत आगतैर-मात्यैः स्वां पुरमनीयतेति । वालिना सह रावणोऽग्निसाक्षिकं सख्यप्रतिज्ञां कुर्वन्नेवमाह–**'दाराः पुत्राः पुरं राष्ट्रं भोगाच्छादनसाधनम् । सर्वमेवाविभक्तं नौ भविष्यति हरीश्वर'** [३४.४२] इति । वाली तमनुजज्ञे । अत एव रामस्तं प्रथमं जघान, पश्चाद् रावणमिति । कार्तवीर्योऽर्जुनश्च विष्णोर्दत्तात्रेयस्य वराज्जिगाय त्वं जेष्यसि सर्वा-निति । **'राक्षसांस्त्रासयित्वा तु कार्तवीर्योऽर्जुनस्तदा । रावणं गृह्य नगरं प्रविवेश सुहृद्वृतः'** [३२.७२] इति हि रामायणे । सेयं कार्तवीर्यविजयस्य, रावणपराजयस्य च कथा– आस माहिष्मतीपतिरर्जुनः । स कदाचित् स्त्रीभी रन्तुं नर्मदां गतः । तमेव दिवसं रावणस्तत्राऽगतः । अर्जुनामात्यैर्विदितवृत्तान्तः स्वयमपि नर्मदां ययौ । ततः शर्मदायां नर्मदायां कृतावगाहः शिवलिङ्गमर्चयामास । यत्र नर्मदापुलिने पौलस्त्यः पुरहरलिङ्गं पूजयामास तस्माद् देशाददूरतः कार्तवीर्योऽर्जुनः कन्यकाभिर्विजहार नर्मदासलिले । स स्वबाहूनां बलं जिज्ञासुः सहस्रेण बाहुभिर्नर्मदावेगं रुरोध । तदा तज्जलं प्रतिस्रोतः प्रधाव्य पौलस्त्यस्य पुष्पोपहारमपजहार । तमर्जुनबाहुरोधकृतं विज्ञाय प्रययौ रावणो युद्धलालसः । ततोऽर्जुनः स्वामात्यान् हत्वा समायान्तं सामात्यं पौलस्त्यं विज्ञाय पावक इव प्रज्वलन् महागदामादाय समुत्पपात । सहस्रबाहोर्विंशतिबाहोश्च रोमहर्षणं प्रावर्तत प्रधनम् । परस्परं गदया प्रजह्रतुः । नार्जुनः खेदमायाति न राक्षसगणेश्वरः । तदा क्रुद्धेन कार्तवीर्येण रावणस्य स्तनयोरन्तरे मुक्ता गदा । तेन गदापातेन रावणो धनुर्मात्रमपा-सर्पत्, निषसाद च निष्टनन् । ततोऽर्जुनस्तं बाहुसहस्रेण बलाद् गृहीत्वा बबन्ध । बद्धमादाय नगरं प्रविवेश । तदेतत् पुलस्त्यो मुनिः शुश्राव । स पुत्रस्नेहान्माहिष्मतीमाजगाम । अर्चितश्चार्जुनेन यथार्हं तमुवाच– **'नरेन्द्र, अतुलं ते बलं येन दशग्रीवस्त्वया जितः । साधु, मुञ्च वत्सं दशाननम्'** इति । पार्थिवेन्द्रो राक्षसेन्द्रं मुमोच मुनिवचनगौरवादिति ॥ २३४ ॥ मनुष्यान् वानरांश्च प्रति, तान् लक्षीकृत्य, धात्राऽजेयत्ववरो न दत्तः । तथाहि रावणवचनं रामायणे–'**सुपर्णनागयक्षाणां दैत्यदानवरक्षसाम् । अवध्योऽहं प्रजाध्यक्ष देवतानां च शाश्वत । नहि**

**बलेर्द्वारस्थोऽहं वरमस्मै सम्प्रदाय पूर्वं तु ।**
**तेन मया रक्षोऽस्तं योजनमयुतं पदाङ्गुल्या ॥ २३६ ॥**

**पुनश्च युद्धाय समाह्वयन्तं न्यपातयं रावणमेकमुष्टिना ।**
**महाबलोऽहं कपिलाख्यरूपस्त्रिकोटिरूपः पवनश्च मे सुतः ॥ २३७ ॥**

**अस्मै बलये वरं सम्प्रदाय, अहं तव द्वारपालः स्यामिति वरं सम्प्रदाय, तेन कारणेन द्वारस्थोऽहम् ॥ २३६ ॥ पुनश्च कालान्तरे । त्रिकोटिरूपः त्रिकोटिसङ्ख्यावदवतारवान् पवनश्च न्यपातयदिति शेषः ॥ २३७–८ ॥**

---

**चिन्ता ममान्येषु प्राणिष्वमरपूजित । तृणभूता हि ते मन्ये प्राणिनो मानुषादयः'** [उ.कां.१०.१९–२०] इति । अहं त्वब्जोद्भवस्य वरमभिभूय रक्षो रावणं विजिग्ये ॥ २३५ ॥ बलये 'तव द्वारपालो भूत्वा त्वां रक्षामि' इति पूर्वमेव वरं सम्प्रदाय । सन्तुष्टेन प्रीत्या दानं सम्प्रदानम् । रक्षो रावणः । तथाहि बलिवचनं रामायणे[1]– **'क एनं पुरुषो लोके वञ्चयिष्यति रावण । सर्वभूतापहर्ता वै य एष द्वारि तिष्ठति । कर्ता कारयिता चैव धाता च भुवनेश्वरः'** [२४.३६] इति, **'यत् स देवान् प्रधर्षेत तदेषो विष्णुरीश्वरः'** [५२] इति च । **'एष तिष्ठति वै द्वाःस्थो वासुदेवो निरञ्जनः'** [७२] इति च । **'एष त्रैलोक्यधाता च हरिर्नारायणः प्रभुः । अनन्तः कपिलो विष्णुर्नारसिंहो महाद्युतिः'** [८०] इति च । केचिद् वृथैतं भागं प्रक्षिप्तं मन्यन्ते । तां भ्रान्तिं वारयितुमेवाऽऽचार्येणेयं कथाऽत्र निरूपिता । पदाङ्गुल्या निरसनं रामायणे न स्फुटमिति तद्विवरणार्थं च ॥ २३६ ॥ कपिलाख्यरूप इति । तथाहि–**'द्वीपस्थः पुरुषः कोऽसौ तिस्रः कोट्यश्च ताश्च काः'**[2] [उ.कां.२८.६५] इति रामप्रश्नस्य अगस्त्य-प्रतिवचनं रामायणे–**'भगवान् कपिलो राम द्वीपस्थो नर उच्यते । स वै नारायणो देवः शङ्खचक्रगदाधरः । विधाता चैव भूतानां संहर्ता स तथैव च । अनादिरच्युतो विष्णुः प्रभवः शाश्वतोऽव्ययः । ये तु नृत्यन्ति वै तत्र सुतास्ते तस्य धीमतः । तुल्यतेजःप्रतापास्ते कपिलस्य नरस्य वै'**[६७–७०] इति । अत्र **'संहर्ता स तथैव च'** इति, यथा विधातृगतः स्रष्टा तथैव शिवगतः संहर्ता चेत्यर्थः । **'सुतास्ते तस्य धीमतः'** इत्येतदाचार्येणैव विवृतम्– 'त्रिकोटिरूपः पवनश्च मे सुतः' इति । यथा त्रिरूपस्तथा कपिलसेवार्थं त्रिकोटिरूपश्च । त्रिकोटिरूपः पवनो हनुमांश्च न्यपातयद् रावणमेकमुष्टिना । **'तुल्यतेजःप्रतापाः'** इत्येतदपि **'मदाज्ञया सृष्ट्यवनादिकर्म । मोक्षं च लोकस्य सदैव कुर्वन् मुक्तश्च मुक्तान् सुखयन् प्रवर्तताम् । भोगाश्च ये यानि च कर्मजातान्यनाद्यनन्तानि ममेह सन्ति । मदाज्ञया तान्यखिलानि सन्ति धातुः पदे तत् सहभोगनाम'** इत्युपरितनवचनेन स्वयमेवाऽऽचार्यो व्याचख्यौ । एतदपि अर्वाचीनाः प्रक्षिप्तं मन्यन्ते । **'क्वचिदन्तरितानपि'** इत्यस्य निदर्शनमेतत् ॥ २३७ ॥

---

१. मुद्रितपुस्तकेष्वयमध्यायः, त्रयोविंशादध्यायादनन्तरं प्रक्षिप्ताध्यायत्वेन पठ्यते । २. अयं च प्रक्षिप्तपञ्चमाध्यायगतत्वेन पठ्यते ।

**आवां स्वशक्त्या जयिनाविति स्म शिवो वरान्मेऽजयदेनमेवम् ।**
**ज्ञात्वा सुराजेयमिमं हि वव्रे हरो जयेयाहममुं दशाननम् ॥ २३८ ॥**

**अतः स्वभावाज्जयिनावहं च वायुश्च वायुर्हनुमान् स एषः ।**
**अमुष्य हेतोस्तु पुरा हि वायुना शिवेन्द्रपूर्वा अपि काष्ठवत् कृताः ॥ २३९ ॥**

**अतो हनूमान् पदमेतु धातुर्म्मदाज्ञया सृष्ट्यवनादि कर्म्म ।**
**मोक्षं च लोकस्य सदैव कुर्वन् मुक्तश्च मुक्तान् सुखयन् प्रवर्त्तताम् ॥ २४० ॥**

**अहं वायुश्च स्वभावाज्जयिनौ । स वायुरेष हनुमान् । अनेन हनुमदाधिक्यं भवत्युक्तम् । पुरा हनुमज्जन्मकाले ॥ २३९ ॥ अत एवमधिकत्वात् । कुर्वन्, धातुः पदे स्थित इति शेषः ॥ २४० ॥**

---

'अमुं दशाननमहं विजयेय' इतीमं वरं हरो वव्रे । तेन शिवस्तं विजिग्ये । अत्रेयं कथा–रावणो जित्वा धनदं महासेनप्रसूतिं शरवणं ययौ । तत्र पुष्पकं निष्पन्दमभवत् । ततो भवानुचरो नन्दीश्वरो राक्षसेन्द्रमुवाच–'अत्र शैले क्रीडति शङ्करः । तेन सर्वेषामगम्योऽयं भूभागः । तन्निवर्तस्व दुर्बुद्धे मा विनाशं गमः' इति । तद्वचनमनादृत्य दशाननस्तं शैलमुन्मूलयिष्यन् भुजान् विक्षिप्य तोलयामास । अथ स शैलः समकम्पत । समकम्पन्त देवगणाः । चचाल च पार्वती । ततो महादेवस्तं शैलं पादाङ्गुष्ठेन पीडयामास । शैलस्याधोगता रावणस्य भुजा अपि निपीडिताः । रावणः प्रचलितुमप्रभवन् पीडां च सोढुम्, उच्चैरारुराव । तेन रावणनामा बभूवेति । ततः शिवभक्तश्च बभूवेति । ननु अवध्यत्वमेव रावणो वरं वव्रे । नाजेयत्वम् । तेन वाली तं विजयेत । अर्जुनोऽपि । शङ्करोऽपि । न भोः । निरन्तरपराभवाय को न्ववध्यतां विवरिषति मनीषी? जेतुं किल जिजीविषति । तस्माद् विजयगर्भमेवावध्यत्वम् ॥ २३८ ॥ काष्ठवत् कृताः । तथाहि रामायणे–**'वायुप्रकोपोद्भूतानि निरुच्छ्वासानि सर्वतः । सन्धिभिर्भिद्यमानैश्च काष्ठभूतानि जज्ञिरे'** [उ.कां.३५.५१] इति, **'वायुः प्राणः सुखं वायुर्वायुः सर्वमिदं जगत् । वायुना सम्परित्यक्तं न सुखं विन्दते जगत् । अद्यैव च परित्यक्तं वायुना जगदायुषा । अद्यैव ते निरुच्छ्वासाः काष्ठकुड्योपमाः स्थिताः'** [३५.६१–२] इति च । अयमत्र कथासङ्ग्रहः–शिशुकस्य हनुमतः फलान्याहर्तुमञ्जना गहनं जगाम । तदोद्यन्तं विवस्वन्तं दृष्ट्वा फललोभादुत्पपात गगनं हनुमान् । तस्मिन्नेव दिने राहुग्रहणमासीत् । कुपितो राहुर्देवेन्द्रमेत्याब्रवीत् **'मद्भक्षमादित्यमन्योऽयं राहुर्ग्रसति सम्प्रति'** इति । इन्द्रश्च सह सैंहिकेयेन सूर्यसकाशं जगाम । हनुमान् राहुं दृष्ट्वा, विहायाहस्करम्, तमेव ग्रहीतुमुत्पपात । ऐरावतं दृष्ट्वा तमेवान्यत् फलं मन्यमानस्तं ग्रहीतुं जगाम । तदा सम्भ्रान्तः शचीपतिस्तं कुलिशेनाभ्यताडयत् । **'ततो गिरौ पपातैष इन्द्रवज्राभिताडितः । पतमानस्य चैतस्य वामो हनुरभज्यत'** [उ.कां.३५.४७] इति । अथ पवनश्चुकोप । कुपित्वा च सर्वभूतानि रुरोध । सर्वं जगत् स्तम्भयामासेति ॥ २३९ ॥ सृष्ट्यवनादि । सृष्ट्यवनाभ्यामादिमन्तः संहारनियमनज्ञानाज्ञानबन्धाः । मोक्षं च– **'विष्णुर्हि दाता मोक्षस्य वायुश्च तदनुज्ञया'** इति हि स्मरन्ति । अमुक्तलोकस्य सृष्ट्यादि

**भोगाश्च ये यानि च कर्म्मजातान्यनाद्यनन्तानि ममेह सन्ति ।**
**मदाज्ञया तान्यखिलानि सन्ति धातुः पदे तत् सहभोगनाम ॥ २४१ ॥**

**एतादृशं मे सहभोजनं ते मया प्रदत्तं हनुमन् सदैव ।**
**इतीरितस्तं हनुमान् प्रणम्य जगाद वाक्यं स्थिरभक्तिनम्रः ॥ २४२ ॥**

**तत् तस्मात् सहभोगनाम, धातुः पदमिति शेषः ॥ २४१–७ ॥**

---

मोक्षान्तं कुर्वन् । मुक्ता ह्यलोका उच्यन्ते । **'प्रज्ञानेत्रोऽलोकः'** [महै.उ.२.५.३] इति श्रुतेः । **'मुक्ता येऽलोकनामानो नीयन्ते तेऽपि विष्णुना'** इति स्मृतेः । **'अलोकशब्देन मुक्तसमुदाय उच्यते'** इति भाष्यवचनाच्च । रामायणे च स्फुटमेतत् सर्वमुक्तम्– **'ससूत्रवृत्त्यर्थपदं महार्थं ससङ्ग्रहं साध्यति वै कपीन्द्रः । नह्यस्य कश्चित् सदृशोऽस्ति शास्त्रे वैशारदे च्छन्दगतौ तथैव । सर्वासु विद्यासु तपोविधाने प्रस्पर्धते यो हि गुरुं सुराणाम् । सोऽयं नवव्याकरणार्थवेत्ता ब्रह्मा भविष्यत्यपि ते प्रसादात्'** [उ.कां. ३६.४६–७] इत्यादिना । ससूत्रवृत्ति सानुव्याख्यानम् । अर्थपदं सूत्रार्थप्रतिपादकं भाष्यम् । ससङ्ग्रहभाष्यम् । सर्वमपि महार्थम् । **'ग्रन्थोऽयमपि बह्वर्थो भाष्यं चात्यर्थविस्तरम्'** इति ह्यनुव्याख्याने । साध्यति साधयति मध्वरूपेण । काशकृत्स्नः साधधातुं दिवादौ पठति । पठतश्च चन्द्रकातन्त्र-कारौ । तेन 'साध्यति' इति साधुरूपम् । आह च क्षीरस्वामी–**'दिवादौ साध्यति'** इति । अहो महीयान् महिमा वाल्मीकेर्यो वायोर्युगान्तरभाविनं तृतीयमवतारं त्रेतायामेवाविश्चकारागस्त्यस्य मुखेन । विशारदो विष्णुः । वैशारदे विष्णुपारम्यप्रतिपादके । छन्दस्सु वेदेषु स्वच्छन्देन गतिश्छन्दगतिः । अनुष्टुबादिच्छन्दस्सु गतिश्च । भगवत्पाद-स्यार्थानुगुणं विविधच्छन्दोविहरणं स्फुटतरमस्मिन्नेवाध्याये । सुराणां गुरुर्ब्रह्मा । नवंनवं व्याकरणं व्याख्यानम् ॥ २४० ॥ मम मया क्रियमाणानि यानीह लोके सृष्टयवनादिकर्मजातानि अनाद्यनन्तानि निरन्तराणि सन्ति तान्यखिलानि स्वपदे स्थितस्य धातुरपि सन्ति । तस्मिन् स्थित एवाहं सर्वं निर्वहामीति सोऽपि कर्ता । अथ च ममाधीनानि यानि जीवजातस्य अनाद्यनन्तानि कर्मजातानि तानि यथा मम तथा धातुरपि वशे भवन्ति । धातुर्जीवकलामानित्वात् । स एव सर्वाणि कर्माणि कारयति, कारयित्वा च मयि समर्पयति । **'तस्मिन्नपो मातरिश्वा दधाति'** [या.मं.उ.४] इति श्रवणात् । **'मारुत्येव यतश्चेष्टा सर्वा तां हरयेऽर्पयेत्'** इति ब्रह्माण्डवचनं भाष्ये । **'या पुनः सर्वप्राणिषु दृश्यमाना सर्वचेष्टा साऽपि मारुती मरुतैव कारिता । 'वायुना हि सर्वे लोका नेनीयन्ते' इति श्रुतेः'** इति च वामनपण्डिताचार्यवचनम् । अथ ये च जीवानां शुभकर्मफलरसभोगाः, तान् धातरि स्थित्वा स्वयं भुङ्क्त इति धातुश्चायं समानो भोगो भवति । तथाहि श्रुतिः–**'ऋतं पिबन्तौ सुकृतस्य लोके गुहां प्रविष्टौ परमे परार्द्धे'** [का.उ.१.३.१] इति । **'आत्मान्तरात्मेति विभुरेक एव द्विधा स्थितः । विष्णुः स परमे वायौ परेभ्योऽप्युद्धरूपके । शुभान् पिबति भोगान् सः–'** इति भाष्ये । **'मुख्यप्राणे द्विधा स्थित्वा तत्फलरसं पिबन्तौ'** इति वामनपण्डिताचार्यः । **'ऋतं शास्त्रविहितकर्मभिरागतं फलम्'** इति तत्वप्रदीपे ॥ २४१–२ ॥

**को न्वीश ते पादसरोजभाजां सुदुर्लभोऽर्थेषु चतुर्ष्वपीह ।**
**तथाऽपि नाहं प्रवृणोमि भूमन् भवत्पदाम्भोजनिषेवणादृते ॥ २४३ ॥**

**त्वमेव साक्षात् परमस्वतन्त्रस्त्वमेव साक्षादखिलोरुशक्तिः ।**
**त्वमेव चागण्यगुणाण्र्णवः सदा रमाविरिञ्चादिभिरप्यशेषैः ॥ २४४ ॥**

**समेत्य सर्वेऽपि सदा वदन्तोऽप्यनन्तकालाच्च नवै समाप्नुयुः ।**
**गुणांस्त्वदीयान् परिपूर्णसौख्यज्ञानात्मकस्त्वं हि सदाऽतिशुद्धः ॥ २४५ ॥**

**यस्ते कथासेवक एव सर्वदा सदारतिस्त्वय्यचलैकभक्तिः ।**
**स जीवमानो न परः कथञ्चित् तज्जीवनं मेऽस्त्वधिकं समस्तात् ॥ २४६ ॥**

**प्रवर्द्धतां भक्तिरलं क्षणेक्षणे त्वयीश मे ह्रासविवर्जिता सदा ।**
**अनुग्रहस्ते मयि चैवमेव निरौपधौ तौ मम सर्वकामः ॥ २४७ ॥**

---

मोक्षो महता साधनेन लभ्य इति कष्टसाध्यतया कथञ्चित् दुर्लभ इत्युच्येतापि । सुदुर्लभस्तु सप्तमरसायते । नाहं कमप्यर्थं प्रवृणोमि प्रकर्षबुद्ध्या वृणोमि । भवत्पदाम्भोजनिषेवणादपि प्रकृष्टं प्रार्थनीयं न किमपीत्यर्थः ॥२४३॥ परमः स्वतन्त्रः इति व्यस्तं समस्तं वा । साक्षादनुपचरिततया, अखिलाः समग्राः, उर्व्यो निरवधिकाश्च शक्तयोऽस्य । अखिलेभ्यो वा उर्वी शक्तिरस्य । अशेषैरप्यगण्याः ॥ २४४ ॥ तदेव स्फुटमाह–समेत्य सर्वेऽपि । गुणान् वदन्तोऽपि न समाप्नुयुः न समाप्तिं गच्छेयुः । अनन्तकालादारभ्यानन्तकालपर्यन्तम् । परीति पूर्णताया अनादित्वं निरपेक्षत्वं निरवधित्वं चाह । परितः सर्वतः सर्वात्मनेत्यर्थः । सादि च सापेक्षं च पूर्णत्वं मुक्तानां ज्ञानानन्दयोरप्यस्ति । यद्यप्यनादित्वं रमाज्ञानानन्दयोरपीष्यते, अथापि न तौ निरवधी । नापि निरपेक्षौ । तदिदं सर्वं ग्राहयितुं परिपूर्णेत्याह । अथच परिपूर्णसौख्यज्ञानः आत्मकश्चाऽयम् । आत्मनोरित्यात्मकलाभिमानिनोरात्मनां वा ज्ञानिनां कं सुखमनेनेत्यात्मकः । एतस्यैवाऽनन्दस्यान्ये मात्रामुपजीवन्तीत्यर्थः । अथच परीति दुःखपरिवर्जनमज्ञानपरिवर्जनं च । तेन परिपूर्णे दुःखज्ञानासमानाधिकरणे सौख्यज्ञाने येषां तादृशा आत्मका अल्पात्मानो जीवा येन । मुक्ताः शुद्धाः । संसृतिबन्धविरहाद् रमा सदा शुद्धा । तामप्यतिगतोऽयं भगवानिति सदाऽतिशुद्धः ॥ २४५–६ ॥ निरौपधौ निर्व्याजौ । मम त्वयि पराभक्तिः । तव मय्यनुग्रहः परा प्रीतिः । मम सर्वकामः कामनासर्वस्वम् ॥ २४७ ॥

**इतीरितस्तस्य ददौ स तद् द्वयं पदं विधातुः सकलैश्च शोभनम् ।**
**समाश्लिषच्चैनमथाऽर्द्रया धिया यथोचितं सर्वजनानपूजयत् ॥ २४८ ॥**

**इति श्रीमदानन्दतीर्थभगवत्पादविरिचिते**
**श्रीमहाभारततात्पर्य्यनिर्ण्णये श्रीरामचरिते[1]**
**अष्टमोऽद्ध्यायः**

—०—

[आदितः श्लोकाः– ६३०+२४८=८७८]

**तद् द्वयं भक्त्यनुग्रहौ ॥ २४८ ॥**

इति श्रीमहाभारततात्पर्यनिर्णयटीकायां श्रीवेदाङ्गतीर्थभट्टारकविरचितायां
तात्पर्यदीपिकायामष्टमोऽध्यायः

—०—

---

प्रेमार्द्रया धिया मनसा ॥ २४८ ॥ रावणवध एव मुख्यं रामचरितमित्यस्याध्यायस्य श्रीरामचरितमित्येव नाम ददौ । न पूर्वाध्यायेष्विव किमप्यवान्तरं नामान्तरम् ॥ ✻ ॥

**आचार्यगोविन्दकृते**
**श्रीमद्भारततात्पर्यनिर्णयस्य ।**
**निर्णिक्ते व्याख्याने निर्णयभावचन्द्रिकाख्याने**
**प्रगतमष्टमाध्यायविवरणं सतां हृदयाभरणम् ॥ ✻ ॥**

इत्याचार्यगोविन्दस्य कृतिषु
श्रीमहाभारततात्पर्यनिर्णयपञ्चिकायां
निर्णयभावचन्द्रिकायां
अष्टमोऽध्यायः

—०—

---

१. प्राचीनादर्शेषु केवलं **'श्रीरामचरितेऽष्टमोऽध्यायः'** इतीयदेव पठ्यते । एकस्मिन्नेव चाऽदर्शे **'श्रीरामदयादानं नाम'** इति नामनिर्देशः कृतः । **'युद्धकाण्डकथानिरूपणं नाम'** इति, **'अयोध्याप्रवेशो नाम'** इत्यादि च प्र. पाठः ।

२२-१०-१२

# नवमोऽध्यायः

**[श्रीरामचरिते रामस्वधामप्रवेशः]**

ॐ॥ अथाऽप्तराज्यो भगवान् स लक्ष्मणं जगाद राजा तरुणो भवाऽशु ।
इतीरितस्त्वाह स लक्ष्मणो गुरुं भवत्पदाब्जान्न परं वृणोम्यहम् ॥ १ ॥

न मां भवत्पादनिषेवणैकस्पृहं तदन्यत्र नियोक्तुमर्हति[1] ।
नहीदृशः कश्चिदनुग्रहः क्वचित् तदेव मे देहि ततः सदैव ॥ २ ॥

इतीरितस्तस्य तदेव दत्त्वा दृढं समाश्लिष्य च राघवः प्रभुः ।
स यौवराज्यं भरते[2] निधाय जुगोप लोकानखिलान् सधर्म्मकान् ॥ ३ ॥

प्रशासतीशे पृथिवी बभूव विरिञ्चलोकस्य समा गुणोन्नतौ ।
जनोऽखिलो विष्णुपरो बभूव न धर्म्महानिश्च बभूव कस्यचित् ॥ ४ ॥

**ॐ ॥ तरुणो राजा युवराजः ॥ १–४ ॥**

---

ॐ ॥ अध्यायेऽस्मिन्नुत्तरकाण्डकथाशेषं निरूप्य रामचरितमुपसंहरति वीरप[१२४]मितैः श्लोकैः । लक्ष्मणं जगाद । एतेन च स्फुटं लक्ष्मणस्य भरताग्रजत्वम् । तु रामादव्यवहितानन्तरत्वेन तदर्होऽपि लक्ष्मण आह । पदाब्जादिति । पदाब्जनिषेवणादित्यर्थः । सदा संवहनाय पदाब्जमेव वृणोमि । परमन्यत् ॥ १ ॥ केवलं निषेवणे स्पृहा यस्य । नितान्तं सेवनं निषेवणम् । निरन्तरं भक्त्यादिनिबिडं चेत्येतत् । नियोक्तुमर्हति भवान् । नचान्यः कोऽपि नियोक्तुमर्हति । तदेव भवत्पादनिषेवणमेव ॥ २ ॥ सधर्मकान् स्वधर्मनिष्ठान् धर्मानुष्ठानेन जातानन्दांश्च ॥ ३ ॥ कस्यचित् पुरुषस्य । कस्यचिदपि हेतोः । धर्महानिहेतूनां निहतत्वाद् रावणादीनाम् ॥ ४ ॥

---

१. '–मर्हसि'

२. '–राज्ये भरतं नि–'

गुणैश्च सर्वैरुदिताश्च सर्वे यथायथा योग्यतयोच्चनीचाः ।
समस्तरोगादिभिरुज्झिताश्च सर्वे सहस्रायुष ऊर्जिता धनैः ॥ ५ ॥

सर्वेऽजरा[1] नित्यबलोपपन्ना यथेष्टसिद्ध्या च सदोपपन्नाः ।
समस्तदोषैश्च सदा विहीनाः सर्वे सुरूपाश्च सदामहोत्सवाः ॥ ६ ॥

सर्वे मनोवाक्तनुभिः सदैव विष्णुं यजन्ते नतु कश्चिदन्यम् ।
समस्तरत्नोद्भरिता च पृथ्वी यथेष्टधान्या बहुदुग्धगोमती ॥ ७ ॥

समस्तगन्धाश्च सदाऽतिहृद्या रसा मनोहारिण एव तत्र ।
शब्दाश्च सर्वे श्रवणातिहारिणः स्पर्शाश्च सर्वे स्पर्शेन्द्रियप्रियाः[2] ॥ ८ ॥

न कस्यचिद् दुःखमभूत् कथञ्चिन्न वित्तहीनश्च बभूव कश्चन[3] ।
नाधर्म्मशीलो नच कश्चनाप्रजो न दुष्प्रजो नैव कुभार्य्यकश्च ॥ ९ ॥

**(उदिताः) उत्कृष्टाः । योग्यतया यथायथा उच्चनीचाः स्वस्वयोग्यतानुसारेण उत्तमाधमा इति भावः ॥५-१०॥**

---

यस्ययस्य योग्यतया यथायथा उच्चत्वं नीचत्वं वोचितं तथातथोच्चनीचाः । यतः सर्वेऽपि जनाः सर्वैरपि गुणैः यथायथा यथोचितमुदिता एव उन्नतिमिता एव । रोगादिभिरिति व्याधिभिराधिभिश्च । सहस्रायुष इति चिरजीविनः । 'जनोऽखिलः–' इति प्रस्तुतत्वात् 'सर्वे' इत्युक्तम् । तेन पुंस्त्वमवर्जनीयसन्निधिः । सर्वे स्त्रीपुंसलक्षणा जनाः । सर्वाश्च सर्वे चेत्येकशेषो वा । ऊर्जिताः समृद्धाः ॥ ५ ॥ अजरा जरानिमित्तपलितादिरहिता अगलिताङ्गाः । तदेव स्फुटमाह– नित्यबलोपपन्नाः । सिद्धिरभीष्टलाभः । सदाऽपि महान्त उत्सवा एषामिति सदामहोत्सवाः । सदा महः भगवत्पूजादिर्यत्र स सदामहः उत्सवो येषामिति वा ॥ ६ ॥ यजन्ते पूजयन्ति । यज देवपूजायाम् । नतु कश्चिदन्यं परदेवतात्वेन । बहुदुग्धगोमती । समासमध्यपतितस्य गोशब्दस्य टच्प्रत्ययो न भवति । बहुदुग्धा गावः सन्त्यस्यामिति समासः । अथवा प्रशस्ता गावः सन्त्यस्यामिति गोमती पृथ्वी । अत एव बहुदुग्धा च सेति विशेषणोभयपदः कर्मधारयः ॥ ७ ॥ सदेति पादचतुष्टयेऽप्यन्वेति । मनोहारिण एवेत्येवकारेण सर्वे रसा इति लब्धम् । रूपाणि च मनोहारीणीत्युपस्कर्तव्यम् । 'सर्वे सुरूपाः–' इति चोक्तम् । स्पर्शेन्द्रियप्रिया इति विश्लिष्य पाठेन स्पर्शजं पुलकमभिनीय दर्शयतीव ॥ ८ ॥ रोगादिभिरुज्झिता इत्युक्तं स्फुटयति– न कस्यचित् । कथञ्चिदपि दुःखं नाभूत् । ऊर्जिता धनैरित्युक्तम् । ननूर्जितमपि केनचिन्निमित्त-

---

१. **'सर्वे नरा–'** २. **'स्पर्शेन्द्रियप्रियाः'** इति विश्लिष्य पठनीयम् । ३. **'वित्तहानिश्च बभूव कस्यचित् ।'**

स्त्रियो नचाऽसन् विधवाः कथञ्चिन्न वै पुमांसो विधुरा बभूवुः ।
नानिष्टयोगश्च बभूव कस्यचिन्नचेष्टहानिर्न्नच पूर्वमृत्युः ॥ १० ॥

यथेष्टमाल्याभरणानुलेपना यथेष्टपानाशनवाससोऽखिलाः ।
बभूवुरीशे जगतां प्रशासति प्रकृष्टधर्म्मेण जनार्द्दने नृपे ॥ ११ ॥

स ब्रह्मरुद्रमरुदश्विदिवाकरादिमूर्द्धन्यरत्नपरिघट्टितपादपीठः ।
नित्यं सुरैः सह नरैरथ वानरैश्च सम्पूज्यमानचरणो रमते रमेशः ॥ १२ ॥

**जगतामीशे जनार्दने नृपे प्रशासति सति, जगन्तीति शेषः ॥ ११–२ ॥**

---

विशेषेण कदाचिद्धीयेतापि । नेत्याह– कथञ्चिद् वित्तहीनश्च कोऽपि न बभूवेति । स्वभावतः अधर्मशीलः कोऽपि न बभूव । धर्मशीलस्यापि प्रतिबन्धकादिना धर्मलोपः स्यात् । यथा राक्षसैस्तापसानां तपोभङ्गः । तदपि नाऽसीदिति पूर्वमुक्तम्– न धर्महानिश्च बभूव कस्यचिदिति । तेन न पुनरुक्तिशङ्का । पूर्वं धर्मार्थकामानामयोगव्यवच्छेद उक्तः । इह चान्ययोगव्यवच्छेद इत्येतत् । नैव कुभार्यकश्च । पुंस्त्वमशिष्यम् । नैव कुभर्तृका च ॥ ९ ॥ स्त्रियो नचाऽसन् विधवाः । ननु यदि स्त्रियो नाऽसन् विधवाः, तर्ह्यासन्नेव विधुराः । यदि च पुमांसो न बभूवुर्विधुराः, तर्हि बभूवुरेव विधवाः । न भोः । अनवगताशयोऽसि । अकालवैधव्यमकालवैधुर्यं च नाऽसीदित्यर्थः । उक्तं किल पुरा–'सर्वे सहस्रायुषः' इति । तस्यैव विवरणमिदम् । आकस्मिकेन व्याध्यादिनाऽऽन्तरकारणेन शापादिना बाह्यकारणेन वा वैधव्यं वैधुर्यं च दुरन्तचिन्ताहेतुर्नाऽसेत्येतत् । **'नार्यश्चाविधवा नित्यं भविष्यन्ति पतिव्रताः'** [बा.कां.१.९१] इति रामायणे । तेन न कोऽपि क्षुद्रोपद्रवः । अन्यथा स्त्रीपुंसयोर्युगपन्मरणासम्भवादिदमसङ्गतं स्यात् । स्फुटं चैतदुत्तरवाक्ये– नच पूर्वमृत्युः । अकालमृत्युरित्यर्थः । कौसल्यादीनां वैधव्यं पूर्वमेवाभूत् । नतु रामे पृथिवीं प्रशासति । पतिपुत्रविहीना विधवेत्येके । **'विविधा धवा यासां ता विधवा व्यभिचारिण्यः'** इति व्याख्यानं तु विधुरपदसाहचर्यादेव निरस्तम् । विगतजायाधुरो हि विधुर उच्यते । ननु विकलाङ्गोऽपि विधुर उच्यते । तर्हि पुमांस इति व्यर्थम् । किं स्त्रियो विकलाङ्ग्य आसन्निति मन्यसे । **'न पर्यदेवन् विधवा नच व्यालकृतं भयम् । न व्याधिजं भयं वाऽपि रामे राज्यं प्रशासति'** [यु.कां.१३१.९४] इति च । **'नाकाले म्रियते कश्चिन्न व्याधिः प्राणिनां तथा । नानर्थो विद्यते कश्चिद् रामे राज्यं प्रशासति'** [उ.कां.९९.१४] इति च ॥ १० ॥ 'यथेष्टसिद्ध्या च सदोपपन्नाः' इत्युक्तं स्फुटयति– यथेष्टेत्यादिना । पानाशनवासांसि मूलभोगः । माल्यादीनि भोगसमृद्धयः । जगतामीशे पृथिवीं प्रशासति । वेदमूलत्वमेव धर्मे प्रकर्षः । प्रकृष्टधर्ममूलत्वमेव शासने प्रकर्षः । रक्षोजनार्दने ॥ ११ ॥ ब्रह्मरुद्रौ मूलरूपेणैव सिषेवाते । रुद्रपदेन गरुडशेषयोरुपलक्षणम् । समानकक्ष्यत्वमवच्छेदकम् । गरुडो मूलरूपेण । शेषो लक्ष्मणात्मना च । नागबन्धतः प्राप्ताया

तस्याखिलेशितुरनाद्यनुगैव लक्ष्मीः सीताभिधा त्वरमयत् स्वरतं सुरेशम्[१] ।
नित्यावियोगिपरमोच्चनिजस्वभावा[२] सौन्दर्यविभ्रमसुलक्षणपूर्वभावा ॥ १३ ॥

रेमे तया स परमः स्वरतोऽपि नित्यं नित्योन्नतप्रमदभारभृतस्वभावः ।
पूर्णोडुराजसुविराजितसन्निशासु दीप्यन्नशोकवनिकासु सुपुष्पितासु ॥ १४ ॥

**नित्यावियोगिपरमोच्चनिजस्वभावसौन्दर्यविभ्रमसुलक्षणपूर्वभावा । सौन्दर्यं च, विभ्रमो विलासः, समस्त-लक्षणानि च । नित्यावियोगीनि परमोच्चानि निजस्वभावभूतानि च तानि सौन्दर्यादीनि चेति विशेषण-समासः । निजस्वभावत्वं नाम निजस्वरूपत्वम् । तन्नित्यावियोगित्वे हेतुः । सौन्दर्यादीनि पूर्वाणि येषां ते सौन्दर्यादिपूर्वाः । सौन्दर्यादिपूर्वाः भावाः धर्माः गुणाः यस्याः सा तथोक्ता ॥ १३ ॥ नित्योन्नत-**

---

रुजो द्रावणेन स्फुटमत्र रुद्रो गरुडः । पूर्वरुद्रत्वाच्छेषोऽपि रुद्रपदगदित एव । अन्ये मूलरूपेण चावताररूपेण च । मरुत् हनुमद्रूपेण च । मरुतः गजादिरूपैश्च । मरुत्पदेन एकोनपञ्चाशदपि मरुतो गृह्यन्त इति सूचयन् रुद्रादनन्तरं निर-दिक्षत् । मुख्यवायुरपि गृह्यत इत्यश्विदिवाकरादिभ्यः पूर्वम् । समानकक्ष्याविति मरुद्भिः सहाश्विनौ । पुत्रौ पठितौ पितरं स्मारयत इत्यन्ते दिवाकरः । अश्विनौ मैन्दविविदात्मना च । दिवाकरः सुग्रीवात्मना च । अथवा ब्रह्मपदेनैव भाविब्रह्माऽपि गृह्यते । रुद्रपदेनैकादश रुद्राः । दिवाकरपदेन च स्मारिता अन्ये दशाऽदित्या ऋते विष्णोः । आदिपदेनाष्टौ वसवः, दश च विश्वेदेवाः । अन्ये च सर्वे देवगणप्रविष्टा नवकोटिष्वत्र मुख्यतोऽनुक्ताः । मूर्धनि गतं मूर्धन्यम् । परिघट्टितं परितः सर्वतः सादरमहमहमिकया च घट्टितम् । नित्यं सुरैरदृश्यैः दृश्यैश्च । अथ दृश्यैर्नरैः सह वानरैश्च । सम्भ्रमाद-राभ्यां पूज्यमानचरणः । अपिच सुरैः स्वर्गतैः, अथ भूर्गतैः नररूपैः वानररूपैश्च सुरैः । माहात्म्यं विज्ञाय च पूजा सम्पूजा । रमते अरमत । सदा रमते च । 'चरणः अरमत ईरमेशः' इति च च्छेदः । ईरस्य समीरस्य माया रमाया-श्चेशः । ई इति च लक्ष्म्या एव नामान्तरम् । अस्य विष्णोरियं स्त्रीति । सा च सा रमेति वा । इरमेश इति वा । एः कामस्य रमायाश्चेशः । रमणे उद्दीपनविभावः कामः । आलम्बनविभावो रमा । तयोरयमीश इत्यतिसुन्दरम् ॥ १२ ॥ तदेव स्फुटमाह–स्वरतं सुरेशमिति । स्वयमेव स्वस्मिन्नेव रतम्, अत एवान्यतः सुतरामरतमरमयत् । तमेव विशेषं तुनाऽऽह । अन्येषां त्वमुत एव रमणमित्याह– सुराणां सुरमणेऽयमेवेष्ट इति । सुराणामीः सम्पत्, शं सुखं चास्मादेवेति च । येये सुष्ठु रमन्ते तेषामयमीश इति च । नित्यावियोगित्वं परमोच्चो निजस्वभावो यस्याः । नित्यावियोगिनः परमोच्चा निजस्वभावा यस्या इति च । नित्यावियोगिनी च सा परमोच्चनिजस्वभावा चेति च । परमात्मना नित्यावियोगित्वात् नित्यावियोगिपरमेति भिन्नं वा पदम् । युवतीनां शृङ्गाराभिव्यञ्जको लीलाविशेषो विभ्रमः । सुलक्ष-णानि विलासव्यञ्जने सौष्ठवापादकानि लज्जासौशील्यादीनि । द्वात्रिंशल्लक्षणानि वा । भावा धर्माः । विभ्रमः सौन्दर्यम-प्यलङ्करोति । सुलक्षणानि विभ्रममपि ॥ १३ ॥ नित्यः शाश्वतः, उन्नतः सर्वोत्तमः दुःखासम्भिन्नश्च । प्रमदभार

---

१. **'–रतं रमेशम्'**

२. **'–स्वभावसौन्दर्य–'** । वे.ती.पाठोऽपि तथा ।

**गायन्ति चैनमनुरक्तधियः सुकण्ठा गन्धर्वचारणगणाः सह चाप्सरोभिः ।**
**तं तुष्टुवुर्म्मुनिगणाः सहिताः सुरेशै राजान एनमनुयान्ति सदाऽप्रमत्ताः ॥ १५ ॥**

**एवं त्रयोदशसहस्रमसौ समास्तु पृथ्वीं ररक्ष विजितारिरमोघवीर्य्यः ।**
**आनन्दमिन्दुरिव सन्दधदिन्दिरेशो लोकस्य सान्द्रसुखवारिधिरप्रमेयः ॥ १६ ॥**

**प्रमदभारभृतस्वभावः । नित्योन्नतेन प्रमदेन आनन्देन[1] भृतः पूर्णः स्वभावः स्वरूपं यस्य स तथोक्तः । दीप्यन् शोभमानः ॥ १४ ॥ सुकण्ठाः सुस्वराः ॥ १५ ॥ एवं ररक्ष ॥ १६ ॥**

---

आनन्दातिशयः । तेन भृतः सम्भृतः पूर्णः । नित्यं स्वरतोऽपि, नित्योन्नतप्रमदभारभृतस्वभावोऽपि स तया नित्यं रेमे । पूर्णोडुराजः राकानिशाकरः । सुखकरतया विकचं राजितासु, सतीषु निरातङ्कतया निरवद्यासु निशासु, यासु एकाकिन्यस्तरुण्योऽपि निर्भयं विचरन्ति । दीप्यन् दीप्यमानः । दीपयंश्च निशा वनिकाश्च । वनिकासु दीपनमपि लोकविडम्बनमिति परस्मैभाषा । अल्पं कृतकं च वनं वनिका । उद्यानमित्येतत् । सर्वदा पुष्पितासु । सुरभि-पुष्पवत्सु च ॥ १४ ॥ सुकण्ठाः, अपश्रुतिविधुरमधुरस्वराः । अप्सरोभिः गायन्तीभिश्च नृत्यन्तीभिश्च । अनुयान्ति पृष्ठतः परिचर्यार्थम् । धर्माचरणे च तमनुसरन्ति । अप्रमत्ताः, धर्ममर्मसु च, भगवत्परिचरणकर्मसु च ॥ १५ ॥ त्रयोदशसहस्रमसौ समास्तु । तथाहि भागवते– **'त्रयोदशाब्दसाहस्रमग्निहोत्रमखण्डितम्'** [९.९.१८] इति । ननु तर्हि रामायणविरोध आपतति । तथाहि रामायणे– **'दशवर्षसहस्राणि दशवर्षशतानि च । भ्रातृभिः सहितः श्रीमान् रामो राज्यमकारयत्'** [यु.कां.१३१.१०२] इति । विष्णुपुराणेऽपि– **'एकादशाब्दसाहस्रं राज्यमकरोत्'** इति । **'दशवर्षसहस्राणि दशवर्ष-शतानि च । सर्वभूतमनःकान्तो रामो राज्यमकारयत्'** [द्रो.प.५९.२८] इति च भारते । **'दशवर्षसहस्राणि दशवर्ष-शतानि च । राज्यं कारितवान् रामस्ततः स्वभवनं गतः'** [व.प.१५०.१८] इति च हनुमद्वचनम् । उभयोरप्येकार्थ-त्वादविरोधः । तथाहि भागवततात्पर्यनिर्णये– **'नाक्षत्रमानगणितं त्रयोदशसहस्रकम्'** इति । अयमत्र गणितक्रमः– व्यवहारे तावत् ३६०दिनान्येको वत्सरः । नाक्षत्रमाने तु सप्तविंशतिदिनो मास इति (२७x१२=) ३२४दिनात्मको वत्सरः । नाक्षत्रमानेन त्रयोदशसहस्रमिता वत्सरा व्यावहारिकमानेन सप्तशतोत्तरैकादशसहस्रमिता वत्सरा भवन्ति–

$$\frac{१३०००x३२४}{३६०}=११७००$$

तत्र सप्तशतवर्षाणि सीताया भूमिप्रवेशादनन्तरं रामो राज्यमकारयत् । तच्चोपरिष्टात् स्फुटम्– **'भूमिप्रवेशादूर्ध्वं सा रेमे सप्तशतं समाः'** [४२] इति । ततश्च ११००० वर्षाणि सीतया सहैव रामो भूमावरमतेति सर्वं रमणीयम् । इन्दुरिव लोकस्याऽनन्दं सन्दधत् सन्ददत् । धाञ् दाने च । समष्टिदानं सन्दानम् । आनन्दपूरं ददित्यर्थः । सन्दधत् पोषयन् वा । धाञ् धारणे च पोषणे च । अत एव रामं रामचन्द्रमाहुः ॥ १६ ॥

---

१. **'प्रमदभारेण आनन्दातिशयेन'** इति पाठः साधीयान् ।

**देव्यां स चाजनयदिन्द्रहुताशनौ द्वौ पुत्रौ यमौ कुशलवौ बलिनौ गुणाढ्यौ ।**
**शत्रुघ्नतो लवणमुद्व्रणबाणदग्धं[1] कृत्वा चकार मधुरां पुरमुग्रवीर्य्यः ॥ १७ ॥**

**कोटित्रयं स निजघान तथाऽसुराणां गन्धर्वजन्म भरतेन सतां च धर्म्मम् ।**
**संशिक्षयन्नयजदुत्तमकल्पकैः स्वं यज्ञैर्भवाजमुखसत्सचिवाश्च यत्र ॥ १८ ॥**

**शत्रुघ्नतः शत्रुघ्नेन । लवणं लवणासुरम् ॥ १७ ॥ गन्धर्वजन्म । गन्धर्वात् जन्म यस्य कोटित्रयस्य तत् कोटित्रयम् । स्वमयजदिति सम्बन्धः । यत्र यज्ञेषु ॥ १८–२० ॥**

---

देव्यामजनयत् । सीतागर्भे निवेशयामासेत्यर्थः । सीता तु वाल्मीकिमुनेराश्रमे सुषुवे । मूलरूपे **'मुखादिन्द्रश्चाग्निश्च'** इति सहजातावत्र यमौ बभूवतुः । अथापि द्वौ भिन्नधर्माणौ । एकः क्षत्रवर्णमानी । अपरः ब्राह्मणवर्णमानीति । एकोऽष्टम-कक्ष्यागतोऽपरः पञ्चदश्यां कक्ष्यायामिति । एवं सर्वत्र द्वाविति प्रायो भेदवचनम् । द्वित्वस्य द्विवचनेनैव लाभात् । लवण-मिति । लुनाति शत्रूनिति लवणः । लोलापुत्रो मधुः । कुम्भीनसी तस्य जाया । या माल्यवतः पुत्र्यामनलायाम-जायत । माल्यवत्सोदर्यस्य सुमालिनः पुत्र्यां दशाननोऽजायत । तेन कुम्भीनसी रावणस्य स्वसा । तां मधुरपजहार । तस्यामजायत लवणो नाम दैतेयो यो मधुवनमध्युवास । नरादस्य तस्य नाशाय च्यवनादिभिर्मुनिभिरर्थितो रामः शत्रुघ्नं न्ययुनक् । स ससैन्यो मधुवनं गच्छन् पथि वाल्मीकेराश्रमे व्यश्राम्यत् । यामेव रात्रिं शत्रुघ्नस्तां मुनेः पर्णशालामुपावसत् तस्यामेव रात्रौ तस्मिन्नाश्रमे सीता दारकद्वयमसूत । वाल्मीकिस्तयोः कुशमुष्टिना [दर्भाग्रेण] लवेन [दर्भमूलेन] च रक्षा-विधिं चकार । एवं तौ नाम्ना कुशलवौ जातौ । कुश श्लेषणे । कुश्यति श्लिष्यति मनसि लगतीति च कुशः । लूञ् छेदने । लुनाति शत्रूनिति च लवः । अथ प्रातः प्रतस्थे मधुवनं शत्रुघ्नः कृतसीतादारकदर्शनः । जघान च लवणं राम-दत्तेन शरेण, येन भगवान् मधुकैटभावहन् । निर्ममे च मधुरां पुरीम् । एवं मधुवनं मधुपुरी बभूव । एवं कृष्णावतारभूमे-र्भूमिका रामावतार एव विरचिता । अत एवाऽहाऽचार्यः– स्वस्य कृष्णत्वेनावतारार्थं रामो मधुरां पुरं शत्रुघ्नतः शत्रुघ्नेन चकार कारयामासेति । **'शत्रुघ्नश्च मधोः पुत्रं लवणं नाम राक्षसम् । हत्वा मधुवनं चक्रे मधुरां नाम वै पुरीम्'** [९.९.१४] इति भागवते । उद्व्रणबाणदग्धम् । उद्व्रणमित्येव प्राचीनम् । उल्बणमिति पाश्चात्यम् । तथाहि निर्वदन्ति– उद्व्रणती-त्युद्व्रणः । वण शब्दनक्रियायाम् । वस्य बः । क्षीरस्वामी चाऽह– **'उदूखलोलूखलवत् पृषोदरादित्वात् लत्वं वा'** इति । तथाच चत्वारि रूपाणि–उद्व्रणः, उद्ब्रणः, उल्बणः, उल्वण इति ॥ १७ ॥ कोटित्रयमिति । अथ कदाचित् कैकेयीभ्राता युधाजित् स्वपुरोहितेन गार्ग्येण रामाय सन्देशं प्रेषयामास–'शैलूषाख्याद् गन्धर्वाज्जातं गन्धर्वाणां कोटित्रयं गान्धारदेशमाक्रम्याधितिष्ठति । तान् गन्धर्वान् विनिर्जित्य तद् गन्धर्वनगरं स्वपुरे विनिवेशय' इति । गन्धर्वनिग्रहाय प्रजिघाय राघवो भरतम् । भरतः केकयमुपाजगाम । आचक्राम च गन्धर्वनगरं सह मातुलेन युधाजिता । ततो रामानुजः क्रुद्धः संवर्तं नाम दारुणमस्त्रं गन्धर्वेष्वभ्यचोदयत् । संवर्तेन विदारितास्तिस्रः कोटयो गन्धर्वाणां विनेशुः । भरतोऽपि

---

१. **'–मुल्बण–'**

**अथ शूद्रतपश्चर्य्यानिहतं विप्रपुत्रकम् ।**
**उज्जीवयामास विभुर्हत्वा तं शूद्रतापसम् ॥ १९ ॥**

**जङ्घनामाऽसुरः पूर्वं गिरिजावरदानतः ।**
**बभूव शूद्रः कल्पायुः स लोकक्षयकाम्यया ॥ २० ॥**

**तपश्चचार दुर्बुद्धिरिच्छन् माहेश्वरं पदम् ।**
**अनन्यवद्ध्यं तं तस्माज्जघान पुरुषोत्तमः ॥ २१ ॥**

**तस्मात् गिरिजावरदानतः अनन्यवध्यम् ॥ २१ ॥**

---

तत्र द्वे पुरे निर्माय पुष्करं नाम पुत्रं पुष्करावत्यां तक्षं च तक्षशिलायां निवेश्य रामसमीपमुपाजगाम । **'गन्धर्वान् कोटिशो जघ्ने भरतो विजये दिशाम् । तदीयं धनमादाय सर्वं राज्ञे न्यवेदयत्'** [९.९.१३] इति भागवते । **'पुष्करं पुष्करावत्यां तक्षं तक्षशिलापुरे । भरतो विषये तस्मिन् पुत्रौ वीरौ न्यवेशयत्'** [सं.रा;उ.कां.५.१९] इति सङ्ग्रहे । स्वयं सर्वयज्ञाराध्योऽपि स्वात्मानमयजत् । स्वं स्वभक्तजनं प्रति च धर्मं समग्रतया इदमित्थमेवेति निश्चिततया च शिक्षयन् । उत्तमः कल्पो विधानं येषाम् । उत्तमा वसिष्ठाद्याः पुरोधसः कल्पकाश्च येषाम् । **'वासुदेवं स्वमात्मानमश्वमेधैरथायजत्'** [अ.पु.१०.३३] इत्याग्नेये । भवाजमुखाः सन्तः ज्ञानिनो देवोत्तमा यत्र सचिवाः सहायाः ॥ १८ ॥ अल्पवयाः पुत्रः पुत्रकः ॥ १९ ॥ ननु शूद्रतपश्चर्या कथं नाम दोषः, येन विप्रपुत्रो निहतः? न तपश्चर्या दोषः । अन्यदेव तत्र कारणमासीदित्याह– जङ्घनामाऽसुरः । गिरिजावरदानतः कल्पायुः । लोकक्षयकाम्यया । काम्यच्प्रत्ययान्ताद् धातोः स्त्रियामकारः–**'अ प्रत्ययात्'** [अ.सू.३.३.१०२] इति । तेन काम्या कामना । लोकक्षयकामनया न केवलम् । माहेश्वरं पदमपीच्छन् । लोकक्षयकाम्यया माहेश्वरं पदमिच्छन्नित्येकान्वयो वा । गिरिजया वरं प्राप्य तस्या एव द्रुह्यन् गिरिजापतित्वमिच्छन् तपश्चचार । ब्रह्माणं प्रतीत्यर्थादवगम्यते । अत एवानन्यवध्यम् । न तावद् ब्रह्मा हन्ति । नहि स्वात्मानं प्रति तपश्चरन्तं स्वयमेव हन्तुमुचितम् । ब्रह्मणो भूमाववताराभावान्न शक्यं च हन्तुम् । स्वप्राप्यपदगौरवान्न स्वरसतो वायुरपि हन्यात् । गिरिजया दत्तं वरं न गिरिजापतिरपि विजिघांसति । तस्माद् ब्रह्मपिता स्वयं गत्वा तं जघान । **'शूद्रयोनिप्रसूतोऽहं तप उग्रं समास्थितः । देवत्वं प्रार्थये राम स्वशरीरेण सुव्रत । न मिथ्याऽहं वदे भूप देवलोकजिगीषया'** [सृ.खं.३५.८४–५] इति पाद्मे । **'देवलोकजिगीषया'** इत्येतद् विवृतं भगवत्पादेन– 'लोकक्षयकाम्यया' इति । **'देवत्वं प्रार्थये'** इत्येतद् विवृतम्– 'इच्छन् माहेश्वरं पदम्' इति । देवलोकं विजित्य देवत्वं नामेन्द्रादप्युत्तमं हि देवत्वम् । सूचितं चैतत् **'तप उग्रम्'** इति । उग्रपदं प्रति तपः समास्थित इत्यर्थः । तस्यासुरत्वेन तत्तपसस्तामसत्वेनैव च तद्वधो नतु शूद्रत्वेन हेतुनेति भावः । एतदप्युक्तम्–**'परस्योत्सादनार्थाय तच्चाऽसुरमुदाहृतम्'**[३५.७५] इति, **'आसुरो**

श्वेतदत्तां तथा मालामगस्त्यादाप राघवः ।
अनन्नयज्ञकृच्छ्वेतो राजा क्षुद्विनिवर्त्तनम् ॥ २२ ॥

कुर्वन् स्वमांसैर्द्धात्रोक्तो मालां रामार्त्थमर्प्पयत्[1] ।
अगस्त्याय न साक्षात्तु रामे दद्यादयं नृपः ॥ २३ ॥

**तथाशब्दः क्रियान्तरसमुच्चायकः । अनन्नयज्ञकृत् अन्नदानरहितयज्ञकृत् । श्वेतो राजा परलोके स्वमांसैः क्षुद्विनिवर्तनं कुर्वन् सुखेन क्षुद्विनिवर्तनोपायं पृष्टेन धात्रा रामार्थं मालामगस्त्याय देहीत्युक्तः रामार्थं रामाय दातुं मालामगस्त्यायार्पयत् । मालामगस्त्यव्यवधानेन रामाय दातुमुपदिशतो धातुरभिप्रायमाह—न साक्षदित्यादिना ॥ २२–६ ॥**

---

ह्येष ते भावो नच मे त्वं द्विजो मतः' [३५.७७] इति च । रामायणेऽपि– 'देवत्वं प्रार्थये राम सशरीरो महा-यशः । न मिथ्याऽहं वदे राम देवलोकजिगीषया । शूद्रं मां विद्धि काकुत्स्थ तप उग्रं समास्थितम्' [उ.कां.७६.२–३] इति ॥ २०–१ ॥ मालामिति । रत्नमालामित्यर्थः । 'इदं चाऽभरणं सौम्य सुकृतं विश्वकर्मणा' [सृ.खं.३६.२६] इति पाद्मे । 'इदं चाऽभरणं सौम्य निर्मितं विश्वकर्मणा' [उ.कां.७६.३०] इति वाल्मीकीये । अनन्नयज्ञकृदिति । तथाहि पाद्मे–'अगस्त्य उवाच । पुरा त्रेतायुगे ह्यासीदरण्यं बहुविस्तरम्....... तत्राश्चर्यं मया दृष्टं सरः परमशोभितम्..... तत्राहमवसं रात्रिं नैदाघीं पुरुषर्षभ । प्रभाते पुनरुत्थाय सरस्तदुपचक्रमे । अथापश्यं शवमहमस्पृष्टरजसं क्वचित्.... अथापश्यं मुहूर्तात्तु दिव्यमद्भुतदर्शनम् । विमानं परमोदारं हंसयुक्तं मनोजवम्..... अथापश्यं नरं तस्माद् विमानादवरुह्य तु । शवमांसं भक्षयन्तं स्नात्वा रघुकुलोद्वह.... को भवान् वद सन्देहमाहारश्च विगर्हितः । त्वयेदं भुज्यते सौम्य किमर्थं क्व च वर्तसे ....श्वेत उवाच । पुरा वैदर्भको राजा पिता मे हि महायशाः.... तस्य पुत्रद्वयं राजन् द्वाभ्यां स्त्रीभ्यामजायत । अहं श्वेत इति ख्यातो यवीयान् सुरथोऽभवत्..... तत्राहं कारयन् राज्यं धर्मे चाऽसं समाहितः.... राज्येऽभिषिच्य सुरथं भ्रातरं तं नराधिपम् । इदं सरः समासाद्य तपस्तप्तं सुदारुणम्.... स्वर्गस्थमपि मां ब्रह्मन् क्षुत्पिपासे द्विजोत्तम । अबाधेतां भृशं चाहमभवं व्यथितेन्द्रियः.... [पितामह उवाच] नादत्तं जायते तात श्वेत पश्य महीतळे । आग्रहाद् भिक्षमाणय भिक्षाऽपि प्राणिने पुरा । नहि दत्ता गृहे भ्रान्त्या मोहादतिथये तदा । तेन स्वर्गगतस्यापि क्षुत्पिपासे तवाऽधुना... यावद् वर्षशतं पूर्णं स्वमांसं खाद भो नृप । यदाऽऽगच्छति चागस्त्यः श्वेतारण्ये महातपाः । भगवानतिदुर्धर्षस्तदा कृच्छ्राद् विमोक्ष्यसे... ततः स्वर्गी स मां ज्ञात्वा दण्डवत् पतितो भुवि ... राजोवाच । आहारात् कुत्सिताद् ब्रह्मन् तारयस्वाद्य दुष्कृतात् ....भवान् मामनुगृह्णातु प्रतीच्छस्व प्रतिग्रहम् । इदमाभरणं सौम्य धारणार्थं द्विजोत्तम' [सृ.खं.३६.६२–१२४] इत्यादि । रामायणे चैत एव श्लोकाः पठ्यन्ते किञ्चित् पाठभेदेन । अर्पयत् । अडभावश्छन्दस्तुल्यताप्रदर्शनाय । आर्पयदित्येव वा पाठः ॥ २२–३ ॥

---

१. '–मर्पयेत् ।'

**क्षुदभावमात्रफलदं न साक्षाद् राघवेऽर्प्पितम् ।**
**क्षुदभावमात्रमाकाङ्क्षन् मामसौ परिपृच्छति ॥ २४ ॥**

**व्यवधानतस्ततो रामे दद्याच्छ्वेत इति प्रभुः ।**
**मत्वा ब्रह्माऽदिशन्मालां प्रदातुं कुम्भयोनये ॥ २५ ॥**

**तामगस्त्यकरपल्लवार्प्पितां भक्त एष मम कुम्भसम्भवः ।**
**इत्यवेत्य जगृहे जनार्द्दनस्तेन संस्तुत उपागमत् पुरम् ॥ २६ ॥**

**अथ केचिदासुरसुराः सुराणका इत्युरुप्रथितपौरुषाः पुरा ।**
**ते तपः सुमहदास्थिता विभुं पद्मसम्भवमवेक्ष्य[१] चोचिरे ॥ २७ ॥**

**असुरव्यामोहनार्थं श्रीरामकृतसीतापरित्यागं वक्तुं कथान्तरमारभते– अथेति । तां कथामाह– केचिदित्यादिना ॥ २७–९ ॥**

---

राघवे साक्षादर्पितं पत्रं पुष्पं फलं तोयं वा न क्षुदभावमात्रफलदम् । किन्तु महाफलम् । यथा शबरी वन्यानि फलानि साक्षात् समर्प्य मोक्षमाप । यथा वा कृष्णावतारे मालाकारः सुदामा मालाः समर्प्य । अर्पितं भगवानयं प्रीयतामिति भक्त्या प्रत्तम् । तेन कुब्जा गन्धं समर्प्यापि न मोक्षमाप । केवलं पुत्रमाप । तच्च महाफलं चीर्णमहातपा अगस्त्यो लभतामिति तस्मै प्रदातुमादिशत् । साक्षाद् दानमेव प्रदानम् । परिहारेच्छया पृच्छा परिपृच्छा । 'क्षुदभावमात्रफलदम्' इत्येकाक्षराधिको भुरिक्पादः । तेन साक्षादर्पितस्य फलाधिक्यमाह । 'क्षुदभावमात्रमाकाङ्क्षन्' इत्यपि नवाक्षरः पादः । तेन परिहारे कातर्यातिशयमाह । तदेव 'परिपृच्छति' इति स्फुटमाह । 'व्यवधानतस्ततो रामे' इति च नवाक्षरः पादः । अहो अक्षरव्यवधानेनात्र दानव्यवधानमभिनीय दर्शयतीव । **'आधिक्येऽधिकम्'** इति सूत्रं छन्दस्यक्षराधिक्येऽपि समानम् । कुम्भः योनिरुत्पत्तिस्थानमस्येति कुम्भयोनिः ॥ २४–२५ ॥ करपल्लवार्पिताम् । पल्लव इति विटप उच्यते । अगस्त्यो महाद्रुम इव । तस्य करौ विटपाविव । तत्र लग्ना माला विटपगतानि कुसुमानीवेति सुन्दरमुपमानम् । अथ पल्लव इति किसलयमुच्यते । करशाखाः किसलयानीव । सा माला किसलयवलयनिलीनानि प्रसूनानीवेति च । **'पल्लवः किसलये बिले विटपे'** इत्यभिधानम् । पुनःपुनर्जन्यतेऽत्रेति जनः संसारः । तमर्दयतीति जनार्दनः । एतेन मालां स्वीकृत्य अगस्त्यं जननमरणमालया मोचयामासेति मालार्पणस्य महाफलं सूचितम् । संस्तुतः भगवदवतारोऽयमिति विदितः, अत एव सम्यग् भक्त्या स्तुतः । **'त्वं मे बहुमतो राम गुणैर्बहुभिरुत्तमैः । अतिथिः पूजनीयश्च मम नित्यं हृदि स्थितः'** [उ.कां.७६.२६] इति, **'त्वं हि नारायणः श्रीमांस्त्वयि सर्वं प्रतिष्ठितम् । त्वं प्रभुः सर्वभूतानां पुरुषस्त्वं सनातनः'** [२९] इति चागस्त्यवचनं रामायणे ॥ २६ ॥ दुष्टनिग्रहप्रसङ्गेन प्राप्ताः सर्वाः कथा निरूप्याथेदानीं लवणासुरवधादपि पूर्ववृत्तं सीतापरित्याग-

---

१. **'–मवेत्य चो–'**

**भूरिपापकृतिनोऽपि निश्चयान्मुक्तिमाप्नुम उदारसद्गुण ।**
**इत्युदीरितमजोऽवधार्य्य तत् प्राह च प्रहसिताननः प्रभुः ॥ २८ ॥**

**यावदेव रमया रमेश्वरं नो वियोजयथ सद्गुणार्ण्णवम् ।**
**तावदुच्चमपि दुष्कृतं भवन्मोक्षमार्ग्गपरिपन्थि नो भवेत् ॥ २९ ॥**

**इत्युदीरितमवेत्य तेऽसुराः क्षिप्रमोक्षगमनोत्सुकाः क्षितौ ।**
**साधनोपचयकाङ्क्षिणो हरौ शासति क्षितिमशेषतोऽभवन् ॥ ३० ॥**

**ताननादिकृतदोषसञ्चयैर्म्मोक्षमार्ग्गगतियोग्यतोज्झितान् ।**
**मैथिलस्य तनया व्यचालयन्मायया स्वतनुवा स्वमार्ग्गतः ॥ ३१ ॥**

**साधनोपचयकाङ्क्षिणः साधनसम्पत्तिमिच्छन्तः ॥३०॥ स्वतनुवा स्वस्वरूप(भूतया) मायया दुर्गया ॥३१॥**

---

विडम्बनमाह– अथ केचिदिति । सुरया सुरापानव्यसनेन अणकाः गर्हिता इति सुराणका इति गदिताः । पद्मसम्भवमपि प्रीणयितुं समर्थमिति महत् । साक्षात्करणसमर्थमिति सुमहत् । तपःसन्तुष्टमागतं पद्मसम्भवमवेक्ष्य । अत्र कश्चन छन्दश्चमत्कारो भवति । प्रथमस्तावत् पादस्त्रयोदशाक्षरः । मञ्जुभाषिणी नाम च्छन्दः । सजसजाः गश्च हि मञ्जुभाषिणी । आद्याक्षरद्वयलोपे सैव रथोद्धता भवति रनरैर्लगाभ्यां च । एकादशाक्षरा अवशिष्टास्त्रयः पादा रथोद्धताबद्धाः । सेयमुद्धतभाषिणी । अपवादगर्भैर्मञ्जुप्रायैर्वचोभिरुद्धता लोकान् व्याकुलयामासुरित्युक्तं भवति । नूतनोऽयमाचार्यकृतश्छन्दस आविष्कारः ॥ २७ ॥ वरवरणेऽपि तेषां मौर्ख्यं मौढ्यं च दृष्ट्वा प्रहसिताननः । वरं वृत्वाऽपि नाऽप्स्यन्ति मुक्तिम्, अहो सुमहदपि तपो व्यर्थमासेति च विचिन्त्य प्रहसिताननः । परेषां मौर्ख्यप्रकाशनं हसितं प्रहसितम् ॥ २८ ॥ उदारसद्गुण इति चतुर्मुखस्तैः स्तुतः । तदुत्तरतया साकूतमाह–सद्गुणार्णवमिति । अस्मदादयः सद्गुणानां ह्रदा इवान्धव इव । स त्वर्णव इवेत्यर्थः ॥ २९ ॥ क्षितौ तत्रापि भारतेऽभवन्, इयं हि साधनभूमिरिति, हरौ क्षितिं शासति अशेषतः सामस्त्येन । सर्वेऽपीत्येतत् ॥ ३० ॥ स्वतनुवा स्वरूपेण । स्वाधिष्ठिततया तनुस्थानीयया तामस्या परमाच्छादिकया माययेति च । तनुवेति वैदिकसम्प्रदायानुसरणम् । तथाच तनूशब्दस्य प्रतनानि रूपाणि । द्वितीयायाम्– तनूम्, तन्वम् । तृतीयायाम्– तन्वा, तनुवा । चतुर्थ्याम्– तन्वै, तन्वे । सप्तम्याम्–तन्वाम्, तन्वि । स्वमार्गतः । तेषां साधनमार्गो हि सम्प्रति स्वमार्गः । अस्वमार्गत इति वा । तमःसाधनं हि तेषां सहजः स्वमार्गः । **'परः स्वो हरिरुद्दाम इति नामचतुष्टयम् । विष्णोः'** इति दशमस्कन्धतात्पर्योदाहृतप्रकाशसंहितावचनात् स्वमार्गतो हरिमार्गत इत्यपि व्याचक्षते ॥ ३१ ॥

आज्ञयैव हि हरेस्तु मायया मोहितास्तु दितिजा व्यनिन्दयन् ।
राघवं[१] निशिचराहृतां पुनर्ज्जानकीं जगृह इत्यनेकशः ॥ ३२ ॥

ब्रह्मवाक्यमृतमेव कारयन् पातयंस्तमसि चान्ध आसुरान् ।
नित्यमेव सहितोऽपि सीतया [२]सोऽज्ञसाक्षिकमभूद् वियुक्तवत् ॥ ३३ ॥

तेन चान्धतम ईयुरासुरा यज्ञमाह्वयदसौ च मैथिलीम् ।
तत्र भूमिशपथच्छलान्नृणां दृष्टिमार्ग्गमपहाय सा स्थिता ॥ ३४ ॥

गुरुं हि जगतो विष्णुर्ब्रह्माणमसृजत् स्वयम् ।
तेन तद्वचनं सत्सु नानृतं कुरुते क्वचित् ॥ ३५ ॥

**अनेकशः बहुवारम् ॥ ३२ ॥ अज्ञसाक्षिकमज्ञप्रत्यक्षानुसारेण ॥ ३३ ॥ तेन वियोजनेन । तत्र यज्ञे ॥३४॥ 'ब्रह्मवाक्यमृतमेव कारयन् सोऽज्ञसाक्षिकमभूद् वियुक्तवत्' इत्युक्तम् । कुतस्तद्वाक्यमृतं कर्तव्यमित्यतस्तत्र हेतुमाह–गुरुमित्यादिना । तेन तस्य गुरुत्वेन । सत्सु सज्जनविषये । तद्वचनं ब्रह्मवचनम् ॥ ३५–७ ॥**

---

हरेस्तु मायया । जीवस्वभावानुगुणा हरेराज्ञा । तदाज्ञानुगुणा तु मायायाः प्रवृत्तिरिति प्रमेयविशेषं तुनाऽऽह । मोहितास्तु दितिजाः । स्वभावोऽयं दितिजानां यद् वस्तुयाथात्म्यस्य सर्वदाऽन्यथा ग्रहणमिति द्वितीयेन तुनाऽऽह । रावणाहृतां जानकीं जगृह इति राघवं विविधं विकृतवचोभिरनिन्दयन् अनिन्दन्नित्यर्थः । तद् यथा– गौः शकटं वाहयति । रामो राज्यमकारयत् । अक्षराधिक्येन च तेषां कुत्सातिशयमाह । अनेकश इति । अनेकैः कुत्सितवचोभिः । **'एवं बहुविधा वाचो वदन्ति पुरवासिनः । नगरेषु च सर्वेषु राजन् जनपदेषु च'** [उ.कां.४३.२०] इति वाल्मीकीये ॥ ३२ ॥ अज्ञसाक्षिकम्, अज्ञलोकदृष्टचनुसारेण । अज्ञाः साक्षिणो यथा स्युस्तथेति ॥ ३३ ॥ यज्ञं प्रति मैथिलीमाह्वयत् । भूमिशपथच्छलात् । भूप्रवेशाख्यप्रतिज्ञाव्याजेन । तथाहि रामायणे–**'यथाऽहं राघवादन्यं मनसाऽपि न चिन्तये । तथा मे माधवी देवी विवरं दातुमर्हति । तथा शपन्त्यां वैदेह्यां प्रादुरासीत् तदद्भुतम् । भूतलादुत्थितं दिव्यं सिंहासनमनुत्तमम् । तस्मिंस्तु धरणी देवी बाहुभ्यां गृह्य मैथिलीम् । स्वागतेनाभिनन्द्यैनामासने चोपवेशयत् । तामासनगतां दृष्ट्वा प्रविशन्तीं रसातळम् । पुष्पवृष्टिरविच्छिन्ना दिव्या सीतामवाकिरत्'** [उ.कां.९४.१४–२०] इत्यादि ॥ ३४ ॥ स्वयं जगद्गुरुर्विष्णुः स्वेच्छयैव स्वतनयं ब्रह्माणं जगतो गुरुमसृजद् व्यदधादित्यर्थः । तेन ब्रह्मणो जगद्गुरुत्वेन स्वयं सृष्टत्वेन

---

१. **'राघवो निशि–'**

२. **'सोऽग्निसाक्षिक–'** । वे.ती. टीकायामपि तथैव पठ्यते– **'–अग्निसाक्षिकमग्निप्रत्यक्षानुसारेण'** इति । स्फुटं लिपिकृत्प्रमादः । वेदाङ्गतीर्थटीकानुसारी जनार्दनभट्टश्च **'अग्निसाक्षिकम्'** इत्येव पाठमङ्गीकृत्य व्याख्याति । अज्ञसाक्षिकमिति पाठान्तरमित्याह । तेन ज्ञायते प्रतनोऽयं प्रमाद इति ।

नासत्स्वप्यनृतं कुर्य्याद् वचनं पारलौकिकम् ।
ऐहिकं त्वसुरेष्वेव क्वचिद्धन्ति जनार्दनः ॥ ३६ ॥

निजाधिक्यस्य विज्ञप्त्यै क्वचिद् वायुस्तदाज्ञया ।
हन्ति ब्रह्मत्वमात्मीयमद्धा ज्ञापयितुं प्रभुः ॥ ३७ ॥

नान्यः कश्चित् तद्वराणां शापानामप्यतिक्रमी ।
अयोग्येषु तु रुद्रादिवाक्यं तौ कुरुतो मृषा ॥ ३८ ॥

एकदेशेन सत्यं तु योग्येष्वपि कदाचन ।
न विष्णोर्वचनं क्वापि मृषा भवति कस्यचित् ।
एतदर्थोऽवतारश्च[1] विष्णोर्भवति सर्वदा ॥ ३९ ॥

प्रविश्य भूमौ सा देवी लोकदृष्ट्यनुसारतः ।
रेमे रामेणावियुक्ता भास्करेण प्रभा यथा ॥ ४० ॥

**तौ विष्णुवायू ॥ ३८–९ ॥ अथ प्रकृतमनुसरति–प्रविश्येति । प्रभा भास्करप्रभा यथा भास्करेणावियुक्ता तथा रामेणावियुक्ता ॥ ४०–३ ॥**

---

हेतुना । नानृतं कुरुते क्वचित् । सत्सु शिष्येषु गुरोराशीर्वचनं मा मृषा भूदिति ॥ ३५ ॥ हन्ति वितथयति ॥ ३६ ॥ निजस्य सर्वाधिक्यस्य विज्ञप्त्यै जनार्दनो हन्ति । निजस्य सर्वजीवाधिक्यस्य विज्ञप्त्यै वायुरपि । तदपि तदाज्ञया जनार्दनाज्ञया । क्वचिद् वायुरपि ब्रह्मवचनं हन्ति विलङ्घयतीत्येतत् भाविब्रह्मत्वं अद्धा स्फुटं प्रकटयितुम् ॥ ३७ ॥ तस्य ब्रह्मणः वराणां शापानां वा । तौ विष्णुश्च वायुश्च ॥ ३८ ॥ एतदर्थः योग्येषु वचनपालनार्थोऽयोग्येषु तद्विघातार्थश्च । स्ववचनपालनार्थश्च । अवतारश्चेति चकारेणेदमाह– क्वचित् तदर्थमवतरति । क्वचिन्मूलरूपेणापि साधयतीति ॥ ३९ ॥ भास्करेण प्रभा यथा । रामायणेऽप्येतदेवं पठ्यते–**'अनन्या हि मया सीता भास्करेण प्रभा यथा । विशुद्धा त्रिषु लोकेषु मैथिली जनकात्मजा'** [यु.कां.१२१.१९] इति दहनं प्रति दाशरथिवचनम् । अनन्या नित्यावियुक्ता । **'लक्ष्मीमनपगामिनीम्'** इति हि श्रुतिः । मेघावृताऽपि प्रभा यथा भास्करेणावियुक्ता ॥ ४० ॥

---

१. '–तारस्तु वि–'

**एवं रमालाळितपादपल्लवः[१] पुनः स यज्ञैश्च यजन्[२] स्वमेव ।**
**वराश्वमेधादिभिराप्तकामो रेमेऽभिरामो नृपतीन् विशिक्षयन् ॥ ४१ ॥**

**रामस्य दृश्या त्वन्येषामदृश्या जनकात्मजा ।**
**भूमिप्रवेशादूर्ध्वं सा रेमे सप्तशतं समाः ॥ ४२ ॥**

**एवंविधान्यगणितानि जनार्दनस्य रामावतारचरितानि तदन्यपुम्भिः ।**
**शक्यानि नैव मनसाऽपि हि तानि कर्तुं ब्रह्मेशशेषपुरुहूतमुखैः सुरैश्च ॥ ४३ ॥**

**तस्यैवमब्जभवलोकसमामिमां क्ष्मां कृत्वाऽनुशासत उदीक्ष्य गुणान् धरायाः ।**
**वैशेष्यमात्मसदनस्य हि काङ्क्षमाणा वृन्दारकाः कमलजं प्रति तच्छशंसुः ॥ ४४ ॥**

**आमन्त्र्य तैः सह विभुर्भगवत्प्रयाणं स्वीयाय सद्मन इयेष दिदेश चैव[३] ।**
**रुद्रं स्वलोकगमनाय रघूत्तमस्य सम्प्रार्थने स च समेत्य विभुं ययाचे ॥ ४५ ॥**

**तस्य रामस्य क्ष्मामनुशासतः ॥ ४४–५ ॥**

---

अन्यैरदृश्यया रमया लाळितपादपल्लवः । लाळितं सेवितम् । लड उपसेवायाम् । किमिति यज्ञैः स्वमेव यजति? नृपतीन् विशिक्षयन्, विष्णुयागकर्मणि विशेषतः शिक्षयन् । तेन चाभितः सज्जनान् रमयन्नभिरामः । सौन्दर्यातिशयेन लोकमोहनश्च । वेदेन मुखतो विहितत्वमेव वरत्वमश्वमेधादीनाम् । **‘दशवर्षसहस्राणि वाजिमेधानथाकरोत् । वाजपेयान् दशगुणांस्तथा बहुसुवर्णकान् । अग्निष्टोमातिरात्राभ्यां गोसवैश्च महाधनैः । ईजे क्रतुभिरन्यैश्च स श्रीमानाप्तदक्षिणैः’** [उ.कां.९९.९–१०] इति च ॥ ४१ ॥ **‘नाक्षत्रमानगणितं त्रयोदशसहस्रकम्’** इति पूर्वोक्त्यनुगुणतयाऽवशिष्टानां सप्तशतवर्षाणां गतिमाह– रामस्य दृश्या । तथाच सप्तशताधिकान्येकादशसहस्रवर्षाणि रामो राज्यमकारयदित्यर्थः । **‘सहस्रं च व्यतीयुर्वै वर्षाण्येकादश प्रभोः । तत्र नीचजनाच्छ्रुत्वा सीताया अपमाननम् । स्वां च निन्दां रजकतस्तां तत्याज रघूद्वहः’** [पा.खं. ५.४६] इति हि पाद्मे ॥ ४२ ॥ जनार्दनस्य रामनामा योऽवतारस्तत्र यानि चरितानि ॥ ४३ ॥ विशिष्यत इति विशेषो विशिष्टः । वैशेष्यमिति वैशिष्टयम् । काङ्क्षमाणाः । एष हि तेषां महान् स्वार्थः । वृन्दशः इय्रति गच्छन्तीति, जीववृन्दं नियन्तुमिय्रतीति वा वृन्दारकाः । वृन्दशोऽर्यन्ते ज्ञायन्त इति वा । स्वार्थे कः । ऋ गतौ । अत एव **‘वृन्दारवृन्दसुवन्दित वन्दे’** इत्याचार्यप्रयोगः । तद् यथा रसेषु शृङ्गं प्राधान्यमियर्तीति शृङ्गारः । वैकाकरणास्तु मत्वर्थे आरकन्प्रत्ययेन वृन्दारकशब्दं व्युत्पादयन्ति । तथाहि वार्तिकम्– **‘शृङ्गवृन्दाभ्यामारकन् वक्तव्यः’**[अ.सू.५.२.१२२] इति ॥ ४४ ॥ वृन्दारकाणां रुद्रस्य च विभुश्चतुर्मुखः । इयेष ऐच्छत् । इषु इच्छायाम् । इष वा । इयेष च । अनन्तरमेव

---

१. **‘–लालित–’** २. **‘पुनश्च यज्ञैरयजत् स्व–’** ३. **‘चाथ ।’** इति, **‘चाऽशु ।’** इति च क्वचित् ।

**एकान्तमेत्य रघुपेण समस्तकालो रुद्रो जगाद वचनं जगतो विधातुः ।**
**वैशेष्यमात्मभवनस्य[१] हि काङ्क्षमाणास्त्वामर्थयन्ति विबुधाः सहिता विधात्रा ॥ ४६ ॥**

**पुत्रस्तवेश कमलप्रभवस्तथाऽहं पौत्रस्तु पौत्रकवचो यदपि ह्ययोग्यम् ।**
**सम्भावयन्ति गुणिनस्तदहं ययाचे गन्तुं स्वसद्म नतिपूर्वमितो भवन्तम् ॥ ४७ ॥**

**'एकान्त(मेत्य रघुपेण) समस्तकालो रुद्रः' इत्यनेन क्वचित् ग्रन्थान्तरे कालो रामं स्वर्लोकगमनाय प्रार्थयामासेत्युक्तेऽपि सर्वसंहारकर्तृत्वात् रुद्र एव कालनामेत्युक्तं भवति ॥ ४ ६॥ ययाचे प्रार्थयामि ॥ ४७–९ ॥**

---

सपदि दिदेश च । स्वतनयं रुद्रमेव दिदेश च । आग्रहपूर्वं प्रार्थनं सम्प्रार्थनम् । स च रुद्रोऽपि, सम्यग् विनयेन बद्धाञ्जलि-रेत्य, कमलजस्यापि विभुं रामम् ॥ ४५ ॥ रघुपेण सह एक एवान्ते निकटे यत्र स्यात् तदेकान्तं रहस्यसन्दर्शनम् । जगतो विधातुर्विरिञ्चस्य । विधातेति पर्जन्योऽपि शास्त्रेषूच्यते । अतः 'जगतो विधातुः' इत्याह । यद्वा जगत इत्यपि ब्रह्मणो विशेषणम् । जगद् गतमस्मिन्निति जगद् वायुश्च ब्रह्मा च । ज्ञानिजगतोऽभिमतं वचनमिति वा । काङ्क्षमाणा अर्थयन्ति । यद्यपि काङ्क्षतिः परस्मैभाषः । अर्थयतिरात्मनेभाषः । तेन **'काङ्क्षन्तस्त्वामर्थयन्ते'** इति वक्तव्यम् । सत्यं तथा प्रयोगे वैयाकरणास्तुष्यन्ति । अथापि व्यत्यस्तभाषो भगवत्पादः । अर्थविशेषलाभाय चायं भवति । विबुधानां काङ्क्षया स्वभवनवैशेष्यमात्मलाभ इति शानच् । प्रार्थनं च सर्वलोकहितायेति परस्मैभाषा । अपि चानेन व्यत्यस्य प्रयोगेण वैया-करणान् प्रबोधयतीवाऽचार्यः–**'काङ्क्षमाणः'** इति, **'प्रार्थयति'** इति च बहुलं किल कवयः प्रयुञ्जते । तेनोचितमुभयपदित्व-मङ्गीकर्तुं प्रयोगशरणेन भवताऽपि' इति । तेन काङ्क्षन् काङ्क्षमाणः, काङ्क्षति, काङ्क्षते, प्रार्थयन्, प्रार्थयमानः, प्रार्थयति, प्रार्थयते इत्यादिकं सर्वमपि प्रयोगं साधु मन्यन्ते तत्ववादिनः । अन्ये तु मन्यन्ते–**'काङ्क्षमाण' इति न शानच् । किन्तु ताच्छील्ये चानश् । 'ताच्छील्यवयोवचनशक्तिषु चानश्'** [अ.सू.३.२.१२९] **इति पाणिनिस्मरणात्'** इति । यत्तु माधवः **'प्रार्थयन्ति शयनोत्थितं प्रियाः'** इत्यादिप्रयोगस्य यथाकथाच साधुतां चिकथयिषन् विललाप–**''प्रार्थयन्तीत्यादि तु कृदन्तात् 'तत्करोति' इति णिचि नेयम्'** इति, तद् व्याकरणमुग्धस्य बालिश्यमित्यवश्यमुपेक्षणीयम् । ननु रामा-यणे कालनामा तापस आगत्य ययाचे इत्युक्तम् । तथाहि तद्वचनम्– **'कालस्तापसरूपेण राजद्वारमुपागमत्'**[उ.कां. १०३.१] इति । **'मायासम्भावितो वीर कालः सर्वसमाहरः'**[१०४.२] इति च । तत् कथं 'रुद्रं दिदेश' इत्युच्यते? 'कालः सर्वसमाहारः' रुद्र एव किलेत्याह– समस्तकालो रुद्रः ॥ ४६ ॥ अहं तु पौत्रः । बालिशस्यापि पौत्रस्य अयोग्य-मपि वचः, प्रियोऽयं शिशुकः पौत्र इति मानयन्ति गुणिनः । इतो भूलोकात् स्वसद्म गन्तुं ययाचे । याच इति पर्याप्तम् । अथापि ययाचे इत्याह । तेनाक्षरावृत्त्या सानुरोधं पौनःपुन्येन याच इत्याह । य याचे इति भिन्ने वा पदे । य सर्वज्ञ विष्णविति सम्बोधनम् । **'अकयप्रविसम्भूमसखहा विष्णुवाचकाः'** इति हि विदन्तो वदन्ति । 'अहंय+याचे'

---

१. **'–मात्मसदनस्य'**

**यत्कार्य्यसाधनकृते विबुधार्थितस्त्वं प्रादुश्चकर्थ निजरूपमशेषमेव ।**
**तत् साधितं हि भवता तदितः स्वधाम क्षिप्रं प्रयाहि हर्षं[1] विबुधेषु कुर्वन् ॥ ४८ ॥**

**ओमित्युवाच भगवांस्तदशेषमेव श्रुत्वा रहस्यथ तनुस्त्वपरा हरस्य ।**
**दुर्वासनामयुगिहाऽगमदाशु राम[2] मां भोजय क्षुधितमित्यसकृद् ब्रुवाणा ॥ ४९ ॥**

**सिद्धं न देयमथ[3] साद्ध्यमपीति वाचं श्रुत्वाऽस्य वाक्समयजातमुरु स्वहस्तात् ।**
**अन्नं चतुर्ग्गुणमदादमृतोपमानं रामस्तदाप्य बुभुजेऽथ मुनिः सुतुष्टः ॥ ५० ॥**

**तृप्तो ययौ च सकलान् प्रति कोपयानः कश्चिन्न मेऽर्थितवरं प्रतिदातुमीशः ।**
**एवम्प्रतिज्ञक ऋषिः स हि तत्प्रतिज्ञां मोघां चकार भगवान् नतु कश्चिदन्यः ॥ ५१ ॥**

**चतुर्गुणं भक्ष्यभोज्यलेह्यपेयगुणोपेतम् ॥ ५० ॥ सकलान् प्रति कोपयानश्च तृप्तो ययौ ॥ ५१ ॥**

---

इति वा प्रतृण्णम् । अहमिति पदं मुख्यवाचकत्वेन यात्यत्रेत्यहंयो भगवान् । लोका मामहङ्कारमानित्वादहम्पदवाच्यं मन्यन्ते । वस्तुतस्तु नाहमहम् । किन्तु भवानेवेत्यर्थः । तेन नाहमिदं वदामि । किन्तु मयि स्थितो भवानेव मयैवं व्याहारयतीति च । यथाश्रुतार्थेऽपि न कोऽपि दोषः । सर्वेषु कालेषु **'छन्दसि लुङ्–लङ्–लिटः'**[अ.सू.३.४.६] इति हि वैयाकरणाः ॥ ४७ ॥ रामोऽपूर्णावतार इत्येके । तन्निरासायाऽह–अशेषमेव निजरूपं प्रादुश्चकर्थेति । अथच यदर्थं प्रादुश्चकर्थ तत् कार्यमशेषं साधितमेव हि । मूलरूपेण सहावताररूपमपि स्वधामनि दिदृक्षमाणेषु देवेषु हर्षं जनयन् । हर्षमिति देवानां पुलकोद्गममभिनीय दर्शयति ॥ ४८ ॥ दुःखेन वास्यत इति दुर्वासो दुर्वासा वा । दुष्करो वासोऽस्येति दुर्वासः । वस निवासे । निर्वक्ष्यति हि स्वयमेव– **'हरस्वरूपिणम् । सुदुःखवासनामकम्'** [१७.२३८] इति । दुष्टं वस्त्रं वस्त इति दुर्वासा इति वैयाकरणाः । वस आच्छादने । आश्वागमत् । आशु भोजयेति ब्रुवाणा ॥ ४९ ॥ चतुर्गुणम्, भक्ष्यं भोज्यं लेह्यं पेयमिति चतुर्विधम् । भक्ष्यं यदास्वादविशेषाय खाद्यते– अपूपातिरसपोलिकादि । भोज्यं यत् प्राधानाहारतयाऽद्यते । सोपसेचनं भक्तम् । लेह्यं यच्चूष्यते चूतशर्कराखण्डादि । पेयं यत्पीयते क्षीरपानकादि । अथ रामेण दानक्षण एव । अथ बुभुजे कृत्स्नं बुभुजे । सुतुष्टः । भगवद्दत्तान्नाशनजनितं तोषमन्तर्मातुमप्रभवन् बहिरपि मुखविकासादिनाऽभिनन्दनवचसा चाभिव्यानगित्यर्थः । तथाच त्रिभिरपि करणैस्तोषाविष्करणं सुतोषः ॥ ५० ॥ कोपयानः कोपयमानः । अक्षरलोपेन कोपस्यापि लोपमाह । कोपं दर्शयति, न वस्तुतः कुप्यतीत्यर्थः । कुपधातुर्भासार्थो णिचमुत्पादयतीति वैया-

---

१. **'हरषम्'** इति विश्लिष्य पठनीयम् । २. **'रामं माम्'** ३. **'देयमुत सा–'**

कुन्ती तु तस्य हि मुनेर्वरतोऽजयत् तु[१] रामः स कृष्णतनुवा स्वबलाज्जिगाय ।
तस्मिञ्छिवे प्रतिगते मुनिरूपके च याहीति लक्ष्मणमुवाच रमापतिः सः ॥ ५२ ॥

एकान्ते तु यदा रामश्चक्रे रुद्रेण संविदम् ।
द्वारपालं स कृतवांस्तदा लक्ष्मणमेव सः[२] ॥ ५३ ॥

यद्यत्र प्रविशेत् कश्चिद्धन्मि त्वेति वचो ब्रुवन् ।
तदन्तराऽऽगतमृषिं दृष्ट्वाऽमन्यत लक्ष्मणः ॥ ५४ ॥

**कृष्णतनुवा कृष्णतन्वा कृष्णरूपेण । स्वबलाज्जिगाय । एतच्च 'स तान् समर्च्य केशवः प्रदाय चोरुमात्रकाः' (१७.२४१) इत्यत्रैवोक्तम् ॥ ५२ ॥ याहीत्युक्तौ कारणमाह– एकान्त इति । श्लोकद्वयस्य युगपत् सम्बन्धः । तथाच स लक्ष्मण इति सम्बन्धः ॥ ५३–६ ॥**

---

करणाः । कोपयति कोपेन ज्वलतीत्यर्थः । तथाऽऽत्मानं भासयतीति च । भाषार्थ इति मैत्रेयः । सर्वत्र कोपेन यानमस्येति च कोपयानः । प्रतीक्ष्य दानं प्रतिदानम् । को नाम दुर्वाससोऽर्थितस्य प्रतीक्षाया ईष्टे ॥ ५१ ॥ कुन्ती तु तस्य मुनेर्वरतः । तथाहि कुन्तिभोजेन वरः स्वीकृतः । स्फुटमेतदुपरिष्टात्– **'तमाह राजा यदि कन्यकायाः क्षमिष्यसे शक्तितः कर्मकर्त्र्याः । सुखं वसेत्योमिति तेन चोक्तः'** [११.१४४] इति । न स जयः स्वाभाविकः । किन्तु वरलब्ध इति न भगवज्जयसदृश इति वैधर्म्यं तुनाऽऽह– 'अजयत्तु' इति । कृष्णतनुवा स्वबलाज्जिगाय । तथाच वक्ष्यति– **'स तान् समर्च्य माधवः प्रदाय चोरुमात्रकाः । ययौ च तैः समन्वितो वधाय साल्वपुत्रयोः'**[१७.२४१] इति । तस्मिन् दुर्वासोरूपे शिवे । मुनिरूपके कृतकमुनिरूपे पूर्वमागते च शिवे स्वस्थानं प्रति गते सति ॥ ५२ ॥ एकान्ते स्थाने । **'संवित् सम्भाषणे'** इत्यभिधानम् । द्वारपालं स कृतवांस्तदा लक्ष्मणमेव स इति । ननु कथमत्र तच्छब्दद्वयम्? स्वशिष्याणां शास्त्रव्युत्पत्तिपरीक्षार्थमेव भगवत्पाद एवमाह । स स राम इति । **'सारत्वात् स इति प्रोक्तः'** । तथाच सः सारभूतः, आनन्दरूपः बलस्वरूपः सर्वज्ञो वा, स रामः नियतं द्वारपालमपास्य भाविकार्यापेक्षया लक्ष्मणमेव द्वारपालं कृतवानित्यर्थः । एवं चैकोऽत्र तच्छब्दः, अपरः सशब्द इति । यद्वा **'एवं त्वयि नान्यथेतोऽस्ति न कर्म लिप्यते नरे'** इतिवदन्तर्वाक्यन्यायेनात्र योजनेति च प्रतना मन्यन्ते । तथाचेयं वाक्ययोजना–**'यद्यत्र प्रविशेत् कश्चिद्धन्मि त्वेति वचो ब्रुवन् द्वारपालं स रामः कृतवांस्तदा लक्ष्मणमेव'** इत्येकं वाक्यम् । **'स लक्ष्मणः तदन्तराऽऽगतमृषिं दृष्ट्वाऽमन्यत'** इत्युत्तरं वाक्यमिति ॥ ५३–४ ॥

---

१. **'–यत् तं रामः'**

२. **'–णमेव च ।'** इति केचित् पठन्ति ।

दुर्वाससः प्रतिज्ञा तु रामं प्राप्यैव भज्यताम् ।
अन्यथा त्वयशो रामे करोत्येष मुनिर्ध्रुवम् ॥ ५५ ॥

राघवो घ्नन्नपि तु मां करोत्येव दयां मयि ।
इति मत्वा ददौ मार्ग्गं स तु दुर्वाससे तदा ॥ ५६ ॥

स्वलोकगमनाकाङ्क्षी स्वयमेव तु राघवः ।
इयं प्रतिज्ञा हेतुः स्यादिति हन्मीति सोऽकरोत् ॥ ५७ ॥

अत्यन्तबन्धुनिधनं त्याग एवेति चिन्तयन् ।
याहि स्वलोकमचिरादित्युवाच स लक्ष्मणम् ॥ ५८ ॥

इत्युक्तः स ययौ जगद्भवभयध्वान्तच्छिदं राघवं
ध्यायन्नाप च तत्पदं दशशतैर्य्युक्तो मुखाम्भोरुहैः ।
आसीच्छेषमहाफणी मुसलभृद् दिव्याकृतिर्ल्लाङ्गली
पर्य्यङ्कत्वमवाप यो जलनिधौ विष्णोः शयानस्य च ॥ ५९ ॥

**हन्मीति प्रतिज्ञायां हेतुमाह– स्वलोकेति । स्वलोकगमनाकाङ्क्षी तु, तस्यापि स्वलोकगमनाकाङ्क्षी ॥ ५७–८ ॥ इत्युक्तः स लक्ष्मणः ययौ । ध्यायन् नित्यमजस्रं[१] ययौ आप चेति सम्बन्धः । दशशतैर्मुखाम्भोरुहैर्युक्तः, दिव्याकृतिर्लाङ्गली मुसलभृत् यः शेषः महाफणी आसीत् । यश्च जलनिधौ शयानस्य विष्णोः पर्यङ्कत्वमवाप । तत्पदं तत्स्वरूपमाप च ॥ ५९ ॥**

---

पूर्वं सिद्धमन्नं न देयम् । पश्चात् साध्यमपि न देयम् । किन्त्वशनसमकालजातमन्नं देयमिति मयाऽपेक्षितस्यान्नस्य दाता न क्वाप्यस्तीति दुर्वाससः प्रतिज्ञा तु । तुना अन्यैरशक्यभङ्गत्वमाह । करोति प्रथयति ॥ ५५ ॥ घ्नन्नपि तु । तस्य निग्रहोऽप्यनुग्रह एव, कोपोऽपि करुणैवेति तुनाऽऽह । स तु रामस्यान्तरङ्गभक्तः स लक्ष्मणः ॥ ५६ ॥ राघवस्तु यद्यद् भावि तत् सर्वं जानन् सत्यसङ्कल्पो राघवः । स्वस्य स्वीयस्य लक्ष्मणस्य च लोक स्वलोकः ॥ ५७ ॥ अत्यन्तबन्धुरतिनिकट-बन्धुः । **'अन्तः स्वरूपे निकटे'** इत्यभिधानम् । त्याग एव निधनमिति चिन्तयन् ॥ ५८ ॥ जगति संसारे भवन्तीति जगद्भवानि भयानि । तत्पदं तस्य मूलरूपम् । तदेवाऽह–दशशतैरित्यादि । दशशतैर्मुखैर्युक्तो महाफणी आसीत् ॥५९॥

---

१. एतेन **'ध्यायन्नाप च तत्पदं दशशतैर्नित्यं मुखाम्भोरुहैः'** इति वे.ती.सम्मतः पाठः स्यादिति सम्भाव्यते । अत एवोत्तरवाक्ये **'युक्तः'** इत्यध्याहारेण मूलं योजयतीव ।

**अथ राघवः स्वभवनोपगतौ विदधे मतिं सह जनैरखिलैः ।**
**समघोषयच्च य इहेच्छति तत् पदमक्षयं सपदि मैत्विति सः ॥ ६० ॥**

**श्रुत्वा तु तद् य इह मोक्षपदेच्छवस्ते सर्वे समाययुरथाऽतृणमापिपीलम् ।**
**रामाज्ञया गमनशक्तिरभूत् तृणादेर्य्ये तत्र दीर्घभविनो नहि ते तदैच्छन् ॥ ६१ ॥**

**संस्थापयामास कुशं स्वराज्ये तैः साकमेव च लवं युवराजमीशः ।**
**संस्थाप्य वालितनयं कपिराज्य आशु सूर्य्यात्मजोऽपि रघुवीरसमीपमायात्॥ ६२ ॥**

**अथाऽह वायुनन्दनं स राघवः समाश्लिषन् ।**
**तवाहमक्षगोचरः[१] सदा भवामि नान्यथा ॥ ६३ ॥**

**मा एतु मामायातु । इति समघोषयत् ॥ ६०–६१ ॥ तैः दीर्घभविभिः ॥ ६२–४ ॥**

देवानामुपकाराय गमनम्, कार्यमुपसंहृत्य गमनं चोपगमनम् । उपपन्नं गमनमुपरिगमनं च । प्रत्यर्थे चोपः । भवनं प्रति गमनं च भवनोपगमनम् । य इच्छति स मा मामेत्विति स राघवः समघोषयत् जनान्तिकमघोषयत् ॥ ६० ॥ अपिधाय पिधाय वा शर्करादिकमस्मात् पील्यत इत्यपिपीलमेव पिपीलमाचक्षते । पील प्रतिष्टम्भे । प्रतिष्टम्भो रोधनम् । वष्टि भागुरिरल्लोपमवाप्योरुपसर्गयोरित्यपेरल्लोपः । पिपीलः पिपीला वा । **'शनैर्याति पिपीलकः'** इत्यभियुक्तप्रयोगः ॥ ६१ ॥ सम्प्रदायानुगुणं सन्ततिक्रमानुगुणं च स्थापयामास कुशावत्याम् । सम्प्रीत्या स्थापयामास । सन्तुष्य स्थापयामास । तैः दीर्घभविभिः प्रजाभूतैः । लवं च युवराजं कृत्वा श्रावस्त्यां संस्थापयामास । **'कुशस्य नगरी रम्या विन्ध्यपर्वत-रोधसि । कुशावतीति नाम्ना सा कृता रामेण धीमता । श्रावस्तीति पुरी रम्या श्राविताऽथ लवस्य च'** [उ.कां.१०८.४] इति वाल्मीकीये । शत्रुघ्नश्च स्वपुत्रौ राज्ये संस्थाप्य राममेवानुवव्राज । **'सुबाहुं मधुरायां च वैदिशे शत्रुघातिनम्'** [९] इति च । **'अयं कारुपथो देशो रमणीयो निरामयः । निवेश्यतां तत्र पुरमङ्गदस्य महात्मनः । चन्द्रकेतोः सुरुचिरं चन्द्रकान्तं निरामयम् । तद् वाक्यं भरतेनोक्तं प्रतिजग्राह राघवः । तं च कृत्वा वशे देशमङ्गदस्य न्यवेशयत् । अङ्गदीया पुरी रम्या ह्यङ्गदस्य निवेशिता । रमणीया सुगुप्ता च रामेणाक्लिष्टकर्मणा । चन्द्रकेतोस्तु मल्लस्य मल्लभूम्यां निवे-शिता । चन्द्रकान्तेति विख्याता दिव्या स्वर्गपुरी यथा'** [उ.कां.१०२.५–९] इति च । एवमङ्गदचन्द्रकेतू च राज्ये प्रतिष्ठाप्य रामः प्रतस्थे सह भरतशत्रुघ्नाभ्याम् । लक्ष्मणः पूर्वमेव गतः । मातरश्च पूर्वमेव मृता दृष्ट्वा रामं कृताश्व-मेधम् । संस्थापयामासेति प्रथमपादे इन्द्रवज्रा । ततः पादत्रये वसन्ततिलकेति अपूर्वेयमुपजातिरिन्द्रतिलका । इन्द्रवज्रा स्थापने स्थिरतामाह । वसन्ततिलका शीघ्रगामिना लयविन्यासेन प्रस्थाने सत्वरतामाह ॥ ६२ ॥ समाश्लिषन् समा-श्लिष्यन् । अक्षगोचरः । न केवलमक्षिगोचरः । किन्तु सर्वेन्द्रियव्यवहारगोचरः । अक्षाणीन्द्रियाणि । अक्षो व्यवहारः ।

१. **'–मक्षिगोचरः'** । क्वचित् कोशेषु च तथा ।

त्वया सदा महत् तपः सुकार्य्यमुत्तमोत्तमम् ।
तदेव मे महत् प्रियं चिरं तपस्त्वया कृतम् ॥ ६४ ॥

दशास्यकुम्भकर्ण्णकौ यथा सुशक्तिमानपि ।
जघन्थ न प्रियाय मे तथैव जीव कल्पकम् ॥ ६५ ॥

पयोब्धिमद्ध्यगं च मे सुसद्म चान्यदेव वा ।
यथेष्टतो गमिष्यसि स्वदेहसंयुतोऽपि सन् ॥ ६६ ॥

यथेष्टभोगसंयुतः सुरेशगायकादिभिः ।
समीड्यमानसद्यशा रमस्व मत्पुरः सदा ॥ ६७ ॥

तवेप्सितं न किञ्चन क्वचित् कुतश्चिदेव[1] वा ।
मृषा भवेत् प्रियश्च मे पुनःपुनर्भविष्यसि ॥ ६८ ॥

**तथैव मत्प्रियायैव । त्वज्जीवनमपि मम प्रियमिति भावेन ॥ ६५ ॥ स्वदेहसंयुतः इदानीन्तनमानव[2]देहसंयुतः सन्नपि ॥ ६६–७२ ॥**

---

**'अक्षो रथस्यावयवे व्यवहारे'** इति, **'अक्षं सौवर्चले तुत्थे हृषीके'** इति चाभिधानम् । अन्यथा अगोचरः कदाऽपि न स्याम् ॥ ६३ ॥ मनुष्याणां तपः । ऋषीणामुत्तमं तपः । देवानामुत्तमोत्तमम् । वायोरुत्तमोत्तमं महत्तपः । सुकार्यं मुख्यकार्यम् । सर्वाधिकं कार्यम् ॥ ६४ ॥ त्वत्पुरतः क्षुद्रौ रावणकुम्भकर्णौ । त्वं त्वपारशक्तिमान् । तव तद्वधो नाम मक्षिकापोथः । अथ लङ्कां जगन्थ । तावभिजगन्थ । अथापि न जघन्थ । तदिदं भगवत्प्रियानुसरणं नाम । यथा यस्मात् । तथा तस्मादेव कल्पकालं जीव । कल्पजीवनमप्यल्पं तव । प्रळयेऽपि प्रतिभातपरावरस्य ॥ ६५ ॥ अनेन स्वदेहेन हनुमद्रूपेण अणुकवानररूपेण वा नररूपेण वा यत्रकुत्रापि यथाकथाच यथेष्टतः । पयोब्धिमध्यगं ममाक्षयं सुखमयं सद्म श्वेतद्वीपमपि । अन्यदनन्तासनं वैकुण्ठमेव वा । एवकारेण तस्य न किञ्चिद्दुर्गममित्याह । वक्ष्यति हि–**'विष्णोः समस्तसद्मनि'** [१२१] इति ॥ ६६ ॥ सुरेशगायका गन्धर्वाः । आदिना मानुषा गायकाः अप्सरआदयश्च । **'सुचरित चरितं भाति गन्धर्वगीतं प्रत्येकं देवसंसस्त्वपि तव भगवन् नर्तितद्योवधूषु'** इति हि पण्डिताचार्यः । सङ्गीतेन सहेड्य-मानं समीड्यमानं सत् अत्युक्तिरहितं निष्कळङ्कं यशः ॥ ६७ ॥ कर्मणिकर्मणि प्रतिवारं पुनःपुनरधिकमधिकं प्रियो भविष्यसि ॥ ६८ ॥

---

१. **'क्वचित् कदाचिदेव'**

२ **'–वानरदेह–'** इति पाठः साधीयान् ।

इतीरितो मरुत्सुतो जगाद विश्वनायकम् ।
विधेहि पादपङ्कजे तवेश भक्तिमुत्तमाम् ॥ ६९ ॥

सदा प्रवर्द्धमानया तया रमेऽहमञ्जसा ।
समस्तजीवसञ्चयात् सदाऽधिका हि मेऽस्तु सा ॥ ७० ॥

नमोनमो नमोनमो नतोऽस्मि ते सदा पदम् ।
समस्तसद्गुणोच्छ्रितं नमामि ते पदं पुनः ॥ ७१ ॥

इतीरिते तथेति तं जगाद पुष्करेक्षणः ।
जगाम धाम चाऽत्मनस्तृणादिना[१] सहैव सः ॥ ७२ ॥

खगा मृगास्तृणादयः पिपीलिकाश्च गर्द्दभाः ।
तदाऽऽसुरुत्तमा यतो नृवानरास्तु किम्पुनः ॥ ७३ ॥

सदैव रामभावना:[२] सदा सुतत्ववेदिनः ।
यतोऽभवंस्ततस्तु ते ययुः पदं हरेस्तदा ॥ ७४ ॥

**उत्तमाः उत्तमदिव्यदेहाः ॥ ७३ ॥ ननु ज्ञानादेव मुक्तिरिति श्रुतेः कथमेषां ज्ञानरहितानां मुक्तिप्राप्तिरित्यत आह–सदैवेति । रामभावनात् रामस्य ध्यानात् । सुतत्ववेदिनः सुतत्वज्ञानिनः ॥ ७४–६ ॥**

---

विश्वस्य जगतः, विश्वस्य वायोरपि ब्रह्मणोऽपि नायकम् ॥ ६९ ॥ समस्तजीवसञ्चयगताया भक्तेरप्यधिका भक्तिः ॥ ७० ॥ पदं पदनीयम्, पदं स्वरूपम् । ते असदापदम् इति च प्रतृण्णम् । असतामापद् येन तादृशं पदम् । सद्भिः आ समन्तात् पदनीयमिति सदापदमिति वा । सद्भिरापनीयं सदापं स्वरूपसुखं ददातीति वा । ॥ ७१ ॥ तृणादिना मुक्तियोग्यजीवसञ्चयेन ॥ ७२ ॥ खगा अन्तरिक्षचराः । मृगा वनचराः । गर्दभा इति ग्राम्याः पशव उपलक्ष्यन्ते । तृणादय इति स्थावराः, लतावृक्षादयः पादपजातयः । पिपीलिका इति क्षुद्रकीटसामान्यम् । तस्यान्तस्यां जातावत्यन्तनिकृष्टा अपीति दर्शयितुं वृक्षादय इत्यनुक्त्वा तृणादय इत्याह । गावोऽश्वा इत्यनुक्त्वा गर्दभा इत्याह । स्वस्वमुक्तियोग्यसाधनसम्पूर्त्या जितभवबन्धतयोत्तमाः । देवांशसम्भवा वानराः किं पुनः ॥ ७३ ॥ सदा रामं मनसा भावयन्तीति रामभावनाः । दैवेन

---

१. **'तृणादिभिः स–'** इति क्वचित् ।
२. **'रामभावनात्'** । वे.ती.पाठोऽपि तथा ।

**स तैः समावृतो विभुर्य्ययौ दिशं तदोत्तराम् ।**
**अनन्तसूर्य्यदीधितिर्दुरन्तसद्गुणार्ण्णवः ॥ ७५ ॥**

**सहस्रसूर्य्यमण्डलज्वलत्किरीटमूर्द्धजः ।**
**सुनीलकुन्तळावृतामितेन्दुकान्तसन्मुखः[1] ॥ ७६ ॥**

**सुरक्तपद्मलोचनः सुविद्युदाभकुण्डलः ।**
**सुहासविद्रुमाधरः समस्तवेदवाग्रसः ॥ ७७ ॥**

**दिवाकरौघकौस्तुभप्रभासकोरुकन्धरः ।**
**सुपीवरोन्नतोरुसज्जगद्धरांसयुग्मकः ॥ ७८ ॥**

**समस्तवेदवाग्रसः । रसा रसना । समस्तवेदवाचः रसायां यस्य स तथोक्तः ॥ ७७–८ ॥**

---

भागधेयेन सहिताः सदैवाः भाग्यशालिनः, अत एव रामभावना इति वा । सर्वोत्तमं तत्वं सुतत्वम् । तत्वानां सम्यग् वेदिनश्च । स्वतन्त्रं तत्वं स्वतन्त्रत्वेन परतन्त्राणि च परतन्त्रत्वेन विदन्तः । असुतत्ववेदिन इति च प्रतृण्णम् । असुतत्वं प्राणतत्वं हनुमदाख्यम् । तदपि वेदयन्तः । हरेर्देवत्वेन वायोश्च गुरुत्वेन ज्ञानं हि मोक्षसाधनम् ॥ ७४ ॥ न विद्यतेऽस्यान्त इति दुरन्तः । अनन्तत्वादेव । दुष्टानां दुरन्तहेतुश्च ॥ ७५ ॥ अमितेन्दुवत् कान्तं सत् निष्कलङ्कं च मुखमस्य । लसन्मुखो वा सन्मुखः । किरीटं सूर्यमण्डलति । तदधस्तात् मुखमिन्दुमण्डलति । लोके सूर्यमण्डलेन विहतप्रभमदृश्यं चन्द्र-मण्डलं भवति । इह तु सूर्यमण्डलमप्यतिशय्य शोभते चन्द्रमण्डलम् । अपि च लोके यदा सूर्यस्तदा न चन्द्रः, नापि निशा । इह तु सर्वसमाहारः– उपरि किरीटाख्यः सूर्यः । अधो वदनाख्य इन्दुः । मध्ये कुन्तलाख्यं तम इत्यद्भुतमेतद् ॥ ७६ ॥ सुरक्तमीषद्रक्तम्, सु सदा स्फुरती, न विद्युदिव क्षणप्रभे, अथापि प्रभया विद्युदाभे मकरकुण्डले अस्य । सुहासो मन्दहासोपेतः । विद्रुमः किसलयः प्रवाळो वा । 'ಚಿಗುರು' इति भाषायाम् । समस्तवेदवाचां रसः मुख्यार्थः । वेदवाचः स्वयमेव रसयति आस्वादयति च । **'इत्यस्या हृदयं साक्षान्नान्यो मद्वेद कश्चन'** इति स्मरणात् । आदिकवये ब्रह्मणे स्वयं व्याख्यानेन रसयति च । अथ च प्रायपाठानुगुण्यायेत्थमपि व्याख्येयम्– समस्त-वेदवाचः रसायां रसनायामस्येति ॥ ७७ ॥ दिवाकरौघ इव कौस्तुभः । तस्यापि प्रभासिका उरुः मांसला च कन्धराऽ-स्य । **'सन्ततं चिन्तयेत् कण्ठं भास्वत्कौस्तुभभासकम् । वैकुण्ठस्याखिला वेदा उद्गीर्यन्ते यतोऽनिशम्'** इति च । **'कन्धरो वारिवाहे स्याद् ग्रीवायां कन्धरा मता'** इत्यभिधानम् । सुवृत्तपीवरोन्नतोरुः । सत्यजगद्धरांसयुग्मकः । जगद्धरणमस्य नाऽयासाय । किन्तु लीलेयमानन्दमयीत्याह–युग्मक इति ॥ ७८ ॥ शत्रुभीषणतया शोभनम्, लोक-

---

१. **'–कुन्तलावृतामितेन्दुकान्तिस–'**

सुवृत्तदीर्घपीवरोल्लसद्भुजद्वयाङ्कितः ।
जगद् विमत्थ्य सम्भृतः शरोऽस्य दक्षिणे करे ॥ ७९ ॥

स्वयं स तेन निर्म्मितो हतौ[१] मधुश्च कैटभः ।
शरेण तेन[२] विष्णुना ददौ च लक्ष्मणानुजे ॥ ८० ॥

स शत्रुसूदनोऽवधीन्मधोः सुतं रसाह्वयम् ।
शरेण येन चाकारोत् पुरीं च माधुराभिधाम् ॥ ८१ ॥

समस्तसारसम्भवं शरं दधार तं करे ।
स वामबाहुना धनुर्दधार शार्ङ्गसञ्ज्ञितम् ॥ ८२ ॥

**जगद् विमथ्य अचेतनं जगत् सर्वं मथित्वा सर्वपदार्थेषु योयः सारस्तं दध्नो नवनीतवदुद्धृत्य सम्भृतः निर्मितः शरः अस्य दक्षिणे करे, अस्तीति शेषः ॥ ७९ ॥ निर्मि(तः केन कुत्र) इत्यत आह—स्वय-मिति । स शरः तेन विष्णुना स्वयमात्मना निर्मितः । विष्णुना तेन शरेण करणेन मधुर्हतः । कैटभश्च हतः । तं लक्ष्मणानुजे ददौ च, राम इति शेषः ॥ ८० ॥ माधुराभिधां पुरीं चाकरोत् । लवणं हत्वेति शेषः ॥ ८१–४ ॥**

---

लोचनहारितया सुन्दरम्, वृत्तं दीर्घं पीवरम्, उल्लसत् जगद्रक्षायां नित्योल्लासं च भुजद्वयम् । सम्भृतः मथनजं सारं सङ्गृह्य निर्मितः ॥ ७९ ॥ स शरः स्वयं तेन भगवता निर्मितः । तेनैव शरेण करणेन मधुः कैटभश्च भगवता विष्णुना हतौ । यं च ददौ लक्ष्मणानुजाय शत्रुघ्नाय । ननु भरतोऽपि लक्ष्मणानुजः । सत्यं लक्ष्मणानुजः । अथापि प्रसङ्गबला-च्छत्रुघ्न इति गम्यते । एकमातृकत्वाच्च । शत्रुघ्न एव हि लक्ष्मणमनु जातः सुमित्रायाम् । 'शत्रुसूदनः' इत्युत्तरश्लोके परामर्शाच्च ॥ ८० ॥ स शत्रुसूदनः शत्रुघ्नः । रसाह्वयं लवणाह्वयम् । पाककर्मणि लवणो हि रसानां रसतम इति लवणा-ह्वयं रसाह्वयमाह । **'शृङ्गारादिषु नवसु च लवणादिषु षट्सु पारदे रागे । निर्यासवीर्यगुणधातुविषघृतादौ रसः प्रोक्तः'** इति हलायुधः । येन शरेणावधीत् । येन च पुरीं माधुराभिधामन्वर्थामकरोत् । लवणासुरविनाशेन माधुर्यं निष्पाद्य । शत्रून् लुनातीति लवणः । लूञ् छेदने । शब्दस्वाभाव्याण्णत्वम् । अङ्गणमितिवत् । मधु माधुर्यमस्त्यस्यामिति मधुरा पुरी । **'उषि-सुषि-मुष्क-मधो रः'** [अ.सू.५.२.१०७] इति मत्वर्थे रः प्रत्ययः । मथ्नाति शत्रून्, मारयतीति वा मधुर्लवण-पिता । वैयाकरणास्तु **'मन्यत इति मधुः , उः प्रत्ययः, धश्चाऽदेशः'** इति मन्यतेर्मधुशब्दं मन्यन्ते ॥ ८१ ॥ करे दक्षिणे । शार्ङ्गपदनिष्पत्तिः पूर्वमुदिता [३.७६] ॥ ८२ ॥

---

१. **'हतो–'** । वे.ती.पाठोऽपि तथा । २. **'शरेण येन'**

**उदारबाहुभूषणः शुभाङ्गदः सकङ्कणः ।**
**महाङ्गुलीयभूषितः सुरक्तसत्कराम्बुजः ॥ ८३ ॥**

**अनर्घ[१]रत्नमालया वनाख्यया च मालया ।** १
**विलासिविस्तृतोरसा बभार च श्रियं प्रभुः ॥ ८४ ॥**

**स भूतिवत्सभूषणस्तनूदरे वलित्रयी ।**
**उदारमद्ध्यभूषणो लसत्तटित्प्रभाम्बरः ॥ ८५ ॥**

**करीन्द्रसत्करोरुयुक् सुवृत्तजानुमण्डलः ।**
**क्रमाल्पवृत्तजङ्घकः सुरक्तपादपल्लवः ॥ ८६ ॥**

**लसद्धरिन्मणिद्युती रराज राघवोऽधिकम् ।**
**असङ्ख्यसत्सुखार्णवः समस्तशक्तिसत्तनुः ॥ ८७ ॥**

**भूतिवत्सः श्रीवत्सः ॥ ८५–७ ॥**

---

बाहुभूषणं भुजकीर्त्यादि बाहुमूले यद् ध्रियते । बाहुमध्ये शुभाङ्गदः । बाह्वग्रे सकङ्कणः । करशाखास्वङ्गुलीयकानि । महान्ति अनर्घाणि । ईषद्रक्तं सल्लक्षणं च कराम्बुजम् ॥ ८३ ॥ वननीया माला वनमाला । तदाह– वननीयत्वाद् वनाख्ययेति । आजानु लम्बिन्या तुळसीमालया । **'आपादपद्मं या माला वनमालेति सा मता'** इति ह्यभिदधति । विलासि मनोहरं लीलामयं च ॥ ८४ ॥ वत्स इति तनय उच्यते । वत्स इति तर्णक उच्यते । वत्समिति वक्ष उच्यते । भूतिर्लक्ष्मीः वत्सभूषणं वक्षसि लक्षणभूता यस्य । भूतिवत्सः श्रीवत्सः भूषणं यस्येति वा । श्रीवत्सो नाम माहात्म्यद्योतको वक्षसि दक्षिणस्तनपार्श्वे रोमावर्तविशेष इति वदन्ति । भृगोः पदाघातजो रेखाविशेष इत्यन्ये । तथाहि भागवते भृगुं प्रति भगवद्वचनम्– **'अद्याहं भगवन् लक्ष्म्या आसमेकान्तभाजनम् । वत्स्यत्युरसि नो भूतिर्भवत्पादहतांहसि'** [१०.९३.१२] इति । मध्यभूषणं कटिशृङ्खलम् । उदारमनर्घम् । लसत् चक्षुर्विकासजननम्, न विद्युदिव चक्षुर्निरोधनम्, अथापि तटित इव प्रखरा भा दीप्तिर्यस्य तादृशमम्बरं यस्य । **'जाम्बूनदाम्बराधारम्'** इति स्वयमेवाऽहान्यत्र । ताटयतीति तटित् । तट आघाते । वैयाकरणास्तु **'तड आघाते'** इति पठन्ति । तेन ताडयतीति तडितमाहुः । ताडकामिव ताटकाम् ॥ ८५ ॥ करीन्द्रस्य सन् दीर्घश्च पीवरश्च वृत्तश्च यः करः शुण्डादण्डः, तदाभाभ्यामूरुभ्यां युक्तः ॥ ८६ ॥ हरिन्मणिर्मरतकम् । सत् दुःखासम्भिन्नं सुखम् । समस्तशक्तिमयी सती जननादिदोषदूरा तनुरस्य ॥ ८७ ॥

---

१. **'अनर्घ्य–'**

**ज्ञानं नेत्राब्जयुग्मान्मुखवरकमलात् सर्ववेदार्थसारां-**
**स्तन्वा ब्रह्माण्डबाह्यान्तरमधिकरुचा भासयन् भासुरास्यः ।**
**सर्वाभीष्टाभये च स्वकरवरयुगेनार्थिनामादधानः**
**प्रायाद् देवाधिदेवः स्वपदमभिमुखश्चोत्तराशां विशोकाम् ॥ ८८ ॥**

**दध्रे च्छत्रं हनूमान् स्रवदमृतमयं पूर्णचन्द्रायुताभं**
**सीता सैवाखिलाक्ष्णां विषयमुपगता श्रीरिति ह्रीरथैका ।**
**द्वेधा भूता दधार[१] व्यजनमुभयतः पूर्णचन्द्रांशुगौरं**
**प्रोद्यद्भास्वत्प्रभाभा सकलगुणतनुर्भूषिता भूषणैः स्वैः ॥ ८९ ॥**

**अर्थिनां ज्ञानाद्यर्थिनां नेत्राब्जयुग्मादिकात् ज्ञानादिकमादधानः ॥ ८८ ॥ सा इयत्कालमदृश्या सती । एकैव सीता ॥ ८९–९१ ॥**

---

नेत्राब्जयुग्मात् कटाक्षपातमात्रेण सतां ज्ञानमार्गं भासयन् प्रकाशयन् । मुखकमलाद् वेदार्थसारान् भासयन् । ज्ञानं वेदार्थसारांश्चार्थिनामादधान इति वाऽन्वयः । अधिकरुचा तन्वा विश्वमन्तर्बहिश्च भासयन् । अभीष्टाभये वराभयमुद्रे कराभ्यां दधानः अर्थिनामभीष्टमभयं चाऽदधानः विदधानः ॥ ८८ ॥ श्रीरिति ह्रीरिति च लक्ष्मीधरे । एका सती अथ रामप्रायणे द्वेधा भूता । विधार्थे, एकस्यानेकीकरणार्थे वा धाप्रत्यये द्विधेति रूपं भवति । धाप्रत्ययस्य पुनरेधजादेशे द्वेधेति रूपं सम्पद्यते । तथाच पाणिनिः–**'एधाच्च'** [अ.सू.५.३.४६] इति । प्रोद्यतो भास्वतः प्रभेव आभा शोभा यस्याः । प्रोद्यद्भास्वत्प्रभेति भिन्नं वा पदम् । आभातीत्याभा ज्ञानानन्दमयी । भ आनन्दे । भ ज्ञाने । 'भासकलगुणतनुः' इत्येकं वा पदम् । भा कान्तिः ज्ञानानन्दादयः सकलगुणाश्च यस्यास्तनुः । स्वैः इतरासाधारणैः । देवतामयत्वात् । स्कान्दे च– **'रामस्य सव्यपार्श्वे तु सपद्मा श्रीः समाश्रिता । दक्षिणे ह्रीर्विशालाक्षी व्यवसायस्तथाऽग्रतः । नानाविधायुधान्यत्र धनुर्ज्याप्रभृतीनि च । अनुव्रजन्ति काकुत्स्थं सर्वे पुरुषविग्रहाः । वेदो ब्राह्मणरूपेण सावित्री सव्यदक्षिणे । ओङ्कारोऽथ वषट्कारः सर्वे रामं तदाऽव्रजन्'** [वै.खं. अयो.मा. ६.१३६–८] । किञ्चिद् व्यत्यासेन रामायणे चैतत् पठ्यते–**'रामस्य दक्षिणे पार्श्वे सपद्मा श्रीरुपाश्रिता । सव्ये तु ह्रीर्महादेवी व्यवसायस्तथाऽग्रतः । शरा नानाविधाश्चापि धनुरायतमुत्तमम् । तथाऽऽयुधानि ते सर्वे ययुः पुरुषविग्रहाः । वेदा ब्राह्मणरूपेण गायत्री सर्वरक्षिणी । ओङ्कारोऽथ वषट्कारः सर्वे राममनुव्रताः'** [उ.कां.१२२.६–८] इत्यादि । शङ्खस्य सर्वतीर्थमयत्वं वरत्वम् । नित्यपूजाङ्गत्वं च । शत्रून् हतवानिति शत्रुहा शत्रुघ्नः । **'ब्रह्मभ्रूणवृत्रेषु क्विप्'** [अ.सू.३.२.८०] इति तु सापवादं

---

१. 'भूत्वा दुधाव व्य–'

साक्षाच्चक्रतनुस्तथैव भरतश्चक्रं दधद् दक्षिणे-
नाऽयात् सव्यत एव शङ्खवरभृच्छङ्खात्मकः शत्रुहा ।
अग्रे ब्रह्मपुरोगमाः सुरगणा वेदाश्च सोङ्कारकाः
पश्चात् सर्वजगज्जगाम रघुपं यान्तं निजं धाम तम् ॥ ९० ॥

तस्य सूर्य्यसुतपूर्ववानरा दक्षिणेन मनुजास्तु सव्यतः ।
रामजन्मचरितानि तस्य ते कीर्त्तयन्त उचथैर्द्रुतं ययुः ॥ ९१ ॥

गन्धर्वैर्ग्गीयमानो विबुधमुनिगणैरब्जसम्भूतिपूर्वै-
र्वेदोदारार्थवाग्भिः प्रणिहितसुमनः[१] सर्वदा स्तूयमानः ।
सर्वैर्भूतैश्च भक्त्या स्वनिमिषनयनैः कौतुकाद् वीक्ष्यमाणः
प्रायाच्छेषगरुत्मदादिकनिजैः संसेवितः[१] स्वं पदम् ॥ ९२ ॥

**प्रणिहितसुमनाः अभिवृष्टपुष्पः ॥ ९२–३ ॥**

---

वचः । पितृहा, मातृहा, अमित्रहा, मधुहा, वीरहेत्यादीनामब्रह्मभ्रूणवृत्रेष्वपि क्विबन्तानां दर्शनाद् बहुलं वेदषु च वैदिकेषु च । अतोऽनुपदमेव सूत्रयामास–**'छन्दसि बहुलम्'** [८८] इति । तस्मात् सुष्ठूक्तं परमवैदिकेनाऽचार्येण शत्रुहेति । सोङ्कारकाः । अल्पार्थे कन् । अत्यल्पमेतदेकमक्षरं योऽयमोङ्कारः, अथापि सर्ववेदार्थसार इति प्रीत्यतिशये च । शब्दतोऽल्पमर्थतोऽनल्पमित्येतत् । ओमि पररूपम् । **'ओमाङोश्च'** [अ.सू.६.१.९५] इति । तमवसितावतार-रूपम् ॥ ८९–९० ॥ ते तं निजं धाम यान्तं भगवन्तमनुगताः, तस्य देवाधिदेवस्य अस्मिन् रामजन्मनि रामावतारे यान्याचरितानि तानि उचथैः उक्थैः मन्त्रवचनैः कीर्तयन्तः । **'एता ते अग्न उचथानि वेधो जुष्टानि सन्तु मनसे हृदे च'**[१.७३.१०] इत्यृग्वेदे । तस्यैव रामजन्मनः स्वैः स्तूयमानस्य दक्षिणेन सव्यतश्च द्रुतं ययुः । मनुजास्तु न वानरा इव देवांशाः, किन्तु केवलं मनुजा इति तुनाऽऽह । अत एव सव्यतो ययुः ॥ ९१ ॥ गन्धर्वैर्गीयमान इति । नखस्तुतौ तावत् पान्त्वस्मानिति शार्दूलविक्रीडितेन प्रस्तूय श्रीमत्कण्ठीरवास्येति स्रग्धरयोपसञ्जहार । अत्र पुनर्गन्धर्वैर्गीयमान इति स्रग्धरया प्रस्तूय तुरीयचरणे शार्दूलविक्रीडितेनोपसञ्जहारेत्यपूर्वेयं छन्दःसंसृष्टिः । पुराणदर्शितश्चायं पन्थाः । तथाहि पाद्मे– **'वाराहः पुनरेव युद्धकुशलः संवाञ्छते सङ्गरं तुण्डाग्रेण सुतीक्ष्णदन्तनखरैः क्रुद्धो धरां क्षोभयन् । हुङ्कारोच्चारगर्वात्**

---

१. **'प्रणिहितसुमनाः'** । इति वे.ती.पाठोऽपि तथेति भाति ।

२. **'–सेवितं स्वम्'**

**ब्रह्मरुद्रगरुडैः सशेषकैः प्रोच्यमानसुगुणोरुविस्तरः ।**
**आरुरोह विभुरम्बरं शनैस्ते च दिव्यवपुषोऽभवंस्तदा ॥ ९३ ॥**

**अथ ब्रह्मा हरिं स्तुत्वा जगादेदं वचो विभुम् ।**
**त्वदाज्ञया मया दत्तं स्थानं दशरथस्य हि ॥ ९४ ॥**

**मातॄणां चापि तल्लोकस्त्वयुताब्दादितोऽग्रतः ।**
**अनर्हायास्त्वयाऽऽज्ञप्ता कैकेय्या अपि सद्गतिः ॥ ९५ ॥**

**सूत्वा तु भरतं नैषा गच्छेत निरयानिति ।**
**तथाऽपि सा यदावेशाच्चकार त्वय्यशोभनम् ॥ ९६ ॥**

**अथ स्वस्थानप्राप्त्यनन्तरम् ॥ ९४ ॥ इतः वर्तमानकालात् अयुताब्दादग्रतः पूर्वम् । तल्लोकः दशरथलोकः ॥ ९५–८ ॥**

---

**प्रहरति विमलं भूपतिं तं च राजन् ज्ञात्वा विष्णुपराक्रमं मनुसुतस्त्वानन्दरोमाञ्चितः'** [भू.खं.४३.३६] इति । वेदानां महार्थाभिर्वाग्भिः करणैः विबुधमुनिगणैः स्तूयमानः । सुमना इत्याकारान्तं पदम् । प्रणिहिताः प्रवृष्टाः सुमना यस्मिन्निति । सान्तं क्रियाविशेषणं वा । 'प्रणिहितसुमनाः' इति पाठे स्पष्टोऽर्थः । तथाच त्रयी गतिः–सुमनेति, सुमना इति, नित्यबहुवचनत्वे सुमनस इति । सुष्ठु मन्यन्तेऽनया, आभिर्वा । सुचिरमनिमिषनयनैः । विस्मृतनिमेषैः । कुतः? कौतुकाद् विस्मयात् । शेषगरुत्मदादिकैः निर्जैर्भक्तैः । दास्यभावेन सेवा संसेवा ॥ ९२ ॥ शेषेण केन वायुना च सहितैः । शेषकौ भुव्यवतीर्यापि सिषेवाते इति तयोः पृथगुक्तिः । प्रोच्यमान उच्चैर्गीयमानः । सत्वरजस्तमांसि गुणा अपि दुर्गुणाः । अतः सुगुणेत्याह । ते च ये सहाऽगतास्तृणान्ता जीवाः ॥ ९३–४ ॥ तल्लोकः तासां योग्यो लोको दत्तः । कश्च स लोकः? तल्लोकः । तस्य दशरथस्य लोक एव तल्लोकः । इतः अयुताब्दात् अग्रतः पूर्वम् । तथाहि वाल्मीकिः–**'अथ दीर्घस्य कालस्य राममाता यशस्वनी । पुत्रपौत्रैः परिवृता कालधर्ममुपागमत् । अन्वियाय सुमित्रा च कैकयी च यशस्विनी । धर्मं कृत्वा बहुविधं त्रिदिवे पर्यवस्थिता । सर्वाः प्रमुदिताः स्वर्गे राज्ञा दशरथेन च । समागता महाभागाः सर्वधर्मं च लेभिरे'** [उ.कां.९९.९५–७] इति । **'पुत्रपौत्रैः परिवृता'** इत्युपचारः । पौत्रजननात् पूर्वमेव हि कौसल्या कालधर्ममुपागमत् । तिसृभ्योऽन्यासु दशरथभार्यासु पौत्रजननापेक्षया कौसल्याऽपि पौत्रैः परिवृतोच्यते । असुरावेशेनाकार्यकरणादापाततोऽनर्हायाः, अथापि स्वरूपतोऽर्हायाः ॥ ९५ ॥ सूत्वा तु भरतम् । तुना महदिदं बलवत् सुकृतं यद् भरतजननमित्याह । अल्पं दुर्बलं च दुरितम् यद् रामाभिषेकभञ्जनम् । असुरावेशमूलत्वात् । अभिषेकभञ्जनस्य

निकृतिर्न्नाम सा क्षिप्ता मया तमसि शाश्वते ।
कैकयी[1] तु चलान् लोकान् प्राप्ता नैवाचलान् क्वचित् ॥ ९७ ॥

पश्चाद् भक्तिमती यस्मात् त्वयि सा युक्तमेव तत् ।
मन्थरा तु तमस्यन्धे पातिता दुष्टचारिणी ॥ ९८ ॥

सीतार्त्थं [2]येऽप्यनिन्दंस्त्वां तेऽपि याता महत् तमः ।
प्रायशो राक्षसाश्चैव त्वयि कृष्णत्वमागते ॥ ९९ ॥

शेषा यास्यन्ति तच्छेषा अष्टाविंशे कलौ युगे ।
गते चतुस्सहस्राब्दे तमोगास्त्रिशतोत्तरे ॥ १०० ॥

अथ ये त्वत्पदाम्भोजमकरन्दैकलिप्सवः ।
त्वया सहाऽऽगतास्तेषां विधेहि स्थानमुत्तमम् ॥ १०१ ॥

अहं भवः सुरेशाद्याः किङ्कराः स्म तवेश्वर ।
यच्च कार्य्यमिहास्माभिस्तदप्याज्ञापयाऽऽशु नः ॥ १०२ ॥

**राक्षसाश्च प्रायशस्तमो याताः । शेषास्त्वयि कृष्णत्वमागते यास्यन्ति । तच्छेषाः कृष्णावतारसमयेऽपि तमो न प्राप्ताः अष्टाविंशे कलौ युगे, वैवस्वतमन्वन्तर इति शेषः । तमोगाः, भविष्यन्तीति शेषः ॥९९–१०६॥**

---

रावणवधफलकतया देवैरृषिभिश्च चिराभिलषितत्वात् । दुर्बलं हि दुरितं बलवता सुकृतेन बाध्यते । **'धर्मो भवत्य-धर्मोऽपि–'** इत्यादिस्मरणात् । तच्च दुरितं मन्थरानिकृतिभ्यां बहिश्चित्तचालनेनान्तःप्रेरणेन च बलात्कारितमिति ते एव साक्षाद्दुरितभाजने । कैकेयी तु पश्चात् आवेशापगमनानन्तरं स्वतो भक्तिमती बभूवेति युक्तं तस्याः एतावन्तं कालं क्वापि अचललोकाभावेऽपि पश्चादचललोकाप्तिरिति ॥ ९६–८ ॥ येऽपि सुराणका नामासुराः । त्वयि कृष्णत्व-मागते । मारुते च भीमत्वमागते । शेषा राक्षसाश्च प्रायशो बाहुल्येन ॥ ९९ ॥ ततोऽप्यवशिष्टा अष्टाविंशे । त्रिशतोत्तरे चतुः-सहस्राब्दे मारुते मध्वत्वमागते ॥ १००–२ ॥

---

१. **'कैकेयी'** इति क्वचित् ।
२. **'ये त्वनि–'**

इत्युदीरितमाकर्ण्य शतानन्देन राघवः ।
जगाद भावगम्भीर[1]सुस्मिताधरपल्लवः ॥ १०३ ॥

जगद्गुरुत्वमादिष्टं मया ते कमलोद्भव ।
गुर्वादेशानुसारेण मयाऽऽदिष्टा च सद्गतिः ॥ १०४ ॥

अतस्त्वया प्रदेया हि लोका एषां मदाज्ञया ।
हृदि स्थितं च जानासि त्वमेवैकः सदा मम ॥ १०५ ॥

इतीरितो हरेर्भावविज्ञानी कञ्जसम्भवः ।
पिपीलिकातृणान्तानां ददौ लोकाननुत्तमान् ।
वैष्णवान् सन्ततत्वाच्च नाम्ना सान्तानिकान् विभुः ॥ १०६ ॥

ते जरामृतिहीनाश्च सर्वदुःखविवर्जिताः ।
संसारमुक्ता न्यवसंस्तत्र नित्यसुखाधिकाः ॥ १०७ ॥

ये तु देवा इहोद्भूता नृवानरशरीरिणः ।
ते सर्वे स्वांशितामापुस्तन्मैन्दविविदावृते ॥ १०८ ॥

**संसारमुक्ता जीवन्मुक्ता इति भावः ॥ १०७ ॥ तन्मैन्दविविदौ तौ च तौ मैन्दविविदौ चेति । तच्छब्दस्तयोः प्रसिद्धत्वसूचकः ॥ १०८ ॥**

---

भावगम्भीरं साकूतं सुस्मितं यत्र तादृशोऽधरपल्लवो यस्य ॥ १०३ ॥ त्वं जगद्गुरुः । जगतां सद्गतिश्च गुर्वादेशानुसारिणी ॥ १०४–५ ॥ सन्तानेन सन्ततया भवन्तीति सान्तानिका मुक्तलोकाः । सन्तानशब्दात् ठञ् । **'रामाज्ञया विश्वगुरुर्विरिश्चः स वैष्णवीमेव गतिं दिदेश । स्वानन्दसन्तानवतीमनन्तां ताभ्यः प्रजाभ्यो विभयां विशङ्काम्'** [सं.रा; उ.कां.७.४९] इति सङ्ग्रहे । अनेन **'लोकान् सान्तानिकान् नाम यास्यन्तीमे समागताः'** [उ.कां.११०.१२] इति रामायणवचनं गदितार्थम् ॥ १०६–७ ॥ तत् स्वांशिताप्रापणं च मैन्दविविदावृते । तत् तदेति वा ॥ १०८–१० ॥

---

१. **'–गम्भीरं सु–'**

असुरावेशतस्तौ तु न राममनुजग्मतुः ।
पीतामृतौ पुरा यस्मान्मम्रतुर्न्नच तौ तदा ॥ १०९ ॥

तयोश्च तपसा तुष्टश्चक्रे तावजरामरौ ।
पुरा स्वयम्भूस्तेनोभौ दर्प्पादमृतमन्थने ॥ ११० ॥

प्रसँह्यापिबतां देवैर्द्देवांशत्वादुपेक्षितौ ।
पीतामृतेषु देवेषु युद्ध्यमानेषु दानवैः ॥ १११ ॥

तैर्द्दत्तमात्महस्ते तु रक्षायै पीतमाशु तत् ।
तस्माद् दोषादापतुस्तावासुरं भावमूर्ज्जितम् ॥ ११२ ॥

अङ्गदः कालतस्त्यक्त्वा देहमाप निजां तनुम् ।
रामाज्ञयैव कुर्वाणो राज्यं कुशसमन्वितः ॥ ११३ ॥

विभीषणश्च धर्म्मात्मा राघवाज्ञापुरस्कृतः ।
सेनापतिर्द्धनेशस्य कल्पमावीत् स राक्षसान् ॥ ११४ ॥

रामाज्ञया जाम्बवांश्च न्यवसत् पृथिवीतळे[1] ।
उत्पत्त्यर्थं जाम्बवत्यास्तदर्थं सुतपश्चरन् ॥ ११५ ॥

**तत्र हेतुमाह– असुरावेशत इति ॥ १०९–१२ ॥ अङ्गदः रामाज्ञयैव कुशसमन्वितः राज्यं कुर्वाणः कालतः देहं त्यक्त्वा निजां तनुमापेति योजना ॥ ११३ ॥ राघवाज्ञापुरस्कृतः पुरस्कृतरामाज्ञः ॥ ११४–५ ॥**

---

प्रसह्यामृतमपिबताम् । देवांशत्वात् पिबन्तावपि देवैरुपेक्षितौ ॥ १११ ॥ तैर्द्देवैर्दत्तम् । ऊर्जितं बलवत्तरम् ॥ ११२–३ ॥ कल्पकालमवति । कालाध्वनोरत्यन्तसंयोगे द्वितीया । राघवाज्ञापुरस्कृतः । विशेष्यपूर्वपदः समासः । राघवाज्ञा पुरस्कृता येन । कल्प इति चतुर्दशमन्वन्तराणि । चतुर्युगसहस्रमित्येतत् । तत्र यावदेतत्कल्पावसानमित्यर्थः ॥ ११४ ॥ कृष्णाय कन्यादानार्हतासम्पादकं तपः सुतपः ॥ ११५ ॥

---

१. '–तले'

अथो रघूणां प्रवरः सुरार्चितः स्वयैकतन्वा न्यवसत् सुरालये ।
द्वितीयया ब्रह्मसदस्यधीश्वरस्तेनार्चितोऽथापरया निजालये ॥ ११६ ॥

तृतीयरूपेण निजं पदं प्रभुं व्रजन्तमुच्चैरनुगम्य देवताः ।
अगम्यमर्य्यादमुपेत्य च क्रमाद् विलोकयन्तोऽतिविदूरतोऽस्तुवन् ॥ ११७ ॥

ब्रह्मा मरुन्मारुतसूनुरीशः शेषो गरुत्मान् हरिजः शक्रकाद्याः ।
क्रमादनुव्रज्य तु राघवस्य शिरस्यथाऽऽज्ञां प्रणिधाय निर्य्ययुः ॥ ११८ ॥

स्वंस्वं च सर्वे सदनं सुरा ययुः पुरन्दराद्याश्च विरिञ्चिपूर्वकाः ।
मरुत्सुतोऽथो बदरीमवाप्य नारायणस्यैव पदं सिषेवे ॥ ११९ ॥

समस्तशास्त्रोद्धरितं हरेर्वचो मुदा तदा श्रोत्रपुटेन सम्भरन् ।
वदंश्च तत्वं विबुधर्षभाणां सदा मुनीनां च सुखं ह्युवास ॥ १२० ॥

**अथो स्वर्गारोहणानन्तरम् । सुरालये स्वर्गे ॥ ११६ ॥ उच्चैः भक्त्याद्युत्कृष्टत्वेन । अगम्यमर्यादं अगम्या सीमा अवधिः यथा भवति तथा ॥ ११७ ॥ हरिजः कामः । न तु यमः । शक्रस्य पश्चादुक्तेः । क्रमादिति तारतम्यस्य चोच्यमानत्वात् । शक्रकाद्याः । कः दक्षप्रजापतिः ॥ ११८–२४ ॥**

---

अपरया तृतीयया तन्वा, तृतीयरूपेण । निजालये विष्णुलोके ॥ ११६ ॥ अगम्यमर्यादम् । इदमित्थमिति केनाप्यगम्या मर्यादा स्थितिर्यस्य तं भगवन्तम् । अवधिर्वा मर्यादा । अनवधिकमनन्तम् । अगम्यमर्यादं पदं वा ॥ ११७ ॥ मारुतसूनुर्हनुमान् । इन्द्रकामयोर्मध्ये हरिजः कामः प्रथममागतः । पुत्रत्वादेव । तदिदं हरिज इत्यनेन सूचितम् । ततः शक्रस्ततः काद्या दक्षाद्याः उत्तममनुसृत्यावरस्य व्रजनमनुव्रजनम् । अनुव्रजने भक्तिभरितत्वमनुग्रहापेक्षित्वं च विशेषं तुनाऽह । अनुव्रज्य अस्तुवन् । अथ स्तुत्यनन्तरम् । राघवस्य 'निवर्तध्वम्' इत्याज्ञां शिरसि प्रणिपातपूर्वकं निधाय अवनतेन शिरसा स्वीकृत्य ॥ ११८ ॥ अथो इति हनुमत्कथाशेषकथारम्भार्थः । सुराणां निर्याणानन्तरमित्यानन्तर्यार्थश्च ॥ ११९ ॥ सम्भरन् लोकशिक्षार्थं स्वयमपि सदा शृण्वन् । हरेर्वचो मूलरामायणादिकम्, बदरीगतेष्वृषिषु वाचयत्सु तदपि तेषामृषीणामनुग्रहार्थमिति परस्मैभाषयाऽऽह । स्वयं तु सदा हृदये हि सम्भरते । स्वयं च तदन्तरङ्गं तेषां वदन् ॥ १२० ॥

**रामाज्ञया किम्पुरुषेषु राज्यं चकार रूपेण तथाऽपरेण ।**
**रूपैस्तथाऽन्यैश्च समस्तसद्मन्युवास विष्णोः सततं यथेष्टम् ॥ १२१ ॥**

**इत्थं स गायञ्छतकोटिविस्तरं रामायणं भारतपञ्चरात्रम् ।**
**वेदांश्च सर्वान् सहितब्रह्मसूत्रान् व्याचक्षाणो नित्यसुखोद्धरोऽभूत् ॥ १२२ ॥**

**रामोऽपि सार्द्धं [1]पवमानात्मजेन स सीतया लक्ष्मणपूर्वकैश्च ।**
**तथा गरुत्मत्प्रमुखैश्च पार्षदैः संसेव्यमानो न्यवसत् पयोब्धौ ॥ १२३ ॥**

**कदाचिदीशः सकलावतारानेकं विधायाहिपतौ च[2] शेते ।**
**पृथक् च संव्यूह्य कदाचिदिच्छया रेमे रमेशोऽमितसद्गुणार्ण्णवः ॥ १२४ ॥**

**इत्यशेषपुराणेभ्यः पञ्चरात्रेभ्य एव च ।**
**भारताच्चैव वेदेभ्यो [3]महारामायणादपि ॥ १२५ ॥**

**एवं भगवदवतारकथामुक्त्वाऽस्य ग्रन्थस्याऽप्तिमूलत्वं ज्ञापयन्नाह–इत्यशेषपुराणेभ्य इत्यादिना ॥ १२५ ॥**

---

समस्तसद्मनि । समुदायैकवचनम् । सर्वेषु विष्णुमन्दिरेषु । त्रिकोटिरूपो हि हनुमान् । न केवलं भौमेषु हरिमन्दिरेषु । श्वेतद्वीपादिसद्मस्वपि । यथा भगवत इष्टम्, यथा च स्वस्येष्टम् ॥ १२१ ॥ मूलरामायणं गायन् । भारतसहितं पञ्च-रात्रम् । ब्रह्मसूत्रैः सहिताः सहितब्रह्मसूत्राः । उद्धरः भरितः ॥ १२२ ॥ गरुत्मत्प्रमुखैरित्यनेन शेषरुद्रेन्द्राद्या अप्यु-दिताः । अथापि पुनर्लक्ष्मणपूर्वकैश्चेत्याह । तेन ज्ञायते स्वमूलरूपं प्रविष्टा लक्ष्मणभरतशत्रुघ्ना अपि भगवदिच्छया पुन-रात्मानं विभज्य लक्ष्मणादिरूपेणापि रामरूपं भगवन्तं संसिषेविरे इति । अत्र चतुर्षु पादेषु चत्वारि च्छन्दांसीत्य-पूर्वमिदं छन्दःसम्मेळनम् । प्रथमे ताभ्यां याभ्यां चापूर्वा जगती । द्वितीय उपेन्द्रवज्रा नाम त्रिष्टुप् । तृतीये पुनर्जगती वंशस्था नाम । तुरीये पुनरिन्द्रवज्रा नाम त्रिष्टुप् ॥ १२३ ॥ अहिपतौ च शेते, पृथक् च संव्यूह्य संविभज्य स्वपरिवारैः सह विभज्य रेमे रमते च ॥ १२४ ॥ 'एवच', 'चैव', 'तथैवच' इत्यादिकं समुदितं समुच्चयवचनमिति सम्प्रदायः । अथापि महतां वचनेषु स्वरवर्णादीनामप्यर्थविशेषो भवतीति किञ्चिदिव तत्रतत्र स प्रादर्श्यत । अपरा चात्रोपासना भवति । यत्र 'एव' इत्युच्यते तत्र 'आ+इव' इतीषत् सदृशः बिम्बरूपी भगवानुच्यते । 'च' इति प्रतिबिम्बेन जीवेन समुचितः । 'तथा' इति तकारेण ततो भगवानुच्यते । थकारेणान्तःस्थितो भगवानुच्यते । हीति सर्वदोषहीनः । वायिति बन्धकः । त्विति तामसानां तोदक इति बहुविधैरव्ययैरव्ययं नारायणं बहुधा चिन्तयन्तो वाक्यानि व्याहरन्ति परावर-

---

१. **'पवना–'** इति क्वचित् । २. **'–पतौ हि शे–'** ३. **'–भ्यो मूलरामा–'** इति क्वचित् ।

**परस्परविरोधस्य हानान्निर्णीय तत्वतः ।**
**युक्त्या बुद्धिबलाच्चैव विष्णोरेव प्रसादतः ॥ १२६ ॥**

**बहुकल्पानुसारेण मयेयं सत्कथोदिता ।**
**नैकग्रन्थाश्रयात्[१] तस्मान्नाऽशङ्क्याऽत्र विरुद्धता ॥ १२७ ॥**

**क्वचिन्मोहायासुराणां व्यत्यासः प्रतिलोमता ।**
**उक्ता ग्रन्थेषु तस्माद्धि निर्ण्णयोऽयं कृतो मया ॥ १२८ ॥**

**एवं च वक्ष्यमाणेषु नैवाऽशङ्क्या विरुद्धता ।**
**सर्वकल्पसमश्चायं पारावर्य्यक्रमः[२] सदा ॥ १२९ ॥**

**विष्णोः प्रसादत एव ॥ १२६ ॥ अत्युपादेयत्वज्ञापनार्थं उक्तमेव विशदयति–नैकग्रन्थाश्रयादिति ॥१२७॥ निर्णयकरणे प्रयोजनमाह–क्वचिदिति । ग्रन्थेषु पुराणादिषु । अयमत्रोक्तः ॥ १२८ ॥ पारम्पर्यक्रमः**

विदः । अथापि यथासम्भवं वाक्यान्वयं प्रदिदर्शयिषामः । अत्र एवेति एवमित्यर्थे । यथाऽशेषपुराणेभ्य एवं पञ्चरात्र-संहिताभ्यश्च सत्कथा निर्णीय । यथा वेदेभ्य एवं भारताच्च महारामायणाच्च । अथच यान्यप्रमाणतया परैः परित्यक्तानि तेभ्यः पञ्चरात्रेभ्य एवेति प्रामाण्यमवधारयत्येवकारेण । सप्तविद्यासु सच्छास्त्रेषु परिगणितेभ्यः, अत एव प्रमाणतमेभ्यः पञ्चरात्रेभ्य एव । संहिताबाहुल्यात् पञ्चरात्रेभ्य इति बहुवचनम् । एवमस्य विशेषतो भारतार्थनिर्णयाय प्रवृत्तत्वात् भारतादेव सर्वाः कथा निर्णीयेति भारतस्य प्राधान्यमवधारयति । महारामायणमिति मूलरामायणम् ॥ १२५ ॥ हानात् परिहारं विधाय, तत्वतः यथावत् तत्वं इदमित्थमिति निर्णीय अनेकग्रन्थोपबृंहणेन मयेयं सत्कथोदिता । निर्णयस्य युक्तिमूलम् । युक्तेर्बुद्धिबलम् । तस्यापि मूलं विष्णोरेव प्रसादः । केवलं तस्यैव स्वगुरुत्वात् । प्रसादत एव च । न कस्यापि स्वशक्तिर्नाम । अत एव सती निर्दोषा भगवतो भगवद्भक्तानां च कथा । सर्वशास्त्रमथनेन निर्णीतत्वात्, भगवदनुग्रहमूलत्वाच्च । **'अष्टादशपुराणानां व्याकर्ता तु भवेन्मनुः'** [पा.खं.११५.९७] इति पाद्मे । मनुरिति वायुः । **'ते वायवे मनवे बाधिताय'** इति हि श्रुतिः । संसारबाधितैः शरणमितो बाधित उच्यते । व्याकर्ता तु सामस्त्येन विशेषार्थव्याकरणसमर्थः । मनुस्तु वायुरेव, नान्यस्तादृश इत्यर्थः ॥ १२६–७ ॥ कथासु पुंव्यत्यासः कालव्यत्यासश्च उक्तः । व्यत्यस्ता कथेत्येतत् । क्वचिद् ग्रथने प्रतिलोमता चोक्ता कथिता । । पूर्वापरीकारेणापरपूर्वीकारेण च क्रमव्यत्यासः प्रतिलोमता । सप्तसु प्रथमाया विहितत्वात् तृतीयार्थे वा प्रथमा– असतां मोहाय सत्कथा व्यत्यासेन प्रतिलोमतया चोक्ता ॥ १२८ ॥ वक्ष्यमाणेषु भारतादिकथासन्दर्भेषु च यत्र व्यत्यासप्रातिलोम्यादि दृश्यते । तत्राप्येवं निर्णयो मया कृतः ।

१. **'–श्रया तस्मा–'**

२. **'पारम्पर्यक्रमः'** । वे.ती.पाठोऽपि तथैवेति भाति ।

**पुंव्यत्यासेन चोक्तिः स्यात् पुराणादिषु कुत्रचित् ।**
**कृष्णामाह यथा कृष्णो धनञ्जयशरैर्हतान् ॥ १३०॥**

**शतं दुर्य्योधनादींस्ते दर्शयिष्य इति प्रभुः ।**
**भीमसेनहतास्ते हि ज्ञायन्ते बहुवाक्यतः ॥ १३१॥**

**विस्तारे भीमनिहताः सङ्क्षेपेऽर्ज्जुनपातिताः ।**
**उच्यन्ते बहवश्चान्ये पुंव्यत्याससमाश्रयात् ॥ १३२ ॥**

**विस्तारे कृष्णनिहता बलभद्रहता इति ।**
**उच्यन्ते च क्वचित् कालव्यत्यासोऽपि क्वचिद् भवेत् ॥ १३३ ॥**

**यथा सुयोधनं भीमः प्राहसत् कृष्णसन्निधौ ।**
**इति वाक्येषु बहुषु ज्ञायते[1] निर्ण्णयादपि ॥ १३४ ॥**

**सृष्ट्यादिपारम्पर्यक्रमः । सर्वकल्पसाधारण इति सम्बन्धः ॥ १२९ ॥ क्वचिद् व्यत्यास उक्त इत्युक्तम् । तत्प्रकारं लेशतो दर्शयति– पुंव्यत्यासेनेति ॥ १३०–१ ॥ पुंव्यत्याससमाश्रयात् अन्ये बहवश्च ॥१३२॥ विस्तारे कृष्णनिहताः बलभद्रहता इति, सङ्क्षेप इति शेषः, क्वचिदुच्यन्ते ॥ १३३–४ ॥**

---

तस्मादत्रोक्तेषु भारतरामायणादिविरुद्धता नाऽशङ्क्या । पारावर्यक्रमः क्रमिकः पूर्वापरीभावः ॥ १२९ ॥ कृष्णामाह यथा कृष्णः । अन्यत्र च–**'ततो दुर्योधनो मन्दः सहामात्यः सबान्धवः । निष्ठामापत्स्यते मूढः क्रुद्धे गाण्डीवधन्वनि'** [उ.प.५.१०] इति भारते । यथा वा–**'इत्युक्त्वा राक्षसीं सीतां ग्रसितुं वीक्ष्य चोद्यताम् । श्रीरामः खड्गमुद्यम्य नासाकर्णौ प्रचिच्छिदे'** [उ.खं.२४२.२४६] इति पाद्मे । राक्षसीं शूर्पणखाम् ॥ १३०–१ ॥ एवमन्ये च पुंव्यत्यासमाश्रित्योच्यन्ते । तद् यथा–'विस्तारे कृष्णनिहताः' इत्यादि । यथा वा बलभद्रं प्रति कौरवाः–**'स्थित्युत्पत्तिलयानां त्वमेको हेतुर्निराश्रयः । लोकान् क्रीडनकानीश क्रीडतस्ते वदन्ति हि'** [भाग.१०.१९.४६] इत्यादि ॥ १३२–३ ॥ निर्णयात् उपक्रमादिसमाख्यादिलिङ्गात् । निर्णयात् निर्णयग्रन्थादिति च । अथ निर्णयादपि भारतार्थविनिर्णयात् भागवतादपि । तथाहि भागवते–**'जहास भीमस्तं दृष्ट्वा स्त्रियो भूपाश्च केचन । निवार्यमाणा अप्यङ्ग राज्ञा कृष्णानुमोदिताः'**[१०.८४.४] इति । अन्यत्र च बहुषु निरवकाशवाक्येषु । अनिर्णयावस्थायां ततः दुर्योधनापहसात् पूर्वं

---

१. **'ज्ञायन्ते'**

अनिर्णये तु कृष्णस्य पूर्वमुक्ता[1] गतिस्ततः ।
व्यत्यासास्त्वेवमाद्याश्च प्रातिलोम्यादयस्तथा ॥ १३५ ॥

दृश्यन्ते भारताद्येषु लक्षणग्रन्थतश्च ते ।
ज्ञायन्ते बहुभिर्वाक्यैर्निर्णयग्रन्थतस्तथा ॥ १३६ ॥

तस्माद्[2] विनिर्णयग्रन्थानाश्रित्यैव च लक्षणम् ।
बहुवाक्यानुसारेण निर्णयोऽयं मया कृतः ॥ १३७ ॥

उक्तं लक्षणशास्त्रे च कृष्णद्वैपायनोदिते ।
'त्रिभाषा[3] यो न जानाति रीतीनां शतमेव च ॥ १३८ ॥

'व्यत्यासादीन् सप्त भेदान् वेदाद्यर्थं तथा वदेत् ।
स याति निरयं घोरमन्यथाज्ञानसम्भवम्' ॥ १३९ ॥

**ततः ह्रासकालात् पूर्वम् ॥ १३५ ॥ भारताद्येषु दृश्यन्ते । ते च व्यत्यासप्रातिलोम्यादयः । लक्षणग्रन्थतः, बहुभिर्वाक्यैः ग्रन्थान्तरगतैः बहुभिर्वाक्यैः, तथा निर्णयग्रन्थतः निर्णयग्रन्थादपि, ज्ञायन्ते व्यत्यासादय इति ज्ञायन्ते ॥ १३६–७ ॥ लक्षणग्रन्थानाश्रित्य विनिर्णयग्रन्थादीन् (च) आश्रित्य निर्णयः कृत इत्युक्तम् । विनिर्णयग्रन्थाद्यपेक्षा निर्णयस्य कुत इत्यत आह–उक्तमिति ॥ १३८ ॥ तथा वदेत् स्वमनीषया वदेत् ॥ १३९–४० ॥**

---

कृष्णस्य ततः इन्द्रप्रस्थात् द्वारकां प्रति गतिरुक्तेति दृश्यते । यत्र कालादिनिर्णयमविवक्षित्वा केवलं सम्मुग्धतया कथा निरूप्यते तादृशश्च ग्रन्थोऽनिर्णयपदेनोच्यते । तथाहि भारते–**'गते द्वारावतीं कृष्णे सात्वतप्रवरे नृप । एको दुर्योधनो राजा शकुनिश्चापि सौबलः । तस्यां सभायां दिव्यायामूषतुस्तौ नरर्षभौ'** [स.प.४५.४८] इति । बहुभिश्च निरवकाशैश्च वाक्यैः ॥ १३४–६ ॥ व्यत्यासादीनां लक्षणशास्त्रं चाऽश्रित्यैव ॥ १३७ ॥ समाधिभाषा दर्शनभाषा गुह्यभाषा चेति त्रिभाषाः । यथा वर्तते तथा कथ्यते सा समाधिभाषा । यथा दृश्यते मन्ददृशाम्, यथा वा कथितमन्यदर्शनेषु तथा कथ्यते सा दर्शनभाषा । अन्यदेव कथ्यते निगूढमन्यदेवाभिप्रेयते सा गुह्यभाषा । शतं रीतयः का इत्यन्वेष्टव्यं भवति । शतमिति बहुत्ववचनं वा ॥ १३८ ॥ व्यत्यासादयः सप्त भेदा वक्ष्यन्ते । तथाऽपि त्रिभाषादीनामज्ञानेऽपि

---

१. 'पूर्वमुक्त्वा' २. 'तस्माद्धि निर्णय–' २. 'त्रिभाषां यो–'

इत्यन्येषु च शास्त्रेषु तत्रतत्रोदितं बहु ।
'व्यत्यासः प्रातिलोम्यं च गोमूत्री प्रघसस्तथा ॥ १४० ॥

'उक्षणः सुधुरः साधु[1] सप्त भेदाः प्रकीर्त्तिताः' ।
इत्यादि लक्षणान्यत्र नोच्यन्तेऽन्यप्रसङ्गतः ॥ १४१ ॥

अनुसारेण तेषां तु निर्ण्णयः क्रियते मया ।
तस्मान्निर्ण्णयशास्त्रत्वाद् ग्राह्यमेतद् बुभूषुभिः ॥ १४२ ॥

इतीरिता रामकथा परा मया समस्तशास्त्रानुसृतेर्भवापहा ।
पठेदिमां यः शृणुयादथापि वा विमुक्तबन्धश्चरणं हरेर्व्रजेत् ॥ १४३ ॥

**इति श्रीमदानन्दतीर्थभगवत्पादविरचिते**
**श्रीमहाभारततात्पर्य्यनिर्ण्णये श्रीरामचरिते श्रीरामस्वधामप्रवेशो नाम[2]**
**नवमोऽद्ध्यायः**

—०—

[आदितः श्लोकाः– ८७८+१४३=१०२१]

**इत्यादिलक्षणानि । इत्यादीनां व्यत्यासादीनां लक्षणानि अत्र अस्मिन् ग्रन्थे नोच्यन्ते । अन्यप्रसङ्गतः । श्रीनारायणावतारकथाप्रसङ्गान्निमित्तात् ॥ १४१ ॥ तेषां लक्षणग्रन्थादिनिर्णायकशास्त्राणाम् । बुभूषुभिः श्रेयोऽर्थिभिः ॥ १४२ ॥ [3]श्रीनारायणकथामुक्त्वोपसंहरति– इतीति ॥ १४३ ॥**

इति श्रीमहाभारततात्पर्यनिर्णयटीकायां श्रीवेदाङ्गतीर्थभट्टारकविरचितायां
तात्पर्यदीपिकायां नवमोऽध्यायः

—०—

वेदाद्यर्थं वदेत् । न जानाति च वदेच्च वेदार्थमिति क्रियासमुच्चये चः ॥ १३९ ॥ व्यत्यासोऽनेकविधः– पुंव्यत्यासः, कालव्यत्यासः, देशव्यत्यासः, कथाव्यत्यास इति । व्युत्क्रमेण कथनं प्रातिलोम्यम् । गोमूत्रमिव वक्रगत्या निरूपणसरणिर्गोमूत्री । अन्तराऽन्तरा कथाभागं विसृज्य निरूपणं प्रघसः । कथाभागः प्रघस्यत इति । घस् अदने । पाणिनीयास्तु अदधातोरेव घस्लादेशं मन्यन्ते । प्राद्यत इति प्रघस इति । **'घञपोश्च'** [अ.सू.२.४.३८], **'घासः**

१. **'साधुः'** २. **'उत्तरकाण्डकथानिरूपणं नाम'** ३. **'श्रीरामकथामुक्त्वोपसंहरति'** इति पाठः स्वरसः ।

**प्रघसः'** इति हि पाणिनिनयः । सर्वशास्त्रविरुद्धार्थकथनं प्रघस इत्यपि वदन्ति । गन्धोदकस्य प्रोक्षणमिव कथाया लेशतो निरूपणमुक्षणः । उक्ष सेचने । अंशतः प्रामाण्यमुक्षण इत्यपि वदन्ति । अपेक्षितस्य समग्रस्य निरूपणं सुधुरः । समाधिभाषया सम्यङ् निरूपणं साधु । इत्यादि तत्रतत्रोदितम् । तेषां लक्षणवाक्यानि नोद्ध्रियन्ते । अन्य-प्रसङ्गेन ग्रन्थबाहुल्यभयादिति ॥ १४०–१ ॥ बुभूषुभिः श्रेयस्कामैः । ज्ञानकामैरित्येतत् ॥ १४२ ॥ परा रामकथा । रामकथापरा वेयं कृतिरितीरिता । समस्तशास्त्रानुसृतेः सर्वशास्त्राण्यनुसृत्य । पठेदर्थावधारणपूर्वकम् । अथवा यः स्वय-मसमर्थः पुनरर्थग्रहणे गुरुमुखतः शृणुयादपि ॥ १४३ ॥

**अनधीतव्याकरणा**
**अनपाश्रितसत्तर्कप्रावरणाः ।**
**त्यक्तनिरुक्तशरणा अच्छन्दःस्वच्छाभरणा**
**अनासादितभगवत्करुणाः क्षिपन्तु नास्मिन् स्वकां नासाम् ॥ ✲ ॥**

**चपला शब्दैकरणा**
**अनुपासितसद्गुरुश्रीचरणाः ।**
**धिषणोपमितोरणा विवश्चितान्तःस्फुरणाः**
**खेलातरुणाः करुणापात्रं न्यस्यन्तु नास्मिन् वृथा स्वनासाम् ॥ ✲ ॥**

**आचार्यगोविन्दकृते**
**श्रीमद्भारततात्पर्यनिर्णयस्य ।**
**निर्णिक्ते व्याख्याने निर्णयभावचन्द्रिकाख्याने**
**प्रगतं नवमाध्यायविवरणं सतां हृदयाभरणम् ॥ ✲ ॥**

**इत्याचार्यगोविन्दस्य कृतिषु**
**श्रीमहाभारततात्पर्यनिर्णयपञ्चिकायां**
**निर्णयभावचन्द्रिकायां**
**नवमोऽध्यायः**

—०—

२२-१०-१२

# दशमोऽध्यायः

**[व्यासावतारानुवर्ण्णनम्]**

ॐ ॥ द्वापरेऽथ युगे प्राप्ते त्वष्टाविंशतिमे पुनः ।
स्वयम्भुशर्वशक्राद्या दुग्धाब्धेस्तीरमाययुः ॥ १ ॥

पयोब्धेरुत्तरं तीरमासाद्य विबुधर्षभाः ।
तुष्टुवुः पुण्डरीकाक्षमक्षयं पुरुषोत्तमम् ॥ २ ॥

**ॐ ॥ अवतारान्तरकथां वक्तुमुपक्रमते–द्वापर इत्यादिना । कथान्तरद्योतकोऽथशब्दः । अष्टाविंशतिमे (द्वापरे), वैवस्वतमन्वन्तरे । पूर्वमपि भगवदवतारान्तरे देवैः प्रार्थनायाः कृतत्वात् पुनरिति ॥ १–३ ॥**

---

ॐ ॥ व्यासं वेदव्यासं मेचकभासं मनोज्ञमृदुहासम् ।
सुमनोमनोविलासं सततं प्रणमन्नु भूयासम् ॥ ※ ॥

तृतीयाध्याये किञ्चिदुक्तं कूर्मावतारमत्र प्रस्तूय, व्यासावतारस्तुतिव्याजेन धन्वन्तरेर्मोहिन्याश्चावतारकथां निरूप्य समग्रेणाध्यायेन स्वगुरोर्व्यासस्यावतारकथामाह । अथेति बहूनां युगचक्राणां भ्रमणानन्तरमित्याह । वैवस्वतमन्वन्तरे चतुर्विंशे त्रेतायुगे रामावतारः । अथाष्टाविंशे द्वापरे व्यासावतार इति । अथेति कथान्तरारम्भं चाऽह । ज्ञानस्थिरीकरणाय परममङ्गलं चेदमवतरणमिति चाथेत्याह । अष्टाविंशतिमे अष्टाविंशतितमे । यद्यपि **'नान्तादसङ्ख्यादेर्मट्'**[अ.सू.५.२.४९] इति वैयाकरणाः । अनान्तादपि सङ्ख्यादेरपि क्वचिद् भवति । प्राचां प्रयोगप्राचुर्यात् । तथाहि भागवते–**'धान्वन्तरं द्वादशमं त्रयोदशममेव च'** [१.३.१७] इति सङ्ख्यादेः । **'अवतारे षोडशमे–'** [२०] इति च । **'एकोनविंशे विंशतिमे'**[२३] इत्यनान्तात् । किञ्च 'अष्टाविंशे' इति पर्याप्तम् । अथापि 'अष्टाविंशतिमे' इत्याह । तेनाक्षराधिक्येनास्य युगस्य व्यासवासुदेवावतारहेतुत्वेन महत्तरमाधिक्यं सूचयति । रामावतारात् पूर्वमपि त्रिः व्यासावतारसद्भावात्, रामावतारानन्तरमपि सकृत् पञ्चविंशे द्वापरेऽवतीर्णत्वात्, पुनरपि व्यासावतारार्थमियं प्रार्थनेति सूचयति– पुनरिति । तथाहि स्मरन्ति–**'तृतीये सप्तमे चैव षोडशे पञ्चविंशके । अष्टाविंशे युगे कृष्णः सत्यवत्यामजायत'** इति । **'तृतीयं युगमारभ्य व्यासो बहुषु जज्ञिवान्'** इति च । 'स्वयम्भू–' इति वक्तव्ये 'स्वयम्भु–' इत्याह । अत्र यद् वक्तव्यं तदुक्तं प्रथमाध्याय एव ॥ १ ॥ पयोब्धेरुत्तरं तीरम् । एतेन शाकद्वीपं परितः स्थितस्य क्षीरोदस्योत्तरतीरे श्वेतद्वीपस्थितिरिति ज्ञायते । **'क्षीराब्धेरुत्तरतटे ब्रह्मरुद्रादिदेवताः । विष्णुं समर्चयामासुः पौरुषेण विधानतः'** [उ.खं.२३१.३०] इति पाद्मे ॥ २ ॥

**नमोनमोऽगण्यगुणैकधाम्ने समस्तविज्ञानमरीचिमालिने ।**
**अनाद्यविज्ञानतमोनिहन्त्रे परामृतानन्दपदप्रदायिने ॥ ३ ॥**

**स्वदत्तमालाभुविपातकोपतो दुर्वाससः शापत आशु हि श्रिया ।**
**शक्रे विहीने दितिजैः पराजिते पुरा वयं त्वां शरणं गताः स्म[१] ॥ ४ ॥**

**स्वदत्तमालाभुविपातकोपत इत्यत्र 'मालां गृहीत्वा चरता दुर्वाससा ऐरावतारूढ इन्द्रो दृष्टः । इन्द्रेण प्रणतः सन् तां मालामिन्द्रायादात् । इन्द्रस्तां मालामैरावतमस्तके न्यधात् । स्वमस्तकमवधून्वता ऐरावतेन सा माला भूमौ पातिता । स्वदत्तमालां भूमौ पातितां दृष्ट्वा कुपितेन दुर्वाससा गतश्रीर्भवेतीन्द्रः शप्तः' इति पौराणिकी कथाऽनुसन्धेया ॥ ४ ॥**

---

गुणैकधाम्ने केवलं गुणानामेवाऽश्रयाय, गुणानां मुख्याश्रयाय विलक्षणाश्रयाय च । गुणैरभिन्नस्वरूपाय च । एकं धाम एकधाम । गुणानामेकधामेति विग्रहः । **'पूर्वकालैकसर्वजरत्पुराणनवकेवलाः समानाधिकरणेन'** [अ.सू.२.१.४९] इति पाणिनिस्मरणात् । **'सङ्ख्यार्थस्यैवैकशब्दस्य ग्रहणम्'** इति जयतीर्थवचनम् । **'पूर्वकाल इत्यर्थनिर्देशः । परिशिष्टानां स्वरूपग्रहणम्'** इति तु जयादित्यः । **'एकं सङ्ख्यान्तरे श्रेष्ठे केवलेतरयोस्त्रिषु'** इत्यभिधानम् । धामेति तेजो वा । सूर्यस्तु जडधामा । अयन्तु चिन्मयधामेति । एवमुत्तरत्रापि । समस्तं परिपूर्णम् । अत एव सर्वस्माद् विलक्षणं विशिष्टं च ज्ञानं विज्ञानम् । तादृशमरीचिमालिने विज्ञानभास्कराय । भक्तानामज्ञानतमोनिहन्त्रे । सर्वविलक्षणतया सर्वगुणविशिष्टतया सर्वदोषविदूरतया च विष्णुविषयं ज्ञानं विज्ञानम् । तदभावोऽविज्ञानम् । परं मुख्यवृत्त्याऽमृतपदवाच्यमानन्दपदं मोक्षाख्यम् । सम्प्रति तुष्टूषूणां देवानामानन्दं प्रकर्षेण ददातीति प्रदायी । **'सुप्यजातौ णिनिस्ताच्छील्ये'** [अ.सू.३.२.७८] इति ताच्छील्ये णिनिः । **'व्रते'** [८०] इति स्मरणात् प्रदानं व्रतमस्येति वा णिनिः । **'अभयं सर्वभूतेभ्यो ददाम्येतद् व्रतं मम'** इति हि स्मरन्ति । अनेन विशेषणजातेन प्रसिद्धसूर्याद् वैलक्षण्यमाह । गुरुत्वेन देवतात्वेन च स एव नम्य इति नमोनम इति द्विराह ॥ ३ ॥ भुविपात इत्यलुक् । मालाया भुविपातेन यः कोपस्तस्मात् । भुविपातेन कोपो यस्य तस्य वा दुर्वाससः । **'दुर्वासाः शङ्करस्यांशश्चचार पृथिवीमिमाम् । स ददर्श स्रजं दिव्यामृषिर्विद्याधरीकरे । तां ययाचे वरारोहां विद्याधरवधूं ततः । याचिता तेन तन्वङ्गी मालां विद्याधराङ्गना । ददौ तस्मै विशालाक्षी सादरं प्रणिपत्य तम् । स ददर्श समायान्तमुन्मत्तैरावते स्थितम् । त्रैलोक्याधिपतिं देवं सह देवैः शचीपतिम् । तामात्मनः स शिरसः स्रजमुन्मत्तषट्पदाम् । आदायामरराजाय चिक्षेपोन्मत्तवन्मुनिः । गृहीत्वाऽमरराजेन स्रगैरावतमूर्धनि । न्यस्ता रराज कैलासशिखरे जाह्नवी यथा । मदान्धकारिताक्षोऽसौ गन्धाकृष्टेन वारणः । करेणाऽघ्राय चिक्षेप तां स्रजं धरणीतळे । ततश्चुक्रोध भगवान् दुर्वासा मुनिसत्तमः । मैत्रेय देवराजं तं क्रुद्धश्चैतदुवाच ह'** [१.९.२–११] । **'मया दत्तामिमां मालां यस्मान्न बहुमन्यसे । त्रैलोक्यश्रीरतो मूढ विनाशमुपयास्यति'** [१.९.१४] इत्यादि श्रीविष्णुपुराणे । स्मेति किलेतिवदितिहासनिवेदने ॥ ४ ॥

---

१. 'स्मः'

**त्वदाज्ञया बलिना सन्दधाना वराद् गिरीशस्य परैरचाल्यम् ।**
**वृन्दारका मन्दरमेत्य बाहुभिर्न शेकुरुद्धर्तुमिमे समेताः ॥ ५ ॥**

**बलिना सन्दधानाः बलिना सह सन्धिं कुर्वाणाः ॥ ५ ॥**

---

मन्दरानयनप्रसङ्गो बहुधा पठ्यते शास्त्रेषु । नैकत्रापि प्रायः समानरूपता । तथाहि– **'ततोऽभ्रशिखराकारैर्गिरिशृङ्गैरलङ्कृतम् । मन्दरं पर्वतवरं लताजालसमावृतम् । ... एकादशसहस्राणि योजनानां समुच्छ्रितम् । अधो भूमेः सहस्रेषु तावत्स्वेव प्रतिष्ठितम् । तमुद्धर्तुमशक्ता वै सर्वे देवगणास्तदा । विष्णुमासीनमभ्येत्य ब्रह्माणं चेदमब्रुवन् । भवन्तावत्र कुरुतां बुद्धिं नैःश्रेयसीं पराम् । मन्दरोद्धरणे यत्नः क्रियतां च हिताय नः । सौतिः– तथेति चाब्रवीद् विष्णुर्ब्रह्मणा सह भार्गव । अचोदयदमेयात्मा फणीन्द्रं पद्मलोचनः । ततोऽनन्तः समुत्थाय ब्रह्मणा परिचोदितः । नारायणेन चाप्युक्तस्तस्मिन् कर्मणि वीर्यवान् । अथ पर्वतराजानं तमनन्तो महाबलः । उज्जहार बलाद् ब्रह्मन् सवनं सवनौकसम् । ततस्तेन सुराः सार्धं समुद्रमुपतस्थिरे'** [आ.प.१८.१-१०] इति भारते । **'मन्दराद्रिमुपेत्याथ नानौषधिविराजितम् । एकादशसहस्राणि योजनानां भुवि स्थितम् । नोद्धर्तुमशकंस्ते तं तदानीं तुष्टुवुर्हरिम् । एतद् विदित्वा भगवान् सङ्कर्षणमहीश्वरम् । अजिज्ञपत् तमुद्धर्तुं बद्धमूलं महीधरम् । फूत्कारमात्रेणैकेन स तु सद्यस्तमीश्वरः । बहिश्चिक्षेप तत्स्थानाद् योजनद्वितयान्तरे । अत्याश्चर्यं तदालोक्य हृष्टाः सर्वे सुरासुराः । तदन्तिकमुपाजग्मुर्धावन्तश्च कृतारवाः । बलिनो यत्नवन्तोऽपि परिघोपमबाहवः । उद्धृत्य नेतुं नो शेकुर्विषण्णा विफलश्रमाः । ज्ञात्वा सुरगणान् खिन्नान् भगवान् सर्वदर्शनः । तार्क्ष्यमाज्ञापयामास नेतुं तमुदधिं द्रुतम्'** [वै.खं. वा.मा. ११.४–१०] इति स्कान्दे । भागवते पुनरन्यादृशी कथा–**'ततो देवासुराः कृत्वा संविदं कृतसौहृदाः । उद्यमं परमं चक्रुरमृतार्थे परन्तप । ततस्ते मन्दरगिरिमोजसोत्पाट्य दुर्मदाः । नदन्त उदधिं निन्युः शक्त्या परिघबाहवः । दूरभारोद्वहश्रान्ताः शक्रवैरोचनादयः । अपारयन्तस्तं वोढुं विवशा विजहुः पथि । निपतन् स गिरिस्तत्र बहूनमरदानवान् । चूर्णयामास सहसा भारेण कनकाचलः । तांस्तथा भग्नमनसो भग्नबाहूरुकन्धरान् । विज्ञाय भगवांस्तत्र बभूव गरुडध्वजः । गिरिपातविनिष्पिष्टान् विलोक्यामरदानवान् । ईक्षया जीवयामास निर्जरान् निर्व्रणान् यथा । गिरिं चाऽरोप्य गरुडे हस्तेनैकेन लीलया । आरुह्य प्रययावब्धिं सुरासुरगणैर्वृतः'** [८.६.३२–८] इति । **'तदा देवासुराः सर्वे स्तूयमाना महाचलम् । उत्पाटयेयुरतुलं मन्दरं च ततोऽद्भुतम् । क्षीरार्णवं नेतुकामा अशक्तास्ते ततोऽभवन् । पर्वतः पतितः सद्यो देवदैत्योपरि ध्रुवम् । ....... एवं भग्नोद्यमा जाता असुराः सुरदानवाः । चेतनां परमां प्राप्तास्तुष्टुवुर्जगदीश्वरम् । रक्षरक्ष महाविष्णो शरणागतवत्सल । त्वया ततमिदं सर्वं जङ्गमाजङ्गमं च यत् । देवानां कार्यसिद्ध्यर्थं प्रादुर्भूतो हरिस्तदा । तान् दृष्ट्वा सहसा विष्णुर्गरुडस्योपरि स्थितः । लीलया पर्वतश्रेष्ठमुत्तभ्याऽरोपयत् क्षणात् । गरुत्मति तदा देवः सर्वेषामभयं ददौ'** [माहे.खं.९.७७–८३] इति च स्कान्दे । **'ततः सुरगणाः सर्वे दानवाद्या महाबलाः । उत्पाट्य मन्दरं शैलं चिक्षिपुः पयसान्निधौ'** [उ.खं.२३२.१] इति च पाद्मे । प्रायः परस्परं विरुद्धानीव प्रतीयमानान्येतानि

**तदा त्वया नित्यबलत्वहेतुतो योऽनन्तनामा गरुडस्तदंसके ।
उत्पाट्य चैकेन करेण मन्दरो निधापितस्तं स सह त्वयाऽवहत् ॥ ६ ॥**

**पुनः परीक्षद्भिरसौ गिरिः सुरैः सहासुरैरुन्नमितस्तदंसतः ।
व्यचूर्णयत् तानखिलान् पुनश्च ते त्वदीक्षया पूर्ववदुत्थिताः प्रभो ॥ ७ ॥**

**गरुडेऽनन्तनामप्रवृत्तेर्निमित्तमुक्तम्–नित्यबलत्वहेतुत इति । अनेन च 'अनन्तोढो मन्दरस्तु यदा वैवस्वतान्तरम्[१] । अमृतार्थं सुपर्णोढो रैवतस्यान्तरे मनोः' इति ब्रह्माण्डवचनविरोधः[२] परिहृतः । तत्राप्यनन्तशब्देन गरुडस्यैवोक्तत्वादिति भावः ॥ ६–८ ॥**

---

वचनानि क्वचिद् व्यत्यासेन क्वचित् प्रघसेनोक्षणेन वा शैलीभेदेन संयोजनीयानीति ज्ञापयन् सर्वसङ्ग्रहां कथां स्वयं निरूपयति भगवानाचार्यः– त्वदाज्ञयेत्यादिना । बलिना वैरोचनिना । सन्धाने बीजमप्यनेनैवाऽह– बलिना बलिष्ठेनेति । **'यातुधानैश्च दैतेयैस्तावत् सन्धिर्विधीयताम् । अरयोऽपि हि सन्धेयाः सति कार्यार्थगौरवे'** [८.६.१९–२०] इति भागवते । पुराणेषु मन्दरं शेषश्चालयामासेत्युच्यते । गरुडश्च धृत्वा निनायेति । इन्द्रादयः समेता अपि सुरासुरास्तमुद्धर्तुं धर्तुं वा न शेकुरिति च । तेन ज्ञापितं प्रमेयविशेषमाह– वराद् गिरीशस्य परैरचाल्यम् । अभिमानिविषयमेतत् । 'त्वयाऽभिमन्यमानो मन्दरो भवत्वचाल्यः' इति वरात् । परैः गिरीशादवरैः । अतस्तं मन्दरं धरातळादुत्कीलयितुं भगवान् शेषमाज्ञापयामास । तदेतदुक्तं भारते–**'अचोदयदमेयात्मा फणीन्द्रं पद्मलोचनः'** इति । एवं भगवताऽऽज्ञप्तः स फूत्कारेण भूधरं धरातळादुच्चिक्षेप । तदेतदुक्तं स्कान्दे–**'फूत्कारमात्रेण बहिश्चिक्षेप'** इति । इयं निर्णयेऽनुक्ता कथा । अविवादोऽनुक्तिहेतुरिति भाति । अनिर्णये किल निर्णयस्य प्रसरः । भूमेरुत्कृत्तमपि नोद्धर्तुमपारयन् देवासुराः समेताः । गिरीशस्य वरादेव । तदेतद् भारते स्कान्दे च कथितम् । तदा ते ब्रह्माणमभ्यर्थयन्त । ब्रह्मा च नारायणम् । स च भगवान् गरुडमारुह्याऽजगाम । नन्वनन्त आजगामेत्युच्यते भारते । सोऽयमनन्तो गरुड एवेत्याह– नित्यबलत्वहेतुतोऽनन्तनामा गरुड इति । एतेन बलस्यानन्तत्वं न स्वरूपतः, किन्तु कालत इत्युक्तं भवति । अनन्तवाननन्तः । मत्वर्थीयोऽच् । अनं अननं बलं तनोति विस्तारयतीति वा । तदेतत् स्फुटं स्कान्दे– **'ताक्ष्यमाज्ञापयामास नेतुं तमुदधिं द्रुतम्'** इति । एतेन इयं वैवस्वतमन्वन्तरीया कथेति च स्फुटयति । रैवतमन्वन्तरे किल सुपर्णनामा गरुडोऽवहत् । एतेन द्विः समुद्रमथनमासीदिति सूचितम् । गरुडस्य रूपद्वयमस्तीति च । आगते च ताक्ष्यें भगवान् मन्दरमुज्जहार, उद्धृत्य च गरुडोपरि निदधौ । तथाहि भारते–**'अथ पर्वराजानं तमनन्तो महाबलः । उज्जहार'** इति । अत्रानन्त इति नारायणश्च गरुडश्च । अनन्तबलोऽनन्तो भगवान् नारायणः तं गिरिमुज्जहार । उद्धृत्य च गरुडोपरि निदधौ । अथच महाबलः अनन्तनामा गरुडस्तं गिरिमुज्जहार उद्धारेत्यर्थः । ततोऽनायासेन धृतमन्दरं ताक्ष्यं वीक्ष्य लब्धोत्साहा देवास्तदंसत उन्नमय्य

---

१. **'वैवस्वतान्तरे'** इति कोशपाठः प्रामादिकः ।

२. भागवततात्पर्ये त्विदं ब्राह्मवचनत्वेन पठ्यते [८.६.३९] । तेन **'ब्राह्मवचनविरोधः'** इति पाठः साधुः ।

**पुनश्च वामेन करेण वीश्वरे निधाय तं स्कन्धगतस्त्वमस्य ।**
**अगाः पयोब्धिं सहितः सुरासुरैर्म्मत्थ्ना च तेनाब्धिमथाप्यमत्थ्नाः ॥ ८ ॥**

**कृतश्च [१]कद्रुवास्तनयोऽत्र वासुकिर्न्नेत्रं त्वया कश्यपजः स नागराट् ।**
**ममन्थुरब्धिं सहितास्त्वया सुराः सहासुरा दिव्यपयो घृताधिकम् ॥ ९ ॥**

**नेत्रं पाशः । दिव्यपयः, विकाररहितत्वाद् दिव्यक्षीरमब्धिरूपम् । क्षीराब्धिमिति यावत् ॥ ९–११ ॥**

स्वयं धर्तुं, धृत्वा च नेतुं प्रायतन्त । प्रयत्य च भग्नगात्रा अभवन् । सेयं कथा भागवतोक्ता–**'मन्दरगिरिमुत्पाट्य दुर्मदा उदधिं निन्युः'** इति । उत्पाट्येति गरुडांसत उन्नमय्येत्यर्थः । निन्युरिति नयाम इति मेनिर इत्यर्थः । अत एव दुर्मदा इत्युक्तम् । पुनः परीक्षद्भिरिति । यद्येको गरुडः प्रभवति गिरिमुद्धर्तुं किमिति वयं समेता न प्रभवाम इति परीक्षद्भिः । परीक्षणं च लोकशिक्षार्थमेवेति परस्मैभाषयाऽह । अन्यत् स्पष्टम् । या पुनर्हरिवंशोक्ता समुद्रमथनकथा [भ.प.३०] सा रैवतमन्वन्तरीया । भागवतोक्ता वैवस्वतमन्वन्तरीया । अथापि रैवतमन्वन्तरीयामपि कथां सूचयितुं सुपर्णपदमुपादत्त भगवान् भागवतकारः–**'अवरोप्य गिरिं स्कन्धात् सुपर्णः पततां वरः । ययौ जलान्त उत्सृज्य हरिणा स विसर्जितः'** [८.६.३९] इति । **'अमृतार्थं सुपर्णोढो रैवतस्यान्तरे मनोः'** इति हि स्मरन्ति । एतेन यन्नृसिंहपुराणवचनम्–**'बलिना चोद्धृतो राजन् मन्दराख्यो महागिरिः । क्षीराब्धौ क्षेपितश्चैव तेनैकेन नृपोत्तम'** [३८.१३] इति, तत्र बलिना वैरोचनिनेति नार्थः । किन्तु बलिना गरुडेनेत्येवार्थ इति सूचितम् । एतदर्थमेव **'नित्यबलत्वहेतुतः'** इति पदमुपादत्त ॥ ५–७ ॥ वीश्वरे पक्षिपतौ गरुडे । अथ पयोब्धौ मन्दरस्य क्षेपानन्तरम् । मथ्ना मन्थानभूतेन तेन मन्दरेण त्वमप्यमथ्नाः ॥ ८ ॥ सर्पा इति सरीसृपसामान्यवचनम् । तत्र फणायुक्ता नागाः । कश्यपकद्रुवोस्तनयो वासुकिर्नेत्रं कृतः । मन्थानरज्जुत्वेन स्वीकृतः । **'नेत्रं मथिगुणे वस्त्रभेदे मूले द्रुमस्य च । रथे चक्षुषि–'** इत्यभिधानम् । **'काद्रवेयास्तु बलिनः सहस्रममितौजसः । सुपर्णवशगा ब्रह्मन् जज्ञिरे नैकमस्तकाः । तेषां प्रधानभूतास्तु शेषवासुकितक्षकाः'** [१.२१.२०] इति श्रीविष्णुपुराणे । **'यास्तु शेषास्तदा कन्याः प्रतिजग्राह कश्यपः । त्रयोदश महाभागः सर्वास्ता लोकमातरः । कद्रूर्माता च नागानाम्'**[म.भा.५५.७] इति वायुप्रोक्ते । ननु तर्हि भागवतविरोधः । तत्र हि नागानां पिता तार्क्ष्यो नाम प्रजापतिः श्रूयते । तथाहि तद्वचनम्– **'तार्क्ष्यस्य विनता कद्रूः'** [६.६.२१] इति, **'कद्रूर्नागाननेकशः'**[६.६.२२] इति च । नागजननी सुरसोक्ता रामायणे । सत्यं सुरसाऽपि नागजननीत्युच्यते । कद्रूरपि । अथापि कश्चनावान्तरभेदो ज्ञायते– एकशिरसां नागानां जननी सुरसा । अनेकशिरसां कद्रूरिति भाति । क्वचित् सृष्ट्यन्तरविवक्षयाऽप्यन्यथोच्यते । विवृतमेतत् सप्तमे [७.४] । उक्तं च विष्णुपुराणे– **'युगेयुगे भवन्त्येते दक्षाद्या मुनिसत्तम । पुनश्चैवं विरुद्ध्यन्ते विद्वांस्तत्र न मुह्यति'**[प्र.अं.१५.८३] इति । युगेयुगे प्रतिमन्वन्तरमित्यर्थः । एवं

१. **'कद्रोस्तनयो–'**

**नैच्छन्त पुच्छं दितिजा अमङ्गलं तदित्यथाग्रं जगृहुर्विषोल्बणम् ।**
**श्रान्ताश्च[1] तेऽतो विबुधास्तु पुच्छं त्वया समेता जगृहुस्त्वदाश्रयाः ॥ १० ॥**

**अथातिभारादविशत् सुकाञ्चनो गिरिः स पाताळमथ[2] त्वमेव ।**
**तं कच्छपात्मा त्वभरः स्वपृष्ठे ह्यनन्यधार्य्यं पुरुलीलयैव ॥ ११ ॥**

**उपर्य्यधश्चाऽत्मनि नेत्रगोत्रयोस्त्वया परेणाऽविशता समेधिताः ।**
**ममन्थुरब्धिं तरसा मदोत्कटाः सुरासुराः क्षोभितनक्रचक्रम् ॥ १२ ॥**

**श्रान्तेषु तेष्वेक उरुक्रम त्वं[3] सुधारसाप्त्यै मुदितो ह्यमत्थ्नाः ।**
**तदा जगद्ग्रासि विषं समुत्थितं त्वदाज्ञया वायुरधात् करे निजे ॥ १३ ॥**

**क्षोभितनक्रचक्रम्, क्षोभितजलचरसमूहं यथा भवति तथा । नक्रशब्दः सर्वजलचरोपलक्षकः ॥ १२–४ ॥**

---

वासुकेर्बहुधा जननेऽपि कश्यपात् कद्रवां जात एवात्र विवक्षित इति ज्ञापयितुमेव 'कद्रवास्तनयः' इति 'कश्यपजः' इति विशेषणमुपादत्त भगवत्पादः । कुत्सितं द्रवतीति कद्रूः । केन शिरसा द्रवतीति वा । स्वलोके वसतां सुखदो वासुकिः । **'वासुकिर्वाससुखदः'** इति पौराणं निर्वचनम् । घृतांशाधिकं दिव्यपयः । दिव्येन पयसा घृतेन चाधिक-मुत्कृष्टमित्येकं पदं वा । **'रसोत्तमैर्विमिश्रं च ततः क्षीरादभूद् घृतम्'** [आ.प. १८.४० ] इति हि भारते ॥ ९ ॥ नैच्छन्त । अथ तस्मादेव अथाग्रं मङ्गलत्वेन स्वाभिमतमग्रं जगृहुः । तेन श्रान्ताश्च बभूवुः । नैच्छन्तेत्यात्मनेभाषया तेषामात्मगतमहङ्कारातिशयमाह । विबुधास्तु । तुना तेषामहङ्काराभावं विवेकातिशयं भगवदाज्ञानुवर्तनं चाऽह । अत एव हि ते विबुधाः ॥ १० ॥ सुकाञ्चनो बहळकाञ्चनः । अथ ततस्त्वमेव त्वभरः । तव कच्छपत्वं मन्दरभरणं च लीला-मात्रमिति तुनाऽऽह । तदेव स्फुटमाह– पुरुलीलयैव । पुरुधा लीला विदधतस्तवायमेको लीलालेश इत्यर्थः ॥ ११ ॥ उपर्यधश्च । **'क्षीरोदमध्ये भगवान् कूर्मरूपी स्वयं हरिः । मन्थनाद्रेरधिष्ठानं भ्रमतोऽभून्महामुने । रूपेणान्येन देवानां मध्ये चक्रगदाधरः । चकर्ष नागराजानं दैत्यमध्येऽपरेण च । उपर्याक्रान्तवाञ्छैलं बृहद्रूपेण केशवः । तथाऽपरेण मैत्रेय यन्न दृष्टं सुरासुरैः । तेजसा नागराजानं तथाऽऽप्यायितवान् हरिः । अन्येन तेजसा देवानुपबृंहितवान् प्रभुः'**[प्र.अं.९.८८–९१] इति श्रीविष्णुपुराणे । मदोत्कटाः उत्साहभरिताः । **'सम्प्रोदश्च कटच्'**[अ.सू.५.२.२९] इति वैयाकरणाः । सङ्कटम्, प्रकटम्, उत्कटम्, विकटं च । उच्चैः कटतीति वा । कटे आवरणे । कटी गतौ वा । नक्र इति यादसां सामान्य-वचनम् । न क्रामति भूमाविति निर्वचनसाम्यात् । **'नक्रो यादसि'** इति चाभिधानम् । क्षोभितं नक्राणां चक्रं यत्र

---

१. **'श्रान्तास्तु ते–'** २. **'पातालमथ'** ३. **'–क्रमस्त्वम्'**

**कलेः स्वरूपं तदतीव दुष्षहं[१] वराद् विधातुः सकलैश्च दुःस्पृशम् ।**
**करे विमत्थ्यास्तबलं विधाय ददौ स किञ्चिद् गिरिशाय वायुः ॥ १४ ॥**

**स तत् पिबत्[२] कण्ठगतेन तेन निपातितो मूर्च्छित आशु रुद्रः ।**
**हरेः करस्पर्शबलात् स सञ्ज्ञामवाप नीलोऽस्य [३]गळस्तदाऽसीत् ॥ १५ ॥**

**तत्पिबत्कण्ठगतेन तद् विषं पिबन्तं कण्ठं गतेन (तेन) विषेण । पिबदिति शत्रन्तं भिन्नं वा पदम् । नुमभावश्छान्दसः ॥ १५ ॥**

---

तमुदधिं ममन्थुः । क्रियाविशेषणं वा । **'उपर्यधश्चाऽत्मनि नेत्रगोत्रयोः परेण ते प्राविशता समेधिताः । ममन्थुरब्धिं तरसा मदोत्कटा महाद्रिणा क्षोभितनक्रचक्रम्'**[८.७.१३] इति भागवते ॥ १२–१३ ॥ कलेः स्वरूपम् । अधिष्ठानं शरीरम् । कलिनाऽभिमन्यमानं च । दुःषहमिति सप्तमाध्याये [३२] विवृतम् । **'वायुरस्मा उपामन्थत् पिनष्टि स्म कुनन्नमा । केशी विषस्य पात्रेण यद् रुद्रेणापिबत् सह'** [ऋ.सं.१०.१३६.७] इति मन्त्रवर्णं मनसि निधायाऽह– करे विमथ्य । वायुरस्मै रुद्राय विषमुपामन्थत्, पिनष्टि स्म अपिनट् च । कुत्सितं नदन्तीति कुनदो दुर्भाषिणः । तान् नमयन् कुनन्नमा । केशौ ब्रह्मरुद्रावस्य स्त इति केशी । तन्मध्यगतत्वाद् वायोः । ककारो विष्णुवचनः । **'अकय-प्रविसम्भूमसखहा विष्णुवाचकाः'** इति स्मरणात् । तेनैव केवलमीशवानयम् । को ब्रह्मा नारायणो वा ईशो येषां ते रुद्राद्याः केशाः । नियम्यतया तद्वानयम् । स्वयं ककारवाच्यः, ईशवांश्च नारायणेन । को ब्रह्मा, ईशो नारायणः । तावस्य स्तः विषप्राशनेऽनुमन्तारौ तत्प्रभावज्ञाविति च । प्रशस्तकेशवांश्च । केशाः अंशवः । प्रकाशमानरश्मिजालसंवृतश्च केशी । विषस्य पात्रेण, स्वर्णपात्रे तद् विषं निधायेत्यर्थः । वक्ष्यति हि भगवत्पादः– **'निधाय पात्रे तपनीयरूपे'** इति । रुद्रेण सह अपिबत् । रुद्राय मथित्वा किञ्चिद् ददौ । स्वयं च समग्रमपिबदिति । यदपिबत् तस्मात् केशी कुनन्नमा चेति । भारते चैतद् वायोर्विषपानं किञ्चिदिव सूचितम् । तथाहि मोक्षधर्मे–**'अमृतोत्पादने पुनर्भक्षणेन वायु-समीकृतस्य विषस्य'** [शां.प.३५१.२७] इति । अस्य वाक्यशेषस्य **'नीलकण्ठत्वमुपगतः'** [२६] इति पूर्ववाक्ये-नान्वयः । तदेवं भारते सङ्क्षिप्योक्तं भारततात्पर्यनिर्णये विस्तृत्य जगादेति सर्वं सुन्दरम् ॥ १४ ॥ स गिरिशः तद् वायुना दत्तं विषं निर्विशङ्कं पिबत् अपिबत् । अक्षरलोपेन विधातृवरबलेन दुःषहस्य विषस्य निग्रहणे शिवस्यापि शक्ति-लोपः समजनीति सूचयति । पिबत् पिबन्निति वा । अत्रापि पुंस्त्वलोपः शक्तिलोपसूचनायैव । तद् विषं पिबन् कण्ठः तत्पिबत्कण्ठ इति समस्तं वा पदम् । यथा पाने कण्ठस्योपकरणत्वं केवलम् । न स्वातन्त्र्यम् । एवं भगवदिच्छा-नुगुणं विषपाने उपकरणमात्रं भवो बभूवेति भावः । अत्रैते श्लोका भवन्ति– **'ध्यात्वा नारायणं देवि हृदये गरुड-ध्वजम् । उद्यदादित्यसङ्काशं शङ्खचक्रगदाधरम् । श्रीभूमीसहितं देवं तप्तकाञ्चनकुण्डलम् । एकाग्रमनसा ध्यात्वा**

---

१. **'दुस्सहम्'** २. **'पिबन्'** ३. **'गलस्त–'**

अथ त्वदाज्ञां पुरतो निधाय निधाय पात्रे तपनीयरूपे ।
स्वयं च निर्म्मत्थ्य[1] बलोपपन्नं पपौ स वायुस्तदु चास्य[2] जीर्ण्णम् ॥ १६ ॥

अत्यल्पपानाच्च बभूव शूला शिवस्य शीर्ष्णश्च[3] करावशिष्टम् ।
अभूत् कलिः सर्वजगत्सु पूर्ण्णं पीत्वा विकारो न बभूव वायोः ॥ १७ ॥

कलेः शरीरादभवन् कुनागाः सवृश्चिकाः श्वापदयातुधानाः ।
अथ त्वयाऽब्धौ तु विमत्थ्यमाने सुराऽभवत् तामसुरा अवापुः ॥ १८ ॥

**तदुत, तस्मिन् काले तच्च अस्य जीर्णमुत जीर्णमेव ॥ १६ ॥ अस्य रुद्रस्य करावशिष्टं विषं कलिरभूत् कलिदेहोऽभूत् । स च कलिः सर्वजगत्सु, व्याप्त इति शेषः । वायोः पूर्णं पीत्वा विकारो न बभूव ॥ १७–२९ ॥**

---

**सर्वदुःखहरं प्रभुम् । नामत्रयं महामन्त्रं जप्त्वा भक्त्या समन्वितः । तद्विषं पीतवान् घोरमाद्यं सर्वभयङ्करम् । नामत्रयप्रभावाच्च विष्णोः सर्वगतस्य वै । विषं तदभवज्जीर्णं लोकसंहारकारकम्'** [उ.खं.२३२.१५–८] इति पाद्मे पार्वतीं प्रति शिववचनम् ॥ १५ ॥ तपनीयरूपे काञ्चनमये । वरबलोपपन्नमपि स्वयं निर्मथ्य गिरिशाय ददौ । स्वयं च पपौ । उकारः कोपवचनः । यत् पातारं सद्यो नाशयति तादृशं निहीनमपि विषमस्य जठरे जीर्णमेवेति विस्मये वा । सम्बोधने वा । हे भगवन् तदपि त्वदनुग्रहबलाज्जीर्णमेवेति । **'उ सम्बोधनरोषोक्त्योरनुकम्पानियोगयोः । पदस्य पूरणे पादपूरणेऽपि च दृश्यते'** इति मेदिनी ॥ १६ ॥ न केवलं गळो नीलो बभूव । शीर्ष्णः शूला च बभूव । शिवकरावशिष्टं पूर्णं सर्वं कलिर्बभूव । कलिनाऽभिमन्यमानमभूत् । सर्वजगत्सु पूर्णं च बभूव । पूर्णं समग्रं पीत्वाऽपि वायोर्न विकारो बभूव ॥ १७ ॥ कलेः शरीरस्थानीयाद् विषात् । कुनागाः शेषवासुक्याद्यतिरिक्ता दुष्टनागाः । कुनागाः सवृश्चिका इति विषजन्तुसमाहारः । नात्र केवलं फणावन्तो नागाः । क्रूराचरणा विषदशनाः सर्वेऽपि नागाः । अत एव कुनागा इत्याह । **'नागः पन्नगमातङ्गक्रूराचारेषु तोयदे'** इत्यभिधानम् । नगेषु दुर्गमेषु पर्वतादिषु भवन्तीति नागाः । अथ विषमुद्गिरन्तो जलचरा वनस्पतयश्च नागपदेनैवोपलक्ष्यन्ते । यद्यपि क्रूराचारवाचिना नागपदेन शक्यं वृश्चिका अप्युपसङ्ग्रहीतुम् । अथापि नागा मुखविषाः, वृश्चिकास्तु पुच्छविषा इति विशेषमवगमयितुं पृथङ्निर्देशः । वृश्चन्तीति वृश्चिकाः । ओ व्रश्चू छेदने । ततः किकन् । किक इति कातन्त्रादयः, ये स्वरपरिभाषां न बहुमन्यन्ते । अथ निर्विषानथापि हिंस्रान् दुष्टजन्तूनाह– श्वापदयातुधानाः । श्वापदाः सिंहव्याघ्रादयः । **'व्याघ्रादयो वनचराः पशवः श्वापदाः**

---

१. **'स्वयं त्वनिर्मथ्य'** २. **'–स्तदुतास्य'** । वे.ती. पाठोऽपि तथा ।

३. **'शीर्ष्ण्यस्य करा–'** । वे.ती.पाठोऽपि तथा ।

**उच्चैःश्रवा नाम तुरङ्गमोऽथ[१] करी तथैरावतनामधेयः ।**
**अन्ये च दिक्पालगजा बभूवुर्वरं तथैवाप्सरसां सहस्रम् ॥ १९ ॥**

**तथाऽयुधान्याभरणानि चैव दिवौकसां पारिजातस्तरुश्च ।**
**तथैव साक्षात् सुरभिर्निशेशो बभूव तत् कौस्तुभं लोकसारम् ॥ २० ॥**

**स्मृताः'** इति हलायुधः । यातुधाना राक्षसाः । **'यातूनि यातुधानाः क्रव्यादा राक्षसाश्च रक्षांसि'** इति च । स्वभावसाम्यात् सहोक्तिः । आकृतितो द्विपदा अपि स्वभावतश्चतुष्पदायन्त इति ज्ञापयितुं च । वस्तुतश्चतुष्पदेभ्योऽपि निकृष्टा इति पश्चान्निर्देशः । चतुष्पदा बुभुक्षया जिघांसेयुः । द्विपदा द्वेषेणापि । श्वान इवाऽक्रमितुं पद्यन्त इति श्वापदाः । पद गतौ । सदा कलहाय यान्तीति यातूनि रक्षांसि । तेषु प्रधाना यातुधानाः । अथच अविद्यमानमपि यापयति प्रापयतीति यातुरिन्द्रजालप्रयोगः । 'ಜಾದು' इति भाषायाम् । यातुं दधत इति यातुधानाः । **'प्रस्कन्नं पिबतः पाणेर्यत्किञ्चिज्जगृहुः स्म तत् । वृश्चिकाहिविषौषध्यो दन्दशूकाश्च ये परे'** [८.७.४६] इति भागवते । सुराद्युत्पत्तौ पूर्वापरीभावः पुराणेषु बहुधा दृश्यते । अत उत्पत्तिक्रममाह– अथ विषोत्पत्त्यनन्तरं सुराऽभवदित्यादि ॥ १८ ॥ अथ सुराया भवनानन्तरम्, उच्चैःश्रवाः बभूव सम्बभूव । अथ तुरङ्गमसम्भवनानन्तरं करी तथा, करी च, ऐरावतनामधेयो बभूव । ननु विस्मृतपूर्वकथानामियं कथा भवति । ऐरावतोपरिस्थितमेवेन्द्रं दुर्वासाः शशाप । तत् कथमब्धौ विमथ्यमाने सतीदानीमैरावतो बभूवेत्युच्यते? अयि भोः पुराणसम्प्रदायानभिज्ञ, शृणु सावधानम् । सर्वमपि पूर्वमासीत् । ऐरावतोऽप्यासीत् । उच्चैःश्रवा अप्यासीत् । चन्द्रमा अप्यासीत् । नह्यविद्यमाना इदमुपज्ञं व्यजायन्तेत्युच्यते । किन्तु विद्यमाना एव पुना रूपान्तरेण प्रादुरभवन्निति । क्वचिद् देवानां पुनर्भवो नाम पूर्वरूपस्यैवोपचयः । क्वचिद् रूपान्तरेण स्थितिः । क्वचिद् रूपान्तरेणैकीभावश्च । तस्मान्न कोऽप्युपद्रवः । अन्ये च सप्त दिक्पाला गजाः । दिक्पालानां वा गजाः । आग्नेयादिषु क्रमेण पुण्डरीको वामनः कुमुदोऽञ्जनः पुष्पदन्तः सार्वभौमः सुप्रतीकश्च । **'ऐरावतश्च नागेन्द्रो हरिश्चोच्चैःश्रवाः पुनः । द्वितीयावर्तनाद् राजन्नुत्पन्नाविति नः श्रुतम्'** [३८.२५] इति श्रीनृसिंहपुराणे । **'तृतीयावर्तनाद् राजन्नप्सराश्च सुशोभनाः । चतुर्थात् पारिजातश्च उत्पन्नः स महाद्रुमः । पञ्चमाद्धि हिमांशुस्तु प्रोत्थितः क्षीरसागरात्'** [२६–२८] इति च । ऐरावतोच्चैःश्रवसाविन्द्र आप । नन्वन्यथाऽपि स्मर्यते–**'तत उच्चैःश्रवा नाम हयोऽभूच्चन्द्रपाण्डुरः । तस्मिन् बलिः स्पृहां चक्रे नेन्द्र ईश्वरशिक्षया'** [भाग.८.८.३] इति च । कोऽत्र विरोधः? बलिः स्पृहां चक्रे । किन्तु नाऽप । इन्द्रः न स्पृहां चक्रे, किन्त्वाप । कुतः? ईश्वरशिक्षया । हरिणा तथाऽनुशासनादित्यर्थः । अर्थावगमे विरोधस्य गर्भ एव स्रवति । अन्ये दिक्पालगजा तत्तद्देवानाम् । अप्सरसां सहस्रं सर्वेषां देवानां स्वमिति विवेकः । अनावृता हि ताः सर्वानपि हितानपिहितान् रमयन्ति । अथापीन्द्र एव मुख्यः स्वामी ॥ १९ ॥ दिवौकसामायुधान्याभरणानि च । चकारादप्सरसां चाभरणानि । एवकारेण तेषां दिव्यत्वमाह । दिवौकसामेव योग्यानीति । पारिजातस्तरुश्च दिवौकसाम् । सुरभिर्देवानामृषीणां च । इन्दिरा भगवद्वक्षोमन्दिरा बभूव, कौस्तुभं चेति वक्ष्यति । यथा ऐरावतादयः सक्षाद् बभूवुः, न यातुधानादय इव

१. **'तुरङ्गमोऽभूत् करी'**

**अथेन्दिरा यद्यपि नित्यदेहा बभूव तत्रापरया स्वतन्वा ।**
**ततो भवान् दक्षिणबाहुना सुधाकमण्डलुं कलशं चापरेण ॥ २१ ॥**

**प्रगृह्य तस्मान्निरगात् समुद्राद् धन्वन्तरिर्न्नाम हरिन्मणिद्युतिः ।**
**ततो भवद्धस्तगतं दितेःसुताः सुधाभरं कलशं चापजह्नुः ॥ २२ ॥**

**मुक्तं त्वया शक्तिमताऽपि दैत्यान् सत्यच्युतान् कारयता[1] वधाय ।**
**ततो भवाननुपममुत्तमं वपुबर्भूव दिव्यप्रमदात्मकं त्वरन् ॥ २३ ॥**

**श्यामं नितम्बार्पितरत्नमेखलं जाम्बूनदाभाम्बरभृत् सुमद्ध्यमम् ।**
**बृहन्नितम्बं कलशोपमस्तनं सत्पुण्डरीकायतनेत्रमुज्ज्वलम् ॥ २४ ॥**

परम्परया, तथैव सुरभिः कामधेनुरपि ॥ २० ॥ ननु नित्यानामपि चन्द्रादीनां शक्यो देहतः सम्भवः । कथमिन्दिरा नित्यदेहा सम्बभूव? आह–यद्यपि नित्यदेहा । स्वरूपतन्वा । यथा भगवान् । सुधापरिवेषणार्थं कमण्डलुं सुधापूर्णं कलशं च । अपरेण वामबाहुना ॥ २१ ॥ प्रकाशं गृहीत्वा । यथा दैत्या अपि स्फुटं पश्येयुः । दैत्यानां प्रचोदनाय गृहीत्वा । देवेषु प्रणयेन गृहीत्वा । न केवलं जले किन्तु धन्वनि निर्जलेऽपि देशे तरिरिवायं तारयतीति धन्वन्तरिः । धनुरुदन्तोऽपि वर्तते । धनुर्धरेऽपि पठ्यते । धनूनां धृतधनुषां रक्षसामन्तं रातीति वा । धनुरिवेति धनुरामयः । तमन्तयति रमयति रमते चेति वा । अन्तं राति वा । हरिन्मणिः मरतकम् । दितेःसुता इत्येकं वा पदम् । अलुगाक्रोशे । सुधां भरतीति सुधाभरः सुधापूर्णः । दौर्लभ्ये चः । सुधापूर्णत्वादेव दुर्लभं कलशमपजह्नुः । अत एव पूर्वं प्रगृह्येत्युक्तम्, तेषां चक्षुर्दर्शं गृहीत्वेति ॥ २२ ॥ नेदं मायानिर्मितं प्राकृतं वा वपुः । किन्तु भवान् स्वयमेव वपुर्बभूव । स्वरूपदेहत्वात् । बभूव प्रादुर्बभूव । तथाहि क्षीरस्वामी–**'भूरयं काप्यभूतप्रादुर्भावे, क्षीरभोजिन्याः श्रुतन्धरः पुत्रो भवति, जायत इत्यर्थः'** इति । त्वरा च देवानां प्रयोजनायेति त्वरन्नित्याह । ञित्वरा सम्भ्रमे । सम्भ्रम आशुकारिता । पूर्वार्धमिन्द्रवज्राबद्धं त्रैष्टुभम् । तृतीयः पादो रुचिराबद्ध आतिजागतः । जभौ सजौ गश्च हि रुचिरा । तुरीयः पादो वंशस्थाबद्धो जागतः । अतिरुचिरेयं छन्दसां संसृष्टिः । आहत्य सप्तचत्वारिंशदक्षरेति निचृज्जगती । अथवा पूर्वार्धे त्रिष्टुप् । उत्तरार्धे निचृदतिजगती, भुरिग्जगती वा । एवमन्यत्राप्यूह्यम् ॥ २३ ॥ श्यामम् । प्राप्तषोडशवर्षा अनुपमसुषमा अप्रसूताऽङ्गना श्यामेत्युच्यते । नितम्बे अर्पिता प्रापिता मेखला । ऋ गतिप्रापणयोः । यद्यपि स्त्रीकट्याः पश्चाद्भागो नितम्बः उच्यते, पुरोभागो जघनमुच्यत इति कोशकाराः । अर्थविशेषविवक्षायां स्यादेतत् । इतरत्र नितम्बः कटिर्जघनमिति समानार्थानि पदानि । निर्वचनसाम्यात् । तथाहि–नितरां निभृतं वा तम्यते तरुणैरिति नितम्बः । तमु काङ्क्षायाम् । नितरां ताम्यति

१. 'कारयितुं वधाय'

**समस्तसारं परिपूर्णसद्गुणं दृष्ट्वैव तत् सम्मुमुहुः सुरारयः ।**
**परस्परं तेऽमृतहेतुतोऽखिला विरुद्ध्यमानाः प्रददुः स्म ते करे ॥ २५ ॥**

**समं सुधायाः कलशं विभज्य निपाययास्मानिति वञ्चितास्त्वया ।**
**धर्म्मच्छलं पापजनेषु धर्म्म इति त्वया ज्ञापयितुं तदोक्तम् ॥ २६ ॥**

**यद्यत् कृतं मे भवतां यदीह संवाद एवोद्विभजे सुधामिमाम् ।**
**यथेष्टतोऽहं विभजामि सर्वथा न विश्वसध्वं मयि केनचित् क्वचित् ॥ २७ ॥**

---

सुरतसम्मर्देनेति वा । तमु ग्लानौ । कट्यते आव्रियते वाससेति कटिः । कटति वर्षति यूनामभीष्टं वा । कटे वृष्टावावरणे च । कटचते गम्यत आभ्यामिति वा कटी । कटी गतौ । हन्यते जेघ्नीयत इति जघनम् । **'हनो जघ च'** [स.कं.२.२.१९१] इति भोजः । तदेवं नितम्ब इति स्त्रीपुंसकटिसामान्यवचनं नपुंसि च भवतीति सूचयितुमेवान्यत्राऽचार्यः प्रायुङ्क्त–**'जाम्बूनदाम्बराधारं नितम्बं चिन्त्यमीशितुः'** इति । स्त्रीकटिभूषणं मेखलेत्युच्यते । पुंस्कटिभूषणं शृङ्खलम् । स्त्रीकट्यां वस्त्रग्रथनं मेखलेति क्षीरस्वामी । अत्रापि स्त्रीनितम्बरसिकाः प्रभेदानाचक्षते । तद् यथा–**'एका यष्टिर्भवेत् काञ्ची मेखला त्वष्ट यष्टिकाः । रशना षोडश ज्ञेयाः कलापः पञ्चविंशकः'** इति । नात्र विशेषविवक्षा । जाम्बूनदाभाम्बरं पीताम्बरम् । अथ चोपरि निबद्धेन जाम्बूनदाभरणेन मेखलादिनाऽऽभातीति तादृशं चाम्बरम् । सुमध्यमं तनुतरावलग्नम् । सत् अम्लानं विकचं च यत् पुण्डरीकमीषद्रक्तं कमलम् । पुण्डरीकं सिताम्भोजमिति वदन् भ्रान्तः । **'कप्यासं पुण्डरीकम्'** इति श्रुतिः । **'कप्यासरक्तपद्माक्षः'** इति च भाष्यम् । सदिति भिन्नं वा पदम् । निर्दुष्टं परिपूर्णसद्गुणं च वपुः ॥ २४ ॥ अत एव समस्तादपि नारीगणात् सारं सुन्दरतरम् । सम्मुमुहुः, तस्यां धर्मविरुद्धां रिरंसामदम्यां मनसा दधुरित्यर्थः । **'सम्मोहोऽधर्मकामिता'** इति हि स्मरन्ति । सुधायाः कलशं समं समेत्य ते करे प्रददुः । प्रीतिमूढा ददुरित्यर्थः । त्वं समं विभज्यास्मान् परस्परं विरुद्ध्यमाना यथा अनुरुध्यमानाः स्याम तथा नियम्य पाययेति वदन्तः । कथं विरुध्यमानाः? अनूपसृष्टस्यैव रुधेर्दिवादित्वमात्मनेभाषत्वं चानुमन्यन्ते वैयाकरणाः– अनुरुध्यमाना इति । तेन विरुन्धन्त इति वक्तव्यम् । सत्यं वक्तव्यम्, यदि केवलकर्तरि स्यात् । कर्मकर्तरि चायं प्रायुज्यत विरुध्यमाना इति । त एव हि विरुन्धन्ति । त एव च विरुद्ध्यन्ते । नन्वथापि न युक्तम् । **'परस्परोपपदाच्चेति वक्तव्यम्'** इति वार्तिकविरोधात् । परस्परमित्येतदुपपदाद्धातोरात्मनेपदं न भवतीति किल तदर्थः । अत्र तु परस्परं विरुद्ध्यमाना इति पठ्यते । तत् कथमात्मनेभाषत्वमिति? भ्रान्तोऽसि । कर्मव्यतीहारवचनाद् धातोरत्राऽत्मनेपदं निषिध्यते–**'कर्तरि कर्मव्यतीहारे'** [अ.सू.१. ३.१४] इति । यत्रान्यसम्बन्धिनीं क्रियामन्यः करोति स किल कर्मव्यतीहारः । तेन न कर्मव्यतीहारेऽत्र प्रयोगः । किन्तु कर्मकर्तरीति सर्वमनाकुलम् । धर्मात् छलं छलनं स्खलनम् । धर्मे वा विषये छलं शाठ्यम् । **'शठे शाठ्यम्'** इति हि धर्मविदो वदन्ति ॥ २५–६ ॥ यद्यन्मया कृतं तत्र यदि भवतां संवादः तदैवोद्यम्य

इति प्रहस्याभिहितं निशम्य स्त्रीभावमुग्धास्तु तथेति तेऽवदन् ।
ततश्च संस्थाप्य पृथक् सुरासुरांस्तवातिरूपोच्चलितान् सुरेतरान् ॥ २८ ॥

सर्वान् भवद्दर्शिन ईक्ष्य[1] लज्जिताऽस्म्यहं दृशो मीलयतेत्यवोचः ।
निमीलिताक्षेष्वसुरेषु देवता न्यपाययः साध्वमृतं ततः पुमान् ॥ २९ ॥

क्षणेन भूत्वा पिबतः सुधां शिरो राहोर्न्यकृन्तश्च सुदर्शनेन ।
तेनामृतार्त्थं हि सहस्रजन्मसु प्रतप्य भूयस्तप आरितो वरः ।
स्वयम्भुवस्तेन भवान् करेऽस्य बिन्दुं सुधां प्रास्य शिरो जहार ॥ ३० ॥

शिरस्तु तस्य ग्रहतामवाप सुरैः समाविष्टमथो सबाहु[2] ।
क्षिप्तः [3]कवन्धोऽस्य शुभोदसागरे त्वया स्थितोऽद्यापि हि तत्र साम्प्रतः ॥ ३१ ॥

**भूयः बहु तपः प्रतप्य स्वयम्भुवः विरिञ्चात् वर आरितः प्राप्तः । बिन्दुं बिन्दुमात्रम् ॥ ३०–२ ॥**

---

विभजे । देवार्थमयं विभाग इति विभजामीति परस्मैभाषा । यद् देवानां हितं तन्ममापीष्टमिति उद्भिभज इत्यात्मने-भाषा। मयि विश्वासः केवलमात्ममौढ्यमिति पुनर्विश्वसध्वमित्यात्मनेभाषा॥ २७॥ स्वस्वयोग्येषु स्थानेषु स्थापनं संस्थापनम् । उच्चलितान्, 'अस्य रूपराशेः पुरतः सुधाऽपि मुधा । ततोऽपि मधुरमधरमेवास्या वरम् । तत्पुरतः किमिति पीयूषं पीयेत' इति सम्भ्रान्तस्वान्तान् ॥ २८ ॥ क्रियासमभिहारेण भवद्दर्शनशीलान् । ताच्छील्ये णिनिः । आभीक्ष्ण्ये च । **'सुप्यजातौ णिनिस्ताच्छील्ये'** [अ.सू.३.२.७८] इति, **'बहुलमाभीक्ष्ण्ये'** [३.२.८१] इति च । निपाययेति प्रददुः । न्यपाययश्च । परन्तु न नियम्य, किन्तु निगृह्यापाययः ॥ २९ ॥ सर्वासु देवतासु पीतामृतासु, मायया देवता-पङ्क्त्यन्ते निविष्टे राहावेकस्मिन्नवशिष्टे, क्षणेन सपदि पुंरूपो भूत्वा राहोः शिरो न्यकृन्तः । कथं राहुः? चन्द्रसूर्यौ ग्रसित्वा पश्चाद् रहति त्यजतीति । रह त्यागे । हिरण्यकशिपुतनयायां प्रह्लादभगिन्यां सिंहिकायां विप्रचित्तेर्जातो ज्येष्ठः पुत्रः राहुः । केतवस्तदनुजाः । **'विप्रचित्तिः सिंहिकायां शतं चैकमजीजनत् । राहुज्येष्ठं केतुशतं ग्रहत्वं य उपागताः'** [६.६.३६] इति हि भागवते । स्वयम्भुव आरितः प्रापितः प्राप्तो वा । ऋ गतिप्रापणयोः । सुधां बिन्दुं सुधाया बिन्दुम् । **'षट्सु द्वितीया'** इति स्मरणात् । बिन्दुरपि सुधैव किल । अतश्च बिन्दुं सुधामित्याह । बिन्दुमितां सुधामित्येतत् । प्रास्य प्रक्षिप्य । असु क्षेपणे ॥ ३० ॥ ननु दैत्यशिरसः कथं ग्रहत्वम्? कथं वा देवैः सूर्यादिभिः सह पूज्यत्वम्? आह–

---

१. **'भवद्दर्शन ईक्ष्य'** २. **'सबाहुः ।'** ३. **'कबन्धो–'**

**अथासुराः प्रत्यपतन्नुदायुधाः समस्तशस्ते च हतास्त्वया रणे ।**
**कलिस्तु स ब्रह्मवरादजेयो ह्यृते भवन्तं पुरुषेषु संस्थितः ॥ ३२ ॥**

---

सुरैः समाविष्टमिति । अमृतोपस्पर्शमहिम्ना दैत्यशिरसि देवाः सन्निहिता बभूवुः । त एव देवाश्छिन्नशिरःप्रतीके पूज्यन्त इति भावः । राहुनामा कश्चन देवोऽप्यस्ति । स एव दैत्यशिरःसन्निहितः पूज्यत इत्यपि वदन्ति । ग्रहमानिनो बहवः सन्तीत्याचार्याशयः । एकग्रहमानित्वेन स देवतागणः सम्भूय राहुपदेनोच्यते राहयत्यनिष्टं सन्तुष्ट इति । शिरस्तु । पीतामृतत्वं नाम विशेषं तुनाऽऽह । अत एव अथो शिरसः कर्तनानन्तरम्, तद् राहुनामा ग्रहो बभूव । किं तत्? सबाहु शिरः । हस्तेनामृतं जग्राह । तेन हस्ताश्रयं बाहुमेव न्यकृन्तः । तुण्डेन पपौ । तेन तुण्डाश्रयं मुण्डमेवाखण्डयः । अपूर्वमेतत् प्रमेयं यत् सबाहुशिरो ग्रहतामवापेति । 'सबाहुः' इति पाठे, 'सबाहुः कबन्धः' इत्युत्तरत्रान्वयः । कं शिरो बध्यते सम्बध्यतेऽनेनेति कबन्ध एव कवन्धः । कवं परादिवैखर्यन्तं रवं धत्त इति वा कवन्धः । कुङ् शब्दे । अनाभेराकन्धरं हि नादसञ्चारः । कस्य शिरसो वानादपगमनादन्धः कवान्ध एव वा कवन्धः । कन्धरान्तः कायभागः कवन्धः । कन्धरान्तं कळेबरं कबन्धम् । **'कबन्धोऽस्त्री क्रियायुक्तव्यपमूर्धकळेबरे'** इत्यभिधानम् । कवन्धोऽपि त्वया शुभ्रोदसागरे क्षिप्तः । सप्तसु सागरेषु षष्ठः क्षीरसागरः । यममृतार्थममरासुरा मेथुः । ततः परं पुष्करद्वीपः । यत्र भगवान् मोहिनीरूपेण विबुधानां सुधां पाययामास । ततः सप्तमः शुद्धोदसागरः । यत्र भगवता राहोः कवन्धः क्षिप्तः । स च सामृतत्वादनश्यन् तत्र स्थितः । अत्र बह्वनुसन्धेयमस्ति । इदमिह भगवत्पादसूचितं समुचितं प्रमेयजातम्– कवन्ध एव राहुनामा ग्रह इति केचित् । **'कवन्धमुदके रुण्डे कवन्धो राहुरक्षसोः'** इत्यभिदधति च । शिरोभागो राहुः, कवन्धः केतुरित्यन्ये । शिरोमात्रं ग्रहतामवाप, न कवन्धः । केतवस्तु बहवः, अनुजाश्च राहोः । **'राहुज्येष्ठं केतुशतम्'** इति भागवते । तन्न ग्रहतामवाप । राहुरिति केतुरिति च नाम्ना शिर एव ग्रहतामवाप । उत्पातहेतवः केतवः शतं राहुभ्रातरः । ग्रहभूतस्तु केतुरेक एव । स च छिन्नशिरोरूपः । न राहोरनुजः । नापि कवन्धः । कवन्धस्य ग्रहत्वं वदन् कोशकारो बभ्राम । तदनुयायिनश्च ज्योतिषिकाः । राशिचक्रमध्यरेखाया एकस्मिन्नन्ते राहुरपरस्मिन् केतुरिति द्वयोरप्याकाशकायत्वात् । अतो मध्यरेखाबिन्द्वन्तरस्थं राहोः शिर एव केतुरिति व्यपदिश्यते । यद्यधःकायस्यापि ग्रहत्वमाचार्यसम्मतमभविष्यत् तदा शिर इव कबन्धोऽपि ग्रहतामवापेत्यवक्ष्यत् । तर्हि शुद्धोदसागरगतस्य कवन्धस्य का गतिः? किं च तस्य कृत्यम्? न हि वृथा भगवान् चिक्षेपेति वक्तुमुचितम् । नहि क्वापि किमपि निष्प्रयोजनं भगवांश्चिकीर्षति । सत्यमाह भवान् । अस्त्यत्र प्रयोजनविशेषः । पद्मकोशप्रतीकाशे हृदये हि जीवस्य वासः । तच्च हृदयं कवन्धे गतम् । तेन कवन्धनाशे राहुरेव म्रियेत । अतस्तज्जीवनार्थं कवन्धरक्षणम् । ननु तर्हि शिरसः का गतिः? कवन्धहृदये वसन् राहुर्गगनगं शिरः प्रेरयतीति न काऽपि क्षतिः । ननु कथं विश्लिष्टं शिरः प्रेरयेत्? न दोषः । विश्लिष्टोपाधेरपि कार्यकरत्वमुपपादितं भगवता बादरायणेनैव **'उद्यतायुधदोर्दण्डैः पतितस्वशिरोक्षिभिः । पश्यन्तः पातयन्ति स्म कवन्धा अप्यरीन् युधि'** इतीति सर्वं सुसङ्गतम् ॥ ३१ ॥ प्रत्यपतन् । प्रत्येकमपतन् । प्रतिरोद्धुमपतन् । ऋते भवन्तमजेयः । ऋते भवन्तमृते च ब्रह्मवायू अन्यपुरुषेषु संस्थितः । ब्रह्मणैव लब्धवरः कथं ब्रह्माणं वायुं च बाधते ॥ ३२ ॥

**तस्यार्द्धदेहात्[1] समभूदलक्ष्मीस्तत्पुत्रका दोषगणाश्च सर्वशः ।**
**अथेन्दिरा वक्षसि ते समास्थिता त्वत्कण्ठगं कौस्तुभमास धाता ॥ ३३ ॥**

**यथाविभागं च सुरेषु दत्तास्त्वया तथाऽन्येऽपि हि तत्र जाताः ।**
**इत्थं त्वया साध्वमृतं सुरेषु दत्तं हि मोक्षस्य निदर्शनाय ॥ ३४ ॥**

**भवेद्धि मोक्षो नियतं सुराणां नैवासुराणां स कथञ्चन स्यात् ।**
**उत्साहयुक्तस्य च तत् प्रतीपं भवेद्धि राहोरिव दुःखरूपम् ॥ ३५ ॥**

**कलिस्त्वयं[2] ब्रह्मवरादिदानीं विबाधतेऽस्मान् सकलान्[3] प्रजाश्च ।**
**अज्ञानमिथ्यामतिरूपतोऽसौ प्रविश्य सज्ज्ञानविरुद्धरूपः ॥ ३६ ॥**

**त्वदाज्ञया तस्य वरोऽब्जजेन दत्तः स आविश्य शिवं चकार ।**
**कदागमांस्तस्य कुयुक्तिबाधान् नहि त्वदन्यश्चरितुं समर्थः ॥ ३७ ॥**

**धाता कौस्तुभम्, धात्रभिमन्यमानं कौस्तुभम् त्वत्कण्ठगमास ॥ ३३–५ ॥ अयं कलिस्तु ब्रह्मवरात् अज्ञानमिथ्यामतिरूपतोऽस्मान् सकलान् प्रजाश्च प्रविश्य इदानीं विबाधते । स किंस्वरूपः? असौ सज्ज्ञानविरुद्धरूपः । असावयं कलिरित्यादिरूपा एकैव (वा) योजना ॥ ३६ ॥ तस्य कलेः कुयुक्तिबाधान्**

वक्षसि दक्षभागे । कण्ठगं वक्षसो वामभागे । अत एव द्वादशभिः पुण्ड्रैः सह दक्षवामवक्षसोः श्रीवत्सकौस्तुभसङ्केततया गोपीचन्दनमयं स्थूलबिन्दुद्धयं विरचयन्ति । विष्णुतीर्थाभिमतं चैतत् । मुक्तब्रह्मैव हि कौस्तुभमास । **'चैत्त्यस्य तत्वममलं मणिमस्य कण्ठे'** इति हि भागवते । अवताररूपेषु चामुक्तब्रह्मणाऽभिमन्यमानः कौस्तुभः कण्ठवेषः । कौस्तुभो मणिः । कौस्तुभं रत्नम् । कुं स्तुभ्नाति व्याप्नोतीति कुस्तुभो धाता । तस्येदं स्वरूपभूतमित्यभिमन्यमानमिति वा कौस्तुभम् । उदधिर्वा कुस्तुभः । तत उत्पन्नं कौस्तुभम् ॥ ३३ ॥ येऽन्ये तत्र जाता उच्चैःश्रवआदयस्तेऽपि त्वया यथाविभागं सुरेषु दत्ताः । विभागक्रमः पूर्वमुक्तः । मोक्षस्य निदर्शनाय । येऽमृतं पपुस्ते ज्ञानामृतं पिबन्त्येव । त एव मोक्षाख्यममृतमश्नन्त्येवेति देवा एव मोक्षयोग्याः । नासुरा इति च ॥ ३४ ॥ तदेव स्फुटमाह–भवेद्धि मोक्षो नियतमित्यादि ॥ ३५ ॥ सकलानस्मान् । सकलाश्च प्रजाः । अस्यत इत्यसुरिन्द्रियमुच्यते । असाविति समुदायैकवचनम् । अयं कलिः असौ इन्द्रियगणे प्रविश्य । योऽसौ सज्ज्ञानविरुद्धरूपः सोऽयं कलिरिति वा सम्बन्धः । तुना तस्य देवैरप्यनिग्राह्यत्वमाह ॥ ३६ ॥ आविश्य शिवं चकार । तेन कदागमकरणजनितं पापं तस्यैव, न शिवस्येति भावः ॥ ३७ ॥

१. **'–र्द्धदेहा सम–'**		२. **'कलिः स्वयम्'**		३. **'सकलाः'**

वेदाश्च सर्वे सहशास्त्रसङ्घा उत्सादितास्तेन न सन्ति तेऽद्य[1] ।
तत् साधु भूमाववतीर्य्य वेदानुद्धृत्य शास्त्राणि कुरुष्व सम्यक् ॥ ३८ ॥

अदृश्यमज्ञेयमतर्क्यरूपं कलिं निलीनं हृदयेऽखिलस्य ।
सच्छास्त्रशस्त्रेण निहत्य शीघ्रं पदं निजं देहि महाजनस्य ॥ ३९ ॥

ऋते भवन्तं नहि तन्निहन्ता त्वमेक एवाखिलशक्तिपूर्णः ।
ततो भवन्तं शरणं गता वयं तमोनिहत्यै निजबोधविग्रहम् ॥ ४० ॥

इतीरितस्तैरभयं प्रदाय सुरेश्वराणां परमोऽप्रमेयः ।
प्रादुर्बभूवामृतभूरिळायां[2] विशुद्धविज्ञानघनस्वरूपः ॥ ४१ ॥

वसिष्ठनामा [3]कमळोद्भवात्मजः सुतोऽस्य शक्तिस्तनयः पराशरः ।
तस्योत्तमं सोऽपि तपोऽचरद्धरिः सुतो मम स्यादिति तद्धरिर्ददौ ॥ ४२ ॥

**कुत्सितयुक्तीनां दूषणानि ॥ ३७–८ ॥ अदृश्यं चक्षुषा । अज्ञेयमत्र स्थितोऽयमिति ज्ञातुमशक्यम् । अतर्क्यरूपमेतादृशोऽयमिति तर्कितुमशक्यरूपम् ॥ ३९–४० ॥ अमृतभूः । अमृततया मरणरहिततया भवति प्रादुर्भवतीति अमृतभूः । अप्राकृतदेह इति भावः । अमृतभूरित्येतदेव विवृणोति– विशुद्धेति ॥ ४१ ॥ कुत्र प्रादुर्भाव इत्यतस्तत्पितृमातृवंशं निरूपयति– वसिष्ठेत्यादिना ॥ ४२ ॥**

---

साधु अवतीर्य । साक्षादवतीर्य । नत्वावेशमात्रेण केषुचिद् पूर्वद्वापरेष्विव । विद्यमानानि संस्कुरुष्व । नूतनानि च सम्यक्, यथा सम्यग्ज्ञानजनननानि स्युस्तथा, कुरुष्व ॥ ३८ ॥ महाजनस्य सज्जनगणस्य ॥ ३९–४० ॥ अमृत एव भवति जायते । न जायते न म्रियते । अथापि जातमिवाऽत्मानं दर्शयति । अमृतभूर्मुक्ताश्रयश्च । यदाश्रिता अपि न जायन्ते । स कथं जायेत? घनं सान्द्रम् ॥ ४१ ॥ कमित्यव्ययं जलवाचि । अड इति वृश्चिकलाङ्गूलमुच्यते । तेन तैक्ष्ण्ये निरूढलक्षणेति प्राचीनाः । कं जले पञ्चबाणसायकतया कामिनां मनोभेदनं तैक्ष्ण्यमस्येति कमडमेव कमळमुच्यते । कं जले अडति उद्यच्छते इति वा कमडम् । अज्मध्यस्थत्वाड् डस्य ळः । कं जलमलङ्करोतीति कमलमुच्यते । प्रकृते च कं लयोदकम् । तत्र सहस्रांशुसमं तैक्ष्ण्यमस्येति कमळम् । अस्य वसिष्ठस्य सुतः शक्तिनामर्षिः । तस्य तनयः पराशरः । तत् तदभिलषितं हरिजनकत्वं हरिर्ददौ तपसा तुष्टः ॥ ४२ ॥

---

१. 'तेऽथ ।' २. '–रिलायाम्' ३. 'कमलोद्भवा–'

उवाच चैनं भगवान् सुतोषितो वसोर्म्मदीयस्य सुताऽस्ति शोभना ।
वने मृगार्त्थं चरतोऽस्य वीर्य्यं पपात भार्य्यां मनसा गतस्य ॥ ४३ ॥

तच्छ्येनहस्ते प्रददौ स तस्यै दातुं तदन्येन तु युद्ध्यतोऽपतत् ।
जग्रास तन्मत्स्यवधूर्य्यमस्वसुर्ज्जलस्थमेनां जगृहुश्च[१] दाशाः ॥ ४४ ॥

तद्गर्भतोऽभून्मिथुनं स्वराज्ञे न्यवेदयन् सोऽपि वसोः समर्प्पयत् ।
पुत्रं समादाय सुतां स तस्मै ददौ सुतोऽभूदथ मत्स्यराजः ॥ ४५ ॥

**एनं पराशरम् । मदीयस्य मद्भक्तस्य । वसोः वसुनाम्नो राज्ञः ॥ ४३ ॥ तस्यै स्वभार्यायै । अन्येन युद्ध्यतः तद् वीर्यमपतत् । यमस्वसुर्जल इति शेषः । यमस्वसुर्जलस्थं तन्मत्स्यवधूर्जग्रास ॥ ४४–९ ॥**

वसोरुपरिचरवसोः । यो जरासन्धपितामहः । मृगार्थं मृगयार्थं चरतोऽस्य वसोः । सदा विमानेन सञ्चरणादुपरिचर इति ख्यातः । **'आकाशगं त्वां मद्दत्तं विमानमुपपत्स्यते'** [आ.प.६४.१३] इति भारते । वसोः पत्नी गिरिका ऋतुस्नाता भर्तारमुपतस्थे । पितॄणामाज्ञया स तदहरेव मृगयां जगाम । भार्यां मनसा गतस्य वने चरतस्तस्य वीर्यं प्रचस्कन्द । तद् वृथा न भवेदिति वृक्षपत्रेण जग्राह । गृहीतं चामोघं तच्छ्येनहस्ते प्रददौ । किमहो श्येनस्यापि हस्तौ भवतः? वयं च त्वामिह पिपृच्छिषामः– किं केशस्यापि हस्तौ भवतः? येन केशहस्त इति कवयः प्रयुञ्जते । ननु तत्र केशहस्त इति केशपाश उच्यते । तर्ह्यत्रापि 'श्येनहस्ते' इति 'श्येनवशे' इत्युच्यते । वशगतं हि हस्तगतमुच्यते । तद्यथा–सौनिकहस्ते गृष्टिं ददाति । तेन श्येनवशे प्रददावित्यर्थः । अयमुक्तं करोत्येवेति विश्वस्य दानं प्रदानम् । अत्रैते श्लोका भवन्ति– **'अग्निष्वात्ता इति ख्याता यज्वानो यत्र संस्थिताः । अच्छोदा नाम तेषां तु कन्याऽभूद् वरवर्णिनी'** [सृ.खं.९.१२], **'सा पितॄन् प्रार्थयामास पुनरात्मसमृद्धये । विलज्जमाना पितृभिरिदमुक्ता तपस्विनी । भविष्यमथ चाऽलोक्य देवकार्यं च ते तदा । इदमूचुर्महाभागाः प्रसादशुभया गिरा'** [९.१९–२१] । **'अष्टाविंशे भवित्री त्वं द्वापरे मत्स्ययोनिजा । व्यतिक्रमात् पितॄणां तु कष्टं कुलमवाप्स्यसि । तस्माद् राज्ञो वसोः कन्या त्वमवश्यं भविष्यसि । कन्यात्वे देवलोकांस्तान् पुनः प्राप्स्यसि दुर्लभान् । पराशरस्य वीर्येण पुत्रमेकमवाप्स्यसि । द्वीपे तु बदरीप्राये बादरायणमप्युत । स वेदमेकं बहुधा विभजिष्यति ते सुतः'** [९.२३–६] इत्यादि पाद्मे । तस्यै स्वभार्यायै दातुम् । अन्येन पक्षिणा युद्ध्यतः तद् वीर्यं अधोऽपतत् यत्र यमुना प्रवहति । वसुवीर्यरक्षार्थमिदं युद्धमिति परस्मैभाषा । अहो पक्षिजातेः कर्तव्यनिष्ठा, या दुर्लभा मनुष्येष्वित्यनेनाऽह । जलस्थं तद् वीर्यं मत्स्यवधूर्मत्सी जग्राह । एनां यमस्वसुर्जलस्थां ग्रस्तवीर्यां मत्स्यवधूम् । **'तमपश्यदथाऽयान्तं श्येनं श्येनस्तथाऽपरः । अभ्यद्रवच्च तं सद्यो दृष्ट्वैवाऽमिषशङ्कया । तुण्डयुद्धमथाऽकाशे तावुभौ सम्प्रचक्रतुः । युद्ध्यतोरपतद् रेतस्तच्चापि यमुनाम्भसि । तत्राद्रिकेति विख्याता ब्रह्मशापाद् वराप्सरा । मीनभावमनुप्राप्ता बभूव यमुनाचरी । श्येनपादपरिभ्रष्टं तद् वीर्यमथ वासवम् । जग्राह तरसोपेत्य साऽद्रिका मत्स्यरूपिणी । कदाचिदपि मत्सीं[२] तां बबन्धुर्मत्स्यजीविनः'** [आ.प.६४.७१–५] इति च भारते ॥ ४३–४ ॥ तद्गर्भतः तद्गर्भे ।

१. 'जगृहुः स्म दाशाः' २. **'सूर्यतिष्यागस्त्यमत्स्यानां य उपधायाः'** [अ.सू.६.४.१४९] इति यकारलोपः ।

**कन्या तु सा दाशराजस्य सद्मन्यवर्द्धतातीव सुरूपयुक्ता ।**
**नाम्ना च[1] सा सत्यवतीति तस्यां तवाऽत्मजोऽहं भवितास्म्यजोऽपि ॥ ४६ ॥**

**इतीरितश्चक्रधरेण तां मुनिर्जगाम [2]मार्त्ताण्डसुतां समुद्रगाम् ।**
**उत्तारयन्तीमथ तत्र विष्णुः प्रादुर्बभूवाऽशु विशुद्धचिद्घनः ॥ ४७ ॥**

**विदोषविज्ञानसुखैकरूपोऽप्यजो जनान् मोहयितुं मृषैव ।**
**योषित्सु पुंसो ह्यजनीव दृश्यते न जायते क्वापि बलादिविग्रहः ॥ ४८ ॥**

---

मिथुनं स्त्रीपुंसयुग्मम् । स्वराज्ञे दाशराजाय । समासान्तो विधिरनित्यो हि भवति । अथच पूजायां स्वतियोगवत् स्वयोगेऽपि राज्ञष्टच् विभाषा भवतीति सूचयन्नेतदाह– स्वः स्वीयः स्वपूज्यो राजा स्वराजेति । समर्पयत् समार्पयत् । अल्लोपेनेदमाह– शिक्षाभयादेव समर्पयामास नतु स्वेच्छयेति । उपरिचरवसुरपि दाशराजस्य भावमवबुद्ध्य तस्मिन् मिथुने कन्यां सुतात्वेन तस्मै ददौ । अथ सुतः मत्स्यगर्भजत्वान्मत्स्यराज इति ख्यातोऽभूत् । यं विराटमाहुः । अत एव तं च देशं मत्स्यदेशमाहुः । तद्वासिनश्च मत्स्यान् । **'तयोः पुमांसं जग्राह राजोपरिचरस्तदा । स मत्स्यो नाम राजाऽसीद् धार्मिकः सत्यसङ्गरः । साऽप्सरा मुक्तशापा च क्षणेन समपद्यत'** [७८–९] इति च भारते । ननु सत्यं विराटो मत्स्यराज इति । अथापि नायं मत्सीजातः । मत्सीगर्भे किलैक एव पुमान् जातः । विराटस्य तु बहवोऽनुजाः श्रूयन्ते । तथाहि भारते–**'येषामर्थाय संयत्तो मत्स्यराजः सहानुजः । शतानीकः सूर्यदत्तः श्रुतानीकः श्रुतध्वजः । बलानीको जयानीको जयाश्वो रथवाहनः । चन्द्रोदयः समरथो विराटभ्रातरः शुभाः'** [द्रो.प.१५९.४०–१] इति । **'दृढमायसगर्भं तु कवचं तप्तकाञ्चनम् । विराटस्य प्रियो भ्राता शतानीकोऽभ्यहारयत् । सर्वभारसहं वर्म कल्याणपटलं दृढम् । शतानीकादवरजो मदिराक्षोऽभ्यहारयत्'** [वि.प.३३.१९–२०] इति च । सत्यं विराटस्य भ्रातरः श्रूयन्ते । को दोषः? विराटैकपुत्रा हि मत्सी । कथं तदनुजा भ्रातरः? सत्यम्, मत्सी तदेकपुत्रा बभूव । किन्तु विराटपितुरुपरिचरवसोः पुत्रा बहवो बभूवुः पत्न्यन्तरजाताः । ते विराटमनुजग्मुरिति किमनुपपन्नम्? ॥ ४५ ॥ सुन्दरं रूपं सुरूपम् । तदपि सर्वाभ्योऽतिशयितमित्याह–अतीवेति । अधिकमिव । सर्वाभ्यो मानुषीभ्योऽधिकमपि देवतास्त्रीभ्यः किञ्चिन्न्यूनमितीवशब्देनाऽह । अजोऽप्यात्मजो भवितास्मि । वस्तुतस्तु आत्मना स्वेच्छया जायत इत्येवात्मजत्वं भगवतः ॥ ४६ ॥ जगाम, ततः सञ्जगाम । सम्बुभुज इत्यर्थः । मार्ताण्डसुतां यमुनाम् । **'अथ मार्तण्डमार्ताण्डौ'** इत्यभिधानम् । वैयाकरणास्तु मार्तण्ड इति शकन्ध्वादित्वात् पररूपमिच्छन्ति । मार्ताण्ड इत्येव वैदिकः प्रयोगः । **'विश्वो मार्ताण्डो व्रजमा पशुर्गात्'**[ऋ.सं.२.३८.८] इति, **'परा मार्ताण्डमास्यत्'**[१०.७२.८]इति, **'पुनर्मार्ताण्डमारभत्'**[१०.७२.९] इति

---

१. 'नाम्ना तु सा' १. 'मार्तण्ड–'

यथा नृसिंहाकृतिराविरासीत् स्तम्भात् तथा नित्यतनुत्वतो विभुः ।
आविर्भवद्[1] योषिति नो मलोत्थस्तथाऽपि मोहाय निदर्शयेत् तथा ॥ ४९ ॥

स्त्रीपुम्प्रसङ्गात् परतो यतो हरिः प्रादुर्भवत्येष विमोहयन् जनम् ।
अतो मलोत्थोऽयमिति स्म मन्यते जनोऽशुभः पूर्ण्णगुणैकविग्रहम् ॥ ५० ॥

द्वीपे भगिन्याः स[2] यमस्य विश्वकृत् प्रकाशते ज्ञानमरीचिमण्डलः ।
प्रभासयन्नण्डबहिस्तथाऽन्तः सहस्रलक्षामितसूर्य्यदीधितिः[3] ॥ ५१ ॥

अगण्यदिव्योरुगुणार्ण्णवः प्रभुः समस्तविद्याधिपतिर्ज्जगद्गुरुः ।
अनन्तशक्तिर्ज्जगदीश्वरेश्वरः समस्तदोषातिविदूरविग्रहः ॥ ५२ ॥

शुभमरतक[4]वर्ण्णो रक्तपादाब्जनेत्राधरकरनखरसनाग्रश्चक्रशङ्खाब्जरेखः ।
रविकरवरगौरं चर्म्म चैणं वसानस्तटिदमलजटासन्दीप्तजूटं[5] दधानः ॥ ५३ ॥

**पुंसो योषित्सु जात इत्यज्ञप्रतीतौ कारणमाह– स्त्रीपुम्प्रसङ्गादिति । स्त्रीपुम्प्रसङ्गात् परतः अनन्तरम् ॥ ५०–२ ॥रविकरवरगौरं सूर्यरश्मिवद् हरिद्राभम् ॥ ५३ ॥**

---

चर्ग्वेदे । काळिन्दी च मार्ताण्डसुता । तद्व्यावृत्त्यर्थमाह– समुद्रगामिति । काळिन्दी यमुनासङ्गता भवति । न साक्षात् समुद्रं गच्छतीति । विष्णुः प्रादुर्बभूव । **'व्यासः सत्यवतीपुत्रो भगवान् विष्णुरव्ययः'** [वै.खं.ब.मा. १.२] इति स्कान्दे। आश्विति। **'पराशरेण संयुक्ता सद्यो गर्भं सुषाव सा। जज्ञे च यमुनाद्वीपे पाराशर्यः स वीर्यवान्'**[आ.प.६४.१२६] इति च भारते ॥ ४७–८ ॥ आविर्भवत् आविरभवत् । 'आविर्भवेत्' इति पाठे स्वरसोऽर्थः ॥ ४९ ॥ स्त्रियाः पुंसा प्रकृष्टः सङ्गः । सङ्गस्य प्रकर्षो नाम सन्ततिजननानुकूलक्रियारूपत्वम् ॥ ५० ॥ यमस्य भगिनी यमुना । द्वैपायननाम निर्वक्ति–द्वीपे भगिन्या इति । **'न्यस्तो द्वीपे स यद् बालस्तस्माद् द्वैपायनः स्मृतः'** [१२८] इति च । केषाञ्चित् सहस्र-सूर्यदीधितिः । केषाञ्चिल्लक्षसूर्यदीधितिः । केषाञ्चित् सहस्रलक्षसूर्यदीधितिः । केषाञ्चिदमितसूर्यदीधितिर्यथायोग्यम् । ज्ञान-दृष्टीनामेवेदम् । अन्येषामितरर्षितुल्यः प्रकाशते ॥ ५१–२ ॥ शुभमरतकवर्ण इति पद्येऽस्मिन् द्वितीयपादो द्व्यक्षराधिक इति स्वराण्मालिनी नाम च्छन्दः । **'नवा एकेनाक्षरेण छन्दांसि वियन्ति न द्वाभ्याम्'** इति श्रुतिः । एतेनास्य ग्रन्थस्य

---

१. **'आविर्भवेद्–'**		२. **'भगिन्याश्च'** इति, **'भगिन्यास्तु'** इति च क्वचित् ।		३. **'–मितभानुदीधितिः'**
४. **'मरकत–'**		५. **'–दीप्तचूडं द–'**

**विस्तीर्णवक्षाः [१]कमळायताक्षो बृहद्भुजः कम्बुसमानकण्ठः ।**
**समस्तवेदान् मुखतः समुद्गिरन्ननन्तचन्द्राधिककान्तसन्मुखः[२] ॥ ५४ ॥**

**प्रबोधमुद्राभयदोर्द्वयान्वितो यज्ञोपवीताजिनमेखलोल्लसन् ।**
**दृशा महाज्ञानभुजङ्गदष्टमुज्जीवयानो जगदत्यरोचत ॥ ५५ ॥**

**स लोकधर्म्माभिरिरक्षया [३]पितुर्द्विजत्वमाप्याऽशु पितुर्ददौ निजम् ।**
**ज्ञानं तयोः संस्मृतिमात्रतः सदा प्रत्यक्षभावं [४]परमात्मनो ददौ ॥ ५६ ॥**

**कम्बुसमानकण्ठः रेखात्रयोपेतगळः ॥ ५४–५ ॥ तयोः पित्रोः ॥ ५६–६० ॥**

---

छन्दस्तुल्यत्वं द्योतयति । शुभः सामुद्रिकलक्षणानुसारी, मनोनयनानन्दकारी च । **'अश्मगर्भं मरतकम्'** इत्यभिधानम् । इन्द्रनीलमणिरित्यर्थः । मरतकमित्येव प्राचीनम् । मरं मरणं तकति हसतीति । मरकतमित्यर्वाचीनम् । अब्जेति देहल्यां दीपः । पादाब्जे, अब्जनेत्रे च । करतळम्, करपादस्य नखानि, रसनाग्रं च । एणस्येदमैणं चर्म । रविकरवद् वरं योगिभिर्वरणीयम्, वसनत्वेन, आसनत्वेन च । अभीप्सितं च । **'उदिते जुहोति'** इत्यादिश्रवणात् यजतां रविकरा अपि वरणीयाः । गौरं किञ्चिदरुणं किञ्चित् पीतं किञ्चिच्छ्वेतम् । गौरमिति परिशुद्धं वा । रविकराश्च तथा । मृतस्य मृगस्य चर्मेत्यपूतमेतदिति भ्रमो मा नाम पिपीडदिति गौरमित्याह । **'गौरः पीतेऽरुणे श्वेते विशुद्धे चाभिधेयवत्'** इत्यभिदधति । **'वरो जामातरि श्रेष्ठे देवतादेरभीप्सिते । वरं तु घुसृणे–'** इति च । तेनान्योऽपि कश्चनार्थः स्फुरति–रविकरवत् वरं किञ्चिद् घुसृणवर्णं गौरवर्णं चेति । हस्तपादतळेषु चक्रशङ्खाब्जरेखः । तटित इवामलाः स्फुटप्रभाः जटाः । **'कोटीरस्तु जटा सटा'** इत्यभिधानम् । 'ಜಡೆ' इति भाषायाम् । जुट्यत इति जूटः शिखाबन्धः, जूटं वा । जुट बन्धने । 'ಜುಟ್ಟು' इति भाषायाम् । गुणापवादो दीर्घः । जटानां मध्ये जटाभिर्वा समन्तात् सर्वतोदिशं दीप्तो जूटः । गिरिशृङ्गोपमो जूटस्तत्र विद्युत्समा जटा ॥ ५३ ॥ कमळं व्याख्यातम् । बृहद्भुजो दीर्घबाहुरुन्नतांसश्च । चन्द्रकान्तमथापि सत् निरङ्कं मुखम् ॥ ५४ ॥ ज्ञानमुद्राभयमुद्राभ्यां दोर्द्वयेऽन्वितः । प्रबोधाभयमुद्रे अस्य स्त इति प्रबोधमुद्राभयं दोर्द्वयमिति वा । अन्यैरनिवर्तनीयत्वमेवाज्ञाने महत्त्वं नाम । तदेव महाविषो भुजङ्गः । उद्गमय्य जीवयन् । उत्कृष्टानां जीवानां उत्कृष्टं मोक्षं प्रति यानं च येन । जगतः सर्वाणि ज्योतींष्यतिक्रम्यारोचत बभासे । अतितरां भासयामास प्रीणयामास च । 'रुच दीप्तावभिप्रीतौ च' ॥ ५५ ॥ लोकधर्माणां स्वाभिमतया रिरक्षिषया । अभित इत्युभयतो वा । आन्तराणां बाह्यानां च, ऐहिकानां पारत्रिकाणां च धर्माणां रिरक्षिषया । लोकसङ्ग्रहार्थं पितुर्द्विजत्वमाप्य स्वयं पितुर्ज्ञानं ददौ । लोके तु पितोपनीय ज्ञानं ददाति । अयं पितुरेव ज्ञानं ददाविति सतात्पर्यं विस्मयं स्फोरयितुं पितुरिति पुनराह । आत्मनः परं

---

१. **'कमलाय–'**
२. **'–कान्तिसन्मुखः'**
३. **'रिरक्षयाऽपितु द्विज–'**
४. **'–भावं वरमात्मनो–'**

द्वैपायनः सोऽथ जगाम मेरुं चतुर्म्मुखाद्यैरनुगम्यमानः ।
उद्धृत्य वेदानखिलान् सुरेभ्यो ददौ मुनिभ्यश्च यथाऽऽदिसृष्टौ ॥ ५७ ॥

सर्वाणि शास्त्राणि तथैव कृत्वा विनिर्ण्णयं ब्रह्मसूत्रं चकार ।
तच्छुश्रुवुर्ब्रह्मगिरीशमुख्याः सुरा मुनीनां प्रवराश्च तस्मात् ॥ ५८ ॥

समस्तशास्त्रार्थनिदर्शनात्मकं चक्रे महाभारतनामधेयम् ।
वेदोत्तमं तच्च विधातृशङ्करप्रधानकैस्तन्मुखतः सुरैः श्रुतम् ॥ ५९ ॥

अथो गिरीशादिमनोनुशायी कलिर्म्ममाराऽशु सुवाङ्मयैः शरैः ।
निकृत्तशीर्षो भगवन्मुखेरितैः सुराश्च सज्ज्ञानसुधारसं पपुः ॥ ६० ॥

अथो मनुष्येषु तथाऽसुरेषु रूपान्तरैः कलिरेवावशिष्टः ।
ततो मनुष्येषु च सत्सु संस्थितो विनाश्य इत्येष[१] हरिर्व्यचिन्तयत् ॥ ६१ ॥

**कलिरवशिष्ट एव । विनाश्य एवेत्यचिन्तयत् ॥ ६१–३ ॥**

---

प्रत्यक्षभावम् । परं योगिदुर्लभम् ॥ ५६ ॥ अथ जननसमनन्तरमेव । मेरुं यत्र देवानामोकांसि । आदिसृष्टौ स्वायम्भुव-मन्वन्तरारम्भे यथा तथैव सर्वाणि शास्त्राणि वेदाङ्गानि निरुक्तादीनि कृत्वा । **'निरुक्ते व्यासनिर्मिते'** इति ह्युग्भाष्ये । सर्वशब्दानां विष्णुपरतया निर्णयो यत्र येन वा तादृशं ब्रह्मसूत्रं चकार ॥ ५७–८ ॥ समस्तशास्त्राणामर्थं नितरां निर्णयेन दर्शयति । निदर्शनात्मकं दृष्टान्तरूपं वा । अयमिह शास्त्रार्थः । महाभारते तथा कथनादिति । कनाऽस्मिन् ग्रन्थे भगवतः प्रीत्यतिशयमाह । तद् यथा– 'शिशुकोऽयं मातुरुत्सङ्गे कामं विहरति' । यथा वा–'युवा रमणिकां चुम्बति गाढम्' । **'यन्नेहास्ति न तत् क्वचित्'** इत्यादेः । जीवकोटौ प्रधाना अपि भगवत्पुरतोऽत्यल्पा इति प्रधानकैरित्याह ॥ ५९ ॥ अथो अत एव । श्रवणसमनन्तरमेव च । भगवन्मुखतस्तत्वश्रवणादेव । अनुवेशमनुवेशं शयनशीलोऽनुशायी । ताच्छील्ये णिनिः । पौनःपुनिकतया शेत इत्यभीक्ष्ण्ये वा । गिरीशादिमनांसि अनुशेते दीर्घं द्वेष्टि, अत एव तद्दूषयितुं तत्र वसन् प्रीयत इति वा । **'स्नेहेऽप्यनुशयः प्रोक्तो द्वेषेऽप्यनुशयः स्मृतः'** इत्यभिधानम् । यथार्थज्ञानजनन्यो वाचः सुवाचः । वेदोपबृंहणार्था वाचः सुवाचः । निकृत्तशीर्ष इव । मिथ्याज्ञानशीर्षो हि कलिः । अज्ञानमिथ्यामतिरूपत्वात् । निर्दुष्टं भगवद्विषयं वा ज्ञानं सज्ज्ञानम् । मनोमन्दरेण शास्त्रजलधिमथनजं सुधारसं पपुः । अभिमानिदेवतागते हते कलौ नृगतो निष्प्रभावतां प्रयाति नूनम् ॥ ६० ॥ अथो अथापि, सुमनोमनोनुशायिनः कलिरूपस्य नाशानन्तरमपि मनुष्येषु असुरेषु

---

१. **'इत्येव हरि–'** । वे.ती. पाठोऽपि तथा ।

**ततो नृणां कालबलात् सुमन्दमायुर्म्मतिं कर्म्म च वीक्ष्य कृष्णः ।**
**विव्यास वेदान् स विभुश्चतुर्द्धा चक्रे तथा भागवतं पुराणम् ॥ ६२ ॥**

**येये च सन्तस्तमसाऽनुविष्टास्तांस्तान् सुवाक्यैस्तमसो विमुञ्चन् ।**
**चचार लोकान् स पथि प्रयान्तं कीटं व्यपश्यत् तमुवाच कृष्णः ॥ ६३ ॥**

**भवस्व राजा कुशरीरमेतत् त्यक्त्वेति नैच्छत् तदसौ ततस्तम् ।**
**अत्यक्तदेहं नृपतिं चकार पुरा स्वभक्तं वृषलं सुलुब्धम्[१] ॥ ६४ ॥**

**कीटं किमर्थं राजानमकरोत्? स च पूर्वं कः? केन वा कारणेन तस्य कीटत्वमित्यत उक्तम्– पुरेत्यादि । कुतो राजानमकरोदित्यस्योत्तरम्– पुरा स्वभक्तमिति । पूर्वं क इत्यस्योत्तरम्– वृषलमिति । केन कारणेन (कीटो) जात इत्यस्योत्तरम्– सुलुब्धकमिति ॥ ६४–५ ॥**

---

चावशिष्ट एव । नच सर्वात्मना नाशो नाम कस्यचिद् भवति । सम्मोहयितुमधर्मे रतिं जनयितुं स्थितः संस्थितः । ततः तेषां मनुष्याणामसुराणां च मध्ये मनुष्येषु, ततश्च तत्रापि सत्सु संस्थितः समूलं नाश्य इत्येष व्यासात्मा हरत्यज्ञानमिति हरिनामा । विशिष्यावतारकार्यत्वेन चिन्तनं विचिन्तनम् ॥ ६१ ॥ सुमन्दमत्यल्पम् । दिनेदिने हीयमानं च । भागवतम्, क्वचित् स्फुटं क्वचिन्निगूढतया भगवत्परम्, यच्च समग्रं भगवदेकतानतया व्यासमुखादेव देववरैर्विधातृप्रभृतिभिः श्रुतम्, अष्टादशपुराणजातम् । विशेषतश्च पुराणमूर्धन्यं श्रीमद्भागवतम् ॥ ६२ ॥ विमुञ्चन् दृढं मोक्षयन् । एतेन पुराणानां तामसत्वं नाम तामसानां तामसार्थप्रतिभासकत्वमित्युक्तं भवति । सर्वाण्यपि हि पुराणानि सात्त्विकानां सात्त्विकमेवार्थमवगमयन्ति । राजसानां राजसम् । तामसानामेव तामसम् । अधीततत्ववादा अपि तामसा भवन्ति ये नैतमर्थमवबुध्यन्ते । व्यपश्यत् कारुण्यविशेषेणापश्यत् । कीटकथा महाभारतेऽनुशासनपर्वणि [अध्यायाः १७९–१८१] निरूपिता । अयं कथासङ्ग्रहः– कदाचित् कृष्णद्वैपायनः शकटवर्त्मनि धावन्तं कीटं ददर्श । स कीटमाह–'कीट, त्रस्तोऽसि । त्वरितश्च लक्ष्यसे । कुतस्ते भयम्?' इति । तं कीट उवाच–'शकटव्रजस्य घोषं श्रुत्वा मम भयमागतम् । दारुणः स्वनः श्रूयते । स मां मा वधीदिति द्रुतमुपक्रमे । दुःखं हि मृत्युर्भूतानाम् । दुर्लभं च जीवितम्' इति । तं स आह– 'कुतः कीट सुखं तव । तिर्यग्योनौ हि वर्तसे । मरणं ते सुखं मन्ये' इति । तदा कीट उवाच– 'कीटजन्मनि तदेव सुखम् । इच्छामि जीवितुम् । शृणु मे पूर्वकथाम् । अहमासं बहुधनो वृषलः । आसं नृशंसः कदर्यश्च । ततः कीटोऽभवम्' इति । तं व्यास उवाच–'जानामि त्वां स्वकृतैः पापैः कीटतां गतम् । जानामि स्वकृतेन शुभेन कर्मणा कीटयोनावपि न मुह्यस इति । अहं त्वां तारयामि । सपदि मनुष्यं त्वा करोमि यदि मन्यसे । तत्र

---

१. **'सुलुब्धकम्'** इति वे.ती.पाठः स्यात् ।

लोभात् स कीटत्वमुपेत्य कृष्णप्रसादतश्चाऽशु बभूव राजा ।
तदैव तं सर्वनृपाः प्रणेमुर्ददुः करं चास्य यथैव वैश्याः ॥ ६५ ॥

उवाच तं भगवान् मुक्तिमस्मिंस्तव क्षणे दातुमहं समर्थः ।
तथाऽपि सीमार्थमवाप्य विप्रतनुं विमुक्तो भव मत्प्रसादात् ॥ ६६ ॥

ज्ञानं च तस्मै विमलं ददौ स महीं च सर्वां बुभुजे तदन्ते ।
त्यक्त्वा तनुं विप्रवरत्वमेत्य पदं हरेराप सुतत्ववेदी ॥ ६७ ॥

एवं बहून् संसृतिबन्धतः स[1] व्यमोचयद् व्यासतनुर्ज्जनार्दनः ।
बहून्यचिन्त्यानि च तस्य कर्म्माण्यशेषदेवेशसदोदितानि ॥ ६८ ॥

**सीमार्थं स्वभावतश्चतुर्वर्णस्थजीवेषु यः स्वभावतो ब्राह्मणः तस्य ब्राह्मणजन्मन्येव मुक्तिरिति मर्यादार्थम् ॥ ६६–८ ॥**

---

साधय पुण्यम् । क्रमात् त्वां मुक्तिमपि नेष्यामि' इति । स कीटः कीटत्वमेवैच्छत् । 'सम्प्रतीदमेव वरम्' इति पादौ जग्राह । भगवान् बादरायणस्तं कीटमेव सन्तं राजानं चकार । तं राजान उपतस्थिरे । तुष्टुवुश्च सूतमागधबन्दिनः । एवं कीटजन्मन्येव राजत्वमनुभूयान्यजन्मनि पुना राजा बभूव । ततः प्रेत्य विप्रत्वं जगाम । अन्ते च व्यासप्रसादात् ब्रह्मणः सालोक्यमगमदिति । भवस्व राजा । तेन कुशरीरत्यागेन कीटस्यैव महान् लाभ इत्यात्मनेभाषा । स्वराजा स्वराड् भवेति वा । अथवा उत्पत्त्यर्थे भवतेरात्मनेभाषा । भवस्व जायस्वेत्यर्थः ॥ ६३–४ ॥ आशु कीटजन्मन्येव वैश्यशब्दः प्रजावचनस्तृतीयवर्णवचनश्च । अत्र तु प्रजावचनः । विशो हि प्रजाः । विश एव वैश्याः, स्वार्थे ष्यञ् । वैश्या एवाधिककरदा इति तेषां विशेषतो ग्रहणं वा ॥ ६५ ॥ सीमार्थं प्रारब्धकर्मक्षपणान्ते मुक्तिरित्यवधिपालनार्थम् । यो यत्स्वरूपः स्वभावतः, तस्य तद्रूपेणैव चरमशरीरेण मुक्तिरिति नियमरक्षार्थम् । अस्मिन्नर्थे सीमा नियमबन्धः । अयं च स्वरूपतो विप्रवर्ण आसीदिति विप्रशरीरेणैव मुक्तिः । तथैव च मुक्तावस्थानमित्यर्थः ॥ ६६ ॥ तदन्ते कर्मक्षये सति मोक्षसाधनज्ञानभरितो विप्रो विप्रवरः । तदेव स्फुटमाह–सुतत्ववेदी । सुतत्वं स्वतन्त्रतत्वम्, भगवान् नारायणः । तत्वानि च यथावद् वेदेति च सुतत्ववेदी ॥ ६७ ॥ देवेशैः सदा उदितानि । देवेशानां सदस्सु चोदितानि । शिरोपधानमितिवत् ॥ ६८ ॥

---

१. '–बन्धतः प्रभुर्व्यमो–'

अथास्य पुत्रत्वमवाप्तुमिच्छंश्चचार रुद्रः सुतपस्तदीयम् ।
ददौ च तस्मै भगवान् वरं तं स्वयं च तप्त्वेव तपो विमोहयन् ॥ ६९ ॥

विमोहनायासुरसर्ग्गिणां प्रभुः स्वयं करोतीव तपः प्रदर्शयेत् ।
कामादिदोषांश्च मृषैव दर्शयेन्न तावता तेऽस्य[1] हि सन्ति कुत्रचित् ॥ ७० ॥

ततस्त्वरण्या स्म[2] बभूव पुत्रकः शिवोऽस्य सोऽभूच्छुकनामधेयः ।
शुकी हि भूत्वाऽभ्यगमद्[3] घृताची व्यासं विमत्थ्नन्तमुतारणी[4] तम् ॥ ७१ ॥

अकामयन् कामुकवत् स भूत्वा तयाऽर्थितस्तं शुकनामधेयम् ।
चक्रे ह्यरण्योस्तनयं च सृष्ट्वा विमोहयंस्तत्वमार्ग्गेष्वयोग्यान् ॥ ७२ ॥

शुकं तमाशु प्रविवेश वायुर्व्यासस्य सेवार्त्थमथास्य सर्वम् ।
ज्ञानं ददौ भगवान् सर्ववेदान् सभारतं भागवतं पुराणम् ॥ ७३ ॥

**स्वयं च तपस्तप्त्वैव[5] रुद्रं सुतमवृणोदित्ययोग्यजनान् विमोहयन् ॥ ६९–७० ॥ शुकनामधेयत्वं कुत इत्यत आह– शुकीति ॥ ७१ ॥ अरण्योस्तनयं सृष्ट्वा तया शुकीरूपया घृताच्याऽर्थितः शुकीरूपमन्नामधेयोऽयं भवेदिति प्रार्थितः अरण्योः सृष्टं शुकनामधेयं चक्रे ॥ ७२–३ ॥**

---

सुतपः, ननु भगवत्कृतमिव विमोहनं तपः । विमोहयन् । विविधं मोहयन्, देवान् विनोदयन्, क्वचिदपि मोहयन्, मनुष्यान् संशयजननेन मोहयन्, असुरान् विपरीतज्ञानेन मोहयन् ॥ ६९ ॥ अथ चासुरसर्ग्गिणां शिवानुग्रहेणैवायं तनयमवापेत्यादि-रूपेण विपरीतज्ञानेन मोहनाय प्रदर्शयेत् । मृषानटनं प्रदर्शनम् ॥ ७० ॥ अरण्या मथ्यमानया । मथ्यमानाया वा अरण्याः । अरणिर्मथनदारु । अरणी वा । पुत्रकः प्रियः पुत्रः । स शिवः यमयं तपस्तप्त्वा प्रसादयामासेव । अभिसरणेच्छया गमनमभिगमनम् । क्षरणाद् घृतं रेतः । तेनाश्चन्त्येनामिति घृताची । अञ्चू गतिपूजनयोः । घृतं जलम् । भूमाविव जलेऽप्यञ्चतीति घृताची ॥ ७१ ॥ विशेषतः अयोग्यान् मोहयन् । क्वचिद् योग्यानपि तात्कालिकतया मोहयन्नित्युपसर्गार्थः ॥ ७२ ॥ अथ वायुप्रवेशानन्तरं अस्य शुकस्य सर्वज्ञतां ददौ । भागवतं मुख्यतः भगवत्परं पुराणजातं च ददौ । विशेषतः श्रीमद्भागवतं ददौ ॥ ७३ ॥

---

१. **‘तस्य’** २. **‘–स्त्वरण्योः स बभूव’** ३. **‘भूत्वा ह्यगमद्–’**
४. **‘–मुतारणीं तम् ।’** ५. **‘तपस्तप्त्वेव’** इति कोशपाठः प्रामादिकः । **‘तप्त्वैव’** इति हि विमोहनम् । ननु **‘तप्त्वेव’** इति ।

**शेषोऽथ पैलं मुनिमाविशत् तदा वीशः सुमन्तुमपि वारुणिं मुनिम् ।**
**ब्रह्माऽविशत् तमुत वैशपायनं[1] शक्रश्च जैमिनिमथाऽविशद् विभुः ॥ ७४ ॥**

**कृष्णस्य पादपरिसेवनोत्सुकाः सुरेश्वरा विविशुराशु तान् मुनीन् ।**
**समस्तविद्याः प्रतिपाद्य तेष्वसौ प्रवर्त्तकांस्तान् विदधे हरिः पुनः ॥ ७५ ॥**

**ऋचां प्रवर्त्तकं पैलं यजुषां च प्रवर्त्तकम् ।**
**वैशम्पायनमेवैकं द्वितीयं सूर्य्यमेव च ॥ ७६ ॥**

**वीशः सुमन्तुमपि वारुणिं मुनिम् । वरुणपुत्रं भृगुमपि[2] । उभावप्याविशत् । तमुत वारुणिं च वैशम्पायनमुत इत्युभौ ब्रह्माऽऽविशत् ॥ ७४–५ ॥ कं कस्य प्रवर्तकमकरोदित्यतो विविच्य दर्शयति–ऋचामित्यादिना ।**

अथेत्यावेशविषयं प्रसङ्गान्तरमुपक्षिपति । पीलाया अपत्यं पैलः । पीलतीति पीला । पील प्रतिष्टम्भे । **'प्रतिष्टम्भो रोधनम्'** इति क्षीरस्वामी । विषयेभ्यो निरुध्य भगवत्येव मनोऽनुरोधयामासेत्यर्थः । वारुणिं वरुणपुत्रं सुमन्तुम् । सुष्ठु भगवन्तं मन्यत इति सुमन्तुः । तथाहि भागवते– **'अथर्वाङ्गिरसामासीत् सुमन्तुर्वारुणो मुनिः'**[१.४.२१] इति । जैमिनिपुत्रोऽप्यपरः सुमन्तुर्मुनिरस्ति । तद्व्यावृत्त्यर्थम्, 'वारुणिं मुनिम्' इत्याह । **'जैमिनेः सामगस्याऽसीत् सुमन्तुस्तनयो मुने'**[१२.६.३९] इति च भागवते । विशम्पस्यापत्यं वैशम्पायनः । विशिष्टं शं पिबतीति विशम्पः । सर्वत्र विशतीति विशं सर्वान्तर्यामिणं नारायणं ध्यानेन पातीति वा । स एव विशपश्च । तेन वैशपायनोऽपि । विशं प्रजां पातीति यत् केचिद् व्याचक्षते तन्निराकरणाय चैवमाह । विशिष्टं शं सुखं स्वरूपानन्दः । तत् पातीति भगवान् विशम्पो विशपो वा । विशपस्यायं वैशपो ब्रह्मा । तस्यायमयनः । सचायनमस्येति च । जिमति दोषानिति जिमिनः । **'जिमु अदने'** इति काशकृत्स्नः । जिमिनस्यापत्यं जैमिनिः । एवं व्यासस्य सेवार्थं शिवः स्वयमागतः परिमार्ष्टुमिवाश्वत्थामरूपेण कृतमपराधम् । ब्रह्मवायू गरुडशेषौ शक्रश्च मुनिष्वाविष्टा बभूवुः । कामश्च वक्ष्यते । सर्व एते मनोमानिनो मनसि निलीनं कलिं निष्कालयितुं भगवन्तं व्यासमुपासाञ्चक्रिरे । अथ अन्तरङ्गमानिनां देवानां प्रवेशानन्तरं शक्रः कर्ममानी इन्द्रः जैमिनिं कर्ममीमांसाकर्तारमविशत् । व्यासाज्ञया कलिनिरसने विभुरिति शेषादिषु सर्वत्रान्वेति । प्रथमपादे ततजरैः स्फुटमिन्द्रवंशा । अवशिष्टेषु पञ्चममक्षरं लघूकृत्य तभजरैर्द्रुतगत्या छन्दसि सुषमातिशयं जनयामास ॥ ७४॥ कृष्णस्य पादयोः परिचरणेन सेवनमुपसदनम् । कथमथ परिसेवनम्? परिषेवणमिति पदज्ञाः पठन्ति । **'परिनिविभ्यः सेव–'** [८.३.७०] इति । सत्यं पठन्ति । न वयं न पठितमित्यवदाम । नापि न पठितव्यमिति । किन्तु विभाषावादिनो वयम् । व्यवस्थीयते चैवम्–परितः सेवनं परिषेवणम्, परिचरितुं सेवनं परिसेवनमित्यर्थभेदादिति । प्रतिपाद्य वितीर्य । तेषु मुनिषु । तान् मुनीन् ॥ ७५ ॥ पैलमृचां प्रवर्तकं चक्रे । यजुषां प्रवर्तकं चैकं वैशम्पायनं चक्रे । द्वितीयं च

१. **'वैशम्पायनम्'** । वे.ती. पाठोऽपि तथा ।

२. नेदं स्वरसम् । निराकृतं च भावप्रकाशिकायां श्रीवादिराजश्रीचरणैः– **'सुमन्तुरेव वारुणिः । नतु भृगुः'** इति ।

चक्रेऽथ जैमिनिं साम्नामथर्वाङ्गिरसामपि ।
सुमन्तुं भारतस्यापि वैशम्पायनमादिशत् ॥ ७७ ॥

प्रवर्त्तने मानुषेषु[1] गन्धर्वादिषु चाऽत्मजम् ।
नारदं पाठयित्वा च देवलोकप्रवृत्तये ॥ ७८ ॥

आदिशत् ससृजे सोऽथ रोमाञ्चाद् रोमहर्षणम् ।
तं भारतपुराणानां महारामायणस्य च ॥ ७९ ॥

पञ्चरात्रस्य कृत्स्नस्य प्रवृत्त्यर्थमथाऽदिशत् ।
तमाविशत् कामदेवः कृष्णसेवासमुत्सुकः ॥ ८० ॥

**शाखाभेदादृचामिति बहुवचनम् । एवमुत्तरत्रापि बहुवचनाभिप्रायः । यजुषां कृष्णत्वशुक्लत्वभेदेन द्वैविध्यात् कृष्णयजुषां वैशम्पायनं शुक्लयजुषां सूर्यं च प्रवर्तकं चक्र इति विभागः । यजुषामुभयेषां यजुष्ट्वसाम्यादेकं वैशम्पायनं द्वितीयं सूर्यं चक्र इत्युक्तिर्घटते ॥ ७६ ॥ जैमिनिं साम्नां प्रवर्तकं चक्रे । अथर्वाङ्गिरसामथर्ववेदानां सुमन्तुं प्रवर्तकं चक्रे । मनुष्येषु भारतस्य प्रवर्तने वैशम्पायनमादिशत् । गन्धर्वादिषु भारतस्य प्रवर्तने आत्मजं शुकं मुनिमादिशत् । देवलोकप्रवृत्तये देवलोके भारतस्य प्रवृत्तये नारदं पाठयित्वा भारतमादिशत् ॥ ७७–८० ॥**

---

सूर्यं चक्रे । तत्रापि कृष्णयजुषां वैशम्पायनमेव चक्रे । शुक्लानां च सूर्यमेव चक्रे । सूर्ये आविश्य याज्ञवल्क्यायोपदिश्य ॥ ७६ ॥ यजुषां प्रवर्तकं वैशम्पायनमेव भारतस्यापि मानुषेषु प्रवर्तने आदिशत् । गन्धर्वादिषु प्रवर्तने देवपर्यन्तेषु, विशिष्यर्षिषु, चाऽत्मजं शुकम् । इन्द्रावराणां पुष्करान्तानां देवानां लोकः समुदायो देवलोकः । देवलोके प्रवर्तनाय नारदमादिशत् । सर्वानपि स्वयं पाठयित्वा । अथ च रोमाञ्चाद् रोमहर्षणं ससृजे । अथ चार्थान्तरम् । श्रोतॄणां रोमाञ्चाद् रोमहर्षण इति सार्थकनामानं सूतं ससृजे । तथाहि वायुप्रोक्ते–**'रोमाणि हर्षयाञ्चक्रे श्रोतॄणां यत् सुभाषितैः । कर्मणा प्रथितस्तेन लोकेऽस्मिन् रोमहर्षणः'** [१.१३] इति । महारामायणं मूलरामायणम् । **'इतिहासपुराणानां पिता मे रोमहर्षणः'** [१.४.२१] इति भागवते । भारतं मूलरामायणं पञ्चरात्रं चेति त्रयमितिहासः । पुराणानि चाष्टादश– **'ब्राह्मं पाद्मं वैष्णवं च शैवं लैङ्गं च गारुडम् । नारदीयं भागवतमाग्नेयं स्कान्दसञ्ज्ञितम् । भविष्यं ब्रह्मवैवर्तं मार्कण्डेयं सवामनम् । वाराहं मात्स्यं कौर्मं च ब्रह्माण्डाख्यमिति त्रिषट्'** [१२.६.६७–८] इति भागवते । शैवं पुराणमेव वायुप्रोक्तमिति चोच्यते । भारतस्य पुराणानां चैककर्तृकत्वेन सहपाठः । ससृजे । सृज विसर्गे इत्यस्य दिवादे रूपमित्युक्तं प्रथमे[१.५] । कामदेवः । सोऽपि किल मनोमानी, इन्द्रसमकक्ष्यः ॥ ७७–८० ॥

---

१. **'मनुष्येषु'** इति वे.ती.पाठः स्यात् ।

स तस्मै ज्ञानमखिलं ददौ द्वैपायनः प्रभुः ।
सनत्कुमारप्रमुखांश्चक्रे योगप्रवर्त्तकान् ॥ ८१ ॥

भृग्वादीन् कर्म्मयोगस्य ज्ञानं दत्वाऽमलं शुभम् ।
जैमिनिं कर्म्ममीमांसाकर्त्तारमकरोत् प्रभुः ॥ ८२ ॥

देवमीमांसिकाद्यन्तं[१] कृत्वा पैलमथाऽदिशत् ।
शेषं च मद्ध्यकरणे पुराणान्यथ चाकरोत् ॥ ८३ ॥

**योगप्रवर्तकान् योगशास्त्रप्रवर्तकान् ॥ ८१ ॥ कर्मयोगस्य (प्रवर्तकानिति वर्तते)। कर्ममीमांसा देवमीमांसा ब्रह्ममीमांसा चेति मीमांसात्रयम् । तत्र कर्ममीमांसा जैमिनिना कृता । ब्रह्ममीमांसा स्वयमेव कृता । देवमीमांसिकाद्यन्तं देवमीमांसिकाया आद्यन्तौ भागौ कृत्वा, स्वयमिति शेषः । अथ मध्यकरणे मध्यभागकरणे शेषं पैलमादिशत् ॥ ८२–३ ॥**

---

तस्मै कामदेवाय च रोमहर्षणाय च । सनत्कुमारः प्रमुखो येषां सनकसनन्दनसनातनानां तान् ज्ञानयोगप्रवर्तकान् । अत एव श्रीमध्वः सनकादिपरम्परायामवतीर्य ज्ञानभक्ती विस्तारयामास । तत्र सनत्कुमारः स्वयं कामदेव इतीन्द्रतुल्यः । स मुख्यतो योगप्रवर्तकः । तत्साहचर्यादन्ये च । अथच सनत्कुमारप्रमुखा इति सनत्कुमारो बृहस्पतिर्नारदश्च । योगप्रवर्तका इति **'साङ्ख्यं योगः पाशुपतम्'** इत्युक्तयोगशास्त्रप्रवर्तका वा । यस्य मूलप्रवर्तको हिरण्यगर्भः–**'हिरण्यगर्भो योगस्य वक्ता–'** इति । ततस्तत्तनयः सनत्कुमारः । नारदश्च । यं च परस्ताद् विन्ध्यपतञ्जलिप्रभृतयो यथाप्रज्ञं विस्तारयामासुः ॥ ८१ ॥ भृग्वादीन् कर्मयोगस्य प्रवर्तकांश्चक्र इति वर्तते । अत्र कर्मयोगस्येत्युक्त्यैव पूर्वोक्तो योगः सभक्तिको ज्ञानयोग इति गम्यते । निर्विशेषितं पदं मुख्यमेव हि सम्प्रत्याययति । आदिपदेन विश्वामित्रः सप्तर्षयः, अन्ये चर्षिमुख्याः स्मृतिकर्तारः । सनत्कुमारादीनां भृग्वादीनां चामलं परिशुद्धं शुभं मोक्षसाधनं च ज्ञानं दत्वा । अथ जैमिनेः तादृशं ज्ञानं दत्वा तेन कर्ममीमांसां कारयामास । यस्मिन् कर्ममीमांसाकरणे प्रभुः शक्र आविष्टः । तस्य हस्तमानित्वेन सर्वकर्मप्रवर्तकत्वात् । यज्ञमानिनो यज्ञस्य जनकत्वाच्च । भगवान् व्यासः स्वयं चोभयोः प्रभुः, शक्रस्य च जैमिनेश्च ॥ ८२ ॥ **'अथातो दैवी मीमांसा'** इत्यादिमं सूत्रम् । अन्ते च **'विष्णुरेव हि तच्छ्रुतेः', 'तं ब्रह्मेत्याचक्षते'** इति द्वे सूत्रे च स्वयं कृत्वा । मध्यभागकरणे पैलं तदाविष्टं शेषं चाऽदिशत् । कर्मब्रह्ममीमांसाभ्यामियं परिमाणतोऽल्पेति देवमीमांसिकेत्याह । देवतातारतम्ये तत्प्रतिपाद्ये स्वस्य महत् तात्पर्यमिति प्रीत्यर्थे च कन् । अत एव स्वयमाद्यन्तयोः सूत्राणि प्रणिनाय । न तादृशं भाग्यं कर्ममीमांसायाः । अथ वेदविभागानन्तरं भारतस्य मीमांसासूत्राणां च रचनानन्तरं पुराणान्यकरोत् ॥ ८३ ॥

---

१. **'–मीमांसकाद्यन्तम्'**

**शैवान् [1]पाशुपताच्चक्रे संशयार्त्थं सुरद्विषाम् ।**
**वैष्णवान् पञ्चरात्राच्च[2] यथार्त्थज्ञानसिद्धये ॥ ८४ ॥**

**ब्राह्मांश्च वेदतश्चक्रे पुराणग्रन्थसङ्ग्रहान् ।**
**एवं ज्ञानं पुनः प्रापुर्देवाश्च ऋषयस्तथा ॥ ८५ ॥**

**सनत्कुमारप्रमुखा योगिनो मानुषास्तथा ।**
**कृष्णद्वैपायनात् प्राप्य ज्ञानं ते मुमुदुः सुराः[3] ॥ ८६ ॥**

**पुराणान्यकरोदित्युक्तम् । केषां पुराणानां किङ्किं मूलमित्यत आह– शैवानित्यादिना । संशयार्थं विपर्ययार्थं च ॥ ८४ ॥ देवाः सनत्कुमारप्रमुखाश्च ज्ञानं पुनःपुनः प्रापुः । विशेषज्ञानं प्रापुः । ऋषयो मनुष्योत्तमाश्च गौतमशापान्नष्टज्ञानाः पुनर्ज्ञानं प्रापुरिति भावः ॥ ८५–६ ॥**

---

सुरान् ये द्विषते ये न प्रीणयन्ति त उभयेऽपि, राजसास्तामसाश्चात्र सुरद्विष उच्यन्ते । केषाञ्चिदिदमदो वा तत्वमित्यनिश्चयार्थम् । केषाञ्चित् संशयनिवृत्त्या शिव एव परो न हरिरिति भ्रमस्थिरीकरणार्थं च । अस्मिन्नर्थे निवृत्तिवचनोऽर्थशब्दः । संशयस्यार्थो निवृत्तिस्तं प्रति । पाशुपतात् पाशुपतमतमनुसृत्य दर्शनभाषया शैवान् पुराणग्रन्थसङ्ग्रहान् । सर्वत्रापि शैवादिसाङ्कर्यदर्शनेन शैवानि पुराणानीत्यनुक्त्वा शैवान् ग्रन्थसङ्ग्रहानित्याह । न किमपि केवलं शैवं केवलं वैष्णवं वा । शैवप्रचुरं शैवम् । वैष्णवप्रचुरं वैष्णवमिति व्यवस्था । पञ्चरात्रमनुसृत्य वैष्णवान् पुराणग्रन्थसङ्ग्रहांश्चक्रे । **'पञ्चरात्रस्य कृत्स्नस्य वक्ता नारायणः स्वयम् । ज्ञानेष्वेतेषु राजेन्द्र सर्वेष्वेतद् विशिष्यते । ज्ञानेष्वेतेषु सर्वेषु साङ्ख्यपाशुपतादिषु । यथायोगं यथान्यायं निष्ठा नारायणः परः । ससंशयास्ते सर्वेऽपि पञ्चरात्रमसंशयम्'** [शां.प.३५९.६८–९] इति हि भारते ॥ ८४ ॥ वेदानां प्रातीतिकार्थमनुसृत्य अग्नीन्द्रादिपारम्यपरान्, तत्तत्प्रकरणे **'सर्वं खल्विदं ब्रह्म'** इति सर्वस्यापि देवतागणस्य ब्रह्मताप्रतिपादनाद्, ब्राह्मान् पुराणसङ्ग्रहांश्चक्रे, उभयार्थम् । संशयार्थं यथार्थज्ञानार्थं च । उभयी हि गतिर्मध्यमजीवानाम् । एवं सृष्ट्यादौ चतुर्मुखमुखोद्गतान् पुराणग्रन्थान् सञ्जग्राह । योगिनः ज्ञानभक्तियोगिनः देवाश्च स्वयं ज्ञानिनोऽपि पुनर्ज्ञानप्रकर्षमापुः । ऋषयश्च योगप्रवर्तकाः सनत्कुमारप्रमुखाः । मानुषाश्च कर्मयोगिनः भगवद्विषयं प्रकृष्टं ज्ञानमापुः । एवं ते, कलिनिग्रहेण लोके ज्ञानस्थिरीकरणार्थं ये पुण्डरीकाक्षं तुष्टुवुस्ते ब्रह्मरुद्रपुरोगमाः शक्राद्याः सुराः स्वयं ज्ञानं प्राप्य, सज्जनलोकस्य प्रापय्य स्वाभीष्टसिद्ध्या मुमुदुरित्यर्थः । साधुलोकोपकार एव मोदकारणमिति परस्मैभाषा ॥ ८५–६ ॥

---

१. **'पाशुपतांश्चक्रे'** २. **'पाञ्चरात्रांश्च'** ३. **'मुमुदुः सदा ।'**

**समस्तविज्ञानगभस्तिचक्रं विताय विज्ञानमहादिवाकरः ।**
**निपीय[1] चाज्ञानतमो जगत्ततं प्रभासते भानुरिवावभासयन् ॥ ८७ ॥**

**चतुर्म्मुखेशानसुरेन्द्रपूर्वकैः सदा सुरैः सेवितपादपल्लवः ।**
**प्रकाशयंस्तेषु सदात्मगुह्यं मुमोद मेरौ च तथा बदर्य्याम् ॥ ८८ ॥**

**इति श्रीमदानन्दतीर्थभगवत्पादविरचिते**
**श्रीमहाभारततात्पर्य्यनिर्ण्णये व्यासावतारानुवर्ण्णनं नाम[2]**
**दशमोऽद्ध्यायः**

—०—

[आदितः श्लोकाः– १०२१+८८=११०९]

**व्यासावतारकथामुपसंहरति– समस्तेति ॥ ८७–८ ॥**

इति श्रीमहाभारततात्पर्यनिर्णयटीकायां श्रीवेदाङ्गतीर्थभट्टारकविरचितायां
तात्पर्यदीपिकायां दशमोऽध्यायः

---

जगति ततं तमो निपीय, भानुरिव जगदवभासयन् । अधोधः अवरमवरं भासनमवभासनम् । स्वयं तु पूर्णतया भासते ॥ ८७ ॥ सदा आत्मगुह्यम् । सच्च तदात्मगुह्यम् । मेरौ विशिष्य देवैः सह । बदर्यामृषिभिः सह । यत्र भगवत्पादः स्वयं गत्वा भगवत्तमं बादरायणं परिषिषेवे ॥ ८८ ॥ व्यासावतारानुवर्णनमिति । उपरि भारतकथा प्रस्तूयते । तदनुकूलतयाऽनुगुणमिह भारतकर्तुर्व्यासस्यावतारकथावर्णनमित्यर्थः । ग्रन्थाध्ययनात् पूर्वं ग्रन्थकर्ता सगौरवं स्मर्तव्यः, मन्त्रजपात् पूर्वं मन्त्रकर्ता मुनिरिति हि सम्प्रदायः । स्वस्य साक्षाद् गुरुत्वाच्च सर्वथा ॥ ✲ ॥

**आचार्यगोविन्दकृते**
**श्रीमद्भारततात्पर्यनिर्णयस्य ।**
**निर्णिक्ते व्याख्याने निर्णयभावचन्द्रिकाख्याने**
**प्रगतं दशमाध्यायविवरणं सतां हृदयाभरणम् ॥ ✲ ॥**

**इत्याचार्यगोविन्दस्य कृतिषु श्रीमहाभारततात्पर्यनिर्णयपञ्चिकायां**
**निर्णयभावचन्द्रिकायां दशमोऽध्यायः**

—०—

---

१. श्रीहृषीकेशतीर्थलिखिते प्राचीनतमादर्शे प्रथमम्–**'निरस्य'** इति विलिख्य पश्चात् हंसपदिकां दत्वा **'निपीय'** इति लिखितम् । पाश्चात्यः शोधितः पाठ इति प्रायोवादः । अतः स एवात्राऽदृतः ।
२. **'व्यासावतारकथानिरूपणं नाम'**

# एकादशोऽध्यायः

**[भगवदवतारप्रतिज्ञा]**

ॐ ॥ शशाङ्कपुत्रादभवत् पुरूरवास्तस्याऽयुरायोर्न्नहुषो ययातिः ।
तस्याऽस पत्नीयुगळं[1] सुताश्च पञ्चाभवन् विष्णुपदैकभक्ताः ॥ १ ॥

**ॐ ॥ अथ भारतकथां विवक्षुरानन्दतीर्थभगवानाचार्यवर्यः सोमवंशे कृष्णपाण्डवाद्यवतारान् वक्तुं तद्वंशमाह– शशाङ्कपुत्रादित्यादिना । ब्रह्मपुत्रोऽत्रिः । अत्रिपुत्रः शशाङ्कः । शशाङ्कपुत्रो बुधः । तस्मात् पुरूरवा अभवत् ॥ १ ॥**

---

ॐ ॥ उद्दध्रिषे हरे पार्थान् पुरा भारतसङ्गरे ।
[2]अरेपार्थानुद्धृषीष्ट टीकेयं त्वत्कृपाबलात् ॥ ॐ ॥

प्रगतैरध्यायैर्भारतगां रामकथाम्, महाभारतप्रबन्धुर्बादरायणस्य च कथां यथावन्निर्णीयाथ भगवत्पादो महाभारततात्पर्यनिर्णयाय कृष्णकथां पाण्डवकथां च कालानुक्रमेण निरूपयितुमुपक्रमते । रामबादरायणचरिते अपि महाभारतगते इति तन्निर्णयोऽप्यन्ततो महाभारततात्पर्यनिर्णय एव । अथाऽदौ सोमवंशमाह– शशाङ्कपुत्रादित्यादिना । धातुरत्रिः । अत्रेः शशाङ्कः सोमः । शशाङ्कस्य बृहस्पतिभार्यायां तारायां बुधः पुत्रो बभूव । यत् तारारमणेन तस्य शशं अतिशयितं सुखं बभूव स एव तस्य शाश्वतोऽङ्कः कलङ्को बभूवेति सूचयितुं शशाङ्कपदमुपादत्त । अथ धातुरन्यः सुतो मरीचिः । मरीचेः काश्यपो मारीचः । तस्मादादित्यो विवस्वान् । ततो वैवस्वतमनुः । अथ तस्याप्रजस्य मनोः पुत्रजननार्थं वसिष्ठ इष्टिं मित्रावरुणयोश्चकार । तदा मनुपत्नी श्रद्धा तु ‘दुहिता मम हिता’ इति होतारं समयाचत । तत इळा नाम कन्या बभूव । वसिष्ठस्तां हरिवरबलात् पुमांसं चकार । तेनेळा सुद्युम्नो बभूव । स कदाचिन्मृगयार्थमटन् उमाविहारप्रदेशं निषिद्धपुरुषप्रवेशं कुमारवनमजानन् विवेश । प्रविष्टमात्रे च तत्र पुनः स्त्रीभावमवाप । तां दृष्ट्वा बुधश्चकमे तारात्मजः । स तस्यां पुरूरवसमात्मजं जनयामास । ततः

---

१. ‘–युगलम्’

२. ‘रेपः स्यान्निन्दिते क्रूरे’ इति मेदिनी ।

**यदुं च तुर्वशुं[1] चैव देवयानी व्यजायत ।**
**द्रुह्युं चानुं तथा पूरुं[2] शर्म्मिष्ठा वार्षपर्वणी ॥ २ ॥**

**कस्यां के जाता इत्यतस्तद्विवेकमाह– यदुमित्यादिना । देवयानी शुक्रपुत्री । व्यजायत जनयामास । वार्षपर्वणी वृषपर्वणो दानवस्य सुता ॥ २ ॥**

---

सोमवंशीया राजान इति । तदेतदाह– शशाङ्कपुत्रादभवत् पुरूरवा इति । **'जातमात्रः सुतो रावमकरोत् स पृथुस्वनम् । यस्मात् पुरू रवोऽस्येति तस्मादेष पुरूरवाः'**[३८.७८.९] इति ब्राह्मे । पुरुरव एव पुरूरवाः । दैर्घ्यमवधारणे। **'रेपस्-रेक्णस्-ऊधस्-विहायस्-ओकस्-सुमनस्-पुरूरवस्-पुरुदंसोऽनेहस्-अङ्गिरोऽप्सरसः'** [स.कं.२.१.३४५] इति भोजः । एतेऽसिप्रत्यययोगेन सकारान्ता भवन्तीत्यर्थः । अन्यथा रवशब्दस्यादन्तत्वात् पुरूरव इत्येव स्यान्न पुरूरवा इति । तमुर्वशी चकमे । तस्यामस्य षळासन्नात्मजाः–आयुः, श्रुतायुः, सत्यायुः, रयः, विजयः, जयश्चेति । ज्येष्ठ आयुर्वंशधरोऽभवत् । तदेतदाह– तस्याऽयुरिति । तदनुजेषु यो विजयो नाम, यस्यामावसुरिति नामान्तरम्, तद्वंशे जन्हुगाधिविश्वामित्राद्या बभूवुः । विश्वामित्रभगिनीं ज्येष्ठां सत्यवतीमृचीको मुनिरुदुवाह । तस्यां जमदग्निस्ततो रेणुकायां भगवान् भार्गवः परशुराम इति । ज्येष्ठस्य चाऽयोरिन्दुमत्यां पञ्च पुत्रा अभवन्– नहुषः, क्षत्रवृद्धः, रजिः, स्तम्भः, अनेनाश्चेति । ज्येष्ठो नहुषो वंशधरो बभूव । तदेतदाह– आयोर्नहुष इति । अयनशीलत्वादायुः । अय गतौ । एतीत्यायुरिति वैयाकरणाः । **'एतेर्णिच'** [९.४०] इति हि दशपादिका । एतेरुसिः प्रत्ययो णित्सञ्ज्ञको भवतीत्यर्थः । **'इळायाः पुरूरवाः । पुरूरवस आयुः । अयोर्नहुषः'** [आ.प.६३.५] इति भारते । **'आयोः पुत्रास्तथा पञ्च'**[१.२८.१] इति च हरिवंशे । आयुरिति क्वचित् सान्तं पठ्यते–**'कुमारं चाऽयुषमस्मै चोर्वशी ददौ'** [४.६.७३] इति विष्णुपुराणे । नहुं बन्धकं कर्मादिकं स्यतीति नहुषः । णह बन्धने । षो अन्तकर्मणि । नह्यतीति नहुष इति वैयाकरणाः । **'ऋनहिभ्यामुषन्'**[९.१३] इति दशपादिका । 'उषच्' इत्येके । अरुषः । नहुषः । धर्मेण नह्यतीत्यर्थः । नहुः धर्मबद्धः सन्नेव सरतीति वा नहुषः । तस्मादशोकसुन्दर्यां षट् पुत्रा बभूवुः– यतिः, ययातिः, संयातिः, आयतिः, वियतिः, कृतिश्चेति । ज्येष्ठो यतिर्नैच्छद् राज्यम् । तेन ययातिर्वंशधरो बभूव । तदेतदाह–तस्य नहुषस्य ययातिरभवदिति । अतिशयेन याति भगवन्तमिति ययातिः । यं विष्णुं यातीति वा । यकारो हि विष्णुवचनः । यजतीति ययातिरिति वैयाकरणाः । **'यजो यश्च'** [स.कं.२.१.१९७] इति भोजः । **'यजेर्धातोरातिः प्रत्ययो भवति । यश्चान्तादेशः'** इति दण्डनाथः । शुक्रतनया देवयानी, दानवाधिपतेर्वृषपर्वणस्तनया शर्मिष्ठा चेति तस्याऽस पत्नीयुगळम् । सुताश्च पञ्चाभवन् । ये वेदेषु गीतनामानः । अत एव विष्णुपदैकभक्ताः । केवलं विष्णुपदभक्ताः । मुख्यभक्ताश्च । परिवारतयैवेतरदेवतायाजिनः । एतेन पित्रा शप्ता राज्यभ्रष्टा धर्मविमुखास्त इति न मन्तव्यमिति सूचयति । **'तस्मिन् शासति धर्मज्ञे ययातौ नृपतौ तदा । वैष्णवा मानवाः सर्वे विष्णुव्रतपरायणाः'** [भू.खं. ७४.१८] इति पाद्मे ॥ १ ॥ तान् नामतो निर्दिशति– यदुं च । तुर्वशुस्तुर्वशोऽपि । व्यजायत जनयामास । मात्रोः स्नेहातिशयदर्शनाय णिचोऽन्तर्नयनम् । **'स्वातन्त्र्यस्नेहयोरन्त-**

---

१. 'तुर्वसुम्' २. 'चानुं च पूरुं च शर्मिष्ठा'

**यदोर्वंशे चक्रवर्त्ती कार्त्तवीर्य्यार्ज्जुनोऽभवत् ।**
**विष्णोर्द्दत्तात्रेयनाम्नः प्रसादाद् योगवीर्य्यवान्** ॥ ३ ॥

**तस्यान्ववाये यदवो बभूवुर्विष्णुसंश्रयाः ।**
**पूरोर्वंशे तु भरतश्चक्रवर्त्ती हरिप्रियः** ॥ ४ ॥

**योगवीर्यवान् अणिमाद्यष्टैश्वर्यबलवान् ॥ ३–४ ॥**

---

**नीतणिच्'** इति हि स्मरन्ति । उभे अपि जनन्यौ वंशद्वयप्रवर्तकौ पुत्रावजनयतामिति वैशिष्ट्यं वीत्याह । यता ज्ञानेनोच्चत्वाद् यदुः । याति उत्कर्षमिति वा । वैयाकरणास्तु नियम्यन्त इन्द्रियाण्यनेनेति विगृह्य **'यमेर्दुक् च'** [स.कं.२.१.६८] इति दुगागमेन यदुपदं निष्पादयन्ति । तुरो वायुः । तं भक्त्या वशयतीति तुर्वशुस्तुर्वशो वा । त्वरमाणः शत्रून् वशयन् वा । तुतोर्तीति तुरः । तुर त्वरणे । क्वचित् तुर्व इति च वेदेषु पठ्यते। त्वरितं वातीति तुर्वः। शत्रून् तुर्वतीति वा। तुर्वी हिंसायाम् । शत्रुभ्यो द्रुह्यतीति द्रुह्युः । द्रुह जिघांसायाम् । द्रुतं जिघीषति वा । हि गतौ वृद्धौ च । द्रुहः शत्रून् प्रति यातीति वा । सतामनुकूलत्वादनुः । अननशीलो वा । अपूरयत् पितुः काममिति पूरुः । पिता पूर्वं नाम चकार । सुतस्तं सार्थकं चकार । पश्चाप्येते वेदेषु पठ्यन्ते । तत्र काश्चनर्च उदाह्रियन्ते– **'अग्निना तुर्वशं यदुं परावत उग्रादेवं हवामहे'** [ऋ.सं.१.३६.१८], **'यदिन्द्राग्नी यदुषु तुर्वशेषु यद् द्रुह्युष्वनुषु पूरुषु स्थः'**[१.१०८.८], **'पारया तुर्वशं यदुं स्वस्ति'**[१.१७४.९; ६.२०.१२], **'उत त्या तुर्वशायदू अस्नातारा शचीपतिः । इन्द्रो विद्वाँ अपारयत्'** [४.३०.१७], **'त्वमपो यदवे तुर्वशायारमयः–'**[५.३१.८], **'य आनयत् परावतः सुनीती तुर्वशं यदुम् । इन्द्रः स नो युवा सखा'** [६.४५.१], **'नि गव्यवोऽनवो द्रुह्यवश्च'** [७.१८.१४] **'यद् द्रुह्यव्यनवि तुर्वशे यदौ'** [८.१०.५], **'अध त्यं तुर्वशं यदुम्'** [९.६१.२], **'प्राश्रावयं शवसा तुर्वशं यदुम्'** [१०.४९.८], **'यदुस्तुर्वश्च मामहे'** [१०.६२.१०] इत्याद्याः । **'तुर्वशादींस्तथा राज्ञो वयं तेन हवामहे । तुरोऽपि यद्वशो विष्णुः स च तुर्वशनामवान् । यदस्ति तत उच्चत्वाद् यदुरुग्रोऽसुरान् प्रति'** [१.३६.१८] इति चर्भाष्ये । **'यदुं च तुर्वशुं चैव देवयानी व्यजायत । द्रुह्युं चानुं च पूरुं च शर्मिष्ठा वार्षपर्वणी'** इति भारते पुराणेषु च । यदुं च तुर्वशुं चेति द्वावेव देवयानी व्यजायत । शर्मिष्ठा तु द्रुह्युमनुं चेति द्वौ, तथा तृतीयं पूरुं च वंशकर्तारं व्यजायतेति ॥ २ ॥ तत्राऽदौ ज्येष्ठस्य यदोरन्वयं प्रस्तौति । **'यदोर्वंशं नरः श्रुत्वा सर्वपापैः प्रमुच्यते । यत्रावतीर्णो भगवान् परमात्मा नराकृतिः'** [९.२०.१९] इति श्रीभागवते । **'यदोर्वंशं नरः श्रुत्वा सर्वपापैः प्रमुच्यते । यत्रावतीर्णं कृष्णाख्यं परं ब्रह्म नराकृति'** [४.११.४] इति श्रीविष्णुपुराणे । अर्जनादर्जुनः । अर्जेरुनन् । कृतवीर्यतनयः अर्जुनोऽभवत् । स चक्रवर्ती चाभवत् । **'अर्जुनः कृतवीर्यस्य सप्तद्वीपेश्वरोऽभवत् । दत्तात्रेयाद्धरेरंशात् प्राप्तयोगमहागुणः'** [भाग.९.२०.२३] इति हि स्मरन्ति । पाद्मे च–**'न नूनं कार्तवीर्यस्य शान्तिं यास्यन्ति पार्थिवाः । यज्ञैर्दानैस्तपोभिश्च विक्रमेण श्रुतेन च'** [सृ.खं.१२.११४] इति । अयमत्र सर्वग्रन्थानालोड्य निर्णीतो वंशक्रमः–

| | | |
|---|---|---|
| १. यदुः | ६. नेत्रः(धर्मनेत्रः) | ११. दुर्दमः |
| २. सहस्रजित्(सहस्रदः) | ७. कुन्तिः | १२. धनकः (कनकः) |
| ३. शतजित् | ८. सोहञ्जिः(सहजित्) | १३. कृतवीर्यः |
| ४. हेहयः | ९. महिष्मान् | १४. अर्जुनः |
| ५. धर्मः | १०. भद्रसेनः(भद्रश्रेण्यः) | |

तस्यान्वये बहुशाखा यदवो बभूवुः । सर्वे ते विष्णुसंश्रयाश्च बभूवुः । अत एव पित्रा शप्तस्यापि यदोर्वंशे विष्णुरवततार । अर्जुनान्मधुः । मधोश्च वृष्णिः । तेनायं वंशो यादवो माधवो वार्ष्णेय इति पप्रथे । यदोरपरः सुतः क्रोष्टुः । तत इयं वंशपरम्परा व्यस्तीर्यत । तथाहि–

| | | | |
|---|---|---|---|
| १. यदुः | ५. रुशङ्कुः | ९. पृथुतमः(धर्मः) | १३. परावृत् |
| २. क्रोष्टुः(क्रोष्टा) | ६. चित्ररथः | १०. उशनाः | १४. ज्यामघः |
| ३. ध्वजिनीवान् (व्रजिनवान्) | ७. शशबिन्दुः | ११. शितगुः (शितपुः) | १५. विदर्भः |
| ४. स्वातिः (वाहिः) | ८. पृथुश्रवाः | १२. रुग्मकवचः(रुचकः) | |

विदर्भवंशीया वैदर्भा यदवो बभूवुः । यत्र वैदर्भी रुग्मिणी जाता । विदर्भतनयेषु रोमपाद एकः । ततश्चेदिवंशप्रसरः–

| | | |
|---|---|---|
| १. विदर्भः | ३. बभ्रुः | ५. उशिकः (कैशिकः) |
| २. रोमपादः | ४. धृतिः (कृतिः) | ६. चेदिः |

ततश्चैद्यभूपालाः । यत्र शिशुपालः । विदर्भस्यान्यस्तनयः क्रथः । तेन यदुप्रभेदा दाशार्हाः सात्वताश्च बभूवुः–

| | | |
|---|---|---|
| १. विदर्भः | ९. विकृतिः | १७. मधुः |
| २. क्रथः | १०. भीमरथः | १८. कुरुवशः(कुमारवंशः) |
| ३. कुन्तिः | ११. नवरथः | १९. अनुः |
| ४. धृष्टिः | १२. दशरथः | २०. पुरुमित्रः (पुरुहोत्रः) |
| ५. निर्वृतिः (निधृतिः) | १३. शकुनिः | २१. अंशुः (आयुः) |
| ६. दशार्हः | १४. करम्भिः | २२. सत्वतः (सत्वश्रुतः) |
| ७. व्योमा (व्योमः) | १५. देवरातः | |
| ८. जीमूतः | १६. देवक्षत्रः | |

ततः सात्वतो वंशः । येन सात्वतानां पतिर्भगवान् सात्वताम्पतिरुच्यते ।

सात्वतो हि वंशो बहुशाखो बभूव–




सत्वतपुत्राद् वृष्णेरप्ययमन्वयो वार्ष्णेयतामाप । अथान्धकसन्ततिः, यत्र भगवानवततार–




तत एते भोजा वृष्णयोऽन्धकाः कुकुराश्च यदुप्रभेदाः ॥ ✲ ॥

पूरोर्वंशे तु । पित्रनुग्रहलब्धोऽयं वंशाधिकार इति विशेषं तुनाऽऽह । पूरुवंश एव पश्चाद् भरतवंशो बभूव । एवं भरते वंशस्य नामप्रदत्वं नाम विशेषं चाऽह वंशे तु भरत इति । भरणाद् भरतः । **'भृ-दृशि-वलि-यजादिभ्योऽतच्'** [स.कं.२.२.१३६] इति भृञोऽतच् । दुष्षन्तपुत्रो भरतः । येन तदन्वया भरताः । भारतं च कुलम् । दुःखात् सन्तारयति प्रजा इति दुष्षन्तः । दुर्जनानां दुःखं सन्तनोतीति च । दुष्यतीति दुष्षन्त इति वैयाकरणाः । **'हि-दुषोर्मुक्-षुकौ च'** [स.कं.२.२.१३९] इति च । हिनोतेरन्तच् मुक् चाऽगमः । हेमन्तः । दुष्यतेरन्तच् षुक् चाऽगमः । दुष्षन्तः । दुष्यन्त इति त्वर्वाचीनं निर्मूलं पदम् । वङ्गास्तु दुष्षन्त इत्येव पठन्ति । भगवति रतो भरत इति सार्थकं नामेत्याह– हरिप्रिय इति । सद्गुणभरणाच्च भरतः । अत एव हरिरस्य प्रियः । हरेश्चायं प्रियः । **'शकुन्तलायां भरतो दौष्षन्तिरभवत् सुतः । तस्माद् भरतवंशस्य विप्रतस्थे महद् यशः'** [आ.प.८८.१९] इति भारते । तथाचायं आ पूरोरा भरतं वंशतन्तुः–

| | | |
|---|---|---|
| १. पूरुः | ७. सुद्युः (सुधन्वा) | १३. अन्तिनारः (मतिनारः) |
| २. जनमेजयः | ८. बहुगवः | १४. तंसुः (त्रसुः, सुमतिः) |
| ३. प्राचीन्वान् | ९. शँय्यातिः (संयातिः) | १५. रैभ्यः (सुरोधः, ऐलिनः) |
| ४. प्रवीरः | १०. अहंयातिः | १६. दुष्षन्तः |
| ५. मनस्युः | ११. रौद्राश्वः | १७. भरतः |
| ६. अभयदः (चारुपदः) | १२. ऋतेयुः (ऋचेयुः, ऋतेषुः) | |

अत्र पुराणेषु न क्वचिदेकरूपं पठ्यते । क्वचिद् व्यत्यस्य नामानि पठ्यन्ते । क्वचित् पूर्वापरीभावेन । क्वचित् कानिचन नामानि विलुप्य पठ्यन्ते । क्वचिच्च लिपिकृत्प्रमादादन्यथाऽन्यथा च पठ्यन्ते । मूलपाठगवेषणेन व्यत्यासप्रघसादिप्रभेदेन तत् सर्वं समन्वीयानुसन्धातव्यं भवति । निदर्शनान्युदाहरिष्यामः ॥ ३–४ ॥ भरतवंशजः संवरणात् सूर्यकन्यायां तपत्यां कुरुर्नाम जातः । सोऽपि हरिप्रियः । धर्ममार्गस्य सम्यग् वरणात् संवरणः । सम्यक् करणात् कुरुः । तृतीयोऽतिशये । वैयाकरणास्तु किरतेः कुरुपदं निष्पादयन्ति । **'कॄ-ग्रोरुच्'** [द.पा.१.१०९] इति । **'कॄ गॄ इत्येताभ्यां कुप्रत्ययो भवति, उकारश्चान्तादेशः । कॄ विक्षेपे । कीर्यन्तेऽनेन धर्मविजययशांसीति कुरुः राजर्षिः । गॄ निगरणे । गॄ शब्दे । गिरति गृणाति वा तांस्तानर्थविशेषानिति गुरुः, आचार्यः पूज्यो जनश्च'** इति वृत्तिकारः । किरतीति कुरुरिति दुर्गसिंहः । 'कुर शब्दे' । कुरतीति कुरुरित्यन्ये । तेन भरतवंशः कुरुवंश इति प्रथामाप । तदेतत् सूचयामास तदन्वय इति । कुरुमनु तदेव नामायत इत्यन्वयः । तेन पूरवः कुरवोऽभवन् । यस्य तपसा च कुरुक्षेत्रं धर्मक्षेत्रं बभूव । तथाचाऽ भरतादा कुरुं वंशवृक्षः–

| | |
|---|---|
| १. भरतः | ६. हस्ती (बृहन्), येन निर्मितं हस्तिनपुरम् । |
| २. वितथः (भरद्वाजः) | ७. अजमीढः (यन्नाम्ना 'अजमीर' इति सम्प्रति प्रथितं पुरम् ।) |
| ३. मन्युः | ८. ऋक्षः |
| ४. बृहत्क्षत्रः | ९. संवरणः |
| ५. सुहोत्रः | १०. कुरुः, येन निर्मितं धर्मक्षेत्रं कुरुक्षेत्रम् ॥ ✲ ॥ |

**तद्वंशजः कुरुर्नाम प्रतीपोऽभूत् तदन्वये ।**
**प्रतीपस्याभवन् पुत्रास्त्रयस्त्रेताग्निवर्चसः ॥ ५ ॥**

**देवापिरथ बाह्लीको गुणज्येष्ठश्च शन्तनुः ।**
**त्वग्दोषयुक्तो देवापिर्जगाम तपसे वनम् ॥ ६ ॥**

**विष्णोः प्रसादात् स कृते युगे राजा भविष्यति ।**
**पुत्रिकापुत्रतां यातो बाह्लीको राजसत्तमः ॥ ७ ॥**

**शन्तनुर्ज्येष्ठ इति क्वचिदुक्तिः । तदभिप्रायमाह– गुणज्येष्ठ इति ॥ ५–९ ॥**

---

तदन्वये प्रतीपोऽभूत् द्विषतां प्रतीपः । सतां पुनः प्रत्येकमिष्टं पातीति च प्रतीपः । धर्मप्रतिपालनाद्वा प्रतीपः । तद् यथा– प्रतिकारः प्रतीकारः । दुष्टजनप्रतिकूलत्वाच्च प्रतीपः । तद् यथा दुष्टजनार्दनो जनार्दन उच्यते । दुर्जनमेजयतीति जनमेजय उच्यते । दुष्टानां प्रतिकूला आपः कर्माण्यस्येति वा प्रतीपः । **'द्व्यन्तरुपसर्गेभ्योऽप ईत्'** [अ.सू.६.३.९७] इत्यकारस्य ईत्वम् । त्रित्वसङ्ख्यामिताः त्रेतायामन्तर्गता वा अग्रयस्त्रेताग्रयः । त्रयाणां समष्टिस्त्रेता । आहवनीयो गार्हपत्योऽन्वाहार्यपचनश्च ॥ ५ ॥ **'देवापिः शन्तनुस्तस्य बाह्लीक इति चाऽत्मजाः'** [९.१९.१२] इति भागवते शन्तनुर्बाह्लीकाग्रज इति प्रतीयते । भारते च–**'देवापिः शन्तनुश्चैव बाह्लीकश्च महारथः'** [आ.प.१०१.४९] इति । **'प्रतीपो भीमसेनस्य प्रतीपस्य तु शन्तनुः । देवापिर्बाह्लिकश्चैव त्रय एव महारथाः'** [ह.वं.प.३२.१०६] इति च हरिवंशे शन्तनुः प्रथमपुत्रत्वेन । अतः पुत्रान् जननक्रमेण निर्दिशति– प्रथमं देवापिरथ बाह्लीकोऽथ शन्तनुरिति । तत्र देवापिराहवनीय इव । बाह्लीकोऽन्वाहार्यपचनो दक्षिणाग्निरिव । शन्तनुर्गार्हपत्याग्निरिव । शन्तनुः जननक्रमेण कनिष्ठोऽपि गुणतः ज्येष्ठो बभूव । गुणज्येष्ठत्वाच्च स वंशधरो बभूव । गुणज्येष्ठत्वादेव तस्य पूर्वनिर्देशः, न जननक्रमानुसारेणेति च । भारत एवोत्तरवचनेन स्फुटमेतत्–**'देवापिरभवच्छ्रेष्ठो बाह्लीकस्तदनन्तरम् । तृतीयः शन्तनुस्तात धृतिमान् मे पितामहः'** [उ.प.१४९.१६] इति धृतराष्ट्रवचनं दुर्योधनं प्रति । तर्ह्यग्रजौ किमिति न वंशधरौ बभूवतुः? आह–त्वग्दोषयुक्तः । देवानाप्नोतीति देवापिः । **'देवापिस्तु महातेजास्त्वग्दोषी राजसत्तमः'** [१४९.१७] इति च । **'उपाध्यायस्तु देवानां देवापिरभवन्मुनिः'** [ह.वं.प.३२.१०९] इति च हरिवंशे । स एकोनत्रिंशे कृते युगे राजा भविष्यति । कलिरित्यभिमानिव्यपदेशः । तेन कलेर्युगमित्यपि भवति । नात्र तथा कृतस्य युगं कृतयुगमिति । किन्तु कृतं चरितार्थं युगमित्येव । तदेतदाह– कृते युग इति । **'देवापिर्योगमास्थाय कलापग्राममाश्रितः । सोमवंशे कलौ नष्टे कृतादौ स्थापयिष्यति'** [९.१९.१७] इति भागवते । बाह्लीकराजतनयां प्रतीप उपयेमे । कन्याप्रदानकाले तेन समयः कृतः–स्वपुत्रिकायां यः पुत्रो जायते स स्वस्मै देय इति । तेन प्रतीपस्य द्वितीयः पुत्रः पुत्रिकापुत्रतां यातः सन् स्वमातामहस्य दत्तपुत्रो भूत्वा बाह्लीकेष्वेव राजा बभूव । पुत्रिकापुत्रस्यैव पुत्रता पुत्रिकापुत्रता । पुत्रिकाया एव वा यत्र पुत्रता । तत्सन्ततेरेवोत्तराधिकारात् । देवापिस्त्वग्दोष-

**हिरण्यकशिपोः पुत्रः प्रह्लादो भगवत्परः ।**
**वायुना च समाविष्टो महाबलसमन्वितः ॥ ८ ॥**

**येनैव जायमानेन तरसा भूर्विदारिता ।**
**भूभारक्षपणे विष्णोरङ्गतामाप्तुमेव सः ॥ ९ ॥**

---

दुष्ट इति न राजा बभूव । नापि पुत्रिकापुत्रतां जगाम । द्वितीयः पुत्रिकापुत्रतां गतः । तृतीयो राजा बभूवेति । वाहिनीभिः परितो लीन इति तं देशं बाह्लीक इति वाहा अश्वा अत्रेष्यन्त इति वाहीक इति चाऽचक्षते । **'बाहीकेष्वभवत् पतिः'** [१०] इति चात्रैवाऽचार्यप्रयोगः । वार्त्तिककारस्तु बाह्य इत्यर्थे बाहीकशब्दं निष्पादयति–**'बहिषष्टिलोप ईकक् च'** [४.१.८५] इति । यं पञ्चापत्वात् 'पञ्जाब्' इत्यधुना व्याहरन्ति । बहिरेव शब्दादिषु कं मन एषामिति च बाहीका नाम जनपदा विषयलोलुपा इति वा । बाह्यकर्मसु लीनत्वाद्वा बाह्लीकाः । बाह्लीकानां राजाऽपि बाह्लीकः । अत्र केचित् लपूर्वं पठन्ति पदम्–बाल्हीक इति । 'तदा बल्हधातोः कीकन्प्रत्ययः । तथाहि धातुपारायणिकाः– **'बल्ह मल्ह विल्ह कल्ह प्राधान्यपरिभाषणहिंसादानेषु'** इति । बल्हते मुख्यो भवतीति बाल्हीकः । तथाहि भोजः– **'मृद्वीका-तिन्तिडीका-बाल्हीक-वल्मीक-कल्मलीक-किङ्किणीक-पुण्डरीक-चञ्चरीक-समीक-प्रतीक-फर्फरीकादयः'** [सं.कं.२.२.२०] इति । **'बल्हिर्देशः । तत्र भवो बाल्हिकः'** इति क्षीरस्वामी । वैयाकरणास्तु बहुधा भ्रमन्ति । हपूर्व एव प्रतनः पाठः– बाह्लीक इति । राजसु सत्तमः ज्ञानितमः उत्तमो वा ॥ ६–७ ॥ यः प्रह्लादो नरसिंहावतारे हिरण्यकशिपोः पुत्रो बभूव स एव कृष्णावतारे प्रतीपपुत्रो बाह्लीको बभूव । जगद्वाहके भगवति लीनं कं मनोऽस्येति तस्मिन्नन्वर्थं च नामाऽसीदित्याह– भगवत्परः । भगवानेव सर्वतः पर इति सदा भगवच्चिन्तनपरः । स्वयं प्रह्लाद एव बली । अयं पुनर्वायुना च समाविष्टः । अनुग्रहविशेषायाऽवेशः समावेशः । अनुग्रहविशेषादेव तस्मिन् बलरूपेण विशेषतः सन्निधानमिति समन्वित इत्याह । तस्माच्च महाबलसमन्वितः । वायुसमावेशादेव जायमानेनैव भूर्विदारिता, भीमेनेव शतशृङ्गगिरिः । तेन येनैवेति द्विरावृत्त्या योजनीयम्– येन वायुसमाविष्टेन बाह्लीकेनेति । येनैव वायुसमावेशेनैव कारणेनेति । समाविष्टेन वायुनैवेति वा । भूभारक्षपणे विष्णोरङ्गतामाप्तुमेव वायुना च समन्वितः बाहीकेषु जनपदेष्वभवत् पतिः । अत एव बाह्लीकसुतां रोहिणीं वसुदेव उदुवाह । यस्यां शेषो बलरामः सन् जज्ञे । स्वयं च भारतयुद्धे बाह्लीको भूभारक्षपणे विष्णोरङ्गतामाप । अङ्गत्वमित्युपकरणत्वम् । **'प्रह्लादो नाम बाह्लीकः स बभूव नराधिपः'** [आ.प.६८.३१] इति भारते । शं तनोतीति शन्तनुः । तथाहि स्मरन्ति– **'यँयं कराभ्यां स्पृशति जीर्णं स सुखमश्नुते । पुनर्युवा च भवति तस्मात् तं शन्तनुं विदुः'** [आ.प.६३.४९] इति । युवा स्यादिति सङ्कल्प्य यं स्पृशति स युवा भवतीत्यर्थः । निर्वचनान्तरं च स्वयमाचार्यो वक्ष्यति ॥ ८–९ ॥

अथात्र नानाविधोक्तिविभ्रामकेषु पुराणेषु विरोधोद्धारक्रमं जिज्ञासुशिक्षार्थं किञ्चिदिव प्रदर्शयामः । अयमत्र भारतोक्तो वंशक्रमः– **'भरतः खलु सार्वसेनीमुपयेमे सुनन्दां नाम । तस्यामस्य जज्ञे भुमन्युः । भुमन्युः खलु दाशार्हीमुपयेमे**

---

सुवर्णां [विजयां] नाम। तस्यामस्य जज्ञे सुहोत्रः। सुहोत्रः खल्वैक्ष्वाकीमुपयेमे जयन्तीं [सुवर्णां] नाम। तस्यामस्य जज्ञे हस्ती। य इदं पुरं निर्मापयामास। एतदस्य हस्तिनपुरत्वम्। हस्ती खलु त्रैगर्तीमुपयेमे यशोदां [यशोधरां] नाम। तस्यामस्य जज्ञे विकुण्ठनः [विकुञ्जनः]। विकुण्ठनः खलु दाशार्हीमुपयेमे सुदेवां [सुन्दरीं] नाम। तस्यामस्य जज्ञेऽजमीढः। अजमीढस्य चतुर्विंशतिपुत्रशतं बभूव। तत्र वंशकरः संवरणः। संवरणः खलु वैवस्वतीं तपतीं नामोपयेमे। तस्यामस्य जज्ञे कुरुः। कुरुः खलु दाशार्हीमुपयेमे शुभाङ्गीं नाम। तस्यामस्य जज्ञे विडूरथः। विडूरथस्तु मागधीमुपयेमे सम्प्रियां नाम। तस्यामस्य जज्ञेऽनश्वान् नाम। अनश्वान् मागधीमुपयेमेऽमृतां नाम। तस्यामस्य जज्ञे परीक्षित्। परीक्षित् खलु बाहुकामुपयेमे सुवेषां [सुयशां] नाम। तस्यामस्य जज्ञे भीमसेनः। भीमसेनः खलु कैकेयीमुपयेमे सुकुमारीं नाम। तस्यामस्य जज्ञे प्रतिश्रवाः। प्रातिश्रवसः प्रतीपः खलु शैब्यामुपयेमे सुनन्दां नाम। तस्यां त्रीन् पुत्रानुत्पादयामास देवापिं शन्तनुं बाह्लीकं चेति' [आ.प.६३.३४–४७] इति। हरिवंशे च–'चक्रवर्ती सुतो जज्ञे दुष्षन्तस्य महात्मनः। शकुन्तळायां भरतो यस्य नाम्ना स्थ भारताः।.... भरतस्य विनष्टेषु तनयेषु महीपतेः।... बृहस्पतेराङ्गिरसात् पुत्रो राजन् महामुनिः। सङ्क्रामितो भरद्वाजो मरुद्भिः क्रतुभिर्विभुः... । ततोऽथ वितथो नाम भरद्वाजः सुतोऽभवत्। ....स राजा वितथः पुत्रान् जनयामास पञ्च वै। सुहोत्रं च सुहोतारं गयं गर्गं तथैव च। कपिलं च.... । सुहोत्रस्य बृहन् पुत्रो बृहतस्तनयास्त्रयः। अजमीढो द्विमीढश्च पुरुमीढश्च वीर्यवान्। अजमीढस्य पत्न्यस्तु तिस्रो वै यशसाऽन्विताः। नीलिनी केशिनी चैव धूमिनी च वराङ्गना। ...... धूमिन्या स तया देव्या त्वजमीढः समेयिवान्। ऋक्षं सञ्जनयामास धूम्रवर्णं सुदर्शनम्। ऋक्षात् संवरणो जज्ञे कुरुः संवरणात् तथा। यः प्रयागादतिक्रम्य कुरुक्षेत्रं चकार ह। ....तस्यान्ववायः सुमहान् तस्य नाम्ना स्थ कौरवाः। कुरोश्च पुत्राश्चत्वारः सुधन्वा सुधनुस्तथा। परीक्षिच्च महाबाहुः प्रवरश्चारिमेजयः। ....परीक्षितस्तु दायादो धार्मिको जनमेजयः।....जनमेजयस्य पुत्रौ तु सुरथो मतिमांस्तथा। सुरथस्य तु विक्रान्तः पुत्रो जज्ञे विडूरथः। विडूरथस्य दायाद ऋक्ष एव महारथः। द्वितीयः स बभौ राजा नाम्ना तेनैव सञ्ज्ञितः। ....ऋक्षस्य तु द्वितीयस्य भीमसेनोऽभवत् सुतः। प्रतीपो भीमसेनस्य प्रतीपस्य तु शन्तनुः। देवापिर्बाह्लिकश्चैव त्रय एते महारथाः' [ह.वं.प.३२.१०–१०६] इत्यादि। भागवते च–'तस्याऽसन् नृप वैदर्भ्यः पत्न्त्यस्तिस्रः सुसम्मताः। जघ्नुस्त्यागभयात् पुत्रान् नानुरूपा इतीरिते। तस्यैवं वितथे वंशे तदर्थं यजतः सुरान्। मरुत्स्तोमेन मरुतो भरद्वाजमुपाददुः' [९.१७.३४–५]। वितथस्य सुतो मन्युर्बृहत्क्षत्रो जयस्ततः [९.१८. १]। बृहत्क्षत्रात् सुहोत्रोऽस्मात् हस्ती यद्धास्तिनं पुरम्। अजमीढो द्विमीढश्च पुरुमीढश्च हस्तिनः [९.१८.२०–१]। योऽजमीढसुतो ह्यन्य ऋक्षः संवरणस्ततः। तपत्यां सूर्यकन्यायां कुरुक्षेत्रपतिः कुरुः। परीक्षित् सुधनुर्जन्हुर्निषधश्च कुरोः सुताः [९.१९.३–४]। परीक्षिदनपत्योऽभूत् सुरथो नाम जान्हवः। ततो विडूरथस्तस्मात् सार्वभौमस्ततोऽभवत्। जयत्सेनस्तत्तनयो राचिकोऽतो द्युमानभूत्। ततश्चाक्रोधनस्तस्माद् देवातिथिरमुष्य च। ऋक्षस्तस्य दिलीपोऽभूत् प्रतीपस्तस्य चाऽत्मजः। देवापिः शन्तनुस्तस्य बाह्लीक इति चाऽत्मजाः। पितृराज्यं समुत्सृज्य देवापिस्तु वनं गतः। अभवच्छन्तनू राजा प्राङ् महाभिषसञ्ज्ञितः' [९.१९.९–१३] इत्यादि। विष्णुपुराणे च–'भरतस्य पत्नीत्रये नव पुत्रा बभूवुः। नैते ममानुरूपा इत्यभिहितास्तन्मातरः परित्यागभयात्

तान् पुत्रान् जघ्नुः । ततोऽस्य वितथे पुत्रजन्मनि पुत्रार्थिनो मरुत्सोमयाजिनो दीर्घतमसः पार्ष्ण्यपास्ताद् बृहस्पतिवीर्यादुचथ्यपत्न्यां ममतायां समुत्पन्नो भरद्वाजाख्यः पुत्रो मरुद्भिर्दत्तः । ....भरद्वाजः स वितथे पुत्रजन्मनि मरुद्भिर्दत्तः । ततो वितथसञ्ज्ञामवाप । वितथस्यापि मन्युः पुत्रोऽभवत् । बृहत्क्षत्रमहावीरनरगर्गा मन्युपुत्राः । ....बृहत्क्षत्रस्य सुहोत्रः । सुहोत्राद्धस्ती । य इदं हस्तिनपुरमावासयामास । ....अजमीढद्विमीढपुरुमीढा हस्तिन-स्तनयाः । अजमीढस्यान्य ऋक्षनामा पुत्रोऽभवत् । तस्य संवरणः । संवरणात् कुरुः । य इदं धर्मक्षेत्रं कुरुक्षेत्रं चकार । सुधनुर्जन्हुपरीक्षित्प्रमुखाः कुरोः पुत्रा बभूवुः [४.१९.१४–८८] । जन्होस्तु सुरथो नामाऽत्मजो बभूव । तस्यापि विडूरथः । तस्मात् सार्वभौमः । सार्वभौमाज्जयत्सेनः । तस्मादाराधिकः । ततश्चायुतायुः । अयुतायोरक्रोधनः । तस्माद् देवातिथिः । ततश्च ऋक्षोऽन्योऽभवत् । ऋक्षाद् भीमसेनः । ततश्च दिलीपः । दिलीपात् प्रतीपः । तस्यापि देवापिशन्तनुबाह्लीकसञ्ज्ञास्त्रयः पुत्रा बभूवुः । देवापिर्बाल एवारण्यं विवेश । शन्तनुस्तु महीपालोऽभवत्' [४.२०.२–११] इत्यादि । गारुडे च–'ऐलिनस्य तु दुष्यन्तो भरतस्तस्य चाऽत्मजः । शकुन्तलायां सञ्जज्ञे वितथो भरतादभूत् । वितथस्य सुतो मन्युः.... बृहत्क्षत्राच्च मन्युजात् । सुहोत्रस्तस्य हस्ती च अजमीढ-द्विमीढकौ । हस्तिनः पुरुमीढश्च.... ऋक्षोऽभूदजमीढतः । ऋक्षात् संवरणो जज्ञे कुरुः संवरणादभूत् । सुधनुश्च परीक्षिच्च जन्हुश्चैव कुरोः सुताः ।.... जन्होस्तु सुरथोऽभवत् । विडूरथस्तु सुरथात् सार्वभौमो विडूरथात् । जयत्सेनः सार्वभौमादाराधीतस्तदात्मजः । अयुतायुस्तस्य पुत्रस्तस्य चाक्रोधनः सुतः । अक्रोधनस्यातिथिश्च ऋक्षोऽभूदतिथेः सुतः । ऋक्षाच्च भीमसेनोऽभूद् दिलीपो भीमसेनतः । प्रतीपोऽभूद् दिलीपाच्च देवापिस्तु प्रतीपतः । शन्तनुश्चैव बाह्लीकस्त्रयस्ते भ्रातरो नृपाः' [१४०.५–३४] इत्यादि । तथाचायं ग्रन्थपञ्चके पठितः क्रमभेदः–

| भारते | हरिवंशे | भागवते | विष्णुपुराणे | गारुडे |
|---|---|---|---|---|
| १. भरतः | १. भरतः | १. भरतः | १. भरतः | १. भरतः |
| २. भुमन्युः | २. वितथः | २. वितथः | २. वितथः | २. वितथः |
| ३. सुहोत्रः | ३. सुहोत्रः | ३. मन्युः | ३. मन्युः | ३. मन्युः |
| ४. हस्ती | ४. बृहन् | ४. बृहत्क्षत्रः | ४. बृहत्क्षत्रः | ४. बृहत्क्षत्रः |
| ५. विकुण्ठनः | ५. अजमीढः | ५. सुहोत्रः | ५. सुहोत्रः | ५. सुहोत्रः |
| ६. अजमीढः | ६. ऋक्षः | ६. हस्ती | ६. हस्ती | ६. हस्ती |
| ७. संवरणः | ७. संवरणः | ७. अजमीढः | ७. अजमीढः | ७. अजमीढः |
| ८. कुरुः | ८. कुरुः | ८. ऋक्षः | ८. ऋक्षः | ८. ऋक्षः |
| ९. विडूरथः | ९. परीक्षित् | ९. संवरणः | ९. संवरणः | ९. संवरणः |
| १०. अनश्वान् | १०. जनमेजयः | १०. कुरुः | १०. कुरुः | १०. कुरुः |
| ११. परीक्षित् | ११. सुरथः | ११. जन्हुः | ११. जन्हुः | ११. जन्हुः |

| भारते | हरिवंशे | भागवते | विष्णुपुराणे | गारुडे |
|---|---|---|---|---|
| १२. भीमसेनः | १२. विडूरथः | १२. सुरथः | १२. सुरथः | १२. सुरथः |
| १३. प्रतिश्रवाः | १३. ऋक्षः | १३. विडूरथः | १३. विडूरथः | १३. विडूरथः |
| १४. प्रतीपः | १४. भीमसेनः | १४. सार्वभौमः | १४. सार्वभौमः | १४. सार्वभौमः |
| १५. शन्तनुः | १५. प्रतीपः | १५. जयत्सेनः | १५. जयत्सेनः | १५. जयत्सेनः |
| — | १६. शन्तनुः | १६. राधितः | १६. आराधितः | १६. आराधीतः |
| — | — | १७. द्युमान् | १७. अयुतायुः | १७. अयुतायुः |
| — | — | १८. अक्रोधनः | १८. अक्रोधनः | १८. अक्रोधनः |
| — | — | १९. देवातिथिः | १९. देवातिथिः | १९. अतिथिः |
| — | — | २०. ऋक्षः | २०. ऋक्षः | २०. ऋक्षः |
| — | — | २१. दिलीपः | २१. भीमसेनः | २१. भीमसेनः |
| — | — | २२. प्रतीपः | २२. दिलीपः | २२. दिलीपः |
| — | — | २३. शन्तनुः | २३. प्रतीपः | २३. प्रतीपः |
| — | — | — | २४. शन्तनुः | २४. शन्तनुः |

अयमत्र सर्वसमन्वयः । भरतस्य वितथः सुत इति सार्वत्रिकं वचः । भरतस्य भुमन्युरिति सर्वप्रमाणप्रतीपं स्ववचनप्रतीपं च । तथाचोपरि भारत एव–**'भरतस्य वरस्त्रीषु पुत्राः सञ्जज्ञिरे पृथक् । नाभ्यनन्दत् तदा राजा नानुरूपा ममेति तान् । ततस्तन्मातरः क्रुद्धाः पुत्रान् निन्युर्यमक्षयम् । ततस्तस्य नरेन्द्रस्य वितथं पुत्रजन्म तत् । ततो महद्भिः क्रतुभिरीजानो भरतस्तदा । लेभे पुत्रं भरद्वाजाद् भुमन्युं नाम भारत'** [आ.प.१०१.८–१०] इति । तदनुगुणतया भारतवाक्यस्यायमर्थः–अस्य भरतस्य तस्यां सुनन्दायां भार्यायां सत्यामेव, तस्या हतपुत्रतया, भरद्वाजान्महर्षेः भुमन्युः जातः । दत्तः पुत्रो बभूवेत्यर्थः । ननु मरुद्भिर्दत्तोऽयं वितथः पुत्रः । न भरद्वाजाद् भुमन्युः । सत्यं मरुद्भिर्दत्तः । उचथ्यजायाया ममतायास्तनयं भरद्वाज इति देवैः कृतनामधेयं मरुतो भरद्वाजाय मुनये प्रादुः । भरद्वाजो भरतायेति न कोऽपि विरोधः । तस्मादयं वितथः द्वाभ्यां ममताबृहस्पतिभ्यां भृतत्वात् भरद्वाज उच्यते । भरद्वाजेन मुनिना भरताय दत्त इति क्वचिद् भारद्वाज इति चोच्यते । वाज इति वंशोऽप्युच्यते । भरतवंशे पुनरयं जात इति भरतवाजमपि सन्तं भरद्वाजमाहुः । वितथं भरतवंशमवितथं चकारेति तं वितथमाचक्षते । तस्माद् भुवि भुवश्च मान्यो बभूवेति भुवनमान्यं तं भुमन्युमाचक्षते परोक्षप्रियाः । वितथस्य भुमन्योर्मन्युः । सुहोत्र इति भारते हरिवंशे च । सोऽयं प्रघसो नाम शैलीभेदः । मध्ये किञ्चिद् विलुप्य कथनम् । तस्यामस्य जज्ञे सुहोत्रः परम्परया । न साक्षात् । पुत्रपौत्रद्वारा । तथाच मन्युः सुतः, बृहत्क्षत्रः पौत्रश्चान्यत्र पठितावत्र सङ्ग्रहणीयौ । ततः सुहोत्रः प्रपौत्रः सन् जज्ञ इत्यर्थः । सुहोत्राद् हस्ती य एव 'बृहन्' इत्युक्तो हरिवंशे । जन्तुषु यथा हस्ती बृहन् तथाऽयं राजस्विति । विघसेनैव तन्त्रेण भागवतादिष्वनुक्तो हस्तिपुत्रो विकुण्ठनो

**प्रतीपपुत्रतामाप्य [१]बाह्लीकेष्वभवत् पतिः ।**
**रुद्रेषु पत्रतापाख्यः सोमदत्तोऽस्य चाऽत्मजः ॥ १० ॥**

**अजैकपादहिर्बुध्निर्विरूपाक्ष इति त्रयः ।**
**रुद्राणां सोमदत्तस्य बभूवुः प्रथिताः सुताः ॥ ११ ॥**

**अस्य बाह्लीकस्य सोमदत्त आत्मजः । स पूर्वं रुद्रेषु पत्रतापाख्यः ॥ १० ॥ रुद्राणां मध्ये अजैकपादादयस्त्रयो**

---

भारतानुरोधेनेतरत्रापि संयोजनीयः । ऋक्षश्च भारते । सर्वसंवादात् । भागवतादिषूक्तोऽपि कुरुपुत्रो जन्हुर्नात्र ग्राह्यः । तस्य कुशिकवंशप्रवर्तकत्वात् । ततश्च पुंव्यत्यासेन परीक्षिद् वा जन्हुः स्यात्, तत्पुत्रो जनमेजयो वा । केचिदेनं जनुहुमाचक्षते । केचिज्जह्नुम् । दुर्जनं रणाग्नौ जुहोतीति निर्वचनसाम्यात् । इतश्च भागवते विष्णुपुराणे गारुडे चोक्तः क्रम एव साधीयान् । तदनुसारेण भारतहरिवंशयोस्त्यक्तानि नामानि संयोजनीयानि । अयं पुनरत्र पाठभेदः– भागवते यो राधिकः पठ्यते स विष्णुपुराण आराधिक इति गारुडे आराधीत इति च पठ्यते । लिपिकृत्प्रमादोऽयम् । **'राधितोऽतो द्युमानभूत्'** इत्येव भागवतपाठः साधुः । विष्णुपुराणे च **'तस्मादाराधितः'** इति । गारुडे च–**'आराधीतस्तदात्मजः'** इति । अतिशयेनाऽराधित आराधीतः । अयुतायुरेव भागवते द्युमानित्युक्तः । गारुडे अतिथिरिति नामैकदेशग्रहणम् । देवातिथिरित्यर्थः । ऋक्षदिलीपयोर्मध्ये भागवते प्रघसेन त्यक्तो भीमसेनो योजनीयः । प्रतिश्रवा इति दिलीप एवोच्यते । तस्यैव क्वचित् परिश्रवा इति हविःश्रवा इति च नामान्तरं पठ्यते । तथाचायं सर्वसमाहारेण वंशवृक्षः–

| | | | |
|---|---|---|---|
| १. भरतः | ७. विकुण्ठनः | १४. सुरथः | २१. देवातिथिः |
| २. वितथः [भुमन्युः, | ८. अजमीढः | १५. विडूरथः | २२. ऋक्षः |
| भरद्वाजः, भारद्वाजः] | ९. ऋक्षः | १६. सार्वभौमः | २३. भीमसेनः |
| ३. मन्युः | १०. संवरणः | १७. जयत्सेनः | २४. दिलीपः |
| ४. बृहत्क्षत्रः | ११. कुरुः | १८. आराधितः | [प्रतिश्रवाः, हविःश्रवाः] |
| ५. सुहोत्रः | १२. परीक्षित् | १९. अयुतायुः [द्युमान्] | २५. प्रतीपः |
| ६. हस्ती | १३. जनमेजयः | २० अक्रोधनः | २६. शन्तनुः |

भारते चोपरि पठ्यमानोऽन्यग्रन्थेषु च पठ्यमानो वंशक्रम एतदनुगुणतया सर्वत्र योजनीय इत्यलं पुराणचिन्तया ॥*॥ पत्रतापाख्य इति । पत्रेण वाहनेनैव शत्रून् तापयतीति पत्रतापाख्यः । **'रैवतोजो भवो भीम वाम उग्रो वृषाकपिः । अजैकपादहिर्बुध्निर्विरूपाक्षो महानिति'** [६.६.१८] इत्येकादश रुद्रा भागवतोक्ताः । नामान्तराणि चैषां भवन्ति । **'मृगव्याधश्च सर्पश्च निरृतिश्च महायशाः । अजैकपादहिर्बुध्निः पिनाकी च परन्तपः । दहनोऽथेश्वरश्चैव कपाली च**

---

१. **'बाह्लीके–'**

**विष्णोरेवाङ्गतामाप्तुं भूरिर्भूरिश्रवाः शलः ।**
**शिवादिसर्वरुद्राणामावेशाद् वरतस्तथा ॥ १२ ॥**

**भूरिश्रवा अतिबलस्तत्राऽसीत् परमास्त्रवित् ।**
**तदर्थं हि तपश्चीर्ण्णं सोमदत्तेन शम्भवे ॥ १३ ॥**

**दत्तो वरश्च तेनास्य त्वत्प्रतीपाभिभूतिकृत् ।**
**बलवीर्य्यगुणोपेतो नाम्ना भूरिश्रवाः सुतः ॥ १४ ॥**

**रुद्राः सोमदत्तस्य प्रथिताः आत्मजा[१] बभूवुरित्यन्वयः ॥ ११–१४ ॥**

**महाद्युतिः । स्थाणुर्भवश्च भगवान् रुद्रा एकादश स्मृताः'** [आ.प.६७.२–३] इति भारते । उपरिष्टादर्जुनजनने चैत एव रुद्रा निर्दिष्टाः । **'हरश्च बहूरूपश्च त्र्यम्बकश्चापराजितः । वृषाकपिश्च शम्भुश्च कपर्दी रैवतः स्मृतः । मृगव्याधश्च शर्वश्च कपाली च महामुने । एकादशैते कथिता रुद्रास्त्रिभुवनेश्वराः'** [१.१५.११२–३] इति च विष्णुपुराणे । हरिवंशे शर्वः सर्पो भवति । **'सर्वः'** इति तु युक्तः पाठः । अन्यत् समानम् । अयं सम्भावितः पन्थाः–

१. मृगव्याधः, वामदेवः, [पत्रतापः]
२. सर्पः,[सर्वः], शर्वः, ओजः [अजः]
३. निरृतिः, त्र्यम्बकः, विरूपाक्षः
४. अजैकपात्, कपर्दी
५. अहिर्बुध्निः, शम्भुः
६. पिनाकी, अपराजितः, भीमः
७. दहनः, बहुरूपः, उग्रः
८. कपाली, भवः [विष्कम्भः]
९. स्थाणुः, वृषाकपिः
१०. भगः, रैवतः
११. ईश्वरः, हरः, महादेवः

सोमेन शिवेन दत्तः सोमदत्तः । यस्य सोदरी रोहिणी बलभद्रमाता । एकादशरुद्राणां मध्ये त्रयः सोमदत्तस्य त्रयः पुत्रा बभूवुः । अजस्य धर्मो ज्ञानं वैराग्यमैश्वर्यमिति चतुर्षु पादेषु एकं पादं वैराग्यं मुख्यतया श्रित इत्यजैकपात् । अजे भगवत्येकः पादोऽस्य वैराग्यमानित्वात्, अज इत्यजनने वा, अपरश्च जनने, लिङ्गमानित्वादिति वा । अथचाज इति हरः । तस्यैकादशसु पादेषु एकः पादोऽयमित्यजैकपात् । **'अजश्छागे हरे विष्णौ'** इत्यभिधानम् । न हीयत इत्यहिश्चासौ बुधान्नयति चेत्यहिर्बुध्निः । अथवा, आहन्तीत्यहिः । अधिकं हन्ति वा । तेन रमते बुधान्नयति चेत्यहिर्बुध्निरहिर्बुध्न्यो वा । विरूपाक्ष इति स्फुटम् ॥ १०–११ ॥ भूतिमान् भवतीति भूरिः । भवतेः क्रिन् । **'अदि–शदि–भू-शुभिभ्यः क्रिन्'**[१.३४] इति हि दशपादिका । बहुश्रुतो बहुकीर्तिश्च भूरिश्रवाः । शलते सेनाग्रतश्चलतीति शलः, आत्मानमरिभ्यः संवृणुत इति

१. **'आत्मजाः'** इत्यर्थानुवादः । **'सुता बभूवुः'** इति साधुः पाठः ।

**भविष्यति मयाऽऽविष्टो यज्ञशील इति स्म ह ।**
**तेन भूरिश्रवा जातः सोमदत्तसुतो बली ॥ १५ ॥**

**पूर्वोदधेस्तीरगतेऽब्जसम्भवे गङ्गायुतः पर्वणि घूर्णितोऽब्धिः ।**
**अवाक्षिपत् तस्य तनौ निजोदबिन्दुं शशापैनमथाब्जयोनिः ॥ १६ ॥**

**महाभिषङ् नाम नरेश्वरस्त्वं भूत्वा पुनः शन्तनुनामधेयः ।**
**जनिष्यसे विष्णुपदी तथैषा तत्रापि भार्य्या भवतो भविष्यति ॥ १७ ॥**

**तेन रुद्रावेशादित्यादिना कारणेन सोमदत्तसुतः (भूरिश्रवाः) बली जातः ॥ १५ ॥ प्रतीपपुत्रः शन्तनुः पूर्वं क इति जिज्ञासायां तत्स्वरूपं तदुत्पत्तिप्रकारं प्रपञ्चयन्नाह– पूर्वोदधेरित्यादिना । गङ्गायुत इत्यादि । गङ्गासमुद्रसङ्गमप्रदेशसम्बन्धी (अब्धिः) अभिप्रेतः ॥ १६–१९ ॥**

---

च । शल चलनसंवरणयोः । स्वयमहिर्बुध्निर्भूरिश्रवाः । अन्येषां दशानां रुद्राणामावेशः । अतश्च अतिबलः । परमास्त्रविच्च । अतस्तमेव विशिष्य सौमदत्तिं व्यपदिशन्ति । **'सौमदत्तिस्तथैव च'** इति हि भगवद्गीतायाम् । तत्र तेषु त्रिषु । आवेशश्च वरनिमित्त इत्याह– तदर्थम् । स्वपुत्रस्यातिबलत्वाय । शम्भवे तत्प्रसादं सम्पादयितुम् । तेन कारणेन भूरिश्रवा बली जातः । सोमदत्तेन तपश्चीर्णम् । तेन शम्भुना वरश्च दत्त इत्यन्वयः । बलमनभिभाव्यत्वम् । पराभिभवनशक्तिर्वीर्यम् । अत एव प्रतीपानामभिभवकृत् । भूरिश्रवा इत्यन्वर्थं नामाप्यस्य रुद्रदत्तमित्याह– नाम्ना भूरिश्रवा भविष्यति । बलवीर्यगुणोपेत इति यज्ञशील इति स्म ह लोकप्रसिद्धो भविष्यति । स्वयं चाऽचार्यः स्मेति तद्वीर्यं स्मरतीव । हेति स्मारंस्मारं स्वदत इव ॥ १२–१५ ॥ **'अप एव ससर्जाऽदौ'** इति स्मरणादपां जनको नारायण एव मुख्यतोऽब्ज उच्यते । अब्जस्य नारायणस्य अब्जे नाभिकमले सम्भवतीत्यब्जसम्भवो ब्रह्मा । अथवा समिति विष्णुवचनम् । अब्जे ब्रह्माण्डाख्ये कमले सं विष्णोर्भवतीत्यब्जसम्भवः । **'ब्रह्मा देवानां प्रथमः सम्बभूव'** इत्यादिवत् । गङ्गायुतः । गङ्गासागरसङ्गमस्थल इत्येतत् । घूर्णित उच्चलितः । घूर्ण भ्रमणे । अवज्ञया क्षेपणमवक्षेपः । अथ तस्मादवज्ञया क्षेपणादेव शशाप । निजेति उदबिन्दूनां लवणत्वमाह । उदकस्य बिन्दुः उदबिन्दुः । बिन्दावुत्तरपदे उदकस्य उद इत्ययमादेशः । तथाहि पाणिनिः स्मरति–**'मन्थौदन-सक्तु-बिन्दु-वज्र-भार-हार-वीवध-गाहेषु च'** [अ.सू.६.३.६०] इति । अन्यतरस्यां चायं भवति । तेनोदकबिन्दुरपि । अन्ये मन्यन्ते–**'उदकशब्देन समानार्थ उदशब्दोऽप्यस्ति । तेनायमपि योगः शक्योऽवक्तुम्'** इति । निराचकार चैतत् पदमञ्जरीकारः–**'एवं तु वक्ष्यमाणो विकल्पोऽनर्थकः स्यात्'** इति । वस्तुतस्तु उदकपर्याय उदशब्द इति कैयटोक्तमेव साधीयः । तदेतदुत्तरत्र स्फुटं भवति । एनमब्धिमानिनं वरुणम् । अब्जसम्भवत्वमेव स्फुटयति–अब्जयोनिरिति । नारायणनाभिनलिनमेव योनिरुत्पत्तिस्थानमस्य न कस्याश्चन स्त्रिया योनिरिति । नारायणगर्भवास एव केवलमस्य । न नारीगर्भवास इत्यर्थः । अतोऽब्जेन सह नाभितो निर्गतो बभूवेति चाब्जसम्भव उच्यते ॥ १६ ॥ प्रथमं महाभिषङ् नाम नरेश्वरो भूत्वा जनिष्यसे । पुनः शन्तनुनामधेयो भूत्वा

**शान्तो भवेत्येव मयोदितस्त्वं तनुत्वमाप्तोऽसि ततश्च शन्तनुः ।**
**इतीरितः सोऽथ नृपो बभूव महाभिषङ् नाम हरेःपदाश्रयः ॥ १८ ॥**

**स तत्र भुक्त्वा चिरकालमुर्वी तनुं विहायाऽप सदो विधातुः ।**
**तत्रापि तिष्ठन् सुरवृन्दसन्निधौ ददर्श गङ्गां श्लथिताम्बरां स्वकाम् ॥ १९ ॥**

---

जनिष्यसे । घूर्णने गङ्गाया अपि साहचर्यात् तत्र शन्तनुजन्मन्यपि भवतः वर्तमानस्य भवतस्तव एषा भार्या भविष्यति । कुतः? भवतः । संसारान्निमित्तात् । भीष्मजननार्थमित्येतत् । भवता संसरन्त्यपि पावयति, न पुनस्त्वां कलुषयतीति विष्णुपदीत्याह । विष्णुः पदमुत्पत्तिस्थानं यस्याः सा विष्णुपदी गङ्गा । विष्णुपदं पदमुत्पत्तिस्थानमिति पदावृत्त्या वा समासः । **'इयमप्यायतापाङ्गी गङ्गा सर्वाङ्गशोभना । रूपिणी च सरिच्छ्रेष्ठा तत्र त्वामुपयास्यति'** [ह.वं.प.५३.२७] इति च हरिवंशेषु ॥ १७ ॥ शान्तो भवेत्युदितः सपद्येव तनुत्वमाप्त इति शान्ततनुरेव शन्तनुः । ततश्च शन्तनुरिति चकारेण निर्वचनान्तरं समुच्चिनोति– **'यँयं कराभ्यां स्पृशति जीर्णं यौवनमेष्यति । शान्तिमाप्नोति चैवोर्व्यां कर्मणा तेन शन्तनुः'** [९.१९.१४] इति भागवते । शान्तिं तनोति, शं तनोतीति वा शन्तनुरित्यर्थः । प्रथमं निर्वचनं समुद्रगतम्, अथापि तुष्टेन ब्रह्मणा वरुणस्य प्रतीपपुत्रत्वेन जनने तदेव नाम भवत्वित्यनुगृहीतम् । द्वितीयं तु निर्वचनं द्वितीयावतारमात्रगतमिति विशेषः । तथाहि हरिवंशे देवान् प्रति चतुर्मुखवचनम्–**'समुद्रेऽहं पुरा पूर्वे वेलामासाद्य पश्चिमाम् । आसे सार्धं तनूजेन काश्यपेन महात्मना । कुर्वतस्तु कथास्तास्ताः समुद्रः सह गङ्गया । समीपमाजगामाऽशु युक्तस्तोयदमारुतैः । ..... स मां परिभवन्नेव स्वां वेलां समतिक्रमन् । क्लेदयामास चपलैर्लावणैरम्बुविस्रवैः ।....उक्तः संरब्धया वाचा शान्तोऽसीति मया तदा । शान्तोऽसीत्युक्तमात्रस्तु तनुत्वं सागरो गतः । संहतोर्मितरङ्गौघः स्थितो राजश्रिया ज्वलन् । भूयश्चैव मया शप्तः समुद्रः सह गङ्गया ।.... गच्छार्णव महीपालो राजैव त्वं भविष्यसि ।.... भविष्यसि नृणां भर्ता भरतानां कुलोद्वहः । शान्तोऽसीति मयोक्तस्त्वं यच्चासि तनुतां गतः । सुतनुर्यशसा लोके शन्तनुस्त्वं भविष्यसि । इयमप्यायतापाङ्गी गङ्गा सर्वाङ्गशोभना । रूपिणी च सरिच्छ्रेष्ठा तत्र त्वामुपयास्यति'** [१.५३.१५–२७] इति । शान्तोऽसीति हरिवंशवचनभावं विववार स्वयमाचार्यः–शान्तो भवेति । यदर्वाचीनाः 'शान्तनुः' इति पठन्ति पुराणेषु, सोऽयं हरिवंशनिर्वचजनितो भगवान् भ्रमः । शान्ततनुरिति, शं तनोतीत्युभयविधनिर्वचनलाभाय शन्तनुरित्येव बादरायणसम्मतः पाठः । मध्ये भारतवचनसूचितां कथामाह–अथ ब्रह्मशापसमनन्तरमेव महाभिषङ् नाम नृपो बभूव । तथाहि भारते–**'इक्ष्वाकुवंशप्रभवो राजाऽसीत् पृथिवीपतिः । महाभिषगिति ख्यातः सत्यवाक् सत्यविक्रमः । सोऽश्वमेधसहस्रेण राजसूयशतेन च । तोषयामास देवेशं स्वर्गं लेभे ततः प्रभुः । ततः कदाचिद् ब्रह्माणमुपासाञ्चक्रिरे सुराः । तत्र राजर्षयो ह्यासन् स च राजा महाभिषक् । अथ गङ्गा सरिच्छ्रेष्ठा समुपायात् पितामहम् । तस्या वासः समुद्धूतं मारुतेन शशिप्रभम् । ततोऽभवन् सुरगणाः सहसाऽवाङ्मुखास्तदा । महाभिषक् तु राजर्षिरशङ्को दृष्टवान् नदीम् । सोऽपध्यातो भगवता ब्रह्मणा तु महाभिषक् । उक्तश्च**

अवाङ्मुखेषु द्युसदस्सु रागान्निरीक्षमाणं[1] पुनरात्मसम्भवः ।
उवाच भूमौ नृपतिर्भवाऽशु शप्तो यथा त्वं हि पुरा मयैव ॥ २० ॥

इतीरितस्तत्क्षणतः प्रतीपाद् बभूव नाम्ना नृपतिः स[2] शन्तनुः ।
अवाप्य गङ्गां दयितां स्वकीयां तया मुमोदाब्दगणान् बहूंश्च ॥ २१ ॥

अथाष्टमो वसुरासीद् द्युनामा वराङ्गिनाम्र्यस्य बभूव भार्य्या ।
बभूव तस्याश्च सखी नृपस्य सुविन्दनाम्नो दयिता सनाम्नी ॥ २२ ॥

**भूमौ नृपितिर्भवेति नेदं शापान्तरमित्याह–शप्तो यथा त्वं हि पुरा मयेति । इदानीन्तनापराधस्य पृथक्फलमनुक्त्वा शप्तो यथेति 'पुनः शन्तनुनामधेयो जनिष्यसे' इति प्रागुक्तमेव कथं फलत्वेनाऽप्यत इति चेन्न । एतदपराधस्य पूर्वापराधविपाकजत्वेनापराधान्तराभावात् ॥ २०–१ ॥ शन्तनोर्गङ्गायां भीष्मोत्पत्तिं वक्ष्यन् तत्कारणं गङ्गागमनप्रकारं चाऽह–अथाष्टम इत्यादिना । सनाम्नी समाननाम्नी ॥ २२–३ ॥**

---

**जातो मर्त्येषु पुनर्लोकानवाप्स्यसि । यया हृतमनाश्चासि गङ्गया त्वं हि दुर्मते । सा ते वै मानुषे लोके विप्रियाण्याचरिष्यति । यदा ते भविता मन्युस्तदा शापाद् विमोक्ष्यते । वैशम्पायनः– स चिन्तयित्वा नृपतिर्नृपानन्यांस्तपोधनान् । प्रतीपं रोचयामास पितरं भूरितेजसम्'** [आ.प.१०२.१–९] इत्यादि । भिषज्यतीति भिषक् । भिषज रुग्जये । **'अभवच्छन्तनू राजा प्राङ् महाभिषसञ्ज्ञितः'** [९.१९.१३] इति च भागवते महाभिषगेवान्त्यलोपेन महाभिषः ॥ १८–१९ ॥ रागाद् गङ्गां निरीक्षमाणम् । यद्यपि स्वकामेव निरैक्षतेति न दोषः । अथापि सुरवृन्दसन्निधौ ददर्शेति पुनः शप्तः–'आशु भूमौ भव' इति । अब्जसम्भव इत्युक्तं स्वयमेव व्याख्याति– आत्मसम्भव इति । तेनाब्जपदेनाब्जनको नारायण उच्यत इति स्वयं करुणया सूचयामास । भविष्यन्तमपराधलेशं जानता पूर्वमेव शप्तः ॥ २० ॥ अतः, तत्क्षणतः प्रतीपात् तद्भार्यायां जातो बभूव । अयमत्र विशेषः– येनांशेन वरुणो महाभिषक्त्वमाप तां तनुं विहाय न मूलरूपमाप । किन्तु तेनैवांशेन सत्यलोकमाप्य पुनः शन्तनुर्भूत्वा ततो मूलरूपमापेति । तथाहि वक्ष्यति– **'स्वेच्छया वरुणत्वं स प्राप'**[११.८०] इति ॥ २१ ॥ अथ भीष्मकथां प्रस्तौति–अथेति । **'द्रोणः प्राणो ध्रुवोऽर्कोऽग्निर्दोषो वस्तुर्विभावसुः'** [६.६.११] इत्यष्टौ वसवो भागवतोक्ताः । नामान्तरं च भारते–**'धरो ध्रुवश्च सोमश्च अहश्चैवानिलोऽनलः । प्रत्यूषश्च प्रभासश्च वसवोऽष्टौ प्रकीर्तिताः'**[१.६७.१८] इति । **'आपो ध्रुवश्च सोमश्च धर्मश्चैवानिलोऽनलः । प्रत्यूषश्च प्रभासश्च वसवो नामभिः स्मृताः'** [१.१५.११०] इति विष्णुपुराणे । हरिवंशे चैवम् । तत्र धर आपो भवति, अहश्च धर्मो भवतीतीयान् भेदः । तत्र प्रभास एव वस्तुर्विश्वकर्मणः पिता । स एव च द्युनामा । तथाचेयं नामव्यवस्था–

---

१. '–सदस्सु गङ्गां निरीक्ष–'

२. 'नृपतिश्च शन्तनुः'

**तस्या जरामृतिविध्वंसहेतोर्वसिष्ठधेनुं स्वमृतं क्षरन्तीम् ।**
**जरापहां नन्दिनिनामधेयां बद्धुं पतिं चोदयामास देवी ॥ २३ ॥**

**तया द्युनामा स वसुः प्रचोदितो भ्रातृस्नेहात् सप्तभिरन्वितोऽपरैः ।**
**बबन्ध तां गामथ ताञ्छशाप वसिष्ठसंस्थः कमलोद्भवः प्रभुः ॥ २४ ॥**

**क्वचिद् वसिष्ठः शशापेत्युक्तम् । तद्विरोधपरिहारायोक्तं वसिष्ठसंस्थ इति ॥ २४ ॥**

---

१. धरः आपः, द्रोणः, पृथुः ।
२. अनिलः, श्वसनः, प्राणः ।
३. ध्रुवः ।
४. अहः, धर्मः, अर्कः ।
५. अनलः, हुताशनः, अग्निः ।
६. सोमः चन्द्रमाः, दोषः ।
७. प्रत्यूषः, विभावसुः ।
८. प्रभासः, वस्तुः, द्युवसुः ।

वराङ्गिनाम्न्यस्य बभूव भार्या। वरं सुन्दरं अङ्गं शरीरमस्या इति वराङ्गी। वराणि सर्वाङ्गान्यस्या इति वा। **'अङ्गगात्रकण्ठेभ्यः'** इति वार्त्तिकेन प्रतिप्रसवात् ङीष् [अ.सू.४.१.५४] । तेन कुटिलकेशी, चन्द्रमुखी, कञ्जाक्षी, तुङ्गनासिकी, बिम्बोष्ठी, समदन्ती, चारुकर्णी, उन्नतस्तनी, कृशोदरी च सुन्दरी वराङ्गीत्युच्यते। वरं स्निग्धं मनोहरं वराङ्गं स्मरमन्दिरमस्या इति वा । वररवराङ्गीति वक्तव्ये **'लोपः समाने'** इत्येकवरपदलोपः । **'बृहस्पतेस्तु भगिनी वराङ्गी ब्रह्मवादिनी । योग-सिद्धा जगत् कृत्स्नमसक्ता विचचार ह । प्रभासस्य तु भार्या सा वसूनामष्टमस्य हि'**[आ.प.६७.२६–७] इति भारते । सनाम्नी वराङ्गिनाम्नी । इयमुशीनरस्य दुहिता जितवती नाम्नेति साम्प्रतिको भारतपाठः–**'नाम्ना जितवती नाम रूपयौवनशालिनी । उशीनरस्य राजर्षेः सत्यसन्धस्य धीमतः । दुहिता प्रथिता लोके–'**[१.१०६.२२] इति, **'नाम्ना वराङ्गीत्युदिता'** इति स्यात् प्रतनः पाठः । या नाम्ना द्युभार्याया नाम जितवतीति वा । यद्यपि पाणिनिनये **'मनः'** [अ.सू.४.१.११] इति मन्नन्तात् प्रतिपदिकात् ङीप् न भवति । अथापि क्वचिदुपधालोपेन अन्नन्तादिव मन्नन्ता-दपि ङीप् प्रतिप्रसूयते इत्युक्तं तृतीये [३.६५तथा७६] । तेन सूक्तं वराङ्गिनाम्नीति । एवं **'ङ्यापोः सञ्ज्ञाच्छन्दसो-र्बहुलम्'** [अ.सू.६.३.६३] इति 'वराङ्गि–' इति ह्रस्वः । तद्यथा देवकिनन्दनः । रुग्मिणिवल्लभः । रोहिणिनन्दनः । नन्दिनिनामधेयामिति चात्रैव । एवमुत्तरत्रापि ॥ २२ ॥ जरामृत्योर्विध्वंसहेतोः दूरीकरणार्थम् । जराया ध्वंसोऽ-पगमः । दीर्घजीवनमेव मृतिध्वंसः । तदिदं वैविध्यं गमयितुं विध्वंसपदमुपादत्त । **'अस्याः क्षीरं पिबेन्मर्त्यः स्वादु यो वै सुमध्यमे । दशवर्षसहस्राणि स जीवेत् स्थिरयौवनः'** [आ.प.१०६.१९] इति भारते । स्वमृतम् । स्वादु चामृतमिव दीर्घजीवनदं च । स्वम्, ऋतमिति च । स्वीयं देवपूजितं पानीयमित्यर्थः । **'ऋतमुञ्छसिले जले । सत्ये दीप्ते पूजिते स्यात्'** इति मेदिनी ॥ २३ ॥ सप्तभिरन्वितोऽपरैः । **'पृथ्वाद्यैर्भ्रातृभिः सार्धं द्यौस्तदा तां जहार गाम्'** [२७] इति च । वरुणाय स्वदत्तं शापं सङ्गमयितुं कमलोद्भव एव वसिष्ठसंस्थः सन् वसूनपि शशाप । अग्नेरपि वसुत्वात् तदवरस्य

**अधर्म्मवृत्ताः प्रतियात मानुषीं योनिं द्रुतं यत्कृते सर्व एव ।**
**धर्माच्युताः[१] स तथाऽष्टायुराप्य तामन्ये पुनः क्षिप्रमतो[२] विमोक्ष्यथ ॥ २५ ॥**

**प्रचोदयामास च या कुमार्ग्गे पतिं हि साऽम्बेति नरेषु जाता ।**
**अभर्त्तृका पुंस्त्वसमाश्रयेण पत्युर्म्मृतौ कारणत्वं व्रजेत ॥ २६ ॥**

**यत्कृते यदर्थे । सर्वे अन्ये सप्तापि । अतः मानुष्यात् ॥ २५–७ ॥**

---

वसिष्ठस्य शापानधिकाराच्च । ब्रह्मा तु प्रभुः शप्तुम् । तदेतद् भारतेऽपि सूचितम्–**'न तच्छक्यं निवर्तयितुं यदुक्तं ब्रह्मवादिना'** [आ.प.१०२.१५] इति । ब्रह्मणैवान्तःस्थितेन वदतीति ब्रह्मवादी ॥ २४ ॥ मानुषीं योनिं मानुषं जन्मेत्यर्थः । **'योनिः स्त्रीपुंसयोश्च स्यादाकारे स्मरमन्दिरे'** इत्यभिधानम् । तेनात्र योनिशब्दो मनुष्याकारेण जन्मवचनः । मनुष्याणामियं मानुषी योनिर्जनिस्थानं भूमिरिति वा । अतो न वचनभङ्गः । स द्युवसुः तां मानुषीं योनिमाप्य, अष्टानामायूंषि, वर्षाणामष्टौ शतानि, यस्याऽयुः, सोऽष्टायुर्भवतु । यद्वा अष्टानामायुः एक एव आप्यताम्, अस्मच्छापबलेन लम्भितः क्रियताम् । चुरादेः **'आप्लृ लम्भने'** इत्यस्य कर्मणि लोट् । **'व्यत्ययो बहुलम्'** इत्यपि समादधते । स च व्यत्ययः द्वेधा सम्भवति । विभक्तिव्यत्ययेन स आप्यतामिति तेनाऽप्यतामित्यर्थः । **'सप्तसु प्रथमा'** इति च प्राचां सूत्रम् । **'सुपां सु–'** [अ.सू.७.१.३९] इति च पाणिनिः । कर्तृकर्मव्यत्ययेन स आप्यतामिति स आप्नुतामित्यर्थः । अन्ये पुनः सप्त यूयं तां मानुषीं योनिमाप्य क्षिप्रं नष्टायुषो भूत्वाऽतो मानुष्या योनेर्विमोक्ष्यथ विमोक्ष्यध्वे । विमुक्ता भविष्यतेत्यर्थः । अतः शापाद् विमोक्ष्यथेति वा । मुच्यत इति कर्मलकारस्य भविष्यदर्थे लृटि छान्दसं परस्मैपदम् । **'तेन मुच्यन्ति जन्तवः'** इति-वत् । अतः युष्मदपराधस्य भ्रातृस्नेहमूलतया लघुत्वात् तदन्ये यूयं सप्त तां मानुषीं योनिम्, मनुष्यजन्मेति यावत्, क्षिप्र-मेव विमोक्ष्यथ त्यक्ष्यथेति वा । मुञ्चतेर्लृटि रूपम् । मुच्लृ मोक्षणे । त्यागो हि मोक्षणम् । अतो मनुष्यजन्मनः आत्मानं विमोक्ष्यथ विमोचयिष्यथेति वा । स्वग्रन्थस्य छान्दसत्वं ग्राहयितुमाचार्यः शिष्यानुजिघृक्षया क्रियासमभिहारेणैवं-विधानि पदानि प्रयुङ्क्ते । परिचितलौकिकव्याकरणमात्रस्य वेदप्रवेशार्थं वैदिकीं शब्दप्रक्रियामनुभावयितुं च । अत्र प्रथम-चरणो जागतः । वंशस्थं छन्दः । द्वितीयस्त्रैष्टुभः । यद्यपीन्द्रवज्रा, अथापि ततजात्मकं नियतगणक्रमं व्यत्यस्य तगण-त्रयेण गुरुद्वयेन च ग्रथितः । कर्णाटकभाषायामिव 'ए'कारस्य ह्रस्वोच्चारणेन केवलमिन्द्रवज्रा च । अन्यत्रापि ह्रस्वमेकारमाचार्यः प्रयुयोज । तद्यथा–**'जगदेककारण'** । गानेषु ह्रस्व एकारोऽपि प्रयुज्यत इति सूचयत्यनेन । वैदिकश्चायं सम्प्रदायः । न्यूङ्खे पुनरेकारो ह्रस्व एव हि पठ्यते । तृतीयः पुनर्जागतः । इन्द्रवंशागणक्रमं व्यत्यस्य तभततैर्ग्रथितः । चतुर्थः स्वरसो जागत इन्द्रवंशेति । एवं गणानां छन्दसश्च व्यत्ययेन शापोऽयं वसुगणस्य स्वाच्छन्द्यफल इत्याह । रुचिरमिदं छन्दःप्रभञ्जनं नाम रसायनं छन्दोविदाम् ॥ २५ ॥ अनुचितकामनादम्बा । अनुचितं बातीति । ब कामने । अम्बेति नामापि शापजम् । तस्मिन्नपि जन्मनि ब्रह्मदत्तं चकमे, भीष्ममृत्युं चेति सर्वथाऽनुचितकामैव सा बभूव ॥ २६ ॥

---

१. **'धर्मच्युताः'** २. **'–मथो विमो–'**

**भवत्वसौ ब्रह्मचर्य्यैकनिष्ठो महान् विरोधश्च तयोर्भवेत ।**
**स गर्भवासाष्टकदुःखमेव समाप्नुतां शरतल्पे शयानः ॥ २७ ॥**

**मृत्यष्टकोत्थामपि वेदनां सः[१] प्राप्नोतु शस्त्रैर्बहुधा निकृत्तः ।**
**इतीरितास्ते कमलोद्भवं तं ज्ञात्वा समुत्सृज्य च गां प्रणेमुः ॥ २८ ॥**

**न मानुषीं[२] गर्भमवाप्नुमो वयं भवत्वयं सर्ववित् कीर्त्तिमांश्च ।**
**महास्त्रवेत्ता भवदंशयुक्तस्तथा बलं नोऽखिलानामुपैतु ॥ २९ ॥**

**इतीरितेऽस्त्वित्युदिताः स्वयम्भुवा वसिष्ठसंस्थेन सुरापगां ययुः ।**
**ऊचुस्तथैनामुदरे वयं ते जायेमहि क्षिप्रमस्मान् हन त्वम् ॥ ३० ॥**

**इतीरिता सा वरमाशु वव्रे तेभ्योऽप्यपापत्वमथ प्रियत्वम् ।**
**तेषां [३]सदैवाऽत्मन एकमेषां दीर्घायुषं तान् सुषुवेऽथ शन्तनोः ॥ ३१ ॥**

**तं शपन्तम् ॥ २८ ॥ गर्भमवाप्नुमः । मानुषीं योनिं ना(वा)प्नुमः ॥ २९–३० ॥ इतीरिता सा तेभ्यः**

---

तयोः नरलोकजातयोः द्युवसुवराङ्गयोः । भवेतेत्यात्मगामिनं दुरन्तमाह । समाप्नुतामिति च । पूर्वश्लोके व्रजेतेति च ॥ २७ ॥ मूलादर्शे **'सः प्राप्नोतु'** इति पादौ विश्लिष्य पठ्येते । **'अः इति ब्रह्म', 'तमेवैकं जानथ आत्मानम्'** इतिवदिदमपि साकूतं भाति । सप्तभ्योऽग्रजेभ्यो विलक्षणतया तस्य पापाधिक्यं शापाधिक्यं चेति द्योतयितुमेवायं विश्लेषः । लोकेऽपि क्वचिदीदृशाः प्रयोगा भवन्ति । यथा भतृहरिः–**'धिक् तां च तं च मदनं च इमां च मां च'** इति । याजुषश्चायं सम्प्रदायः यत् पादविरामः । अथच तच्छब्दस्य सपयोः सान्तस्थयोः परयोर्वैकल्पिको विसर्गलोप इति चोक्तम् । बहुधा निकृत्तः । कृती च्छेदने । तं अदृश्यतया वसिष्ठे स्थित्वा दत्तशापम् ॥ २८ ॥ मनुष्यलोके गर्भम्, तन्मूलामवाग्गतिं चावश्यमाप्नुमः । अथापि गर्भमुद्दिश्य न मानुषीं स्त्रियमवाप्नुमः । मनुष्यवीर्येण देवतास्त्रियमाविश्य यथा जायेमहि तथाऽनुगृहाण । तेन मानुषीं योनिं प्रति यातेति भवच्छापोऽप्यर्थवान् स्यात् । **'जज्ञिरे वसवस्त्वष्टौ गङ्गायां शन्तनोः सुताः । तेषामवरजो भीष्मः कुरूणामभयङ्करः'** [आ.प. ६८.७४] इति च । भवत्वयमष्टमो द्यौः ॥ २९ ॥ हन जहि । वैदिका एवं प्रयुञ्जते । तेन पूर्वं हन्ति हनति, हन्तु हनतु, अहन् अहनत् इति रूपद्वयमपि प्रमितमासीदिति विज्ञायते । **'वृत्रं हनति वृत्रहा शतक्रतुः'** [ऋ.सं.८.८९.३] इति हि श्रुतिः । 'पुत्रानवाप्य सप्त न्यहनत्' इत्युपरितनवचनं चानेन दत्तोत्तरम् । अस्मान् हनेति सामान्यवचनम् । सप्तेति हृदयम् ॥ ३० ॥ यथा ते गङ्गाया अभीष्टं वव्रुस्तथा

---

१. **'स प्राप्नोतु'** २. **'मानुषं गर्भ–'** ३. **'तेषां तथैवाऽत्मन–'**

अविघ्नतस्तान् विनिहन्तुमेव पुरा प्रतीपस्य हि दक्षिणोरुम् ।
समाश्रिता कामिनीव त्वकामा तत्पुत्रभार्य्या भवितुं विडम्बात् ॥ ३२ ॥

तेनैव चोक्ता भव मे सुतस्य भार्य्या यतो दक्षिणोरुस्थिताऽसि ।
भागो हि दक्षो दुहितुः स्नुषाया भार्य्याभागो वाम इति प्रसिद्धः ॥ ३३ ॥

उवाच सा तं ननु मां सुतस्ते काऽसीति पृच्छेन्नतु मां निवारयेत् ।
अयोग्यकर्त्रीमपि कारणं च मत्कर्म्मणो नैव पृच्छेत् कदाचित् ॥ ३४ ॥

यदा त्रयाणामपि चैकमेष करोति गच्छेयमहं विसृज्य ।
तदा त्वदीयं सुतमित्युदीरिते तथेति राजाऽप्यवदत् प्रतीपः ॥ ३५ ॥

**आत्मनः अपापत्वं शिशुवधजपापाभावं तेषामात्मनोऽपि परस्परं सदा प्रियत्वं वरमपि वव्रे । अथ तान् अष्टौ शन्तनोः सुषुवे । एतेषां मध्ये एकमष्टमं दीर्घायुषं सुषुव इति सम्बन्धः ॥ ३१ ॥ विडम्बात् स्नुषाभावाश्रयणात्मकविडम्बात् ॥ ३२–५ ॥**

---

गङ्गा तेभ्योऽपि वरं वव्रे । किमिति? सद्योजातशिशुहननेऽप्यपापत्वम् । अथेति वरान्तरम् । अथ हननानन्तरमपि तेषां पूर्ववदात्मनः प्रियत्वम् । तदेव स्फुटमुच्यते– सदैवेति । अथ एषामेकं दीर्घायुषं सुतं च तृतीयं वरं वव्रे । अथ वरलाभानन्तरं तान् सुषुवे ॥ ३१ ॥ विनिहन्तुम् । देवकार्यत्वाद् विलक्षणं हननं विहननम् । जले निक्षिप्य हननं निहननम् । निगूढं हननं वा । शन्तनुदर्शनात् पुरा । वस्तुतः प्रतीपविषये अकामा । अथापि कामयमानेव नाटयामास । विडम्बो नटनम् । परचर्यानुकार इत्येतत् । **'त्वामहं कामये राजन् भजमानां भजस्व माम् । त्यागः कामवतीनां हि स्त्रीणां सद्भिर्विगर्हितः'** [आ.प.१०३.५] इति भारतवचनमनेन विवृतम् । तुरप्यर्थे । अकामाऽपि कामिनीव । विशेषार्थे च । अकामाऽपि पुत्रकामा, तेन वसुजननहननादिकामा चेत्ययं विशेषोऽनेनोच्यते । **'कामिनीवत्'** इति वा प्रतृण्णम् ॥ ३२ ॥ तेनैव । एवेति एवमित्यर्थे । सुतस्य भार्या भवेत्येवमुक्ता । एव तत्क्षणमेव, अविचार्य गुणदोषादिकमिति वा । **'प्राप्य दक्षिणमूरुं मे त्वमादिष्टा वरानने । अपत्यानां स्नुषाणां च भीरु विद्ध्येतदासनम् । सव्योरुः कामिनीभोग्यस्त्वया स च विवर्जितः'** [१०३.१०-११] इति च ॥ ३३ ॥ ननु पृच्छेत् । ननु निवारयेत् । कारणं तु सम्प्रत्यनाविष्करणीयमिति विशेषं तुनाऽऽह । ननु नैवेत्यवधारणे च । निषिद्ध्य वारणं निवारणम् । अयोग्यकर्त्रीमपि । आपाततः अयोग्यमिव प्रतीयमानं कर्म कुर्वन्तीमपि ॥ ३४ ॥ तदा त्वदीयं सुतं विसृज्य गच्छेयम् । भारते चैवं पठ्यते–गङ्गाया गमनानन्तरं प्रतीपः पुत्रार्थं तपस्तेपे । ततः शन्तनुरजायतेति । व्यत्यस्य कथनमेतत् । पुरैव तपसा

तथैव पुत्राय च तेन तद् वचो वधूक्तमुक्तं वचनाद् द्युनद्याः ।
कनीयसे सा ह्यवदत् सुतस्ते नान्यः पतिः शन्तनुरेव मे वृतः ॥ ३६ ॥

ततस्तु सा शन्तनुतोऽष्ट पुत्रानवाप्य सप्त न्यहनत् तथाऽष्टमम् ।
गन्तुं ततो मतिमाधाय हन्तुमिवोद्योगं सा हि मृषा चकार ॥ ३७ ॥

अवस्थितिर्नातिसुखाय मानुषे यतः सुराणामत एव गन्तुम् ।
ऐच्छन्न तस्या हि बभूव मानुषो देहो नरोत्थो हि तदाऽऽस शन्तनोः ॥ ३८ ॥

तां पुत्रनिधनोद्युक्तां न्यवारयत शन्तनुः ।
काऽसि त्वं हेतुना केन हन्सि पुत्रान् नृशंसवत् ॥ ३९ ॥

**द्युनद्याः वचनात्, 'शन्तनुरेव मे पतिर्भवेत्, तं प्रत्येव ब्रूहि' (इति) गङ्गावचनात् । द्युनद्या वचनादित्येतद् विवृणोति– सा हीति ॥ ३६ ॥ ततः शन्तनुप्राप्त्यनन्तरम् ॥ ३७ ॥ पतिं विहाय किमर्थं गन्तुं मतिं चकारेत्यतो गमने कारणमाह– अवस्थितिरिति । मा भूदमानुषदेहिनां मानुषेष्ववस्थितिरतिसुखाय । अस्यास्तु किमित्यत आह– न तस्या इति ॥ ३८–९ ॥**

---

पुत्रत्रयजननम् । यदा पुनः शन्तनुर्युवा बभूव तदैव गङ्गादर्शनम् । अन्यथा कथमपुत्रस्य प्रतीपस्य **'भव मे सुतस्य भार्या'** इति वचनं सङ्गच्छेत? अतस्तात्पर्यमाह– तथेति । राजा प्रतीपोऽपि तस्या रूपवैदुष्यादिभिर्विदितदेवताभावः भावित्वाच्च भवितव्यस्य दैवेनान्तश्चोदितः 'यत् त्वयोक्तं तत् तथा भवतु' इति तूष्णीमङ्गीचकार । तदेतत् प्रमेयजातमपिपदेन सूचयाम्बभूव राजाऽपीति ॥ ३५ ॥ तथैव तेन कनीयसे पुत्राय चोक्तम् । किमिति पूर्वजं विहाय कनीयसेऽवदत्? यतः सा ह्यवदत् 'शन्तनुरेव मया पतिरिति वृतः' इति ॥ ३६ ॥ ततः पितुर्निर्देशात् शन्तनोर्गङ्गायाश्चोद्वाहानन्तरम् । अपूर्वोऽयं देवस्त्रीसमागमो मनुष्येषु जातस्येति तुनाऽह । ततः अष्टमप्रसवानन्तरम्, ततः, ल्यब्लोपनिमित्ता पञ्चमी । तं शन्तनुं विहाय गन्तुम् । यत्र पूर्वं स्थिता ततो भूलोकाद् हस्तिनपुराद् वा देवलोकं गन्तुमिति च । अष्टमं हन्तुमिव । अष्टमसुतस्य हननार्थमुद्युक्तामिवाऽत्मानं मृषैव दर्शयामास ॥ ३७ ॥ मानुषे मनुष्यलोके, मनुष्यसहवासे चावस्थितिः अगृहीतमनुष्यदेहानां सुराणां नातिसुखाय । '[illegible]' इति भाषायाम् । अतिप्रियं ह्यतिसुखदं भवति । नरोत्थो नरवीर्यजो हि मानुषो देहो भवति । तदात्वे तु शन्तनोः नरोत्थो देह आस हि ॥ ३८ ॥ न्यवारयतेति तत्फलं गङ्गावियोगमात्मगामिनमाह ॥ ३९ ॥

रूपं सुरवरस्त्रीणां तव तेन न पापकम्[1] ।
भवेत् कर्म्म त्वदीयं तन्महत् कारणमत्र हि ॥ ४० ॥

तत् कारणं वद शुभे यदि मच्छ्रोत्रमर्हति ।
इतीरिताऽवदत् सर्वं प्रययौ च सुरापगा ॥ ४१ ॥

न धर्म्मो देवतानां हि ज्ञातवासश्चिरं नृषु ।
कारणादेव हि सुरा नृषु वासं प्रकुर्वते ॥ ४२ ॥

कारणापगमे यान्ति धर्म्मोऽप्येषां तथाविधः ।
अदृश्यत्वमसंस्पर्शो ह्यसम्भाषणमेव च ॥ ४३ ॥

**राक्षसीत्वप्रतीतिजनके नृशंसत्वे दृश्यमानेऽपि काऽसीति प्रश्ने निमित्तमाह– रूपमिति । तेन सुरवरस्त्रीरूपत्वेन त्वदीयं कर्म पापकं न । तत् तस्मात् अत्र हनने महत् कारणं भवेद्धि भवेदेवेति योज्यम् ॥ ४०–१ ॥ स्वस्वरूपशिशुहननकारणनिरूपणानन्तरमेव कस्माद्गतेति जिज्ञासायामाह– न धर्म इति । नृषु ज्ञातवासः धर्मो न । धर्मो न चेत् (कथं केचित्) ज्ञाता अपि नृषु वासं प्रकुर्वत इत्यत उक्तम्– कारणादेवेति ॥ ४२ ॥ धर्मरतानां देवानां कारणविशेषादपि कथमधर्माचरणमित्यत आह– धर्मोऽप्येषामिति । एषां देवानां धर्मोऽपि तथाविधः । यावत्कारणमवस्थानं तदपगमेऽपगम इत्येवंविधः धर्मः देवानां स्वाभाविकः । रहस्यधर्ममप्याह–अदृश्यत्वमिति ॥ ४३ ॥**

---

यद्यपीदं कर्म पापकम् पापादपि कुत्सितं पापम् । महापातकमित्यर्थः । किन्तु तव सुरवरस्त्रीत्वात् पापकं पापजनकं न भवेत् । अथापि अत्र ईदृशकर्मकरणे महत् कारणं भवेदेव हि ॥ ४० ॥ यदि मच्छ्रोत्रं तच्छ्रोतुमर्हति । स्वस्य गङ्गात्वम्, सुतानां वसुत्वम्, तेषां वसिष्ठस्थितेन ब्रह्मणा शापं चेत्यादि सर्वमवदत् । उक्त्वा च प्रययौ अन्तर्दधे ॥ ४१ ॥ ज्ञातानां वासः, ज्ञाते सति वा वासो ज्ञातवासः । न देवतानां धर्मः स्वभावः । प्रकुर्वते प्रकटतया कुर्वते । स्वस्य देवावतारत्वं प्रकटय्यापि वासं कुर्वते ॥ ४२ ॥ कारणापगमे यान्ति । यदि कचिज्ज्ञाता अपि प्रकटं वसन्ति तत् कारणविशेषादेव । यथा स्वयमेवाऽचार्यो ज्ञातः सन्नुवास–'त्वमात्मानं च प्रकाशय । मां च प्रकाशय मानुषाणाम्' इति भगवदाज्ञापालनरूप-कारणादेव । एषां धर्मः भगवद्विहितो नियमोऽपि तथाविधः निगूढः । नृषु जातैः सुरैरपि अदृश्यत्वादिकमेव हि दिवौकसां गुह्यधर्मः । अतः शन्तनोः सुरत्वेऽपि नृजातत्वात् तस्याप्यदृश्या बभूव । वरुणालयं वरुणलोकं सागरं वा । भर्तुरप्यनुज्ञयैव,

---

१. **'पातकम्'**

सुरैरपि नृजातैस्तु गुह्यधर्म्मो दिवौकसाम् ।
अतः सा वरुणं देवं पूर्वभर्त्तारमप्यमुम् ॥ ४४ ॥

नृजातं शन्तनुं त्यक्त्वा प्रययौ वरुणालयम् ।
सुतमष्टममादाय भर्त्तुरेवाप्यनुज्ञया[1] ।
वधोद्योगान्निवृत्ता सा ददौ पुत्रं बृहस्पतौ ॥ ४५ ॥

देवव्रतोऽसावनुशासनाय मात्रा दत्तो देवगुरौ शतार्द्धम् ।
संवत्सराणामखिलांश्च वेदान् समभ्यसत् तद्वशगान्तरात्मा ॥ ४६ ॥

ततश्च मात्रा जगतां गरीयस्यनन्तपारेऽखिलसद्गुणार्ण्णवे ।
रामे भृगूणामधिपे प्रदत्तः शुश्राव तत्वं च शतार्द्धवर्षम् ॥ ४७ ॥

**अतः नृजातैरपि सुरैरदृश्यत्वादेर्धर्मत्वात् ॥ ४४–६ ॥ 'अखिलसद्गुणार्णवे' इति गुणार्णवत्वोक्त्याऽर्णवस्य पारवत्त्वादस्यापि पारप्रतीतेस्तां निवारयति–अनन्तपार इति । निरवधिकगुणपूर्ण इत्यर्थः । तत्वं भगवत्स्वरूपप्रतिपादकशास्त्रम् ॥ ४७–९ ॥**

---

न केवलं स्वमत्या, वधोद्योगान्निवृत्ता, तदनुमत्यैव सुतमष्टममादाय प्रययौ । ततश्च तं सद्यःप्रवृद्धं बृहस्पतौ अनुशासनाय ददौ ॥ ४३–४५ ॥ **'तथैवाङ्गिरसः पुत्रः सुरासुरनमस्कृतः । यद् वेद शास्त्रं तच्चापि कृत्स्नमस्मिन् प्रतिष्ठितम्'** [१.१०७.३८] इति भारतवचनार्थं स्फुटमाह– देवव्रतोऽसाविति । देवव्रत इति मात्रा कृतनामा । देवगुरुसमीपे समभ्यसत् । देवैः स्वलोके शास्त्राभ्यसनार्थं वृतत्वाद् देवव्रतः । देवं विजयमानं द्योतमानं च व्रतमस्येति च । नहि तदुपसत्तिमन्तरा तद्विद्याऽन्यमुपसङ्क्रामति । तर्हि शुक्रशिष्योऽप्ययमासीदिति वक्तव्यम् । **'उशना वेद यच्छास्त्रमयं तद् वेद सर्वशः'** [३७] इति पूर्ववचनात् । न भोः । दैत्यगुरुशास्त्रमपि देवगुरुसमीप एव समभ्यसदिति तात्पर्यात् । अत एव देवगुरुर्भारते **'सुरासुरनमस्कृतः'** इति स्तुतः । अन्यथा तद् विशेषणं व्यर्थमभविष्यत् । समभ्यसत् समभ्यास्यत्, सन्ततं शास्त्राण्यावर्तयामास । असु क्षेपणे । अभिपूर्वोऽयमसकृदावर्तने वर्तते । अडभावश्छान्दसः । श्यनो लोपश्च । यद्वाऽसतेरडभावेन लङि रूपमिदम् । समभ्यासत् । अस गतिदीप्त्यादानेषु । तद्वशगान्तरात्मा तस्य गुरोर्वशगोऽन्तरात्माऽस्येति । गुरुचित्तानुवर्ती, नित्यनितान्तपरिचर्यया गुरुं तोषयन्नित्यर्थः ॥ ४६ ॥ **'ऋषिः परैरनाधृष्यो जामदग्न्यः प्रतापवान् । यदस्त्रं वेद रामश्च एतदस्मिन् प्रतिष्ठितम्'**[१०७.३९–४०] इति वचनभावमाह– ततश्च । जगतां गरीयसि गुरुतमे ।

---

१ **'–रेवाभ्यनुज्ञया'**

**स पञ्चविंशत् पुनरब्दकानामस्त्राणि चाभ्यस्य पतेर्भृगूणाम् ।**
**मात्रा समानीय तटे निजे तु संस्थापितः प्रार्प्पयितुं स्वपित्रे ॥ ४८ ॥**

**स तत्र बध्वा शरपञ्जरेण गङ्गां विजह्रेऽस्य पिता तदैव ।**
**व्रजन् मृगार्त्थी तृषितो [१]विलोकयन् गङ्गामतोयामभवत् सुविस्मितः ॥ ४९ ॥**

**स मार्ग्गयामास ततोऽस्य हेतुज्ञप्त्यै[२] तदा स्वं च ददर्श सूनुम् ।**
**क्रीडन्तमस्त्रेण बभूव सोऽपि क्षणादद्दश्यः पितृदर्शनादनु ॥ ५० ॥**

**मीमांसमानं तमवाप[३] गङ्गा सुतं समादाय पतिं जगाद च[४] ।**
**अयं सुतस्ते परमास्त्रवेत्ता समर्प्पितो वीर्य्यबलोपपन्नः ॥ ५१ ॥**

**अस्याग्रजाः स्वां स्थितिमेव याता हरेः पदाम्भोजसुपाविते जले ।**
**तनूर्म्मदीये प्रणिधाय तत् त्वं[५] तान् मा शुचोऽनेन च मोदमानः ॥ ५२ ॥**

**अस्य अतोयत्वस्य । मार्गयामास, तत्कर्तारमिति शेषः ॥ ५०–३ ॥**

---

एतेन **'यदस्त्रं वेद रामश्च'** इत्येतत् भगवान् भार्गवो रामः यदस्त्रं चकारात् शास्त्रं च वेद वेदयामास, स्वातन्त्र्यस्नेहयोरन्तर्णीतणिच्, तत् सर्वमस्मिन् प्रतिष्ठितमिति व्याख्यातं भवति । एतेन **'वेदानधिजगे साङ्गान् वसिष्ठादेष वीर्यवान्'** [१०७.३६] इति पूर्ववचनमपि गदिताभिप्रायम् । मनोनियामकतया देहे वसतामुत्तमात्, अत एव वसिष्ठपदगदितात् वायोर्ब्रह्मणो नारायणस्य चानुग्रहादिति ॥ ४७ ॥ भृगूणां पतेरिति पञ्चमी । **'षष्ठीयुक्तश्छन्दसि वा'** [अ.सू.१.४.९] इति पतेरिति साधु । पञ्चविंशत् पञ्चविंशतिः । **'विंशल्लक्षणतोऽनूनः'** इति ह्यभियुक्ताः प्रयुञ्जते । पञ्चविंशतिरब्दा अपि विद्यालोलस्य पञ्चविंशतिर्दिनानीवाभानित्यल्पाल्पार्थेन कनाऽऽह–अब्दकानामिति । मात्रा गङ्गया समानीय संस्कारपूर्वकमानीय सम्मुखे स्थापितः । प्रार्पयितुम् । अर्पणे प्रकर्षो नाम पुनः पितृसकाशादपनयनाभावः । स्वगतस्य भारस्य समग्रतया तत्पितरि निधानम् ॥ ४८ ॥ अतोयप्रायाम् । भीष्मशरावृततोयामित्यर्थः । स्यन्दमानतोयरहिताम् । तत् किल तोयं यत् स्यन्दते । तौति सर्वतो दिशमावृणोतीति तोयमुशन्ति । **'भागीरथीमल्पजलां शन्तनुर्दृष्टवान् नृपः'** [१०७.२४] इति हि भारते । अल्पधनो ह्यधन उच्यते ॥ ४९–५० ॥ 'कोऽयं कुमारः स्यात्' इति मीमांसमानं तं पतिमवाप जगाद च । ते सुतः ते समर्पितः । वीर्यं पराक्रान्तिः । बलमात्मगतम् ॥ ५१ ॥ मदीये जले तनूः प्रणिधाय । प्रकर्षाय निधानं

---

१. **'तृषितोऽवलो–'** २. **'हेतुं ज्ञप्त्यै'** ३. **'तमवेक्ष्य गङ्गा'**

४. **'सुतं तमादाय पतिं जगाद । अयम्'** ५. **'–धाय तस्मात् तान्'**

इति प्रदायामुमदृश्यतामगाद् गङ्गा तमादाय ययौ स्वकं गृहम्[1] ।
राजाऽभिषिच्याथ च यौवराज्ये मुमोद तत्सद्गुणतर्प्पितो भृशम् ॥ ५३ ॥

पुनः स पित्राऽनुमतो बृहस्पतेरवाप वेदान् पुरुषायुषोऽर्द्धतः ।
रामात् तथाऽस्त्राणि पुनस्त्ववाप तावद्भिरब्दैस्त्रिशतैश्च तत्वम् ॥ ५४ ॥

स सर्ववित्त्वं समवाप्य रामात् समस्तविद्याधिपतेर्ग्गुणार्ण्णवात् ।
पितुः समीपं समवाप्य तं च शुश्रूषमाणः प्रमुमोद वीरः ॥ ५५ ॥

यदैव गङ्गा सुषुवेऽष्टमं सुतं तदैव यातो मृगयां स शन्तनुः ।
शरद्वतो जातमपश्यदुत्तमं वने विसृष्टं मिथुनं त्वयोनिजम् ॥ ५६ ॥

**पुरुषायुषोऽर्धतः । पुरुषायुषं नाम शतवर्षाणि । तदर्धतः पञ्चाशदब्दतः । तावद्भिः पञ्चाशद्भिः[2] ॥ ५४–५ ॥ कृपाद्युत्पत्तिं वदिष्यन् तदुपोद्घातमाह– यदैवेति ॥ ५६ ॥**

---

प्रणिधानम् । शापमोक्षेण मूलरूपाप्तिरिह प्रकर्षः । मूलकोशे 'प्रणिधाय तत्वम्' इति पठ्यते । अक्षरपातः सम्भाव्यते । 'स्वां स्थितिमेव याता इति तत्वं वास्तवम् । अतस्तान् मा शुचः' इति वा व्याख्येयम् । मा शुचः मा शोचीः । प्राचां मते शोकार्थस्य शोचतेर्लुङि अशोचीत्, अशुचदिति विभाषा । प्रयोगप्राचुर्यात् । **'मा शुचः सम्पदं दैवीमभिजातोऽसि'** इति हि गीतायाम् । अर्वाचीनानां वैयाकरणानां मते 'अशोचीत्' इत्येव । तत्पक्षे **'ई शुचिर् पूतीभावे'** इत्यस्य रूपमिदम् । तत्र हि इदित्त्वात् लुङि अङ्विकल्पात् अशुचत् अशोचीत् इति रूपद्वयं भवति । किन्तु धात्वर्थे **'शोके च'** इत्युपस्कर्तव्यम् ॥ ५२ ॥ इत्युक्त्वाऽदृश्यतामगाद् गङ्गा । राजा स्वकं गृहं ययौ ॥ ५३ ॥ पुरुषायुषः । यद्यपि वैयाकरणाः [अ.सू.५.४.७७] अच्प्रत्ययान्तं पुरुषायुषशब्दं निपातयन्ति । ततः पुरुषस्याऽयुः पुरुषायुषमिति भवति । तत्ववादिनस्तु विभाषावादिनः । भवेदपि, न भवेदपि । तेन पुरुषायुषः, पुरुषायुषस्येत्युभयमपि साधु । अन्यथा 'पुरुषायुषार्धतः' इत्येवावक्ष्यत् । तावद्भिः शतार्द्धमितैः, त्रिभिः शतैश्च । भीष्मस्य पञ्चविंशतिश्च शतं च वर्षाणि । यदा तं गङ्गा शन्तनवे ददौ । पुनः पञ्चाशद्वर्षाणि बृहस्पतौ वेदाध्ययनम् । पुनः पञ्चाशद्वर्षाणि रामेऽस्त्राभ्यासः । त्रीणि शतानि च वर्षाणि तत्ववादाध्ययनम् । एवं स पञ्चविशत्युत्तरपञ्चशताब्दो युवा पितरमाससाद ॥ ५४ ॥ सर्ववित्त्वं समवाप्येति । नैतदुपचारमात्रम् । किन्तु तदात्वे भूलोकगतेषु क्षत्रियेष्वनितरसाधारणं सर्ववित्त्वमिति समित्युपसर्गेणाऽह । पितुः समीपं समवाप्येति । पुनर्विघटनविधुरा सम्पूर्णसम्बन्धा सम्प्रीतिनिबिडा चेयमवाप्तिरित्यर्थः । आप्तुरवमत्वमाप्ये गौरवातिशयश्च अवेत्युपसर्गार्थः । तं च पितरमन्यांश्च वृद्धान् शुश्रूषमाणः प्रमुमोद कृतकार्यतया चारितार्थ्यं मोदे प्रकर्षः ॥ ५५ ॥ गौतमपुत्रः

---

१. **'ययौ गृहं स्वकम् ।'**

२. **'पञ्चाशता'** इति पर्याप्तम् ।

शरद्वांस्तु तपः कुर्वन् ददर्श सहसोर्वशीम् ।
चस्कन्द रेतस्तस्याथ शरस्तम्बे ततोऽभवत् ॥ ५७ ॥

विष्कम्भो नाम रुद्राणां भूभारहरणेऽङ्गताम् ।
हरेः प्रासुं[१] तथा तारा भार्य्या या हि बृहस्पतेः ॥ ५८ ॥

तावुभौ शन्तनुर्दृष्ट्वा कृपाविष्टः स्वकं गृहम् ।
निनाय नाम चक्रे च कृपाया विषयौ यतः ॥ ५९ ॥

कृपः कृपीति स कृपस्तपो विष्णोश्चकार[२] ह ।
तस्य प्रीतस्तदा विष्णुः सर्वलोकेश्वरेश्वरः ॥ ६० ॥

**शरद्वतो जातमित्युक्तमेव विवृणोति– शरद्वानिति । शरस्तम्बे चस्कन्देति सम्बन्धः । ततः रेतसः ॥ ५७ ॥ रुद्राणां मध्ये विष्कम्भो नाम रुद्रः । हरेः भूभारहरणे (अङ्गतां) सहायतामाप्तुं अभवदिति योजना ॥ ५८–६३ ॥**

---

शरद्वान् शतानन्दसोदरः । मिथुनं स्त्रीपुंसयुगळम् । तुना मिथुनस्यापि भूभारहरणाङ्गतामाह ॥ ५६ ॥ कथमयोनिजम्? आह– शरद्वांस्तु । शंरूपे भगवति रतिमान् शरद्वानुच्यते । शं रातीति शरद् भगवान् । तदुपासनेन वा तद्वान् । सस्यसमृद्ध्या नित्यशरदयं भूयादिति च पिता तथा नाम चकार । तुना तत्तपो देवराजसन्तापनमासीदित्याह । इन्द्रस्तत्तपोविघातार्थमप्सरसं प्रेषयामास । का सा? जालवतीति दाक्षिणात्याः पठन्ति– **'ततो जालवतीं नाम देवकन्यां सुरेश्वरः । प्राहिणोत्–'** [१.१४०.६] इति । केयं जालवती? तात्पर्यमाह– ददर्श सहसोर्वशीम् । घनस्तनजघनमोहजालेन यादांसीव पुरुषमनांसि बध्नातीत्यन्वर्थं नामोर्वश्या जालवतीति । सहसा अनिरीक्षितम्, अकस्मादिति यावत् । अथ उर्वशीदर्शनसमनन्तरमेव उरूनपि जितकामानूरुभ्यामेव वशयतीत्युर्वशी । उरु भोगमश्नाति चाऽशयति च । सहसा अकस्मादेव च रेतश्चस्कन्द तस्याज्ञातमेव । अथ रेतःस्कन्दसमनन्तरमेव, सपदि मिथुनं ततो रेतसोऽभवत् । तस्मादयोनिजम् ॥ ५७ ॥ किं तन्मिथुनम्? आह– विष्कम्भो नाम । **'यस्तु राजन् कृपो नाम ब्रह्मर्षिरभवत् क्षितौ । रुद्राणां तु गणाद् विद्धि सम्भूतमतिपौरुषम्'** [६८.७७] इति च । तथा तारा । किं वालिभार्या? नेत्याह– भार्या या हि बृहस्पतेः । याऽस्य वंशस्य मूलपुरुषं बुधं सुषुवे । तदेतद्धीति स्मारयति ॥ ५८ ॥ क्रप्यते कृप्यते वा कृपाविषयः क्रियत इति कृपः कृपी च । क्रप कृपायाम् । कृप दौर्बल्ये । हेति विस्मयावहं दुष्करं तत् तप इत्याह । सर्वलोकानामीश्वराः, सर्वे वा लोकेश्वरा ब्रह्मादयः । तेषामीशा लक्ष्मीः । तस्या वरः ॥ ५९–६० ॥

---

१. **'हरेराप्तुम्'** इति वे.ती.पाठः स्यात् । २. **'–श्चचार'**

**प्रादादेष्यत्सप्तर्षित्वमायुः[1] कल्पान्तमेव च । १**
**स शन्तनुगृहे तिष्ठन् देवव्रतसखाऽभवत् ॥ ६१ ॥**

**पुत्रवच्छन्तनोश्चाऽसीत् स च पुत्रवदेव तत् ।**
**मिथुनं पालयामास स कृपोऽस्त्राण्यवाप च ॥ ६२ ॥**

**सर्ववेदानधिजगौ सर्वशास्त्राणि कौशिकात् ।**
**तत्वज्ञानं तथा व्यासादाप्य सर्वज्ञतां गतः ॥ ६३ ॥**

**यदा हि जातः[2] स कृपस्तदैव बृहस्पतेः सूनुरगाच्च गङ्गाम् ।**
**स्नातुं घृताचीं स ददर्श तत्र श्लथद्दुकूलां सुरवर्य्यकामिनीम् ॥ ६४ ॥**

**द्रोणोत्पत्तिं वक्तुं तत्सङ्गतिमाह– यदाऽभिजात इति । बृहस्पतेः (सूनुः) भरद्वाजः ॥ ६४–६ ॥**

सप्तस्वेकैकोऽपि सप्तर्षिरुच्यते । सप्तस्वेक ऋषिर्हि सप्तर्षिः । छन्दःसौहित्याय 'प्रादादेष्यत्सप्तऋषित्वम्' इतीव शिथिलतया पठनीयम् । एष्यति सावर्णिमन्वन्तरे ये सप्तर्षयस्तेष्वेको भूया इति विष्णुर्वरं प्रादात् । **'गालवो दीप्तिमान् रामो द्रोणपुत्रः कृपस्तथा । ऋष्यशृङ्गः पिताऽस्माकं भगवान् बादरायणः । इमे सप्तर्षयस्तस्मिन् भविष्यन्ति–'** [भाग.८.१२.१८] इति शुकोक्तिः । तदर्थं कल्पान्तमेव, नतु मन्वन्तरान्तमायुश्च प्रादात् । देवव्रतसखा गाङ्गेयसखः । प्राचां मते टच् विभाषा भवति । प्रायो हि व्याकरणसूत्राणि अयोगमेव व्यवच्छिन्दन्ति नान्ययोगम् ॥ ६१ ॥ सम्प्रति भारते द्वेधा पाठो दृश्यते– **'गौतमोऽपि ततोऽभ्येत्य धनुर्वेदपरोऽभवत्'** [१२९.१९] इत्यौत्तराः पठन्ति । **'कृपोऽपि च तदा राजन् धनुर्वेदपरोऽभवत्'** [१४०.२१] इति दाक्षिणात्याः । अयं सम्भावितः प्राचीनपाठः– **'कौशिकोऽपि तदा राजन् धनुर्वेदपरोऽभवत् । चतुर्विधं धनुर्वेदं शास्त्राणि विविधानि च । निखिलेनास्य तत् सर्वं गुह्यमाख्यातवांस्तदा'** इति । तदेतदाह– अस्त्राणि च कौशिकादवाप । सर्वशास्त्राणि च कौशिकादधिजगाविति ॥ ६२–६३ ॥ बृहस्पतेः सूनुः भरद्वाजः स्नातुं गङ्गामगात् । ददर्श च तत्र गङ्गातीरे घृताचीम् । इति हि प्रथितं शास्त्रेषु । अग्निकुण्डं घृतेनेव रेतसः सिञ्चनेनाञ्चिता घृताची । घृताक्तेव श्लक्ष्णा दीप्ता चाञ्चतीति च घृताची । निर्वचनान्तरं च पुरस्तादुक्तम् [१०.७१] । सुरवर्याणामियं प्रिया कामिनी । सुराणामपि न सुलभा । तत् तां दृष्ट्वा चिरात् स्थगितेन्द्रियस्य मुनेरिन्द्रियं स्कन्नमिति नेदं चित्रम् । तत्रापि श्लथद्दुकूलाम् । श्लथत् ग्रथनस्थानाददृढबन्धतयाऽधश्च्यवमानं शिथिलमनसामन्तरनिर्वचनीयां कामपि हिंसामुद्वेलयत्, अनियम्यां सम्बुभुक्षां प्रचोदयद् दुकूलं यस्याः । आधुनिकाः धातुपारायणिकाः

१. **'–त्सप्तऋषित्व–'**

२. **'यदाऽभिजातः'** । वे.ती.पाठोऽपि तथेति भाति ।

**तद्दर्शनात् स्कन्नमथेन्द्रियं स द्रोणे दधाराऽशु ततोऽभवत् स्वयम् ।**
**अम्भोजजावेशयुतो बृहस्पतिः कर्त्तुं हरेः कर्म्म भुवो भरोद्धृतौ ॥ ६५ ॥**

**द्रोणेतिनामास्य चकार तातो मुनिर्भरद्वाज उतास्य वेदान् ।**
**अध्यापयामास सशास्त्रसङ्घान् सर्वज्ञतामाप च सोऽचिरेण ॥ ६६ ॥**

**काले च तस्मिन् पृषतोऽनपत्यो वने तु पाञ्चालपतिश्चचार ।**
**तपो महत् तस्य तथा [१]वराप्सरावलोकनात् स्कन्दितमाशु रेतः ॥ ६७ ॥**

**द्रुपदोत्पत्तिप्रकारमाह– काले[२] च तस्मिन्नित्यादि ॥ ६७–८ ॥**

---

प्रायः श्रथतिं पठन्ति । श्लथतिरप्यवश्यं पठनीयः–**'श्रथ श्लथ दौर्बल्ये'** इति, श्लथ मोक्षणे, श्लथ हिंसायाम्, श्लथ शैथिल्ये च । **'श्लथ प्रतिहर्षे'** इत्यपरे ॥ ६४ ॥ इन्द्रियं रेतः । ततः स्कन्नादिन्द्रियात्, ततः तस्य द्रोणे निधानानन्तरं स्वयं बृहस्पतिर्द्रोणनामाऽभवत् । **'भरद्वाजस्य तु स्कन्नं द्रोण्यां शुक्रमवर्धत । महर्षेरुग्रतपसस्तस्माद् द्रोणो व्यजायत'**[आ.प.६४. १४८] इति च । **'बृहस्पतेर्बृहत्कीर्तेर्देवर्षेर्विद्धि भारत । अंशाद् द्रोणं समुत्पन्नं भारद्वाजमयोनिजम्'** [६८.६९] इति च । द्रोण इति दारुमयः पात्रविशेषः । पत्रमयो वा । 'ದೊನ್ನೆ' इति भाषायाम् । सोऽस्त्यस्य जनिस्थानत्वेनेति द्रोणवान् द्रोणः । यथा राज्ञः कृपावान् कृपः । यथा वा मनोज्ञकर्णवान् कर्णः ॥ ६५ ॥ उत अथ । उपनयनान्तसंस्कारानन्तरम् । वेदानुत वेदांश्च, अपौरुषेयान् । शास्त्रसङ्घाश्च पौरुषेयाः ॥ ६६ ॥ तस्मिन्नेव काले । प्रजानामभीष्टसेचनात् पर्षतीति पृषतः । पृषेरतजिति पाणिनीयाः । अतप्रत्यय इति कातन्त्राः । पृषु सेचने । यदृच्छया रेतःसेचनाच्चायमन्वर्थः पृषतो बभूव । पुत्रलाभार्थं तपश्चचार । वराप्सरा मेनका । यूनः कामकासारे मिनोति प्रक्षिपतीति मेनका । मा न विद्यते कश्चनेनो नियतः स्वामी यस्या इति च । यकंयकमिच्छति तकन्तकं रमयति । मे न कोऽपि नियतः पतिरिति मेन इति च मेनका । मे न काऽपि पुरुषरमणे स्पर्धिनीति वा । आत्मानमेव सुभगां मेन इति च । **'सम्प्राप्ता ह्यप्सरा राजन् मेनकेत्यभिविश्रुता । पुष्पद्रुमान् सज्जमाना राज्ञो दर्शनमागमत्'**[१५०.१०] । अप्सराया अवलोकनात् । स्कन्दितं स्कन्नम् । फलदानोन्मुखेन तपसैव स्कन्दितमित्येतदाह । भरद्वाजस्य रेतः स्वतः स्कन्नमीश्वरेच्छया, भावित्वाच्च कार्यस्य । अस्य तु क्षत्रियस्य परिचितनानास्त्रीभोगवैचित्र्यस्य भोगेच्छया स्कन्दितमाशु रेतः । स्वयं तस्याः सम्बुभुक्षया स्कन्दयामास रेत इति च । स्कन्दिर् गतिशोषणयोरित्येके । स्खलने चेति वक्तव्यम् । यद्यपि वैयाकरणाः सान्तं पदमुशन्ति अप्सरस इति । समुद्रमथने अद्भ्यः सृता अप्सरस इति च निर्वदन्ति । **'अपि सर्तेरसुन्'**[९.१०१] इति हि दशपादिका । अप्शब्द उपपदे सर्तेर्धातोरसुन् प्रत्ययो भवतीत्यर्थः । अद्भ्यः सरतीति अप्सरेत्यपि स्यादेव । असुन् विभाषा भवति । तथाहि श्रुतिः–**'आनन्दिनीं प्रमोदिनीमप्सरां तामिह हुवे'**[अथ.सं.४.३८.८] इति । अपिच निर्वचनान्तरं

---

१. **'वराप्सरोऽव–'** २. हस्तलिखित आदर्शे–**'काले तु तस्मिन्नित्यादि'** इति पठ्यते । स एव वे.ती. सम्मतो मूलपाठः स्यादपि ।

**स तद् विलज्जावशतः पदेन समाक्रमत् तस्य बभूव सूनुः ।**
**हहू[1] तु नाम्ना स विरिञ्चगायको नाम्नाऽऽवहो यो मरुतां तदंशयुक् ॥ ६८ ॥**

**स द्रोणतातात् समवाप वेदानस्त्राणि[2] विद्याश्च तथा समस्ताः ।**
**द्रोणेन युक्तः स तदा गुरोः सुतं सहैव नौ राज्यमिति ह्यवादीत् ॥ ६९ ॥**

**पदे द्रुतत्वाद् द्रुपदाभिधेयः स राज्यमापाथ निजां कृपीं सः ।**
**द्रोणोऽपि भार्य्यां समवाप्य सर्वप्रतिग्रहोज्झश्च पुरेऽवसत् सुखी ॥ ७० ॥**

**गुरोः भरद्वाजस्य ॥ ६९ ॥ पदे पादे द्रुतत्वात् (स्खलित)त्वात् ॥ ७० ॥**

---

भवति–आप इव स्वच्छा पारदर्शिनी सरतीति । भूमाविवाप्सु च सरतीति । अपिचाप्सं लोकमोहनं लावण्यमाहुः । तदस्त्यस्या इति चाप्सराः, अप्सरा च । अप्सं स्वीयं कायं गुप्तं रूपं वा घनस्तनादिमयं कामयमानेभ्यो राति ददा-तीति चाऽहुः । तदा नासुन्प्रत्ययप्रसरः ॥ ६७ ॥ स राजा पृषतः तद् रेतः पदेन समाक्रम्य गोपयामास । स्वेन स्कन्दितं रेतो मा कश्चिद् विज्ञासीदिति विलज्जमानः । तेन सपदि तस्य सूनुर्बभूव । कोऽयम्? हहू तु नाम्ना । ननु भारतेऽन्यथोच्यते–**'द्रुपदश्चैव राजर्षिस्तत एवाभवद् गणात्'** [आ.प.६८.८०] इति । तत एवेति पूर्वश्लोकप्रस्तुतात् मरुतां गणादिति किलार्थः । तद्भावं व्याचष्टे– नाम्नाऽऽवहो यो मरुतां तदंशयुक् । हहा हहू इत्यव्ययं पदद्वयम् । **'गीतिमाधुर्यसम्पन्नौ विख्यातौ च हहा हहू'** इति [आ.प.६६.५१] पौराणं वचः । सङ्गीतानुकारशब्दोऽयम् अनि-रुक्तं पदमिति शाब्दिकाः । कथञ्चिन्निर्वक्तव्यं भवति । हकारो गानकर्तरि पठ्यते । चलन्नपि गायतीति हहा । महानयं गायन इति हूयते गीयत इति हहू । हुहू इति हूहू इति चार्वाचीनाः पठन्ति । द्वयमप्यव्ययम् । ओहाङ् गतौ । ह्वेञ् आह्वाने । केचिदर्वाचीनाः **'हाहाः हूहूः'** इत्यनव्ययत्वं चाऽहुः ॥ ६८ ॥ यथाऽस्त्राणि तथा शास्त्राणि च । द्रोणेन युक्तः द्रोणसहपाठी सन्नित्यर्थः । द्रोणतातादद् भरद्वाजादवाप । **'पाञ्चालोऽपि हि राजेन्द्र स्वराज्यं गतवान् प्रभुः । भरद्वाजस्य विद्यार्थं सुतं दत्वा महात्मनः । स कुमारस्ततो राजन् द्रोणेन सहितो वने । वेदांश्चाधिजगे साङ्गान् धनुर्वेदांश्च भारत'**[आ.प.१५०.१६–७] इति च । अवादीच्च गुरोः सुतं द्रोणम्–'यदा पिता मां यौवराज्येऽभिषेक्ष्यति तदाऽवयोः सहैव राज्यं भविष्यति । त्वां विना न मे राज्यमपि प्रियम्' इति ॥ ६९ ॥ यत् पूर्ववृत्तं लोकश्रवणात् गोपायितुं प्रायतत, अहो तेनैव नाम्नाऽस्य सुतः प्रथित आसेत्याह– पदे द्रुतत्वात् । पदस्याधः प्रद्रुत्य रेतोरूपेण स्थितत्वाद् द्रुपद इत्यभिधेय-मस्य बभूव । **'ततस्तु तपसा तस्य राजर्षेर्भावितात्मनः । पुत्रः समभवच्छीघ्रं पदोस्तस्य क्रमेण तु । तेनास्य ऋषयः सर्वे समागम्य तपोधनाः । नाम चक्रुर्हि विद्वांसो द्रुपदोऽस्त्विति भारत'**[१५०.१३–४] इति च । अथ पृषतस्य

---

१. 'हुहू' २. **'समवाप्य वेदान् शास्त्राणि'**

**सिलोञ्छवृत्यैव[१] हि वर्त्तयन् स धर्म्मं महान्तं विरजं जुषाणः ।**
**उवास नागाख्यपुरे सखा स देवव्रतस्याथ कृपस्य चैव ॥ ७१ ॥**

**तेषां समानो वयसा विराटस्त्वभूद्धहा नाम विधातृगायकः ।**
**मरुत्सु यो विवहो नाम तस्याप्यंशेन युक्तो निजधर्म्मवर्त्ती ॥ ७२ ॥**

**ततः कदाचिन्मृगयां गतः स ददर्श कन्याप्रवरां तु शन्तनुः ।**
**या पूर्वसर्गे पितृपुत्रिका सती चचार विष्णोस्तप उत्तमं चिरम् ॥ ७३ ॥**

**शिलं च उञ्छं च शिलोञ्छे । ताभ्यां वृत्तिर्जीवनम् । शिलोञ्छवृत्त्या वर्तयन् । जीवधारकत्वाद् धर्मं धर्मनामकम् । महान्तं विरजं रजोगुणरहितम् । उपलक्षणमेतत् त्रिगुणरहितमिति यावत् । एवम्भूतं हरिं जुषाणः । सात्विकं (स्वं) धर्मं जुषाण इति वा ॥ ७१–२ ॥अथ पाण्डवोत्पत्तिं वक्तुमुपयुक्तशन्तनुसत्यवतीसम्बन्धमाह– ततः कदाचिदित्यादिना । पूर्वसर्गे पूर्वजन्मनि । पितृपुत्रिका पितृनाम्नां देवानां सुता ॥ ७३–४ ॥**

---

निधनानन्तरं स वनात् पञ्चालराज्यमाप । राजत्वं चाऽप । अथेति कथान्तरारम्भे च । अथ अध्ययनानन्तरं स बृहस्पत्यंशो द्रोणोऽपि मूलरूपेऽपि निजां भार्यां अत्रापि जन्मनि भार्यां समवाप्य हस्तिनपुरेऽवसत् ॥ ७० ॥ सिलोञ्छवृत्यैव । षिल उञ्छे । उछि उञ्छे । तेन सिलनमेवोञ्छनम् । उञ्छनमेव सिलनम् । अथापि पदद्वयं सह प्रयुञ्जते । तेन ज्ञायते कश्चननयोरर्थभेदोऽस्तीति । आचख्यौ च– **'उञ्छः कणश आदानं कणिशाद्यर्जनं सिलम्'** इति यादवप्रकाशः । अयमर्थः– कणिशो धान्यमञ्जरी । कणिशं वा । धान्यमञ्जरीं सङ्गृह्य तेन जीवननिर्वाहः सिलमुच्यते । तस्याप्यलाभे मञ्जरीच्छेदसमये केदारे पतितानां कणानां सङ्ग्रहेण जीवनमुञ्छ इति । **'ऋतमुञ्छसिलं प्रोक्तम्–'** [७.१२.१९] इति भागवते । सिलोञ्छस्य वृतिर्वरणं स्वीकरणम् । तया वर्तयन् जीविकां निर्वहन् । **'वृत्यैव'** इति मूलादर्शे । **'–वृत्त्यैव'** इति प्र.पाठः । तदा सिलेन उञ्छेन वा वर्तनं सिलोञ्छवृत्तिः । वृत्त्या वर्तयन्निति पुनरुक्तमिव भवति । **'सिलस्योञ्छनमुच्चयनं सिलोञ्छनम्'** इति तु क्षीरस्वामी । विरजम् । रजःपदमदन्तमप्यस्तीत्युक्तम् । सान्तोऽपि वा क्वचिददन्तो भवति यदा समासान्तो भवति । विरजम्, अमलिनम्, अरजस्तमस्कम्, वैष्णवं धर्ममित्यर्थः । जुषाणः प्रीत्या सेवमानः, न भीत्या । नागो हस्ती । तदाख्ये हस्तिनपुरे । अथ कृपीविवाहानन्तरम् । अथ तस्मात् सम्बन्धित्वादेव कृपस्य च । प्रथमं देवव्रतस्य सखा । अनन्तरं कृपस्य च । एवकारः सख्यस्य निरन्तरतां निर्व्याजतां चाह ॥ ७१ ॥ वयसा द्रोणदेवव्रतकृपद्रुपदानां समानो विराटः, यो मत्स्योदरे जातः, व्यासजननीसहोदरः । स्वरूपतः कोऽयम्? हहा नाम विधातृगायकः । **'मरुतां तु गणाद् विद्धि सञ्जातमरिमर्दनम् । विराटं नाम राजानम्–'** [आ.प.६८.८२] इति भारतवचनं सङ्गमयति– मरुत्सु । मरुतां गणप्रविष्टात् विवहात् । तस्यांशतः सन्निधानादिति भारतवचनार्थः ॥ ७२ ॥ अथ वयसा

---

१. **'शिलोञ्छवृत्त्यैव'** । वे.ती.पाठोऽपि तथा ।

**यस्यै वरं विष्णुरदात् पुराऽहं सुतस्तव स्यामिति या वसोः सुता ।**
**जाता पुनर्दाशगृहे विवर्द्धिता व्यासात्मना विष्णुरभूच्च यस्याम् ॥ ७४ ॥**

**तद्दर्शनान्नृपतिर्ज्जातहृच्छ्रयो[१] वव्रे प्रदानाय च दाशराजम् ।**
**ऋते स तस्यास्तनयस्य राज्यं नैच्छद् दातुं तामथाऽयाद् गृहं स्वम् ॥ ७५ ॥**

**तच्चिन्तया [२]ग्लानमुखं जनित्रं दृष्ट्वैव देवव्रत आश्वपृच्छत् ।**
**तत्कारणं सारथिमस्य तस्माच्छ्रुत्वाऽखिलं दाशगृहं जगाम ॥ ७६ ॥**

**स तस्य विश्वासकृते प्रतिज्ञां चकार नाहं करवाणि राज्यम् ।**
**तथैव मे सन्ततितो भयं ते [३]व्यैतूर्ध्वरेताः सततं भवानि ॥ ७७ ॥**

**भीमव्रतत्वाद्धि तदाऽस्य नाम कृत्वा देवा भीष्म इति ह्यचीक्लृपन् ।**
**प्रसूनवृष्टिं स च दाशदत्तां काळीं[४] समादाय पितुः समर्प्पयत् ॥ ७८ ॥**

**जातहृच्छयः जातकामः । प्रदानाय आत्मने दातुं वव्रे प्रार्थयामास ॥ ७५–८ ॥**

---

भीष्मादिसमानामपरामाह–तत इति । भीष्मादिसमानवयाः, अथापि कन्या । दाशगृहे विवर्धिता, अथापि वरा । व्यास-जननीत्वं पुनस्तस्याः कन्याभावं न बभञ्ज, प्रत्युत प्रकर्षयामासेति कन्याप्रवरामित्याह । तमेवापूर्वं विशेषं तुनाऽऽह । तामेव तुना सूचितां कथां विस्पष्टमाह– या पूर्वसर्गे ॥ ७३–४ ॥ कामिनीभक्तान् हृदयमाश्रित्य बाधत इति हृच्छ्रयः मनोजः । हृदि शयनात् हृच्छयश्चोच्यते । वव्रे अनुरुरुधे । **'अस्यां जनिष्यमाणस्य पुत्रस्यैव राज्यं दास्मामि'** इति राज्ञा प्रतिज्ञाकरणं विना । तां कन्यां शन्तनवे दातुं नैच्छत् । अथ निराकरणानन्तरं प्रतिज्ञां कर्तुमपारयंस्तूष्णीं गृहमयात् ॥ ७५ ॥ जनित्रं जनयितारम् । जनयतीति जनित्रः । **'नकिर्ह्येषां जनूंषि वेद ते अङ्ग विद्रे मिथो जनित्रम्'** [ऋ.सं. ७.५६.२] इति श्रुतिः । तत्र यत् **'जनित्रं जन्म'** इति व्याचक्षते, अस्वरसं तदिति ज्ञापयन् भगवत्पादो जनित्रमित्याह । **'जनयतीति जनित्वः पिता'** इत्याह उणादिवृत्तिकारः । यदि त्वः स्यात् स्यादेव त्रोऽपि । इत्रजित्यन्ये । ग्लानमुखम् । ग्लै हर्षक्षये । अस्य स्वपितुः मुखग्लानिकारणं किमिति पितुः सारथिमपृच्छत् ॥ ७६ ॥ व्येतु इति वक्तव्ये 'व्यैतु' इत्याह । तेन 'सर्वात्मना व्येतु' इत्याह । व्या एतु गर्भ एव व्यापन्नमपसर्पत्विति । रेतःपातस्थगनमूर्ध्वरेतस्त्वम् ॥ ७७ ॥ नाम कृत्वा प्रसूनवृष्टिमचीक्लृपन् समार्थयन्त, विरचितवन्त इत्येतत् । वर्णतः काळीमत एव नाम्ना

---

१. **'-हृच्छयो–'** । वे.ती.पाठोऽपि तथेति भाति ।
२. **'–या म्लान–'**
३. **'व्येतूर्ध्व–'**
४. **'कालीम्'**

ज्ञात्वा तु तां राजपुत्रीं गुणाढ्यां सत्यस्य विष्णोर्म्मातरं नामतस्तत् ।
लोके प्रसिद्धां सत्यवतीत्युदारां विवाहयामास पितुः स भीष्मः ॥ ७९ ॥

प्रायः सतां न मनः पापमार्ग्गे गच्छेदिति ह्यात्ममनश्च सक्तम् ।
ज्ञात्वाऽपि तां दाशगृहे विवर्द्धितां जग्राह सद्धर्मरतश्च शन्तनुः ॥ ८० ॥

स्वच्छन्दमृत्युत्ववरं प्रदाय तथाऽप्यजेयत्वमधृष्यतां च ।
युद्धेषु भीष्मस्य नृपोत्तमः स रेमे [1]तयैवाब्दगणान् बहूंश्च ॥ ८१ ॥

लेभे स चित्राङ्गदमत्र पुत्रं तथा द्वितीयं च विचित्रवीर्य्यम् ।
तयोश्च बाल्ये [2]व्यधुनोच्छरीरं जीर्ण्णेन देहेन हि[3] किं ममेति ॥ ८२ ॥

**भीष्मोऽपि दाशगृहे स्थितां तां कथं विवाहयामासेत्यत आह– ज्ञात्वेति ॥ ७९ ॥ शन्तनुस्तां दाशगृहे स्थितां स्वयं दृष्ट्वा कथं जग्राहेत्यत आह– प्राय इति ॥ ८०–२ ॥**

---

च काळीम् । समर्पयत् समार्पयत् । एतेन स्वस्य वैदिकप्रयोगप्रियत्वं प्रकटयत्याचार्यः । वेदेषु हि विपुलमडभावः । भीम एव भीष्मः । **'भियः षुग् वा'** [७.३५] इति हि दशपादिका। बिभेति लोकोऽस्य व्रतादिति भीष्मः । **'भियो धातोर्मक्-प्रत्ययो भवति, षुक् चाऽगमो वा'** इति वृत्तिः ॥ ७८ ॥ राज्ञ उपरिचरवसोः पुत्रीम् । सत्यो भगवानस्त्यस्याः सुतत्वेनेति सत्यवतीति प्रसिद्धाम् । नन्वनूढा कानीनं जनयामास । तत् कथं तादृशीं राजा चकमे । कथं च विवाहयामास भीष्म इति मा केनापि शङ्कीत्याह–उदारामुत्कृष्टामिति । गुणाढ्यमिति च । न कानीनजननीत्वं दोषः । सत्यस्य विष्णोर्जननीति गुणत्वेनर्षिभिः स्तुतत्वात् । तामेव प्रसिद्धिं प्रथयता लोकेन चाङ्गीकृतत्वात् । यदि दोषवत्यभविष्यत्, न जनैः सत्यवतीत्यस्तोष्यत । ऋषिणा स्वस्य कन्यात्व एव गर्भधारणं च सा स्वयं घोषयामासेति च जनास्तां सत्यवचनां सत्यवतीति प्रशशंसुः ॥ ७९ ॥ प्रायः सताम् । आमनन्ति च धर्मज्ञाः–**'आत्मनस्तुष्टिरेव च'** इति । पापमार्गे न गच्छेदित्यतः, अथाप्यात्ममनस्तस्यां सक्तमित्यतश्च । दाशगृहे विवर्धितां ज्ञात्वाऽपि, कानीनजननीं ज्ञात्वाऽपि, सद्धर्मरतोऽपि धर्मोऽयमिति ज्ञात्वैव जग्राह ॥ ८० ॥ तथा युद्धेष्वजेयत्वमधृष्यतां चेति वरद्वयमपि प्रदाय । अधृष्यता परैरप्रसह्यं तेजः । धृष प्रसहने । प्रसन्नेन दानं प्रदानम् । अब्दगणानिति । अब्दानां पञ्चकं गणः । बहूनित्यष्टदशान् गणानित्यर्थः ॥ ८१ ॥ अत्र काळ्याम् । व्यधुनोत् व्यसृजत् । धूञ् कम्पने । धुञ् इत्येके । विपूर्वोऽयमपूर्वेऽर्थेऽत्र प्रयुक्तः । अवज्ञया झाटनं विधूननम् । तदेव स्फुटमाह– जीर्णेन देहेन किं कृत्यमिति । भारते **'कालधर्ममुपेयिवान्'**

---

१. **'तयैवा–'** २. **'विसृजच्छरीरम्'** ३. **'देहेन च किम्'**

स्वेच्छया वरुणत्वं स प्राप नानिच्छया तनुः ।
तस्मिन् काले त्यज्यते हि बलवद्भिर्वधं विना ॥ ८३ ॥

अतिसक्तास्तपोहीनाः कथञ्चिन्मृतिमाप्नुयुः ।
अनिच्छयाऽपि हि यथा मृतश्चित्राङ्गदानुजः ॥ ८४ ॥

अथौर्ध्वदैहिकं कृत्वा पितुर्भीष्मोऽभ्यषेचयत् ।
राज्ये चित्राङ्गदं वीरं यौवराज्येऽस्य चानुजम् ॥ ८५ ॥

चित्राङ्गदेन निहतो नाम स्वं त्वपरित्यजन् ।
चित्राङ्गदोऽकृतोद्वाहो गन्धर्वेण महारणे ॥ ८६ ॥

**बलवद्भिः वधं हननं विना तस्मिन् काले शरीरस्य जीर्णत्वदशायां तनुस्त्यज्यते हि, स्वेच्छया त्यज्यते हि, बुद्धिमद्भिः क्षत्रियैरिति शेषः ॥ ८३–४ ॥ देहाद्यदूर्ध्वं तदौर्ध्वदैहिकम् । देहत्यागादानन्तरिकं कर्मेति भावः ॥ ८५–९१ ॥**

---

[आ.प.१०८.५] इति श्रूयते । स्वेच्छयेत्युपस्कर्तव्यमिति भावः । तदेतद् भीष्मस्य स्वेच्छामरणवरदानात् सिद्धमित्याह हीति । न हि स्वयं दरिद्रो याचकाय भूरिद्रविणं वितितीर्षति ॥ ८२ ॥ पूर्वं महाभिषक्त्वे तत्तनुत्यागेऽपि न वरुणत्वं प्राप । इदानीं तु वरुणत्वमाप । तस्मिन् काले, द्वापर इत्यर्थः । तपोबलवद्भिर्नानिच्छया तनुस्त्यज्यते हि । तस्यापवादमाह– ततोऽप्यधिकबलवद्भिर्वधं विना । यथा चित्राङ्गदः । बलवत्तराणां हीच्छा विजयते । नहि बलिनो दुर्बलानामागः सिषहिषन्ते ॥ ८३ ॥ ननु चित्राङ्गदानुजो विचित्रवीर्यो युवैवानिच्छया यक्ष्मणा मृतिमाप । तत्र कारणमाह–अतिसक्ताः । कामभोगे ॥ ८४–५ ॥ चित्राङ्गदेन गन्धर्वेण चित्राङ्गदो निहतः । **'स तु चित्राङ्गदः शौर्यात् सर्वांश्चिक्षेप पार्थिवान् । ... तं क्षिपन्तं सुरांश्चैव मनुष्यानसुरांस्तथा । गन्धर्वराजो बलवांस्तुल्यनामाऽभ्ययात् तदा । गन्धर्वः– त्वं वै सदृशनामाऽसि युद्धं देहि नृपात्मज । नाम वाऽन्यत् प्रगृह्णीष्व यदि युद्धं न दास्यसि'**[१०८.७–९] इति हि भारते । **'समास्तिस्रोऽभवद् रणः'** [१०८.१२] इति वचनान्महारण इत्याह । दीर्घो रण इत्यर्थः । महच्च अरणं शरणं तद् वीराणाम् । निगृह्य हतः निहतः । आदौ निगृहीतः । अथापि न परितत्याज । ततो हत इत्यर्थः । पराजयमभ्युपगम्य त्यागः परित्यागः । सर्वात्मना त्यागश्च । यतोऽर्धत्यागोऽपि त्यागो भवति । तद्यथा–अद्भुताङ्गद इति चित्रकेयूर इति । स्थितस्यैव नाम्नः अधिकयोजनेनापि त्यागो भवति । तद्यथा–विचित्राङ्गद इति । तुना तस्य सर्वक्षेपकमहङ्कारातिशयं मृतिहेतुमाह ॥ ८६ ॥

**विचित्रवीर्य्यं राजानं कृत्वा भीष्मोऽन्वपालयत् ।**
**अथ काशिसुतास्तिस्रस्तदर्थं भीष्म आहरत् ॥ ८७ ॥**

**अम्बामप्यम्बिकानाम्नीं तथैवाम्बालिकां पराम् ।**
**पाणिग्रहणकाले तु ब्रह्मदत्तस्य वीर्य्यवान् ॥ ८८ ॥**

**विजित्य तं साल्वराजं समेतान् क्षत्रियानपि ।**
**अम्बिकाम्बालिके तत्र संवादं चक्रतुः शुभे ॥ ८९ ॥**

**अम्बा सा भीष्मभार्य्यैव पूर्वदेहे तु नैच्छत ।**
**शापाद्धिरण्यगर्भस्य साल्वकामाऽहमित्यपि ॥ ९० ॥**

---

अनुज्ञया पालनमनुपालनम् । विचित्रवीर्यो हि स्वयं राज्यनिर्वहणे नातिसमर्थ आस । अतो भीष्मस्तदनुज्ञया स्वयं राज्यमपालयदित्यर्थः । अथ स्वयमसमर्थेऽपि प्राप्तयौवने सम्प्राप्तविवाहाकङ्क्षे च विचित्रवीर्ये, तदर्थं विचित्रवीर्यस्योद्वाहार्थम् ॥ ८७ ॥ परां जनुषा जघन्यामपि गुणतो ज्येष्ठाम् । अम्बालिका हि कुरुवंशधरा भभूव । तथेति समुच्चये । अनिच्छन्तीनां प्रसह्य हरणमेवकारेणाऽह । ब्रह्मदत्तस्य अम्बया सह पाणिग्रहणकाले भीष्मस्तास्तिस्रः कन्या आहरत् । अन्ययोरपि स्वयंवरणकाले । एता अपि श्रुतिषूदलिख्यन्त–**'अम्बे अम्बाल्यम्बिके न मा नयति कश्चन । स सस्त्यश्वकः'** [तै.सं.७.४.१९] इति ॥ ८८ ॥ साल्वराजं ब्रह्मदत्तम् । साल्वस्य देशस्य राजा । सालवन्तं निबिडवृक्षं देशं साल्वमाहुः परोक्षप्रियाः, विशिष्य रसालवन्तम् । साल्वस्य राजपुत्रो साल्व उच्यते साल्वस्यायं साल्व इति । अस्य पुत्रोऽपि साल्वः पठ्यते । सौभसाल्व इति च । यः शिववरलब्धसौभाख्यविमान इति सौभसाल्व इति प्रथामाप हंसिडिभकयोर्भ्राता पूर्वजातः । **'साल्वा नाम क्षत्रिया तन्नामिका, तस्या अपत्यं साल्वः'** इति वैयाकरणाः । तत्र विचित्रवीर्यार्थं भीष्मेणाऽहरणविषये । सम्मतमिति वादः संवादः । समानो वा वादः संवादः । एकाभिप्रायत्वमित्येतत् । भीष्मो यदुवाच, यद्वा चकार तदेते अङ्गीचक्रतुः । शुभे शुभलक्षणे । रूपसम्पन्ने इत्येतत् ॥ ८९ ॥ पूर्वदेहे मूलरूपेऽपि । भीष्मभार्या द्युवसुभार्या । अथच पूर्वदेहे भीष्मभार्या । भीष्मस्य पूर्वदेहे द्युवसुत्वेऽपि भार्येत्यर्थः । तुना सूचितं कारणविशेषं मुखत आह– शापात् । **'अभर्तृका सती पत्युर्मृतौ कारणत्वं व्रजेत'** इति । केवलार्थो वा तुः । अम्बा तु केवलमम्बैव नैच्छत । तेनाऽत्मगामि दुरन्तफलमात्मनेभाषयाऽह । न केवलं विचित्रवीर्यं नैच्छत । 'अहं साल्वकामा' इत्यप्युवाच । कथमन्यकामाऽन्यस्य भार्या बुभूषेत् । अतस्तां स भीष्मस्तत्याज विससर्ज । स्वेच्छया गन्तुमनुमेन इत्यर्थः । परपुरुषेण आमृष्टा आत्मीयत्वेन स्पृष्टेति हेतोः । मृश आमर्शने । आमर्शनं हि स्पर्शः । तादृशं सङ्गमं परिहर्तुं त्यक्ता । भीष्मेण सह सङ्गरे परिभूतत्वात् त्यक्ता । अथच स्वयंवरेऽन्येन हृतेति त्यक्ता । प्रत्याहरणप्रयत्नेऽपि परिभवात् परित्यक्ता । परामृष्टेति सम्परित्यक्ता । सा पुनरपि भीष्ममाप । सोऽपि नागृह्णात् न स्व्यकरोत् । पुनःपुनः त्यक्ता पुनःपुनः भीष्ममापेति च

**उवाच तां स तत्याज साऽगमत् साल्वमेव च ।**
**तेनापि सम्परित्यक्ता परामृष्टेति सा पुनः ॥ ९१ ॥**

**भीष्ममाप स [१]नागृह्णात् प्रययौ साऽपि भार्ग्गवम् ।**
**भ्रातुर्विवाहयामास सोऽम्बिकाम्बालिके ततः ॥ ९२ ॥**

**भीष्माय तु यशो दातुं युयुधे तेन भार्ग्गवः ।**
**अनन्तशक्तिरपि स[२] न भीष्मं निजघान ह ।**
**नचाम्बां ग्राहयामास भीष्मकारुण्ययन्त्रितः ॥ ९३ ॥**

**'अनन्तशक्तिः सकलान्तरात्मा यः सर्ववित् सर्ववशी च सर्वजित् ।**
**'न यत्समोऽन्योऽस्ति कथञ्च कुत्रचित् कथं ह्यशक्तिः परमस्य तस्य' ॥ ९४ ॥**

**भार्गवं प्रययौ । तं प्राप्य चाऽत्मनो भीष्मस्वीकारं तदभावे तस्य बन्धं च वव्र इति शेषः ॥ ९२–४ ॥**

---

व्याख्येयम् । तथाहि भारते–**'अम्बा भीष्मं पुनः साल्वं भीष्मं साल्वं पुनःपुनः । गमनागमनैरेवमनैषीत् षट् समा नृप'** [आ.प.१०९.९२] इति । भार्गवं प्रययौ अन्यायपरिमार्जनार्थं स्वस्य न्यायलम्भनार्थं च । ततः अम्बया विचित्रवीर्यवरणनिराकरणात्, ततः अम्बागमनानन्तरमम्बिकाम्बालिके विवाहयामास । अम्बेति अम्बिकेति च जगन्मातु-रिन्दिराया नामनी । पार्वत्या वा । युक्तं काशिराजेन सुतयोस्तथा नामकरणम् । अत एवाम्बिकामित्यनुक्त्वा **'अम्बिकानाम्नीम्'** इत्याह । अम्बिकाया जगन्मातुर्नामैव नाम यस्या इति । अबि शब्दे । इयांस्तु विशेषः–यदेदं मातृवचनं तदा सम्बुद्धिः **'अम्ब'** इति । यदा कन्यावचनं तदा **'अम्बे'** इति । अम्बते प्रीत्या शिशून् शब्दापयतीत्यम्बा चाम्बिका च । अमतीत्यम्बा, अमेर्बप्रत्यय इति वैयाकरणाः । अम गतिशब्दभक्तिषु । भक्तिर्भजनम् । प्रीत्या सेवनमित्येतत् । यवीयसी चाम्बा भवत्यम्बिका । अन्ते जाता बालिका अम्बालिका । अम्बाया आलिरिवेति च । या चाम्बा भार्गवं प्रययौ भार्गवस्तां सान्त्वयन्निवाऽह– 'तथा करिष्यामि यथा भीष्मस्त्वामुद्वक्ष्यति' इति । आगत्य च भीष्ममाह–'उद्वहैनाम्' इति । नेत्याह भीष्मः । तदा भीष्माय तु यशो दातुं तेन युयुधे । तुना शिष्यवात्सल्यातिशयमाह । तुरेवार्थे च । यशो दातुमेव । भीष्मायेति चतुर्थ्येदमाह– शिष्येण गुरुः पराजीयतेत्यज्ञव्यवहाररूपमयशो लीलया स्वीकर्तुं चेति । अनन्तशक्तिरप्यात्मानमशक्तमिव दर्शयामासेति विस्मयते हेति । भीष्मे या करुणा तया यन्त्रितो निरुद्ध इव । यत्रि सङ्कोचने ॥ ९०–३ ॥ स्वोक्तार्थे प्रमाणसंवादमाह– अनन्तशक्तिरित्यादिना । सकलान्तरात्मा । अयमेव भीष्मे स्थित्वा च युयुधे । नेति च वाचयामास भीष्मेण । सर्वं वेत्तीति सर्ववित् । सर्वं विन्दतीति सर्वविदाप्तकामः । कथञ्च वरादिना

---

१. 'नो गृह्णात्' २. 'सन् न–'

'भीष्मं स्वभक्तं यशसाऽभिपूरयन् विमोहयन्नासुरांश्चैव[1] रामः ।
'जित्वैव भीष्मं न जघान देवो वाचं च सत्यामकरोत् स तस्य' ॥ ९५ ॥

'विद्धवन्मुग्धवच्चैव केशवो वेदनार्त्तवत् ।
'दर्शयन्नपि मोहाय नैव विष्णुस्तथा भवेत्' ।
एवमादिपुराणोत्थवाक्याद् रामः सदा जयी ॥ ९६ ॥

यशो भीष्मस्य दत्वा तु सोऽम्बां च शरणागताम् ।
उन्मुच्य भर्तृद्वेषोत्थात् [2]पापात् तेनाऽश्वयोजयत् ॥ ९७ ॥

**एवं सङ्कटे जातेऽपि नाम्बां जग्राहेति यशसाऽभिपूरयन् । तस्य भीष्मस्य वाचं अम्बां न गृह्णीयामिति प्रतिज्ञा-रूपां वाचम् ॥ ९५ ॥ अनन्तशक्तित्वाद्युपपत्त्या रामस्य पराजयाभावं प्रसाध्याऽगमेनापि साधयति– विद्धवदिति । केशवः विद्धादिवत्, दर्शयतीति शेषः । विष्णुरेवं दर्शयन्नपि न तथा भवेदिति योजना ॥९६॥ त्वां भीष्मेण ग्राहयिष्येऽन्यथा भीष्मं हनिष्य इति रामप्रतिज्ञा तर्हि भग्नेत्यत आह–यश इत्यादिना ।**

---

विशेषनिमित्तेनापि ॥ ९४ ॥ ननु नात्र भार्गवस्य स्फुटनिर्देशः । तर्हि शृणु स्फुटं वचनान्तरमित्याह–भीष्मम् । अभितः उभयतः, मनुष्यलोके देवलोके च पूरयन् । आसुरान् असुरप्रकृतीन्, 'अजीयत भार्गवः' इति, 'शिष्यादपि दुर्बलो जातः' इति, 'हन्त भगवदवतारस्यापीयं दशा' इति, 'वितथवचनो बभूव' इति विविधं मोहयन् । एवकारेण भगवतोऽज्ञानाद्य-भावमवधारयति । आसुरानेव च विमोहयन् देवप्रकृतीन् अनेन लीलानाटकेनाऽनन्दयन्निति च । **'अद्यप्रभृति मे दाश ब्रह्मचर्यं भविष्यति । अपुत्रस्यापि मे लोका भविष्यन्त्यक्षया दिवि'** [आ.प.१०७.१०८] इति तस्य वाचं च सत्यामकरोत् ॥ ९५ ॥ पूर्वं श्लोकद्वयमाचार्यस्य स्ववचनम्, विद्धवदित्यादिकं वक्ष्यमाणं श्लोकमात्रं पुराणवचनमिति प्राचीनटीका-काराः । विद्धः बाणादिना मर्मसु ताडितः । व्यथ ताडने । तेन जातया अरुन्तुदया वेदनया आर्तः पीडितः । आपदं ऋतः गत आर्त्तः । मुग्धवत् प्राप्तमूर्छ इव । क्वचिन्मुग्धः किमप्यजानन् बाल इव । नैव विष्णुस्तथा भवेत् । केशवो हि सः । सदाऽऽनन्दरूपत्वात् कः । सर्वस्येष्ट इतीशः । सर्वत्र वर्तते सर्वं वर्तयति चेति वः । केशौ ब्रह्मरुद्रावपि वर्तयतीति च । येये केशाः सुखस्येशते तेषामयं प्रवर्तक इति च । स कथं स्वयं दुःखी स्यात्? **'निसर्गात् सर्वभर्तृत्वादात्मेशत्वाज्ज-गत्पतेः । तथाऽपहतपाप्मत्वात् सामर्थ्याद् व्यापिनः प्रभोः । दोषोऽत्र नास्ति सुभगे देवस्य परमात्मनः'** [उ.खं.२४५.१७६–७] इति च पाद्मे पार्वतीं प्रति शिववचनम् । असुरमोहाय । क्वचित् सतामपि मोहाय । उत्कृष्टं स्थितमुत्थम् । समाधि-भाषाबद्धतैवोत्कर्षः । उत्थमुल्लिखितमुदीरितमिति वा । उच्यते स्तूयतेऽनेनेति उक्थमित्युचथं वा ॥ ९६ ॥ ननु भीष्मस्य वाचं सत्यामकरोत्, भीष्मेण त्वां योजयामीति स्वस्य वाचं किमिति न सत्यामकरोत्? तामपि सत्यामकरोदेवेत्याह– तेन

---

१. **'–हयन्नसुरांश्चैव'** २. **'–द्वेषोत्थपापात्'**

अनन्तरं शिखण्डित्वात् तदा सा शाङ्करं तपः ।
भीष्मस्य निधनार्त्थाय पुंस्त्वार्त्थं च चकार ह ॥ ९८ ॥

भीष्मो यथा त्वां गृह्णीयात् तथा कुर्य्यामितीरितम् ।
रामेण सत्यं तच्चक्रे भीष्मे देहान्तरं गते ॥ ९९ ॥

रुद्रस्तु तस्यास्तपसा तुष्टः प्रादाद् वरं तदा ।
भीष्मस्य मृतिहेतुत्वं कालात् पुन्देहसम्भवम् ॥ १०० ॥

मालां च य इमां मालां गृह्णीयात् स हनिष्यति ।
भीष्ममित्येव तां मालां गृहीत्वा सा नृपान् ययौ ॥ १०१ ॥

**शिखण्डित्वादनन्तरं भर्तृद्वेषोत्थात् पापात् अम्बामुन्मुच्य मोचयित्वा तेन देहान्तरं गतेन भीष्मेण आशु अविलम्बेनायोजयदिति सम्बन्धः । जन्मान्तरे तत्सम्बन्धघटनात् न रामप्रतिज्ञा भग्नेत्येतच्छ्लोकाभिप्रायः ॥ ९७–८ ॥ तस्मिन् जन्मन्ययोजनात् कथं न प्रतिज्ञाभङ्गः इत्यत उक्तम्– (भीष्म इत्यादि) । रामेणास्मिन् जन्मन्येव योजयामीति विशिष्यानुक्तत्वात् भीष्मेण योजयिष्यामीति सामान्योक्तेश्च जन्मान्तरविषयत्वाभिप्रायसम्भवात् तस्य च कृतत्वात् न रामप्रतिज्ञाभङ्ग इति भावः ॥ ९९–१०० ॥ मालां च प्रादात् ॥ १०१–७ ॥**

---

भीष्मेण तामाश्वयोजयत् । कदा? शिखण्डित्वादनन्तरमाशु । किमिति अम्बाजन्मन्येव न योजयामास? भर्तृद्वेषोत्थात् पापात् । उत्थमुत्थितम्, उत्पन्नमित्येतत् । तावत्पर्यन्तं विरहेण तस्मात् पापादुन्मुच्य, प्रतिबन्धकपापविगमे सत्याश्वयोजयत् । भार्गवोऽपि यदा न भीष्मेण योजयामास तदा पत्युर्निधनमिच्छन्ती शाङ्करं तपश्चकारेति विस्मयते हेति । यद् विष्णुर्न ददौ तच्छङ्करेणाऽदित्सतीत्यहो तस्याः स्त्रैणमिति । अहो भवितव्यता बलवतीति च । तदपि स्वरसतोऽशक्यसम्भवं पुंस्त्वमिच्छन्ती ॥ ९७–८ ॥ नन्वथाप्यम्बां भीष्मो न जग्राह । कथमवितथवचनो भार्गवः? देहान्तरे सत्यमासीदित्याह–भीष्म इति । नह्यस्मिन्नेव जन्मनीति रामेणोक्तम् । भीष्मेण ग्राहयिष्यामीत्येवोक्तम् । लृडर्थो भाविकालोऽयं हि निरवधिः । अथापि नातिविलम्बेन । प्रतिबन्धकपापापगमे सत्याश्वेव ॥ ९९ ॥ अम्बा शङ्करं प्रति तपश्चकार । तदा किमासीत्? आह–रुद्रस्तु । भगवतो हृदयं जानन् रुद्र इत्यर्थः । कालात् कञ्चित् कालं प्रतीक्ष्य देहान्तरे । मालां च प्रादात् । स हनिष्यति भीष्ममित्युक्त्वा । एवेति वचनस्य तथ्यतामवधारयति । सर्वमेतत् सङ्कीर्णतया विक्षिप्ततया च भारते कथितम् । अत एकत्र समग्रां कथां सङ्क्षिप्य ग्रथयामास भगवत्पादः । तथाहि भीष्मेण पराजित इव नाटयन् दुर्जनमोहनो भार्गवो युद्धावसाने प्रणतं भीष्ममाह–**'त्वत्समो नास्ति लोकेऽस्मिन् क्षत्रियः पृथिवीचरः ।**

**तां न भीष्मभयात् केऽपि जगृहुस्तां हि सा ततः ।**
**द्रुपदस्य गृहद्वारि न्यस्य योगात् तनुं जहौ ॥ १०२ ॥**

**एतस्मिन्नेव काले तु सुतार्त्थं द्रुपदस्तपः ।**
**चकार शम्भवे चैनं सोऽब्रवीत् कन्यका तव ॥ १०३ ॥**

---

**गम्यतां भीष्म युद्धेऽस्मिन् तोषितोऽहं भृशं त्वया'** [उ.प.१८५.३६] इति । अम्बाया भर्तृद्वेषगमकम्–**'जहि भीष्मं महाबाहो यथा वृत्रं पुरन्दरः'** [१७७.४२] इत्यम्बावचनं भार्गवं प्रति । अन्यच्च तापसान् प्रति–**'वधार्थं तस्य दीक्षा मे न लोकार्थं तपोधनाः । निहत्य भीष्मं गच्छेयं शान्तिमित्येव निश्चयः'** [१८७.३] इति । **'हनिष्यसि रणे भीष्मं पुरषत्वं च लप्स्यसे'** [१८७.१३] इति च रुद्रवचनम् । मालाप्रसङ्गस्तु भारते पूर्वमेवोक्तः । यद्यपि कुमारस्तस्याः स्रजं ददाविति भारते पठ्यते–**'अनन्तसेनो भगवान् कुमारो वरदः प्रभुः । मानयन् राजपुत्रीं तां ददौ तस्यै शुभां स्रजम् । एषा पुष्करिणी दिव्या यथावत् समुपस्थिता । अम्बे त्वच्छोकशमनी माला भुवि भविष्यति । एतां चैव मया दत्तां मालां यो धारयिष्यति । सोऽस्य भीष्मस्य निधने कारणं वै भविष्यति'**[आ.प.१०९.९७–९] इति । यं प्रति तपः कृतं स एव वरदो बभूवेति युक्तम् । अतः भारते कुमार इति न शिवकुमार उच्यते । किन्तु शिव एव । निर्वचनं चात्र भवति–कुत्सितो येन मारो बभूव । यो मारं मारयामास । अनन्तो भविष्यन्, सेनश्च नारायणेनेति । अनन्तेन वा नारायणेन सेनः । तदिच्छानुगुणं वरं ददावित्यर्थः । अतो न विरोध इति भगवत्पादाशयः । अन्यथोपरितनवचनविरोधश्च स्यात् । तथाह्युद्योगपर्वणि–**'तां देवो दर्शयामास शूलपाणिरुमापतिः'** [१८७–७] इति, **'तामुवाच महादेवः कन्यां किल वृषध्वजः । न मे वागनृतं प्राह सत्यं भद्रे भविष्यति । हनिष्यसि रणे भीष्मं पुरुषत्वं च लप्स्यसे'** [१८७.१२–१३] इति । नृपान् ययौ । **'इयं वः क्षत्रिया माला या भीष्मं निहनिष्यति । अहं च भार्या तस्य स्यां यो भीष्मं घातयिष्यति'**[आ.प.११०.२] इति राजगृहद्वारि घोषयन्ती ॥ १००–१ ॥ तां न भीष्मभयात् । तां मालां केऽपि नृपा न जगृहुः । अथच तामम्बां केऽपि न जगृहुः , मालामादाय नादद्रिरे । **'नाभवच्छरणं कश्चित् क्षत्रियो भीष्मजाद् भयात्'**[४] इति च । द्रुपदस्य गृहद्वारि । अतः शिखण्डिद्वारा, अर्जुनद्वारा च द्रुपदोऽपि भीष्ममृतिहेतुर्बभूव । भीष्मनिधनार्थं वृत्ते युद्धे सैनापत्येन धृष्टद्युम्नोऽपि । **'अगच्छत् सोमकं साऽम्बा पाञ्चालेषु यशस्विनम् ।....पाञ्चालराजमाक्रन्दत् प्रगृह्य सुभुजा भुजौ । भीष्मेण हन्यमानां मां मज्जन्तीमिव च ह्रदे । यज्ञसेनाभिधावेह पाणिमालम्ब्य चोद्धर । यज्ञसेनः..... नहि भीष्मादहं धर्मं शक्तो दातुं कथञ्चन । वैशम्पायनः– इत्युक्ता स्रजमासज्य द्वारि राज्ञो व्यपाद्रवत्'**[११०.४–१६] इत्यादि । योगात् योगाग्निं प्रविश्य तनुं जहौ । **'उक्त्वा भीष्मवधायेति प्रविवेश हुताशनम् । ज्येष्ठा काशिसुता राजन् यमुनामभितो नदीम्'** [उ.प.१८७.१९] इति च । तां मालां साऽम्बैव जन्मान्तरे जग्राहेति सम्प्रति भारते दाक्षिणात्यः पाठः–**'तां स्रजं द्रुपदो राजा कश्चित् कालं ररक्ष सः । ततो विस्रम्भमास्थाय तूष्णीमेतामुपैक्षत । तां शिखण्डिन्यबध्नात्तु बाला पितुरवज्ञया'** [आ.प.११०.२१–२] इत्यादि । सा माला स्वयम्बरे द्रौपद्याऽर्जुनायार्पितेति भावप्रकाशिकावचनं तु प्रक्षिप्तमिति भाति ॥ १०२ ॥ यस्मिन्

भूत्वा भविष्यति पुमानिति साऽम्बा ततोऽजनि ।
नाम्ना शिखण्डिनी तस्याः पुंवत् कर्म्माणि चाकरोत् ॥ १०४ ॥

तस्यै पाञ्चालराजः स दशार्ण्णाधिपतेः सुताम् ।
उद्वाहयामास सा तां[1] पुंवेषेणैव गूहिताम् ॥ १०५ ॥

अन्यत्र मातापित्रोस्तु न विज्ञातां बुबोध ह ।
धात्र्यै न्यवेदयत् साऽथ तत्पित्रे सा न्यवेदयत् ॥ १०६ ॥

स क्रुद्धः प्रेषयामास निहन्मि त्वां सबान्धवम् ।
इति पाञ्चालराजाय निर्ज्जगाम च सेनया ॥ १०७ ॥

विश्वस्य वाक्यं रुद्रस्य पुमानेवेति पार्षतः ।
प्रेषयामास धिग् बुद्धिर्भिन्ना ते बालवाक्यतः ॥ १०८ ॥

**ते बुद्धिः बालवाक्यतः भिन्ना । त्वया अविचार्य बालवाक्ये विश्वासः कृत इति यावत् ॥ १०८ ॥**

---

कालेऽम्बा तपश्चकार एतस्मिन्नेव काले । **'एतस्मिन्नेव काले तु द्रुपदो वै महीपतिः । अपत्यार्थे महाराज तोषयामास शङ्करम्'** [उ.प.१८८.३] इति च । उभयोः क्रिययोरेकफलप्रदानोन्मुखत्वं नाम काले विशेषं तुनाऽऽह । सः तपसा प्रसन्नः शम्भुरब्रवीत् ॥ १०३ ॥ यतोऽम्बा योषिदेवाजनि ततो नाम्ना शिखण्डिनी वस्तुतः । अथापि तां शिखण्डिन-माहुः । तथाहि भारते–**'जातकर्माणि सर्वाणि कारयामास पार्थिवः । पुंवद्विधानयुक्तानि शिखण्डीति च तां विदुः'** [उ.प.१८८.१९] इति । तां शिखण्डिनीं शिखण्डीत्येव जना विदुरित्यर्थः । शिखण्डः संयतः केशपाशः, शिखाबन्धो वा । **'शिखण्डौ तु शिखाबर्हौ'** इत्यभिधानम् । तद्वान् शिखण्डी । बर्हावतंसो वा । क्षत्रियकुमारा अलङ्कारार्थं बर्हं शिरसि धारयन्ति स्म ॥ १०४ ॥ **'हिरण्यवर्मेति नृपो योऽसौ दाशार्णकः स्मृतः । स च प्रादान्महीपालः कन्यां तस्मै शिखण्डिने'** [१८९.१०] इति । भाविशिखण्डिने इत्यर्थः । सा दशार्णाधिपतेः सुता । दश ऋणानि दुर्गभूमयो जलाधारा वा यत्र स दशार्ण इत्यभिदधति । **'ऋणदशाभ्यां वृद्धिर्वक्तव्या'** इति वार्त्तिकोक्त्या [अ.सू.६.१.८९] वृद्धिः । ऋणार्णम् । दशार्णम् । शिखण्डिनीं स्त्रियं बुबोध ह । का हि कन्या स्वभर्तुरपुंस्त्वं सिषहिषेतेति हेत्याह । ताव-त्पर्यन्तं मातापितृभ्यामन्यैर्न विज्ञाताम् । तुशब्देन काभिश्चिदन्तरङ्गदासीभिश्चान्यैः । सा कन्या धात्र्यै न्यवेदयत् । सा धात्री तस्याः पित्रे न्यवेदयत् ॥ १०५–६ ॥ निहन्मि त्वां सबान्धवमिति सन्देशं प्रेषयामास ॥१०७॥ पार्षतोऽपि

---

१. 'स ताम्'

अपरीक्षकस्य ते राष्ट्रं कथमित्येव नर्म्मकृत् ।
अथ भार्य्यासमेतं तं पितरं चिन्तयाऽऽकुलम् ॥ १०९ ॥

दृष्ट्वा शिखण्डिनी दुःखान्मन्निमित्तान्न नश्यतु ।
इति मत्वा वनायैव ययौ तत्र[1] च तुम्बुरुः ॥ ११० ॥

स्थूणाकर्ण्णाभिधेयस्तामपश्यद् दृढकर्ण्णतः ।
स तस्या अखिलं श्रुत्वा कृपां चक्रे महामनाः ॥ १११ ॥

स तस्यै स्वं वपुः प्रादात् तदीयं जगृहे तथा[2] ।
अंशेन पुंस्वभावार्त्थं[3] पूर्वदेहे समास्थितः ॥ ११२ ॥

पुंसां स्त्रीत्वं भवेत् क्वापि तथाऽप्यन्ते पुमान् भवेत् ।
स्त्रीणां नैव हि पुंस्त्वं स्याद् बलवत्कारणैरपि ॥ ११३ ॥

**अत एव नर्मकृत् हास्यकृत् ॥ १०९–१० ॥ स्थूणाकर्णोऽपश्यदिति निबन्धनान्तर उक्तम् । अत उक्तम्– स्थूणाकर्णेति ॥ १११–२ ॥ प्रसङ्गप्राप्तां वरादिना किं स्त्रियोऽपि पुमांसो भविष्यन्तीति जिज्ञासां पूरयन्**

---

पुमानेवेति सन्दिश्य दूतं प्रेषयामास । बालवाक्यत इति । बालिशवाक्यत इत्यर्थः ॥ १०८ ॥ कथं सुरक्षितं स्यादिति केवलं परिहासकृत् ॥ १०९ ॥ न नश्यतु सभार्यः पिता । पाञ्चालसेना वा । **'ततः सा चिन्तयामास मत्कृते दुःखिता-वुभौ । इमाविति ततश्चक्रे मतिं प्राणविमोचने'** [१९१.१८] इति च । अम्बोपाख्याने स्थूणाकर्णः शिखण्डिन्याः पुन्तनुं ददावित्युच्यते–**'निर्जगाम गृहं त्यक्त्वा गहनं निर्जनं वनम् । यक्षेणर्द्धिमता राजन् स्थूणाकर्णेन पालितम्'** [उ.प.१९१.१९] इत्यादिना । आदिपर्वणि च स तुम्बुरुरित्युच्यते–**'तत्र गन्धर्वराजानं तुम्बुरुं प्रियदर्शनम् । आराध-यितुमीहस्व सम्यक् परिचरस्व तम्'** [११०.२५] इत्यादिना । अत आह–तुम्बुरुः स्थूणाकर्णाभिधेय इति । कथं तदभिधानम्– दृढकर्णतः । तिष्ठतीति स्थूणा स्तम्भः । **'रास्ना-सास्ना-स्थूणा-वीणाः'** [द.पा.५.४७] इति निपातितं पदम् । स्थूणे इव दृढौ कर्णावस्य । पुंस्वभावार्थं पुमाकारदेहवत्त्वाय । तथाहि सम्भवे–**'शिखण्डिनमथो राजन् स्त्री-पूर्वं विद्धि राक्षसम्'** [आ.प.६८.१२६] इति । **'शुभं विद्धि राक्षसं तु शिखण्डिनम् ।'**[आश्र.प.३३.१५] इति चोपरि । अत्र राक्षसपदेन रक्षसामयमिति यक्ष उच्यते । सम्बन्धश्चोभयोः कुबेरनियम्यत्वम् । पुंव्यत्यासेन वा राक्षस इति यक्षस्तुम्बुरुरुच्यते । अत एव **'शुभं राक्षसम्'** इत्याह ॥ ११०–२ ॥ स्त्रीत्वं, स्त्रीदेहः । पुंस्त्वं पुन्देहः । देवतासु स्फुट-

---

१. **'ययौ यत्र'** २. **'तदा ।'** २. **'पुंस्त्वभावार्थम्'**

**अतः शिववरेऽप्येषा जज्ञे योषैव नान्यथा ।**
**पश्चात्[१] पुन्देहमपि सा प्रविवेशैव पुंयुतम्** ॥ ११४ ॥

**शिववरादम्बा पुमान् जाता किमिति जिज्ञासां च भावकथनेन पूरयति– पुंसामिति । अन्ते स्त्रीत्वप्राप्तिकारणावसाने ॥ ११३ ॥ पश्चात् गन्धर्वेण स्वदेहदानानन्तरम् ॥ ११४–८ ॥**

---

मेतत् । नहि ब्रह्मरुद्रादयः क्वचित् स्त्रीत्वं प्राप्नुवन्ति मुक्तावपि । नापि ब्रह्माणीपार्वत्यादयः क्वापि पुरुषत्वम् । अथापि पुंसां स्यादपि क्वचित् स्त्रीत्वम् । यथाऽग्निपुत्राः कृष्णभार्या अभवन् षोळशसहस्राणि शतं च । पुनरन्तेऽग्निपुत्रा एवाभवन् । नैवं स्त्रीणां क्वापि पुम्भावः श्रूयते । ननु श्रूयते वैवस्वतस्य मनोः पुत्री पुनः सुद्युम्नो नाम पुमान् बभूवेति । विपरीतं पठसि–सुद्युम्न एव प्रथमं होतृदोषात्, पश्चाच्छिवशापादिळा नाम महिळा बभूव । न त्विळा सुद्युम्नो बभूव । कथमेतज्ज्ञायते । भवदुक्तमेव विपरीतं किं न स्यात् । न स्यात् । पुराणानुगुणं वयं पठामः । त्वं किल पुराणविपरीतमपाठीः । तथाहि पौराणं वचनम्–**'यान्ति स्त्रीत्वं पुमांसोऽपि पापतः कामतोऽपि वा । न स्त्रियो यान्ति पुंस्त्वं तु स्वभावादेव याः स्त्रियः'** इत्यादि । पापतः शापादितः । यथा सुद्युम्नः, यथाऽर्जुनः । कामतः यथाऽग्निपुत्राः । नन्विदं सर्वमनुपपन्नम् । नाऽत्मनः पुंस्त्वं स्त्रीत्वं वा । देहस्यैव हि तत् । भ्रान्तोऽसि । देहस्यैव लिङ्गभेद इति वदता किमुक्तं स्यात् । जडेष्वेव पुंस्त्वं स्त्रीत्वं वा न चेतनेष्वित्युक्तं स्यात् । अद्भुतं भाषसे । तत् किल जडमुच्यते यत् न स्त्री भवति नापि पुमान् । चेतनेषु स्त्रीपुंसौ भवतः । त्वं किल विपरीतं भाषसे जडेष्वेव स्त्रीपुंसौ भवत इति । ननु स्तनभगादिमति शरीरे गतो जीवः स्त्रीत्युच्यते । श्मश्रुमेहनादिमति पुरुष इति । तद्देहधर्म एवायम् । ननु भोः, मनुष्यवार्तां वदसि, न जीववार्ताम् । वृक्षादिजीवेष्वव्याप्तं ते लक्षणम् । अपि च तदाकारस्य तत्त्वं केन गमकेन निरणायि? न हि जडेष्वाकारभेदेन लिङ्गभेदः सम्भवति । तेन जीवस्वरूपस्यैव तत्त्वं वक्तव्यमिति वस्तुस्थितिः । ननु सर्वमेतद् भस्मनि हुतम् । नैवं भगवान् बादरायणो मन्यते । तथाहि भारते–**'महेश्वरः– स्त्रीत्वं पुंस्त्वमिति प्राणे स्थितिर्नास्ति शुभेक्षणे । निर्विकारः सदैवाऽत्मा स्त्रीत्वं पुंस्त्वं नचाऽत्मनि । कर्मप्रकारेण तथा जात्याञात्यां प्रजायते । कृत्वा कर्म पुमान् स्त्री वा स्त्री पुमानपि जायते'** [अनु.प.२२६.३–५] इत्यादि । सत्यं पठ्यते । कथं तावता भवान् मन्यते भगवान् बादरायणो मन्यत इति । अनुपपन्नोऽयं पूर्वपक्षिणामाक्षेपः । कुतः? द्वाभ्यां कारणाभ्याम् । प्रथमं तावदस्य भारतवचनत्वमेव सन्दिग्धम् । नह्यौत्तरा एतमध्यायं पठन्ति । प्रक्षिप्तं ते मन्यन्ते । प्रायो भगवत्पादस्याप्येतत् सम्मतं भाति । यदि चायं प्रतनो मौलः पाठः, अथापि न दोषः । **'मोहशास्त्राणि कारय'** इति भगवताऽदिष्टेन किल शिवेनोक्तमेतत् । तेन दर्शनभाषया गुह्यभाषया चोक्तमिति न शिव एतन्मन्यते । नतरां बादरायणः । कथं तर्हि गुह्यभेदनम्? शृणु–**'स्त्रीप्राणः पुरुषप्राणः एकः स पृथगेव वा'** इति पार्वतीप्रश्नः । अस्यायमर्थः–यथा बिम्बरूपी भगवान् स्त्रीषु स्त्रीरूपः, पुंसु च पुंरूपः, तथा जीवकलाभिमानी प्राणोऽपि किं द्विरूप उत एकरूप इति । तदा शिव एवमाह– आत्मा जीवकलामानी प्राणो निर्विकारः, न तस्य लिङ्गद्वैविध्यमिति । तर्हि जीवेषु कथम्? शिखण्डिवत् पौरुषं कर्म कृत्वा अम्बा स्त्री भूत्वाऽपि पुरुषयोगेन पुमान्

---

१. **'पश्चाच्च पुन्तनुं सैषा प्रविवेशैव पुंयुताम्'** ।

नास्या देहः पुंस्त्वमाप नच पुंसाऽनधिष्ठिते ।
पुन्देहे न्यवसत् साऽथ गन्धर्वेण त्वधिष्ठितम्[१] ॥ ११५ ॥

गान्धर्वं देहमाविश्य स्वकीयं भवनं ययौ ।
तस्यास्तद्देहसादृश्यं गन्धर्वस्य प्रसादतः ॥ ११६ ॥

प्राप गन्धर्वदेहोऽपि तया पश्चादधिष्ठितः ।
श्वो देहि मम देहं मे स्वं च देहं समाविश ॥ ११७ ॥

इत्युक्त्वा स तु गन्धर्वः कन्यादेहं समास्थितः ।
उवासैव वने तस्मिन् धनदस्तत्र चाऽगमत् ॥ ११८ ॥

अप्रत्युत्थायिनं तन्तुलीयमानं विलज्जया ।
शशाप धनदो देवश्चिरमित्थं भवेति तम् ॥ ११९ ॥

यदा युद्धे मृतिं याति सा कन्या पुन्तनुस्थिता ।
तदा पुंस्त्वं पुनर्य्यासि चपलत्वादितीरितः ॥ १२० ॥

**विलज्जया तन्तुलीयमानं तन्तु(षु) गुल्मेषु लीयमानं निरीक्ष्य । 'तन्तुः स्तम्बे तथोर्णायां सत्रे सङ्घे च सन्ततौ' इत्यभिधानम् ॥ ११९–२३ ॥**

---

जायते । अग्निपुत्रादयस्तु मनसा स्त्रीभावं कृत्वा, तपआदिकर्मणा प्रारब्धकर्मणा वा प्रमदा अभवन्निति भारतवचनार्थ इति न कश्चित् क्षुद्रोपद्रवः । तदेतदाह– नास्याः । न शिखण्डिन्या देहः पुरुषदेहसमानाकारतामाप । नच गन्धर्वानधिष्ठिते, अथच केनापि पुरुषेणानधिष्ठिते अथापि पुरुषदेहसमानाकारे देहे सा न्यवसत् । किन्तु गन्धर्वाधिष्ठितं पुन्देहं सा प्रविवेश ॥ ११३–५ ॥ कयाऽपि स्त्रियाऽनधिष्ठितं तस्याः स्त्र्याकारं देहं गन्धर्व आविवेश । ननु तर्हि गन्धर्वशरीरेणाऽगतां तां कथं जनाः परिचिक्युः? आह– तया पश्चादधिष्ठितोऽपि गन्धर्वदेहः गन्धर्वस्य प्रसादतस्तस्याः पूर्वदेहसादृश्यमापेति ॥ ११६–८ ॥ पुरुषोऽपि स्त्रीदेहगत इति विलक्षणया लज्जया । क्वापि निलीयमानं अत एव अप्रत्युत्थायिनं तं तु धनदः आगमत् अवगतवान् । अवगत्य च तं यक्षैः आगमत् आगमयत् । स्वातन्त्र्येऽन्तर्णीतणिच् ।

---

१. **'त्वधिष्ठिते ।'**

तथाऽवसत् स गन्धर्वः कन्या पित्रोरशेषतः ।
कथयामासानुभूतं तौ भृशं मुदमापतुः ॥ १२१ ॥

परीक्ष्य तामुपायैश्च[1] श्वशुरो लज्जितो ययौ ।
श्वोभूते सा तु गन्धर्वं प्राप्य तद्वचनात् पुनः ॥ १२२ ॥

ययौ तेनैव देहेन पुंस्त्वमेव समाश्रिता ।
स शिखण्डी नामतोऽभूदस्त्रशस्त्रप्रतापवान् ॥ १२३ ॥

विचित्रवीर्य्यः प्रमदाद्वयं तत् सम्प्राप्य रेमेऽब्दगणान् सुसक्तः ।
तत्याज देहं च स यक्ष्मणाऽर्द्दितस्ततोऽस्य माताऽस्मरदाशु कृष्णम् ॥ १२४ ॥

आविर्बभूवाऽशु जगज्जनित्रो जनार्द्दनो जन्मजराभयापहः ।
समस्तविज्ञानतनुः सुखार्ण्णवः सम्पूजयामास च तं जनित्री ॥ १२५ ॥

**यक्ष्मणा क्षयरोगेणार्दितः पीडितः ॥ १२४–३२ ॥**

---

बहिःक्रुद्धोऽपि शिखण्डिन्याः पुन्देहदानेन देवकार्यं कृतवानित्यन्तःस्नेहवानिति च णिजर्थः । अतस्तुना तं विशेषयति वस्तुतोऽयमकृतापराध इति । आगमय्य तं शशाप च । तेन **'तं तु'** इति, **'शशाप तम्'** इति च तच्छब्दावृत्त्या न पौनरुक्त्यम् । चपलत्वात्, अस्य चापलस्य फलतया दीर्घकालं स्त्रीदेहे स्थित्वा शिखण्डिवधानन्तरं पुंस्त्वं यासि । शिववरस्य सफलत्वाय त्र्यम्बकसखः कुबेर एवं शशाप । एवं शापेन तुम्बुरुः महत् पुण्यमेवाऽप । **'तस्मादद्यप्रभृत्येव स्त्री त्वं सा पुरुषस्तथा ।...शिखण्डिनि हते यक्षाः स्वं रूपं प्रतिपत्स्यते'** [उ.प.१९२.४७;५०] इति च भारते । **'तन्तुषु गुल्मेषु लीयमानम्'** इति च गमनिकान्तरं प्राचीनटीकासु ॥ ११९–२१ ॥ पुम्परीक्षाकुशलाभिर्दासीभिः, पौंस्नाभिव्यञ्जकैरुपायैः परीक्षां कारयित्वा । तद्वचनात् 'अनेनैव पुन्देहेन चिरं भव' इति गन्धर्ववचनात् ॥ १२२–३ ॥ सुसक्तः अतिसक्तः । अत एव यक्ष्मणाऽर्दितः । **'ताभ्यां सह समाः सप्त विहरन् पृथिवीपतिः । विचित्रवीर्यस्तरुणो यक्ष्मणा समगृह्यत'** [आ.प.१११–६] इति च । ततः मृतस्य राज्ञः संस्कारानन्तरम्, भीष्मेण च राज्यस्वीकारनिराकरणानन्तरम् । माता विचित्रवीर्यस्य च कृष्णस्य च ॥ १२४ ॥ जनार्दनपदं निर्वक्ति–जन्मजराभयापहः । जनं जननमर्दयति नाशयतीति

---

१. **'–पायैस्तु श्व–'**

**तं भीष्मपूर्वैः परमादरार्च्चितं स्वभिष्टुतं चावददस्य माता ।**
**पुत्रौ मृतौ मे नतु राज्यमैच्छद् भीष्मो मया नितरामर्थितोऽपि ॥ १२६ ॥**

**क्षेत्रे ततो[1] भ्रातुरपत्यमुत्तममुत्पादयास्मत्परमादरार्त्थितः ।**
**इतीरितः प्रणतश्चाप्यभिष्टुतो भीष्मादिभिश्चाऽह जगद्गुरुर्वचः ॥ १२७ ॥**

**ऋते रमां जातु [2]ममाङ्गयोगयोग्याऽङ्गना नैव सुरालयेऽपि ।**
**तथाऽपि ते वाक्यमहं करिष्ये सांवत्सरं सा चरतु व्रतं च[3] ॥ १२८ ॥**

**सा पूतदेहाऽथ च वैष्णवव्रतान्मत्तः समाप्नोतु सुतं वरिष्ठम् ।**
**इतीरिते राष्ट्रमुपैति नाशमिति ब्रुवन्तीं पुनराह वाक्यम् ॥ १२९ ॥**

**सौम्यस्वरूपोऽप्यतिभीषणं मृषा तच्चक्षुषो रूपमहं प्रदर्शये ।**
**सहेत सा तद् यदि पुत्रकोऽस्या भवेद् गुणाढ्यो बलवीर्य्ययुक्तः ॥ १३० ॥**

---

जनार्दनः । यो जायते स जीर्यति । जीर्यन् म्रियते । मृतः पुनर्जायते । अतो जनार्दनो जरादिभयार्दनोऽपि भवति । संसारे जनं जन्मजरादिनाऽर्दयति, अन्ते च मोक्षदानेन जन्मजरादिभयमपहन्तीति वा । जगज्जनित्रस्यापि जनित्री जनयित्री लोकदृष्ट्या । अत एवाक्षरलोपेन जनित्रीत्याह । **'जनिता मन्त्रे'** [अ.सू.६.४.५३] इति पाणिनिः । सम्पूजयामास । स्वस्य जनित्रीत्वं व्याजमात्रमिति जानन्ती, तस्य जगज्जनित्रत्वं च जानन्ती सम्यक् विधिवत् पूजयामास । ज्ञानपूर्वकत्वमेव हि सम्यक्त्वं नाम पूजायाः । **'पूजितो मन्त्रपूर्वं तु विधिवत् प्रीतिमाप सः'** [११४.५१] इति च ॥१२५॥ परमादरः सर्वाधिका भक्तिः । सुमनसामभिमता, सुमनसा सुष्ठु अभिहिता च स्तुतिः स्वभिष्टुतिः ॥ १२६ ॥ भ्रातुर्विचित्रवीर्यस्य । पितृभेदेऽपि मातुरैक्यात् । क्षेत्रे भार्यायाम् । अस्माभिः परमादरेण प्रार्थितः । अपत्यमुत्पादय इति मात्रेरितः । भीष्मादिभिरीरितश्च प्रणतश्चाभिष्टुतश्च ॥ १२७ ॥ अङ्गयोगो व्यवायाख्यः । तथाऽपि ते वाक्यं करिष्ये पालयामि । सा विचित्रवीर्यस्य प्रथमभार्याऽम्बिका, सम्यग् वत्सान् ब्रह्मादीन् रमयतीति संवत्सरो विष्णुः, तद्विषयं संवत्सरपर्यन्तं व्रतं चरतु ॥ १२८ ॥ वैष्णवं व्रतमनुष्ठाय पूतदेहाऽथ पूतत्वादेव रमाविष्टा मत्तः सुतं समाप्नोतु ॥ १२९ ॥ रूपं न मिथ्या । तद्दर्शनमपि न मिथ्या । अथापि, अकुप्यन्नपि कुप्यन्निव, मृषा वितथमेव प्रदर्शये स्वेच्छया, नट इव नाटके । वितथदर्शनमेव हि प्रदर्शनम् ॥ १३० ॥

---

१. **'तव भ्रातु–'** २. **'ममाङ्गसङ्गयोग्या–'** ३. **'व्रतं मे ।'**

**इतीरितेऽस्त्वित्युदितस्तयाऽगमत् कृष्णोऽम्बिकां सा तु भिया न्यमीलयत्[१] ।**
**अभूच्च तस्यां धृतराष्ट्रनामको गन्धर्वराट् पवनावेशयुक्तः ॥ १३१ ॥**

**स मारुतावेशबलाद्[२] बलाधिको बभूव राजा धृतराष्ट्रनामा ।**
**अदाद् वरं चास्य बलाधिकत्वं कृष्णोऽन्ध आसीत् स तु मातृदोषतः ॥ १३२ ॥**

**ज्ञात्वा तमन्धं पुनरेव कृष्णं माताऽब्रवीज्जनयान्यं गुणाढ्यम् ।**
**अम्बालिकायामिति तत् तथाऽकरोद् भयात्तु[३] सा पाण्डुरभून्मृषादृक् ॥ १३३ ॥**

**परावहो नाम मरुत् ततोऽभवद् वर्ण्णेन पाण्डुः स हि नामतश्च ।**
**स चाऽस वीर्य्याधिक एव वायोरावेशतः सर्वशस्त्रास्त्रवेत्ता ॥ १३४ ॥**

**तस्मै तथा बलवीर्य्याधिकत्ववरं[४] प्रादात् कृष्ण एवाथ पाण्डुम् ।**
**विज्ञाय तं प्राह पुनश्च माता निर्द्दोषमन्यं जनयोत्तमं सुतम् ॥ १३५ ॥**

**मृषादृक् अविद्यमानं पश्यन्ती ॥ १३३–७ ॥**

---

भिया चक्षुषी न्यमीलयत् । धृतराष्ट्रनामक इति । **'गन्धर्वराजो यो धीमान् धृतराष्ट्र इति श्रुतः । स एव मानुषे लोके धृतराष्ट्रः पतिस्तव'** [आश्र.प.३३.८] इति च व्यासवचनं गान्धारीं प्रति । ननु हंसनामा स इति च पठन्ति। तथाहि सम्भवे–**'अरिष्टायास्तु यः पुत्रो हंस इत्यभिविश्रुतः । स गन्धर्वपतिर्जज्ञे कुरुवंशविवर्धनः । धृतराष्ट्र इति ख्यातः कृष्णद्वैपायनात्मजः'**[आ.प.६८.८३–४] इति । इयमत्र व्यवस्था । वस्तुतः स धृतराष्ट्रनामा । अत एव हंसनामा । धृतराष्ट्र इति हि हंसविशेषस्य असितचञ्चुचरणस्य नाम । तज्जातीया हंसा धार्तराष्ट्रा इत्युच्यन्ते ॥ १३१ ॥ अदादिति । **'नागायुतसमप्राणो विद्वान् राजर्षिसत्तमः ।....किन्तु मातुः स वैगुण्यादन्ध एव भविष्यति'**[११५.१३] इति च ॥ १३२ ॥ व्यासस्यातिभीषणं मृषारूपं पश्यन्ती भयात्तु भयादेव विवर्णा रक्तच्छायाहीनेव पाण्डुवर्णाऽभूत् । मृषादृक् च । मृषा वृथैव, न तु भगवद्दिदृक्षया, उग्रं रूपं दृष्ट्वाऽपि मृषा विवृतनयना, माऽन्धस्तनयो ममापि भूदिति । पाण्डुः, रक्तच्छायाहीना पाण्डरवर्णाऽभूदित्यर्थः । **'पाण्डुस्तु पीतभागार्धः केतकीधूलिसन्निभः'** इत्यभिधानम् । **'पाण्डुः कुन्तीपतौ सिते'** इति च ॥ १३३ ॥ **'मरुतां तु गणाद् वीरः सर्वशस्त्रभृतां वरः । पाण्डुर्जज्ञे महाबाहुः–'**[६८.८४] इत्येतद् विवृणोति– परावहो नाम । **'पाण्डुं मरुद्गणाद् विद्धि विशिष्टतममच्युतम्'**[आश्र.प.३३.९] इति च । मुख्यवायोरावेशतः ॥ १३४ ॥ पाण्डुं वर्णतः पाण्डुतादोषग्रस्तं विज्ञाय ॥ १३५ ॥

---

१. **'तु भयान्यमी–'** २. **'–वेशवशाद् बला–'** ३. **'भयाच्च सा'** ४. **'–धिकत्वं वरम्'**

**उक्त्वेति कृष्णं पुनरेव च स्नुषामाह त्वयाऽक्ष्णोर्हि निमीलनं पुरा ।**
**कृतं ततस्ते सुत आस चान्धस्ततः पुनः कृष्णमुपास्व भक्तितः ॥ १३६ ॥**

**इतीरिताऽप्यस्य हि मायया सा भीता भुजिष्यां कुमतिर्न्ययोजयत् ।**
**सा तं परानन्दतनुं गुणार्ण्णवं सम्प्राप्य भक्त्या परयैव रेमे ॥ १३७ ॥**

**तस्यां स देवोऽजनि धर्म्मराजो माण्डव्यशापाद् य उवाह शूद्रताम् ।**
**वसिष्ठसाम्यं समभीप्समानं [१]प्रच्यावयन्निच्छया शापमाप ॥ १३८ ॥**

**(माण्डव्यशापात् सः शूद्रतां) उवाह । वसिष्ठसाम्यं समभीप्समानं माण्डव्यं प्रच्यावयन् वसिष्ठसाम्यप्राप्त्यर्थे कृततपसः तं मोचयन् स्वयं शापग्रहणेन तं तपोबलहीनं कुर्वन्निति भावः ॥ १३८ ॥**

---

यतोऽक्ष्णोर्निमीलनं कृतं ततस्ते सुतश्च निमीलिताक्षोऽन्ध आस । यतस्ते सुतोऽन्ध आस । ततः अनन्धजननीत्वाय पुनः कृष्णमुपास्व ॥ १३६ ॥ भुज्यत इति भुजिष्या दासी । **'रुचि-भुजिभ्यां किष्यन्'** [८.१५] इति हि दशपादिका । अतो व्यासेनापि भुज्यतामिति तां न्ययोजयत् कुमतिः । काऽन्या स्यात् तस्या अप्यधिका कुमतिः या स्वतः प्राप्तं भगवत्समागमभाग्यं तत्याज दुर्भगा । सम्प्राप्य सङ्गमप्रमदेन सहावाप्य ॥ १३७ ॥ देवोऽजनि धर्मराजः । **'धर्मस्यांशोऽभवत् क्षत्ता'** [३३.९] इति चाऽश्रमवासिके । **'धर्मात्तु सुमहाभागं पुत्रं पुत्रवतां वरम् । विदुरं विद्धि तं लोके जातं बुद्धिमतां वरम्'** [आ.प.६८.८६] इति च सम्भवे । माण्डव्यशापादिति । अस्ति पुरा माण्डव्य इति कश्चिद् ब्राह्मणः । स क्वचिदाश्रमपदे मौनी महातपास्तस्थौ । कदाचिद् रक्षाभटैरनुसृता दस्यवस्तमावसथं जग्मुर्यत्र स मुनिरुवास । राजभटानां भयात् लोप्त्रं तत्र निक्षिप्य ते क्वापि निलीना बभूवुः । ततो राजभटा आगत्य तस्करानपश्यन्तस्तमृषिं पप्रच्छुः कतरेण पथा याता दस्यव इति । स तु धृतमौनव्रतो न किञ्चिदुवाच । ततो विचिन्वाना भटास्तत्रैव ददृशुस्तद् द्रव्यं तांश्च लीनांश्चोरान् । ततस्तस्मिन् मुनौ तेषां शङ्का समजनि । तत एनं सार्धं दस्युभी राज्ञे न्यवेदयन् । स राजाऽविमृश्यकारी तस्य मुनेर्वधमादिदेश । स च राजभटैः शूले प्रोतः । स महातपा महता कालेन शूले प्रोतोऽपि निराहारोऽपि मरणं नाभ्यपद्यत । विदिततत्तपःप्रभावो राजा तं प्रसादयामास । अवातारयच्च शूलाग्रात् । तदा छिन्नं शूलमूलं तत्कण्ठपार्श्वे ललाग । तेनाऽणिमाण्डव्य इति लोकेषु प्रथामाप । स धर्मराजं गत्वा पप्रच्छ–'कस्य दुष्कृतस्य फलमिदं शूलारोपणम्' इति । तदा धर्म उवाच–**'पतङ्गिकानां पुच्छेषु त्वयेषीका निवेशिता । तस्यैतत् फलम्'** इति । माण्डव्यः पप्रच्छ– 'कस्मिन् वयसि' इति । 'बालभावे' इत्याह धर्मराजः । तदा कुपितो मुनिरुवाच–'आ चतुर्दशं वर्षं न कर्मलेपः । अथापि त्वया

---

१. अत्र मूलादर्शे प्रथमं **'प्रच्यावयन्'** इत्येव विलिख्य पश्चात् **'प्रा–'** इति दीर्घ उपक्षिप्त इव भाति । तदपि नातिस्फुटम् । यदि तदनुसारेण **'प्राच्यावयन्'** इत्येव प्रतनः पाठस्तदा **'वास्तवं प्रच्छाद्य शापस्वीकारव्याजेन आशु च्यावयन्'** इति व्याख्येयम् ।

अयोग्यसम्प्राप्तिकृतप्रयत्नदोषात् समारोपितमेव शूले ।
चोरैर्हृतेऽर्थेऽपितु चोरबुद्ध्या मक्षीवधादित्यवदद् यमस्तम् ॥ १३९ ॥

नासत्यता तस्य च तत्र हेतुतः शापं गृहीतुं[१] स तथैव चोक्त्वा ।
अवाप शूद्रत्वमथास्य नाम चक्रे कृष्णः सर्ववित्त्वं तथाऽदात् ॥ १४० ॥

**शापप्रकारमेवाह–अयोग्येत्यादिना । अयोग्यसम्प्राप्तिकृतप्रयत्नदोषादेव । अयोगव्यवच्छेदक एवकारः । अर्थे धने चोरैर्हृते सत्यपि चोरबुद्ध्या, असम्प्रज्ञातसमाधिस्थस्यास्य पुरस्ताद् धनं निधाय चोरेषु पलायितेषु धनस्वामिभिर्धनमपहृत्येदानीं पलायितुमशक्तो निमीलिताक्षो वर्ततेऽयमेव चोर इति बुद्ध्या वधार्होऽयमिति मत्वा शूले समारोपितम्, कालान्तरे कुतो दोषान्मम शूलप्राप्तिरिति तेन पृष्टः सन् यमो मक्षीवधात्, मक्षिकावधाद् दोषात्, प्राक् त्वया मक्षिकाः कण्टकाग्रं समारोप्य हताः तस्माद् दोषात् तव शूलप्राप्तिरित्यवदतिति सम्बन्धः । एवं (कारणोक्त्य)नन्तरं कुपितेन माण्डव्येन मिथ्यावादी त्वं शूद्रो भवेति यमः शप्त इति भावः ॥ १३९ ॥ ननु निमित्तद्वये सम्भवति महद्विहायाल्पं कारणं कस्मादुक्तवानित्यत आह– हेतुत इति[२] । सम्भावितेन बलवत्कारणोक्तौ तस्य कोपानुदयात् यत्किञ्चिदल्पकारणोक्त्या कुपितोऽयं शपेत् ततश्च तपोहानिर्भवेदिति हेतुतः शापं गृहीतुं तथैवोक्त्वा, मक्षीवधादित्येवोक्त्वा, शूद्रत्वमवाप, तेन शप्त इति भावः ॥ १४० ॥**

---

मयि दण्डो धृतः । **शूद्रयोनावतो धर्म मानुषः सम्भविष्यसि'** इति । तस्माच्छापाच्छूद्रतामुवाहेति । यमस्य शूद्रता नाम शूद्रयोनौ जननमेव । नतु शूद्रस्वभावता । माण्डव्यस्य तपोभूमिर्हरिद्वारम्, अपहृतं च लोप्त्रमश्वरूपमिति पाद्मे– **'चौरेणापहृतश्चाश्व इत्येवं संवदन्ति हि । निरीक्षमाणास्ते सर्वे हरिद्वारं समागताः । ऋषिस्तत्र तु माण्डव्यस्तपस्तपति नित्यशः । ध्यानेन च समायुक्तो दृष्टोऽसौ तैर्भटैस्तदा'** [उ. खं. १४१.२१–३] इत्यादि । ननूत्तमस्य कथमधमाच्छापः? आह– इच्छया शापमाप । तदपि कुतः? वसिष्ठसाम्यं समग्रमभ्यर्ण एवेप्समानं तं तस्मात् तपसश्च्यावयितुम् । प्रच्यावयन् वस्तुस्थितिं प्रच्छाद्य च्यावयन् । उत्तमापराधाद्धि महान्तश्च्यवन्ते । मक्षतीति मक्षी पतङ्गिका । मक्ष सङ्घाते । मधुरं क्षियतीति च । क्षि निवासगत्योः । 'ಜಿಜ್ಞು' इति भाषायाम् ॥ १३८–९ ॥ तर्हि यमः किमसत्यमेवाऽह? नेत्याह– नासत्यता तस्य तद्वचनस्य । कुतः? तस्य च मक्षीवधस्य च तत्र शूलारोपे हेतुत्वात् । शापं गृहीतुमेव तथोक्त्वा स च धर्मराजोऽपि शूद्रत्वमवाप । 'मातुर्जातिः' इति लोकसम्प्रदायात् । वर्णतो न शूद्रः । अथापि जात्या शूद्रत्वमवाप । ननु तर्हि तेनैव न्यायेन कृष्णद्वैपायनोऽपि शूद्रः स्यात्? न स्यात् । अयोनिजा हि सत्यवती । तस्मान्न तस्याः शूद्रता । वस्तुतः क्षत्रवीर्यजा हि सा । क्षत्रियपत्नी च । अथापि न साक्षात् क्षत्रयोनिजेति न क्षत्रियत्वमपि । देवयोनिर्हि सा मूलतो बभूव । तेन

---

१. 'ग्रहीतुम्'

२. **'शापं गृहीतुमिति'** इति प्रतीकग्रहणमुचितम् ।

**विद्यारतेर्विदुरो नाम चायं भविष्यति ज्ञानबलोपपन्नः ।**
**महाधनुर्बाहुबलाधिकश्च सुनीतिमानित्यवदत् स कृष्णः ॥ १४१ ॥**

**ज्ञात्वाऽस्य शूद्रत्वमथास्य माता पुनश्च कृष्णं प्रणता ययाचे ।**
**अम्बालिकायां जनयान्यमित्यथो नैच्छत् स कृष्णोऽभवदप्यदृश्यः ॥ १४२ ॥**

**योग्यानि कर्म्माणि ततस्तु तेषां चकार भीष्मो मुनिभिर्य्यथावत् ।**
**विद्याः समस्ता अददाच्च कृष्णस्तेषां पाण्डोरस्त्रशस्त्राणि भीष्मः ॥ १४३ ॥**

**ते सर्वविद्याप्रवरा बभूवुर्विशेषतो विदुरः सर्ववेत्ता ।**
**पाण्डुः समस्तास्त्रविदेकवीरो जिगाय पृथ्वीमखिलां धनुर्द्धरः ॥ १४४ ॥**

**भविष्यतीत्येतत् ज्ञानबलोपपन्न इत्यनेन सम्बध्यते ॥ १४१–५ ॥**

---

यदा पराशरो बुभुजे तदा ब्राह्मणी । यदा शन्तनुभार्या तदा क्षत्रिया । यदा दाशराजतनया तदा शूद्रस्त्रीति सर्ववर्णा सा । विदुरस्तु भुजिष्यायामेव जात इति युक्तं शूद्रजातित्वम् । अत एव **'शूद्रयोनौ'** इत्युक्तं भारते । ननु कथं गृहीतुम्? ग्रहीतुमिति वक्तव्यम् । गृहीतुमित्याह । तदिदं क्वचित्क्वचित् सम्प्रसारणं प्रतनः सम्प्रदायः । तद्यथा–ग्रहीतुमिति वक्तव्ये गृहीतुमित्याचक्षते । स्रजिष्णुरिति वक्तव्ये सृजिष्णुरित्याचक्षते । द्रढयतीति वक्तव्ये दृढयतीत्याचक्षते । **'आशिष्ठो दृढिष्ठः'** इति श्रुतिः । एतेन ज्ञायते प्राचीनसंस्कृते रूपद्वयमपि स्वीकृतमासीत्–ग्रहीतुं गृहीतुमिति, स्रजिष्णुः सृजिष्णुरिति, द्रढयति दृढयतीति । अपि चाऽक्षरलोपेनार्थविशेषगर्भिणी चेयमव्यययुवतिर्भवति–शापं गृहीत्वा भूमौ भवितुम्, तत्र मानुषो भवितुम्, तत्रापि शूद्रयोनौ भवितुमित्यादि ॥ १४० ॥ उत्कृष्टा विद् विदुः । तत्वविद्या । तत्र रमत इति विदुरः । विदुरित्येव वा विद्या । यथा शकुरिति शक्तिः । मुकुरिति मुक्तिः । विदि विद्यायां रत इति विदिर एव वा विदुरः । तृतीयोऽतिशये । वैयाकरणास्तु वेदितुं शीलमस्येति विदेः कुरच्प्रत्ययेन रूपं निष्पादयन्ति–**'विदि–भिदि–च्छिदेः कुरच्'** [अ.सू.३.२.१६२] इति । **'विदादिभ्यो धातुभ्यस्तच्छीलादिषु कर्तृषु कुरच् प्रत्ययो भवति । विदुरः पण्डितः'** इति हि जयादित्यः । अस्तु तदपि । न नो हानिः । व्यर्थाक्षरत्वं तु तेषां दोषः । विदुरो नाम च विदुर इति प्रसिद्धः । नामतश्च अर्थतश्चायं विदुर इत्यर्थे चकारः । ज्ञानमेवाऽत्मबलम् । ज्ञानबलमान्तरम् । बाहुबलं बाह्यम् । **'यो हि धर्मः स विदुरो विदुरो यः स पाण्डवः'**[आश्र.प.३०.२१] इति च ॥ १४१ ॥ अथ पुत्रत्रयजननानन्तरमपि । अथो तस्मादेव भुजिष्याप्रेषणेन भगवदङ्गसङ्गनिराकरणादेव हेतोः । उभयोरपि राज्योः सकृत् प्राप्तापत्यत्वात्, स्वाङ्गसङ्गेन भीतत्वाच्च अथो पुनरपि जननं नैच्छदिति च ॥ १४२ ॥ चकार । स्नेहादन्तर्णीतणिच् । पितृवत् प्रीत्या कारया-मासेत्यर्थः । पाण्डोरस्त्रशस्त्राणि भीष्मः अददात् ॥ १४३ ॥ एकवीरः तदानीं कुरुवीरेषु प्रथमतया परिगणित इत्यर्थः ।

गवद्गणादास[१] तथैव सूतात् समस्तगन्धर्वपतिः स तुम्बुरुः ।
य उद्वहो नाम मरुत् तदंशयुक्तो वशी सञ्जयनामधेयः ॥ १४५ ॥

विचित्रवीर्य्यस्य स सूतपुत्रः सखा च तेषामभवत् प्रियश्च ।
समस्तविन्मतिमान् व्यासशिष्यो विशेषतो धृतराष्ट्रानुवर्त्ती ॥ १४६ ॥

गान्धारराजस्य सुतामुवाह गान्धारिनाम्नीं सुबलस्य राजा ।
ज्येष्ठो ज्येष्ठां शकुनेर्द्वापरस्य नास्तिक्यरूपस्य कुकर्म्महेतोः ॥ १४७ ॥

**विचित्रवीर्यस्य सूतपुत्र इति । विचित्रवीर्यस्य यः सूतः गवद्गणः तस्य पुत्र इति भावः । मतिमान् विवेकवान् ॥ १४६ ॥ ज्येष्ठो राजा सुबलस्य सुतामुवाह । कीदृशीम्? नास्तिक्यरूपस्य नास्तिक्याभिमानिनः द्वापरस्य पूर्वं द्वापराख्यदैत्यस्य, कुकर्महेतोः कुत्सितकर्मणां कारणस्य, शकुनेर्ज्येष्ठामिति योजना ॥ १४७ ॥**

---

**'एकोऽन्यार्थे प्रधाने च प्रथमे केवले तथा । साधारणे समानेऽल्पे सङ्ख्यायां च प्रयुज्यते'** इत्यष्टस्वर्थेष्वेकशब्दमभिदधति । पृथ्वीमखिलामिति प्रायोवादः ॥ १४४ ॥ विचित्रवीर्यस्य सूतात् गवद्गणात् । गन्धर्ववान् गवान् भवति । अश्वपाल इत्यर्थः । तेषु गणनीयो गवद्गणः । अपिच भगवद्गणो गवद्गणो भवति । भगवन्तमयं स्वामित्वेन गणयति स्वस्वामिनि वा भगवन्तं गणयतीति । रथचालने वेगवान् वा गवान् । तेषु गणनीयोऽयम् । तमेनं भगवद्गणं वेगवद्गणं वा सन्तं गवद्गणं मन्यन्ते परोक्षप्रियाः । नित्यं रथे गमनवन्तश्च गवन्त उच्यन्ते । तेषु प्रमुखतया गणनीयोऽयमिति वा गवद्गणः । तस्य पुत्रः गावद्गणिः सञ्जयः । गवल्गणः गावल्गणिरिति च पाश्चात्यं रूपम् । यथा उद्वणं पश्चादुल्बणं बभूव । **'वर्णागमो वर्णविपर्ययश्च द्वौ चापरौ वर्णविकारनाशौ । धातोस्तदर्थातिशयेन योगस्तदुच्यते पञ्चविधं निरुक्तम्'** इति हि नैरुक्ताः । वशी वशीकृतेन्द्रियः ॥ १४५ ॥ विचित्रवीर्यस्य यः सूतो गवद्गणस्तस्य पुत्रः । तेषां धृतराष्ट्रपाण्डुविदुराणाम् । समस्तशास्त्रवित् । शास्त्रविदोऽपि बुद्धिहीना भवन्ति । कुबुद्धयोऽपि भवन्ति । अशास्त्रविदोऽपि सुबुद्धयो भवन्ति । अत आह– मतिमानिति । यस्य मतिः शास्त्रानुगुणमेवोहते, यस्य मतिः प्रसङ्गानुगुणं स्फुरन्ती प्रतिभानवती भवति स मतिमान् । समस्तवित् सर्वज्ञ इति वा । यल्लोकेऽस्ति, यच्च शास्त्रेषु, या च लोकनीतिः तत्सर्वमयं वेद । व्यासशिष्यत्वात् । त्रयाणामपि प्रियः । अथापि ज्येष्ठ इति, राजपीठग इति, अन्ध इत्यनुकम्पया च, विशेषतो धृतराष्ट्रानुवर्ती ॥ १४६ ॥ गान्धारराजस्य सुबलस्य ज्येष्ठां सुतां ज्येष्ठो राजा धृतराष्ट्रः व्युवाह । गन्धाराणां राज गान्धारः । गान्धारस्यापत्यं स्त्री गान्धारी । **'गान्धारिरिति क्षत्रियवचनो जनपदशब्दः । गान्धारेरपत्यं स्त्री गान्धारी'** इति वैयाकरणाः । गान्धारिनाम्नीमिति सञ्ज्ञात्वाद्ध्रस्व इत्युक्तम् । शकुनेर्ज्येष्ठां भगिनीम्, द्वापरयुगमानिनः । **'द्वावेव धर्मपादौ परं यस्मिन् युगे प्राप्ते ततः क्रमादपचयोऽन्त एकोऽवशिष्यते'** तद् द्वापरम् । द्वाभ्यां कृतत्रेताभ्यां परमिति च द्वापरम् । द्वावेव

---

१. **'गवल्गणादास'**

**शूरस्य पुत्री गुणशीलरूपयुक्ता दत्ता सख्युरेव स्वपित्रा ।**
**नाम्ना पृथा कुन्तिभोजस्य तेन कुन्ती भार्य्या पूर्वदेहेऽपि पाण्डोः ॥ १४८ ॥**

**कूर्म्मश्च नाम्ना मरुदेव कुन्तिभोजोऽथैनां वर्द्धयामास सम्यक् ।**
**तत्राऽगमच्छङ्करांशोऽतिकोपो दुर्वासास्तं प्राह मां वासयेति ॥ १४९ ॥**

**तमाह राजा यदि कन्यकायाः क्षमिष्यसे शक्तितः कर्म्म कर्त्र्याः ।**
**सुखं वसेत्योमिति तेन चोक्ते शुश्रूषणायाऽदिशदाशु कुन्तीम् ॥ १५० ॥**

**सख्युः कुन्तिभोजस्य । तेन कुन्तिभोजस्य दत्तत्वेन निमित्तेन ॥ १४८ ॥ वासय, चातुर्मास्यमिति शेषः ॥ १४९–१६० ॥**

---

परमौ यस्य स तदभिमानी द्वापरः । कौ द्वौ? नास्तिक्यं कुकर्म च । तदाह– नास्तिक्यरूपस्य कुकर्महेतोः । नास्तिक्यमेव यस्य स्वरूपधर्मः, यश्च लोके नास्तिक्यं रूपयति स नास्तिक्यरूपः । रूप रूपक्रियायाम् । रूपस्य करणं रूपक्रिया । वर्धनमित्येतत् । **'शकुनिं द्वापरं नृपम्'** [आश्र.प.३३.१०] इति पुत्रदर्शने । **'मतिस्तु सुबलात्मजा'** [आ.प. ६८.१६०] इति सम्भवे ॥ १४७ ॥ शूरस्य वसुदेवजनकस्य शूरसेनस्य पुत्री नाम्ना पृथा । गुणाः सौजन्यादयः आन्तराः । तदनुगुणमाचरणं शीलम् । सख्युः कुन्तिभोजस्य दत्ता । तेन कुन्ती च नाम्ना । न केवलं सखा शूरस्य । पितृष्वस्रीयश्च । **'पितृष्वस्रीयाय स तामनपत्याय भारत ।...अग्रजामथ तां कन्यां शूरोऽनुग्रहकाङ्क्षिणे । प्रददौ कुन्तिभोजाय सखा सख्ये महात्मने'** [आ.प.१२०.२–३] इति च तत्रैव । ननु पूर्वमन्यथा पठितम्–**'पितुः स्वस्रीयपुत्राय सोऽनपत्याय वीर्यवान् । अग्रमग्रे प्रतिज्ञाय स्वस्यापत्यस्य वै तदा । अग्रजातेति तां कन्यां शूरोऽनुग्रहकाङ्क्षया । अददात् कुन्तिभोजाय स तां दुहितरं तदा'** [आ.प.६८.१३०–१] इति । किन्त्वपपाठोऽयम् । 'पितुः स्वसायाः पुत्राय' इति सम्भावितः पाठः । स्वसाशब्दः प्रतनैः प्रयुज्यत इत्युक्तम् । केचित्तु दाक्षिणात्या एतमत्र न पठन्ति । शत्रून् कुण्ठान् तन्वत इति कुन्तयो नाम देशभागाः । कुं भूमिं समृद्ध्या विस्तारयन्ति सुखयन्तीति वा । **'तीत्यानन्दः समुद्दिष्टः'** इति हि स्मरन्ति । कुत्सितं तिरस्कुर्वन्तीति च कुन्तयः । तेषां राजा कुन्तिः । **'कौतीति कुन्तिः । कु शब्द इत्यतः क्तिन्'** इति वैयाकरणाः । कुन्तेः राज्ञः पुत्री कुन्ती । **'स्त्रियामवन्तिकुन्तिकुरुभ्यश्च'** [अ.सू.४.१.१७६] इति हि पाणिनिः । **'अवन्तिकुन्तिकुरुशब्देभ्य उत्पन्नस्य तद्राजस्य स्त्रियामभिधेयायां लुग् भवति–अवन्तिकुन्तिभ्यां ञ्यङः, कुरोर्ण्यस्य'** इति हि जयादित्यः । तेनावन्तिराजकन्या अवन्ती । कुन्तिभोजकन्या कुन्ती । कुरुकुलकन्या कुरूः । पूर्वदेहेऽपि मूलरूपेऽपि भार्या । **'सिद्धिर्धृतिश्च ये देव्यौ पञ्चानां मातरौ तु ते । कुन्ती माद्री च–'** [६८.१६०] इति च ॥ १४८ ॥ पञ्चसूपप्राणेषु द्वितीयः कूर्मः । **'सनागकूर्मकृकलदेवदत्तधनञ्जयाः'** इति । वासय कञ्चित् कालं वासार्थमनुकूलय ॥ १४९ ॥ शक्तितः यथाशक्ति । कर्म शुश्रूषाम् । कर्त्र्याः निरपेक्षं सेवाकरणस्वभावायाः । तच्छीले तृन् । **'तच्छीलो**

**चकार कर्म्म सा पृथा मुनेः सुकोपनस्य हि ।**
**यथा न शक्यते परैः शरीरवाङ्मनोनुगा ॥ १५१ ॥**

**स वत्सरत्रयोदशं तया यथावदर्च्चितः ।**
**उपादिशत् परं मनुं समस्तदेववश्यदम् ॥ १५२ ॥**

**ऋतौ तु सा समाप्लुता परीक्षणाय तन्मनोः ।**
**समाह्वयद् दिवाकरं स चाऽजगाम तत्क्षणात् ॥ १५३ ॥**

**ततो न सा विसर्ज्जितुं शशाक तं विना रतिम् ।**
**सुवाक्प्रयत्नतोऽपि तामथाऽससाद भास्करः ॥ १५४ ॥**

---

**यः स्वभावतः फलनिरपेक्षस्तत्र प्रवर्तते'** इति जयादित्यः । अथ कर्त्र्याः कर्तव्यमेतदिति श्रद्धया प्रवर्तमानायाः । तद्धर्मणि तृन् । **'तद्धर्मा तदाचारः, यः स्वधर्मो ममायमिति प्रवर्तते, विनाऽपि शीलेन'** इति जयादित्यः । अथच कर्त्र्याः साधु कुर्वन्त्याः । साधुकारिणि तृन् । **'तत्साधुकारी यो धात्वर्थं साधु करोति'** इति जयादित्यः । ननु को विशेषस्तृच-स्तृनश्च । न रूपे कोऽपि । किन्तु स्वरे विशेषः । तृन् नित्त्वादाद्युदात्तः । तृजन्तोदात्तः । न्यूनाधिकभावं यदि क्षमिष्यसे । **'इयं ब्रह्मन् मम सुता बाला सुखविवर्धिता । अपराध्येत यत्किञ्चिन्न कार्यं हृदि तत् त्वया'**[व.प.३०५.१४] इति कुण्डलाहरणे ॥ १५० ॥ स्वशरीरवाङ्मनोभिर्मुनेराशयानुगता कर्म परिचर्याख्यं चकार । सुकोपनस्यापि यथा कोपो न बभूव । स हि सुकोपनो यः कारणं विनाऽपि कुप्यति । ननु **'अचतुर-विचतुर-स्त्रीपुंस-धेन्वनडुह-ऋक्साम-वाङ्मनस–'** [अ.सू.५.४.७७] इति पाणिनिस्मरणात् **'–वाङ्मनसानुगा'** इति वक्तव्यम् । न वक्तव्यम् । द्विपदसमास एवायं नियमः । शरीरं च वाक् च मनश्च शरीरवाङ्मनांसीत्येव । न शरीरवाङ्मनसानीति । वत्सरत्रयोदशम् । वत्सरेषु त्रयोदशम् । त्रयोदशं वत्सरमित्यर्थः । यदा कुन्ती त्रयोदशवत्सरा बभूव । तदा दुर्वासा आजगाम । समग्रः स वत्सरस्तत्सेवया नीत इत्यर्थः । अत्यन्तसंयोगे द्वितीया । **'दुर्वासा वत्सरस्यान्ते ददौ मन्त्रमनुत्तमम्'** [आ.प.१२०.७] इति च । समस्तदेवानां वश्यताप्रदम् । देवान् वशगतान् कृत्वा मन्त्रजापकाय ददातीति वा देववश्यदम् । **'वशं गतः'** [अ.सू.४.४.८६] इति हि पाणिनिः । **'वशं गतो वश्यः । कामप्रायो विधेय इत्यर्थः'** इति जयादित्यः । **'यँयं देवं त्वमेतेन मन्त्रेणाऽवाहयिष्यसि । तस्यतस्य प्रभावेण तव पुत्रो भविष्यति'** [८] इति च ॥ १५२ ॥ प्लुङ् गतौ । आप्लुता अवगाढा । शुद्ध्यर्थमाप्लुता समाप्लुता ॥१५३॥ **'कश्चिन्मे ब्राह्मणः प्रादाद् वरं विद्यां च शत्रुहन् । तद्विजिज्ञासयाऽऽह्वानं कृतवत्यस्मि ते विभो । एतस्मिन्नपराधे त्वां शिरसाऽहं प्रसादये । योषितो हि सदा रक्ष्यास्त्वपराधेऽपि नित्यशः'**

**स तत्र जज्ञिवान् स्वयं द्वितीयरूपको विभुः ।**
**सवर्म्मदिव्यकुण्डलो ज्वलन्निव स्वतेजसा ॥ १५५ ॥**

**पुरा स वालिमारणप्रभूतदोषकारणात् ।**
**सहस्रवर्म्मनामिनाऽसुरेण वेष्टितोऽजनि ॥ १५६ ॥**

**यथा ग्रहैर्विदूष्यते मतिर्नृणां तथैव हि ।**
**अभूच्च दैत्यदूषिता मतिर्दिवाकरात्मनः ॥ १५७ ॥**

---

[१२०.१७–८] इत्यादिना धर्ममयसुदृढवचनेन तं निवारयितुं सुतरां प्रयत्नं कृत्वाऽपि न शशाक । अथ तस्या निवारणप्रयत्नानन्तरमपि भास्करस्तामाससाद सम्बभुजे ॥ १५४ ॥ द्वितीयरूपकः । **'द्विधा कृत्वाऽत्मनो देहमादित्यं तपतां वरम् । लोकांश्च तापयानं वै कर्णं विद्धि पृथासुतम्'** [आश्र.प.३३.१२] इति पुत्रदर्शने । **'यः स वैरार्थमुद्भूतः सङ्घर्षजननस्तथा । तं कर्णं विद्धि कल्याणि भास्करं शुभदर्शने'** [३३.१३] इति च । यः पूर्वं सुग्रीवो भूत्वा राममनुपमतया सिषेवे स इदानीं दुर्योधनवशंवदः कृष्णं व्यरुन्धेति द्वितीयं रूपं कुत्सयामास–द्वितीयरूपक इति । स्वयमेव स्वस्य द्वितीयं रूपं करोतीति च द्वितीयरूपकः । स्वार्थे कप्रत्यय इति सर्वत्र समं समाधानम् । वयं त्वर्थविशेषान्वेषणसतृष्णाः शब्दजलधेरन्तर्निरन्तरमवगाहामहे । दिव्याभ्यां द्योतमानाभ्यां कुण्डलाभ्यां च सहितः । **'कुण्डलोद्द्योतिताननः'** [आ.प.१२०.३०] इति च । स्वतेजसा ज्वलन इव भासमानः ॥ १५५ ॥ वालिमारणेन प्रभूतः सञ्जातः प्रभूतो बहळो दोषः । ननु स्वसमयव्याहतं किमेतदुच्यते, वालिमारणेन प्रभूतं दुरितं सञ्जातमिति? **'उत्तरपूर्वाघयोरश्लेषविनाशौ'** इति हि स्वसमयः । अपरोक्षज्ञानोत्तरं हि देवानां स्वपदप्राप्तिः । प्राप्तदेवपदानां कथमघश्लेषः? अयि सिद्धान्तबद्धादर, जानीहि प्रथमं कः स्वसमय इति । सर्वाणि कर्माणि पूर्वकर्मानुगतानीति स्वसमयः । कश्चित् कृषीवलः क्षेत्रं चिकृक्षति । अथ लाङ्गलेन विलिखति । विलिख्य जम्बालविषमे कृष्णभूमे[1] वपति बीजानि । वपन् पङ्किलपादो भवति । अथ पङ्कक्षालनाय नदीपयसि पादौ गाहयति । गाहयन् ग्राहेण गृह्यते । एवमिह कर्मशृङ्खला भवति । एवं सत्यां कर्मपरम्परायामिहाव्यवहितं कारणमुच्यते– कर्णस्यासुराविष्टतया जनने वालिमारणजो दोषोऽव्यवहितं कारणमिति । तस्यापि पूर्वतनं कर्म कारणं भवति । यदिदानीं प्रारब्धम् । प्रारब्धस्य च नापरोक्षेण विनाश इति न स्वसमयव्याघातलेशोऽपि । यथा कश्चिद् विषं प्राशयति । प्राशिता म्रियते । विषप्राशनेन ममारेति वदन्ति । वस्तुतो नेदं मूलकारणम् । केवलमव्यवहितं कारणम् । पूर्वं स्वकृतेन पापकर्मणा स ममारेति तु वस्तुस्थितिः । एवमिहापीति न कोऽपि दोषः । वेष्टित आवृतः आक्रान्तमनाः । येनास्य स्वभावः प्रायः पिहित एव, अनाविष्कृत एवावर्तत । सहस्रवर्मनाम्नेति पर्याप्तम् । अथापीनमादेश्य नामिनेत्याह । तेनाक्षराधिक्येन स्वरूपस्याभिभवमसुरावेशस्य प्राबल्यं च शब्दतोऽभिनीय दर्शयति ॥ १५६ ॥ दिवाकरात्मनः । तदिदं विस्मयावहं यद् दिवाकरमन्धकार आववार ॥ १५७ ॥

---

१. **'कृष्णोदकपाण्डुपूर्वाया भूमेरच्प्रत्ययः स्मृतः'** इति काशिकायाम् [अ.सू.५.४.७५] ।

**तथाऽपि रामसेवनाद्धरेश्च सन्निधानयुक् ।**
**सुदर्शनीयकर्ण्णतः स कर्ण्णनामकोऽभवत् ॥ १५८ ॥**

**स रत्नपूर्ण्णमञ्जुषागतो विसर्ज्जितो जले ।**
**जनापवादभीतितस्तया यमस्वसुर्ज्जलेतम् ॥ १५९ ॥**

**नदीप्रवाहतो गतं ददर्श सूतनन्दनः ।**
**तमग्रहीत् सरत्नकं चकार पुत्रकं निजम् ॥ १६० ॥**

**सूतेनाधिरथेन [१]लाळिततनुस्तद्भार्य्यया राधया**
**संवृद्धो निखिलाः श्रुतीरधिजगौ शास्त्राणि सर्वाणि च[२] ।**

---

यद्यप्यसुरेण वेष्टितः तथाऽपि सुरेष्टं राममसेविष्ट । तेन यद्दुष्टं चकार तत्पातकं सर्वं सहस्रवर्माणमाप । दुष्टदमनकर्मणि यद् भगवतोऽङ्गतामाप तत्पुण्यं सर्वं कर्णमाप । प्रशस्तौ कर्णावस्य स्त इति प्रशंसार्थे मत्वर्थीयोऽच् । कर्ण इत्येव जनास्तमाजुहुवुः । अथापि तस्य मौलं नाम वसुषेण इत्यतः कर्णनामक इत्याह ॥ १५८ ॥ मञ्जुषा । मञ्जून्याभरणादीनि शेरतेऽस्यामिति मञ्जुषा मञ्जूषा वा । पुरि शेत इति पुरुष इति यथा । सीदन्त्यस्यामिति वा । **'मञ्जुषाऽपि च मञ्जूषा'** इति शब्दरत्नावली । वैयाकरणास्तु मज्जतेरूषन्प्रत्ययेन नुमागमेन च निष्पादयन्ति । **'मस्जेर्नुम् च'** [९.१८] इति हि दशपादिका । **'मस्जेरूषन्प्रत्ययो भवति नुम् चाऽगमः । टु मस्जो शुद्धौ । मज्जन्त्यस्यामिति मञ्जूषा'** इति वृत्तिकारः । उषन्नपि वक्तव्यः । तेन मञ्जूषा मञ्जुषा भवति । पीयूषं पीयुषं भवति । **'स्यात् पीयुषं च पीयूषम्'** इति चाभिधानम् । **'मचि धारणोच्छ्रयपूजनेषु'** इत्यतः चस्य जादेशे ऊषे च प्रत्यये मञ्चत इति मञ्जूषेति दुर्गसिंहः । **'मजि गतौ'** इति काशकृत्स्नः पठति । तेन मञ्जति मञ्ज्यते वेति मञ्जूषेत्यन्ये । यमस्वसुर्यमुनाया जले । कुण्डलाहरणे त्वश्वनद्यां मञ्जूषां विससर्जेति पठ्यते– **'मञ्जूषा त्वश्वनद्याः सा ययौ चर्मण्वतीं नदीम् । चर्मण्वत्याश्च यमुनां ततो गङ्गां जगाम ह । गङ्गायाः सूतविषयं चम्पामनु ययौ पुरीम् । स मञ्जूषागतो गर्भस्तरङ्गैरुह्यमानकः'**[व.प.३०९.२६–७] इति । अत्राश्वनदी यमुनायाः काचन शाखेति भाति । अत एवाऽचार्यो 'यमस्वसुर्जले' इत्याह । एवम्– **'मञ्जुषा त्वश्वनद्याः सा'** इति, **'स मञ्जुषागतो गर्भः'** इत्येव चाऽचार्यसम्मतो भारतपाठश्च स्यात् ॥ १५९ ॥ सूतनन्दनः राधाभर्ताऽधिरथो नाम । **'तमुत्सृष्टं जले गर्भं राधाभर्ता महायशाः । पुत्रत्वे कल्पयामास सभार्यः सूतनन्दनः'**[आ.प.१२०.३५] इति च । दैवदत्ते तस्मिन् शिशुके सूतनन्दनस्य प्रीत्यतिशयमाह–पुत्रकमिति ॥ १६० ॥ रथे यन्तृत्वेनाधिकृतोऽधिरथः ।

---

१. 'लालित–'

२. **'–जगौ सर्वाणि शास्त्राणि च ।'**

**बाल्यादेव महाबलो निजगुणैः सम्भासमानोऽवस-**
**न्नाम्नाऽसौ वसुषेणतामगमदस्याऽसीद्धचमा[1] तद् वसु ॥ १६१ ॥**

**अथ कुन्ती दत्ता सा पाण्डोः सोऽप्येतया चिरं रेमे ।**
**शूराच्छूद्र्यां जातां विदुरोऽवहदारुणीं गुणाढ्यां च[2] ॥ १६२ ॥**

**अथ चर्त्तायननामा मद्रेशः शक्रतुल्यपुत्रार्थी ।**
**कन्यारत्नं चेच्छंश्चक्रे[3] ब्राह्मं तपो वरं चाऽप ॥ १६३ ॥**

**बाल्यादेवाधिजगौ, बाल्यादेव महाबल इत्युभयत्र सम्बन्धः । नाम्ना वसुषेणतामगमत् । कुत इत्यत आह– आसीदिति । तद्वसु स्वाश्रयमञ्जूषागतरत्नजातं अमा सह आसीदिति (हि यस्मादिति) सम्बन्धः । वसुना सह सम्बद्धत्वाद् वसुषेणः । षिञ् सम्बन्ध इति धातुर्ल्युडन्तः ॥ १६१–६ ॥**

---

लाळिततनुः । लळ उपसेवायाम् । प्रीत्या पोषणमुपसेवा । बाल्यादेव श्रुतीः शास्त्राण्यधिगत्य भासमानः । बाल्यादेव महाबलत्वेन सम्भासमानः । अवसत् । 'सम्भासमानः वसन्' इति वा प्रतृण्णम् । कवचकुण्डलाख्यं वसु मञ्जूषागतं रत्न-जातं च अमा तेन सहाऽसीद्धि । तेन वसुषेणनामाऽभवत् । वसुभिः सीयते सम्बध्यत इति वसुषेणः । वसूनि सिन्वन्त्येन-मिति वा । वसुभिः सेनः सङ्गत इति वा । षिञ् बन्धने । **'कृ-वृ-जृ-सि-द्रु-पनि-अनि-स्वपिभ्यो नित्'**[५.४२] इति दशपादिका । **'वसुवर्मधरं दृष्ट्वा तं बालं हेमकुण्डलम् । नामास्य वसुषेणेति ततश्चक्रुर्द्विजातयः'** [व.प.३१०.१५] इति च । **'नामधेयं च चक्राते तस्य बालस्य तावुभौ । वसुना सह जातोऽयं वसुषेणो भवत्विति'** इति च । वसुना सहित इनः सूर्य इति च रहस्यम् ॥ १६१ ॥ या कन्यात्वे कर्णं जनयामास सा कुन्ती पाण्डोर्दत्ता स्वयंवरे । **'पित्रा स्वयंवरे दत्ता दुहिता राजसत्तम ।.... व्रीळमाना स्रजं कुन्ती राज्ञः स्कन्धे समासजत्'** [आ.प.१२१.३;८] इति च । शूराच्छूद्र्यां जाताम् । अत एव कुन्त्या वसुदेवस्य च भगिनीम् । शूद्रजातौ जाता शूद्रा भवति । **'शूद्रा चाम-हत्पूर्वा जातिः'** [४.१.४] इति वार्तिकम् । शूद्रभार्या शूद्री भवति । **'पुंयोगादाख्यायाम्'** [अ.सू.४.१.४८] इति हि पाणिनिः । ततश्च शूरात् कस्यचित् शूद्रस्य भार्यायां भुजिष्यायां जातामित्यर्थः । **'अथ पारशवीं कन्यां देवकस्य मही-पतेः ।...विवाहं कारयामास विदुरस्य महामतेः'** [आ.प.१२६.१;२] इति सम्भवे । परवशां सतीं परशवामाचक्षते परोक्षप्रियाः । तेन परवशायाः स्त्रियास्तनया पारशवी । वैयाकरणास्तु **'परस्त्री परशु च'** इति बिदादिगणपाठेन परस्त्रीशब्दस्य परशुभावं मन्यमानाः **'अनृष्यानन्तर्ये बिदादिभ्योऽञ्'** [अ.सू.४.१.१०४] इत्यञ्प्रत्ययेन परस्त्रिया अपत्यं पारशव इति रूपमाहुः । परस्त्रीजाता पारशवी । शूरात् परजायायां भुजिष्यायां जातेत्यर्थः । देवकस्य गृहे पालिताम् । देवकल्पस्य शूरस्येति वा । **'शूरकस्य महीपतेः'** इत्यपि प्रतनः पाठः स्यात् ॥ १६२ ॥ ऋतायनः शल्यस्य पिता, माद्र्याश्च ।

---

१. **'–मगमदप्यासीद्धचमा'** २. **'–णाढ्यां सः ।'** ३. **'–रत्नं चाऽमुं चक्रे'**

**प्रह्लादावरजो यः सह्लादो[1] नामतो हरेर्भक्तः ।**
**सोऽभूद् ब्रह्मवरान्ते वायोरावेशयुक् सुतो राज्ञः ॥ १६४ ॥**

**स मारुतावेशवशात् पृथिव्यां बलाधिकोऽभूद् वरतश्च धातुः ।**
**शल्यश्च नाम्नाऽखिलशत्रुशल्यो बभूव कन्याऽस्य च माद्रिनाम्नी ॥ १६५ ॥**

**सा पाण्डुभार्य्यैव च पूर्वजन्मन्यभूत् पुनश्च प्रतिपादिताऽस्मै ।**
**शल्यश्च राज्यं पितृदत्तमञ्जो जुगोप धर्म्मेण समस्तशास्त्रवित् ॥ १६६ ॥**

**अथाङ्गनारत्नमवाप्य तद् द्वयं पाण्डुस्तु भोगान् बुभुजे यथेष्टतः ।**
**अपीपलद् धर्म्मसमाश्रयो महीं ज्येष्ठापचायी विदुरोक्तमार्ग्गतः ॥ १६७ ॥**

**ज्येष्ठापचायी धृतराष्ट्रानुसारी ॥ १६७–७२ ॥**

शक्रतुल्यपुत्रार्थी । अत एव शल्यः । शक्रतुल्यं हि शल्यं वदन्ति । यथा सीरजातां सीताम् ॥ १६३ ॥ **'सह्लाद इति विख्यातः प्रह्लादस्यानुजस्तु यः । स शल्य इति विख्यातो जज्ञे बाह्रीकपुङ्गवः'** [आ.प. ६८.६] इति च । ब्रह्म-वरस्य अन्ते अनन्तरम् । शक्रतुल्यतायै वायोरावेशयुक् । मद्रदेशोऽयं बाह्लीकभागः । यं सौवीरदेशं चाऽहुः ॥१६४॥ निर्वचनान्तरं चाऽह–अखिलशत्रुशल्यः । **'ऋतमेव हि पूर्वास्ते वदन्ति पुरुषोत्तमाः । तस्मादार्तायनिः प्रोक्तो भवानिति मतिर्मम । शल्यभूतस्तु शत्रूणां यस्मात् त्वं युधि मानद । तस्माच्छल्येति ते नाम कथ्यते पृथिवीतळे'** [क.प. २३.६२–३] इति च । **'त्वं शल्यभूतः शत्रूणामविषह्यः पराक्रमे । ततस्त्वमुच्यसे राजन् शल्य इत्यरिसूदन'** [२९.६३] इति च । कर्णपर्ववचनस्यायमर्थः– ते पूर्वपुरुषा ऋतमेवावदन् । अतोऽर्थतः सर्वेऽप्यृतायनाः । तव पिता पुनर्नामतोऽप्यृतायनो बभूव । तस्माद् भवानार्तायनिः शल्य इति ॥ १६५ ॥ अञ्जः दाक्ष्येण । **'सिद्धिर्धृतिश्च ये देव्यौ पञ्चानां मातरौ तु ते । कुन्ती माद्री च जज्ञाते मतिस्तु सुबलात्मजा'** [आ.प.६८.१६०] इति च ॥ १६६ ॥ **'ज्येष्ठापचायी ज्येष्ठस्य भ्रातुर्वचनमास्थितः'** [व.प.३७.५१] इति च । ज्येष्ठाराधनशील इत्यर्थः । अपचायतीत्यपचायी । चायृ पूजानिशा-मनयोः । अपपूर्वस्तु विशिष्य पूजावचनः । **'भवेदपचितिः पूजाव्ययनिष्कृतिहानिषु'** इति ह्यभिदधति ॥ १६७ ॥ राष्ट्रे धृतराष्ट्रं संस्थाप्य । देवापिर्ज्येष्ठोऽपि त्वग्दोषदुष्ट इति न राजा बभूव । न प्रतीपस्तं राजानं चकार । भीष्मस्तु चक्षुषा हीनमपि राष्ट्रे संस्थापयामास । कन्यानामाहरणं भीष्मकृतः प्रथमः प्रमादः । अन्धस्य सम्राट्त्वेन स्थापनं द्वितीयः प्रमाद इति भाति । कार्यस्य भावित्वादेव महतोऽपि दिष्टं प्रमादयति । भीष्मोऽपि भगवल्लीलानटने क्रीडनकं बभूव । येन

१. **'संह्लादः'**

भीष्मो हि राष्ट्रे धृतराष्ट्रमेव संस्थाप्य पाण्डुं युवराजमेव ।
चक्रे तथाऽप्यन्ध इति स्म राज्यं चकार नासावकरोच्च पाण्डुः ॥ १६८ ॥

भीष्माम्बिकेयोक्तिपरः सदैव पाण्डुः शशासावनिमेकवीरः ।
अथाऽम्बिकेयो बहुभिश्च यज्ञैरीजे स पाण्डुश्च महाधनौघैः ॥ १६९ ॥

नैषा विरोधे कुरुपाण्डवानां तिष्ठेदिति व्यास उदीर्ण्णसद्गुणः[१] ।
स्वमातरं स्वाश्रममेव निन्ये स्नुषे च तस्या ययतुः स्म तामनु ॥ १७० ॥

सुतोक्तमार्ग्गेण विचिन्त्य तं हरिं सुतात्मना ब्रह्मतया च सा ययौ ।
परं पदं वैष्णवमेव कृष्णप्रसादतः स्वर्य्ययतुः स्नुषे च ॥ १७१ ॥

माता च सा विदुरस्याऽप लोकं वैरिश्चमन्वेव गताऽम्बिकां सती ।
व्यासप्रसादात् सुतसद्गुणैश्च कालेन मुक्तिं च जगाम सन्मतिः ॥ १७२ ॥

अम्बालिकाऽपि क्रमयोगतोऽगात् परां गतिं नैव तथाऽम्बिका ययौ ।
यथायथा विष्णुपरश्चिदात्मा तथातथा ह्यस्य गतिः परत्र ॥ १७३ ॥

**क्रमयोगतः क्रमेण परिपक्कमोक्षोपायतः ॥ १७३–६ ॥**

---

कुरुकुलसंहारस्य नान्दी बभूव । **'भीष्मेण राजा कौरव्यो धतृराष्ट्रोऽभिषेचितः'** [आ.प.११८.२१] इति च । राज्यं राजकार्यम् । **'धृतराष्ट्रस्त्वचक्षुष्ट्वाद् राज्यं न प्रत्यपद्यत । पारशवत्वाद् विदुरो राजा पाण्डुर्बभूव ह'** [आ.प.११८.३०] इति च ॥ १६८ ॥ सः पाण्डुश्च यज्ञैरीजे । सपाण्डुः पाण्डुना सहित आम्बिकेयो वा । **'तस्य वीरस्य विक्रान्तैः सहस्रशतदक्षिणैः । अश्वमेधशतैरीजे धृतराष्ट्रो महामखैः'** [११३.५] इति च । अश्वमेधशतैरिति लुप्तोपमा । अश्वमेधशतैरिव । तत्तुल्यैर्बहुभिर्यज्ञैः ॥ १६९ ॥ पाण्डुमरणानन्तरं सत्यवती तपसे वनं जगामेति भारते पठ्यते । व्यत्यासो नाम शैलीभेदोऽयम् । अतः पूर्वमेव तां कथां तत्रानुक्तविशेषैः सहाऽह– नैषेति । **'कुरूणामनयाचापि पृथिवी न भविष्यति । गच्छ त्वं योगमास्थाय युक्ता वस तपोवने'** [आ.प.१३७.८] इति च । उदीर्णाः पूर्णाः सद्गुणा यस्मिन् । स्नुषे चाम्बिकाम्बालिके तामनुययतुः ॥ १७०–७१ ॥ अम्बिकामनुसृत्य वनं गता ॥ १७२ ॥ क्रमयुक्तो योगः क्रम-

---

१. 'उदारसद्गुणः'

**पाण्डुस्ततो राज्यभरं निधाय ज्येष्ठेऽनुजे चैव वनं जगाम ।**
**पत्नीद्वयेनानुगतो बदर्य्यामुवास नारायणपालितायाम् ॥ १७४ ॥**

**गृहाश्रमेणैव वने निवासं कुर्वन् स भोगान् बुभुजे तपश्च ।**
**चक्रे मुनीन्द्रैः सहितो जगत्पतिं रमापतिं भक्तियुतोऽभिपूजयन् ॥ १७५ ॥**

**स कामतो हरिणत्वं प्रपन्नं दैवाद्दर्षिं ग्राम्यकर्म्मानुषक्तम् ।**
**विध्वा शापं प्राप तस्मात् स्त्रिया युङ्गरिष्यसीत्येव बभूव चाऽर्त्तः ॥ १७६ ॥**

**न्यसिष्णुरुक्तः पृथया स नेति प्रणामपूर्वं न्यवसत् तथैव ।**
**ताभ्यां समेतः शतशृङ्गपर्वते नारायणस्याऽश्रममद्ध्यगे पुरः ॥ १७७ ॥**

**तपो नितान्तं स चचार[1] ताभ्यां समन्वितः कृष्णपदाम्बुजाश्रयः ।**
**तत्सङ्गपूतद्युसरिद्वराम्भःसदावगाहातिपवित्रिताङ्गः ॥ १७८ ॥**

**न्यसिष्णुः सः पृथया प्रणामपूर्वं नेत्युक्तः । तथैव गार्हस्थ्येनैव ॥ १७७–८ ॥**

---

योगः । योगक्रमानुसारेण कालक्रमेणेत्यर्थः । क्रमेण भगवति मनोयोगश्च क्रमयोगः । विदुरमातुर्मुक्त्यनन्तरमपि योगरता क्रमेण परां गतिं मुक्तिमाप । ननु कल्पान्ते ब्रह्मणा सहैव सर्वेषां मुक्तिः? सत्यम् । पुनः प्रारब्धभोगार्थं भूमावजननमेवात्र मुक्तिरुच्यते । चिदात्मा चिन्मयः सात्विकजीवः ॥ १७३ ॥ राज्यभरं राज्यधुराम् । वनमेव जगाम । राज्यभोगेष्वनादर एवकारार्थः । यावज्जीवं वनवासनिर्धारश्च । **‘हित्वा प्रासादनिलयं शुभानि शयनानि च । अरण्यनित्यः सततं बभूव मृगयापरः’** [१२३.७] इति च ॥ १७४ ॥ अभित उभयतः पूजयन् । बहिः प्रतिमादिषु । अन्तर्मनसि ॥ १५५ ॥ ग्राम्यकर्मणि मैथुने । दैवाद्धरिणत्वं प्राप्तम्, कामतो ग्राम्यकर्मानुषक्तमृषिं किन्दमम् । कामतः स्वेच्छया । अथापि दैवाद् भगवदिच्छया । स्त्रिया युगिति । **‘प्रियया सह संवासं प्राप्य कामविमोहितः । त्वमप्यस्यामवस्थायां प्रेतलोकं गमिष्यसि’** [१२३.३८] इति च । तेन चाऽर्तः विषण्णो बभूव ॥ १७६ ॥ द्वौ नारायणस्याऽश्रमौ भवतः । नरनारायणाश्रमो व्यासाश्रमश्च । शतशृङ्गस्यैकस्मिन् तटे नरनारायणाश्रमः । तटान्तरे व्यासाश्रमः । तन्मध्ये शतशृङ्गशिखरम् । यत्र पाण्डुरुवास । यच्च पाण्डुकेश्वरमिति जना जगदुः । पुरः पुरस्तात् । आश्रमापेक्षया दक्षिणस्यां दिशि ॥ १७७ ॥ कृष्ण इति कृष्णद्वैपायनः । न वसुदेवतनयः । कृष्ण इति मूलरूपी नारायणश्च । तथा चोत्तरत्र तत्सङ्गेति

---

१. **‘चकार’**

**एतस्मिन्नेव काले कमलभवशिवाग्रेसराः शक्रपूर्वा**
**भूम्या पापात्मदैत्यैर्भुवि कृतनिलयैराक्रमं चासहन्त्या ।**
**ईयुर्द्देवादिदेवं[1] शरणमजमुरुं[2] पूर्णषाड्गुण्यमूर्त्तिं**
**क्षीराब्धौ नागभोगे शयितमनुपमानन्दसन्दोहदेहम् ॥ १७९ ॥**

**ऊचुः परं पुरुषमेनमनन्तशक्तिं**
**सूक्तेन तेऽब्जजमुखा अपि पौरुषेण ।**
**स्तुत्वा धराऽसुरवराक्रमणात् परेश**
**खिन्ना [3]यतो हि विमुखास्तव तेऽतिपापाः ॥ १८० ॥**

**दुस्सङ्गतिर्भवति भारवदेव देव**
**नित्यं सतामपि हि नः शृणु वाक्यमीश ।**

**अथ कृष्णावतारं वक्तुं तत्कारणतया ब्रह्मादीनां भगवच्छरणागतिप्रकारमाह– एतस्मिन्नित्यादिना ॥ १७९–८० ॥ सतां नित्यं दुःसङ्गतिः भारवदेव भवति । असुराणां पाताळे स्थितत्वात् कथं भुवो भार इत्यत आह–अपीति । तथाऽपीत्यर्थः । भुवि तेऽभिजाता इत्युक्त्या असुराणां भुवि जातत्वं भुवो**

---

तस्य त्रिविक्रमात्मनो भगवतः, तस्य सम्प्रति स्वतीरे सञ्चरतः कृष्णद्वैपायनस्य च पदाम्बुजस्य सङ्गेन पूता द्युसरिद् गङ्गा । तस्या वरं शिवेनापि शिरसाऽभ्यर्चितमम्भः ॥ १७८ ॥ भगवतः सृष्टिसंहारकर्मणि साक्षादङ्गत्वेनान्तरङ्ग-भूताविति कमलभवशिवौ पृथगाह । दैत्यैः क्रियमाणमाक्रमणमसहन्त्या असहमानया भूम्या सह । सतां कृत इदम-सहनमिति सूचयितुमसहन्त्येत्याह । देवानामादी कमलभवशिवौ । तयोरप्ययं देवः सृष्ट्यादिकृत्, ज्ञानादिदाता च । सर्वेषां देवानां स्वयमादिः कारणं च, क्रीडादिगुणकश्च । कमलभवशिवावप्यजावुच्येते । अयं तु ताभ्यामुरुर्महानजः । **'अजो हरौ हरे कामे विधौ'** इत्यभिदधति। ऊर्णोति व्याप्नोति सर्वमित्युरुः । ऊर्णुञ् आच्छादने । **'महति ह्रस्वश्च'** [१.११६] इति दशपादिका । **'महत्यर्थे गम्यमाने ऊर्णोतेर्धातोः कुः प्रत्ययो भवति णुलोपश्च भवति ह्रस्वश्च'** इति वृत्तिः । **'भूमिर्दृप्तनृपव्याजदैत्यानीकशतायुतैः । आक्रान्ता भूरिभारेण ब्रह्माणं शरणं ययौ । ब्रह्मा तदुपधार्याथ सह देवैस्तया सह । जगाम सत्रिनयनस्तीरं क्षीरपयोनिधेः'** [१०.१.१७;१९] इति हि भागवते ॥ १७९ ॥ पौरुषेण सूक्तेन अन्यैरपि सूक्तैः स्ववचोभिश्च । **'पुरुषं पुरुषसूक्ताद्यैरुपतस्थे समाहितः'** [१०.१.२०] इति भागवते । यतस्तव विमुखा अतस्तेषां भारेण खिन्ना । खिदि दैन्ये । मनसोऽतुष्टिर्दैन्यम् ॥ १८० ॥ न केवलं भुवः, किन्तु सतामपि हि भारायते । अस्मत्प्रियार्थं

---

१. **'–र्द्देवाधिदेवम्'** २. **'–मजगुरुम्'** ३. **'खिन्ना ह्यतोऽतिविमुखा–'**

पूर्वं हता दितिसुता भवता रणेषु
ह्यस्मत्प्रियार्थमधुना भुवि तेऽभिजाताः ॥ १८१ ॥

आसीत् पुरा दितिसुतैरमरोत्तमानां सङ्ग्राम उत्तमगजाश्वरथद्विपद्भिः ।
अक्षोहिणी[1]शतमहौघमहौघमेव सैन्यं सुरात्मकमभूत् परमास्त्रयुक्तम् ॥ १८२ ॥

तस्मान्महौघगुणमास महासुराणां सैन्यं शिलागिरिमहास्त्रधरं सुघोरम् ।
तेषां रथाश्च बहुनल्वपरिप्रमाणा देवासुरप्रवरकार्म्मुकबाणपूर्णाः ।
नानाम्बराभरणवेषवरायुधाढ्या देवासुराः ससृपुराशु परस्परं ते ॥ १८३ ॥

**भारकारणमित्युक्तं भवति ॥ १८१ ॥ अक्षोहिणीशतमहौघमहौघम् । अक्षोहिणीशतमहौघमितसङ्ख्याया उत्तरोत्तरगणनेन महौघसङ्ख्यापरिमितम् ॥ १८२ ॥ महौघगुणं महौघाधिकम् । तेषां देवासुराणाम् । 'किष्कुर्हस्ते वितस्तौ च नल्वः किष्कुचतुःशतम्'[2] । परस्परं ससृपुः ॥ १८३ ॥**

हि हताः । नह्यसुरहननेन तव कोऽपि स्वार्थः स्वभक्तरक्षणादृते । अभितो व्याप्य जाताः । तदप्यस्मत्प्रियार्थमिव । यतस्तान् हन्तुं भवानपि जनिष्यते ॥ १८१ ॥ देवतानां भगवत्स्तुतिमिषेण देवासुरसङ्ग्रामकथां सङ्गृह्णाति– आसीदित्यादिना । दितिसुतैरित्यसुरोपलक्षणम् । सुरशत्रुत्वमवच्छेदकम् । अत एव **'देवासुरप्रवरकार्मुकबाणपूर्णाः'** इति वक्ष्यति । दित्यै जगतः खण्डनाय सुताः जाता इति तु हृदयम् । उत्तमानाममराणामधमयोग्यतैर्दितिसुतैः । ननु कथं तर्हि विशेषणस्य परनिपातः? पठ कडारादिषु । **'कडाराः कर्मधारये'** [अ.सू.२.२.३८] इति स्मरति पाणिनिः । बहुवचनमिह किलाद्यर्थे–**'कडारादयः कर्मधारये'** इति । किमवच्छेदकम्? महतां प्रयोगः । तद् यथा– उत्तमं पुरुषं पुरुषोत्तममाहुः । अथवा विशेषणसमासोऽयम् । अमृतपानेनामरा अत एवोत्तमाः सुरा इति । **'पुरा लोके महाराज वर्तमाने कृते युगे । आसीत् त्रैलोक्यविख्यातः सङ्ग्रामस्तारकामयः'** [स.प.५१.६] इत्यर्घाहरणे । विस्तरस्तु हरिवंश[ह.वं.प.४३–४८] पद्मपुराणा[सृ.खं.४०–४१]दिषु द्रष्टव्यः । अक्षोहिणीनां शतस्य शतानां वा यो महानोघः महान् सेनासमुदायः तस्य महानोघः महती परम्परा यस्मिन् तादृशं सैन्यम् । महत ओघस्य प्रवाहस्य महौघः महती अविच्छिन्ना निरन्तरता वा । सङ्ख्याविशेषपरतयाऽपि महौघशब्दं व्याचक्षते । महान् ओघस्य प्रवाहस्य गुणः नैरन्तर्याख्यः यस्मिन् । देवसैन्यादपि महौघगुणितमिति सङ्ख्यापराः । सङ्ख्यापरत्वे देवसेनापरिमाणम् १०००००००००००००००००००००००००००० अक्षोहिण्यो भवन्ति । **'नवकोट्यो हि देवानाम्'** इति स्मरन्ति । तत् कथं तावती देवसेनेति त एव प्रष्टव्याः । तेषां देवासुराणाम् । परितः आयामेन दैर्घ्येण च बहुनल्वप्रमाणाः । 'नल्वं हस्तशतम्' इति केचित् । २४०० अङ्गुलानि । हस्तानां चतुःशतीत्यपरे । तदा ९६००अङ्गुलानि । अम्बरैराभरणैश्च वेषोऽलङ्करणम् ॥ १८२–३ ॥

१. **'अक्षौहिणी–'**

२. **'–चतुष्टयम्'** इति कोशे पठ्यते ।

जघ्नुर्गिरीन्द्रतळ[1]मुष्टिमहास्त्रशस्त्रैश्चक्रुर्नदीश्च रुधिरौघवहा महौघम् ।
तत्र स्म देववृषभैरसुरेशचम्वा युद्धे निसूदित[2] उतौघबलैः शतांशः ॥ १८४ ॥

अथाऽत्मसेनामवमृद्यमानां वीक्ष्यासुरः शम्बरनामधेयः ।
ससार मायाविदसह्यँमायो वरादुमेशस्य सुरान् विमोहयन् ॥ १८५ ॥

मायासहस्रेण सुराः समर्दिता[3] रणे विषेदुः शशिसूर्य्यमुख्याः ।
तान् वीक्ष्य वज्री परमां तु विद्यां[4] स्वयम्भुदत्तां प्रयुयोज वैष्णवीम् ॥ १८६ ॥

समस्तमायापहया तयैव वराद् रमेशस्य सदाऽप्यसँह्यया ।
माया विनेशुर्दितिजेन्द्रसृष्टा वारीशवह्नीन्दुमुखाश्च मोचिताः ॥ १८७ ॥

यमेन्दुसूर्य्यादिसुरास्ततोऽसुरान् निजघ्नुराप्यायितविक्रमास्तदा ।
सुरेश्वरेणोर्ज्जितपौरुषा बहून् वज्रेण वज्री निजघान शम्बरम् ॥ १८८ ॥

**ओघबलैः वृन्दस्थितबलैः । 'ओघो वृन्देऽम्भसां रये' इत्यभिधानम् ॥ १८४–७ ॥ सुरेश्वरेणाऽप्यायितविक्रमाः**

---

रुधिरौघः रुधिरसन्ततिः । महान् ओघः प्रवेगः यथा स्यात् तथा । ओघं क्षिप्रं बलं येषां तैः । ओघे समूहे बलं येषामिति वा । सङ्घशक्तिभिः । आशु वहतीत्योघशब्दः क्षिप्रवचनश्च । **'ओघो वेगे जलस्य च । वृन्दे परम्परायां च द्रुतनृत्योपदेशयोः'** इति च मेदिनी । एतेनैव पूर्वश्लोकेऽप्योघशब्दो न सङ्घचापर इति सूचयतीव ॥ १८४ ॥ उमेशस्य वरादन्यैरसह्य-मायः । वरादेव सुरान् विमोहयन् । य एव हरिवंशादिषु मय इत्युक्तः स शम्बरनामधेयः । अत एव मायां शाम्बरीमाहुः ॥ १८५ ॥ वैष्णवं मन्त्रं जप्त्वा वैष्णवास्त्रं प्रयुयोज । तुना शम्बरमायातोऽस्या आधिक्यमाह । शैवी हि शाम्बरी । इयं तु वैष्णवीति । सा शिवेन दत्ता । इयं स्वयम्भुवा ॥ १८६ ॥ तदेवाऽधिक्यं स्फुटमाह– समस्तमायापहया । रमेशस्य भवत इति वर्तते । रमेशं प्रति किल देवा एतदवोचन् । एवं शास्त्रकाराः प्रयुञ्जते पौनःपुनिकतया । यथा– **'अथ व्यवस्थितान् दृष्ट्वा धार्तराष्ट्रान् कपिध्वजः'** [भ.गी.१.२०] इति धृतराष्ट्रं प्रत्याह सञ्जयः, **'तव सुतान्'** इति वक्तव्ये । सदाऽपि सर्वैरप्यसह्यया । शिवदत्ता तु विद्या तदवरैरेवासह्या । मोचिताः । तेन वारीशः क्लेदनीं शक्तिं पुनराप । वह्निः पाचनीं च तापनीं च । मोहनीमिन्दुः । बहुपदद्वन्द्वे नाल्पाच्तरं नाप्यभ्यर्हितं च पूर्वमिति नियमः प्रसरति । बहुष्वनियम एवेति वारीशवह्नीन्दुमुखा इत्याह । स्वरूपाधिक्यं नात्र प्राथम्यहेतुः । किन्त्वक्षराधिक्यम् । अल्पाक्षरतरं परम् । अपूर्वोऽयं शाब्दः क्रमः ॥ १८७ ॥ एककक्ष्यागता इति यमेन्दुसूर्यान् सह पपाठ । आदौ पुत्रस्ततः पितृव्यस्ततः पितेति क्रमः । बहूनसुरान्

---

१. '–तल–' २. **'निषूदित–'** ३. **'सुरा विमर्दिता–'** ४. **'परमाख्यविद्याम्'**

**तस्मिन् हते दानवलोकपाले दितेःसुता दुद्रुवुरिन्द्रभीषिताः ।**
**तान् विप्रचित्तिर्विनिवार्य्य धन्वी ससार शक्रप्रमुखान् सुरोत्तमान् ॥ १८९ ॥**

**वरादजेयेन विधातुरेव सुरोत्तमांस्तेन शरैर्न्निपातितान् ।**
**निरीक्ष्य शक्रं च विमोहितं द्रुतं न्यवारयत् तं पवनः शरौघैः ॥ १९० ॥**

**अस्त्राणि तस्यास्त्रवरैर्न्निवार्य्य चिक्षेप तस्योरसि काञ्चनीं गदाम् ।**
**विचूर्ण्णितोऽसौ निपपात मेरौ महाबलो वायुबलाभिनुन्नः ॥ १९१ ॥**

**अथाऽससादाऽशु स कालनेमिस्त्वदाज्ञया यस्य वरं ददौ पुरा ।**
**सर्वैरजेयत्वमजोऽसुरः स सहस्रशीर्षो द्विसहस्रबाहुयुक् ॥ १९२ ॥**

**वर्द्धितविक्रमाः । अत एवोर्जितपौरुषाः ॥ १८८–९१ ॥ सः असुरः सहस्रशीर्ष इत्यादि रूपकथनम् ॥ १९२–३ ॥**

---

निजघ्नुः । सुरेश्वरेण आप्यायितविक्रमाः परिवर्धितपराक्रमाः । ओप्यायी वृद्धौ । वज्री शम्बरं निजघान ॥ १८८ ॥ दितेःसुता इत्युक्तार्थम् । नह्यत्र दितिरिति दितिरुच्यते । मरुतोऽपि हि दितेः सुताः । देवपक्षा हि ते । शम्बरादयोऽपि न दितेः सुताः । दनुसुता हि ते । तेन दितिरिति समष्टिवचनेष्वसुरमातोच्यते । आक्रोशे चालुक् । विप्रचित्तिरपि दनोः सुतः । विप्रकृष्टा चित्तिरस्येति विप्रचित्तिः ॥ १८९ ॥ शिववरबलो हतः । अथ विधातृवरबलः ससार । तं पवनो न्यवारयत् ॥ १९० ॥ काञ्चनीं काञ्चनवर्णां गदां चिक्षेप पवनः । गदाभयकरो हि सः । असुरेषु गदां क्षिपन्, सुराणामभयं ददत् । असौ विप्रचित्तिः महाबलोऽपि नीचैः पपात । ततोऽपि महाबलेन वायुनाऽभिनुन्नत्वात् । अभितः अन्तस्थेन बहिष्ठेन च नुन्नः ॥ १९१ ॥ कालमपि नयति नियमयतीति कालनेमिः । **'नी-दलिभ्यां मिः'** [स.कं.२.१.२१९] इति भोजः । नेमिः । दल्मिः शङ्कुः । अजो यस्य वरं ददौ सोऽसुरः सहस्रशीर्ष इति तच्छब्दद्वयस्य सार्थक्यम् । 'ससहस्रशीर्षः' इत्येकं वा पदम् । **'कालनेमिरिति ख्यातो दानवः प्रत्यदृश्यत । शत्रुप्रहरणे घोरः शतबाहुः शताननः'** [स.प.५१.२१] इति भारते । **'शतप्रहरणोदग्रः शतबाहुः शताननः । शतशीर्षः स्थितः श्रीमान् शतशृङ्ग इवाचलः'** [१.४६.५०] इति हरिवंशे । **'स बाहुशतमुद्यम्य'** [१.४८.२९] इति, **'तच्च वक्त्रशतं घोरम्'** [४७] इति च । पाद्मे च तथा [सृ.खं.४३.१७२] । अत्र सर्वत्र शतशब्दो बहुत्ववचन इत्याचार्याशयः । नहि शतप्रहरण इति शतमेव प्रहरणानि । नापि शतशृङ्गस्य शतमेव शृङ्गाणि । अपि च कथं शतशीर्षः शतबाहुः स्यात्? तस्माद् युक्तम्–**'सहस्रशीर्षो द्विसहस्रबाहुयुक्'** इति । अदन्तः शीर्षशब्दोऽयम् । नत्वन्नन्तः **'शीर्षंश्छन्दसि'** [अ.सू.६.१.६०] इति निपातितः । तथाहि भोजः स्वकृत उणादिसूत्रे शॄधातोः सप्रत्ययेन शीर्षशब्दं निष्पादयति स्म–**'ऋचि-रिषि-कृति-वृश्चि-शॄ-गृधिभ्यः कित्'** [स.कं. २.३.१७०] इति । **'शीर्षं शिरः'** इति तद्वृत्तौ दण्डनाथनारायणः ॥ १९२ ॥

तमापतन्तं प्रसमीक्ष्य मारुतस्त्वदाज्ञया दत्तवरस्त्वयैव ।
हन्तव्य इत्यस्मरदाशु हि त्वां तदाऽऽविरासीस्त्वमनन्तपौरुषः ॥ १९३ ॥

तमस्त्रशस्त्राणि बहूनि बाहुभिः प्रवर्षमाणं भुवनाप्तदेहम् ।
चक्रेण बाहून् विनिकृत्य कानि च न्यवेदयश्चाऽशु यमाय पापम् ॥ १९४ ॥

ततोऽसुरास्ते निहता अशेषास्त्वया त्रिभागा निहताश्चतुर्थम् ।
जघान वायुः पुनरेव जातास्ते भूतळे[1] धर्म्मबलोपपन्नाः ॥ १९५ ॥

राज्ञां महावंशसुजन्मनां तु तेषामभूद् धर्म्ममतिर्विपापा ।
शिक्षामवाप्य द्विजपुङ्गवानां त्वद्भक्तिरप्येषु हि काचन स्यात् ॥ १९६ ॥

**कानि च शिरांसि च ॥ १९४ ॥ ततः कालनेमिवधानन्तरम् । ते असुराः अशेषाः (नि)हताः । केन केन हता इत्यतस्तद्विभागमाह–त्वयेत्यादिना ॥ १९५ ॥ काचन अल्पा ॥ १९६–७ ॥**

---

**'इन्द्रं यमं च वरुणं वायुं च धनदं रविम् । तान् सर्वान् सहसा जित्वा कालनेमिर्महासुरः । ददर्श गगने विष्णुं सुपर्णस्थं महाद्युतिम्'** [स.प. ५१.२८–९] इत्यादिवचनभावमाह–तमापतन्तम् । प्रसमीक्ष्य तेन प्रसक्तं सङ्ग्राममीक्षित्वा, सम्प्रति किं प्रस्तुतमिति समीक्ष्य विचार्य, विप्रचित्तिर्विधातृवरगुप्तोऽपि पवनेन पातितः । कालनेमिरप्यजेयत्वमजेन वव्रे । अथापि अस्मायजेयत्वं देहीति विष्णवाज्ञया हि विधाता वरं ददौ । अतस्तद्धनने विधातृवरोल्लङ्घनं न केवलम्, विष्णवाज्ञोल्लङ्घनमपि स्यादिति पवनस्तं न जघान । **'तत्+आविरासीः'** इति, **'तदा+आविरासीः'** इति वा प्रतृण्णपाठः । तत् तस्मात् मारुतेन स्मृतत्वात्, तदा तत्स्मरणसमनन्तरमेव ॥ १९३ ॥ बाहुभ्यां वर्षन्ति । अयं तु सहस्रबाहुभिर्ववर्षेति प्रवर्षमाणमित्याह । स्वार्थपरायणता हि तेषामसुराणां स्वधर्म इति च प्रवर्षमाणमित्याह । शक्तश्चायं वरलब्धबलः प्रवर्षणायेति च प्रवर्षमाणमित्याह । शक्तौ चानश् [अ.सू.३.२.१२९] । युद्धभूमिं परितः व्याप्तदेहम् । सूक्ष्मरूपेण सर्वभूतमनांसि व्याप्याक्रममाणं च । कानि शिरांसि च विनिकृत्य । कृती च्छेदने । निरये नियमनाय यमाय प्रादाः । नत्वन्धंतमः प्रावेशयः ॥ १९४ ॥ चतुर्थं भागम् । पूर्वं स्वभावतोऽधर्मबलोपपन्नाः सम्प्रति परिसरप्रभावतो धर्मबलोपपन्नाः सन्तस्ते भूतळे पुनर्जाताः ॥ १९५ ॥ विष्णुभक्त्यादिगुणैर्महान् वंशः । धर्मानुकूलं च जन्म सुजन्म । तुना परिसरोऽपि धर्ममतिहेतुरिति सर्वं तेषां स्वरूपविपरीतमित्याह । परिसरसाद्गुण्यमेव किञ्चिद् विवृणुते– द्विजपुङ्गवानां सविधे, द्विजपुङ्गवानां या समुचिता तादृशीं शिक्षामवाप्य ॥ १९६ ॥

---

१. 'भूतले'

त्वद्भक्तिलेशाभियुतः सुकर्म्मा व्रजेन्न पापां तु गतिं कथञ्चित् ।
दैत्येश्वराणां च तमोऽन्धमेव त्वयैव क्लृप्तं ननु सत्यकाम ॥ १९७ ॥

धर्मस्य मित्थ्यात्वभयाद् वयं त्वामथापिवा दैत्यशुभाप्तिभीषा ।
सम्प्रार्त्थयामो दितिजान् सुकर्म्मणस्त्वद्भक्तितश्च्यावयितुं[१] च शीघ्रम् ॥ १९८ ॥

य उग्रसेनः सुरगायकः स जातो यदुष्वेष[२] तथाभिधेयः ।
तवैव सेवार्त्थममुष्य पुत्रो जातोऽसुरः कालनेमिः स ईश ॥ १९९ ॥

यस्त्वत्प्रियार्त्थं न हतो हि वायुना भवत्प्रसादात् परमीशिताऽपि[३] ।
स एष भोजेषु पुनश्च जातो वरादुमेशस्य परैरजेयः ॥ २०० ॥

**धर्मादिमतामपि सद्गत्यभावे धर्मस्य मिथ्यात्वभयात् मोघत्वभयात् । अथापि धर्मस्य मिथ्यात्वपरिहारार्थं तेषां सद्गतिदाने दैत्यशुभाप्तिभीषा वा दैत्या(नां) सद्गतिर्भवेदिति भिया वा । च्यावयितुं मोचयितुम् ॥१९८॥ कोऽसुरः कुत्र जात इत्यतस्तद् विविच्याह– य उग्रसेन इत्यादिना । तथाऽभिधेयः अत्राप्युग्रसेननामा ॥ १९९ ॥ परं सम्यक् ॥ २०० ॥**

त्वद्भक्तिलेशेऽभिलाषयुतोऽपि, अभिमानयुतोऽपि । ननु नैव । क्लृप्तिश्च नान्यथा भवितुमर्हति । सत्यकामत्वात् तव ॥ १९७ ॥ अथवा न केवलं धर्मस्य मिथ्यात्वभयात् । दैत्यानां शुभाप्तिभियाऽपि । परमवैदिक आचार्यः **'–भीषा'** इति वैदिकं पदमेव प्रायुङ्क्त । तेन **'भीषाऽस्माद् वातः पवते'** इत्यादिकां श्रुतिपद्धतिमनुगच्छति । देवाश्च वैदिकवचोभिरेव तुष्टुवुरिति च सूचयति । अन्यथा–**'–भीत्या'** इत्येवावक्ष्यत् । सङ्गत्य प्रार्थयामः । समर्थयामः प्रार्थयामश्च वा । अथच भक्तिपूर्वकमर्थनं प्रार्थनम् । लोकक्षेमहेतुत्वात् सम्प्रार्थनम् । भगवतः सम्मतं चेदं प्रार्थनमिति । सुकर्मण इति द्वितीया षष्ठी च । सुकर्मणः दितिजान् । सुकर्मणः भक्तितश्च ॥ १९८ ॥ यः सुरगायकः उग्रसेनः । स एष तथाभिधेयः तथैवाभिधीयत इति, उग्रसेननामैव जातः, तव सेवार्थमेव च जातः । तस्य कंसजनकत्वमपि हि भगवन्महिमाविष्करणोपनिबन्धनतया भगवत्सेवैव । तदेवाऽह– कालनेमिः अमुष्य पुत्रो जातः । **'कालनेमिरिति ख्यातो दानवानां महाबलः । स कंस इति विख्यात उग्रसेनसुतो बली'** [आ.प.६८.६७] इति च । ब्राह्मे च–**'कालनेमिर्हतो योऽसौ विष्णुना प्रभविष्णुना । उग्रसेनसुतः कंसः सम्भूतः स महासुरः'** [१८१.९] इति । अथच यदुग्रसेनस्याप्यासुरत्वं भारत उक्तम्–**'स्वर्भानुरिति विख्यातः श्रीमान् यस्तु महासुरः । उग्रसेन इति ख्यातः'** [आ.प.६८.१२–३] इति तदावेशमात्रपरम् । न स्वरूपकथनपरमित्यर्थः । अत एव तस्यासुरजनकत्वप्रथा वृथा बभूव ॥ १९९ ॥ ईशिताऽपीति तृतीयार्थे प्रथमा ।

१. '–तश्चालयितुम्' २. 'यदुष्वेव तथा–' ३. 'परमीशताऽपि'

**स औग्रसेने जनितोऽसुरेण क्षेत्रे हि तद्रूपधरेण मायया ।**
**गन्धर्विजेन द्रमिळेन[1] नाम्ना कंसो जितो येन वराच्छचीपतिः ॥ २०१ ॥**

**औग्रसेने क्षेत्रे असुरेण कंसः कंसनामा जनितः ॥ २०१ ॥**

ईशित्राऽपि वायुना । **'सप्तसु प्रथमा'** इति सूत्रात् । **'सुपां सु–'** [अ.सू.७.१.३९] इति पाणिनिस्मरणाच्च । **'सुपां सुपो भवन्ति'** इति कात्यायनस्मरणाच्च । ननु तृतीयैव महता कण्ठेनोच्यताम्–ईशताऽपीति । किमित्ययं द्राविडप्राणायामः? तर्हि निर्विषयता स्यात् सूत्रस्य । तर्हि किं सूत्रमानरक्षणार्थमयं प्रयासः? न केवलं भोः । यत्रानेकार्थता तत्र सर्वार्थसमन्वयाय **'सप्तसु प्रथमा'** इति सूत्रप्रसरः । यथा **'ब्राह्मणोऽस्य मुखमासीत्'** इति । अस्य मुखादिति पञ्चम्यर्थे प्रथमा । अपिच 'अस्य मुखं ब्राह्मणपदगदितमासीत्' इति चार्थान्तरम् । उभयसङ्गमनाय प्रथमा प्रयुज्यते । एवमत्रापि बहूनर्थविशेषानुपक्षिपन्नाचार्यः प्रथमां प्रायुङ्क्त–'ईशिताऽपि' इति । तथाहि ईशिताऽपीति तावत् तलन्तं पदम् । स्वेच्छानियमनमीशित्वं भगवद्धर्मः । वायोरीशित्वमपि केवलं भवत्प्रसादादेव । न स्वतः । भवत्प्रसादात्, सदा भवन् विद्यमानः प्रसादो भवत्प्रसादः तस्मात् । सदातनात् भगवत्प्रसादात् परमितराधिकतया ईशित्वमस्ति वायोः । अथापि तेन वायुना । अथ त्वत्प्रियार्थं वायुना अभवत् प्रसादात् इति पदपाठः । ईशितेति तृजन्तं पदम् । न हतः । ब्रह्मवररूपात् प्रसादात् ईशिताऽपि समर्थोऽपि स कालनेमिः परं केवलं त्वत्प्रियार्थं हि वायुना न हतोऽभवत् । अन्यथा ब्रह्मवरमप्यगणयन् अहनिष्यदेव । अथच ईशितेति लुडन्तं पदम् । अथच कालनेमित्वे यो न हतो वायुना, यश्चेदानीन्तनजन्मनि कंसत्वे भवतः तव प्रसादात् 'भववरमत्तं नैनं सम्प्रति हनिष्यामि । जीवत्वयं जाल्मः' इतीच्छारूपाद् प्रसादात् । पितरमुग्रसेनं निगृह्य स्वयमीशिता, यदूनामीशिष्यते परमपि भवदवतारानन्तरमपि बहून् वत्सरान् । स एष भोजेषु पुनरपि जातः । वरादुमेशस्य– **'शूलिदत्तवरोन्मत्तः कंसो राजा दुरासदः'** [ब्र.खं.१३.२२] इति पाद्मे ॥ २०० ॥ औग्रसेने क्षेत्रे भार्यायाम् । यां पद्मावतीमाहुः । **'क्षेत्रं शरीरे केदारे सिद्धस्थानकलत्रयोः'** इत्यभिधानम् । कामोन्मत्तो द्रवन् मिलतीति द्रमिळेन नाम्ना । कदाचिदुद्यानेषु विहरन्तीमुग्रसेनभार्यामकस्माद् द्रमिळो नामासुरो ददर्श । दृष्ट्वा च तामेकचारिणीं मनोज्ञां चकमे । आससाद च तामौग्रसेनं वपुर्दधानः । तस्य मायामजानन्ती सा पतिव्रता तेन समं रेमे । अन्तरङ्गविलासैस्तमवबुद्ध्य चान्यं पुरुषं प्रोवाच– 'ब्रूहि कस्त्वम्? यो दुरात्मा मायया वञ्चयित्वा मामधर्षयः' इति । स द्रमिळः परिसान्त्वयन्नभ्यभाषत–'गन्धर्विकायां जातोऽहं द्रमिळो नाम । भाग्यशालिनी त्वमसि, यन्मनुजाङ्गनायास्ते मादृशो दुर्लभः कमिता लब्धः' इति । क्रुद्धाऽप्यसहाया सा केनाप्यज्ञातवृत्तान्ता गृहमेवान्वपद्यत । ततस्तद्वीर्येण सा कंसं सुषुव इति । सेयं भागवते प्रोक्ता कथा । उग्रसेनभार्या पद्मावती पितृगृहं गता वनेषूपवनेषु च रेमे इति पाद्मे [भू.खं.अ.४८–५१] विशेषः । पाद्मप्रचलितपाठानुसारेण तस्याः सम्भोक्ता च न द्रमिळः, किन्तु गोभिलः । लिपिकाराणां प्रमादः स्यात् । नामान्तरं वा स्यात् । स च मायामयमुग्रसेनरूपं धृत्वा विदर्भराजस्य सत्यकेतोस्तनयां पद्मावतीं बुभुजे । सा मुष्कस्थाने पत्युः सङ्केतमलब्ध्वा गोभिलं दैत्यं शशुमुद्यता ।

१. **'गन्धर्वजेन द्रमिलेन'**

**जित्वा जलेशं च हृतानि येन रत्नानि यक्षाश्च जिताः शिवस्य ।**
**कन्यावनार्त्थं मगधाधिपेन प्रयोजितास्ते च हृते बलेन ॥ २०२ ॥**

**स विप्रचित्तिश्च जरासुतोऽभूद् वराद् विधातुर्ग्गिरिशस्य चैव ।**
**सर्वैरजेयो बलमुत्तमं ततो ज्ञात्वैव[1] कंसस्य मुदा सुते ददौ ॥ २०३ ॥**

**निवारयामास न कंसमुद्धतं शक्तोऽपि यो यस्य बले न कश्चित् ।**
**तुल्यः पृथिव्यां विवरेषु वा क्वचिद् वशे बलाद् यो[2] नृपतींश्च चक्रे ॥ २०४ ॥**

**हतौ पुरा यौ मधुकैटभाख्यौ त्वयैव हंसो डिभकश्च[3] जातौ ।**
**वरादजेयौ गिरिशस्य वीरौ भक्तौ जरासन्धमनु स्म तौ शिवे ॥ २०५ ॥**

**अन्येऽपि भूमावसुराः प्रजातास्त्वया हता ये सुरदैत्यसङ्गरे ।**
**अन्ये तथैवान्धतमः प्रपेदिरे कार्य्या तथैषां च तमोगतिस्त्वया ॥ २०६ ॥**

**येन कंसेन । ते कन्यके च बलेन हृते ॥ २०२–३ ॥ विवरेषु पाताळेषु ॥ २०४–२१५ ॥**

---

परदाराणां बलाद् भोगो दैत्यानां स्वधर्म इत्याह गोभिलः । सा निराशा रुरोद । सख्य आगत्य किं जातमिति पप्रच्छुः । सा सर्वं वृत्तं श्रावयामास । तास्तन्मात्रे न्यवेदयन् । सा च भर्त्रे । स च राजा तनयामन्यैरनवगतप्रमादां मधुरां प्रति प्रेषयामासेति च पाद्मगा कथा । कमनीयः कंसो भवति । कामयन्ते कामिन्य एनमिति, कम्यते कामिनीभिरिति वा । कमेः सः ॥ २०१ ॥ जित्वा जलेशं च शिववरादेव । मगधाधिपेन जरासन्धेन स्वकन्ययोः अस्तिप्रास्त्योः अवनार्थं नियमिताः शिवपरिवारभूता यक्षाश्च जिताः । ते च कन्ये हृते ॥ २०२ ॥ यस्य कन्ये कालनेमिना कंसेन हृते स जरासुतो विप्रचित्तिः । **'विप्रचित्तिरिति ख्यातो य आसीद् दानवर्षभः । जरासन्ध इति ख्यातः स आसीन्मनुजर्षभः'** [आ.प.६८.४] इति हि सम्भवे ॥ २०३ ॥ शिववरोद्धतं कंसं विधातृवरबलात् स्वयं निग्रहीतुं शक्तोऽपि तत्सहायेन चक्रवर्ती बुभूषन् न तं निवारयामास । कन्ययोर्वरोऽप्यलब्ध, स्वस्य सम्राट्त्वमनोरथोऽपि सेत्स्यतीत्येका क्रिया द्व्यर्थ-करी भूयादिति स्वप्नं पश्यन् । विवरेषु पाताळादिषु ॥ २०४ ॥ हन्ति हिनस्ति साधूनिति हंसः । डयमानो भातीति डिभकः, डीभकश्च । डीङ् विहायसा गतौ । डिभिक इत्यपपाठः । जातौ ब्रह्मदत्ततनयत्वेन । शिवे भक्तौ ॥ २०५ ॥ सुरदैत्य-

---

१. **'तज्ज्ञात्वैव'** २. **'बलाढ्यो नृ–'** ३ **'डिभिकश्च'**

**व्यासावतारे निहतस्त्वया यः कलिः सुशास्त्रोक्तिभिरेव चाद्य ।**
**श्रुत्वा त्वदुक्तीः पुरुषेषु तिष्ठन्नीषच्चकारेव मनस्त्वयीश ॥ २०७ ॥**

**रामात्मना ये निहताश्च राक्षसा दृष्ट्वा बलं तेऽपि तदा तवाद्य ।**
**समं तवान्यं नहि चिन्तयन्ति सुपापिनोऽपीश तथा हनूमतः ॥ २०८ ॥**

**ये केशव त्वद्बहुमानयुक्तास्तथैव वायौ नहि ते तमोऽन्धम् ।**
**योग्याः प्रवेष्टुं तदतो हि मार्ग्गाच्चाल्यास्त्वया जनयित्वैव भूमौ ॥ २०९ ॥**

**नितान्तमुत्पाद्य भवद्विरोधं तथा च[1] वायौ बहुभिः प्रकारैः ।**
**सर्वेषु देवेषु च पातनीयास्तमस्यथान्धे कलिपूर्वकासुराः ॥ २१० ॥**

**हतौ च यौ रावणकुम्भकर्ण्णौ त्वया त्वदीयौ प्रतिहारपालौ ।**
**महासुरावेशयुतौ हि शापात् त्वयैव तावद्य विमोचनीयौ ॥ २११ ॥**

**यौ तौ तवारी ह तयोः प्रविष्टौ दैत्यौ तु तावन्धतमः प्रवेश्यौ ।**
**यौ तौ त्वदीयौ भवदीयवेश्म त्वया पुनः प्रापणीयौ परेश ॥ २१२ ॥**

**आविश्य यो बलिमञ्जश्चकार प्रतीपमस्मासु तथा त्वयीश ।**
**स चासुरो बलिनामैव भूमौ साल्वो नाम्ना ब्रह्मदत्तस्य जातः ॥ २१३ ॥**

---

सङ्गरे सुरासुरसङ्गर इत्युक्तार्थम् ॥ २०६–७ ॥ तदा तव बलं दृष्ट्वा अद्य तव सममन्यं न चिन्तयन्ति । तथा हनूमतः समं चान्यम् ॥ २०८ ॥ तानपि भूमौ जनयित्वा, स्वयं चाऽत्मानं जनयित्वा भूमौ प्रादुर्भाव्य ॥ २०९ ॥ तथा वायौ च, सर्वेषु देवेषु च विरोधम् ॥ २१० ॥ प्रतिह्रियते आव्रियत इति प्रतिहारो द्वारम् । सनकादीनां शापात् ॥२११॥ 'अरी हतयोः' इति, 'अरी इह तयोः', 'अरी ह तयोः' इति च च्छेदः । यौ तौ तवारी । त्वयैव पूर्वं द्विः हतयोः तयोः प्रतिहारपालयोः इह तृतीयजन्मनि शिशुपालदन्तवक्रभावे च पुनः प्रविष्टौ तवारी हिरण्याक्षहिरण्यकशिपू । इति ह सनकादिशापेन निश्चितः पन्था इति । 'अरी+इह' इति पदपाठे **'कृत्वा भाष्यानुभाष्येऽहम्'** इत्यादिवदप्रग्रहः । तेन असुरयोः प्रतिहारपालाभ्यां नित्यमवियोगमाह त्रिष्वपि जन्मसु । **'दितेः पुत्रस्तु यो राजन् हिरण्यकशिपुः स्मृतः । स जज्ञे मानुषे लोके शिशुपालो नरर्षभः'** [आ.प.६८.५] इति च ॥ २१२ ॥ अञ्जः आशु बलाद् वा ।

---

१. **'तथैव वायौ'**

मायामयं तेन विमानमग्र्यमभेद्यमाप्तं सकलैर्गिरीशात् ।
विद्रावितो यो बहुशस्त्वयैव रामस्वरूपेण भृगूद्वहेन ॥ २१४ ॥

नासौ हतः शक्तिमताऽपि तत्र कृष्णावतारे स मयैव वद्ध्यः ।
इत्यात्मसङ्कल्पमृतं विधातुं स चात्र वद्ध्यो भवताऽतिपापी ॥ २१५ ॥

यदीयमारुह्य विमानमस्य पिताऽभवत् सौभपतिश्च नाम्ना ।
यदा स भीष्मेण जितः पिताऽस्य तदा स साल्वस्तपसि स्थितोऽभूत् ॥ २१६ ॥

स चाद्य तस्मात् तपसो निवृत्तो जरासुतस्यानुमते स्थितो हि ।
अनन्यवद्ध्यो भवताऽद्य वद्ध्यः स प्रापणीयश्च तमस्यथोग्रे ॥ २१७ ॥

यो बाणमाविश्य महासुरोऽभूत् स्थितः स नाम्ना प्रथितोऽपि बाणः ।
स कीचको नाम बभूव रुद्रवरादवध्यः स तमः प्रवेश्यः ॥ २१८ ॥

अतस्त्वया भुव्यवतीर्य्य देवकार्य्याणि कार्य्याण्यखिलानि देव ।
त्वमेव देवेश गतिः सुराणां ब्रह्मेशशक्रेन्दुयमादिकानाम् ॥ २१९ ॥

**सौभस्य साल्वेन लब्धत्वात् ब्रह्मदत्तः कथं सौभपतिरित्युच्यत इत्यत आह– यदीयमिति । ननु ब्रह्मदत्तस्याभेद्यं विमानमस्ति चेत् कथं तर्हि पूर्वं स्वयंवरावसरे भीष्मेण जित इत्यत आह– यदेति । तपसि स्थितः सौभार्थमिति शेषः । एवं च तस्य स्वयंवरावसरे सौभं नाभूदित्युक्तं भवति ॥ २१६–२६ ॥**

---

आविश्य । अमृतमथने बलिं प्रह्लादस्य पौत्रं बलिमाविश्य । यो भाविनि मन्वन्तर इन्द्रो भविता । यः पूर्वमम्बां चकमे तस्य ब्रह्मदत्तस्य जातः सुतः सन् जात उत्पन्नः ॥ २१३ ॥ तेन साल्वेन । सकलैरभेद्यम् । गिरीशादाप्तम् । भृगूद्वहेन । वंशधरः कुलज उद्वह उच्यते ॥ २१४ ॥ कृष्णावतारे स मयैव वध्यः । वक्ष्यति च–**'कृष्णावतारमुपगम्य निहन्मि साल्वम्'** [२२.४५] इति । विस्तरस्तु तत्र व्याख्याने द्रष्टव्यः ॥ २१५ ॥ यदा अम्बापरिणयप्रसङ्गे ॥ २१६ ॥ न केवलं वध्यः । अथ वधानन्तरं यथा न पुनर्भुवि जायेत तथा उग्रे अन्धे तमसि प्रापणीयः प्रवेशनीयः पातनीय इत्येतत् । नित्यदुःखं प्रापणीय इति वा ॥ २१७ ॥ बाणं बलिसुतमुषापितरमाविश्य यः स्थितः सोऽपि नाम्ना बाणः । बाण इति सनाम्ना समाननाम्ना प्रथित इत्येके ॥ २१८ ॥ भुवि चन्द्रवंशेऽवतीर्येति इन्दुपदेनाऽह । तत्रासुराणां मृत्युर्भवेति यमादिकानां

**त्वमेव नित्योदितपूर्णशक्तिस्त्वमेव नित्योदितपूर्णचिद्घनः ।**
**त्वमेव नित्योदितपूर्णसत्सुखस्त्वादृङ् न कश्चित् कुत एव तेऽधिकः ॥ २२० ॥**

**इतीरितो देववरैरुदारगुणार्णवोऽक्षोभ्यतमामृताकृतिः ।**
**उत्थाय तस्मात् प्रययावनन्तसोमार्ककान्तिद्युतिरन्वितोऽमरैः ॥ २२१ ॥**

**स मेरुमाप्याऽह चतुर्मुखं प्रभुर्यत्र त्वयोक्तोऽस्मि हि तत्र सर्वथा ।**
**प्रादुर्भविष्ये भवतो हि भक्त्या वशस्त्विवाहं[1] स्ववशोऽपि चेच्छया ॥ २२२ ॥**

**ब्रह्मा प्रणम्याऽह तमात्मकारणं प्रादां पुराऽहं वरुणाय गाः शुभाः ।**
**जहार तास्तस्य पिताऽमृतस्रवाः स काश्यपो द्राक् सहसाऽतिगर्वितः ॥ २२३ ॥**

---

गतिस्त्वमेवेत्याह । तारतम्यक्रमेण चात्र निर्देशः । एककक्ष्यागतो यम इन्दोः किञ्चिदून इति परस्तान्निर्देशः । कनाऽनुकम्पते ॥ २१९ ॥ उदितमतिरोहितम् । चिता ज्ञानेन घनः सान्द्रः । तेनाज्ञानसामानाधिकरण्यं निराह । सत् दुःखासम्भिन्नं सुखम् । कुतः कथं कुत्र वा स्यात् ॥ २२० ॥ तस्मात् पूर्वोक्तात् नागभोगात् क्षीराब्धेर्वा । अक्षोभ्यतमा अविचाल्यतमा अमृता नित्या चाऽकृतिर्यस्य । क्षुभ सञ्चलने । सञ्चलनं स्वभावविपर्यासः । अस्थिरता च मनसः । सोम इव शीतळ-कान्तिः । अथापि अर्क इव तेजसा द्योतमानः । कमनीया हि कान्तिर्भवति । या विद्युदिव द्योतते चक्षुरास्फाल्य सा द्युतिः ॥ २२१ ॥ मेरुमाप्येति । **'उत्पत्य शयनाद् विष्णुर्ब्रह्मणा विबुधैः सह । देवानां च हितार्थाय ययौ देवसभां प्रति । मेरोः शिरसि विन्यस्तां ज्वलन्तीं तां शुभां सभाम् । विविशुस्ते सुराः सर्वे ब्रह्मणा सह भारत'** [स.प.५१.४३–४] इति च । **'तदागच्छ महाभाग सह वै मन्त्रकारणात् । ब्रजामो मेरुशिखरं पुरस्कृत्य वसुन्धराम्'** [१.५१.३२] इति च हरिवंशे ब्रह्मवचनम् । प्रादुर्भविष्ये । उत्पत्त्यर्थे भवतिरात्मनेभाषोऽपि । भगवतः प्रादुर्भावश्च परार्थोऽपि **'ज्ञानी त्वात्मैव मे'** इति वचनादात्मार्थ इव । देवानामिच्छैव ममेच्छेत्याह । तुना भक्त्याधिक्येन सर्वाधिकं तद्वशत्वमाह । **'भक्तिवशः पुरुषः'** इति श्रुतिः ॥ २२२ ॥ आत्मनां जीवानां सृष्ट्यादिमुक्त्यन्तकारणम्, स्वस्य च विशिष्य कारणम्, आत्मकस्य आत्मानन्दस्य जीवात्मनामानन्दस्य वाऽरणमाश्रयम् । आत्मकानामल्पात्मनामरणं शरणम् । वरुणः द्वादश-स्वादित्येष्वेकः । तस्य वरुणस्य पिता । सहसाऽतर्कितम् । बलात्कारेण वा । अमृतस्रवाः अमृततुल्यक्षीरस्रवाः । **'अमृतं यज्ञशेषे स्यात् पीयूषे सलिले घृते । अयाचिते च मोक्षे च'** इत्यभिधानम् । अमृतस्रवणं हरणे हेतुः । अथापि कथं जहार? आह–अतिगर्वित इति । विवेकमतिक्रम्योद्भूतेन गर्वेण पिहितनयनः ॥ २२३ ॥

---

१. **'वशस्तवाहम्'**

**मात्रा त्वदित्या च तथा सुरभ्या प्रचोदितेनैव हृतासु तासु ।**
**श्रुत्वा जलेशात् स मया तु शप्तः[1] क्षत्रेषु गोजीवनको भवेति ॥ २२४ ॥**

**शूरात् स जातो बहुगोधनाढ्यो भूमौ यमाहुर्वसुदेव इत्यपि ।**
**तस्यैव भार्य्या त्वदितिश्च देवकी बभूव चान्या सुरभिश्च रोहिणी ॥ २२५ ॥**

**तत् त्वं भवस्वाऽशु च देवकीसुतस्तथैव यो द्रोणनामा वसुः सः ।**
**स्वभार्य्यया धरया त्वत्पितृत्वं प्राप्तुं तपस्तेप उदारमानसः ॥ २२६ ॥**

---

मात्रा तु वरुणस्य साक्षान्मात्रा अदित्या । सुरभ्या काश्यपस्यान्यया भार्ययाऽदितिभगिन्या च । मया तु शप्तः । तुना चेदमाह–स शापोऽपि तस्य कृष्णजननहेतुतामापाद्य वर एव बभूवेति । क्षत्रियः सन्नपि वैश्य इव भवेति कुत्सयति–गोजीवनक इति ॥ २२४ ॥ स जात इति । तथाहि हरिवंशेषु–**'पुरा हि काश्यपो विष्णो वरुणस्य महात्मनः । जहार यज्ञिया गा वै पयोदास्तु महामखे । अदितिः सुरभिश्चैते द्वे भार्ये काश्यपस्य तु । प्रदीयमाना गास्तास्तु नैच्छतां वरुणस्य वै । ततो मां वरुणोऽभ्येत्य प्रणम्य शिरसा ततः । उवाच भगवन् गावो गुरुणा मे हृता इति'** [ह.वं.प. १.५५.२१–३] इति, **'इत्यम्बुपतिना प्रोक्तो वरुणेनाहमच्युत । गवां कारणतत्त्वज्ञः काश्यपे शापमुत्सृजम् । येनांशेन हृता गावः काश्यपेन महर्षिणा । स तेनांशेन जगति गत्वा गोपत्वमेष्यति । या च सा सुरभिर्नाम अदितिश्च सुरारणिः । तेऽप्युभे तस्य भार्ये वै तेनैव सह यास्यतः'** [१.५५.३२–४] इति, **'स तस्य काश्यपस्यांशस्तेजसा काश्यपोपमः । वसुदेव इति ख्यातो गोषु तिष्ठति भूतळे'** [१.५५.३६] इति, **'तस्य भार्याद्वयं जातमदितिः सुरभिश्च ते । सुरभी रोहिणी देवी चादितिर्देवकी त्वभूत्'** [१.५५.३८] इति च । **'क एष वसुदेवस्तु देवकी का यशस्विनी । पुरुषः काश्यपश्चासावदितिस्तत्प्रिया स्मृता'** [सृ.खं.१३.१४६ ] इति पाद्मे ॥ २२५ ॥ देवकीसुतः सन् भवस्व उत्पद्यस्व । प्रादुर्भवेत्येतत् । द्रोणनामा । यस्य धर इति पृथुरिति च नामान्तरम् । **'नन्दो द्रोणः समाख्यातो यशोदाऽथ धराऽभवत्'** [सृ.खं.१३.१४७] इति पाद्मे । यच्च ब्रह्माण्डे पठ्यते–**'पुरुषः काश्यपस्त्वासीददितिस्तत्प्रिया तथा । काश्यपो ब्रह्मणोंऽशश्च पृथिव्या अदितिस्तथा । नन्दो द्रोणः समाख्यातो यशोदा च धराऽभवत्'** [ब्र.पु. उपो.पा.२३८–९] इति तत्र काश्यपे ब्रह्मण आवेशः, अदित्यां च पृथिव्या इत्यर्थः । अवश्यं चैतदेवं वक्तव्यम् । नहि ब्रह्मणः साक्षादवतारो भूमावस्ति । **'राजा । नन्दः किमकरोद् ब्रह्मन् श्रेय एवं महोदयम् । यशोदा च महाभागा पपौ यस्याः स्तनं हरिः ।......शुकः । द्रोणो वसूनां प्रवरो धरया सह भार्यया । करिष्यमाण आदेशं ब्रह्मणस्तमुवाच ह । जातयोर्नौ महादेवे भुवि विश्वेश्वरे हरौ । भक्तिः स्यात् परमा लोके ययाऽञ्जो दुरितं तरेत् । अस्त्वित्युक्तः स एतेन व्रजे द्रोणो महायशाः । जज्ञे नन्द इति ख्यातो यशोदा सा धराऽभवत्'** [१०.९.४६–५०] इति भागवते । **'तयोर्वां पुनरेवाहमदित्यामास काश्यपात् । उपेन्द्र इति विख्यातो वामनत्वाच्च वामनः । तृतीयेऽस्मिन् भवेऽहं**

---

१. 'मयाऽभिशप्तः'

तस्मै वरः स मया सन्निसृष्टः स चाऽस नन्दाख्य उतास्य भार्य्या ।
नाम्ना यशोदा स च शूरतातसुतस्य वैश्याप्रभवोऽथ गोपः ॥ २२७ ॥

तौ देवकीवसुदेवौ च तेपतुस्तपस्त्वदीयं सुतमिच्छमानौ ।
त्वामेव तस्मात् प्रथमं प्रदर्श्य तत्र स्वरूपं हि ततो व्रजं व्रज ॥ २२८ ॥

इतीरिते[१] सोऽब्जभवेन केशवस्तथेति चोक्त्वा पुनराह देवताः ।
सर्वे भवन्तो भवताऽशु मानुषे कार्य्यानुसारेण यथानुरूपतः ॥ २२९ ॥

अथावतीर्ण्णाः सकलाश्च देवता यथायथैवाऽह हरिस्तथातथा ।
वित्तेश्वरः पूर्वमभूद्धि भौमाद्धरेः सुतत्वेऽपि तदिच्छयाऽसुरात् ॥ २३० ॥

**शूरतातसुतस्य । शूरस्य तातः शूरतातः । तस्य पुत्रः अक्रूरः[२](?) ॥ २२७ ॥ वसुदेवादुत्पत्तौ निमित्त-मनुवर्णयन्, उभयत्र कथं स्यामिति शङ्कां च पूरयन्नाह– ताविति ॥ २२८–९ ॥ वित्तेश्वरः पूर्वं हरेः सुतत्वेऽपि तदिच्छया भगवदिच्छया असुराद् भौमात् नरकासुरादभूत् ॥ २३० ॥**

---

**वै तेनैव वपुषाऽथ वाम् । जातः–'** [१०.४.४२–३] इति च श्रीकृष्णवचनम् ॥ २२६ ॥ सन्निसृष्टः । सम्मततया निसृष्टो दत्तः । असुराणामजेयत्वं स्वस्यासम्मतमपि कथञ्चिद् दीयते । नेदं तथा । किन्तु देवानामपीष्टमिति सन्तुष्य निसृष्टः । शूरस्य तातः विडूरथः । तत्सुतस्य । ननु शूरतातसुतः शूरो वा स्यात् शूरभ्राता वा । तथैव स्फुटं वक्तव्ये किमनेन घट्टकुटीप्रभातेन? अवधत्स्व । शूरभ्रातुः इत्युक्ते समानोदरत्वं प्रतीयेत । तन्मा प्रतियायीति शूरतातसुत-स्येत्याह । शूरतातस्यैवायं सुतो न शूरमातुरिति । सोऽयं शूरभ्राता राजाधिदेव इति सम्भाव्यते । **'राजाधिदेवः शूरश्च विडूरथसुतोऽभवत्'** [उपो.पा.७१.१३७] इति ब्रह्माण्डे । विडूरथादन्यस्यां भार्यायां जाताच्छूरभ्रातुः वैश्यपत्न्यां जातो नन्द इत्यर्थः । यदि स शूरस्यैव सुत इत्याग्रहस्तदैवं व्याख्येयम्– ब्रह्मा भगवन्तं प्रत्याह– यो भवतस्तातः निश्चितः, स वसुदेवः सुतो यस्य स तातसुतः । शूरश्चायं तातसुतश्चेति । भवत्पितामहस्य पुत्र इति भवत्पितुर्भ्रातृतुल्य इत्यर्थः । हे शूरेति सम्बोधनं वा । वस्तुतस्तु शूरभ्रातुः सुत इत्येव स्वरसोऽर्थः । **'शूरतातसुतः शूर एव'** इति भावप्रकाशिकावचनं प्रक्षिप्तमिति भाति । अथ तस्मात् । यस्मात् वैश्याप्रभवः तस्माद् गोपः । **'वसुदेव उपश्रुत्य भ्रातरं नन्दमागतम्'** [१०.६.२०] इति भागवते ॥ २२७ ॥ त्वामेव सुतमिच्छमानौ । भगवन्मातापितरावावामिति य आनन्दातिशयस्तदात्मगामिफल-मिच्छन्तौ ॥ २२८ ॥ यस्य यत् कार्यम्, यस्य च यद् रूपम्, यत्र यथा च जन्मानुरूपं तथा अनुरूपतः, अनुरूपं जन्मादिकमपेक्ष्य । ये पूर्वं नाभवन् त इदानीमाशु भवत । यथानुरूपमिति प्रथमार्थे वा तसिः ॥ २२९ ॥ भौमात्

---

१. **'–रितः सो–'**

२. अत्रानन्वितमिदं पदम् । प्रायः **'तस्य सुतः शूरः'** इति सम्भावितः पाठः ।

पापेन तेनापहृतो हि हस्ती शिवप्रदत्तः सुप्रतीकाभिधानः ।
तदर्थमेवास्य सुतोऽभिजातो धनेश्वरो भगदत्ताभिधानः ॥ २३१ ॥

महासुरस्यांशयुतः स एव रुद्रावेशाद् बलवानस्त्रवांश्च ।
शिष्यो महेन्द्रस्य हते बभूव ताते स्वधर्म्माभिरतश्च नित्यम् ॥ २३२ ॥

अभूच्छिनिर्न्नाम यदुप्रवीरस्तस्याऽत्मजः सत्यक आस तस्मात् ।
कृष्णः पक्षो युयुधानाभिधेयो गरुत्मतोंऽशेन युतो बभूव ॥ २३३ ॥

यः संवहो नाम मरुत् तदंशश्चक्रस्य विष्णोश्च बभूव तस्मिन् ।
यदुष्वभूद्धृदिको भोजवंशे सितः पक्षस्तस्य सुतो बभूव ॥ २३४ ॥

**भगवदिच्छयाऽपि तत्सुतत्वे कारणमाह– पापेनेति ॥ २३१–२ ॥ कृष्णः पक्षः कृष्णपक्षाभिमानी देवः ॥ २३३ ॥ तस्मिन् युयुधाने मरुदंशः विष्णुचक्रांशश्च बभूव ॥ २३४–५ ॥**

---

भूमिसुतान्नरकात् । तस्य वराहात्मकहरेः सुतत्वेऽपि हरीच्छयैवासुरात् । को नु हरीच्छां नियुयुक्षति? तदिच्छयैव वित्तेश्वरः धनदस्तस्मादभूत् ॥ २३० ॥ तेन भौमेन । वित्तेश्वराय शिवप्रदत्तः । तदर्थम्, अपहृतं सुप्रतीकं प्रत्याहर्तुमेव । भगवता दत्तं भगदत्तमाहुः । भगेन भाग्येन सह दत्तश्च । अन्यथा सर्वेऽपि हि भगदत्ता एव ॥ २३१ ॥ महासुरस्यांशयुतः । अनेन **'बाष्कलो नाम यस्तेषामासीदसुरसत्तमः । भगदत्त इति ख्यातः स जज्ञे पुरुषर्षभः'** [आ.प. ६८.९] इति भारतवचनं गदिताभिप्रायम् । बाष्कलोऽनुह्लादपुत्रो महिषसोदरः ॥ २३२ ॥ अनमित्राच्छिनिरास । **'शीङो निप्रत्ययः, ह्रस्वश्च । शेत इति शिनिः'** इति वैयाकरणाः । लौकिकव्यवहारेषु शेते, भगवति जागर्तीति व्याख्येयम् । **'सा निशा पश्यतो मुनेः'** इति स्मरणात् । शिनोतीति शिनिरिति तु परमार्थः । **'शिञ् निशाने । निशानं तनूकरणम्'** इति क्षीरस्वामी । शत्रून् तनूकरोतीत्यर्थः । **'निशानं तीक्ष्णीकरणम्'** इत्यपरे । शत्रुषु पुनरात्मानं तीक्ष्णीकरोतीत्यर्थः । शिनेः सत्यकः । सत्यकाद् युयुधानः । अत एव तं शैनेयं सात्यकिमाहुः । **'सात्यकिः सत्यसन्धश्च योऽसौ वृष्णिकुलोद्वहः । पक्षात् स जज्ञे मरुतां देवानामरिमर्दनः'** [आ.प.६८.७९] इति । पक्षादिति कृष्णपक्षात् । तदाह–कृष्णः पक्षो युयुधानाभिधेय इति ॥ २३३ ॥ मरुतां पक्षस्य संवहस्याऽवेशाच्च । तदाह–यः संवहो नाम मरुत् तदंश इति । तस्मिन् कृष्णपक्षमानिनि युयुधाने संवहस्य विष्णुचक्रमानिनः प्रद्युम्नस्य चांशत आवेशः । हृदि कं सुखमस्येति हृदिकः । शत्रून् हरतीति हृदिक इति वैयाकरणाः । हृञः किकन् दुक् च । तथाहि भोजः–**'पिपीलिका-एतिक-कुशिक-हृदिक-मक्षिकादयः'** [स.कं.२.२.१८] इति । हरतीति हृद् भगवान् । तस्मिन् कं मनोऽस्येति वा । हृदि मनसि कमानन्द-

स पाञ्चजन्यांशयुतो मरुत्सु तथांऽशयुक्तः प्रवहस्य वीरः ।
नामास्य चाभूत् कृतवर्म्मेत्यथान्ये ये यादवास्तेऽपि सुराः सगोपाः ॥ २३५ ॥

ये पाण्डावानामभवन् सहाया देवाश्च देवानुचराः समस्ताः ।
अन्ये तु सर्वेऽप्यसुरा[1] हि मद्धयमा ये मानुषास्ते चलबुद्धिवृत्तयः ॥ २३६ ॥

लिङ्गं सुराणां हि परैव भक्तिर्विष्णौ तदन्येषु च तत्प्रतीपता ।
अतोऽत्र येये हरिभक्तितत्परास्तेते सुरास्तद्धरिता विशेषतः ॥ २३७ ॥

**इति श्रीमदानन्दतीर्थभगवत्पादविरचिते**
**श्रीमहाभारततात्पर्य्यनिर्ण्णये**
**भगवदवतारप्रतिज्ञा नाम**
**एकादशोऽद्धयायः**

—०—

[आदितः श्लोकाः– ११०९+२३७=**१३४६**]

**भुवि जातानां देवादीनां विभागं वदन् मानुषानपि विविच्य दर्शयति– य इत्यादिना । अन्ये हरिपाण्डवप्रतीपाः । ये मध्यमाः, न प्रतीपाः नचानुकूलाः, चलबुद्धिवृत्तयः, ते मानुषाः ॥ २३६ ॥ देवासुरनिश्चायकलिङ्गमाह– लिङ्गमिति । तद्धरिता विशेषतः सुराः, उत्तमा इति भावः ॥ २३७ ॥**

इति श्रीमहाभारततात्पर्यनिर्णयटीकायां श्रीवेदाङ्गतीर्थभट्टारकविरचितायां
तात्पर्यदीपिकायामेकादशोऽध्यायः

—०—

रूपं ब्रह्म यस्येति वा । शुक्लपक्षमानी हृदिकस्य सुतो बभूव कृतवर्मा हार्दिक्यः । शत्रुनिग्रहाय सदा सज्जीकृतं वर्मास्येति कृतवर्मा ॥ २३४ ॥ स पाञ्चजन्यमानिनः अनिरुद्धस्यांशयुतः । **'ततश्च कृतवर्माणं विद्धि राजन् जनाधिपम्'** [६८.८१] इति च । तत इति पक्षात्, मरुतां पक्षाच्च । शुक्लपक्षात्, प्रवहस्याऽवेशाच्च । तदेतदाह– सितः पक्ष इति, तथांऽशयुक्तः प्रवहस्येति च ॥ २३५ ॥ ये पाण्डवानां सहायास्ते देवाः देवानुचराश्च । अन्ये विरोद्धारः । भूभारहरणकर्मणि ये सहिता अयन्ते ते पाण्डवानां सहायाः । तेन न कर्णादिषु नापि भीष्मादिषूक्तलक्षणभङ्गः । भूभारभूता एव चान्ये तत्प्रतीपाः । ये मध्यमास्तटस्थास्ते मानुषाः ॥ २३६ ॥ परा भक्तिरेव लिङ्गम्, बाह्यं तु रूपादिकं व्यभिचरेदपि, इति

१. **'अन्येऽपि सर्वे त्वसुरा–'**

सर्वशास्त्रप्रमितं हि । तदन्येषु असुरेषु विष्णुप्रतीपता, चकारेण लिङ्गमित्यनुवर्तते । अवधारणार्थश्चायं चकारः– तत्प्रतीपता च तत्प्रतिकूलत्वमेव । येये हरिभक्तितत्परास्तेते सुराः । भक्तिभरिता भीमाद्या विशेषतः । येये अहरिभक्तितत्पराः तेते असुराः । अभक्तिभरिता शिशुपालजरासन्धाद्या विशेषतः ॥ २३७ ॥

**आचार्यगोविन्दकृते**
**श्रीमद्भारततात्पर्यनिर्णयस्य ।**
**निर्णिक्ते व्याख्याने निर्णयभावचन्द्रिकाख्याने**
**गतमेकादशाध्यायविवरणं सतां हृदयाभरणम् ॥ ✻ ॥**

**इत्याचार्यगोविन्दस्य कृतिषु श्रीमहाभारततात्पर्यनिर्णयपञ्चिकायां**
**निर्णयभावचन्द्रिकायामेकादशोऽध्यायः ।**

—०—

२२-१०-१२

# द्वादशोऽध्यायः

**[पाण्डवोत्पत्तिः]**

**ॐ ॥ बभूव गन्धर्वमुनिस्तु देवकः स आस सेवार्त्थमथाऽहुकाद्धरेः ।**
**स उग्रसेनावरजस्तथैव नामास्य तस्मादजनि स्म देवकी ॥ १ ॥**

**अन्याश्च याः काश्यपस्यैव[1] भार्य्या ज्येष्ठां तु तामाहुक आत्मपुत्रीम् ।**
**चकार तस्माद्धि पितृष्वसा सा स्वसा च कंसस्य बभूव देवकी ॥ २ ॥**

**ॐ ॥ प्रसङ्गात् कृष्णस्य पितृवंशमुक्त्वेदानीं मातृवंशमुपक्रमते– बभूवेत्यादिना । देवकः देवकनामा गन्धर्वमुनिः बभूव स्थितः । आदाविति शेषः । अस्य नाम तथैव देवक इत्येव ॥ १–२ ॥**

---

ॐ ॥ **'यस्त्वासीद् देवको नाम देवराजसमद्युतिः । स गन्धर्वपतिर्मुख्यः क्षितौ जज्ञे नराधिपः'** [आ.प.६८.६८] इति च । अथेति कथान्तरे । भगवदवतारकथारम्भे मङ्गले च । गन्धर्वेषु देवको नाम मुनिर्बभूव । यथा नारदः । मरीचि-पुत्राः षट् देवलमुनिना शप्ता देवक्यां जाताः कंसेन निहता इति सम्प्रति पुराणेषु पठ्यते । नायं देवलः, किन्तु देवको नाम गन्धर्वमुनिरिति ज्ञापयितुं गन्धर्वमुनिरित्याह । अन्यथा गन्धर्वपतिरित्यवक्ष्यत् । वक्ष्यति च–**'ते देवकं प्राहसन् काश्यहेतोः'** [१२]इति । दीव्यति स्तौति देवान्, देवयति रमयति तेन देवान्, दीव्यन् क्रीडन् कायति गायति, देवान् वा कायतीति देवकः । हरेः सेवार्थं स आहुकाद् बभूव । आ जुहोति आहुतिदानेन देवान् प्रीणयतीत्याहुकः । तदाऽपि तथैव देवक इत्येव नामास्य । देवकस्य तनया देवकी । **'पुंयोगादाख्यायाम्'** [अ.सू.४.१.४८] इति ङीष् । ननु पुंयोग इति दाम्पत्यलक्षणः सम्बन्ध उच्यते । तत् कथं देवकतनया देवकी? दाम्पत्यलक्षणः सम्बन्ध इति प्रायोवादोऽयम् । क्वचिदन्यत्रापि भवति । तथाह्याह हरदत्तः–**'पुंयोगश्च न केवलं दाम्पत्यलक्षणः । किन्तु जन्यजनकत्वादिरूपोऽपि'** इति । तथाच स्त्रीत्वे सत्यधीनत्वं ङीबर्थ इति पर्यवसितम् । अथापि सम्बन्धनैकट्यं प्रयोगसिद्धम् । तेन प्रायो जायैवो-च्यते । तदयोगे तनया, अपत्यकृतिका, भोगदासी वा ॥ १ ॥ अन्याश्च षट् याः पूर्वं काश्यपस्यैव भार्यास्ता अपि

---

१. **'कश्यपस्यैव'**

सैवादितिर्वसुदेवस्य दत्ता तस्या रथं मङ्गलं[1] कंस एव ।
सँय्यापयामास तदा हि वायुर्ज्जगाद वाक्यं गगनस्थितोऽमुम् ॥ ३ ॥

विनाऽपराधं[2] न ततो गरीयसो न मातुलो वद्ध्यतामेति विष्णोः ।
लोकस्य धर्म्मानुवर्त्ततोऽतः पित्रोर्विरोधात्र्थमुवाच वायुः ॥ ४ ॥

**(मङ्गलं) वैवाहिकं रथम् ॥ ३ ॥ मातुलो वध्यतां नैति । गुरुत्वान्मातुलवधः कस्यापि न धर्मः यस्मादिति भावः । अतस्तस्मात्, विष्णोः विधिनिषेधबन्धरहितस्यापि, लोकस्य धर्मानुवर्ततः, लोकसङ्ग्रहार्थं लोकधर्मानुवर्तमानस्य । हेतुगर्भमिदं विशेषणम् । लोकधर्मानुवर्तमानत्वात्, ततः मातुलाद् गरीयसः अतिशयितगुरोः अपराधं विना वध्यतां नैति, मातुल इति शेषः ॥ ४–५ ॥**

---

तस्मादाहुकाद् देवक्या अन्वजनिषत । ताश्च– सहदेवा देवरक्षिता श्रीदेवोपदेवा शान्तिदेवा धृतदेवा च । ज्येष्ठां तु देवकीं पितामह आहुकः दत्तपुत्रीं स्वीचकार । यतः सोऽपुत्रीक आसीत् । दत्तपुत्रीत्वविवक्षायां कंसपितुरुग्रसेनस्य स्वसेति कंसस्य पितृष्वसा बभूव देवकी । देवकपुत्रीत्वात् पितृव्यपुत्रीति स्वसा च । **'तत्रैषा देवकी या ते मधुरायां पितृष्वसा । अस्या गर्भोऽष्टमः कंस स ते मृत्युर्भविष्यति'** [वि.प.१.१६] इति हरिवंशे । **'पितृष्वसः कृतो यत्नस्तव गर्भा हता मया'** [४.५०] इति च कंसवचनम् । अर्वाचीनास्तु एतं प्रमेयविशेषमजानन्तो हरिवंशपाठमेव व्यत्यास्यन्– **'मधुरायां लघुस्वसा'** इति, **'मृत्योः स्वसः कृतो यत्नः–'** इति च । सत्यमुक्तमाचार्यपादेन–अजानन्तोऽपि जानन्त इव भ्रान्त्या कुर्युः क्वचिच्च व्यत्यासमिति ॥ २ ॥ सैवादितिरिति काश्यपस्य वसुदेवस्यैव दत्ता । विवाहमङ्गलसम्बन्धित्वान्मङ्गलम् । सँय्यापयामास स्वयमेव सारथिर्भूत्वा सम्भ्रमेण यापयामास । गगनस्थित इति । न वायुरात्मानं दर्शयामास, किन्तु गगनभाषितं श्रावयामासेत्यर्थः ॥ ३ ॥ विनाऽपराधम् । प्राचीना एवं व्याचक्षते– न मातुलो वध्यतामेति कस्यापि इति लोकधर्मः । अतः, लोकस्य धर्मानुवर्ततो विष्णोरपि ततः मातुलादपि गरीयसः पित्रादेरपराधकरणं विना न मातुलो वध्यतामेति । अतः पित्रोर्विरोधाचरणेनापराधस्थैर्यार्थमुवाच वायुरिति । पित्रोरिति मातापित्रोः । ननु लोकातीतस्य लोकधर्मानुवर्तनमपि किङ्कारणम्? तदपि लोकसङ्ग्रहार्थमेवेति अनुवर्तत इति परस्मैभाषयाऽऽह । **'उत्सीदेयुरिमे लोका न कुर्यां कर्म चेदहम्'** इति हि स्वयमाह । नततः नतस्य प्रणतस्य शरणं गतस्य गरीयसोऽपराधं विनेति वा । वस्तुतस्तु, अवधारणेऽपि नञ्द्वयं प्रतनाः प्रयुञ्जते । **'न भोः न गन्तव्यं'** इति यथा । तथाच **'न न वध्यतामेति'**, नैव वध्यतामेतीत्यर्थः । उपरिष्टादप्येतादृशाः प्रयोगा भवन्ति–**'गतोऽपि न स्वकां तनुं प्रवेष्टुमत्र नेशसे'** इति [२१.८७] । **'दैवं बलं न शक्तोऽपि व्यक्तं चक्रे न मारुतिः'** [२२.३६३] इति च । **'न तस्य सम्पदः सर्वा महिष्यो वामलोचनाः । सार्वभौमस्य भूश्चेयं नाभवन् भूतिहेतवः'** [६.१४.१३] इति च भागवते ॥ ४ ॥

---

१. **'माङ्गलम्'**। **'माङ्गलिकं स एव'** इति क्वचित् ।
२. **'विनाऽपराधाद्धि ततो–'**

**मृत्युस्तवास्या भविताऽष्टमः सुतो मूढेति चोक्तो जगृहे कृपाणम् ।**
**पुत्रान् समर्प्यास्य च शूरसूनुर्विमोच्य तां तत्सहितो गृहं ययौ ॥ ५ ॥**

**षट् कन्यकाश्चावरजा गृहीतास्तेनैव ताभिश्च मुमोद शूरजः ।**
**बाह्लीकपुत्री च पुरा गृहीता पुराऽस्य भार्य्या सुरभिस्तु रोहिणी ॥ ६ ॥**

**राज्ञश्च काशिप्रभवस्य कन्यां[२] स पुत्रिकापुत्रकधर्म्मतोऽवहत् ।**
**कन्यां तथा करवीरेश्वरस्य धर्म्मेण तेनैव दितिं[३] दनुं पुरा ॥ ७ ॥**

**यो मन्यते विष्णुरेवाहमित्यसौ पापो वेनः पौण्ड्रको वासुदेवः ।**
**जातः पुनः शूरजात् काशिजायां नान्यो मत्तो विष्णुरस्तीति वादी ॥ ८ ॥**

**पु(रे)ति । (पुरा देवकीविवाहात् पूर्वम् । पुरा काश्यपत्वेऽपि अस्य भार्या सुरभिः, अद्य रोहिणी) ॥ ६ ॥ काशिप्रभवस्य कन्यां (तथा) करवीरेश्वरस्य कन्यामवहदिति सम्बन्धः ॥ ७–८ ॥**

---

वायुः किं जगाद? 'मूढ, अस्या अष्टमः सुतस्तव मृत्युर्भविता' इति जगाद । तदा कंसः किं चकार? इत्युक्तो जगृहे कृपाणम् । देवकीं हन्तुम् । तदा वसुदेवः किं चकार? पुत्रान् समर्प्य । अस्यामुत्पत्स्यमानान् पुत्रान् तवैव समर्पयामीति वचनं दत्वा ॥ ५ ॥ तदनन्तरं देवक्यवरजाः षट् च कन्यकास्तेनैव पत्नीत्वेन स्वीकृताः । **'तेषां स्वसारः सप्ताऽसन् धृतदेवादयो नृप । शान्तिदेवोपदेवा च श्रीदेवा देवरक्षिता । सहदेवा देवकी च वसुदेव उवाह ताः'** [९.२१.२३–४] इति भागवते । अयं व्युत्क्रमेण निर्देश इति सूचनाय षट् कन्यकाश्चावरजा इत्याह । **'देवकी शान्तिदेवा च सुदेवा देवरक्षिता । वृकदेव्युपदेवी च सुनाम्नी चैव सप्तमी'** [ह.वं.प.३७.२९] इति हरिवंशे । **'सहदेवा शान्तदेवा श्रीदेवी देवरक्षिता । वृकदेव्युपदेवी च देवकी चैव सप्तमी'** [ब्र.पु.१२.३७] इति ब्राह्मे । धृतदेवीमेव कचिद् वृकदेवीं पठन्ति । श्रीदेवी सुदेवीत्येका । सुनाम्नीति सहदेवा । तासां विवाहात् पूर्वं शन्तनुभ्रातुर्बाह्लीकस्य पुत्री रोहिणी च गृहीता यां पौरवीं कौरव्यायणीमाहुः । बलरामं च कौरव्यायणीपुत्रम् । या पुरा तु काश्यपत्वेऽपि भार्या सुरभिर्नाम । तुना तस्या अपि नियतभार्यात्वं स्मारयति । **'पौरवी रोहिणी नाम बाह्लीकस्याऽत्मजाऽभवत् । ज्येष्ठा पत्नी महाराज दयिताऽऽनकदुन्दुभेः'** [ह.वं.प.३५.४] इति हरिवंशेषु ॥ ६ ॥ पुत्रिकायाः पुत्र एव स्वपुत्र इति धारणा पुत्रिकापुत्रधर्मः । प्रीत्या स्वीकृतः पुत्रः पुत्रकः । पुत्र इव पुत्रक इति वा । पुत्रप्रतिनिधिः । **'इवे प्रतिकृतौ'** [अ.सू.५.३.९६] इति स्मरणात् । करवीरेश्वरस्य कन्यां पुरा मूलरूपे दनुमपि तेनैव पुत्रिकापुत्रकधर्मेणावहत् । यत उभावप्यपुत्रावास्ताम् । काशिराजसुता सुतनुः । करवीरेश्वरसुता बडवा । **'सुतनुर्बडवा चैव द्वे एते परिचारिके'** [ह.वं.प.३५.३] इति च । परिचारिके इति भोगिन्यौ पत्न्यावित्यर्थः ॥७॥ काश्यां भवः काशिरुच्यते । वेनः काशिजायां बभूव पौण्ड्रकनामा ।

---

२. 'कन्यकां स–'

३. '–रस्य तेनैव धर्मेण दितिम्'

**धुन्धुर्हतो यो हरिणा मधोः सुत आसीत् सुतायां करवीरेश्वरस्य ।**
**सृगालनामा [१]वासुदेवोऽथ देवकीमुदूह्य शौरिर्न्न ययावुभे ते ॥ ९ ॥**

**धुन्धोर्धुन्धुमारनृपतिना हतत्वेऽपि हरिणा हत इत्युक्तिस्तदन्तर्गतहर्यपेक्षया युज्यते ॥ ९ ॥**

---

वसुदेवजत्वाद् वासुदेवः । पुण्ड्रदेशं शशासेति पौण्ड्रकः । अहमेव विष्णुः, अतो मत्तोऽन्यो विष्णुर्नास्तीति वादी । अत एव मत्तः ॥ ८ ॥ धुन्धुर्हतः । सतः धुनोति भयकम्पितान् करोति, धुवति प्रच्यावयति च स्वस्थानादिति धुन्धुः । धुञ् विकम्पने । धू विधूनने । धुनोतेर्धुक्प्रत्यय इति वैयाकरणाः । नन्वयमिक्ष्वाकुवंशजेन कुवलाश्वेनाघानि । तेन स धुन्धुमार इति ख्यातश्च बभूव । तथाहि स्मरन्ति–**'बृहदश्वसुतश्चापि कुवलाश्व इति श्रुतिः । यः स धुन्धुवधाद् राजा धुन्धुमारत्वमागतः'** [वा.पु.उत्त.२६.२८] इति । तत् कथं 'धुन्धुर्हतो यो हरिणा'? अत्रास्ति किञ्चिद् रहस्यम् । अयमिह धौन्धुमार इतिहासः– वैवस्वतमनोर्ज्येष्ठस्तनयः इक्ष्वाकुः । यत ऐक्ष्वाकवः सूर्यवंशः । तत्तनयो विकुक्षिः । यः पित्रादेशात् श्राद्धार्थं मांसमानेतुं मृगयां गतो मध्येमार्गं श्रान्तः शशमांसमादेति शशादनामा बभूव । तत्तनयः पुरञ्जयः । यो वृषरूपेन्द्रस्य ककुदि स्थित्वा देवशत्रून् जित्वा इन्द्रवाह इति ककुत्स्थ इति च प्राख्यायत । अनेनाः काकुत्स्थः । पृथुरानेनसः । पृथोर्विश्वगन्धिरिति भागवते [९.७.२०] । विष्वगश्व इति भारते [व.प.२०५.३] । विष्टराश्व इति हरिवंशे [ह.वं.प.११.२१] । वीराश्व इति ब्राह्मे [५.५२] । पृषदश्व इति वायुप्रोक्ते [वा.पु.उत्त.२६.२६] । लिपिकृतो बहुधा लिखन्ति । तत्रभवान् भ्रमो नियोगपर्यनुयोगानर्हः । ततश्चन्द्र इति भागवते । आर्द्र इति भारते च हरिवंशे च । ब्राह्मे च । अन्ध्र इति वायुप्रोक्ते । अत्र प्राय आर्द्र इति नाक्षत्रं नाम । चन्द्र इति गौणम् । तस्माद् यवनाश्व इति वायुप्रोक्ते । युवनाश्व इत्यन्यत्र । तस्मात् शाबस्तिरिति भागवते । शाबस्ती तेन निर्मिता नगरीति च । श्रावस्त इत्यन्यत्र । श्रावस्ती नगरीति च । ततो बृहदश्वः । ततः कुवलयाश्व इति भागवते । कुवलाश्व इत्यन्यत्र सर्वत्रैक-कण्ठ्यम् । कुवलयमश्नुते व्याप्नोतीति कुवलयाश्वः । कौ स्वच्छन्दं वलन्तेऽस्याश्वा इति कुवलाश्वः । एवं वैवस्वत-मनोर्द्वादशः कुवलाश्वः यो धुन्धुं जघान । सत्यं लोकदृष्ट्या कुवलाश्वो धुन्धुं जघान । वस्तुतस्तु तस्मिन्नाविष्टो हरिरेव तं जघानेत्याह– धुन्धुर्हतो यो हरिणा । इदमिह रहस्यम् । धुन्धुश्चतुर्मुखाद् वरमाप–अवध्योऽहं भवानि भगवन् भवद-नुग्रहेण देवैर्दैत्यै रक्षोभिर्यक्षैर्नागैश्च गन्धर्वैश्चेति । ओमित्याह चतुर्मुखः । यदृच्छा बलवती । यदयं मनुष्येभ्य ऋषिभ्यश्च नावध्यतां छन्दयामास । अथापि ब्रह्मणा विश्राणितवरं कथं मनुष्या मुनयो वा हन्युः स्वतोऽल्पबला महाबलम् । सर्वव्यवस्थापनी भगवदिच्छा । तेन दिष्टमन्यथैव व्यवस्थापयामास । अस्ति किल पुरा उदङ्को नामर्षिः । स विष्णुमारिराधयिषुर्दुश्चरं तपोऽचरत् । तपसा प्रीतो भगवानृते भगवत्प्रीतेरन्यत् किमप्यनिच्छते तस्मै स्वयं वरमपूर्वं विश्राणयामास–'अस्ति धुन्धुर्नाम महासुरः । स ब्रह्मवरादवध्यः । अथापि त्वत्प्रचोदितं कमपि मनुष्यपोतमाविश्या-हमेव तं महाबलमसुरं मारयिष्यामि' इति । अथ राजा बृहदश्वः कुवलाश्वं राज्येऽभिषिच्य पुत्रसङ्क्रामितश्रीर्वन-

---

१. **'वसुदेवोऽथ'**

**ततस्तु तौ वृष्णिशत्रू बभूवतुर्ज्येष्ठौ सुतौ शूरसुतस्य नित्यम् ।
अन्यासु च प्राप सुतानुदारान् देवावतारान् वसुदेवोऽखिलज्ञः ॥ १० ॥**

**ततः वसुदेवेन स्वमात्रोः परित्यागात्, स्वभावतो भगवद्वेषित्वात्, वृष्णीनां भागवतत्वाच्च वसुदेवद्वारा वृष्णिशत्रू बभूवतुः ॥ १० ॥**

---

मजिगमिषत् । तमुदङ्को मुनिरूचे–'आरान्मदाश्रमात् अन्तःसमुद्रं वालुकापूर्णः कश्चन भूभागोऽस्ति । तत्र धुन्धुर्नाम महासुरो लोककण्टको वसति । तं लोकक्षेमाय निजहि । ततस्तपोवनं गच्छ यथेच्छम्' इति । बृहदश्व आह– 'न्यस्तशस्त्रोऽहं ममायं तनयस्तं हनिष्यति' इति । अथ 'मुन्युक्तमनुतिष्ठ' इति तनयमनुशिश्य तपोवनं ययौ । अथ सह पुत्रैः, सह च मुनिनोदङ्केन, धुन्धोर्वधाय प्रातिष्ठत कुवलाश्वः । भगवान् विष्णुस्तमाविवेश । स नारायणतेजसा समिद्धः समिते ययौ । तयोर्घोरः समरः प्रावर्तत । अन्ते ब्रह्मास्त्रेण कुवलाश्वस्तं दैत्यं ददाहेति कथा । इदमत्र देवगुह्यम् । धुन्धुरप्यवज्ञया दशकण्ठ इव मनुष्येभ्यो मुनिभ्यश्चावध्यत्वं नावृणीत । रावणं भगवान् स्वयं मानुषीं तनुमाश्रित्य जघान । धुन्धुं पुनरुदङ्कं स्वभक्तं मुनिं द्वारीकृत्य मानुषं कुवलाश्वमाविश्य सञ्जहारेति । तदेतत् सूचयन्नाचार्य आह–धुन्धुर्हतो यो हरिणा । लोकदृष्ट्या अहरिणा हरेरन्येन मनुष्यमात्रेण हतोऽपि वस्तुगत्या हरिणैव हत इति । आविश्य संहरन् हरिरित्यर्थः । कस्य पुत्रोऽयं धुन्धुः? **'मधुकैटभयोः पुत्रो धुन्धुर्नाम महासुरः'** [व.प.२०५.१७] इति भारते । कथमुभयोः पुत्रः? एक एव हि पिता भवति यस्य रेतःकणेन जायायां जायते पुत्रः । अत आह– मधोः सुतः । द्विविधो हि पुत्रो भवति–औरस औपचारिकश्च । तत्र धुन्धुरयं मधोरौरसः पुत्रः, उपचारपुत्रः कैटभस्य, पितृव्यत्वादित्यर्थः । कथं निर्णीयते मधोः सुत इति? मधोरेवोपचारपुत्रः स्यात् । कैटभस्यौरसः । न स्यात् । ग्रन्थान्तरसंवादात् । तथाहि भारतोपसंहाररूपे हरिवंशे–**'राक्षसस्य मधोः पुत्रो धुन्धुनामा महासुरः'** [ह.वं.प.११.३३] इति । उपसंहारो हि पाश्चात्यत्वाद् बलीयान् । तदनुसारेण चोपक्रम उन्नीयते । समाख्यातश्चैतदवसीयते । तथाहि प्रथमपुराणे–**'राक्षसस्य मधोः पुत्रो धुन्धुर्नाम महासुरः'** [ब्रा.पु.५.६३] इति । युक्तं चैतद् यद् बहुवाक्यानुगुणतयैकस्यार्थनिर्णयनम् । युक्ततमं च निरवकाशानुगुणतया सावकाशस्य । तस्मात् सुष्ठूक्तम्– मधोः सुत इति । सृगालस्य नामैव यस्य नाम । बुद्धिसाम्यात् । सृष्टिं गालयत इति सृगालः । गल स्रावणे । असृगालातीत्यसृगालं सन्तं वा सृगाल इत्याचक्षते परोक्षप्रियाः । सरति भयादिति सृगाल इति शाब्दिकाः । सरतेर्गकारोऽन्तादेशः, कालन् प्रत्यय इति भोजः । कालः प्रत्यय इति कातन्त्राः । अथ तयोः पुत्रजननानन्तरम् । उदुह्येति वक्तव्ये प्राञ्चो दीर्घमध्यमेव प्रयुञ्जते–उदूह्येति । दीर्घमिदं परिबन्धनं परिणयो नामेति । न केवलमुद्वहनमिदम्, किन्तूदूहनमपीति च । यत ऊहन्ते हि युवानः भाविनीं भार्यामप्सरसं ततः स्वर्गसुखं च मृषैव । तस्मादुदूह एवायमिति । अधिकं चेदमुद्वहनमुद्वाहो नामेति च । सर्वमिदं मनसि निधाय 'उदूह्य' इत्याह । सम्भाव्यते यदूढ्वेतिवदूह्येत्यपि दीर्घान्तं रूपं प्राचां सम्मतमिति । ते उभे पत्न्यौ न ययौ ॥ ९ ॥ ततस्तु सम्पर्कवर्जनहेतुना तौ तयोः सुतौ पौण्ड्रकसृगालौ वृष्णिशत्रू यदूनां शत्रू बभूवतुः । बाह्यं कारणमिदम् । वस्तुतस्तु ततः तयोरासुरस्वभावत्वादेव । एको हि दितिजः । दनुजोऽपरः । अखिलज्ञः । स्वस्य काश्यपत्वं तासां पूर्वरूपेऽपि स्वभार्यात्वमित्याद्यखिलं जानन् । विशेषतः अखिलं परिपूर्णं भगवन्तं जानन् ॥ १० ॥

येये हि देवाः पृथिवीं गतास्ते सर्वे शिष्याः सत्यवतीसुतस्य ।
विष्णुज्ञानं[१] प्राप्य सर्वेऽखिलज्ञास्तस्माद् यथायोग्यतया बभूवुः ॥ ११ ॥

मरीचिजाः षण् मुनयो बभूवुस्ते देवकं[२] प्राहसन् कार्श्यहेतोः ।
तच्छापतः कालनेमिप्रसूता अवद्ध्यतार्थं तप एव चक्रुः ॥ १२ ॥

धाता प्रादाद् वरमेषां तथैव शशाप तान् क्ष्मातळे[३] सम्भवध्वम् ।
तत्र स्वतातो भवतां निहन्तेत्यात्मान्यतो वरलिप्सून् हिरण्यः ॥ १३ ॥

**तस्मात् व्यासात् यथायोग्यतया विष्णुज्ञानं प्राप्य अखिलज्ञा बभूवुः ॥ ११ ॥ कृष्णस्योत्पत्तिं वक्तुं तत्स्वरूपं तदुत्पत्तिकारणं चाऽह– मरीचिजा इत्यादिना । तच्छापतः असुरा भवतेति शापतः । अवध्यतार्थमेव ॥ १२ ॥ तथैव अवध्यताऽर्थः यथा तथैव । हिरण्यः हिरण्यकशिपुः ॥ १३ ॥**

---

न केवलं वसुदेवस्य । सर्वेषां देवानां भूमाववतीर्णानां समानमेतदित्याह– येये हि । विष्णुज्ञानं प्राप्य सर्वेऽखिलज्ञाः । अपरोक्षज्ञानित्वात् । आमनन्ति हि–**'यस्मिन् विज्ञाते सर्वमिदं विज्ञातं भवति'** इति । यथा योग्यता तया तदनुगुणतया । यस्य यच्च यथावच्च योग्यं यथायोग्यम् । तस्य भावो यथायोग्यता । तयेति वा ॥ ११ ॥ मरीचेर्मुनेः काश्यपजनकस्य स्वायम्भुवेऽन्तरेऽन्यस्यां भार्यायां षट् पुत्रा बभूवुः स्मरो गीथः परिष्वङ्गः पतङ्गः क्षुद्रभृद् घृणी चेति । ते कदाचिद् गन्धर्वमुनिं देवकं पुत्रैः कलहायमानं ददृशुः । अतिकृशतया दुर्बलकायस्यापि महानस्याहो कोपाटोप इति चिन्तयन्तः, तत उद्गतं हासं नियन्तुमपारयन्तोऽन्तःश्मश्रु प्राहसन् । देवकस्तानपि शशाप कोपभरेण– 'असभ्या असुरयोनौ जायध्वम्' इति । अथ ते कालनेमिसुता बभूवुः । तेन च शापेन विलुप्तविज्ञानास्ते पुनरासुरभावेन पिहितनयना अवध्यतायै विधातारं प्रति तपोऽतप्यन्त । ओमित्याह धाता । अथायमुदन्तः कर्णान्तमाजगाम हिरण्यकशिपोः । अथ क्रुद्धः स तान् शशाप–'असुराणामहमेव धाता सर्वस्वदाता च । तत् किं मां विहाय ब्राह्मं तपश्चेरथ । अनेनापराधेन भूतळे पुनर्जायध्वम् । तत्र युष्मत्पितैव युष्मान् निहन्तु' इति । तदेवमवध्यत्वं स्वतातेन वध्यत्वं चेति विरुद्धद्वयमपि घटयितुमघटितघटनापटुर्भगवानेतन्नाटकं प्रकटयामास । स देवको मुनिर्यस्तान् शशाप, अत्र देवकीजनको बभूव । यश्च तेषां शापलब्धजन्मनां पिता कालनेमिः सोऽत्र कंसो बभूव । ते च देवक्यां जाताः । तानथ पूर्वपिता कंसो जघान । ननु तर्हि गतमवध्यत्वम् । न गतम् । अहता एव तेऽत्र जाताः । यतः भगवल्लीलानाटकनटी देवमाया दुर्गा तानसुरदेह एव प्रसुप्तान् विधाय, अंशतस्तानाकृष्य देवकीगर्भे निधाय पुनर्जनयामासेति । कंसनिहताः पुनः कालनेमिना जनितेषु शरीरेषु प्रविविशुः । प्रविश्य च दैत्यराजस्य बलेर्निकटे न्यूषुरिति । अथ बहोः कालादनन्तरं देवकी मृतपुत्रानदिदृक्षत । अथ कृष्णः सुतळमाविश्य बलेः सकाशात् तानानिनाय । ततश्च भगवान् तैर्बुद्धिवैकल्याद् ब्रह्मणा वृतमवध्यमसुरदेहं नाशयित्वा

---

१. 'विष्णोर्ज्ञानम्' २. 'देवलम्' इति क्वचित् । ३. 'क्ष्मातले'

**दुर्गा तदा तान् भगवत्प्रचोदिता प्रस्वापयित्वा प्रचकर्ष कायात् ।**
**क्रमात् समावेशयदाशु देवकीगर्भाशये [१]तान्यहनच्च कंसः ॥ १४ ॥**

**कालनेमिप्रसूतानामवध्यत्वं ब्रह्मवरस्यामोघत्वं क्ष्मातळे सम्भवध्वमित्यादिहिरण्यशापस्यामोघत्वं चाविरोधेन घटयन्नाह– दुर्गेत्यादिना । तान् कालनेमिप्रसूतान् प्रस्वापयित्वा कायात् प्रचकर्षेत्यनेन देहहननाभावात्**

सहजं ददाविति मरीचिपुत्राणां शापमालात्ययकथा । तदेतत् स्फुटं भागवतादिषु । तथाहि स्मरन्ति–**'आसन् मरीचेः षट् पुत्रा ऊर्जायां प्रथमेऽन्तरे । देवकं जहसुर्वीक्ष्य सुताञ्छपितुमुद्यतम् । तेनाऽसुरीमगुर्योनिममुनाऽवद्यकर्मणा । हिरण्यकशिपोः शापात् पुत्रास्ते योगमायया । देवक्या जठरे जाता राजन् कंसविहिंसिताः'** [भाग.१०.७४.४७–९] इति, **'पीत्वाऽमृतं पयस्तस्या पीतशेषं गदाभृतः । नारायणाङ्गसंस्पर्शप्रतिलब्धात्मदर्शनाः । ते नमस्कृत्य गोविन्दं देवकीं पितरं बलम् । मिषतां सर्वभूतानां ययुर्धाम विहायसा'**[१०.७४.५५–६] इति च । भागवतवचनस्यायमर्थः– देवक्या जठरे जातास्ते षट् पुत्राः हिरण्यकशिपोः 'पित्रैव वध्या भवत' इति शापात् कंसेन विहिंसिता इति । नन्वेवमर्थकरणे पुराणान्तरं कुप्यति । तथाहि ब्राह्मे–**'हिरण्यकशिपोः पुत्राः षड् गर्भा इति विश्रुताः'** [१८१.३६] इति । आग्नेये च–**'हिरण्यकशिपोः पुत्राः षड् गर्भा योगनिद्रया'** [१२.४] इति । एवं पुराणवादी प्रष्टव्यः– तर्हि पाद्मवचनं कथं व्याचक्षे– **'हिरण्याक्षस्य षट् पुत्राः–'** [उ.खं.२४५.२६] इति । यदि तत् पुंव्यत्यासेन सङ्गम्यते समः समाधिः । हिरण्यकशिपुरिति हिरण्याक्ष इति च पुंव्यत्यासेन कालनेमिरेवोच्यते । हिरण्येऽक्षाण्यस्येति हिरण्यं हिरुक् सुखमाक्षिपतीति । योगवृत्त्या सर्वेऽपि ह्यसुरा हिरण्याक्षाः । असुरमोहनार्थानि चेदृशानि वचनानि भवन्ति । वस्तुतस्तु हिरण्यकशिपोः पुत्रा इव पुत्राः । पुत्रतुल्यतया प्रीत्या स्वीकृता इति ब्राह्मवचनस्याऽग्नेयवचनस्य चार्थः । एवं पाद्मेऽपि **'हिरण्यकस्य षट् पुत्राः'** इति पठितव्ये भ्रान्त्या 'हिरण्याक्षस्य' इति पेठुरिति भाति । तेन सर्वाविरोधः । तदेतत् सर्वं सात्विकत्वेन प्रमाणतमत्वेन चानभ्युपगतेऽपि देवीभागवते स्फुटमुदितम्–**'स्वायम्भुवेऽन्तरे पुत्रा मरीचेः षण्महाबलाः । ऊर्जायां चैव भार्यायामासन् धर्मविचक्षणाः । ब्रह्माणं जहसुर्वीक्ष्य सुतां यभितुमुद्यतम् । शशाप तांस्तदा ब्रह्मा दैत्ययोनिं विशन्त्वधः । कालनेमिसुता जातास्ते षड्गर्भा विशाम्पते । अवतारेऽपरे ते तु हिरण्यकशिपोः सुताः । जातास्ते ज्ञानसंयुक्ताः पूर्वशापभयान्नृप । तस्मिन् जन्मनि शान्ताश्च तपश्चक्रुः समाहिताः । तेषां प्रीतोऽभवद् ब्रह्मा षड्गर्भाणां वरं ददौ । ब्रह्मोवाच– शप्ता यूयं मया पूर्वं क्रोधयुक्तेन पुत्रकाः । तुष्टोऽस्मि वो महाभागा ब्रुवन्तु वाञ्छितं वरम् । गर्भा ऊचुः– पितमहाद्य तुष्टोऽसि देहि नो वाञ्छितं वरम् । अवध्या दैवतैः सर्वैर्मानवैश्च महोरगैः । गन्धर्वसिद्धपतिभिर्वधो मा भूत् पितामह । व्यास उवाच– तानुवाच ततो ब्रह्मा सर्वमेतद् भविष्यति ।....हिरण्यकशिपुः क्रुद्धस्तानुवाच कुरूद्वह । यस्माद् विहाय मां पुत्रास्तोषितो वै पितामहः । ....युष्माभिर्हापितः स्नेहस्ततो युष्मांस्त्यजाम्यहम् ।....पाताळे निद्रयाविष्टास्तिष्ठन्तु बहुवत्सरान् ।....पिता वः कालनेमिस्तु तत्र कंसो भविष्यति । स एव जातमात्रान् वो वधिष्यति सुदारुणः'** [४.२२.८–२२] इत्यादि । अत्राविरुद्धं सर्वमपि ग्राह्यमेव । विरुद्धं यथासम्भवं योजनीयम् ॥१२–१३॥ दीर्घकालमिदं स्वापनमिति प्रस्वापयित्वेत्याह । षण्णामत्र जननं हननं च यावत् तावत् स्वापः । ततः सहैव प्रबोधः ।

१. 'तान् न्यह–'

ध्रु



तदा मुनीन्द्रसंयुतः सदो विधातुरुत्तमम् ।
स पाण्डुराप्तुमैच्छत न्यवारयंश्च ते तदा ॥ १५ ॥

यदर्त्थमेव[1] जायते पुमान् हि तस्य सोऽकृतेः ।
शुभां गतिं नतु व्रजेद् ध्रुवं ततो न्यवारयन् ॥ १६ ॥

प्रधानदेवताजने[2] नियोक्तुमात्मनः प्रियाम् ।
बभूव पाण्डुरेष तद् विना न तस्य सद्गतिः ॥ १७ ॥

अतोऽन्यथा सुतानृते व्रजन्ति सद्गतिं नराः ।
यथैव धर्म्मभूषणो जगाम सन्ध्यकासुतः ॥ १८ ॥

तदा कलिश्च राक्षसा बभूवुरिन्द्रजिन्मुखाः ।
विचित्रवीर्य्यनन्दनप्रियोदरे हि गर्भगाः ॥ १९ ॥

**हिरण्यशापाज्जातानां (स्व)सुता(नां)कालनेमिना कंसेन हतानां पुनः कालनेमिप्रसूतशरीरप्रवेशात् ब्रह्मवरामोघत्वं हिरण्यशापामोघत्वं च जातमित्युक्तं भवति ॥ १४ ॥ अथ पाण्डवोत्पत्तिं वक्तुमुपोद्घातमाह– तदेति ॥ १५ ॥ निवारणे निमित्तमाह–यदर्थमिति ॥ १६–८ ॥ तदा एवं मुनिपाण्डुविवादकाले । गर्भगा**

तानि अहनदिति प्रतृण्णम् । तानीति सामान्ये नपुंसकम् । तानि देवक्या अपत्यानि कंसोऽहनत् । **'तान् न्यहनत्'** इति पाठे स्फुटोऽर्थः ॥ १४ ॥ यदा षण्णां मुनिपुत्राणां देवक्या जननं कंसेन हननं प्रावर्तत तदा मुनीन्द्रसंयुतः । **'अमावास्यां तु सहिता ऋषयः संशितव्रताः । ब्रह्माणं द्रष्टुकामास्ते सम्प्रतस्थुर्महर्षयः'** [आ.प.१२५.५] इति, **'पाण्डुरुत्थाय सहसा गन्तुकामो महर्षिभिः । स्वर्गपारं तितीर्षुः स शतशृङ्गादुदङ्मुखः । प्रतस्थे सह पत्नीभ्याम्–'** [८–९] इति च सम्भवे । मुनीन्द्रैः सह सर्वलोकोत्तमं विधातुः सदः, गन्तुमाप्तुं चैच्छत । असम्भवे योगेन तनुं त्यक्त्वाऽपि सत्यलोकमाप्नवानीति केवलं स्वार्थमैच्छत । मुनीन्द्राणामग्रतः स्वेच्छामाविश्चकारेत्येतत् । यदा एवमिच्छां प्रकटीचकार तदा ते च तस्य तां प्रवृत्तिं न्यवारयन् ॥ १५ ॥ कुतो न्यवारयन्? आह–यदर्थमेव जायते । ध्रुवं निश्चयेन न व्रजेत् । तुना भगवन्नियतिरीदृशीत्याह । ततो ध्रुवं न्यवारयन् ॥ १६ ॥ प्रधानदेवतानां जनो जननम् । तन्निमित्तम्, जननाख्ये कर्मणि वा, प्रियां नियोक्तुम् । बभूव भूमावजायत ॥ १७ ॥ अतोऽन्यथा । यदर्थं जातास्तस्य करणे सति सुतानृतेऽपि सद्गतिं व्रजन्ति । सन्ध्यकायां सन्ध्यावळ्यां रुग्माङ्गदाज्जातः धर्मभूषणो जगाम सद्गतिम् । एकादशीव्रतदीक्षामात्रेण । तदर्थमेव तस्य जातत्वात् । यथा चात्रैव भीष्मः यथा वोर्ध्वरेतसः सनकादयो नारदश्च ॥ १८ ॥ कलिः, इन्द्रजिन्मुखा

१. **'यदर्त्थमेष जा–'**

२. **'–ताजनेर्नि–' '–जनौ नि–'** इति क्वचित् ।

तदस्य[१] सोऽनुजोऽशृणोन्मुनीन्द्रदूषितं[२] च तत् ।
विचार्य्य तु[३] प्रियामिदं जगाद वासुदेवधीः ॥ २० ॥

य एव मद्गुणाधिकस्ततः सुतं समाप्नुहि ।
सुतं विना न नो गतिं शुभां वदन्ति साधवः ॥ २१ ॥

तदस्य कृच्छ्रतो वचः पृथाऽग्रहीज्जगाद च ।
ममास्ति देववश्यदो मनूत्तमः सुताप्तिदः ॥ २२ ॥

न ते सुरानृते समः सुरेषु केचिदेव च ।
अतस्तवाधिकं सुरं कमाह्वये त्वदाज्ञया ॥ २३ ॥

वरं समाश्रिता पतिं व्रजेत या ततोऽधमम् ।
न काचिदस्ति निष्कृतिर्न्न भर्तृलोकमृच्छति ॥ २४ ॥

**बभूवुः ॥ १९ ॥ अस्य धृतराष्ट्रस्यानुजः पाण्डुः (तत्) तेषां गर्भगतत्वमशृणोत् । तत् मुनीन्द्रभाषितं पुत्रोत्पादनार्थं जातस्य तव तद् विना न सद्गतिरिति मुनीन्द्रोक्तं (च) विचार्य परामृश्य प्रियामिदं जगादेति योजना ॥ २०–३ ॥ तस्या निष्कृतिः प्रायश्चित्तं नास्ति । तस्मात् सा भर्तृलोकं न ऋच्छति न प्राप्नोतीति योजना ॥ २४ ॥**

---

राक्षसाश्च । विचित्रवीर्यनन्दनप्रियोदरे । धृतराष्ट्रो व्यासजातोऽपि न व्यासनन्दनः । किन्तु नियोगेन वंशवर्द्धनाद् विचित्रवीर्य-नन्दनः । अत एव तं वैचित्रवीर्यमाहुः । न वैयासकिम् । मूर्खशतजननेन उच्चदोषमुदरमित्यन्वर्थमासेति परिहसतीव । अन्यथा 'प्रियागर्भगाः' इत्येवावक्ष्यत् ॥ १९ ॥ तत् गान्धार्या गर्भधारणम्, अस्य धृतराष्ट्रस्य अनुजोऽशृणोत् । सोऽनुजः यो मुनिभिर्निवारितसत्यलोकगमनः । तत् विधातृसदोगमनं विना सन्तानं योगेन स्वतनुत्यजनं च मुनीन्द्रैः दूषितं दोष-कथनेन निराकृतमशृणोत् । अथच तत् गान्धारीगर्भधारणम्, 'अनेन लोककण्टका जनिष्यन्ते' इति मुनीन्द्रैः दूषितं चाशृणोत् । अतस्तदुभयं विचार्य, तुना स्वस्य देवताजननहेतुत्वरूपं फलविशेषं च विचार्य, प्रियां जगाद वासुदेवमेव मनसा ध्यायन् । मुक्तिप्रदो हि वासुदेवः । यदीत्थं तस्येच्छा तर्हि भवतु तदपि । मा तेन मुक्तिविलम्बो भूदिति ॥ २० ॥ समाप्नुहि मम सम्मत्या आप्नुहि न इत्यात्मनि बहुवचनम् । पत्नीभ्यां सहितस्य स्वस्येति वा ॥ २१–३ ॥ निष्कृतिः, निर्यातनाय यत् क्रियते, परिहार इत्येतत् ॥ २४ ॥

---

१. **'तदाऽस्य'** २. **'–न्द्रभाषितम्'** । वे.ती.पाठोऽपि तथा । ३. **'विचार्य्य च प्रि–'**

कृते पुरा सुरास्तथा सुराङ्गनाश्च केवलम् ।
निमित्ततोऽपि ताः क्वचिन्न तान् विहाय मेनिरे[१] ॥ २५ ॥

मनोवचःशरीरतो यतो हि ताः पतिव्रताः ।
अनादिकालतोऽभवंस्ततः सभर्त्तृकाः सदा ॥ २६ ॥

स्वभर्त्तृभिर्विमुक्तिगाः सहैव ता भवन्ति हि ।
कृतान्तमाप्य चाप्सरःस्त्रियो बभूवुरूर्ज्जिताः ॥ २७ ॥

अनावृताश्च तास्तथा यथेष्टभर्त्तृकाः सदा ।
अतस्तु ता न भर्त्तृभिर्विमुक्तिमापुरुत्तमाम् ॥ २८ ॥

सुरस्त्रियोऽतिकारणैर्य्यदाऽन्यथा स्थितास्तदा[२] ।
दुरन्वयात्[३] सुदुःसहा विपत् ततो भविष्यति ॥ २९ ॥

**ननु च (अधि)कं पतिं समाश्रितानां सुरस्त्रीणामवरपतिप्राप्तिदर्शनात् 'वरं समाश्रिताः' इत्यादिना दोषोक्तिः कथमित्यत आह– कृत इति । पुरा कृते कृतयुगे सुराः सुराङ्गनाश्च केवलम् अविमिश्रिताः, व्यभिचाररहिता इति भावः । अनेन कृते व्यभिचार एव नास्तीत्युक्तं भवति । ताः सुराङ्गनाः, निमित्ततोऽपि स्वतो व्यभिचाराभावे कुतश्चित् कारणादपि, तान् स्वपतीन् विहाय न मेनिरे, अन्यानिति शेषः । कृत इति योज्यम् । उपलक्षणमेतत् । सुराश्च एवमेवेति ॥२५–७॥ तासामप्सरस्त्वमेव विवृणोति–अनावृता इति । अनावृता निर्लज्जा इति भावः ॥ २८ ॥ नन्वनियतस्त्रीणामेव व्यभिचारः न नियतस्त्रीणामित्येतत् कथम्?**

पुरा प्रथममन्वन्तरे प्रथमे कृतयुगे सुराः ताः स्वनियताः सुराङ्गना विहाय अन्यां भोगार्थं न मेनिरे । एवं ताः सुराङ्गनाश्च तान् स्वपतीन् विहायान्यं न मेनिरे । निमित्ततः कारणविशेषादपि । तदिदं केवलं कृतयुगे । केवलं सुराः सुराङ्गनाश्च ॥ २५ ॥ मनोवचःशरीरैः पतिव्रता न केवलम् । मनोवचःशरीरतः पत्युर्हिताश्च हि ताः । सदा मध्ये कदाऽपि विच्छेदं विना ॥ २६ ॥ स्वायम्भुवमन्वन्तरीयस्य प्रथमस्य कृतस्यान्ते चाप्सरसो बभूवुः । परस्तात्तु कृतेऽप्यप्सरसो भवन्ति । ऊर्जिता रूपेण कामेन च । तद्धि कामिनीनां बलम् । ऊरुभ्यामेव युवानो जिता आभिरिति च हृदयम् । यथोरुभ्यामेव वशयतीति ऊर्वशी ॥ २७ ॥ यँय्यमिच्छन्ति तस्य पुरतो यथेष्टमनावृताश्च बभूवुः । अनावरणायैव ह्यावृणते । अत एव भर्तृभिः सह न विमुक्तिमापुः, यथा शच्यादयः । सा हि विशिष्टा मुक्तिः, यत् भर्त्रा सह रमणम् । अप्सरसस्तु मुक्तावप्यनावृताः । अतस्तासां मुक्त्यपेक्षयोत्तमा च मुक्तिर्देवपत्नीनाम् ॥ २८ ॥ अतिकारणैः बलवत्तरकारणैः । शापादिना, प्रबलप्रारब्धेन,

१. **'–हाय रेमिरे ।'** २. **'स्थिताः सदा'** ३. **'दुरन्वयाः सुदुःसहा'** । वे.ती.पाठोऽपि तथा । **'दुरन्वया सुदुःसहा'** इति च क्वचित् ।

**अयुक्तमुक्तवांस्ततो भवांस्तथाऽपि ते वचः ।**
**अलङ्घ्यमेव मे ततो वदस्व पुत्रदं सुरम्** **॥ ३० ॥**

**इतीरितोऽब्रवीन्नृपो न धर्म्मतो विना भुवः ।**
**नृपोऽभिरक्षिता भवेत् तदाह्वयाऽशु तं विभुम्** **॥ ३१ ॥**

**स धर्म्मजः सुधार्म्मिको भवेद्धि सूनुरुत्तमः ।**
**इतीरिते तया यमः समाहुतोऽगमद् द्रुतम्** **॥ ३२ ॥**

**ततश्च सद्य एव सा सुषाव पुत्रमुत्तमम् ।**
**युधिष्ठिरं यमो हि स प्रपेद आत्मपुत्रताम्** **॥ ३३ ॥**

**तारादीनां व्यभिचारदर्शनादित्यत आह– सुरस्त्रिय इति । अतिकारणैः बलवन्निमित्तैः, अन्यथा स्थिताः अनियतभर्तृकाः स्थिताः । दुरन्वयाः अतर्कितसम्बन्धाः । ततः अन्यथावस्थानात् ॥ २९–३४ ॥**

---

योग्यतामतिक्रम्य सम्पादितस्याधिकपुण्यस्य ह्रासाय च । यथा तारां चन्द्रश्चकमे । चन्द्रं च तारा । तदा तस्मात् दुरन्वयात् दुष्टात् योनिसम्बन्धात् सुदुःसहा विपद् भविष्यति । न केवलं सम्बन्धिनां दुःसहा, किन्तु सुतरां समग्रस्य जनपदस्य दुःसहा युद्धादिरूपा विपद् भविष्यति । पुनः कीदृशी विपत्? दुरन्वयात् । दुष्टमन्वयं कुलमत्तीति तादृशी । भविष्यति किलात्रापि । यद्यपि दुःसहा । अथापि सुसहा भविष्यति । अन्ततः लोककल्याणहेतुत्वात् ॥ २९ ॥ यतः दुरन्वयात् विपद् भविष्यति ततः अयुक्तमुक्तवान् भवान् । वदस्व । तवायं स्वार्थ इत्यात्मनेभाषा । अथच स्वपुत्रदं वद । स्वाभिमतः पुत्रः स्वपुत्रः ॥ ३० ॥ धर्मतो विना । धर्मं विना । धर्मेण धर्माद् वा । **'पृथग्विनानानाभिस्तृतीयाऽन्यतरस्याम्'** [अ.सू.२.३.३२] इति च । अन्यतरस्यामिति पञ्चमी च । **'पृथग्विनानानाभिरिति योगविभागो द्वितीयार्थः । विना वातं विना वर्षं विद्युत्प्रपतनं विना । विना हस्तिकृतान् दोषान् केनेमौ पातितौ द्रुमौ'** इति जयादित्यः । विभुं धर्मतोऽभिरक्षणदक्षं तं धर्मं देवमाह्वय । जनपदस्य धर्मार्थकामानां अभितो रक्षणमभिरक्षणम् । अन्तःशत्रुभिर्बाह्यैश्चेत्यु-भयतो रक्षणं चाभिरक्षणम् ॥ ३१ ॥ स्वयं धर्ममाचरन् धार्मिको भवति । स्वनिदर्शनेनेतरानपि धर्ममार्गे प्रवर्तयन् सुधार्मिको भवति । समाहुतः समाहूतः । मन्त्रेण समाह्वानमेव समाहवनम् । यत्र तमाजुहाव तं देशमगमत् । 'तया आ यमः' इति वा प्रतृण्णम् । क्रियापदेन सम्बन्धः । तया सम्यग् विधिपूर्वकं आहूतः, आगमत्, आगत्य तया समगमच्च ॥ ३२ ॥ सुषाव सुषुवे । **'षु प्रसवैश्वर्ययोः'** इत्यस्येदं रूपम् । भ्वादेर्वा, अदादेर्वा । स्वयमपीश्वरा सद्योजननदक्षा सुषुव इत्यर्थः । लोकहिताय लोकेश्वरं सुतमसोष्टेति च परस्मैभाषयाऽह । अत एवोत्तमम् । उद्गततमसं परमसात्विकं च । युधिष्ठिरः यमोऽपि, यमपुत्रोऽपि, यतो ह्ययमात्मैवात्मनः पुत्रतां प्रपेदे ॥ ३३ ॥

**यमे सुते तु कुन्तितः प्रजात एव सौबली ।**
**अदँह्यतेर्ष्यया चिरं बभञ्ज गर्भमेव च ॥ ३४ ॥**

**स्वगर्भपातने कृते तया जगाम केशवः ।**
**पराशरात्मजो न्यधाद् घटेषु तान् विभागशः ॥ ३५ ॥**

**शतात्मना विभेदिताः शतं सुयोधनादयः ।**
**बभूवुरन्वहं ततः शतोत्तरा च दुश्शळा[१] ॥ ३६ ॥**

**स देवकार्य्यसिद्धये ररक्ष गर्भमीश्वरः ।**
**पराशरात्मजः[२] प्रभुर्विचित्रवीर्य्यजोद्भवम् ॥ ३७ ॥**

**कलिः सुयोधनोऽजनि प्रभूतबाहुवीर्य्ययुक् ।**
**प्रधानवायुसन्निधेर्बलाधिकत्वमस्य तत् ॥ ३८ ॥**

**विभागशः, कृत्वेति शेषः । तान् विभागान् ॥ ३५ ॥ शतात्मना विभेदिताः विभागाः । ततः घटेभ्यः शतं सुयोधनादयः शतं पुत्राः बभूवुः ॥ ३६–८ ॥**

---

सद्योजननमिह प्रजननम् । सुबलात्मजा गान्धारी पूर्णमेकं संवत्सरं बभार गर्भम् । अथापि न पुत्रजनिरास । प्रत्युत कनीयसी कुन्ती पूर्वं सुषावेतीर्ष्यया । ईर्ष्या हि नाम कश्चिदन्य एव जठराग्निरन्तः स्वात्मानमेव दहन् भवति । चिरमदह्यत । अचिरमेव गर्भं बभञ्ज च ॥ ३४ ॥ विभागशः । **वीप्सायां शस्** [अ.सू.५.४.४३] । विभागंविभागं कृत्वा तान् विभागान् घटेषु न्यधात् । विभज्यविभज्य न्यधादिति वा । कर्मकारके वा शस् [५.४.४२] । विभागशः विभागान् । तद्यथा–बहुशो ददाति, बहूनि ददाति ॥ ३५ ॥ शतात्मना शतरूपेण शतप्रकारेण वा । **'आत्मा कळेबरे यत्ने स्वभावे परमात्मनि'** इत्यभिदधति । स्वभावोऽसाधारणधर्मः प्रकार इत्येकोऽर्थः । एकवचनं समुदायार्थम् । शतधेति यावत् । विभेदिताः शकलितास्ते गर्भभागाः शतं सुयोधनादयो बभूवुः । प्रतिदिनमेको जात इत्यन्वहम् । तथाच शतदिनेषु शतपुत्रा बभूवुरिति । शतादुत्तरा उर्वरिता दुःशळा बभूव एकोत्तरशततमे दिने । दुःखेन शल्यते गम्यत इति दुःशळा । शल गतौ । दुरो योगे शलतेर्लस्य ळ इति वक्तव्यम् ॥ ३६ ॥ अन्ते कल्यादीनां तमसि पातनमेव प्रमुखं देवकार्यम् । स हि सर्वं कर्तुमीश्वरः । तस्य कियदिदं गर्भरक्षणं नाम । स हि वंशस्यापि प्रभुः । वंशप्रभवश्च । यतो वंशद्दष्ट्या विचित्रवीर्यतनयोऽपि धृतराष्ट्रो भगवतो लोकविचित्रेण वीर्येण जातः । पराशरात् आत्मना स्वेच्छया सत्यवत्यामजायत ॥ ३७ ॥ **'कलेरंशस्तु सञ्जज्ञे भुवि दुर्योधनो नृपः'**[आ.प.६८.८७] इति, **'कलेरंशः समुत्पन्नो गान्धार्या जठरे नृप'**

---

१. 'दुःशला' २. '–त्मजो विभु–'

**पुरा हि मेरुमूर्द्धनि त्रिविष्टपौकसां वचः ।**
**वसुन्धरातळोद्भवोन्मुखं[१] श्रुतं दितेःसुतैः ॥ ३९ ॥**

**ततस्तु ते त्रिलोचनं तपोबलादतोषयन् ।**
**वृतश्च देवकण्टको ह्यवद्ध्य एव सर्वतः ॥ ४० ॥**

**वरादुमापतेस्ततः कलिः स देवकण्टकः ।**
**बभूव वज्रकाययुक् सुयोधनो महाबलः ॥ ४१ ॥**

**अवद्ध्य एव सर्वतः सुयोधने समुत्थिते ।**
**घृताभिपूर्णकुम्भतः स इन्द्रजित् समुत्थितः ॥ ४२ ॥**

**स दुःखशासनोऽभवत् ततोऽतिकायसम्भवः ।**
**स वै विकर्ण्ण उच्यते ततः खरोऽभवद् बली ॥ ४३ ॥**

**युगपद् भूतळे कल्यादिसर्वासुरोत्पत्तौ निमित्तजिज्ञासायामाह– पुरेत्यादिना ॥ ३९–४४ ॥**

---

[खिप.८.३०] इति च व्यासवचनम् । **'कलिं दुर्योधनं विद्धि शकुनिं द्वापरं नृपम् । दुःशासनादीन् विद्धि त्वं राक्षसान् शुभदर्शने'** [आश्र.प.३३.१०] इति च । **'विग्रहस्य कलिर्मूलं गान्धार्यां विनियुज्यताम्'** [ह.वं.प.५३.६३] इति च हरिवंशेषु ॥ ३८ ॥ दितेःसुतैरित्यलुगाक्रोशे ॥ ३९ ॥ देवकण्टकः सर्वैरप्यवध्य एव स्यादिति वरश्च वृतः ॥ ४० ॥ कोऽयं देवकण्टकः? आह– कलिः स देवकण्टकः । स इति तामसाधमः । कोऽन्यस्तस्माद् देवकण्टकाग्रणीः स्यात्? सुखेन युद्ध्यते स्वयमिति सुयोधनः । दुःखेन युद्ध्यते परैरिति दुर्योधनः ॥ ४१ ॥ वरबलादेव सर्वतोऽवध्ये । घृताभिपूर्णकुम्भतः । घृतस्याभिघारेण पूर्णात् कुम्भात् सुयोधने समुत्थिते अपरस्मात् कुम्भात् इन्द्रजित् समुत्थितः । **'घृतपूर्णं कुम्भशतं क्षिप्रमेव विधीयताम्'** [आ.प.१२९.३४] इति, **'ततस्तांस्तेषु कुण्डेषु गर्भान् सर्वान् समादधत् । स्वनुगुप्तेषु देशेषु रक्षां चैषां व्यधापयत्'** [३८–९] इति च भारते । यः पूर्वमिन्द्रजित् स समुत्थितः । स रामायणे रावणतनयत्वेन प्रसिद्ध इति वा । **'पौलस्त्या भ्रातरश्चास्य जज्ञिरे मनुजेष्विह'** [आ.प.६८.८९] इति, **'दुर्योधनसहायास्ते पौलस्त्या भरतर्षभ'** [९१] इति च ॥ ४२ ॥ स दुःखेन शास्यत इति दुःखं शासनमस्येति चान्वर्थं दुःशासननामाऽभवत् । विकृतौ विचित्रौ वा कर्णावस्येति विकर्णः ॥ ४३ ॥

---

१ **'–तलोद्भ–'**

**स चित्रसेननामकः[1] तथाऽपरे च राक्षसाः ।**
**बभूवुरुग्रपौरुषा विचित्रवीर्य्यजात्मजाः ॥ ४४ ॥**

**समस्तदोषरूपिणः शरीरिणो हि तेऽभवन् ।**
**मृषेति नामतो हि या बभूव दुःशळा[2]ऽऽसुरी ॥ ४५ ॥**

**कुहूप्रवेशसंयुता ययाऽऽर्ज्जुनेर्वधाय हि ।**
**तपः कृतं त्रिशूलिने ततो हि साऽत्र जज्ञुषी ॥ ४६ ॥**

**शरीरिणः घटगतशरीरेभ्यो[3] निष्पन्नशरीराः । ते सुयोधनादयः समस्तदोषरूपिणः समस्तदोषात्मका अभवन् । या पूर्वं नाम्ना मृषेत्यासुरी सा दुःशला बभूव ॥ ४५ ॥ कुहूप्रवेशसंयुता तदभिमानिदेवताप्रवेश-संयुता । यया मृषाख्यासुर्या । आर्जुनेरभिमन्योः । ततः तद्वधार्थं अत्र भुवि जज्ञुषी जाता ॥ ४६ ॥**

---

प्रधानत्वाच्चत्वारो मुखत उक्ताः । तथाहि भारते–**'धृतराष्ट्रात् पुत्रशतं बभूव गान्धर्यां वरदानाद् द्वैपायनस्य । तेषां च धार्तराष्ट्राणां चत्वारः प्रधाना दुर्योधनो दुःशासनो विकर्णश्चित्रसेनश्चेति'** [आ.प.६३.५८] इति ॥ ४४ ॥ शरीरिणः, मूर्तिमन्तो दोषाः । मृषामानिनी आसुरी दुःशळा बभूव । अयमत्रेतिहासः– गान्धारराजस्य सुबलस्य ज्येष्ठा किल पुत्री गान्धारी । सा पितृगह एव शङ्करं समाराध्य शतं पुत्रान् वव्रे । ततस्तामुदुवाह धृतराष्ट्रः । अथ कदाचिद् यदृच्छया धृतराष्ट्रगेहमाजगाम तस्य जनको भगवान् बादरायणः । तमच्छिद्रं पर्यचरत् स्नुषा सौबली । तेन स तुष्टो वरं ददौ । सा पुनः पुत्राणां शतमेव वरं वव्रे । अहो बलवती हि भवितव्यता । विचित्रं च विधेर्विलसितम् । ततः कालेन सा गर्भं बभार । अप्रसूतायां तस्यामन्तर्वत्न्यां कुन्ती युधिष्ठिरं सुषुवे । गान्धारी तमुदन्तं शुश्राव । श्रुत्वा पुनरसूयादग्धा शोकमूर्छिता स्वमुदरं घातयामास । ततस्तदुदरान्मांसपेशी जज्ञे । तदा तत्राऽजगाम द्वैपायनः । सा चाश्रूणि मुञ्चन्ती श्वशुरं भगवन्तमाह–**'शतं च किल पुत्राणां वितीर्णं मे त्वया पुरा । इयं च मे मांसपेशी जाता पुत्रशताय वै'** इति । अथ भगवान् बादरायणः कुम्भशतं घृतपूर्णमानाययामास । तां मांसपेशीं शीताभिरद्भिरासिच्य भागम्भागम-कल्पयत् । तदा गान्धारी मनसाऽचिन्तयत्–**'यदि नाम ममापि स्याद् दुहितैका शताधिका'** इति । तदा भगवान् व्यासः पेशीं विबभाज । कुम्भशतके पूर्णे पुनरेकः पेशीखण्डो भगवतो वामहस्त उर्वरितः । ततो भगवान् व्यासस्तामाह–**'पूर्णं पुत्रशतं त्वेतन्न मिथ्या वागुदाहृता ।** एषा ते कन्या भविष्यति' इति । ततोऽन्यं घृतकुम्भमानाय्य तत्र तं कन्याभागं प्राक्षिपत् । सा दुःशळा बभूवेति ॥ ४५ ॥ नष्टेन्दुकलाऽमावास्या कुहूः । तदभिमानिनी च कुहूः । तस्याः प्रवेशेन व्यासहस्तेन

---

१. मूलादर्शे त्वेवं विश्लिष्य पठ्यते । अयं समग्रः पादः पूर्वश्लोकान्वयीति सूचनमेतत्प्रयोजनं स्यात् । अर्वाचीनास्तु **'–नामकस्तथा'** इत्येव पठन्ति । एवं पादविश्लेषो याजुषः सम्प्रदाय इति चोक्तम् ।

२. **'दुःशला'** । वे.ती.पाठोऽपि तथेति भाति ।

३. **'घटगतशकलेभ्यः'** इति पाठः स्यात् ।

तयोदितो हि सैन्धवो बभूव कारणं वधे ।
स कालकेयदानवस्तदर्त्थमास भूतळे[१] ॥ ४७ ॥

तथाऽऽस [२]निरृथाभिधोऽनुजः स निरृतेरभूत् ।
स नासिकामरुद्युतो युयुत्सुनामकः कृती ॥ ४८ ॥

स चाऽम्बिकेयवीर्य्यजः सुयोधनादनन्तरः ।
बभूव वैश्यकन्यकोदरोद्भवो हरिप्रियः ॥ ४९ ॥

युधिष्ठिरे जात उवाच पाण्डुर्बाह्वोर्बलाज्ज्ञानबलाच्च धर्म्मः ।
रक्ष्योऽन्यथा नाशमुपैति तस्माद् बलद्वयाढ्यं [३]प्रसुवाऽशु पुत्रम् ॥ ५० ॥

**अभिमन्योर्दुःशासनपुत्रेण हतत्वात् कथं तदर्थं दुःशला जातेत्यतः दुःशलोदितजयद्रथेन पाण्डवनिरोधात् असहायोऽसौ दुःशासनपुत्रेण हत इति दुःशलाया अभिमन्युवधकारणत्वमभिप्रेत्याऽह–तयोदित इति । कारणं बभूव, व्यूहद्वारि पाण्डवनिरोधादिति भावः । स जयद्रथः कालकेयदानवः, पूर्वमिति शेषः । कालकेयगणेषु कश्चिद् दानवः ॥४७॥ निरृथाभिधः निरृतेरनुज आस । तथाशब्दश्चार्थः । स चाभूत् भुव्यत्पन्नः । कीदृशः सः? नासिकामरुद्युतः ॥ ४८ ॥ स कस्य पुत्र इत्यत उक्तम्– स चेति ॥ ४९–५२ ॥**

---

जननाख्यसम्भूतियुता । आर्जुनेरभिमन्योः । त्रिशूलिने त्रिशूलिनं प्रसादयितुम् ॥ ४६ ॥ ननु लब्धवराऽपि न सा जघानाभिमन्युम् । न स्वयं जघान । किन्तु पत्युः कर्णं विद्ध्वा, तमुत्थाप्य प्रेषयित्वाऽजीघतदित्याह– तयोदितो हि । कालकायास्तनयाः कालकेया नाम परस्सहस्रं दानवाः । तेष्वयमेको दानवः ॥ ४७ ॥ यो निरृथाभिध आस स निरृतेरनुजः । स युयुत्सुनामकः अभूत् । कृती धार्मिको विद्वांश्च । नासिकाया अभिमानी मरुत् प्रवहः ॥ ४८ ॥ सुयोधनादनन्तरः । तथाहि भारते धृतराष्ट्रपुत्राणां ज्येष्ठानुक्रमेण कथनप्रसङ्गे– **'दुर्योधनो युयुत्सुश्च राजन् दुःशासनस्तथा'** [आ.प.६८.९३;१३१.२] इति । नास्य विचित्रवीर्यवंशवृक्षेऽनुप्रवेश इत्याम्बिकेयवीर्यज इत्याह । तेनायमपि वैश्यातनय इत्येव पप्रथे न धार्तराष्ट्र इतीत्याह । वैश्यकन्यका काचिद् दासी । अनुकम्पायां कः । एतेनायमपि कानीन इति सूचितम् । उदरशब्देनेदमाह–राज्ञां वीर्यभरणमेव दासीनामनिवार्यमुदरम्भरणमासीदिति । आम्बिकेयवीर्यजेष्वयमेक एव हरिप्रिय आसीत् । पाण्डवपक्षपातित्वादस्य ॥ ४९ ॥ प्रसुव प्रसूयस्व । **'षू प्रेरणे'** । तुदादिः । उपसर्गयोगेन प्रसवेऽपि ॥ ५० ॥

---

१. 'भूतले ।' २. 'निरृताभिधो–' ३. '–ढ्यं जनयाऽशु'

यज्ञाधिको ह्यश्वमेधो मनुष्यदृश्येषु तेजस्स्वधिको हि भास्करः ।
वर्ण्णेषु विप्रः सकलैर्ग्गुणैर्वरो देवेषु वायुः पुरुषोत्तमादृते ॥ ५१ ॥

विशेषतोऽप्येष पितैव मे प्रभुर्व्यासात्मना विष्णुरनन्तपौरुषः ।
अतश्च ते श्वशुरो नैव योग्यो दातुं पुत्रं वायुमुपैहि तत् प्रभुम्[१] ॥ ५२ ॥

इतीरिते पृथयाऽऽहूतवायुसंस्पर्शमात्रादभवद् बलद्वये ।
समो जगत्यस्ति न यस्य कश्चिद् भक्तौ च विष्णोर्भगवद्वशः सुतः ॥ ५३ ॥

स वायुरेवाभवदत्र भीमनामा भृता माः सकला हि यस्मिन् ।
स विष्णुनेशेन युतः सदैव नाम्ना सेनो भीमसेनस्ततोऽसौ ॥ ५४ ॥

**अभवत् सुत इति सम्बन्धः ॥ ५३ ॥ अत्र भुवि । (कुतो) भीमनामेत्यतस्तन्निर्वक्ति– भृता इत्यादिना । यस्मिन् मरुत्सुते सकला माः प्रमाणानि भृताः पूर्णाः, तस्मात् भृतमत्वात् भीम इति भावः । इनेन सहितः सेनः । स चेनः विष्णुरेवेति स विष्णुनेति । ततः भीमत्वात् सेनत्वात् (च) असौ नाम्ना भीमसेनः । भीमश्चासौ सेनश्चेति कर्मधारयः ॥ ५४–५ ॥**

---

**'अश्वमेधः क्रतुश्रेष्ठो ज्योतिःश्रेष्ठो दिवाकरः । ब्राह्मणो द्विपदां श्रेष्ठो देवश्रेष्ठश्च मारुतः'**[आ.प.१२९.४६] इति पाण्डुवचनमर्थतोऽनुवदति– यज्ञाधिको ह्यश्वमेधः । मनुष्यलोके दृश्येषु तेजस्सु । मनुष्यैर्दृश्येषु च । द्विपदामित्यपि वर्णाश्रमाचारनियता मनुष्या एवोच्यन्त इत्याह– वर्णेषु । 'अश्वमेधो हि' इति वैदिकप्रसिद्धिमाह । 'अधिको हि भास्करः' इति लोकप्रसिद्धिम् । पुत्रार्थमाह्वानयोग्येषु देवेषु मारुतः श्रेष्ठः । तदाह– पुरुषोत्तमादृते ॥ ५१ ॥ तदेव विवृणोति– विशेषतोऽप्येषः । सामान्यतः सर्वेषामपि पिता । **'यो नः पिता जनिता'** इत्यादेः । न मम तथा केवलम् । किन्तु विशेषतोऽपि पितैव । व्यासात्मना रेतोद्वाराऽम्बालिकायां साक्षाज्जननात् । अत एव ते श्वशुरश्च ॥ ५२ ॥ बलद्वये मानसे शारीरे च, विष्णोर्भक्तौ च । यस्य समो नास्ति, यः केवलं भगवत एव वशः स वायुरेव सुतोऽभवत् । भृता मा मातरो यस्मिन् स भीमः । तस्य लोपः । ऋकारस्य ईकारः । यद्वा **'तृतीयोऽतिशये'** इति ऋकारस्य इकारः । परस्येव पूर्वस्यापि तृतीयस्याऽधिक्यार्थता हि सम्मता । ततश्च **'दीर्घं प्लुतश्च हिङ्कारो बिन्दुरप्यवधारणे'** इत्यवधारणार्थे इकारस्य ईकारः । तेन भीमः । इनेन सहितः सेनः । स चासौ स च भीमसेनः । शत्रूणां भीमश्चासौ सेनश्च । शत्रूणां भीमा सेनाऽप्यस्य । एवं बह्वर्थताया एव भृकारस्य भीकारः ॥ ५३–४ ॥

---

१. 'तं प्रभुम्'

**तज्जन्ममात्रेण धरा विदारिता शार्दूलभीताज्जननीकराद् यदा ।**
**पपात सश्चूर्ण्णित एव पर्वतस्तेनाखिलोऽसौ शतशृङ्गनामा ॥ ५५ ॥**

**तस्मिन् प्रजाते रुधिरं प्रसुस्रुवुर्म्महासुरा वाहनसैन्यसंयुताः ।**
**नृपाश्च तत्पक्षभवाः समस्तास्तदा भीता असुरा राक्षसाश्च ॥ ५६ ॥**

**अवर्द्धतात्रैव वृकोदरो वने मुदं सुराणामभितः[१] प्रवर्द्धयन् ।**
**तदैव शेषो हरिणोदितोऽविशद् गर्भं सुताया अपि देवकस्य ॥ ५७ ॥**

**तस्मिन् प्रजाते सति वाहनसैन्यसंयुताः भीता महासुराः पूर्वं असुरा राक्षसाश्च सन्तः, तत्पक्षभवाः महासुरपक्षीयत्वेन जाताः नृपाश्च रुधिरं प्रसुस्रुवुरिति योजना । एवमस्माद्भीत्वा रुधिरप्रस्रावोऽसुराणां भविष्यद्विनाशसूचक उत्पात इति भावः ॥ ५६–७ ॥**

---

शार्दूलभीताया जनन्याः करात् । जननीगता भीतिः करेऽप्यारोप्यते । भीतिकार्यं हि करेऽभिव्यज्यते । भीत्या कम्पमानात् करादित्येतत् । शार्दूलभिया इतात् करादिति वा । यदा दशमेऽहनि पपात । **'स्नात्वा च सुतमादाय दशमेऽहनि यादवी । दैवतान्यर्चयिष्यन्ती निर्जगमाऽश्रमात् पृथा । शैलाभ्याशेन गच्छन्त्यास्तदा भरतसत्तम । निश्चक्राम महाव्याघ्रो जिघांसुर्गिरिगह्वरात् । तमापतन्तं शार्दूलं निकृष्य धनुरुत्तमम् । निर्बिभेद शरैः पाण्डुस्त्रिभिस्त्रिदशविक्रमः । नादेन महता तां तु पूरयन्तं गिरेर्गुहाम् । दृष्ट्वा शैलमुपारोढुमैच्छत् कुन्ती भयात् तदा । त्रासात् तस्याः सुतस्त्वङ्कात् पपात भरतर्षभ । स शिलां चूर्णयामास वज्रवद् वज्रिचोदितः'**[आ.प.१२९.५७–६२] इति हि सम्भवे । वज्रिणेन्द्रेण चोदितो वज्र इव वज्रिणा नारायणेन चोदितः सुत इति भारतवचनार्थः । भारते **'अङ्कात्'** इत्युक्तम् । नह्यङ्कगे शिशौ मातुः शैलारोहः सम्भवति । तथाचैवं व्याख्येयम्–अङ्कगः सुत आसीत् । यदा शैलमुपेत्य आरोढुमैच्छत् तदा सुतमङ्कात् कराभ्यामादध्रे । यदा शार्दूलनादश्रवणभीता चकम्पे, तदा कम्पितात् करात् सुतः पपातेति । तदेतदाह– शार्दूलभीताज्जननीकरादिति । तेन पतता भीमेन अखिलः पर्वत एव सश्चूर्णितः शकलशश्चूर्णितः । भीमलीलया पर्वतस्य नामापि सार्थकमासीदित्याह– शतशृङ्गनामा ॥ ५५ ॥ नव मासान् गर्भवासादृते सद्योजननं प्रजननम् । रुधिरं प्रसुस्रुवुः प्रचुरं सुस्रुवुः । **'मूत्रं प्रसुस्रुवुः सर्वे'**[१२९.५४] इति च भारते । तेनैतदवसीयते– मूत्रद्वारेण रुधिरं प्रसुस्रुवुरिति । **'सर्वलोकस्य पार्थिवाः'** इति पूर्वार्धं विवृणोति– नृपाश्च तत्पक्षभवाः समस्ताः । महासुरपक्षीयाः पार्थिवा एव । नापरे सन्तः पार्थिवाः ॥ ५६ ॥ प्रकटं प्रभूतं च वर्द्धयन् । तदैव कुन्त्याः सन्ततिलाभसमय एव । युधिष्ठिरभीमसेनयोर्जनननान्तराळे । भीमजननादष्टमासेभ्यः पूर्वम् ॥ ५७ ॥

---

१. **'–मधिकं प्र–'**

**स तत्र मासत्रयमुष्य दुर्गयाऽपवाहितो [१]रोहिणिगर्भमाशु ।**
**नियुक्तया केशवेनाथ तत्र स्थित्वा मासान् सप्त जातः पृथिव्याम् ॥ ५८ ॥**

**स नामतो बलदेवो बलाढ्यो बभूव तस्यानु जनार्दनः प्रभुः ।**
**आविर्बभूवाखिलसद्गुणैकपूर्णः सुतायामिह[२] देवकस्य ॥ ५९ ॥**

**यः सत्सुखज्ञानबलैकदेहः समस्तदोषस्पर्शोज्झितः[३] सदा ।**
**अव्यक्ततत्कार्य्यमयो न यस्य देहः कुतश्चित् क्वच स ह्यजो हरिः ॥ ६० ॥**

**न शुक्ररक्तप्रभवोऽस्य कायस्तथाऽपि तत्पुत्रतयोच्यते मृषा ।**
**जनस्य मोहाय शरीरतोऽस्या यदाविरासीदमलस्वरूपः ॥ ६१ ॥**

**आविश्य पूर्वं वसुदेवमेव विवेश तस्माहृतुकाल एव ।**
**देवीमुवासात्र च सप्त मासान् सार्द्धांस्ततश्चाऽविरभूदजोऽपि ॥ ६२ ॥**

**रोहिणीगर्भमपवाहितः देवकीगर्भान्निर्गमय्य रोहिणीगर्भं प्रापितः ॥ ५८–९ ॥ अव्यक्ततत्कार्यमयः । अव्यक्तं जडप्रकृतिः । तत्कार्यमयस्तदात्मकः[४] ॥ ६० ॥ मृषा (वृथा) ॥ ६१–९ ॥**

---

केशवेन नियुक्तया दुर्गयाऽपवाहितः । देवकीगर्भादपकृष्य रोहिणीगर्भं प्रापितः । आशु मध्ये व्यवधानमन्तरा । यः केशौ ब्रह्मरुद्रौ प्रवर्तयेत् स कथं शेषं न प्रवर्तयेत् ॥ ५८ ॥ यतो बलाढ्यः अतोऽन्वर्थेन नाम्ना बलदेवो बभूव । बलपूर्णो देव इति । **'बलभद्रं बलोच्छ्रयात्'** [१०.३.१४] इति हि भागवते । तस्यानु जनार्दनो भक्तजननार्दनाय स्वयमाविर्बभूव प्रकृष्ट एव भवन् । इह भूमौ, कंसकारायाम् । देवकस्य सुतायामिति देवकीपदं निर्वक्ति । पूर्वमपि देवकस्य सुतायाः शेषो गर्भमाशिदित्याह । तेन स देवकः पूर्वं गन्धर्वमुनित्वे सम्पादितस्य पुण्यविशेषस्य परिपाकेन शेषकेशवयोः सम्प्रति मातामहो बभूवेति बोधयति ॥ ५९ ॥ सन्ति दुःखाज्ञानाशक्तिभिरसम्भिन्नानि परिपूर्णानि च सुखज्ञानबलानि केवलमस्य देहः । स्पर्शपदेन परम्परयाऽपि न दोषलेशसम्पर्क इत्यवधारयति । स्पर्ङ्शेति विश्लिष्य पठनेन रुचिरा च्छन्दोगतिः । सदेति विशेषणत्रयेऽप्यन्वेति । अव्यक्तकार्यं पृथिव्यादि । न प्राकृतः नापि भौतिकस्तस्य देहः । स ह्यजः । **'न जायते म्रियते वा'** इति हि श्रूयते स्मर्यते च । अथाप्यजायमानो बहुधा विजायते । यः जीवानामपि जननं परिहरति स हरिः कथं स्वयं जायेत ॥ ६० ॥ मृषा वृथैव । अज्ञानादबुधैः । तामसजनस्य मोहाय च बुधैः । अस्या देवक्याः शरीरतः शरीरं प्रविश्य, शरीरं द्वारीकृत्य ॥६१॥ पूर्वं वसुदेवमाविश्यैव, तस्माद् वसुदेवादेव, ऋतुकाल एव देवीं देवकीं

---

१. **'रोहिणीगर्भ–'** २. **'–यामपि दे–'** ३. **'स्पर्ङ्शोज्झितः'** इति विश्लिष्य पठनीयम् ।

४. अत्र कानिचन पदानि लुप्तानीव । **'अव्यक्तं जडप्रकृतिः । तत्कार्यं महदादि । तन्मयस्तदात्मकः'** इति पाठः स्यात् ।

यथा पुरा स्तम्भत आविरासीदशुक्लरक्तोऽपि नृसिंहरूपः ।
तथैव कृष्णोऽपि तथाऽपि मातापितृक्रमादेव विमोहयत्यजः ॥ ६३ ॥

पितृक्रमं मोहनार्थं समेति न तावता शुक्लतो रक्ततश्च ।
जातोऽस्य देहस्त्विति दर्शनाय सशङ्खचक्राब्जगदः स दृष्टः ॥ ६४ ॥

अनेकसूर्य्याभकिरीटयुक्तो विद्युत्प्रभे कुण्डले धारयंश्च ।
पीताम्बरो वनमाली स्वनन्तसूर्य्योरुदीप्तिर्ददृशे सुखार्ण्णवः[1] ॥ ६५ ॥

स कञ्जयोनिप्रमुखैः सुरैः स्तुतः पित्रा च मात्रा च जगाद शूरजम् ।
नयस्व मां नन्दगृहानिति स्म ततो बभूव द्विभुजो जनार्द्दनः ॥ ६६ ॥

तदैव जाता च हरेरनुज्ञया दुर्ग्गाभिधा श्रीरनु नन्दपत्न्याम् ।
ततस्तमादाय हरिं ययौ स शूरात्मजो नन्दगृहान् निशीथे ॥ ६७ ॥

---

विवेश । अत्र देवक्यामुवास च सार्धसप्तमासान् ॥ ६२ ॥ मातापितृक्रममनुसृत्यैव जायमानो विमोहयति ॥ ६३ ॥ पितृपूर्वकमेव रेतसा जननमिति क्रमः पितृक्रमः । समेति सम्यगनुकरोति ॥ ६४ ॥ अनेकेत्यादि । इदं पित्रोरन्तर्दृष्टि दर्शनम् । **‘तमद्भुतं बालकमम्बुजेक्षणं चतुर्भुजं शङ्खगदाद्युदायुधम् । श्रीवत्सलक्ष्मं गलशोभिकौस्तुभं पीताम्बरं सान्द्रपयोदसौभगम् । महार्हवैडूर्यकिरीटकुण्डलत्विषा परिष्वक्तसहस्रकुन्तळम् । उद्दामकाञ्च्यङ्गदकङ्कणादिभिर्विरोच-मानं वसुदेव ऐक्षत’** [१०.४.९–१०] इत्यादि च भागवते । अनन्तसूर्येभ्योऽप्युरुदीप्तिः । अथापि न प्राखर्येण चक्षु-र्विहन्ति । किन्त्वासेचनकं सुन्दरतमया दीप्त्येत्याह–सुदीप्तिरिति ॥ ६५–६ ॥ हरेरनुज्ञया तमन्वेव श्रीरपि जाता । **‘वैराटी नन्दपत्नी च यशोदाऽजीजनत् सुताम्’** [ब्र.खं.१३.३१] इति पाद्मे । वैराटी विराटदेशजाता । विराटराजतनयैव वा । तदैवेति तस्यामेव रात्रौ, किञ्चिद्व्यवधानेन, यदाऽष्टमी गता । नवमी चाऽगता । **‘प्रावृट्काले च नभसि कृष्टाष्टम्या-महं निशि । उत्पत्स्यामि नवम्यां तु प्रसूतिं त्वमवाप्स्यसि’** [वि.पु.५.१.७८;ब्रा.पु.७२.४४] इति वचनात् । नभसि गगने प्रावृट्काले । मेघावृत इत्यर्थः । नभसि सिंहमासे । नभा इति पञ्चमो मास उच्यते । चान्द्राणां श्रावणः । सौराणां सिंहमासः । अत एव तौळवाः सिंहमासं ‘[illegible]’ इति गदन्ति । अधिकमुपरिष्टात् । हरेरनुज्ञयैव हरिमादाय नन्दगृहान् ययौ ॥ ६७ ॥

---

१. **‘–शे गुणार्णवः’**

**संस्थाप्य तं तत्र तथैव कन्यकामादाय तस्मात् स्वगृहं पुनर्य्ययौ ।**
**हत्वा स्वसुर्ग्गर्भषट्कं क्रमेण मत्वाऽष्टमं तत्र जगाम कंसः ॥ ६८ ॥**

**गर्भं देवक्याः सप्तमं मेनिरे हि लोकाः सृतं त्वष्टमं तां ततः सः ।**
**मत्वा हन्तुं पादयोः सम्प्रगृह्य सम्पोथयामास शिलातळे च[1] ॥ ६९ ॥**

**सा तद्धस्तात् क्षिप्रमुत्पत्य देवी खेऽदृश्यतैवाष्टभुजा समग्रा ।**
**ब्रह्मादिभिः पूज्यमाना समग्रैरत्यद्भुताकारवती हरिप्रिया ॥ ७० ॥**

**उवाच चाऽर्य्या[2] तव मृत्युरत्र क्वचित् प्रजातो हि वृथैव पाप ।**
**अनागसीं मां विनिहन्तुमिच्छस्यशक्यकार्य्ये तव चोद्यमोऽयम् ॥ ७१ ॥**

**समग्रा सम्पूर्णावयवा, बाल्यं विहायेति भावः । तदेवाऽह– अत्यद्भुताकारवतीति । समग्रैः सर्वैः ॥ ७०–१ ॥**

---

सङ्गोपनेन, यथा न कश्चिदपि जानीयत्, यशोदायाः समीपे स्थापनं संस्थापनम् । शिशुका कन्या कन्यका ॥ ६८ ॥ गर्भषट्कं हत्वेमं सप्तमं मन्येत । कथमष्टमं मत्वा जगाम? यतः सप्तमं गर्भं सृतं स्रुतं स्कन्नं मेनिरे लोकाः । यदा सङ्कर्षणं देवकीगर्भादाकृष्य रोहिणीगर्भे स्थापयामास दुर्गा, तदा तस्या गर्भश्चस्खालेति जना अमन्यन्त । कंसोऽपि तमुदन्तं विशश्वास । अतस्तां कन्यकामष्टमं गर्भं मत्वा हन्तुमुदयुङ्क्तेत्यर्थः । सम्प्रगृह्य सम्यक् प्रहृत्य हन्तुं दृढ-मुष्ट्या गृहीत्वा । सम्यक् पोथयामास यथाऽस्थिभित्तान्यपि न प्रज्ञायेरन्निति । चकारेण तस्यानितरसाधारणं क्रौर्यं स्मारयति ॥ ६९ ॥ सम्पूर्णयौवना समग्रा । आयुधादिभिः परिकरैः परिपूर्णा च । **‘सायुधाष्टमहाभुजा’**[१०.५.९] इति हि भाग-वते । समग्रैः सिद्धचारणादिसमग्रपरिवारोपेतैः । दिव्यस्रगम्बरादिनाऽत्युद्भुताकारवती । **‘दिव्यस्रगम्बरालेपरत्नाभरण-भूषिता । धनुःशूलेषुचर्मासिशङ्खचक्रगदाधरा । सिद्धचारणगन्धर्वैरप्सरःकिन्नरोरगैः । उपाहृतोरुबलिभिः स्तूयमानेदम-ब्रवीत्’** [१०.५.११] इति च ॥ ७० ॥ आर्या पूज्या खेऽदृश्यत । उवाच च । हरिप्रिया चार्या भार्येति वा । **‘भार्या चार्येति चोच्यते’** इत्यभिधानम् । अत्र भुवि क्वचित् प्रजातः । अनागोहननमेव महापातकम्, तत्रापि स्त्रीहननं महत्तर-मिति द्योतयितुम् अनागसमिति प्रयोक्तव्ये ङीपा स्त्रीप्रत्ययेन संयोज्यानागसीमित्याह । प्रतनानामृषीणामभिमतश्चायं प्रयोगः । **‘सभामयुग्मवाससीम्’** [२१.३२७] इति चोपरिष्टात् । **‘आर्ता चानागसी नारी’** [द्रो.प.५४.३२] इति च भारते ॥ ७१ ॥

---

१. **‘–तले च’**

२. **‘उवाच वाचं तव’** इति क्वचित् ।

**उक्त्वेति कंसं पुनरेव देवकीतल्पेऽशयद् बालरूपैव दुर्गा ।**
**नाज्ञासिषुस्तामथ केचनात्र ऋते हि मातापितरौ गुणाढ्याम् ॥ ७२ ॥**

**श्रुत्वा तयोक्तं तु तदैव कंसः पश्चात्तापाद् वसुदेवं सभार्य्यम् ।**
**प्रसादयामास पुनःपुनश्च विहाय कोपं च तमूचतुस्तौ ।**
**सुखस्य दुःखस्य च राजसिंह नान्यः कर्त्ता वासुदेवादिति स्म ॥ ७३ ॥**

**अत्र अ(थ) पुनः देवकीतल्पशयनानन्तरम्, नाऽज्ञासिषुः ॥ ७२–६ ॥**

---

देवकीतल्पेऽशयत् अशेत । यादवानां रक्षार्थं पुनर्बालरूपाऽऽगतेति परस्मैभाषा । श्री रुग्मिणी बभूव । भू रमा । दुर्गा पुनर्भगिनी बभूवेत्याह– बालरूपैव दुर्गा । ननु यदि पुनर्देवकीतल्पेऽशेत, जानीयुरेव कंसभृत्याः । तेऽवश्यं विज्ञापयेयुरेव कंसाय । सत्यं व्यज्ञापयिष्यन्, यदि ते व्यज्ञास्यन् । नच ते व्यजानन्नित्याह– नाज्ञासिषुरिति । अथ बालरूपेण पुनर्देवकी-तल्पे शयनानन्तरम्, अत्र कारागृहे केऽपि कंसभृत्यास्तां नाज्ञासिषुः । केवलं देवकीवसुदवौ व्यज्ञासिष्टाम् । अन्येषा-मदृश्या केवलं तयोर्दृश्या बभूवेत्यर्थः । परस्तादपि तां सुभद्रामिव रोहिणी वर्धयामास मा कश्चिदेनां देवकीतनयां कंस-पोथितां विज्ञासीदिति । तदेतत् सर्वमुक्षणेन शैलीप्रभेदेन तत्रतत्र विक्षिप्य कथितम् । तथाहि हरिवंशे–**'सा कन्या ववृधे तत्र वृष्णिसङ्घसुपूजिता । पुत्रवत् पाल्यमाना सा वसुदेवाज्ञया तदा । विद्धि चैनामथोत्पन्नामंशाद् देवीं प्रजापतेः । एकानङ्गां योगकन्यां रक्षार्थं केशवस्य तु'** [वि.प.४.४६–७] इति । प्रजापतेर्विष्णोर्देवीं भार्यां दुर्गामित्यर्थः । योगमाया-युतां कन्याम् । यया मायया न कोऽपि तां विजज्ञौ । अत एवाऽऽचार्योऽपि गुणाढ्यामित्याह । तमोगुणमानिनी-मित्यर्थः । तमसाऽऽवृतो हि न किञ्चित् पश्यति । एकानंशा च सा नाम्ना । श्रीर्भूर्दुर्गेति त्रिरूपाऽप्येकैव सांऽशतोऽपि भेदरहितेति । **'एकानंशेति यामाहुर्नरा वै कामरूपिणीम् । तथा क्षणमुहूर्ताभ्यां यया जज्ञे सहेश्वरः । यत्कृते सगणं कंसं जघान पुरुषोत्तमः । सा कन्या ववृधे तत्र वृष्णिसद्मनि पूजिता । पुत्रवत् पाल्यमानां वै वसुदेवाज्ञया तदा । एकानङ्गेति यामाहुरुत्पन्नां मानवा भुवि । योगकन्यां दुराधर्षां रक्षार्थं केशवस्य ह । यां वै सर्वे सुमनसः पूजयन्ति स्म यादवाः । देववत् दिव्यवपुषा कृष्णः संरक्षितो यया'** [वि.प.१०१.११–५] इति, **'ददृशुस्तां प्रियां मध्ये भगिनीं रामकृष्णयोः । रुग्मपद्मव्यग्रकरां श्रियं पद्मालयामिव'** [१८] इति च । भारते च–**'ततः प्राप्ता यशोदाया दुहिता वै क्षणेन हि । जाज्वल्यमाना वपुषा प्रभयाऽतीव भारत । एकानङ्गेति यामाहुः कन्यां वै कामरूपिणीम्'** [स.प.५९.८–९] इत्यादि । ब्रह्मवैवर्ते च–**'वसुदेवो देवकी च तामादाय मुदाऽन्वितौ । जग्मतुः स्वगृहं चैव कन्यां कृत्वा स्व-वक्षसि । मृतामिव पुनः प्राप्य ब्राह्मणेभ्यो ददौ धनम् । सा परा भगिनी विप्र कृष्णस्य परमात्मनः । एकानङ्गेति विख्याता पार्वत्यंशसमुद्भवा । वसुस्तं द्वारकायां तु रुग्मिण्युद्वाहकर्मणि । ददौ दुर्वाससे भक्त्या शङ्करांशाय भक्तितः'** [ब्र.वै.८.५१] इति कृष्णजन्मखण्डे । पार्वती पार्वत्यन्तर्गता तमोमानिनी दुर्गेत्यर्थः । भक्तितः भक्त्याऽऽराधयितुं दुर्वाससे ददौ । केचिदेतामेकानङ्गामाहुः । मातापितृभ्यां संश्लिष्टाऽपि लोकविश्लिष्टाऽसीदिति दर्शयितुमेव 'केचनात्र ऋते' इति विश्लिष्य प्रयुयोज ॥ ७२ ॥ विहाय कोपं प्रसादयामास । विहाय कोपं तमूचतुश्च ॥ ७३ ॥

आनीय कंसोऽथ गृहे स्वमन्त्रिणः प्रोवाच कन्यावचनं समस्तम् ।
श्रुत्वा च ते प्रोचुरत्यन्तपापाः कार्य्यं बालानां निधनं सर्वशोऽपि ॥ ७४ ॥

तथेति तांस्तत्र नियुज्य कंसो गृहं स्वकीयं प्रविवेश पापः ।
चेरुश्च ते बालवधे सदोद्यता हिंसाविहाराः सततं स्वभावतः ॥ ७५ ॥

अथ प्रभाते शयने शयानमपश्यतामब्जदलायताक्षम् ।
कृष्णं यशोदा च तथैव नन्द आनन्दसान्द्राकृतिमप्रमेयम् ॥ ७६ ॥

मेनात एतौ निजपुत्रमेनं स्रष्टारमब्जप्रभवस्य चेशम् ।
महोत्सवात् पूर्णमनाश्च नन्दो विप्रेभ्योऽदाल्लक्षमितास्तदा गाः ॥ ७७ ॥

सुवर्ण्णरत्नाम्बरभूषणानां[1] बहूनि गोजीविगणाधिनाथः ।
प्रादादथोपायनपाणयस्तं गोपा यशोदां च मुदा स्त्रियोऽगमन् ॥ ७८ ॥

**लक्षमिताः लक्षसङ्ख्यापरिमिताः ॥ ७७ ॥ बहूनीति कश्चित् सङ्ख्याविशेषः । सुवर्णरत्नाम्बरभूषणानां बहूनि पुञ्जानीति वा ॥ ७८–८६ ॥**

---

सर्वशोऽपि सर्वेषामपि बालानाम्, सर्वशः सर्वत्रापि । एतत्प्रतिकाराय बालानां निधनमेव प्रशस्तं कार्यमूचुः । निधनं कार्यमिति प्रोचुर्वा । प्रह्वा ऊचुरित्यर्थः । कंसस्तु प्रोवाच प्रक्षुब्ध उवाच, मन्त्रिणः प्रचोदयन्नुवाचेत्यर्थः ॥ ७४ ॥ तथेति । **'यत्रोद्रिक्तं बलं बाले स हन्तव्यः प्रयत्नतः'** [१८३.७] इति ब्राह्मे कंसवचनम् ॥ ७५ ॥ कदाऽप्यशयानं शयने शयानमपश्यताम् । लीलानाटकसूत्रधारोऽयं यथा पयोब्धौ नागभोगे शेते तथैव प्रसूतिगृहे मलिनवासस्यपि सलीलं शयानमपश्यताम् । यथा वसुदेवः समानीय मातुरन्ते शाययामास तथैव शयने शयानमपश्यताम् । यथा मूलरूपे तथैव बालरूपेऽप्यानन्दसान्द्राकृतिमप्यबोधमिव शयने शयानमपश्यताम् ॥ ७६ ॥ पुत्रजननमहोत्सवाद्धेतोः पूर्णमनाः पूर्णकामः । लक्षमितास्तदा गाः । **'धेनूनां नियुतं प्रादाद् विप्रेभ्यः समलङ्कृतम्'** [भाग.१०.६.३] इति च भागवते ॥ ७७ ॥ सुवर्णरत्नाम्बरभूषणानां बहूनि राशीकृतानि वृन्दानीत्यर्थः । प्रादाद् विप्रेभ्यो गोजीविभ्यो गोपेभ्यश्च । **'सुवर्ण-रत्नाम्बरभूषितानां गवां बहूनि वृन्दानि'** इति पूर्वाचार्याः । गोपास्तं नन्दमभिनन्दयितुमागमन् । स्त्रियश्च यशोदाम् । उपायनम् 'ಉಡುಗರೆ' इति भाषायाम् ॥ ७८ ॥

---

१. **'–भूषणानि बहूनि'**

**गतेषु तत्रैव दिनेषु केषुचिज्जगाम कंसस्य गृहं स नन्दः ।**
**पूर्वं हि नन्दः स करं हि दातुं बृहद्वनान्निस्सृतः प्राप कृष्णाम् ॥ ७९ ॥**

**सहाऽगता तेन तदा यशोदा सुषाव दुर्गामथ तत्र शौरिः ।**
**निधाय कृष्णं प्रतिगृह्य कन्यकां गृहं ययौ नन्द उवास तत्र ॥ ८० ॥**

**निरुष्य तस्मिन् यमुनातटे स मासं ययौ द्रष्टुकामो नरेन्द्रम् ।**
**राज्ञेऽथ तं दत्तकरं ददर्श शूरात्मजो वाक्यमुवाच चैनम् ॥ ८१ ॥**

**याह्युत्पाताः सन्ति तत्रेत्युदीरितो[1] जगाम शीघ्रं यमुनां स नन्दः ।**
**रात्रावेवाऽगच्छमाने तु नन्दे कंसस्य धात्री तु जगाम गोष्ठम् ॥ ८२ ॥**

**सा पूतना नाम निजस्वरूपमाच्छाद्य रात्रौ शुभरूपवच्च ।**
**विवेश नन्दस्य गृहं बृहद्वनप्रान्ते हि मार्ग्गे रचितं प्रयाणे ॥ ८३ ॥**

---

यमुनातीरमागत्य कतिषुचिद् दिनेषु गतेषु यशोदा दुर्गां सुषाव । शौरिर्वसुदेवः कृष्णमानिनाय । ततः कतिपयेषु दिनेषु गतेषु कंसस्य गृहं जगाम नन्दः । यदा यमुनातीरमागतस्तस्मिन्नेव दिने यशोदा सुषावेत्येके । सः नन्दः सनन्दः पुत्रोत्सवानन्दभरित इति च । पूर्वं हीति हेत्वर्थे हिः । हि यस्मात् कृष्णजननात् पूर्वमेव सः बृहद्वनगतः नन्दः कंसस्य वार्षिकं करं दातुं बृहद्वनात् कृष्णां यमुनां प्राप । तत आसन्नप्रसवां यशोदाम्, शाद्वलं च यमुनातीरं वीक्ष्य तत्रैव यमुना-तटे मासं न्युवास हि ॥ ७९ ॥ तत्र नन्दगेहे प्रसूतिगृहे निधाय । नन्द उवास तत्र यमुनातटे ॥ ८० ॥ निरुष्य । बृहद्वनान्निःसृत्य वासः निर्वासः । अत्र च शिबिरादीनि निर्माय वासः निर्वासः । शूरात्मज इति सम्बन्धं स्मारयति । शूरतातसुतस्य वैश्याप्रभवो हि नन्दः । **'वसुदेव उपश्रुत्य भ्रातरं नन्दमागतम्'** [१०.६.२०] इति हि भागवते ॥८१॥ आगच्छमाने । समर्थे आङ् । सङ्गच्छमाने । यस्यां रात्रौ नन्दो वसुदेवेन समगच्छत तस्यामेव रात्रावित्यर्थः । निरर्थे चाऽङ् । भ्रातृवचः श्रुत्वैव मधुरातः निर्गच्छति नन्दे । निर्गत्य च मङ्क्षु यमुनाया अपरान्ते स्वशिबिरमागच्छति सति । कंसस्य धात्री । पाद्मे चेयं सम्बन्धेन ज्येष्ठभगिनी चाऽसीदित्युक्तम्, **'–कंसो राजा सुदुःखितः । भगिनीं पूतनामाह गच्छ त्वं नन्दमन्दिरम्'** [ब्र.खं.१३.५१] इति ॥८२॥ पूतान् नयति नाशयतीति पूतना । निजं विकृतमशुभं शुभरूपवत् परिवर्तनेनाऽच्छाद्य । प्रतिप्रयाणार्थं मध्येमार्गं रचितम् । पूर्वमुषितस्य बृहद्वनस्य नातिदूरे प्रान्ते । एवं यमुनातीरे मासमुषित्वा, अथ पूतनाप्रसङ्गानन्तरं पुनर्बृहद्वनं जगामेति ज्ञायते ॥ ८३ ॥

---

१. **'–रिते जगा–'**

तीरे भगिन्यास्तु यमस्य वस्त्रगृहे शयानं पुरुषोत्तमं तम् ।
जग्राह मात्रा तु यशोदया तया निद्रायुजा प्रेक्ष्यमाणा शुभेव ॥ ८४ ॥

तन्मायया धर्षिता निद्रया च न्यवारयन्नैव हि नन्दजाया ।
तया प्रदत्तं स्तनमीशिताऽसुभिः पपौ सहैवाऽशु जनार्दनः प्रभुः ॥ ८५ ॥

मृता स्वरूपेण सुभीषणेन पपात सा व्याप्य वनं समस्तम् ।
तदाऽऽगमन्नन्दगोपोऽपि तत्र दृष्ट्वा च सर्वेऽप्यभवन् सुविस्मिताः ॥ ८६ ॥

सा ताटका [१]चोर्वशिसम्प्रविष्टा कृष्णावद्ध्यानान्निरयं जगाम[२] ।
सा तूर्वशी कृष्णभुक्तस्तनेन पूता स्वगर्गं प्रययौ तत्क्षणेन ॥ ८७ ॥

सा तुम्बुरोः सङ्गत आविवेश रक्षस्तनुं शापतो वित्तपस्य ।
कृष्णस्पर्शाच्छुद्धरूपा[३] पुनर्दिवं ययौ तुष्टे किमलभ्यं रमेशे ॥ ८८ ॥

**कृष्णावध्यानात् कृष्णा(पचार)निमित्तात् ॥ ८७–८ ॥**

निद्रयेषन्मुकुलितनेत्रतया प्रेक्ष्यमाणाऽप्यप्रेक्ष्यमाणेव । अशुभाऽपि शुभेव । अथच आशु भातीत्याशुभा विद्युत् । आशुभेव प्रसभं चक्षुषी आवृत्य जग्राह ॥ ८४ ॥ ईशिता पातुं समर्थः । सर्वसमर्थो वा । अत एव प्रभुः पूतनां दण्डयितुम् ॥ ८५ ॥ न केवलं भीरूणां भीषणम्, किन्तु वीराणामपि भीषणमिति सुभीषणेन सहजरूपेण युक्तैव पपात । तत्र शिबिरप्रान्ते । पूतनां वनव्याप्तकायां दृष्ट्वा विस्मिताः, तस्यां क्रीडन्तं बालरूपं कृष्णं दृष्ट्वा सुविस्मिताः ॥ ८६ ॥ येदानीं पूतना सैव रामावतारे ताटका । पूतनात्वे चोर्वशीसम्प्रविष्टेति विशेषः । ऊर्वशिसम्प्रविष्टा । सामासिकी नामधेयस्य ह्रस्वान्तता । **'दूतिगदितम्', 'देवकिनन्दन', 'जानकिकान्त'** इत्यादिवदित्युक्तम् । अवध्यानं द्रोहचिन्तनम् । सा ताटकायामाविष्टा । एतेन–**'पूतना लोकबालघ्नी राक्षसी रुधिराशना । जिघांसयाऽपि हरये स्तनं दत्वाऽऽप सद्गतिम्'** [भाग.१०.७.३६], **'यातुधान्यपि सा स्वर्गमवाप जननीगतिम्'** [३९] इत्यादिवचनान्युक्तार्थानि । 'यत्र सद्गतिरुच्यते तत्र पूतनेति तदाविष्टा उर्वश्युच्यत' इति । प्रकृष्टपुण्या प्रहर्षधन्या ययौ ॥ ८७ ॥ तुम्बुरुसङ्गतः शापः । वित्तपस्य शापाद् रक्षस्तनुप्रवेशः । अर्थान्तरं न्यस्यति–तुष्टे किमलभ्यं रमेशे । स्मरन्ति हि–**'किमलभ्यं भगवति प्रसन्ने श्रीनिकेतने'** इति ॥ ८८ ॥

१. **'चोर्वशीसम्प्र–'** २. **'–न्निरयं सञ्जगाम'** ३. **'–च्छुद्धभावा पुन–'**

**यदाऽऽप देवश्चतुरः स[1] मासांस्तदोपनिष्क्रामणमस्य चाऽसीत् ।**
**जन्मर्क्षमस्मिन् दिन एव चाऽसीत् प्रातः किञ्चित् तत्र महोत्सवोऽभवत्[2] ॥ ८९ ॥**

**तदा शयानः शकटस्य सोऽधः पदाऽक्षिपत् तं दितिजं निहन्तुम् ।**
**अनः समाविश्य दितेःसुतोऽसौ स्थितः प्रतीपाय हरेः सुपापः ॥ ९० ॥**

**क्षिप्तोऽनसिस्थः शकटाक्षनामा स विष्णुनेत्वासहितः पपात ।**
**ममार चाऽशु प्रतिभग्नगात्रो व्यत्यस्तचक्राक्षमभूदनश्च ॥ ९१ ॥**

**उपनिष्क्रमणं प्रथमं गृहाद् बहिर्गमनम् ॥ ८९ ॥ दितिजं निहन्तुं तं शकटं पदाऽक्षिपत् ॥ ९० ॥ सः, इत्वा इत्वना शकटेन ॥ ९१ ॥**

---

पूतनाहननानन्तरं दुष्टान्तरहननकथामारभते–यदेति । बाललीलाचतुरः स देवो यदा चतुरो मासानाप । पूर्णचतुर्मास इत्येतत् । नाक्षत्रश्चायं मासः । अन्यथा तस्मिन् दिने जन्मर्क्षयोगासम्भवात् । **'चतुर्थे मासि निष्क्रमः'** इति हि स्मरन्ति । शिशुमुपादाय मातुः प्रथमतो गृहाद् बहिर्गमनमुपनिष्क्रमणं नाम संस्कारः । जननादारभ्याष्टोत्तरशततमे दिने चतुर्थो नाक्षत्रो मासः पूर्यते । पुष्यमासे शुक्लपक्षे, प्रायः द्वादशीदिने । अत एव 'प्रातः किञ्चित् तत्र महोत्सवोऽभवत्' इत्याहेत्यतिसुन्दरम् । केचित्तु–**'प्रातः किञ्चित् तत्र जन्मर्क्षमासीत्'** इति व्याचक्षते । **'चतुर्थमासि मार्गशीर्षे'** इति च । तथा व्याख्याने तैरेव कारणं वाच्यम् । नापीदं हृदयङ्गमं गणितागमज्ञानाम् । तस्मिन् दिने जन्मर्क्षनिमित्तं उपनिष्क्रामणनिमित्तं च तत्र नन्दावासे महोत्सवोऽभवत् । अक्षराधिक्यमुत्सवे हर्षाधिक्यसूचकम् । अन्यथा 'महोत्सवोऽभूत्' इति त्रिष्टुभैवोपसमहरिष्यत् ॥ ८९ ॥ तदाऽभिषिच्य गोप्या शायितः शकटस्याधः शयानः । तं शकटरूपेणैव शकटगतम्, शकटनामानं च । अनन्ति जीवन्त्यनेनेति अनः शकटम् । नित्यप्रवासिनां गोपानामन एव हि जीविका । एतेन गोपानां जीवनोपायक्षपणमपि रक्षस आशय आसीदिति सूचयति । दितेःसुत इत्यलुगाक्रोशे ॥ ९० ॥ इत्वासहितः । **'इत्वना शकटेन आसहितः'** इति पूर्वाचार्याः । **'इत्वा इत्वना । तृतीयार्थे प्रथमा'** इति च प्राचीनम् । शकटाक्षेण सहितः कुप्यादिसहितो वा इत्वा च पपात इति भिन्नपदतयाऽपि केचिद् व्याचक्षते । अथ चेयमाचार्यपादानां शैली यदर्थविशेषलाभाय ह्रस्वस्थाने सामासिकं दीर्घमक्षरं प्रयुञ्जते–**'जनकसुताग्रे'** इति वक्तव्ये **'जनकासुताग्रे'** इति वदन्ति । **'इत्वसहितः'** इति वक्तव्ये **'इत्वासहितः'** इति । अवधारणे च दैर्घ्यमिति वैदिकं व्याकरणम् । लोकेऽपिच– 'ಬಳ್ಳಿ'' इति वक्तव्ये 'ಬಳಾಳ್ಳಿ' इति प्रयुञ्जते । तथाचायमर्थः–नकेवलमित्वा पपात । इत्वना सहितः शकटाक्ष एव पपातेति । एतीति इत्वा । इण् गतौ, क्वनिप् । स्वयमपि सम्प्रति प्रैतीति अन्वर्थ इत्वा बभूव । प्रतिसन्धि भग्नगात्रः । शकटस्याक्षे स्थित इति शकटाक्षः । अत एवानोऽपि व्यत्यस्तचक्राक्षमभूत् । **'व्यत्यस्तचक्राक्षविभिन्नकूबरम्'**[१०.८.९]

---

१. **'–श्चतुरोऽथ मा–'** २. **'–त्सवोऽभूत् ।'**

**ससम्भ्रमात्तं[1] प्रतिगृह्य शङ्कया कृष्णं यशोदा द्विजवर्य्यसूक्तिभिः ।**
**सा [2]स्नापयामास नदीतटात् तदा समागता नन्दवचोऽभितर्ज्जिता ॥ ९२ ॥**

**हत्वा तु तं कंसभृत्यं स कृष्णः शिश्ये पुनः शिशुवत् सर्वशास्ता ।**
**एवं गोपान् प्रीणयन् [3]बालकेळीविनोदतो न्यवसत् तत्र देवः ॥ ९३ ॥**

**विवर्द्धमाने लोकदृष्ट्यैव कृष्णे पाण्डुः पुनः प्राह पृथामिदं वचः ।**
**धर्म्मिष्ठो नौ सूनुरग्रे बभूव बलद्वयज्येष्ठ उतापरश्च ॥ ९४ ॥**

**यदैक एवातिबलोपपन्नो भवेत् तदा तेन परावमर्द्दे ।**
**प्रवर्त्त्यमाने[4] स्वपुरं हरेयुश्चौर्य्यात् परे तद् द्वयमत्र योग्यम् ॥ ९५ ॥**

**शस्त्रास्त्रविद् वीर्य्यवान् नौ सुतोऽन्यो भवेद् देवं तादृशमाह्वयातः ।**
**शेषस्तव भ्रातृसुतोऽभिजातस्तस्मान्नासौ सुतदानाय योग्यः ॥ ९६ ॥**

**सूक्तिभिराशीर्वचनैरिति यावत् ॥ ९२ ॥ बालकेळी बालक्रीडा ॥ ९३–४ ॥ परावमर्दे शत्रुभिः सह युद्धे ॥ ९५–६ ॥**

---

इति भागवते । **‘अक्षोऽग्रकीलिका’** इत्यभिधानम् । चक्रस्यापतनहेतुः शकटाधस्था चक्रयोर्बन्धनी स्थूणेत्यर्थः । ‘ಗಾಲಿಯ ಅಚ್ಚು’ इति भाषायाम् ॥ ९१ ॥ ससम्भ्रमात् सम्भ्रान्तात् परिगताज्जनमध्यात् तं प्रतिगृह्य । नष्टस्य वस्तुनः पुनः प्रत्यादानमिव मेने इत्यनेनाऽह । अथच ससम्भ्रमैः गोपगोपीवृन्दैः आत्तमाप्तमावृतमित्येतत् । ‘ससम्भ्रमा आत्तम्’ इति वा च्छेदः । जनैरात्तं परिवृतं ससम्भ्रमा प्रतिगृह्य । ससम्भ्रमैर्जनैरात्तं वा । ‘ससम्भ्रमा तम्’ इति पाठे स्वरसोऽर्थः । जनवृन्दात् पृथक्पृथक्कृत्य स्ववशे ग्रहणं प्रतिग्रहणम् । रक्षसाऽपजिहीर्षितस्य, विधिना पुनर्दत्तस्येव स्वीकरणं प्रतिग्रहणम् । सम्भावितानिष्टप्रतिक्रियार्थं ग्रहणं प्रतिग्रहणम् । शङ्कया ग्रहपीडाशङ्कया । तथाहि भागवते– **‘रुदन्तं पुत्रमादाय यशोदा ग्रहशङ्किता । कृतस्वस्त्ययनं विप्रैः सूक्तैः स्तनमपाययत्’** [१०.८.१३] इति ॥ ९२–३ ॥ विनोदत एव विविधलीलाभिर्वर्धमाने । उतेति समुच्चये । बलद्वयज्येष्ठः, उत धर्मिष्ठश्च ॥ ९४ ॥ परावमर्दे शत्रुमर्दनकर्मणि प्रवर्त्त्यमाने सति । अत्र राज्यरक्षणे बलाढ्यं पुत्रद्वयं योग्यम् ॥ ९५ ॥ अभिलाषेण जातः रोहिण्यां बलभद्रनामा ॥ ९६ ॥

---

१. ‘सा सम्भ्रमात्तम्’ २. ‘संस्नापया–’

३. ‘बालकेलीवि–’ ४. ‘प्रवर्त्तमाने’

नवै सुपर्ण्णः सुतदो नरेषु प्रजायते वाऽस्य[1] यतस्तथाऽऽज्ञा ।
कृता पुरा हरिणा शङ्करस्तु क्रोधात्मकः पालने नैव योग्यः ॥ ९७ ॥

अतो महेन्द्रो बलवाननन्तरस्तेषां समाह्वानमिहार्हति स्वराट् ।
इतीरिता साऽऽह्वयदाशु वासवं ततः प्रजज्ञे स्वयमेव शक्रः[2] ॥ ९८ ॥

स चार्ज्जुनो नाम नरांशयुक्तो विष्ण्वावेशी बलवानस्त्रवेत्ता ।
रूप्यन्यः स्यात् सूनुरित्युच्यमाना भर्त्त्रा कुन्ती नेति तं प्राह धर्म्मात् ॥ ९९ ॥

बृहस्पतिः पूर्वमभूद्धरेः पदं संसेवितुं पवनावेशयुक्तः ।
स उद्धवो नाम यदुप्रवीराज्जातो विद्वानुपगवनामधेयात् ॥ १०० ॥

द्रोणात्मकं नातितरां स्वसेवकं कुर्याद्धरिर्म्मामिति भूय एव ।
स उद्धवात्माऽवततार यादवेष्वासेवनार्त्थं पुरुषोत्तमस्य ॥ १०१ ॥

**नरेषु सुतदो न सुतोत्पादको न । न (प्र)जायते स्वयं नरेषु नावतरति च ॥ ९७–८ ॥ धर्मात् धर्मस्वरूप-पर्यालोचनात् । नेत्याह, अतः परं न युक्तमित्याह ॥ ९९–१०१ ॥**

---

न वै नरेषु सुतदः । नवा नरेषु स्वयं प्रजायते । यतोऽस्य तथाऽऽज्ञा हरिणा कृता ॥ ९७ ॥ स्वराट् इन्द्रः । स्वर्गस्यायं राजेति । तं हि स्वाराजं सन्तं स्वराजमाहुः परोक्षप्रियाः । मूलरूपे यः शक्त्यंशस्तस्यैवात्र विशिष्याविर्भाव इति सूचयन् शक्र इत्याह । शक्नोतीति हि शक्रः । अभिलषितश्च वीर्यवान् सुतः ॥ ९८ ॥ रूप्यन्यः स्यात् । **'पाण्डुस्तु पुनरेवैनां पुत्रलोभान्महायशाः । प्रादिशद् दर्शनीयार्थी कुन्ती त्वेनमथाब्रवीत् । नातश्चतुर्थं प्रसवमापत्स्वपि वदन्त्युत । अतः परं स्वैरिणी स्याद् बन्धकी पञ्चमे भवेत्'** [आ.प.१३२.६३.४] इति हि भारते । धर्मात् धर्मबोधकशास्त्रवचनात् । धर्ममाश्रित्य वा ॥ ९९ ॥ यः पूर्वं द्रोणोऽभूत् स एव पुनरुद्धवोऽभूत् । कृष्णजननात् पूर्वं पाण्डवजननाच्च । साम्ग्रयेण सेवितुम् । उपपन्ना उत्कृष्टाश्च गावोऽस्येत्युपगवः । सर्वोत्तमो भगवान् धवोऽस्येत्युद्धवः ॥ १०० ॥ आ समन्तादति-तरां सेवनार्थम्, आ बाल्यादाऽन्तं सेवनार्थम् । आदरेण भक्त्या सेवनार्थं च । द्रोणात्मा हि नातितरां भक्त्या सिषेवे । किन्तु युध्यमानः सिषेवे ॥ १०१ ॥

---

१. **'–यते चास्य'** । वे.ती.पाठोऽपि तथा । २. **'स्वयमेव वासवः ।'**

बृहस्पतेरेव स सर्वविद्या अवाप मन्त्री निपुणः सर्ववेत्ता ।
वर्षत्रये तत्परतः स सात्यकिर्जज्ञे दिने चेकितानश्च तस्मिन् ॥ १०२ ॥

मरुत्सु नाम प्रतिभो[1] यदुष्वभूत् स चेकितानो हरिसेवनार्त्थम् ।
तदैव जातो हृदिकात्मजोऽपि वर्षत्रये तत्परतो युधिष्ठिरः ॥ १०३ ॥

ततोऽब्दतो भूभरसंहृतौ हरेरङ्गत्वमाप्तुं गिरिशोऽजनिष्ट ।
अश्वत्थामा नामतोऽश्वध्वनिं स यस्माच्चक्रे जायमानो महात्मा ॥ १०४ ॥

स सर्वविद् बलवानस्त्रवेत्ता कृपस्वसायां द्रोणवीर्य्योद्भवोऽभूत् ।
दुर्य्योधनस्तच्चतुर्त्थेऽह्नि जातस्तस्यापरेद्युर्भीमसेनः सुधीरः ॥ १०५ ॥

**मन्त्री सन्धिविग्रहादिस्वरूपतत्प्रयोगादिपरिज्ञानवान् ॥ १०२ ॥ चेकितानस्य प्रागनुक्तत्वात् तत्स्वरूपमाह– मरुत्स्विति । प्रवहो नाम स इति सम्बन्धः ॥ १०३–५ ॥**

---

मन्त्री सिद्धमन्त्रः, राजमन्त्रज्ञश्च । मन्त्री च बभूव कंसस्य । स पूर्वाध्याये प्रस्तुतः कृष्णपक्षमानी युयुधानः सत्यकात्मजः । तत्रानुक्तश्चेकितानश्च । सर्वं चिकेतीति चेकितानः । कि ज्ञाने ॥ १०२ ॥ चेकितानः प्रवहांश इति वदन्ति । **'प्रवहो यदुष्वभूत्'** इति च पाठं पठन्ति । कृतवर्मा प्रवहांश इति हि पूर्वमुक्तम् । कथं स एव तस्मिन्नेव दिने पुना रूपान्तरेण जायेत? तस्माद् रमणीयः प्राचीनपाठः– **'प्रतिभो यदुष्वभूत्'** इति । हृदिकात्मजः कृतवर्मा, यः प्रवहांशयुक् ॥ १०३ ॥ गिरिशोऽजनिष्ट । **'गाङ्गेयो वसुमुख्यश्च द्रोणो देवमुनिः प्रभुः । अश्वत्थामा हरः साक्षाद् हरिर्नन्दकुलोद्भवः'** [सृ.खं.१६.२१] इति पाद्मे । अश्वत्थामा नामतः । **'अलभद् गौतमी पुत्रमश्वत्थामानमेव च । स जातमात्रो व्यनदद् यथैवोच्चैःश्रवा हयः । तच्छ्रुत्वाऽन्तर्हितं भूतमन्तरिक्षस्थमब्रवीत् । अश्वस्येवास्य यत् स्थाम नदतः प्रदिशो गतम् । अश्वत्थामैव बालोऽयं तस्मान्नाम्ना भविष्यति'** [आ.प.१४०.४९–५१] इति सम्भवे । का निरुक्तिः? अवधत्स्व । स्थामेति शत्रूणां पुरोऽप्यप्रकम्प्यत्वं नाम स्थैर्यमुच्यते । सिंहनादेन सिंहतुल्यपराक्रमोऽयमिति गम्यते । अश्वस्येव ह्रेषणेनाश्ववदस्य स्थामेति गम्यते । अथवा स्थैर्यवाचिना स्थामशब्देन स्थैर्याभिव्यञ्जको नादो लक्ष्यते । तथाच अश्वस्य स्थामेव स्थाम नादोऽस्येति अश्वत्थामा । **'जातमात्रेण वीरेण येनोच्चैःश्रवसा यथा । ह्रेषता कम्पिता भूमिर्लोकाश्च सकलास्त्रयः'** [द्रो.प.१९७.३२] इति नारायणास्त्रमोक्षे । **'स्थाम्नो लुग् वक्तव्यः'** [अ.सू.४.३.६०] इति कात्यायनीयं वार्तिकम् । **'स्थाम्नोऽकारः'** [अ.सू.४.१.८५] इति च । तेनाश्वत्थामोऽपि ॥ १०४ ॥ स्वसाशब्द आदन्तोऽप्यस्तीत्युक्तम् । **'कृपामाह कृपस्वसाम्'** इत्यादिपुराणप्रयोगश्चात्र संवदते । **'पितृष्वसायाः पुत्रो मे सम्बन्धं**

---

१. **'प्रवहो यदुष्वभूत्'** । वे.ती.पाठोऽपि तथेति भाति ।

यदा स मासद्वितयी बभूव तदा रोहिण्यां बलदेवोऽभिजातः ।
बली गुणाढ्यः सर्ववेदी य एव सेवाखिन्नो लक्ष्मणोऽग्रे हरेर्भूत् ॥ १०६ ॥

यदा हि पुत्रान् विनिहन्तुमेतौ सहैव बद्धौ गतिशृङ्खलायाम् ।
कंसेनापापौ देवकीशूरपुत्रौ वियोजिताः शौरिभार्य्याः पराश्च ॥ १०७ ॥

विनिश्चयार्थं देवकीगर्भजानामन्या भार्य्या धृतगर्भाः स कंसः ।
स्थानान्तरे प्रसवो यावदासां संस्थापयामास सुपापबुद्धिः ॥ १०८ ॥

हेतोरेतस्माद् रोहिणी नन्दगेहे प्रसूत्यर्थं स्थापिता तेन देवी ।
लेभे पुत्रं गोकुले पूर्णचन्द्रकान्ताननं बलभद्रं सुशुभ्रम् ॥ १०९ ॥

**स भीमः यदा मासद्वितयी । यः सेवाखिन्नो लक्ष्मणः स एव हरेः कृष्णात् अग्रे प्रथमतः भूत् अभूत् । लक्ष्मणजन्मन्यतिमत्सेवया श्रान्तोऽयमस्मिन् जन्मनि मदग्रजो भवत्विति हरीच्छयेति भावः ॥ १०६ ॥ रोहिणी गोकुले बलभद्रं पुत्रं लेभ इति वक्ष्यति । तस्या गोकुलेऽवस्थानं कुत इत्यत आह–यदा हीत्यादिना ॥ १०७–१० ॥**

---

**नार्हति द्विषाम्'** इति भारते [आ.प.२४५.१३] । **'पितृष्वसामातुलजौ भ्रातरावपराजितौ'** [क.प.३४.१३] इति च । दुहितृशब्दोऽप्येवम्–**'प्रदातुं दुहितां तस्मै मनसा चिन्तयन् प्रभुः'** [उ.खं.२४२.१४३] इति पाद्मे । तस्यापरेद्युर्भीमसेनः । तथाहि भारते–**'यस्मिन्नहनि भीमस्तु जज्ञे भीमपराक्रमः । तामेव रात्रिं पूर्वां तु जज्ञे दुर्योधनो नृपः'**[आ.प.१२९.६८] इति । भीमजननानन्तरं पुना रात्रौ दुर्योधनजननम् । ततः पूर्वमहन्येव युयुत्सोश्च जननमिति ॥ १०५ ॥ यः अग्रे रामावतारे सेवया खिन्नः लक्ष्मणः भूत् स एवेदानीं कृष्णावतारे अग्रे जातोऽग्रजो भूत् सेवानिमित्तखेदपरिहाराय । अयं मम रामत्वेऽनुजः सन् अतिशयसेवयाऽऽत्मानं पर्यखेदयत् । मा पुनरयमस्मिन्नपि जन्मनि सेवापरिखिन्नो भूदिति भगवदिच्छया । भूदित्यल्लोपेन तस्य पुण्यलोपमाह । अपिच व्याचक्षते–**'अलम्बुद्धिराहित्यं खेदः । रामावतारे कृतायामपि सेवायामलम्बुद्धिरहितः पुनरपि दुष्टनिधने भगवदङ्गतामाप्तुं बलदेवो बभूव'** इति । पूर्वोत्तरविरुद्धमाचार्यवचनविरुद्धं चेदमिति भावप्रकाशिकायाम् ॥ १०६ ॥ गत्यनुकूला शृङ्खला गतिशृङ्खला । यया बद्धावपि सहैव सञ्चरतः । पादशृङ्खला वा । परा अन्या भार्या रोहिण्याद्या वियोजिताः दूरे स्थापिताः ॥ १०७ ॥ कदा वियोजिताः? यदा धृतगर्भाः । न सर्वदा । सम्बन्धिषु स्थापनं संस्थापनम् । दम्पत्योर्वियोजनं नाम महदिदं पातकस्थानमित्याह–सुपापबुद्धिः ॥ १०८ ॥ वसुदेवभ्रातुर्नन्दस्य गेहे स्थापिता प्रजावतीत्वात् । चन्द्रः पूर्णोऽपि सकलङ्कः । अयं तु सुशुभ्रो निष्कलङ्कः । अथच शुभ्रो

**भीमजननात् पूर्वं रात्रौ** दुर्योधनजननम् । ततः पूर्वमहन्येव युयुत्सोश्च जननमिति ॥ १०५ ॥

यदा त्रिमासः स बभूव देवस्तदाऽऽविरासीत् पुरुषोत्तमोऽजः[1] ।
कृष्णशेषावाप्तुकामौ सुतौ हि तपश्चक्राते देवकीशूरपुत्रौ ॥ ११० ॥

विष्ण्वावेशी बलवान् यो गुणाधिकः स मे सुतः स्यादिति रोहिणी च ।
तेपे तपोऽतो हरिशुक्लकेशयुतः शेषो देवकीरोहिणीजः ॥ १११ ॥

अवर्द्धतासौ हरिशुक्लकेशसमावेशी गोकुले रौहिणेयः ।
कृष्णोऽपि लीला ललिताः[2] प्रदर्शयन् बलद्वितीयो रमयामास गोष्ठम् ॥ ११२ ॥

स प्राकृतं शिशुमात्मानमुच्चैर्विजानन्त्या मातुरादर्शनाय ।
विजृम्भमाणोऽखिलमात्मसंस्थं प्रदर्शयामास कदाचिदीशः ॥ ११३ ॥

साऽण्डं महाभूतमनोऽभिमानमहत्प्रकृत्यावृतमब्जजादिभिः ।
सुरैः शिवेतैर्न्नरदैत्यसङ्घैर्य्युतं ददर्शास्य तनौ यशोदा ॥ ११४ ॥

**शुक्लकेशयुतः शुक्लकेशावेशयुतः ॥ १११–२ ॥ आदर्शनाय सम्यक् स्वरूपप्रदर्शनाय ॥ ११३ ॥ सा महाभूतमनोऽभिमानमहत्प्रकृत्यावृतम् । महाभूतानि अबादीनि चत्वारि । पृथिव्या अण्डान्तर्गतत्वान्न पृथिवी अण्डावरणत्वेन ग्राह्या । 'अबग्नीरनभोऽहङ्कृन्महत्तत्वगुणत्रयैः' इत्यत्र पृथिव्या अण्डावरणेऽपरिगणितत्वात् । मनोभिमानः मनोभिमानिना रुद्रेण अभिमन्यमानः मनोभिमानः । अहङ्कारतत्त्वमिति यावत् । मनः मनस्तत्वं अभिमानोऽहङ्कारतत्वमिति पृथग्ग्रहणे अण्डावरणनवत्वभङ्गात् । 'अबग्नीर–'इत्यादि (व्यासवचनेषु) अहङ्कारतत्वस्यैव गृहीतत्वाच्च । महत् तत्त्वम् । प्रकृतिरिति गुणत्रयम् । एवं महाभूतमनोभिमानमहत्प्रकृतिभिर्नवभिरावरणैरावृतम्, अन्तश्च एतैः सुरादिभिश्च युतम्, अण्डमस्य तनौ ददर्शेति श्लोकार्थः ॥ ११४–६ ॥**

---

गौराङ्गः । आसेचनकं चास्य रूपमिति सुशुभ्रमित्याह । **'श्वेताद्रिशिखरोपमः'** [७३.४२] इति ब्राह्मे ॥१०९–११॥ समीचीनोऽयमावेशावतारः । येन तस्य पूर्णावतारेण सहपाठः–**'रामकृष्णाविति भुवो भगवानहरद् भरम्'** [भाग.१.३.२३] इति ॥ ११२ ॥ उच्चैः दृढम् । आदर्शनाय आत्मतत्वदर्शनाय । प्रभावप्रकटनाय दर्शनं प्रदर्शनम् ॥ ११३ ॥ महाभूतानीति पञ्चभूतानि पञ्च तन्मात्राश्च । मनःशब्देन मन्यन्त एभिर्विषयानिति पञ्चज्ञानेन्द्रियाणि च गृह्यन्ते । मनोबुद्धी च । उपलक्षणतया

---

१. **' –तमोऽजः । तौ कृष्णशेषा–'** २. **'ललिताः'**

न्यमीलयच्चाक्षिणी भीतभीता जुगूह चाऽऽत्मानमथो रमेशः ।
वपुः स्वकीयं सुखचित्स्वरूपं पूर्ण्णं सत्सु ज्ञापयंस्तद्ध्यदर्शयत् ॥ ११५ ॥

कदाचित् तं लाळयन्ती[1] यशोदा वोढुं नाशक्नोद् भूरिभाराधिकार्त्ता ।
निधाय तं भूमितळे[2] स्वकर्म्म यदा चक्रे दैत्य आगात् सुघोरः ॥ ११६ ॥

तृणावर्त्तो नामतः कंसभृत्यः सृष्ट्वाऽत्युग्रं चक्रवातं शिशुं तम् ।
आदायाऽयादन्तरिक्षं[3] स तेन शस्तः कण्ठग्राहसंरुद्धवायुः ॥ ११७ ॥

पपात कृष्णेन हतः शिलातळे[4] तृणावर्त्तः पर्वतोदग्रदेहः ।
सुविस्मयं चाऽपुरथो जनास्ते तृणावर्त्तं वीक्ष्य सञ्चूर्ण्णिताङ्गम् ॥ ११८ ॥

अक्रुद्ध्यतां केशवोऽनुग्रहाय शुभं स्वयोग्यादधिकं निहन्तुम् ।
स क्रुद्ध्यतां नवनीतादि मुष्णंश्चचार देवो निजसत्सुखाम्बुधिः ॥ ११९ ॥

**शस्तः हतः । शसु हिंसायामिति धातुः ॥ ११७–९ ॥**

---

पञ्च कर्मेन्द्रियाणि च । अभिमान इत्यहङ्कारः । अभिमानिनो देवाश्च । चित्तात्मकं महत्तत्वम् । त्रिगुणमयी प्रकृतिः । एवं पञ्चविंशतितत्वैः समावृतम्, त्रिविधजीवसङ्घैश्च युतं ब्रह्माण्डमपश्यत् । अब्जजपदेन वायुरप्युपलक्ष्यते । शिवपदेन गरुडशेषौ च । अब्जजादयः सुराः । इन्द्राद्याः बाह्येन्द्रियाभिमानिनः । शिवस्यान्तरङ्गमानित्वात् पृथग्ग्रहणम् । तनावित्यणुके मुखे ॥ ११४ ॥ भीतभीता अतितरां भीता । जुगूह पुनः परमाच्छादिकयाऽऽवृत्य गोपयामास । सत्सु सात्विकेषु भगवतश्चिदानन्दस्वरूपत्वस्य दृढीकरणार्थं तज्ज्ञापयन् यशोदाव्याजेनादर्शयद्धि ॥ ११५ ॥ भागवते इतः पूर्वमुक्तां कथां घटनक्रमानुसारेण सम्प्रत्याह–कदाचित् तम् ॥ ११६–७ ॥ कृष्णेन हतः कृष्णेन सहित एव पपात । उदग्रमुन्नतम् । अथो हतस्य रक्षसो वक्षस्यक्षतगात्रस्य बालकृष्णस्य दर्शनसमनन्तरमेव सपदि । पर्वतगात्रोऽपि हतः सर्वशश्चूर्णिताङ्गः पतित इति विस्मयः । सुकोमलगात्रः शिशुकोऽयमक्षतः स्वयमविस्मयः क्रीडतीति सुविस्मयः ॥ ११८ ॥ अनुग्रहाय स्वयोग्यदानाय नवनीतादि मुष्णन्, तेन कुपितानामन्ततः शुभमेव मुष्णन्, चचार । अन्यथा निजनिर्दुःखसुखाम्बुधेः दध्यादिमोषणमिषेण किं प्रयोजनम्? ॥ ११९ ॥

---

१. 'लालयन्ती' २. 'भूमितले'

३ 'आदायाऽगादन्तरिक्षम्' ४. 'शिलातले'

**यस्मिन्नब्दे भाद्रपदे स मासे सिंहस्थयोर्गुरुरव्योः परेशः ।**
**उदैत् ततः फाल्गुने फल्गुनोऽभूद् गते ततो माद्रवती बभाषे ॥ १२० ॥**

**यस्मिन्नब्दे यस्मिन् संवत्सरे भाद्रपदे मासे पौर्णमासीप्रतिपदमारभ्य मासोपक्रमाङ्गीकारे श्रावणबहुलस्यैव भाद्रपदत्वं विवक्ष्य[1] भाद्रपदे मासे गुरुरव्योः सिंहस्थयोः सतोः परेशः उदैत्, ततः तस्मिन्नेव संवत्सरे फाल्गुन-मासे फल्गुनोऽभूत् । ततः तस्मिन् संवत्सरे गते माद्रवती बभाषे, पाण्डुमिति शेषः ॥ १२०–३ ॥**

---

पुराणेषु श्रावणे कृष्णजननमिति बहुलं पठ्यते । भाद्रपद इति च । **‘ततस्तु दशमे मासि कृष्णे नभसि पार्वति । अष्टम्यामर्धरात्रे च तस्यां जातो जनार्दनः’** [उ.खं.२४५.३५] इति पाद्मे । तत्रैव चान्यत्र–**‘भाद्रे मास्यसिते पक्षे चाष्टमी-सञ्ज्ञका तिथिः । रोहिणीतारकायुक्ता रजनी घनघोषिता । तस्यां जातो जगन्नाथः –’** [ब्र.खं.१३.२९] इति । **‘प्रावृट्काले च नभसि कृष्णाष्टम्यामहं निशि । उत्पत्स्यामि–’** [वि.पु.५.१.७८; ब्रा.पु.७३.४४] इति । **‘सिंहराशि-गते सूर्ये गगने जलदाकुले । मासि भाद्रपदेऽष्टम्यां कृष्णपक्षेऽर्धरात्रके । वृषराशिस्थिते चन्द्रे नक्षत्रे रोहिणीयुते । वसुदेवेन देवक्यामहं जातो जनाः स्वयम्’** [भ.पु.उत्त.प.५५.१४–५] इत्यादि च पुराणान्तेषु । अतो मुग्धो जनः सन्दिग्धे– किं नभसि कृष्णावतार आहो नभस्य इति । किं तत्र वास्तवम्? कथं वचनद्वयस्य सङ्गमनम्? आह– यस्मिन्नब्दे । अयमर्थः–सिंहमासे तावत् कृष्णजननम् । तदुक्तम्–‘सिंहस्थयोर्गुरुरव्योः’ इति । सिंहमासस्तु क्वचिच्छ्रावणे कृष्णाष्टम्यां भवति । क्वचिद् भाद्रपदे । यस्मिन्नब्दे श्रावणे सिंहमासः, तदा श्रावणे कृष्णजन्माष्टमी भवति । यस्मिन्नब्दे भाद्रपदे सिंहमासः तस्मिन् भाद्रपदे कृष्णजन्माष्टमी भवति । कृष्णाष्टम्यामर्धरात्रे यदा रोहिणी च भवति तदा जयन्तीयोगोऽयम् । कृष्णाष्टम्यां रोहिणीयोगश्च सिंहमासे सत्येव । नान्यत्र । तस्माद् यदा श्रावणे सिंहमासस्तदा जयन्तीयोगोऽपि श्रावण एव । यदा भाद्रपदे सिंहमासस्तदा भाद्रपद एवेति । अत एव जयन्तीनिर्णये मासस्यानुल्लेखः– **‘रोहिण्यामर्द्धरात्रे तु यदा काळाष्टमी भवेत् । जयन्ती नाम सा प्रोक्ता–’** इति । अर्द्धरात्रे रोहिण्यां यदा श्रावणे वा भाद्रपदे वा काळाष्टमी भवेत् सा जयन्तीति प्रोक्तेत्यर्थः । केवलमनयोरेव द्वयोर्मासयोः काळाष्टम्यां रोहिणीयोगः सम्भवति । नान्येषु क्वापि । तदपि सिंहमाससमायोग एव । ब्रह्मवैवर्तेऽप्येवमेवोक्तम्–**‘अष्टमी कर्क्षसंयुक्ता रात्र्यर्धे यदि दृश्यते । स एव मुख्यकालश्च तत्र जातः स्वयं हरिः । जयं पुण्यं च तनुते जयन्ती तेन सा स्मृता’** [ब्र.वै.८.५१] इति कृष्णजन्मखण्डे । कस्य प्रजापतेः ऋक्षं कर्क्षम्, रोहिणीत्यर्थः । अत्रापि मासानुक्तेरस्मदुक्त एवाऽशयः । अथच पञ्चम-मासत्वात् सौरः श्रावण इति सिंहमास एवोच्यते । अत एव सिंहमासं भाषायां ‘[illegible]’ इत्येव व्यपदिशन्ति । अत एवच विष्णुतीर्थीये स्फुटमुदघोषि–**‘सिंहमासे तु रोहिण्या युतां कृष्णाष्टमीं पुमान् । उपोष्य मध्यरात्रे च पूजयेन्नन्दनन्दनम्’** [स.प.३.२०९] इति । भावप्रकाशिकायां चैवम् । तथाहि भावप्रकाशिकायाः शुद्धः पाठः–**‘यस्मिन् संवत्सरे भाद्रपदे मासि रविः सिंहराशिं गतो भवति । गुरुरपि सिंहराशिस्थितो भवति । तदा चान्द्रमानरीत्या भाद्रपदमासो भवति । सौरमानरीत्या श्रावणमासश्च भवति । तस्मिन् संवत्सरे कृष्णावतार इति’** इति । येऽन्यथा

---

१. **‘विवक्षित्वा’** इति वक्तव्यम् । प्रायो लिपिकृतः प्रामाद्यन् । समग्रं विवरणं चिन्त्यमिदम् ।

जाताः सुतास्ते प्रवराः पृथायामेकाऽनपत्याऽहमतः प्रसादात् ।
तवैव भूयासमहं सुतेता विधत्स्व कुन्तीं मम मन्त्रदात्रीम् ॥ १२१ ॥

इतीरितः प्राह पृथां स माद्र्यै दिशस्व मन्त्रं सुतदं वरिष्ठम् ।
इत्यूचिवांसं पतिमाह यादवी दद्यां त्वदर्थे तु सकृत्फलाय ॥ १२२ ॥

उवाच माद्र्यै सुतदं मनुं च पुनः फलं ते न भविष्यतीति ।
मन्त्रं समादाय च मद्रपुत्री व्यचिन्तयत् स्यां नु कथं द्विपुत्रा[१] ॥ १२३ ॥

सदाऽवियोगौ दिविजेषु दस्रौ नचैतयोर्न्नामभेदः क्वचिद्धि ।
एका भार्य्या[२] सैतयोरप्युषा हि तदायातः सकृदावर्त्तनाद् द्वौ ॥ १२४ ॥

**तत् तस्मात् सदाऽवियुक्तत्वात्, नामभेदाभावात्, एकभार्यावत्त्वेनातिप्रियत्वाच्च । सकृदावर्तनात्, मन्त्रस्येति शेषः, द्वौ देवौ आयातः ॥ १२४ ॥**

---

वदन्ति त आचार्यवचनप्रतीपं वदन्ति । तदेतेन पथा शास्त्रवचनानां समन्वये सर्वं सङ्गतम्, सर्वं सुन्दरम् । न कोऽपि विरोधः । नन्वास्तामियं व्यवस्था श्रावणे वा भाद्रपदे वा यदा सिंहयोगस्तदा जन्माष्टमीव्रतमिति । यस्मिन्नब्दे कृष्णावतार आसीत् तदा कस्मिन् मासे सिंहयोग आसीत्? आह– भाद्रपदे मास इति । तस्मिन्नेवाब्दे कृष्णजननाच्छष्ठे मासि फाल्गुने पूर्णिमायां फल्गुनोऽभूत् । यद्यपि भारते– **'अर्जुनात् केशवो ज्येष्ठस्त्रिभिर्मासैर्महाद्युतिः'** [आ.प.१३४.९] इति पाठः सम्प्रति दृश्यते । अवश्यं लिपिकृतः प्रमाद्यन्ति । नतु प्रबन्धारो महर्षयः । **'अर्जुनात् केशवो ज्येष्ठः षड्भिर्मासैः'** इति पठनीयम् । तस्मिन्नेव वत्सरे चैत्रे भीमस्य चाश्वत्थाम्नश्च जननम् । ज्येष्ठे बलरामस्येति महत्तरः स वत्सरः । तस्मिन्नब्दे गते, पुनश्चैत्रे समागते माद्री बभाषे । मद्रदेशाधिपो माद्र ऋतायनः । तेन पितृमतीयं माद्रवती । **'माद्रवत्यां तु जनिता-वश्विनाविति नः श्रुतम्'** [पा.पु.१३.११८] इति पुराणवचनम् ॥ १२०–१ ॥ मन्त्रं दिशस्व । स्वमन्त्रं स्वार्जितं मन्त्रं माद्र्यै दिशेति वा । त्वदर्थे तु । केवलं त्वत्प्रियार्थम् । तदपि सकृत्फलायैव ॥ १२२–३ ॥ नचैतयोर्नामभेदः । नन्वस्ति नामभेदः नासत्यदस्राविति । चतुर्थ इन्द्रो नासत्यः । पञ्चमो दस्र इति । न भोः नासत्योऽपि दस्र उच्यते । दस्रोऽपि नासत्य उच्यते । अत एव नासत्यौ दस्रौ इत्युच्येते । तथाच नासत्यदस्राविति न द्वन्द्वः नासत्यश्च दस्रश्चेति । किन्तु विशेषणसमास एवायम्–नासत्यौ च तौ दस्रौ चेति । ननु चतुर्थमिन्द्रं नासत्यमाहुः । न दस्रम् । तथा पञ्चममिन्द्रं दस्रमाहुः । न नासत्यम् । तर्हि नामभेदोऽस्ति । न भोः । केवलमधिकारविभागार्थमयं नामभेदः । तापसमन्वन्तरेऽ-

---

१. **'द्विपुत्री'** इति पाठः प्रामादिकः ।
२. **'–र्या सा तयो–'**

इतीक्षन्त्याऽऽकारितावश्विनौ तौ शीघ्रप्राप्तौ[1] पुत्रकौ तत्प्रसूतौ ।
तावेव देवौ नकुलः पूर्वजातः सहदेवोऽभूत् पश्चिमस्तौ यमौ च[2] ॥ १२५ ॥

पुनर्म्मनोः फलवत्त्वाय माद्री सम्प्रार्थयामास पतिं तदुक्ता ।
पृथाऽवादीत् कुटिलैषा मदाज्ञामृते देवावाह्वयामास दस्रौ ॥ १२६ ॥

अतो विरोधं च मदात्मजानां कुर्य्यादिषेत्येव भीतां न मां त्वम् ।
नियोक्तुमर्हः पुनरेव राजन्नितीरितोऽसौ विरराम क्षितीशः ॥ १२७ ॥

विशेषनाम्नैव समाहुताः सुतान् दद्युः सुरा इत्यविशेषितं ययोः[3]।
विशेषनामापि समाह्वयत् तौ मन्त्रावृत्तिर्न्नामभेदेऽस्य चोक्ता ॥ १२८ ॥

**इतीक्षन्त्या इति विचारयन्त्या, आकारितौ आहूतौ ॥ १२५–७ ॥ ननु मरुतां रुद्राणां (च मरुत इति) रुद्रा इति सामान्यतो नामभेदाभावात् तदाह्वानेन च बहुसुतलाभे सम्भवति सति किमश्विनावेवाऽह्वयदित्यत आह– विशेषेति । भवेदेवं यदि सामान्यनाम्नाऽऽह्वाने सुतान् दद्युः । न चैवम् । विशेषनाम्नैव विशेषनाम्ना समाहूता एव सुतान् दद्युरिति यत् तस्मात् तावाह्वयदिति वाक्यशेषः[4] । नन्वश्विनाम्नोऽपि द्वयोः साधारणत्वात् कथमेतद् विशेषनामेत्यत आह– अविशेषितमिति । (ययो)र्विशेषनामाप्यविशेषितं) परस्परं साधारणं तयोः प्रातिस्विकविशेषनामाभावात् । तस्मात् तावश्विनावेव समाह्वयत् । अस्य आहूतस्य वस्तुनः नाम-भेदे प्रातिस्विकविशेषनामसद्भावे मन्त्रावृत्तिः एकमाहूय पुनरन्याह्वाने मन्त्रस्यावृत्तिः कर्तव्यतयोक्ता नतु व्यक्तिभेदमात्र इति भावः ॥ १२८ ॥**

---

यमिन्द्रः । रैवतमन्वन्तरेऽयमिति । अन्यथा कस्मिन् कतर इन्द्र इति प्रश्नस्य किमुत्तरं ब्रूषे । अस्तु तत् तथा । उपासनाविषये तु 'सदाऽवियोगौ दिविजेषु दस्रौ' । अतः सकृन्मन्त्रस्याऽवर्तनात् द्वावप्यायातः । **'नासत्यश्चैव दस्रश्च स्मृतौ द्वावश्विनावपि'** [शां.प.२०७.१९] इति भारते ॥ १२४ ॥ नकुलः पूर्वजातः, अतः कनीयान् । **'यमयोः पूर्वजातः कनीयान्'** इति स्मरणात् । सर्पतां दुष्टानामयं नकुलतीति नकुलः । न विद्यते कुलेऽन्यः सुन्दरतरस्तस्मादिति नकुल इति पुराणं निर्वचनम् । **'कुले नास्ति समो रूपे यस्येति नकुलः स्मृतः'** [विरा.प.७.३३] इति भारते । अवतारे तु नामभेद इष्यत इत्याह– सहदेवोऽभूत् पश्चिमः । भ्रातृभिः सह दीव्यतीति सहदेवः । यथा मूलरूपे तथाऽवतारे च तौ यमौ ॥ १२५–७ ॥ विशेषनाम्नैव सम्यगसाधारण्येनाऽहूताः । न तु देवाः सुरा इत्यादिसाधारणनाम्ना । ययोर्विशेषनामाप्य-

---

१. 'शीघ्रं प्राप्तौ' २. 'यमौ हि ।'

३. 'समहुताः सुरा दद्युः सुतानित्यविशेषितं तयोः ।' ४. 'वाक्यान्वयः' इति साधीयान् पाठः ।

युधिष्ठिराद्येषु चतुर्षु वायुः समाविष्टः फल्गुनेऽथो[१] विशेषात् ।
युधिष्ठिरे सौम्यरूपेण विष्टो वीरेण रूपेण धनञ्जयेऽसौ ॥ १२९ ॥

शृङ्गाररूपं केवलं दर्शयानो विवेश वायुर्य्यमजौ प्रधानः ।
शृङ्गारकैवल्यमभीप्समानः पाण्डुर्हि पुत्रं चकमे चतुर्थम् ॥ १३० ॥

शृङ्गाररूपो नकुले विशेषात् सुनीतिरूपः सहदेवं विवेश ।
गुणैः समस्तैः स्वयमेव वायुर्बभूव भीमो जगदन्तरात्मा ॥ १३१ ॥

सुपल्लवाकारतनुर्हि कोमळः[२] प्रायो जनैः प्रोच्यते रूपशाली ।
ततः सुजातं[३] वरवज्रकायौ भीमार्ज्जुनावप्यृते पाण्डुरैच्छत् ॥ १३२ ॥

अप्राकृतानां तु मनोहरं यद् रूपं द्वात्रिंशल्लक्षणोपेतमग्र्यम् ।
तन्मारुतो नकुले कोमळाभ[४] एवं वायुः पञ्चरूपोऽत्र चाऽसीत् ॥ १३३ ॥

अतीतेन्द्रा एव ते विष्णुषष्ठाः पूर्वेन्द्रोऽसौ यज्ञनामा रमेशः ।
स वै कृष्णो वायुरथ द्वितीयः स भीमसेनो धर्म्म आसीत् तृतीयः ॥ १३४ ॥

**ग्रन्थान्तरे युधिष्ठिरादयः पञ्च वायव इत्युक्तम् । तदभिप्रायमाह–युधिष्ठिरेति ॥ १२९–३१ ॥ ननु भीमार्जुनयोः सुलक्षणत्वेन सुरूपित्वात् तौ विहायान्यं सुरूपं पुत्रं पाण्डुः कस्माच्चकम इति? आह–सुपल्लवेति । प्राकृतजनैः । (ततः) तेन सुपल्लवाकारतनुत्वाभावेन । ऐच्छत्, कोमलरूपमन्यमिति शेषः ॥ १३२ ॥ (तत्) तस्मात् पाण्डुना कोमलरूपस्याभिलषितत्वात् । अत्र श्रीकृष्णावतारप्रसङ्गे ॥ १३३ ॥ पूर्वमिन्द्रा एव पाण्डवत्वेनावतीर्णा इति प्रसिद्धम् । तत्र पूर्वेन्द्राणां क्रमं तत्स्वरूपं चाऽह– अतीतेन्द्रा इत्यादिना ।**

विशेषितम् । तद् यथा–नासत्योऽपि दस्रः । दस्रोऽपि नासत्यः ॥ १२८–९ ॥ प्रधानो वायुः ॥ १३०–१ ॥ सुजातं सुरूपं तनयम् ॥ १३२ ॥ यस्मात् पाण्डुः सुजातमैच्छत् तत् तस्मात् मारुतो भीमः नकुले कोमळाभः ॥ १३३ ॥ स्वायम्भुवमन्वन्तरे रुचिप्रजापतेराकूत्यां जातो यज्ञनामा नारायण एवेन्द्रः । स एवात्र कृष्णः । द्वितीये स्वारोचिषमन्वन्तरे रोचनाख्यो मुख्यवायुरिन्द्रः । स एवात्र भीमसेनः । तृतीये औत्तमे मन्वन्तरे विभुनामा यम इन्द्रः । स एवात्र

१ 'फल्गुनेऽतो वि–' २. 'कोमलः' ३. 'सुजातौ वर–' ४. 'कोमलाभ–'

युधिष्ठिरोऽसावथ नासत्यदस्रौ क्रमात् तावेतौ माद्रवतीसुतौ च ।
पुरन्दरः षष्ठ उतात्र सप्तमः स एवैकः फल्गुनो[१] ह्येत इन्द्राः ॥ १३५ ॥

क्रमात् संस्कारान् क्षत्रियाणामवाप्य 'तेऽवर्द्धन्त स्वतवसो महित्वना' ।
सर्वे सर्वज्ञाः सर्वधर्म्मोपपन्नाः सर्वे भक्ताः केशवेऽत्यन्तयुक्ताः ॥ १३६ ॥

**इति श्रीमदानन्दतीर्थभगवत्पादविरचिते**
**श्रीमहाभारततात्पर्य्यनिर्ण्णये**
**पाण्डवोत्पत्तिर्न्नाम**
**द्वादशोऽद्ध्यायः**

—०—

[आदितः श्लोकाः– **१३४६**+१३६=**१४८२**]

**ते पाण्डवा विष्णुषष्ठाः । प्रतिलोमक्रमेण विष्णुरेव षष्ठः । तदेवाऽह–पूर्वेन्द्रोऽसाविति ॥ १३४ ॥ नासत्यदस्रौ अश्विनौ क्रमादिन्द्रौ चतुर्थपञ्चमा(वित्यर्थः) । पुरन्दरः षष्ठः अतीतमन्वन्तरापेक्षया । अत्र वर्तमानवैवस्वतमन्वन्तरे सप्तम उत स इन्द्रोऽपि पुरन्दर एकः । स एव फल्गुनः । एवमनेन क्रमेण एते कृष्णः पाण्डवाश्च इन्द्राः पूर्वेन्द्राः ॥ १३५ ॥ ते पाण्डवाः क्रमात् ज्येष्ठक्रमात् स्वतवसः स्वरूपभूत(तव)सः महित्वना महिम्ना । अत्यन्तयुक्ताः अत्यन्तं हरौ मनोयोगवन्तः । 'तेऽवर्धन्त स्वतवसो महित्वना नाकं तस्थुरुरु चक्रिरे सदः' (ऋ.सं.१.८५.६) इति श्रुतिरुक्तार्थे सम्मतित्वेनोदाहृतेति वेदितव्या[२] ॥ १३६ ॥**

इति श्रीमहाभारततात्पर्यनिर्णयटीकायां श्रीवेदाङ्गतीर्थभट्टारकविरचितायां
तात्पर्यदीपिकायां द्वादशोऽध्यायः

—०—

युधिष्ठिरः । तापसमन्वन्तरे सत्यजिन्नामा नासत्य इन्द्रः । पञ्चमे रैवतमन्वन्तरे त्रिशिखनामा दस्र इन्द्रः । तावेवात्र नकुल-सहदेवौ । ननु तर्हि गतं पूर्ववचनम्– **'विशेषनामाऽप्यविशेषितं तयोः'** इति । सत्यजिदिति नासत्यस्यैव नाम । त्रिशिख इति दस्रस्यैव । सत्यम् । इन्द्रत्वदशायां यद्याहूयन्ते तदैवं नामभेदः स्यात् । यथा पाण्डवत्वदशायां नकुल इति सहदेव इति नामभेदः । अश्वित्वदशायां पुनरस्माभिरुक्तम्– **'विशेषनामाप्यविशेषितं तयोः'** इतीति न कोऽपि दोषः । षष्ठे चाक्षुषमन्वन्तरे पुरन्दर एवेन्द्रो मन्द्रद्युम्ननामा । वैवस्वतेऽपि स एवेन्द्रः । स एवात्रार्जुनः । एवं कृष्णषष्ठाः पञ्चापि पाण्डवाः पूर्वेन्द्रा एव । **'पञ्चेन्द्राः पाण्डवा जाता विदुरो धर्म एव च'** [सृ.खं.७६.२२] इति पाद्मे ॥ १३४–५ ॥ **'तेऽवर्द्धन्त**

१. प्राचीनकेशेषु **'स एवैको फल्गुनो ह्येत इन्द्राः'** इति पठ्यते । अनवधानेन स्खलितं स्यात् । २. **'वेदितव्यम्'** इति स्वरसम् ।

**स्वतवसो महित्वना नाकं तस्थुरुरु चक्रिरे सदः । विष्णुर्यद्धावद् वृषणं मदच्युतं वयो न सीदन्नधि बर्हिषि प्रिये'** [ऋ.सं.१.८५.५] इति समग्रो मन्त्रः । मरुद्देवताकं सूक्तम् । ते पञ्च पूर्वेन्द्राः पाण्डवाः स्वतवसः, स्वं स्वतन्त्रं स्वरूप-भूतं च तवः सामार्थ्यमस्येति स्वतवसो नारायणस्य कृष्णाख्यस्य महित्वना महिम्ना, स्वरूपसामर्थ्यवन्तो वा, स्वसा-मर्थ्यस्य वा महिम्ना शत्रून् विजित्यावर्धन्त । राज्यान्निष्कासिता अपि, अज्ञातवासे वनगता अपि तत्र नाकं सुखं तस्थुः न्यूषुः । पुनः प्रत्यागता इन्द्रप्रस्थे कृष्णस्य महिम्ना उरु सदः सभां चक्रुः । प्रजापरिपालनेन भूमौ नाकं तस्थुः स्थाप-यामासुः । अन्ते च नाकमधितस्थुः । उरु चक्रिरे सदः । आसदनं शत्रूणामत्रेति सदनं कदनमुच्यते । तत्रापि शत्रून् विजित्य अवर्धन्त स्वतवसो महित्वना । विजित्य च नाकं सुखं तस्थुः । यद् विष्णुः कृष्णात्मा तान् सदा आवत् ह ररक्ष हि । तेन भगवद्रक्षितत्वेन अभीष्टसेचकं आनन्दप्रदं तमेव विष्णुं अधिकृत्य आगूर्य प्रिये बर्हिषि यज्ञे दीक्षिता न्यषीदन् । कथम्? वयो न । विशिष्टा ब्रह्मादय इव । वृषणं मदच्युतं सदः सङ्गामं चक्रुरिति वा । एवं श्रुतिवचनपादमेव स्ववचने पादत्वेन ग्रथयताऽचार्येण स्वग्रन्थस्य छान्दसत्वं स्फुटमघोषि ॥ १३६ ॥

**आचार्यगोविन्दकृते**
**श्रीमद्भारततात्पर्यनिर्णयस्य ।**
**निर्णिक्ते व्याख्याने निर्णयभावचन्द्रिकाख्याने**
**गतं द्वादशाध्यायविवरणं विदुषां हृदयाभरणम् ॥ ॐ ॥**

**इत्याचार्यगोविन्दस्य कृतिषु**
**श्रीमहाभारततात्पर्यनिर्णयपञ्चिकायां**
**निर्णयभावचन्द्रिकायां**
**द्वादशोऽध्यायः**

—०—

२२-१०-१२

# त्रयोदशोऽध्यायः

[कंसवधः]

**ॐ ॥ गर्गः शूरसुतोक्त्या व्रजमायात् सात्वतां पुरोधाः सः ।**
**चक्रे क्षत्रिययोग्यान् संस्कारान् कृष्णरोहिणीसून्वोः ॥ १ ॥**

**ऊचे नन्द सुतोऽयं तव विष्णोर्न्नावमो गुणैः सर्वैः ।**
**सर्वे चैतत्त्राताः सुखमाप्स्यन्त्युन्नतं भवत्पूर्वाः ॥ २ ॥**

**ॐ ॥ १ ॥ ऊचे गर्गः ॥ २ ॥**

---

ॐ ॥ भगवद्गुणान् गृणन् गच्छतीति गर्गः । **'मुदिग्रोर्गग्गौ'** [द.पा.३.६६] इत्युणादिसूत्राणि । मोदयति, मोदन्तेऽनेनेति वा मुद्गः । गृणाति गिरति वा गर्ग इति वैयाकरणाः । **'गृ-भृ-स्वृभ्यो गः'** [स.कं.२.२.५३] इति भोजः । गर्गः, भर्गः, स्वर्गः । **'मुदिगॄभ्यां गग्गौ'** [का.उ.सू.१.४९] इति कातन्त्रीयम् । वयं तु व्यर्थाक्षरमसहमानाः प्रत्यक्षरं निर्वचन-निरीक्षाभराः । अत एव वयं मुदं गमयतीति, मुदं गच्छन्त्यनेनेति वा मुद्गमाचक्ष्महे । गृणन् गिरन् वा गच्छतीति गर्गम् । आयात् कृष्णसन्निधिस्थानमित्यादरेण अगच्छत् । सात्वतानां पुरोहितः । यदुवंशे सत्वतो नाम भूभृद् बभूव । ततोऽयं सात्वतो वंशः । तत्पालिताः सात्वता नाम जनपदाः । आमनन्ति च कोशकाराः–**'यदवस्तु दशार्हाः स्युः सात्वताः कुकुराश्च ते'** इति । सत्वतस्यैव सत्वानिति नामान्तरम् । मत्वर्थे तप्रत्यये सत्ववान् सत्वत उच्यते । सत्ववानेव **'लोपः समाने'** इत्येकवकारलोपे सत्वानित्युच्यते । उभयथाऽपि तद्वंशजाः सात्वता उच्यन्ते । अथ सत्वानेव सात्वानित्यप्युच्यते पदज्ञैः । 'सात्' इति क्लीबं पदं ब्रह्मवाचि भक्तापराधं सहत इति । भजनीयत्वेन तद्वान् सात्वान् । तद्वंशजाः सात्वन्तः । तेषामयं पुरोहितः । इतः परं गर्गेण नाम करिष्यते । सम्प्रति त्वकृतनामाऽयं बाल इति रोहिणीसूनुरि-त्याह । ननु तर्हि देवकीरोहिणीसून्वोरिति वक्तव्यम् । न वक्तव्यम् । कृष्णस्तु वसुदेवाद् देवक्यां जननात् पूर्वमपि कृष्णो वासुदेवः । नहि केनाप्यपूर्वं नाम तस्य क्रियते इति कृष्ण इत्याह । **'ततो गर्गः शुभदिने वसुदेवेन नोदितः'** [उ.खं.२४५.६७], **'नाम चात्राकरोद् दिव्यं पुत्रयोर्वासुदेवयोः'** [६८] इति पाद्मे । **'चकार नामकरणं गूढो रहसि बालयोः'** [१०.९.११] इति भागवते । मा कंसो विज्ञासीदिति रहसि । मा गोपा अपि नायं नन्दनन्दन इति विज्ञा-सिषुरिति च रहसि । तथाह्युक्तम्–**'गर्गश्च गोकुले तत्र वसुदेवप्रचोदितः । प्रच्छन्न एव गोपानां संस्कारमकरोत् तयोः । ज्येष्ठं च राममित्याह कृष्णं चैव तथाऽपरम्'** [ब्रा.पु.७६.१–२] इति ॥ १ ॥ कृत्वा च ऊचे । विष्णोर्नावमः विष्णुतुल्यः । स एव हि तत्समः । सर्वे लोकाः । भवत्पूर्वाः सर्वे च गोपाः ॥ २ ॥

इत्युक्तः स मुमोद प्र ययौ गर्ग्गोऽपि केशवोऽथाऽद्यः ।
स्वपदैरग्रजयुक्तश्चक्रे पुण्यं व्रजन् व्रजोद्देशम् ॥ ३ ॥

स कदाचिच्छिशुभावं कुर्वन्त्या मातुरात्मनो भूयः ।
अपनेतुं परमेशो मृदं जघासेक्षतां वयस्यानाम् ॥ ४ ॥

मात्रोपालब्ध ईशो मुखविवृतिमकर्न्नाम्ब मृद्भक्षिताऽहं
पश्येत्यस्यान्तरे[1] तु प्रकृतिविकृतियुक् सा जगत् पर्य्यपश्यत् ।
इत्थं [2]देवोऽत्यचिन्त्यामपरदुरधिगां शक्तिमुच्चां प्रदर्श्य
प्रायो ज्ञातात्मतत्वां पुनरपि भगवानावृणोदात्मशक्त्या ॥ ५ ॥

**अथ आद्यः केशवः व्रजन् गोकुले पर्यटन् व्रजोद्देशं व्रजप्रदेशं पुण्यं च(क्रे) पवित्रं चक्रे ॥ ३ ॥ आत्मनः स्वस्य शिशुभावं शिशुत्वबुद्धिं कुर्वन्त्याः मातुः शिशुभावं (अपनेतुम्) ॥ ४ ॥ मात्रा उपालब्धः भर्त्सितः ईशः, हे अम्ब, अहं मृद्भक्षिता न, पश्य ममाऽस्यं पश्य, इति एवमुक्त्वा मुखविवृतिमकः अकरोत् । प्रकृतिविकृतियुक् । प्रकृतिस्त्रिगुणात्मिका जडप्रकृतिः । विकृतिर्महादादिः । प्रायः प्रायेण ज्ञातात्मतत्वां यशोदां अवगतस्वरूपशक्तिं पुनरात्मशक्त्या स्वसामर्थ्येनाऽवृणोत् जुगूह ॥ ५–६ ॥**

---

मुमोद प्र ययाविति मध्ये पठ्यमान उपसर्ग उभयत्राप्यन्वेति । देहलीदीपन्यायेन । प्रमुमोद । अपूर्वप्रमेयश्रवणेन मोद-प्रकर्षमाप नन्दः । **'नन्दः प्रमुदितो मेन आत्मानं पूर्णमाशिषाम्'** [भाग.१०.९.२०] इति च । उक्त्वा गर्गोऽपि प्रययौ । कायेन मधुरां प्रयासेन ययौ । मनसा च प्रकृष्टं कृष्णमेव ययौ । **'अकयप्रविसम्भूमसखहा विष्णुवाचकाः'** । गोपैः प्रणतो ययौ । कृष्णं मनसा प्रणम्य ययौ । अथ वयोनुगुणं लीलया वृद्धचनन्तरम् । अथ माङ्गलिकी चेयं कृष्णबाललीला-कथाऽऽरभ्यत इति चाऽह । सर्वेषामाद्यः । केशयोरपि प्रवर्तकत्वात् । अथाप्यग्रजयुक्तः, आत्मनाद्वितीयः । स्वतः पुण्यं रमणीयं स्वपदन्यासेन पुण्यं पवित्रं चक्रे । **'पूतसुन्दरयोः पुण्यम्'** इत्यभिधानम् ॥ ३ ॥ आत्मनः परमात्मनः स्वस्य, आत्मनः शिशुरयमिति मतिं कुर्वन्त्याः, आत्मनो मातुः, तमात्मनः शिशुभावं ममायं शिशुरिति भावम् माताऽहमस्येति भावं चापनेतुम् । पूर्वमपनीतेऽपि पुनर्बभ्रामेति भूय इत्याह । परमेशः । परमाणां ब्रह्मादीनामपीष्टे न केवलम् । सर्वपालको रमेशश्चायम् । ततः सर्वस्मात् परः, मेशश्च, मा न विद्यतेऽन्य ईशोऽस्येति च । वयस्यानामीक्षणमपि गोपीनिवेदनपर्यवसायीति परगामितां फलस्याऽह ईक्षतामिति ॥ ४ ॥ उपालब्ध आक्षिप्तः । किमिति मृदं जघसिथेति । 'अम्ब नाहं मृद्भक्षिता, यद्यविश्वासः पश्य तर्हि म आस्यम्' इति वदन् मुखव्यादानमकार्षीत् । अकरिति कृञो लुङि रूपम् । **'अभ्युत्सादयां प्रजनयां चिकयां रमयामकः पावयांक्रियाद् विदामक्रन्निति च्छन्दसि'** [अ.सू.३.१.४२] इति वैयाकरणाः । केवलाद-

---

१. '–त्यास्यान्तरे' २. 'देवोऽप्यचिन्त्या–'

इति प्रभुः स लीलया हरिर्ज्जगद् विडम्बयन् ।
चचार गोष्ठमण्डलेऽप्यनन्तसौख्यचिद्घनः ॥ ६ ॥

कदाचिदीश्वरः स्तनं पिबन् यशोदया पयः ।
शृतं[१] निधातुमुज्झितो बभञ्ज दद्ध्यमत्रकम् ॥ ७ ॥

स[२] मत्थ्यमानदद्ध्युरुप्रजातमिन्दुसन्निभम् ।
नवं हि नीतमाददे रहो जघास चेशिता ॥ ८ ॥

प्रजायते हि यत्कुले यथायुगं यथावयः ।
तथा प्रवर्त्तनं भवेद् दिवौकसां समुद्भवे ॥ ९ ॥

**शृतं पक्वम् । 'शृ पाके'[३] इति धातुः । पाकेनोच्छ्वसितमिति भावः ॥ ७ ॥ नवं नीतं नवनीतम् ॥८॥ जनार्दनः यत्कुले प्रजायते । यस्मिन् युग इति योज्यम् । यथायुगं तद्युगानुसारेण । यथाकुलमिति योज्यम् । तत्कुलानुसारेण । यथावयश्च विडम्बते । किं कुर्वन्? दिवौकसां समुद्भवे भुव्यवतारे सति तथा**

पीति वक्तव्यम् । तथाहि प्रयोगः–**'शं नो देवी पृश्निपर्ण्यशं निरृत्या अकः'** [अथ. सं.२.२५.१] इति । अस्य ईशस्य, अस्य मुखस्य अन्तरे विवरे । अन्तरमिति छिद्रमुच्यते । अन्तरमित्यवकाश उच्यते । अन्तरमित्यन्तर्भाग उच्यते । **'अन्तरे'** इत्यव्ययं वा मध्यभाग इत्यर्थे । अणुकेऽन्तरे त्विति तुना विस्मयते । पर्यपश्यदिति परिमिते आस्यान्तरे परिपूर्णं जगदपश्यदिति । दुरधिगा दुष्प्रापा दुरवगमा च । प्रकटं दर्शयित्वा । ज्ञातं जीवात्मनां परमात्मनश्च तत्वं यया । ज्ञातं आत्मस्वरूपं च यया । सम्प्रति अणावास्ये निखिलदर्शनेन विशिष्य ज्ञातपरमात्मतत्वां च । आत्मशक्त्या मायया **'इत्थं विदिततत्वायां गोपिकायां स ईश्वरः । वैष्णवीं व्यतनोन्मायां प्रजास्नेहमयीं विभुः'** [१०.९.४३] इति भागवते ॥ ५ ॥ अनन्तानन्दज्ञानसान्द्रोऽपि ॥ ६ ॥ शृतं क्वथितम् । **'शृतं पाके'** [अ.सू.६.१.२७] इति हि पाणिनिः । श्रा पाके इत्यस्य पाकेऽभिधेये क्तप्रत्यये शृभावः क्षीरहविषोरित्यामनन्ति । क्षीरेति तदर्थग्रहणम् । शृतं क्षीरम् । शृतं पयः । अन्यत्र श्राणं श्रापितम् । निधातुं चुल्लीतः अवतार्य नीचैः स्थापयितुम् । उज्झितः स्वाङ्कादवतारितः । ददिमथन-भाण्डं बभञ्ज । वामपादाङ्गुष्ठनखनिर्भिण्णाण्डकटाहस्य कियदिदमित्यमत्रकमित्याह ॥ ७ ॥ मथ्यमाने सति दधनि उरु बृहत्पिण्डाकारं यथा स्यात् तथा प्रकटं जातमुद्गतम् । नवं नीतमिति शब्दार्थं निरुच्य दर्शयति । पूर्वं दधनि लीनं पश्चान्मथनेन नवमिवोपरि नीतं हि नवनीतमुच्यते । रह आददे । आदाय रहो जघास च ॥ ८ ॥ दिवौकसां भुवि समुद्भवे यो दिवौका यत्कुले प्रजायते तस्य तथा तत्कुलधर्मानुगुणं प्रवर्तनं भवेत् । युगधर्मानुगुणं वयोधर्मानुगुणं च । समुद्भवे सम्भवे उद्भवे

१. **'सृतम्'** २. **'–मत्रकम् । प्रमथ्यमान–'** ३. **'श्रा पाके'** इति पठनीयम् । लिपिकृत्प्रमादः स्यात् ।

इति स्वधर्म्ममुत्तमं दिवौकसां प्रदर्शयन् ।
अधर्म्मपावकोऽपि सन् विडम्बते जनार्द्दनः ॥ १० ॥

नृतिर्य्यगादिरूपकः स बाल्ययौवनादि यत्[1] ।
क्रियाश्च तत्तदुद्भवाः करोति शाश्वतोऽपि सन् ॥ ११ ॥

स विप्रराजगोपकस्वरूपकस्तदुद्भवाः ।
तदातदा विचेष्टते क्रियाः सुरान् विशिक्षयन् ॥ १२ ॥

तथाऽप्यनन्यदेवतासमं निजं बलं प्रभुः ।
प्रकाशयन् पुनःपुनः [2]प्रदर्शयत्यजो गुणान् ॥ १३ ॥

**तद्युगानुसारेण तत्कुलानुसारेण यथावयश्च प्रवर्तनमाचरणं भवेत् इत्येवंरूपमुत्तमं स्वधर्मं दिवौकसां प्रदर्शयन् इति श्लोकद्वयस्य योजना ॥ ९—१० ॥ प्रजायत इत्याद्युक्तमेव विवृणोति— नृतिर्यगित्यादिना । यद् बाल्य-यौवनादि वयः, तत् प्रकाशयतीति शेषः । तत्तदुद्भवाः बाल्याद्युद्भवाः ॥ ११—१२ ॥ तथाऽपि सुरशिक्षणार्थं बाल्यादि विडम्बयन्नपि ॥ १३—२५ ॥**

---

च । गर्भवासेन जननं सम्भवः । बहिरेव जननमुद्भवः । ननु न कृष्णो नन्दगोपकुलेऽजायत? सत्यम् । अत एव प्रजायत इत्याह । जात इव प्रतीयत इत्यर्थः । प्रकृष्टमपि जननं प्रजननम् । प्रातीतिकं जननमपि प्रजननम् ॥ ९ ॥ इत्ययं स्वेन विहितः दिवौकसां स्वधर्म इति प्रदर्शयन् स्वयमपि विडम्बते तत्तद्धर्ममनुकरोति । अयमपि मनुष्यमात्र इत्यादिकया भ्रान्त्या जनानर्दयतीति जनार्दनः ॥ १० ॥ नृतिर्यगादिरूपकः सन् विडम्बते । तत्र दुःखादिकमपि विडम्बनमेव । स्वयं तु सर्वरूपेष्वप्यानन्दरूप इति नृतिर्यगादिरूपक इत्याह । यच्च तत्र बाल्ययौवनादि तदपि विडम्बते । शश्वदेकरूपोऽपि सन् ॥ ११ ॥ नृष्वपि क्वचिद् विप्र इव । यथा भार्गवः । क्वचिद् राजेव । यथा दाशरथिः । क्वचिद् गोपकः गोपबालक इव । तदेतत् सर्वं तस्याऽनन्दरूपं स्वरूपमेवेति स्वरूपकः । सर्वानपि शिक्षयन् । सुरान् विशेषतः शिक्षयन् । एतेन लोकविरुद्धमपि क्वचित् सुरशिक्षायै भगवानाचरतीति सूचयामास । यथा गोपस्त्रीरमणम् । ननु का तेन सुरशिक्षा? अप्सरसो हि ताः पूर्वजन्मनि भगवन्तं पतिं वव्रुः । तदस्मिन् जनुषि तासामाशां पूरयामासेत्यमोघवरत्वं देवतासु कृपातिशयं चानेन शिक्षयामास । स्वस्यानन्यदेवतासमत्वज्ञापनाय च क्वचित् तथाऽऽचरतीत्युत्तरश्लोके स्फुटम् । तदपि साधुजनशिक्षणा-न्तरम् । तदर्थं विचेष्टते विविधरूपो विविधं चेष्टते ॥ १२ ॥ प्रकाशयन् ज्ञापयन् । अनितरसाधारणान् गुणान् भक्तानां प्रज्ञानाय प्रमोदाय च दर्शयति । असतां प्रमोहाय दर्शयति । पश्यन्तोऽपि न पश्यन्तीत्यर्थः ॥ १३ ॥

---

१. '—नादियुत् ।' २ 'प्रकाशयत्यजो—'

**अथाऽत्तयष्टिमीक्ष्य तां स्वमातरं जगद्गुरुः ।**
**प्रपुप्लुवे[1] तमन्वयान्मनोविदूरमङ्गना ॥ १४ ॥**

**पुनः समीक्ष्य तच्छ्रमं जगाम तत्करग्रहम् ।**
**प्रभुः स्वभक्तवश्यतां प्रकाशयन्नुरुक्रमः ॥ १५ ॥**

**सदा विमुक्तमीश्वरं निबद्धुमञ्जसाऽऽददे ।**
**यदैव दाम गोपिका न तत् पुपूर तं प्रति ॥ १६ ॥**

**समस्तदामसञ्चयः सुसन्धितोऽप्यपूर्णताम् ।**
**ययावनन्तविग्रहे शिशुत्वसम्प्रदर्शके ॥ १७ ॥**

**अबन्धयोग्यतां प्रभुः प्रदर्श्य लीलया पुनः ।**
**स एकवत्सपाशकान्तरं गतोऽखिलम्भरः ॥ १८ ॥**

**न पुपूर पूर्णं नाकृत[2] ॥ १६–१८ ॥**

---

स्वतन्त्रस्य स्वस्य मातरं प्रेक्ष्य परतन्त्र इव भीत इव पुप्लुवे । प्रेति सर्वगतत्वार्थकं विष्णुवाचकम् । प्रा पूर्तौ । सर्वगतः सन्नपि, परतरो विष्णुः सन्नपि दुधाव । आत्माविष्करणं फलमित्यात्मनेभाषा ॥ १४ ॥ स्वस्य स्वतन्त्रस्यापि स्वभक्तवश्यतां प्रकटयन् । उरुक्रमोऽयं प्रभुः अणीयोभिः पदक्रमैः मातुः करग्रहं जगाम । पुनरित्यानन्तर्यार्थे । मातुरिच्छामनुसराणीति सहमतमालोचनं अनुकम्पापूर्वमीक्षणं च समीक्षणं नाम ॥ १५ ॥ वयः ज्ञानिनो मुक्ता येन, स्वयं च नित्यमुक्तम् । निग्रहाय बद्धुम् । नितरां दृढं बद्धुं वा । अञ्जसा यथा न पुनस्तथा कुर्यात् । यदेति हेत्वर्थे च । यदा यस्मात् दामाऽददे । तस्मादेव तन्न पुपूर पुपूरे । पूरी आप्यायने । **'आप्यायनं वृद्धिः'** इति क्षीरस्वामी । लोकशिक्षार्थमेवेदमिति परस्मैभाषा । यद्वा पूरयते रूपमिदम् । णिचि पूरयामास । णिजूविकल्पे पुपूरेति रूपम् । यथा ताडयामास तताडेति । स्वस्य बन्धायोग्यत्वात् । दाम्नो गोपिकाया वा बन्धाशक्तत्वात् । एवकारः क्रियासमभिहारे च । यावद्यावत् दामाददे तावत्तावत् न पुपूरैव ॥ १६ ॥ सु सम्यक् कर्षङ्कर्षं सन्धितः लगितः । नेदं दधाते रूपम् । किन्तु धियतेः । धि धारणे । सम्यक् सहजशिशुरिव मातरं प्रसादयितुं शिशुत्वदर्शके ॥ १७ ॥ प्रकटं निर्विचिकित्सं दर्शयित्वा । यथा पूर्वं तथा पुनः शिशुकल्प एव बभूव । एकं वत्सं बन्द्धुं पर्याप्तः अल्पः पाशः पाशकः । अखिलम्भरोऽप्यल्पपाशान्तरं गतः । आह चान्यत्र–**'अनन्तमन्तवदिव भुजयोरन्तरं गतम्'** इति ॥ १८ ॥

---

१. **'–द्गुरुः । स पुप्लुवे'**

२. **'पूर्णं नाभूत्'** इति स्वरसम् ।

सुतस्य मातृवश्यतां प्रदर्श्य धर्म्ममीश्वरः ।
बभञ्ज तौ दिविस्पृशौ यमार्ज्जुनौ सुरात्मजौ ॥ १९ ॥

पुरा [1]धुनिश्चुमुस्तथाऽपि पूतनासमन्वितौ ।
अनोक्षसंयुतौ तपः प्रचक्रतुः शिवां प्रति ।
तया वरोऽप्यवद्ध्यता चतुर्षु च प्रयोजितः ॥ २० ॥

अनन्तरं [2]तृणोद्भ्रमिस्तपोऽचरद् वरं च तम् ।
अवाप ते त्रयो हताः शिशुस्वरूपविष्णुना ॥ २१ ॥

**दिविस्पृशौ आकाशस्पृशौ ॥ १९ ॥ कस्य सुरस्याऽत्मजौ किंनामधेयौ कुतश्च तरुत्वमाप्तौ किमर्थं भग्नौ काभ्यामाविष्टौ इत्यतस्तत्स्वरूपं निरूपयति– पुरेत्यादिना । धनेशपुत्रकौ पुरा नारदान्तिके दिगम्बरौ स्थितौ । स नारदः ताविति शशाप ॥ २०–३ ॥**

---

**'दाम्ना चैवोदरे बद्ध्वा प्रत्यबध्नादुलूखले । यदि शक्तोऽसि गच्छेति तमुक्त्वा कर्म साऽकरोत्'** [वि.प.७.१४] इति हरिवंशेषु । **'स च तेनैव नाम्ना तु कृष्णो वै दामबन्धनात् । गोष्ठे दामोदर इति गोपीभिः परिगीयते'** [७.३६] इति च । **'दाम्ना बध्वा तदा मध्ये निबबन्ध उलूखले । कृष्णमक्लिष्टकर्माणमाह चेदममर्षिता । यशोदोवाच– यदि शक्तोऽसि गच्छ त्वमतिचञ्चलचेष्टित'** [ब्रा.पु.७६.७–८] इति, **'ततश्च दामोदरतां स ययौ दामबन्धनात्'** [१४] इति च ब्राह्मे । प्रकटं दर्शयित्वा यथा पुनरबुधा अपि भुत्सीरन् । मनुष्यधर्मं प्रदर्श्य पुनरतिमानुषं कर्म चकार । दिवि भुवीति विभक्तिप्रतिरूपकमव्ययम् । गगनचुम्बिनौ अर्जुनवृक्षौ । 'ಮತ್ತಿ' इति भाषायाम् ॥ १९ ॥ सतो धुनोतीति धुनिः । चमतीति चुमुः । **'चमु अदने'** । अतिशयार्थ उकारः । धुनिः, तथा चुमुः । पूतनयाऽपि समन्वितौ । अनोक्षेण शकटाक्षेण च संयुतौ । समन्वितौ संयुतावित्युभयत्रापि समित्युपसर्गयोगेन तेषां चतुर्णामपि लोकपीडने सामरस्यं नामैकमत्यमाह । धनधान्यपूर्णे शकटे अक्षाण्यस्येति च शकटाक्षः । तौ तपः प्रचक्रतुः, लोकक्षयहेतुतया घोरत्वमेवा-सुराणां तपसि प्रकर्षो नाम । तया वरोऽपि चतुर्षु च प्रयोजितः । कृष्णमहिमाविष्कारप्रयोजनाय च दत्तः ॥ २० ॥ तृणान्युत्कृत्य भ्रमतीति तृणोद्भ्रमिस्तृणावर्तः । **'भ्रमेः सम्प्रसारणं च'** [द.पा.१.४४] इति च । **'भ्राम्यति भ्रमति वा भृमिर्वायुः'** इति माणिक्यदेवः । तं च तमेव वरं अवध्यत्वमवाप । पञ्चसु त्रयो हताः । पूतना शकटाक्षस्तृणावर्तश्च । स्वाभिन्नं रूपं स्वरूपम् । शिशुरिव स्वरूपं यस्य । नहि शिशुत्वं नाम तस्य देहधर्मः, वयोधर्मो वा । किन्तु सहजं रूपम् । यः सर्वलयेऽपि वटपत्रपुटे शयानो मार्कण्डेयेनादृश्यतेत्यर्थः ॥ २१ ॥

---

१. **'धुनिश्चमुस्तथा–'** २. **'तृणोद्भ्रमि–'**

**धुनिश्चुमुश्च[1] तौ तरू समाश्रितौ निसूदितौ[2] ।**
**तरुप्रभङ्गतोऽमुना तरू च शापसम्भवौ** ॥ २२ ॥

**पुरा हि नारदान्तिके दिगम्बरौ शशाप सः ।**
**धनेशपुत्रकौ द्रुतं तरुत्वमाप्नुतं त्विति** ॥ २३ ॥

**ततो हि तौ निजां तनुं हरेः प्रसादतः शुभौ ।**
**अवापतुः स्तुतिं[3] प्रभोर्विधाय जग्मतुर्गृहम्** ॥ २४ ॥

**[4]नळकूबरमणिग्रीवौ मोचयित्वा तु[5] शापतः ।**
**वासुदेवोऽथ गोपालैर्विस्मितैरभिवीक्षितः** ॥ २५ ॥

**ततः तरुभङ्गतः[6] ॥ २४–७ ॥**

---

धुनिश्चुमुश्च सम्प्रति निसूदितौ । सम्यक् स्वेच्छयाऽऽश्रितौ कृष्णसञ्जिहीर्षया, नतु शापतः । तर्वोः समूलं भङ्गः प्रभङ्गः । कौ च तौ तरू? कुतो वा कृष्णस्तावभनक्? आह– तरू च शापसम्भवौ धनेशपुत्रकाविति । कः कुतः शशाप? आह–पुरा हि । धनेशपुत्रकौ कदाचित् कैलासोपवने युवतीभिः सह मन्दाकिन्यां विहरन्तौ विचेरतुः । यदृच्छया तत्र भगवान् नारद आजगाम । तं दृष्ट्वा व्रीळिता विवस्त्रा देव्यो वासांसि पर्यधुः । न क्षीबौ धनदात्मजौ पर्यधत्ताम् । तयोरनुग्रहार्थाय नारदः शशाप–**'अतोऽर्हतः स्थावरतां मैवं स्यातां यथा पुनः । स्मृतिः स्यान्मत्प्रसादात्तु तत्रापि मदनुग्रहात्'** [भाग.१०.११.२१] इति । **'स एवमुक्त्वा देवर्षिर्गतो नारायणाश्रमम् । नळकूबरमणिग्रीवावासतुर्यमळार्जुनौ'** [२३] इति च । धनेशपुत्रकौ निजं स्वरूपमापतुः । स्त्रीमुग्धाविति कुत्सयामास पुत्रकाविति । शापोऽपि भगवद्दर्शने फलित इति तुनाऽह । यतः स्वरूपतः शुभौ अतः निजां तनुमवापतुः । यमळार्जुनभञ्जनं कृष्णमवगत्याऽपतुः । अशुभौ निसूदितौ । ततः, शापाद्धि तरुतां गतौ, यौ ततः तरुप्रभङ्गादेव शापान्मुक्तौ निजां तनुमवापतुः ॥ २२–४ ॥ नळति अत्ति जगदिति नळो भगवान् । **'णल अदने'** इति काशकृत्स्नः । नळं नारायणं कूजन् वरयतीति नळकूबरः । गानप्रियो भगवद्भक्तः । नळति चूर्णयति शत्रुरथकूबरमिति वा । नळ गन्धे । गन्धनं चूर्णनम् । अनर्घहीरहारो मणिग्रीवः । भगवन्नामाख्यं रत्नमस्य कण्ठ इति वा । मोचयित्वा तु शापतः । भगवद्दर्शनफलकः शापोऽप्ययं वरतुल्य इति तुनाऽऽह । अभिमानपूर्वकं वितत्याक्षिणी ईक्षितः । तरुभञ्जनोऽप्ययं गोपजनरञ्जनो वसुदेवसुत इत्येव मेनिर इति

---

१. **'धुनिश्चमुश्च'** २. **'निषूदितौ'** ३. **'स्तुतिं विभोर्वि–'**
४. **'नलकूबर–'** ५. **'–यित्वा च शा–'** ६. हस्तलिखितादर्शे **'तरुतां गतः'** इति पठ्यते । लिपिकृत्प्रमादः ।

**वृन्दावनयियासुः[१] स नन्दसूनुर्बृहद्वने ।**
**ससर्ज्ज रोमकूपेभ्यो वृकान् व्याघ्रसमान् बले ॥ २६ ॥**

**अनेककोटिसङ्घैस्तैः पीड्यमाना व्रजालयाः ।**
**ययुर्वृन्दावनं नित्यानन्दमादाय नन्दजम् ॥ २७ ॥**

**इन्दिरापतिरानन्दपूर्ण्णो वृन्दावने प्रभुः ।**
**नन्दयामास नन्दादीनुद्दामतरचेष्टितैः ॥ २८ ॥**

**स चन्द्रतो हसत्कान्तवदनेनेन्दुवर्चसा ।**
**संयुतो[२] रौहिणेयेन वत्सपालो बभूव ह ॥ २९ ॥**

**उद्दामतरचेष्टितैः अतिप्रौढचेष्टितैः ॥ २८ ॥ चन्द्रतः चन्द्रम् । सार्वविभक्तिकस्तसिः ॥ २९ ॥**

---

सूचयन्निवाऽह–वासुदेवः । वस्तुतस्तु संसारान्मोचकोऽयं वासुदेवः, किमिति क्षुद्रशापान्न मोचयेदिति, भवभञ्जनस्य कियदिदं तरुभञ्जनमिति च प्रत्याययति–वासुदेव इति । अथ तरुभङ्गवार्ताश्रवणानन्तरं भीत्याऽगतैः, आगत्य क्रीडन्तं कृष्णं दृष्ट्वा विस्मितैः । अथशब्दः कात्स्न्यर्वचनश्च । कृत्स्नैर्गोपालैः ॥ २५ ॥ नन्दः शतानन्दो यस्य सूनुः । अथापि नन्दगोपस्य सूनुः । आवृणत इति वृकाः । **'मूकयूकार्भकपृथुकवृकसृकभूकाः कप्रत्ययान्ता निपात्यन्ते'** इति कातन्त्रीयोणादिवृत्तौ दुर्गसिंहः । तथाच हरिवंशेषु–**'श्रूयते हि वनं रम्यं पर्याप्ततृणसंस्तरम् । नाम्ना वृन्दावनं नाम स्वादुवृक्षफलोदकम्'** [वि.प.८.२२] । **'तत्र गोवर्धनं चैव भाण्डीरं च वनस्पतिम् । कालिन्दीं च नदीं रम्यां द्रक्ष्यावश्चरतः सुखम्'** [२८] **'...सन्त्रासयावो भद्रं ते किञ्चिदुत्पाद्य कारणम् । एवं कथयतस्तस्य वासुदेवस्य धीमतः । प्रादुर्बभूवुः शतशो रक्तमांसवसाशनाः । घोराश्चिन्तयतस्तस्य स्वतनूरुहजास्तदा । विनिष्पेतुर्भयकराः सर्वशः शतशो वृकाः'**[२९–३१] **'एवं वृकैरुदीर्णैस्तु व्याघ्रतुल्यपराक्रमैः । व्रजो निष्पन्दचेष्टः स एकस्थानचरः कृतः'** [३८] इति । भागवतेऽनुक्तेयं कथा ॥ २६ ॥ गोवृन्दस्य श्वापदेभ्योऽवनं यत्र तद् वृन्दावनम् । नन्दाः सदानन्दा जायन्तेऽनेनेति स नन्दजः ॥ २७ ॥ उद्दामतरैः वयोवृद्धैरपि, ज्ञानवृद्धैरपि दुरवगमैः बालचेष्टितैः ॥ २८ ॥ चन्द्रं परिहसत् कान्तं वदनं यस्य । तेन, इन्दुधवळेन रौहिणेयेन संयुतः । सर्वत्र सर्वदा युतः संयुतः । **'एकनिर्माणनिर्मुक्तावेकशय्यासनाशनौ'** [वि.प.७.३] इति हरिवंशेषु । अथवा चन्द्रं परिहसता वदनेन, इन्दुवर्चसा चोपलक्षितः कृष्णः । अथ, चन्द्रतः अह सत्कान्तवदनेनेति त्रीणि पदानि । चन्द्रादपि कान्तं सत् निष्कळङ्कं च वदनम् । अहेति विस्मये । हेति वा । अथच,

---

१. **'वृन्दावनं यियासुः सन् नन्द–'** २. **'सहितो–'**

**दैत्यं स वत्सतनुमप्रमयः प्रगृह्य कंसानुगं हरवरादपरैरवद्ध्यम् ।**
**प्रक्षिप्य वृक्षशिरसि न्यहनद् बकोऽपि कंसानुगोऽथ विभुमच्युतमाससाद ॥ ३० ॥**

**स्कन्दप्रसादकवचः स मुखे चकार गोविन्दमग्निवदमुं प्रदहन्तमुच्चैः ।**
**चच्छर्द तुण्डशिरसैव [१]निहन्तुमेतमायान्तमीक्ष्य जगृहेऽस्य स तुण्डमीशः ॥ ३१ ॥**

**अप्रम(यः अप्रमेयः) ॥३०॥ स्कन्दप्रसादकवचः (स्कन्द)प्रसादरक्षः । तुण्डशिरसा तुण्डाग्रेण ॥३१–२॥**

---

सत्कान्तवदनेनेन्दुवर्चसेत्येकं पदम् । कान्तेन वदनेन, इनेन्दुवर्चसा चोपलक्षितः । देहप्रभया इनवर्चसा, मुखकान्त्या पुनरिन्दुवर्चसा । तथाहि हरिवंशेषु–**'एकमूर्तिधरौ कान्तौ बालचन्द्रार्कवर्चसौ'** [वि.प.७.२] इति, **'अन्योन्यकिरण-ग्रस्तौ चन्द्रसूर्याविवाम्बरे'** [६] इति च । अथवा चन्द्रकान्तवदनेनोपलक्षितः स कृष्णः इन्दुवर्चसा रौहिणेयेन संयुतः । अथ च चारु चन्द्रमुच्यते । स्वर्णं चन्द्रमुच्यते । चन्द्रतः चन्द्रेण चारुणा हसता कमनीयेन वदनेन । चन्द्रतः चन्द्रात् स्वर्णाभरणात् निमित्तात् कान्तवदनेन । **'चन्द्रः कर्पूरकाम्पिल्यसुधांशुस्वर्णचारुषु'** इति मेदिनी । यो वत्सान् ब्रह्मादीन् पालयति स गोवत्सपालो बभूव हेति पुनर्विस्मयते ॥ २९ ॥ अप्रमयः अप्रमेयः । अथच अप्रमाणां यं ज्ञानं यस्मात् । अज्ञानिनां ज्ञानदः । ये ज्ञानविरोधिनस्तानप्रमान् यमयति चेत्यप्रमयः । स्वयं चाप्रमं अपरिमितं यं ज्ञानं यस्य तादृशः । येऽधिकं प्रकृष्टास्तेष्वयं मयः प्रधान इति वा । **'मयं प्रधानमुद्दिष्टम्'** इति ह्यभिदधति । वत्सतनुं गोवत्स-रूपम् । अपरैः हरादवरैरवध्यम् । प्रक्षिप्य पदयोः प्रगृह्य ऊर्ध्वमुत्क्षिप्य । न्यहनत् । तमसि निपातायाहन् । तथाह्युक्तम्– **'कदाचिद् यमुनातीरे वत्सान् चारयतोः स्वकैः । वयस्यैः कृष्णबलयोर्जिघांसुर्दैत्य आगमत् । तं वत्सरूपिणं वीक्ष्य वत्सयूथगतं हरिः । ....गृहीत्वाऽपरपादाभ्यां सहलाङ्गूलमच्युतः । भ्रामयित्वा कपित्थाग्रे प्राहिणोद् गत जीवितम् । स कपित्थैर्महाकायः पात्यमानैः पपात ह'** [भाग.१०.१२.४१–४] इति । वदत्यभीक्ष्णमिति वत्सः । वदतेः सप्रत्ययः । अथ वत्सहननानन्तरमपि बकः कृष्णं जिघांसुराससादेति अपिना विस्मयते । बकोऽपि मर्तुमास-सादेति । **'स वै बको नाम महानसुरो बकरूपधृक् । आगत्य सहसा कृष्णं तीक्ष्णतुण्डोऽग्रसद् बली'** [४९] इति च । कुत्सितं बातीच्छतीति बकः । कुत्सितं वाति चलतीति वा । ब कामने ॥ ३० ॥ कबळितहरवरकवचस्य कियानयं स्कन्दप्रसादकवच इत्युपहसतीव । एतेन दैत्यानां तारतम्यापरिज्ञानमाह । कथमन्यथा स्कन्दप्रसादकवचस्तमासद्यात्, यो हरवरादवध्यमप्यवधीत् । स मुखे चकार गोविन्दम् । अमुं बकं प्रदहन्तं गोविन्दम् । प्रदहन्तममुं गोविन्दमिति समानाधिकरणं वा । तुण्डावच्छेदेन दाहः । कण्ठमूलतः प्रसृतो दाहः प्रदाहः । जीवितान्तकरः प्रदाह उच्चैः प्रदाहः । अतस्तं प्रदाहं सोढुमक्षमः गोविन्दं चच्छर्द ववाम । **'छर्द वमने'** । **'तं तालुमूलं प्रदहन्तमग्निवद् गोपालसूनुं पितरं जगद्गुरोः । चच्छर्द सद्योऽतिरुषाऽक्षतं बकस्तुण्डेन हन्तुं पुनरभ्यपद्यत'** [५१] इति च । पुराणगं गोपालसूनुमिति पदं गोविन्दमिति व्याचख्यौ । गाः पालयितुं विन्दतीति गोविन्द इत्यर्थः । ननु गोवर्धनोद्धरणे देवेन्द्रदत्तं नाम गोविन्द

---

१. **'निहन्तुमेनमा–'**

तुण्डद्वयं यदुपतिः करपल्लवाभ्यां सङ्गृह्य चाऽशु विददार ह पक्षिदैत्यम् ।
ब्रह्मादिभिः कुसुमवर्षिभिरीड्यमानः सायं ययौ व्रजभुवं सहितोऽग्रजेन ॥ ३२ ॥

एवं स देववरवन्दितपादपद्मो गोपालकेषु विहरन् भुवि षष्ठमब्दम् ।
प्राप्तो गवामखिलपोऽपि स पालकोऽभूद् वृन्दावनान्तरगसान्द्रलतावितान ॥ ३३ ॥

ज्येष्ठं विहाय स कदाचिदचिन्त्यशक्तिग्गोगोपगोगणयुतो यमुनाजलेषु[1] ।
रेमे भविष्यदनुवीक्ष्य हि गोपदुःखं [2]तद्बाधनाय निजमग्रजमेषु सोऽधात् ॥ ३४ ॥

[3]स ब्रह्मणो वरबलादुरगं त्ववद्ध्यं सर्वैरवार्य्यविषवीर्य्यमृते सुपर्ण्णात् ।
विज्ञाय तद्विषविदूषितवारिपानसन्नान् पशूनपि वयस्यजनान् स आवीत् ॥ ३५ ॥

**वृन्दावनान्तरगसान्द्रलतावितान वृन्दावनमध्यगतनिबिडलतावितानवति प्रदेशे ॥ ३३ ॥ गाः गोपयन्ति[4] पालयन्तीति गोगोपाः । गुपू रक्षण इति धातुः । गोगोपानां गवां च गणाः गोगोपगोगणाः । तद्युतः ॥ ३४ ॥ नन्दादीनां दुःखं भविष्यति चेत् किमिति यमुनाजलेषु रेम इत्यतः कालियनिग्रहार्थं**

इति । तेन नेदानीं गोविन्दः । पुरातनमेव नामेन्द्रो ददौ । नतु नूतनम् । यथा वासुदेवः सन्नेव वसुदेवतनयो भूत्वा वासुदेवो बभूव । एवमत्रापीति सूचयितुमेवात्र गोविन्दमित्याह । अथ पुनस्तुण्डशिरसा तुण्डाग्रेणैव । अस्य बकस्य । आयान्तमीक्ष्य निरीक्ष्य अस्य निरस्य चेति वा ॥ ३१ ॥ तुण्डद्वयं तुण्डस्य दलद्वयम्, पल्लवसदृशाभ्यां करलवाभ्यां सङ्गृह्य दैत्यं विददार ह । दृष्ट्वेदमद्भुतं को नाम न विस्मयेत ॥ ३२ ॥ षष्ठमब्दम् । पौगण्डं वय इत्यर्थः । **'आ पञ्चमाब्दं बाल्यं स्यात् पौगण्डं दशमान्तकम्'** इति हि स्मरन्ति । **'ततश्च पौगण्डवयः श्रितौ व्रजे बभूवतुस्तौ पशुपालसम्मतौ'** [१०.१३.१] इति च । अखिलपोऽपि गवां पालकः । सान्द्राणि लतावितानानि यत्र तादृशे वृन्दावनान्तरगते भूमिभागे । वितानमुल्लोचः । 'ಮೇಲ್ಕಟ್ಟು' इति भाषायाम् ॥ ३३ ॥ गा गोपायन्तीति गोगोपाः । गुपू रक्षणे । गोगोपैः गवां गणेन च युतः । यमुनाजलेषु जलावृतेषु तत्तीरप्रान्तेष्वित्यर्थः । एतदर्थसूचनायैव बहुवचनप्रयोगः । विषमयजलसङ्गेन विदूषितत्वसूचनाय तीरेष्वित्यनुक्त्वा जलेष्वित्याह । तादृशेष्वयं रेमे । स्वविहारेण गोपानां स्ववीर्यमजानतां भविष्यद् दुःखं तेषामनुरूपमिति वीक्ष्य तद्बाधनाय धैर्यदानेन तद्दुःखनिवारणाय । **'ययौ राममृते राजन् काळिन्दीं सखिभिर्वृतः'** [१०.१३.४७] इति भागवते । 'तद्बोधनाय' इति पाठे स्फुटोऽर्थः ॥ ३४ ॥ उरगं तु । न केवलं ब्रह्मणो वरबलात्,

१. **'यमुनातटेषु ।'** २. **'तद्बोधनाय'** ३. **'सोऽधात् तं ब्रह्मणो–'**

४. लिपिकृत्प्रमादः । **'गोपायन्ति'** इति पठनीयम् । **'गुपू-धूप-विच्छ-पणि-पनिभ्य आयः'** [अ.सू.३.१.२८] इत्यायप्रत्ययस्मरणात् । **'गुपू भासार्थः'** इति पठन्ति । **'भाषार्थः'** इति तु युक्तः पाठः । यस्मिन्नर्थे भाष्यते व्यवह्रियते स सर्वोऽपि धात्वर्थ इति ।

तद्दृष्टिदिव्यसुधया सहसाऽभिवृष्टाः सर्वेऽपि जीवितमवापुरथोच्चशाखम् ।
'कृष्णः कदम्बमधिरुह्य ततोऽतितुङ्गादास्फोट्य गाढरशनो न्यपतद् विषोदे ॥ ३६ ॥

'सार्प्पह्रदः पुरुषसारनिपातवेगसङ्क्षोभितोरगविषोच्छ्वसिताम्बुराशिः ।
'पर्य्युत्प्लुतो[१] विषकषायविभीषणोर्म्मिभीमो धनुःशतमनन्तबलस्य किं तत्' ॥ ३७ ॥

**चेत्यभिप्रायेणाऽह– स ब्रह्मण इति । स कृष्णः ब्रह्मणो वरबलादवध्य(मुरगं यमुनाजलेषु) स्थितं विज्ञाय, तत्र रन्तुं जगामेत्यध्या-हृतक्रियया सम्बन्धः ॥ ३५–६ ॥ सार्पह्रदः । सर्पेणाधिष्ठितः सार्पः । स चासौ ह्रदश्चेति तथोक्तः । अम्बूनां राशिः अम्बुराशिः, पुरुषसारः पुरुषोत्तमः, तन्निपातवेगेन सङ्क्षोभितश्चासौ (उरगविषोच्छ्वसितश्च), तादृशः अम्बुराशिः यस्मिन् स तथोक्तः । पर्युत्प्लुतः (परितः) उत्प्लुतः ऊर्ध्वं गतः । विषकषायविभीषणोर्मि-भीमः । विषकषायेण विषसम्बन्धेन विभीषणोर्मिभिः भयङ्करोर्मिभिः भीमः विभीषणः ॥ ३७ ॥**

किन्तु स्वभक्तत्वाच्चावध्यमिति तुनाऽऽह । सुपर्णादृते अन्यैः सर्वैरवध्यम् । अत एवाऽत्र कालिन्दीह्रदे न्यवसत् । गरुडस्य सौभरिशापादगम्योऽयं ह्रद आसीदिति । अयमिह शापोदन्तः–एकदा गरुडः क्षुधितः कालिन्दीह्रदात् सौभरिणा मुनिना निवारितोऽपि महान्तं मत्स्यमेकं जहार । तद् दृष्ट्वा सौभरिः शशाप–**'अत्र प्रविश्य गरुडो यदि मत्स्यान् स खादति । सद्यः प्राणैर्वियुज्येत सत्यमेतद् ब्रवीम्यहम्'** [भाग.१०.१५–११] इतीति । **'विष्णुना विष्णुभक्तैश्च ब्रह्मशापोऽनुवर्त्यते....अतस्तु सौभरेः शापं नात्यवर्तत् खगेश्वरः'** इति च भागवतात्पर्ये ब्रह्माण्डवचनम् । विज्ञाय यमुनाजलेषु रेमे । आवीच्च पशूनपि वयस्यजनानपि ॥ ३५ ॥ आस्फोट्य भुजजघनं दृढपरिकरबन्धः न्यपतत् । **'तं चण्डवेगविषवीर्यमवेक्ष्य तेन दुष्टां नदीं च खलसंयमनावतारः । कृष्णः कदम्बमधिरुह्य ततोऽतितुङ्गादास्फोट्य गाढरशनो न्यपतद् विषोदे'** [१०.१४.६] इति भागवते । कदति हिनस्ति मदिरामुग्धानिति कदम्बः । कद हिंसाया-मिति सौत्रो धातुः । ततोऽम्बच् प्रत्यय इति वैयाकरणाः । कदन् हिंसन्नम्बते ध्वनतीति तु व्यर्थाक्षरमसहमानास्तत्व-वादिनः । कुत्सितमम्बते वा । 'ಕದಂಬ' इति भाषायाम् । विषोदे विषोदके ह्रदे । भागवतवचनमिदम् । तेन विषोदक इति वक्तव्यमिति पाणिनिमुग्धानां मूढाशङ्काऽपास्ता । अथवा शृणु वैयाकरणपाश पिण्डीशूल–विषोदमेतत् सर इति नामैव तस्य प्रथितमासीदिति बोधयितुं **'विषोदे'** इत्याह । तथाहि कात्यायनः [अ.सू.६.३.५७] –**'सञ्ज्ञायामुत्तरपदस्य उदकशब्दस्य उदादेशो भवतीति वक्तव्यम्'** इति । यथा–क्षीरोदः ॥ ३६ ॥ निपातस्य वेगेन सङ्क्षोभितस्य उरगस्य विषेण उच्छ्वसित अतिवेलमुद्गतः अम्बुराशिर्यत्र । अत एव परित ऊर्ध्वं च धनुःशतं प्लुतः । विषेण कषायः अरुन्तुदः । समग्रमिदं पद्यं भागवते पठ्यते [१०.१४.७] ॥ ३७ ॥

१. 'पर्यक् प्लुतो–'

१ तं यामुनह्रदविलोळकमाप्य[1] नागः काळ्यो[2] निजैः समदशत् सह वासुदेवम् ।
भोगैर्बबन्ध च निजेश्वरमेनमज्ञः सेहे तमीश उत भक्तिमतोऽपराधम् ॥ ३८ ॥

उत्पातमीक्ष्य तु तदाऽखिलगोपसङ्घस्तत्राऽजगाम हलिना प्रतिबोधितोऽपि ।
दृष्ट्वा निजाश्रयजनस्य बहोः सुदुःखं कृष्णः स्वभक्तमपि नागममुं ममर्द ॥ ३९ ॥

तस्योन्नतेषु स फणेषु ननर्त्त कृष्णो ब्रह्मादिभिः कुसुमवर्षिभिरीड्यमानः ।
आर्त्तो मुखैरुरु वमन् रुधिरं स नागो 'नारायणं तमरणं मनसा जगाम' ॥ ४० ॥

तच्चित्रताण्डवविरुग्णफणातपत्रं रक्तं वमन्तमुरु सन्नधियं नितान्तम् ।
दृष्ट्वाऽहिराजमुपसेदुरमुष्य पत्न्यो नेमुश्च सर्वजगदादिगुरुं भुवीशम् ॥ ४१ ॥

**उत (अथापि) तमपराधम्, (अज्ञानकृ)तमपराधम् ॥ ३८ ॥ नागस्य गोपानां च स्वभक्तत्वेऽपि गोपानां बहुत्वात् तदनुसरणेन स्वभक्तमपि नागं ममर्देत्याशयेन 'बहोः सुदुःखं दृष्ट्वा' इत्युक्तम् ॥ ३९–४० ॥ ताण्डवनर्तनविरुग्णं (फणातपत्रं यस्य तम् । उरु)रक्तं बहळरक्तम् । ईशं भुवि नेमुः ॥ ४१ ॥**

---

काळीं कृष्णसलिलां यमुनां वासार्थं ययाविति काळीयः सञ्ज्ञायां ह्रस्वे काळियः । काळ्यां भवः काळीय इति छप्रत्ययो वा । राष्ट्रे यो भवति स राष्ट्रियो भवति । एवं काळ्यां यो भवति स काळियोऽपि भवति । प्राच्यां यो भवति स प्राच्यो भवति । एवं काळ्यां यो भवति स काळ्योऽपि भवति । विलोळको विलोडकः । निजैर्नागैः सह । वासुदेवं भगवन्तं केवलं वसुदेवसुतं मेने । अत एवाज्ञः । अत एवादशच्च । उत उथापि ॥ ३८ ॥ कृष्णसामर्थ्यं प्रतिपाद्य प्रत्ययदानेन बोधितोऽपि गोपसङ्घः । अथ हलिना प्रतिबोधितः कृष्णोऽपि । तथाहि हरिवंशेषु–**'सङ्कर्षणस्तु सङ्क्रुद्धो बभाषे कृष्णमव्ययम् । कृष्णकृष्ण महाबाहो गोपानां नन्दिवर्धन । दम्यतामेष वै क्षिप्रं सर्पराजो विषायुधः । इमे नो बान्धवास्तात त्वां मत्वा मानुषं विभो । परिदेवन्ति करुणं सर्वे मानुषबुद्धयः'** [वि.प.१२.२९–३१] इति । बहोः सुदुःखमिति । बहूनां भक्तानामतिदुःखवारणायैकस्य भक्तस्य किञ्चिद् दुःखदानं साम्प्रतमित्यर्थः ॥ ३९ ॥ उन्नतेषु फणेषु पञ्चसु । **'पृथुभिः पञ्चभिर्घोरैः शिरोभिः परिवारितः'** [१२.६] इति च । अरणं शरणम् । अर्यते गम्यते रक्षार्थमिति । **'तच्चित्रताण्डवविरुग्णफणातपत्रो रक्तं मुखैरुरु वमन् नृप भुग्नगात्रः । स्मृत्वा चराचरगुरुं पुरुषं पुराणं नारायणं तमरणं मनसा जगाम'** [१०.१४.३०] इति च भागवते ॥ ४० ॥ उपसेदुः स्तुतिवचनैरानर्चुः । भुव ईशम् । क्षैप्रविश्लेषः । त्रियम्बकमिति यथा । भुवीत्यव्ययं वा । भुवि नेमुरिति वा । नेमुस्तुष्टुवुरिति वा । **'ज्ञातोऽसि देवदेवेश सर्वेशस्त्वमनुत्तमः ।....प्राणांस्त्यजति नागोऽयं भर्तृभिक्षा प्रदीयताम्'** [७७.३९–४२] इति ब्राह्मे ॥ ४१ ॥

---

१. **'–विलोलक–'** २. **'काल्यो–'**

ताभिः स्तुतः स भगवानमुना च तस्मै दत्त्वाऽभयं यमसहोदरवारितोऽमुम् ।
उत्सृज्य निर्विषजलां यमुनां चकार संस्तूयमानचरितः सुरसिद्धसाद्ध्यैः ॥ ४२ ॥

गोपैर्बलादिभिरुदीर्ण्णतरप्रमोदैः सार्द्धं समेत्य भगवानरविन्दनेत्रः ।
तां रात्रिमत्र निवसन् यमुनातटे स दावाग्निमुद्धतबलं च पपौ व्रजार्त्थे ॥ ४३ ॥

इत्थं सुरासुरगणैरविचिन्त्यदिव्यकर्म्माणि गोकुलगतेऽगणितोरुशक्तौ ।
कुर्वत्यजे व्रजभुवामभवद् विनाश उग्राभिधादसुरतस्तरुरूपतोऽलम् ॥ ४४ ॥

तद्गन्धतो नृपशुमुख्यसमस्तभूतान्यापुर्म्मृतिं [१]बहळरोगनिपीडितानि ।
धातुर्वराज्जगदभावकृतैकबुद्धिर्वद्ध्यो न केनचिदसौ तरुरूपदैत्यः ॥ ४५ ॥

सङ्कर्षणेऽपि तदुदारविषानुविष्टे कृष्णो [२]निजस्पर्शतस्तमपेतरोगम् ।
कृत्वा बभञ्ज विषवृक्षममुं बलेन तस्यानुगैः सह तदाकृतिभिः समस्तैः ॥ ४६ ॥

**अभयं दत्वा, सुपर्णादिति शेषः । उत्सृज्य निर्गमय्य ॥ ४२ ॥ समेत्य, यमुनातटमिति शेषः । व्रजार्थे व्रजरक्षणार्थम् ॥ ४३ ॥ अलं विनाशः ॥ ४४–५ ॥ तदाकृतिभिः वृक्षाकृतिभिः ॥ ४६–७ ॥**

---

अमुना काळियेन च स्तुतः । यमसहोदरं वारीत्यभिमानिधर्मोऽभिमन्यमान उपचर्यते । तदपि कृष्णस्य तत्र तात्पर्यद्योतनार्थम् । सिद्धा महर्षयः । साध्या गन्धर्वादयः ॥ ४२ ॥ गवां गोपानां च रक्षणेन मोदः । इतः परं निरातङ्कं शष्पचरणमिति प्रमोदः । काळियः पुनरपुनरागमाय निस्सारित इत्युदीर्णः प्रमोदः । सर्पदर्पदमनमनाविलं कृष्णं दृष्ट्वा उदीर्णतरप्रमोदः । गोपैः समेत्य सम्भूय सङ्गतो भूत्वा । उद्धतं सर्वदवदहनदक्षम् । **'दवदावौ वनारण्यवह्नी'** इति मङ्कः । अरविन्दनेत्र इत्यविषण्णतामाह । अत्र यत्र काळियो निगृहीतः । व्रजजनार्थे । **'तमग्निमपिबत् तूर्णमनन्तोऽनन्तशक्तिधृक्'** [भाग. १०.१९.२५] इति च ॥ ४३ ॥ दिव्यानि अलौकिकानि, तस्य च लीलामयानि । एकैकशोऽप्यनन्तत्वमुरुता । व्रजभुवां व्रजवासिनाम् । अलं महान् ॥ ४४ ॥ जगदभावाय कृता निश्चिता एका केवला बुद्धिर्यस्य । केवलं जगदभावकृतबुद्धिरित्यर्थः ॥ ४५ ॥ उदारेण महता विषेण । 'स्पर्‌शतः' ईषत्स्पर्शमात्रेण । क्षैप्रविश्लेषेण स्पर्शस्य मान्द्यं सदयत्वं चाऽह । बलेन प्रसह्य । बलरामेण सह च । तदाकृतिभिः विषवृक्षरूपैः ॥ ४६ ॥

---

१. **'बहुलरोग–'** २. **'निजस्पर्‌शत–'** इति विश्लिष्य पठनीयम् ।

**दैत्यांश्च गोवपुष आत्तवरान् विरिञ्चान्मृत्यूज्झितानपि निपात्य ददाह[1] वृक्षान् ।**
**विक्रीड्य रामसहितो यमुनाजले स नीरोगमाशु कृतवान् व्रजमब्जनाभः ॥ ४७ ॥**

**सप्तोक्षणोऽतिबलवीर्य्ययुतानदम्यान् सर्वैर्गिरीशवरतो दितिजप्रधानान् ।**
**हत्वा सुतामलभदाशु विभुर्य्यशोदाभ्रातुः स कुम्भकसमाह्वयिनोऽपि नीलाम् ॥ ४८ ॥**

**या पूर्वजन्मनि तपः प्रथमैव भार्य्या भूयासमित्यचरदस्य हि सङ्गमो मे ।**
**स्यात् कृष्णजन्मनि समस्तवराङ्गनाभ्यः पूर्वं त्विति स्म तदिमां प्रथमं स आप ॥ ४९ ॥**

**अग्रे द्विजत्वत उपावहदेष नीलां गोपाङ्गना अपि पुरा वरमापिरे यत् ।**
**संस्कारतः प्रथममेव सुसङ्गमो नो भूयात् तवेति परमाप्सरसः पुरा याः ॥ ५० ॥**

**उक्षणः । उक्षा(णो वृषभास्तानित्यर्थः) ॥ ४८–५० ॥**

---

गोवपुषो दैत्यान् निपात्य निहत्य वृक्षरूपान् निहतान् ददाह । भागवतादिष्वनुक्तेयं कथा । यमुनाजले च विगाहंविगाहं क्रीडित्वा तज्जलं निर्विषं कृत्वा ॥ ४७ ॥ मूत्रेण उक्षति भुवं सिञ्चतीत्युक्षा सौरभेयः । **'उक्ष सेचने'** इत्यतः कनिन् [द.पा.६.५५] । **'उक्षाऽनड्वान् बलीवर्दः'** इत्यभिधानम् । अत्र द्विविधं रूपं प्राचां मते– उक्षा, उक्षणौ उक्षाणौ, उक्षण उक्षाण इति । उक्षणम् उक्षाणम्, उक्षणौ उक्षाणौ, उक्ष्णः उक्षण इति । तथाहि वैदिकाः प्रयोगाः–**'ते जज्ञिरे दिव ऋष्वास उक्षणः'** [ऋ.सं.१.६४.२] इति । उक्षणोऽभिलषितसेचका मरुत इत्यर्थः । **'वेना दुहन्त्युक्षणं गिरिष्ठम्'** [९.८५.१०] इति । **'उक्षाणं पृश्निमपचन्त वीराः'** [१.१६४.४३] इति । **'सिम उक्ष्णोऽवसृष्टाँ अदन्ति'** [१०.२८.११] इति । उक्ष्णः अभिलषितसेचकान् सोमानित्यर्थः । **'घसत् त इन्द्र उक्षणः'** [१०.८६.१३] इति च । उक्षणः वृषभानित्यर्थः । तदेवं परमवैदिक आचार्यस्तामेतां वैदिकीं सरणिं ग्राहयितुं विनेयानुजिघृक्षयाऽह– सप्त उक्षणो वृषभानिति । एतेन **'अल्लोपोऽनः'** [अ.सू.६.४.१३४] इति पाणिनिस्मरणात् द्वितीयाबहुवचने **'उक्ष्णः'** इत्येव साधुरिति वदन्तः पाणिनिभक्ता उक्तोत्तराः । अपिचोक्ष्णामधिकशक्तिं द्योतयितुमेवाक्षराधिक्यम् । नीलामलभत् । तदर्थमेवायं प्रणयसंरम्भ इति परस्मैभाषा । तच्चोत्तरपद्ये स्फुटम् । इयं नीलैव पुराणान्तरेषु राधेति नामान्तरेण पठ्यते । तदिदं सप्तोक्षदमनं नाग्नजित्या नीलायाः परिणयेऽपि पठ्यते । गोपकन्याया नीलायाः परिणयस्तत्र सप्तोक्षदमनं च सम्प्रति पुराणेषु न पठ्यते । अत्र नीलाद्वयपरिणयसूचनार्थमेव चापिशब्दं प्रायुनक्–कुम्भकस्य सुतामपि नीलामिति । कथं कुम्भकः? **'कुभि गर्वे'** इति काशकृत्स्नः । गर्वोऽभिमानः । कुम्भति अभिमन्यत इति कुम्भकः । स्वकुले स्वात्मनि चाभिमानवानित्यर्थः । **'कुभि च्छादने'** । कुम्भयति कुम्भति वा छादयत्यात्मानमिति कुम्भकः ॥ ४८–९ ॥ उपावहत् उदवहत् । उपेति उदिति च समानार्थकं पदद्वयम् । तेनोपनयनमुन्नयनं च भवति । उद्वाह उपवाहश्च भवति । उपेत्युपरि ।

---

१. **'निहत्य ददार वृक्षान्'** इति क्वचित् ।

**तत्राथ कृष्णमवदन् सबलं वयस्याः पक्वानि तालसुफलान्यनुभोजयेति ।**
**इत्यर्थितः सबल आप स तालवृन्दं[१] गोपैर्दुरासदमतीव हि धेनुकेन ॥ ५१ ॥**

**विघ्नेशतो वरमवाप्य स[२] दुष्टदैत्यो दीर्घायुरुत्तमबलः कदनप्रियोऽभूत् ।**
**नित्योद्धतः स उत राममवेक्ष्य तालवृन्तात्[३] फलानि गळयन्तमथाभ्यधावत् ।**
**तस्य प्रहारमभिकाङ्क्षत आशु पृष्ठपादौ प्रगृह्य तृणराजशिरोऽहरत् सः ॥ ५२ ॥**

**तस्मिन् हते खरतरे खररूपदैत्ये सर्वे खराश्च खरतालवनान्तरस्थाः ।**
**प्रापुः खरस्वरतरा[४] खरराक्षसारिं कृष्णं बलेन सहितं निहताश्च तेन ॥ ५३ ॥**

**(धेनुकेन) निमित्तेन ॥ ५१ ॥ कदनप्रियः युद्धप्रियः, सुदुष्टदैत्यः विघ्नेशतो वरमवाप्य दीर्घायुरुत्तमबलः अभूत् । राममभ्यधावत् । तद्बलमविज्ञाय इतरानिवेति भावः । प्रहारमभिकाङ्क्षतः, पृष्ठपादाभ्यामिति शेषः । तृणराजशिरः तालवृक्षशिरः ॥ ५२–५ ॥**

---

उदित्युच्चैः । नीलां नाम कुम्भकसुतां गोपकन्याम् । अन्या गोपाङ्गना अपि, याः पुरा परमाप्सरसः ताः पुरा अप्सरोजन्मनि भगवतः सकाशाद् यद् यतः वरमापिरे अतः पुरा द्विजत्वसंस्कारतः पूर्वमेव वरं कृष्णसुसङ्गममापिरे । सुसङ्गमः सुरतसुखसङ्गमः । विवाहः प्रथमसङ्गमश्च नीलया वृतः । अन्याभिरुपनयनात् पूर्वं कृष्णसङ्गममात्रं वृतमिति विशेषः ॥ ५० ॥ तत्र तस्मिन्नवसरे । अथेति कथान्तरे । तालस्य स्वादुफलानि इष्टानुगुणं यथेष्टं भोजयेति । तालवृक्षाणां वृन्दो वृन्दं वा यत्र तमरण्यभागमाप । सबलः सह च गोपैः । यतः स्वयं गोपैर्दुरासदं न केवलम्, केनापि दुरासदम् । कुतः? धेनुकेन तत्र स्थितेन दैत्येन हेतुना । कथं धेनुकः? धयति पिबति मुग्धानां रुधिरमिति । धेट् पाने । धयतेर्नुः प्रत्ययः ककारश्चान्तादेशः । अतीव सर्वात्मना ॥ ५१ ॥ शिवावरादवध्यो हतः । शिववरादवध्या हताः । स्कन्दप्रसादकवचोऽपि हतः । एतदनन्तरमपि विघ्नेशवरदृप्त आजगामेत्यहो मौर्ख्यं दैत्यानामभेषजम् । मौर्ख्ये बीजमाह– वरमवाप्य दीर्घायुरित्यादि । स्वरूपतो दैत्य इत्येव पर्याप्तं मौर्ख्ये । अयं पुनर्दैत्येष्वपि दुष्टः । वरबलाद् दीर्घायुरतोऽवध्य इति भ्रान्तः । स्वरूपतश्चाधिकबलश्च दैत्येषु । एतैः साकं कदनचापलचोदितश्च । एतैः कारणैर्जनितया पुनरजेयत्वभ्रान्त्या नित्योद्धतश्च । तदिदं कपेः कापिशायनपानम् । वृन्तं प्रसवबन्धः, यतः फलानि गलन्ति । 'ತೊಟ್ಟು' इति भाषायाम् । अभितः उभयतः प्रहर्तुं काङ्क्षतः । याभ्यां प्राजिहीर्षत् तावेव पृष्ठपादौ, आशु प्रहारात् पूर्वमेव । प्रहारार्थं गृहीत्वा, प्रहृत्य च, तृणराजस्य शिरः, यत्र फलवृन्तमास, प्राहरत् । तृणराजस्तालवृक्षः । **'तृणराजस्तलस्तालः'** इत्यभिधानम् । तेन धेनुकस्य प्राणमप्यहरत् । तेन फलानि पेतुः, ममार च दैत्य इत्येका क्रिया द्व्यर्थकरी बभूव ॥ ५२ ॥ ननु वत्सो वत्साकृतिरास । बको

---

१. **'तालवृन्तं गो–'**
२. **'–वाप्य सुदुष्ट–'** । वे.ती. पाठोऽपि तथा ।
३. **'–वृन्दात् फलानि गलयन्त–'**
४. **'खराः खरतरा–'** इति काचित्कः पाठः ।

**सर्वान् निहत्य खररूपधरान् स दैत्यान् विघ्नेश्वरस्य वरतोऽन्यजनैरवद्ध्यान् ।**
**पक्वानि तालसुफलानि निजेषु चादाद् दुर्वारपौरुषगुणोद्भरितो रमेशः ॥ ५४ ॥**

**पक्षद्वयेन विहरत्स्वथ गोपकेषु दैत्यः प्रलम्ब इति कंसविसृष्ट आगात् ।**
**कृष्णस्य पक्षिषु जयत्सु स राममेत्य पापः पराजित उवाह तमुग्ररूपः ॥ ५५ ॥**

**भीतेन रोहिणिसुतेन हरिः स्तुतोऽसौ स्वाविष्टतामुपदिदेश बलाभिपूर्त्यै ।**
**तेनैव पूरितबलोऽम्बरचारिणं तं पापं प्रलम्बमुरुमुष्टिहतं चकार ॥ ५६ ॥**

**उपदिदेश आविश्चकार । तेनैव आविष्करणेनैव ॥ ५६–७ ॥**

---

बकाकृतिः । किं धेनुकोऽपि धेनुवदास? नेत्याह– खररूपदैत्ये । खरं दैत्यावासत्वाद् दुःखकरं तालवनम् । अथवा खरताल इति तालप्रभेदः । यं देवताल इत्यपि वदन्ति । तथाह्यभिदधति–**'खरं स्यात् तीक्ष्णघर्मयोः । गर्दभेऽस्त्री देवताडे'** इति । अतिशयेन खरं स्वरन्तीति खरस्वरतराः । धेनुकानुयायिनोऽन्ये च खररूपा दैत्याः कृष्णमापुः । तेन निहताश्च बभूवुः ॥ ५३ ॥ न केवलं खररूपः धेनुकः, किन्तु सर्वेऽपि खररूपधराः दैत्याः विघ्नेश्वरस्य वरतोऽवध्याः । अन्यैः विघ्नेश्वरादवरैः जनैः । स्वपुत्रेण दत्तवर इति प्रायः शिवोऽपि न हन्ति । शिवो नानुमन्येतेति शिवादवरा विघ्नेश्वरादुत्तमा अपि देवाः शिवमन्युभीता न हन्युरिति हृदयम् । दैत्याः न केनापि वध्या भूयास्मेति मन्वाना अवध्यत्वं वरं वृणते । देवतास्तु स्वावरेणावध्यत्वं ददतीति वास्तवम् । बलं कृष्णं च विना तत्रत्यैरन्यैरवध्यानिति वा । पौरुषं पराक्रम एव गुणः । पौरुषः पुरुषसम्बन्धी गुणः पराक्रमो वा । तेनोद्भरितः परिपूर्णः ॥ ५४ ॥ पक्षद्वयेन विहरत्सु । यो जेता स जितेन वोढव्य इति समयं कृत्वा । **'हरिणाऽऽक्रीडनं नाम बालक्रीडनकं ततः । प्रकुर्वन्तो हि ते सर्वे द्वौद्वौ युगपदुत्थितौ'** [५.९.१२] इति वैष्णवे । हरिवंशे च [वि.प.१८.१८], **'प्रक्रीडितास्तु ते सर्वे द्वौद्वौ युगपदुत्पतन्'** इत्युत्तरार्धे पाठभेदः । गोपकेषु गोपबालकेषु । प्रलम्बकायः प्रलम्बः । कृष्णस्य पक्षिषु जयत्सु । यद्यपि भागवते–**'उवाह कृष्णो भगवान् श्रीदामानं पराजितः । वृषभं भद्रसेनस्तु प्रलम्बो रोहिणीसुतम्'** [१०.१८.२३] इति कृष्णः पराजितपक्ष इति पठ्यते । पुंव्यत्यासोऽयम्–**'उवाह कृष्णं श्रीदामा भगवन्तं पराजितः'** इति पठितव्ये विभक्तिव्यत्ययेनैवं पपाठ । बहुप्रमाणसंवादाच्चैतदवसीयते । तथाहि–**'श्रीदाममजयत् कृष्णः प्रलम्बं रोहिणीसुतः । गोपालैः कृष्णपक्षीयैर्गोपालास्त्वपरे जिताः'** [वि.प.१४.२१] इति हरिवंशेषु । **'श्रीदामानं ततः कृष्णः प्रलम्बं रोहिणीसुतः । जितवान्–'** [१८७.३] इति ब्राह्मे, विष्णुपुराणे [५.९.१४] च । बहुग्रन्थानुसारेण भागवतार्थो निर्णेय इति स्फुटम् । तथाहि भागवततात्पर्ये– **'श्रीदामा कृष्णमुवाह । हरिवंशादिवचनात्'** इति । **'बहुमानविरोधे तु व्यत्यासः शब्दतोऽर्थतः । कार्योऽनिरुक्तदेवानां गुणसिद्ध्यै नचान्यथा । विष्णुर्ब्रह्मा तथा वायुरनिरुक्ताः प्रकीर्तिताः । तत्पद्व्यश्चेतरगुणा व्यत्यस्यास्तेष्वसंशयः'** इति च ब्रह्मतर्कवचनं भागवततात्पर्ये ॥ ५५ ॥ स्वाविष्टतामुपदिदेश–**'अहं यः स भवानेव यस्त्वं सोऽहं सनातनः ।....तदास्से मूढवत् त्वं किं प्राणेन जहि दानवम् । मूर्ध्नि देवरिपुं देव वज्रकल्पेन मुष्टिना'** [वि.प.१४.४८–९] इति, 'तत्

तस्मिन् हते सुरगणा बलदेवनाम रामस्य चक्रुरतितृप्तियुता हरिश्च ।
वह्निं पपौ पुनरपि प्रदहन्तमुच्चैर्गोपांश्च गोगणमगण्यगुणार्ण्णवोऽपात् ॥ ५७ ॥

कृष्णं कदाचिदतिदूरगतं वयस्या ऊचुः क्षुधाऽर्दिततरा वयमित्युदारम् ।
सोऽप्याह सत्रमिह विप्रगणाश्चरन्ति तान् याचतेति परिपूर्णसमस्तकामः ॥ ५८ ॥

तान् प्राप्य काममनवाप्य पुनश्च गोपाः कृष्णं समापुरथ[1] तानवदत् स देवः ।
पत्नीः समर्थयत मद्वचनादिति स्म चक्रुश्च ते तदपि ता भगवन्तमापुः ॥ ५९ ॥

ताः षड्विधान्नपरिपूर्ण्णकराः समेताः प्राप्ता विसृज्य पतिपुत्रसमस्तबन्धून् ।
आत्मार्च्चनैकपरमा विससर्ज्ज कृष्ण एका पतिप्रविधुता[2] पदमाप विष्णोः ॥ ६० ॥

भुक्त्वाऽथ गोपसहितो भगवांस्तदन्नं रेमे च गोकुलमवाप्य समस्तनाथः ।
आज्ञातिलङ्घनकृतेः स्वकृतापराधात् पश्चात् सुतप्तमनसोऽप्यभवन् स्म विप्राः[3] ॥ ६१ ॥

**उदारं प्रार्थितवरदानसमर्थम् ॥ ५८ ॥ मद्वचनात् पत्नीः समर्थयतेति । कृष्णेन प्रेषिता वयमागता इति ब्रूतेति मद्वचनात् । तत् पत्नीप्रार्थनमपि ॥ ५९ ॥ षड्विधान्नपरिपूर्णकराः षड्विधरसवदन्नपूर्णकराः । विससर्ज प्रेषयामास । पतिप्रविधुता न याहीति पत्या निरुद्धा ॥ ६०–१ ॥**

---

**स्मर्यताममेयात्मंस्त्वयाऽऽत्मा जहि दानवम् । मानुष्यमेवावलम्ब्य बन्धूनां क्रियतां हितम्'** [वि.पु.९.३३] इत्यादि च ॥ ५६ ॥ हरिश्च अतितृप्तियुतो बभूव । अथच रोहिणिसुतः प्रलम्बं हतं चकार । हरिश्च वह्निं पपौ । ननु पूर्वमेव यमुनातटे पपौ । पुनरपि मुञ्जाटव्यां वनं दहन्तं गोगोपगणं प्रदहन्तमुच्चैरशेषं पपौ । तेन गोपांश्च गोगणं वनं चापात् ॥ ५७ ॥ वयस्यैर्गोपबालैः सह वृन्दावनाददतिदूरं गतम् । उदारमभीष्टदातारम् । **'उदारो दातृमहतोः'** इत्यभिधानम् ॥ ५८ ॥ तान् विप्रान् प्राप्य अन्नप्रेप्सया प्रश्रयेणोपसद्य, काममनवाप्य, विप्रैरवज्ञाताः कामितमन्नमलब्ध्वैव पुनरपि ततः सन्निवृत्य स्वसङ्घटनिवेदनाय कृष्णमापुः । सन्निवृत्य समेता अर्थयत तेषां पत्नीः ॥ ५९ ॥ भक्ष्यं भोज्यं लेह्यं चोष्यं खाद्यं पेयमिति षड्विधमन्नम् । भक्ष्यं पोलिकादि । भोज्यमन्नादि । लेह्यं स्वादुपाकादि । चोष्यं शर्कराखण्डादि । खाद्यं षष्कुल्यादि । पेयं रसायनादि । षड्रसोपेतत्वाद् वा । परिपूर्णपात्रकराः । तासामन्नं स्वीकृत्य ता गृहं प्रति विससर्ज । प्रविधुता तिरस्कृता । **'तत्रैका विधुता भर्त्रा भगवन्तं यथाश्रुतम् । हृदोपगुह्य विजहौ देहं कर्मानुबन्धनम्'** [भाग.१०.२१.३४] इति च ॥ ६० ॥ कृष्णं भगवन्तमवगत्याऽपि लङ्घनमतिलङ्घनम् । अत एव न केवलं तप्ताः ।

---

१. **'समीयुरथ'** २. **'पतिप्रविधृता–'** इति पाठः प्रामादिकः । ३. **'–प्यभवंश्च विप्राः'**

कृष्णोऽथ वीक्ष्य पुरुहूतमहप्रयत्नं गोपान् न्यवारयदविस्मरणाय तस्य ।
मा मानुषोऽयमिति मामवगच्छतां स[1] इत्यव्ययोऽस्य विदधे महभङ्गमीशः ॥ ६२ ॥

गोपांश्च तान् गिरिमहोऽस्मदुरुस्वधर्म्म इत्युक्तिसच्छलत आत्ममहेऽवतार्य्य ।
भूत्वाऽतिविस्तृततनुर्बुभुजे बलिं स नानाविधान्नरसपानगुणैः सहैव ॥ ६३ ॥

इन्द्रोऽथ विस्मृतरथाङ्गधरावतारो मेघान् समादिशदुरूदकपूगवृष्ट्यै ।
ते प्रेरिताः[2] सकलगोकुलनाशनाय धारा वितेरुरुनागकरप्रकाराः ॥ ६४ ॥

**तस्य इन्द्रस्य अविस्मरणाय, स्वस्येति शेषः ॥ ६२ ॥ गिरिमहः गिरिपूजा । अस्मदुरुस्वधर्मः गिरिमाश्रित्य जीवतामस्माकं महान् विहितधर्मः । इत्युक्तिसच्छलतः एवंरूपवचनव्याजात् आत्ममहे स्वपूजायां अवतार्य प्रवर्तयित्वा[3] । सर्वेषां मदाश्रयत्वात् मत्पूजैव सर्वेषां परमधर्म इति स्पष्टमनुक्त्वा सर्वगिरणात् स्वस्यैव मुख्यतो गिरिनामत्वमभिप्रेत्य गिरिपूजा स्वधर्म इत्युक्तिश्छलमिति भावः ॥ ६३ ॥ ते (वि)तेरुर्ददुः, ववृषुरिति यावत् ॥ ६४ ॥**

किन्तु सुतप्ताः । तं च तापं तूष्णीं मनसैवानुबभूवुः । न वाचा प्रकटयितुं प्रबभूवुरिति सुतप्तमनस इत्याह । **'धिग् जन्म नस्तु धिग् बुद्धिं धिग् व्रतं धिग् बहुज्ञताम् । धिक् कुलं धिक् क्रियादाक्ष्यं विमुखा ये त्वधोक्षजे'** [१०.२१.३९] इति च ॥ ६१ ॥ पुरुहूतमहः इन्द्रोत्सवः । **'उत्सवः स्यान्महः क्षणः'** इति हलायुधः । अयं मानुषः इति सः इन्द्रः मां माऽवगमत्; किन्तु मामानुषः अमानुष इत्यवगच्छतु । इत्येतदर्थं उत्सवभङ्गं विदधे । तस्य इन्द्रस्य अविस्मरणाय । अवगच्छतामिति स्वभक्ते वात्सल्यातिशयमात्मनेभाषयाऽऽह ॥ ६२ ॥ परेषां वञ्चनार्थमपि छलोक्तिः सम्भवति । इदं तु छलं परेषामुद्धारार्थमिति सच्छलत इत्याह । जगद्गिरणाद् गिरिरिति भगवानिति गूढाशयः । अस्माकं पशुपालनवृत्तीनामुरुः श्रेष्ठः स्वधर्मः सहजधर्मः । तान् पुरुहूतपूजायां प्रवृत्तानपि गोपान् आत्मनः स्वस्य परमात्मनः पूजायां अवतार्य प्रवर्त्य बलिमुपहारं पूजां वा बुभुजे स्वीचकार । **'तं ब्रह्मगिरिरित्याचक्षते'** इति श्रुतिः । अतिविस्तृततनुः । **'शैलोऽस्मीति ब्रुवन् भूरिबलिमादद् बृहद्वपुः'** [१०.२२.३५] इति च । **'गिरिमूर्धनि कृष्णोऽपि शैलोऽहमिति मूर्तिमान् । बुभुजेऽन्नं बहुतरं गोपवर्याहृतं द्विज'** [५.१०.४७] इति वैष्णवे । **'भुक्त्वा चावभृथे कृष्णः पयः पीत्वा च कामतः । सन्तृप्तोऽस्मीति दिव्येन रूपेण प्रजहास वै । तं गोपाः पर्वताकारं दिव्यस्रगनुलेपनम् । गिरिमूर्ध्नि स्थितं दृष्ट्वा कृष्णं जग्मुः प्रधानतः । भगवानपि तेनैव रूपेणाऽच्छादितः प्रभुः । सहितः प्रणतो गोपैर्ननन्दाऽत्मानमात्मना'** [वि.प.१७.२३–५] इति हरिवंशेषु । नानाविधैरन्नैः रसनीयपानैः गुणैरुपसेचनैश्च सह स्वयमेव बुभुजे ॥ ६३ ॥ विस्मृतरथाङ्गधरा-वतार इव । नहि सर्वात्मना भगवतो विस्मरणं देवानां सम्भवति । अथापि तमस आवेशेन पिहितस्वरूपास्तेन सह

१. **'–गच्छतात् स–'** २. **'तत्प्रेरिताः'** इति कश्चित् । ३. **'प्रवर्त्य'** इति पर्याप्तम् ।

**ताभिर्न्निपीडितमुदीक्ष्य स कञ्जनाभः सर्वं व्रजं गिरिवरं प्रसभं दधार ।**
**वामेन कञ्जदलकोमळ[1]पाणिनैव तत्राखिलाः प्रविविशुः पशुपाः स्वगोभिः ॥ ६५ ॥** १

**वृष्ट्वोरुवार्य्यथ निरन्तरसप्तरात्रं त्रातं समीक्ष्य[2] हरिणा व्रजमश्रमेण ।**
**शक्रोऽनुसंस्मृतसुरप्रवरावतारः पादाम्बुजं यदुपतेः शरणं जगाम ॥ ६६ ॥**

**तुष्टाव चैनमुरुवेदशिरोगताभिर्ग्गीर्भिः सदाऽगणितपूर्ण्णगुणार्ण्णवं तम् ।**
**गोभृद् गुरुं हरगुरोरपि गोगणेन युक्तः सहस्रगुरगाधगुमग्र्यमग्र्यात् ॥ ६७ ॥**

**तत्र उद्धृतपर्वताधोभागे ॥ ६५ ॥ (अथ) कृष्णेन व्रजरक्षणानन्तरम्, अनुसंस्मृतसुरप्रवरावतारः ॥६६॥ उरुवेदशिरोगताभिः उरूपनिषद्गताभिः । गोभृत् वज्रभृत् । हरगुरोरपि ब्रह्मणोऽपि । सुरगोगणेन । (सहस्रगुः) सहस्राक्षः । अगाधगुमगाधज्ञानम्, निरवधिकज्ञानमिति भावः ॥ ६७–८ ॥**

---

स्पर्धन्ते । मेघान् तदभिमानिनः । स्वपूजाविहतिसम्भ्रान्त्या आदेशः समादेशः । सामूहिक आदेशः समादेशः । कृष्णमहिमाविष्काराय समीचीनः आदेशः समादेशः । सकलगोकुलनाशनाय समादिशत् । तदर्थमुरूदकपूगवृष्टयै समादिशत् । उरुः मुसलधाराकारः उदकपूगः जलराशिः । प्रेरितास्ते मेघाः । वितेरुर्ववृषुः । नागकरः शुण्डादण्डः ॥६४॥ जनानां कं जनयन्नाभातीति कञ्जनाभः । अत एव सर्वं व्रजं निकृत्या नितरां पीडितमुदीक्ष्य प्रसभं सपदि तद्रक्षणार्थं गिरिवरं दधार । उद्धर्तुमीक्षा उदीक्षा । वामेन पाणिनैव । सप्तहायनस्यास्य शिशोः एकेनैव पाणिना महतो गिरेर्धारणम्, तदपि कोमळेन पाणिना कठोरस्य गिरेरित्येवकारेण विस्मयते । कोमळम्, श्लक्ष्णं कमनीयं च । **'कमेरलप्रत्ययः, अत उच्च । कोमलं अजरठम्'** [स.कं.२.३.९९] इति दण्डनाथनारायणः । प्राचीना लस्य स्थले ळं पठन्ति । तद् यथा– कमलं कमळम् । कोमलं कोमळम् ॥ ६५ ॥ सप्तरात्रमित्यत्यन्तसंयोगे द्वितीयेति मुखत आह– निरन्तरेति । सप्त रात्रयः समाहृताः सप्तरात्रः । रात्रेरच् [अ.सू.५.४.८७] । अथ निरन्तरसप्तरात्रवृष्टयनन्तरमपि व्रजं हरिणा त्रातं समीक्ष्य दृष्ट्वा, सम्यगवबुद्ध्य च, अथ तस्मादेव महिम्नः अनुसंस्मृतसुरप्रवरावतारः । अनुभूय, सम्यग् दृढम्, यथा न पुनर्विस्मरणं स्यात्, स्मृतभगवदवतारः । स्वयं सुरवरः तं सुरप्रवरं विजज्ञौ । शरणमित्याश्रय उच्यते । शरणं जगाम त्राणार्थं पादाम्बुजमाशिश्रिय इत्यर्थः ॥ ६६ ॥ न केवलं शरणं जगाम । तमेनं सुरप्रवरावतारं तुष्टाव च । अगणितपूर्णगुणार्णवन्तमित्येकं वा पदम् । अगणिताः प्रत्येकं पूर्णाश्च गुणा येषु प्रतिपाद्याः ते अर्णा वेदवर्णाः, तद्वन्तम् । **'वेदाक्षराणि यावन्ति पठितानि द्विजातिभिः । तावन्ति हरिनामानि पठितानि–'** इति हि स्मरन्ति । अत एव वेदगताभिस्तच्छिरोगताभिश्च गीर्भिस्तुष्टाव । भगवत्परतैव गिरामुरुता नाम । प्रत्यक्षरं भगवत्परा वेदा एव वा प्रमाणानां शिरस्थानीयतया शिरांसि । गौरिति द्यौरुच्यते । गौरिति वज्रमुच्यते । गाव इति दिश उच्यन्ते । गौरिति वागुच्यते । गाव इत्याप उच्यन्ते । गोभृत् स्वःपतिः, वज्री च, दिक्पालश्च । वेदवाचमर्थमवबुद्ध्य भरमाणश्च । गाः जलधाराः तदभिमानिनः पर्जन्यादीन् भरमाणश्च ।

---

१. **'–कोमल'**

२. **'त्रातं निरीक्ष्य'** । **'त्रातं निशाम्य'** इति क्वचित् ।

**त्वत्तो जगत् सकलमाविरभूदगण्य-**
**धाम्नस्त्वमेव परिपासि समस्तमन्ते ।**
**अत्सि त्वयैव जगतोऽस्य हि[1] बन्धमोक्षौ**
**न त्वत्समोऽस्ति कुहचित् परिपूर्णशक्ते ॥ ६८ ॥**

**क्षन्तव्यमेव भवता मम बाल्यमीश त्वत्संश्रयोऽस्मि हि सदेत्यभिवन्दितोऽजः ।**
**क्षान्तं सदैव भवतस्तव शिक्षणाय पूजापहारविधिरित्यवदद् रमेशः ॥ ६९ ॥**

**गोविन्दमेनमभिषिच्य स गोगणेतो[2] गोभिर्ज्जगाम गुणपूर्णममुं प्रणम्य ।**
**गोपैर्गिराम्पतिरपि प्रणतोऽभिगम्य गोवर्द्धनोद्धरणसङ्गतसंशयैः सः ॥ ७० ॥**

**अभिवन्दितः प्रणतः ॥ ६९ ॥ गोविन्दं गोविन्दनामकम् । सङ्गतसंशयैः सम्यग्गतसन्देहैः ॥ ७०–२॥**

---

स्वगुरुं, स्वगुरोः हरस्य च गुरुम् । हरगुरोः ब्रह्मणोऽपि गुरुम् । गाव इति धेनवश्चोक्षाणश्चोच्यन्ते । सुरगोगणेन कामधेन्वादिना । **'अथाऽह सुरभिः कृष्णमभिमन्त्र्य मनस्विनी । स्वसन्तानैरुपामन्त्र्य गोपरूपिणमीश्वरम्'** [१०.२५.१८] इति हि भागवते । गौरिति ज्ञानमुच्यते । गाव इत्यक्षीण्युच्यन्ते । सहस्रगुः बहुज्ञः सहस्राक्षो वा । गाव इति दीधितयोऽप्युच्यन्ते । अगाधगुः अगाधज्ञानः अगाधदीधितिर्वा । सर्वज्ञोऽमितकान्तिश्च । गौरिति भूरप्युच्यते । अगाधा गौर्भूमिस्तत्रागाधा गावः अकूपारापानि च येन सोऽगाधगुः । बाणाश्च गावः । येन अगाधा अविलोड्या गावो बाणा रावणवधायोपात्ताः सोऽगाधगुः । अनन्ताक्षश्चागाधगुः । **'सहस्राक्षः सहस्रपात्'** इति हि पौरुषं सूक्तम् । अनन्तवेदवेद्यश्चागाधगुः । साकल्येन वेदाप्रतिपाद्य इत्यपि व्याचक्षते[3] ॥ ६७ ॥ कलया जीवकलया सहितं जगत् जीवकलामानि प्राणतत्वम् । सकलं चेतनाचेतनात्मकं जगद् विश्वं च । नित्यस्याप्युत्पत्तिं घटयितुमाविरभूदित्याह । अगण्यधाम्नस्त्वत्तः । धाम स्वरूपं तेजो वा । त्वमेव । साक्षाद् विष्णुरूपः सन्नित्येवार्थः । परिपासि । परितो नियमयन् पासीत्यर्थः । समस्तमप्यन्ते भक्षयसि । अथापि सर्वत्र समः । सर्वदा रमया सहितश्च । तं च अन्ते । तस्य प्राणस्य अन्तिक । अन्तिरित्यन्तिक उच्यते । **'आत्मानं जीवमन्तिकात्'** इति हि वेदशिरसि । तं प्राणं चान्ते अत्सीति वा । **'वायुरनिलममृतमथेदं भस्मान्तं शरीरम्'** इति श्रवणात् । जगतः चेतनजातस्य । बध्नातीति बन्धोऽज्ञानं संसारश्च । मोक्षयतीति मोक्षो ज्ञानं मोक्षणं च । कुहचित् क्वचिदपि । **'वा ह च च्छन्दसि'** [अ.सू.५.३.१३] इति हि पाणिनिः । तेन क्व इत्यर्थे कुहेति च्छान्दसं रूपम् ॥ ६८ ॥ बाल्यं बालिश्यम् । नात्र बालभावो बाल्यम् । किन्तु बालस्वभावः । अभिवन्दितः अभिज्ञाय स्तुतो नतश्च । भवति उन्नतिमेतीति भवन् । भवतः सदा वर्धमानस्य तव उन्नतिविरोधि बालिश्यं क्षान्तमेव मया ॥ ६९ ॥ गोविन्दम् । अनादितः गोविन्दनामानम् । अथापि तदानीं विशिष्येन्द्रेण दत्तगोविन्दाभिधानम् । तथाहि भागवते–**'इन्द्रं**

---

१. **'–स्य च बन्ध–'** इति क्वचित् । २. **'गोगणेशो गोभि–'** ३. भारतश्रीनिवासाचार्यव्याख्यानम् ।

**कृष्णं ततः प्रभृति गोपगणा व्यजानन् नारायणोऽयमिति गर्गवचश्च नन्दात् ।**
**नारायणस्य सम इत्युदितं निशम्य पूजां च चक्रुरधिकामरविन्दनेत्रे ॥ ७१ ॥**

**स्कन्दादुपात्तवरतो मरणादपेतं [१]दृष्ट्वा च रामनिहतं बलिनं प्रलम्बम् ।**
**[२]चक्रुर्विनिश्चयममुष्य सुराधिकत्वे गोपा अथास्य विदधुः परमां च पूजाम् ॥ ७२ ॥**

**कात्त्यायनी[३]व्रतपराः स्वपतित्वहेतोः कन्या उवाह भगवानपराश्च गोपीः ।**
**अन्यैर्धृता अयुगबाणशराभिनुन्नाः प्राप्ता निशास्वरमयच्छशिराजितासु ॥ ७३ ॥**

**कात्यायनी गौरी । अन्यैर्धृताः अन्यैरूढाः ॥ ७३ ॥**

---

**नस्त्वाऽभिषेक्ष्यामो ब्रह्मणा चोदिता वयम् । अवतीर्णोऽसि विश्वात्मन् भूमेर्भारापनुत्तये । एवं कृष्णमुपामन्त्र्य सुरभिः पयसाऽऽत्मनः । जलैश्चाऽऽकाशगङ्गाया ऐरावतकरोद्धृतैः । इन्द्रः सुरर्षिभिः साकं चोदितो देवमातृभिः । अभ्यषिञ्चत दाशार्हं गोविन्द इति चाभ्यधात्'** [१०.२५.२१–३] इति । तथाच गोगणेतः अभिषिच्य प्रणम्य च । वैष्णवे चेन्द्र-वचनम्–**'स त्वां कृष्णाभिषेक्ष्यामि गवां वाक्यप्रचोदितः । उपेन्द्रत्वे गवामिन्द्रो गोविन्दस्त्वं भविष्यसि'** [५.१२.१२] इति । हरिवंशे च–**'अहं किलेन्द्रो देवानां त्वं गवामिन्द्रतां गतः । गोविन्द इति लोकास्त्वां स्तोष्यन्ति भुवि शाश्वतम् । ममोपरि यथेन्द्रस्त्वं स्थापितो गोभिरीश्वरः । उपेन्द्र इति कृष्ण त्वां गास्यन्ति दिवि देवताः'** [वि.प.१९.४५–६] इति, **'ततः शक्रस्तु तान् गृह्य घटान् दिव्यपयोधरान् । अभिषेकेण गोविन्दं योजयामास योग-वित् । दृष्ट्वा तमभिषिक्तं तु गावस्ताः सह यूथपैः । स्तनैः प्रस्रवयुक्तैश्च सिषिचुः कृष्णमव्ययम्'** [१९.६१–२] इति च । गोभिर्देवचनैरेनं प्रणम्य स्तुत्वा नत्वा च । गिराम्पतिरयं गोपैरपि प्रणतः । अभिमानेन अभीकमागत्य । 'अतिमानुषः कोऽयम्' इति सञ्जातसंशयैः कैश्चित् । भगवानेवायमिति निश्चयेन सम्यग्गतसंशयैः कैश्चित् ॥ ७० ॥ तदेवाऽह– गोपगणाः बाहुल्येन नारायणोऽयमिति व्यजानन् । **'तस्मान्नन्द कुमारोऽयं नारायणसमो गुणैः'** [भाग.१०.२४.२२] इति गर्गवचनं च नन्दात् निशम्य । लोकात्मकमरविन्दं नयतीत्यरविन्दनेता चायम् ॥ ७१ ॥ अमुष्य बलरामस्य च । सुरेभ्य इन्द्रादिभ्योऽप्यधिकत्वे विषये । विश्वासपूर्वको निश्चयः विनिश्चयः । अथ विनिश्चयादेव अस्य बलरामस्य च कृष्णेन साकं पूजां विदधुः । विनिश्चयं चक्रुः, पूजां च विदधुरिति च ॥ ७२ ॥ कात्यायनी या कृत्यां नियमयति । कृत्येत्याभिचार-क्रियोच्यते । कृत्येत्यभिचारदेवतोच्यते, याऽभिचारक्रियोद्देश्यं पुरुषं निहत्य स्वयमपि नश्यतीति षट्कर्मज्ञा वदन्ति । तथाहि तत्स्वरूपं स्मरन्ति–**'क्रोधाज्ज्वलन्तीं ज्वलनं वमन्तीं सृष्टिं दहन्तीं दितिजं ग्रसन्तीम् । भीमं नदन्तीं प्रणमामि कृत्यां रोरूयमाणां क्षुधयोग्रकालीम्'** इति । आभिचारक्रियायास्तद्देवताया वा मुख्यनियन्त्री तमोमानिनी दुर्गा कात्यायनी-

---

१. **'दृष्ट्वैव राम–'** इति क्वचित् । २. **'चक्रुश्च निश्चयममुष्य'** इति च ।
३. **'कात्यायनीव्रतधराः'** । वे.ती. कोशेऽपि कात्यायनीति पठ्यते । प्रायो लिपिकराणां प्रमादः । **'कात्यायनी'** इत्येव साधुः पाठः ।

तास्वत्र तेन जनिता दशलक्षपुत्रा नारायणाह्वययुता बलिनश्च गोपाः[१] ।
सर्वेऽपि दैवतगणा भगवत्सुतत्वमाप्तुं धरातळ[२]गता हरिभक्तिहेतोः ॥ ७४ ॥

तास्तत्र पूर्ववरदानकृते रमेशो [३]रामा द्विजत्वगमनादपि पूर्वमेव ।
सर्वा निशास्वरमयत् समभीष्टसिद्धिचिन्तामणिर्हि भगवानशुभैरलिप्तः ॥ ७५ ॥

सम्पूर्णचन्द्रकरराजितसद्रजन्यां वृन्दावने कुमुदकुन्दसुगन्धवाते ।
श्रुत्वा मुकुन्दमुखनिस्सृतगीतसारं गोपाङ्गना मुमुहुरत्र ससार यक्षः ॥ ७६ ॥

**हरिभक्तिहेतोः पितेति हरौ स्नेहविशेषार्थम् ॥ ७४ ॥ पूर्ववरदानकृतेः संस्कारतः पूर्वमेव युष्माकं मत्सङ्गमो भवत्विति पूर्वमेव वरस्य दत्तत्वात् । रामात्, द्विजत्वगमनादपि पूर्वमेव अरमयत् ॥ ७५–६ ॥**

---

त्युच्यते । सा चोपासकविवक्षाभेदेन क्वचिद् विष्णुजाया दुर्गा । क्वचिच्छिवजाया च । का निरुक्तिः? कृत्याया इयं कार्त्यायनी । **'कृत्याया नियमने ष्फः'** इति पठनीयम् । कृत्यादेवताया अयनं कृत्यायनम् । आभिचारं कर्म । तस्येयं नियमनी दुर्गा कार्त्यायनीति वा । गोपीभिर्गोपकन्याभिश्चाऽचीर्णं व्रतं विष्णुजायाया दुर्गायाः स्वयंवरपार्वत्यन्तर्गताया व्रतम् । **'कात्यायनी'** इति पाठः प्रामादिकः । अन्ये व्याचक्षते–**'कृत्तिं वस्त इति कार्त्त्यो रुद्रः । स एवायनं यस्याः सा दुर्गा कार्त्यायनी'** इति । एतेन **'कात्यायनाय विद्महे'** इति श्रुतिपाठं पठन्तो वैदिकाः, **'काळी कात्यायनी भवानी च', 'कात्यायनी तु पार्वती', उमा कात्यायनी गौरी'** इत्यादि कोशपाठं पठन्तो नैघुण्टुकाश्च नूनं विभ्रान्ताः । **'कार्त्यायनाय विद्महे'** इत्येव च श्रुतिपाठः । **'कार्त्यायनि महामाये महायोगिन्यधीश्वरि । नन्दगोपसुतं देवि पतिं मे कुरु ते नमः'** [१०.२०.४] इति हि भागवते । गोपानां स्त्रियो गोप्यः । तदेव स्फुटमाह– अन्यैर्धृता उदूढा गोपीरिति । अयुगबाणः पञ्चबाणः ॥ ७३ ॥ नारायणस्येमे नारायणा इत्याह्वययुताः । नरेषु प्रादुर्भूतो वा भगवान् नरायणः । तस्येमे नारायणा इति वा । **'वासुर्नरायणपुनर्वसुविश्वरूपाः'** इति हलायुधः । भगवतः पुत्रत्वमाप्तुम् । आप्य च तत्सान्निध्यमहिम्ना तस्य सर्वोत्तमत्वादिरूपं सुतत्वं शोभनतत्वं विशेषतो ज्ञातुम् । **'मत्संहननतुल्यानां गोपानामर्बुदं महत् । नारायणा इति ख्याताः सर्वे सङ्ग्रामयोधिनः'** [उ.प.७.१९] इति सेनोद्योगे । संहननं शरीरम् । अत्र तु शरीरबलं विवक्ष्यते । यथायोग्यं तुल्यत्वम् ॥ ७४ ॥ पूर्ववरदानकृते पूर्वं दत्तस्य वरस्य सफलत्वाय । वरदानकृतेः वरदानस्य कृतत्वादिति वा । ताः सर्वा रामाः । तासु रमा सन्निहितेति ता रामाः । अशुभैः परनारीभोगजनितैरवद्यैः । असङ्गो ह्ययं निरवद्यः । नहि तस्य किञ्चित् परकीयं नाम । सर्वं हि तस्य स्वम् । अपिच त्रिगुणात्मकत्वेन भौतिकेन शरीरेण भुञ्जानः पातकभाग् भवति । नह्यप्राकृतं कायं पापपुण्ये स्पृशतः । यस्य स्मरणमात्रेण पापलेपाद् विमुच्यते किमु सोऽपि पापैर्लिप्यते ॥ ७५ ॥ राकात्वात् पूर्णचन्द्रः । मेघैरनावृत इति सम्पूर्णः । सती सञ्चारसुखदा रजनी । कुमुदं जलजम् । 'ಕೊಲ್ಹೂ' इति भाषायाम् ।

---

१. **'बलिनो गुणाढ्याः'** इति क्वचित् । २. **'–तलगता-'** ३. **'रामाद् द्वि–'** । वे.ती.पाठोऽपि तथा ।

**रुद्रप्रसादकृतरक्ष उतास्य सख्युर्भृत्यो बली [१]खलतरोऽपिच शङ्खचूडः ।**
**ताः कालयन् भगवतस्तळताडनेन[२] मृत्युं जगाम मणिमस्य जहार कृष्णः ॥ ७७ ॥**

**नाम्नाऽप्यरिष्ट उरुगायविलोमचेष्टो गोष्ठं जगाम वृषभाकृतिरप्यवद्ध्यः ।**
**शम्भोर्वरादनुगतश्च सदैव कंसं गा भीषयन्तममुमाह्वयदाशु कृष्णः ॥ ७८ ॥**

**सोऽप्याससाद हरिमुग्रविषाणकोटिमग्रे निधाय जगृहेऽस्य विषाणमीशः ।**
**भूमौ निपात्य च वृषासुरमुग्रवीर्य्यं यज्ञे यथा पशुममारयदग्र्यशक्तिः ॥ ७९ ॥**

**केशी च[३] कंसविहितस्तुरगस्वरूपो गिर्य्यात्मजावरमवाप्य सदा विमृत्युः ।**
**पापः स केशवमवाप मुखेऽस्य बाहुं प्रावेशयत् स भगवान् ववृधेऽथ[४] देहे ॥ ८० ॥**

**अस्य रुद्रस्य सख्युः कुबेरस्य भृत्यः ॥ ७७–८० ॥**

---

कुन्दं स्थलजम् । 'ಕುಡುಮಲ್ಲಿಗೆ' इति भाषायाम् । गीतसारं श्रेष्ठं गानम् ॥ ७६ ॥ अस्य रुद्रस्य सख्युः कुबेरस्य । महादेवसखो हि कुबेरः । **'उपैतु मां देवसखः'** इति श्रुतिः । शाम्यत्यनेनेति शङ्खो मणिविशेषः । **'शमेः खः'** इति वैयाकरणाः । शं सुखकराणि खानीन्द्रियाण्यनेनेति च । शं च खं ज्ञानं चानेनेति वा । स चूडायामस्येति शङ्खचूडः । ताः गोपङ्गनाः । कालयन् अपहरन् ॥ ७७ ॥ विलोमचेष्टः प्रतिकूलचेष्टः । उरुभिर्ब्रह्मादिभिरपि गीयते । समस्तवेदैरुरुरिति गीयते चेत्युरुगायः । स्वयं चोरु गायति ॥ ७८–९ ॥ कंसविहितः कंसप्रहितः । **'हयादस्मान्महेन्द्रोऽपि बिभेति बलसूदनः'** [वि.प.२४.६३] इति हरिवंशेषु पठ्यते । **'तुरगस्यास्य शक्रोऽपि कृष्ण देवाश्च बिभ्यति'** [ब्र.पु.८२.४३] इति चान्यत्र । तेनेन्द्रादुत्तमया देवतया लब्धवर इत्यायातम् । **'तदिदं दुष्करं कर्म कृतं केशिविघातनम् । त्वय्येव केवलं युक्तं त्रिदिवे त्र्यम्बकस्य वा'** [वि.प.२४.६०] इति च हरिवंशेषु । तेन त्र्यम्बकादवरया देवतया दत्तवर इत्यायातम् । ततश्चार्थापत्तिलब्धमर्थमाह– गिर्यात्मजावरमवाप्य सदा विमृत्युरिति । पञ्चभ्यो देवेभ्योऽसुराः प्रायो वरं वृणते । ब्रह्मणः, शिवात्, पार्वत्याः, स्कन्दविनायकाभ्यां च । त्र्यम्बकेण वध्य इत्यनेन निवृत्तौ चतुर्मुखपञ्चमुखौ । महेन्द्रोऽपि बिभेतीत्यनेन निवृत्तौ षडाननगजाननौ । तेनाऽयातं विमृत्युर्गिरिजावरदानत इति । तदेवं केशिहननादपि तं केशवमाचक्षते । **'यस्मात् त्वया हतः केशी तस्मान्मच्छासनं शृणु । केशवो नाम नाम्ना त्वं ख्यातो लोके भविष्यसि'** [वि.प.२४.६५] इति हरिवंशेषु । **'यस्मात् त्वयैष दुष्टात्मा हतः केशी जनार्दन । तस्मात् केशवनामा त्वं लोके मेयो भविष्यसि'** [ब्र.पु.८२.४४] इति ब्राह्मे । तेन केशी केशवमवापेति स्वयमेव स्वहन्तारं प्रापेति तस्य मौर्ख्यं परिहसतीव । अथ बाहुर्ववृधे ॥ ८० ॥

---

१ 'खरतरो–' २. '–स्तलताडनेन' ३. 'केशी तु कंस–' ४. 'ववृधेऽस्य देहे'

**तत्खादनाय कुमतिः स कृतप्रयासः शीर्ण्णास्यदन्तदशनच्छदरुद्धवायुः ।**
**दीर्ण्णः पपात च मृतो हरिरप्यशेषैर्ब्रह्मेशशक्रदिनकृत्प्रमुखैः स्तुतोऽभूत् ॥ ८१ ॥**

**व्योमश्च[१] नाम मयसूनुरजप्रसादाल्लब्धामितायुरखिलान् विदधे बिले सः ।**
**तं श्रीपतिः पशुपतिः[२] पशुवद् विशस्य[३] निःसारितान् बिलमुखादखिलांश्चकार ॥ ८२ ॥**

**कुर्वत्यनन्यविषयाणि दुरन्तशक्तौ कर्म्माणि गोकुलगतेऽखिललोकनाथे ।**
**कंसाय सर्वमवदत् सुरकार्य्यहेतोर्ब्रह्माङ्गजो मुनिरकारि यदीशपित्रा ॥ ८३ ॥**

**शीर्णास्यदन्तदशनच्छदरुद्धवायुः । शीर्णास्यदन्तदशनच्छदश्चासौ रुद्धवायुश्चेति तथोक्तः । दशनच्छदावोष्ठौ । कण्ठनाळे हस्ताभिवृद्ध्या रुद्धवायुः । दीर्णः हस्तवृद्ध्यैव विदारितदेहः ॥ ८१ ॥ विशस्य हत्वा । शसु हिंसायामिति (धातोः) ॥ ८२ ॥ ईशपित्रा वसुदेवेन ॥ ८३ ॥**

---

दम्यते भक्ष्यतेऽनेनेति दन्तः । दश्यतेऽनेनेति दशनः । दंश दन्श वा दंशने । यद्यपि शीर्णास्यदन्ततच्छद इति पर्याप्तम् । अथापि रदनस्य द्वयी हि गतिः । खादनं च दंशनं च । अयं च केशी न दंशने नापि खादने प्रभुरभूदिति सूचयितुं दशनच्छद इति विविच्याऽह । **'केशिनो वदने तेन विशता कृष्णबाहुना । शातिता दशनाः पेतुः सिताभ्रावयवा इव'** [५.१६.१०] इति वैष्णवे । दीर्णः । दॄ विदारणे । **'द्विपादे पृष्ठपुच्छार्धे श्रवणैकाक्षिनासिके । केशिनस्ते द्विधाभूते शकले द्वे विरेजतुः'** [१५] इति च । **'द्विपादपृष्ठपुच्छार्धे श्रवणैकाक्षिनासिके । केशिनस्तद् द्विधाभूते द्वे चार्धे रेजतुः क्षितौ'** [वि.प.२४.४९] इति हरिवंशेषु ॥ ८१ ॥ विशेषेण आराधिता उमा येन स व्योमः । **'मानं ज्ञानं लयश्चैव'** इति स्मरणात् माङ् धातोर्नाशिनमप्यर्थः । तेन विशिष्टेन ओजसा माति नाशयति शत्रूनिति वा । व्याम इति पाठे व्याविध्यव्याविध्य माति नाशयतीति व्यामः । मयसूनुः । दैत्यतक्ष्णो मयस्यैका पुत्री, त्रयश्च पुत्राः पठ्यन्ते । पुत्री मण्डोदरी । मायावी दुन्दुभिर्व्योम इति पुत्राः । मायावी दुन्दुभिश्च रामायणे पठितौ, वालिना हतौ । व्योमः कृष्णकथायां प्रस्तुतः कृष्णेन हतः । ननु रामायणकालीनः कथमिदानीमागतः? आह अजप्रसादाल्लब्धामितायुरिति । ये कृष्णेन सह गाः पातुमागतास्तानखिलान् गोपबालान् । श्रीपतिः सम्प्रति पशुपतिः । भगवन्नियतिपाशबद्धाः पशवो ब्रह्मादयो जीवास्तेषामयं पतिरिति वा । क्षराक्षरपतिरित्येतत् । पशुपतिः शिवः किरातरूपी पशुवद् वराहमिव च ॥ ८२ ॥ अनन्यविषयाणि । षिञ् बन्धने । न विद्यतेऽन्यः विषयः कर्तृत्वेन सम्बद्धः येषां तान्यनन्यविषयाणि । विषयः कर्तृत्वेन

---

१. प्राचीनकोशे तु **'व्यामश्च'** इति पठ्यते । भागवते–**'मयपुत्रो महामायो व्योमो गोपालवेषधृक्'** [१०.३५.२९] इति सार्वत्रिकः पाठः । यद्यपि वैयाकरणैरदन्तो व्योमशब्दो न पठ्यते । ओमशब्दस्तु वेदेषु पठ्यते–**'ओमासश्चर्षणीधृतः'** इति । तथाचानिर्णय एव शरणम् । महान्तः प्रमाणम् ।

२. **'–पतिः सुरपतिः'**

३. **'विनाश्य निःसा–'**

श्रुत्वाऽतिकोपरभसोच्चलितः स कंसो बध्वा सभार्य्यमथ शूरजमुग्रकर्म्मा ।
अक्रूरमाश्वदिशदानयनाय विष्णो रामान्वितस्य सह गोपगणै रथेन ॥ ८४ ॥

संसेवनाय स हरेरभवत् पुरैव नाम्ना किशोर इति यः सुरगायनोऽभूत्[१] ।
स्वायम्भुवस्य च मनोः परमांशयुक्त आवेशयुक् कमलजस्य बभूव विद्वान्[२] ॥ ८५ ॥

सोऽक्रूर इत्यभवदुत्तमपूज्यकर्म्मा वृष्णिष्वथाऽस स हि भोजपतेश्च मन्त्री ।
आदिष्ट एव जगदीश्वरदृष्टिहेतोरानन्दपूर्ण्णसुमना अभवत् कृतार्त्थः ॥ ८६ ॥

आरुँह्य तद्रथवरं भगवत्पदाब्जमब्जोद्भवप्रणतमन्तरमन्तरेण ।
सञ्चिन्तयन् पथि जगाम स गोष्ठमाराद् दृष्ट्वा पदाङ्कितभुवं मुमुदे परस्य ॥ ८७ ॥

सोऽवेष्टतात्र[१] जगदीशितुरङ्गसङ्गलब्धोच्चयेन निखिलाघविदारणेषु ।
पांसुष्वजेशपुरुहूतमुखोच्चविद्युद्भ्राजत्किरीटमणिलोचनगोचरेषु ॥ ८८ ॥

**कोपरभसोच्चलितः कोपसम्भ्रमेण (उच्चलितः) ॥ ८४–६ ॥ तद्रथवरं कृष्णानयनाय स(ज्जं) रथवरम् । अन्तरं व्यवधानमन्तरेण विना सञ्चिन्तयन् । निरन्तरं स्मरन्निति भावः ॥ ८७ ॥ लब्धोच्चयेन लब्धातिशयेन ॥ ८८ ॥**

---

ज्ञानविषय इति वा । अन्येषां विषया ज्ञानविषया अपि न भवन्तीति वा कर्माण्यनन्यविषयापि । अन्यैः कर्तुमशक्यानीत्यर्थः । अन्यैर्मनसा कल्पयितुमप्यशक्यानीत्यर्थः । अन्यैर्विसीयन्त इत्यन्यविषयाणि । अन्यगतानीत्येतत् । तादृशानि न भवन्तीत्यनन्यविषयाणीति वा । दुरधिगमोऽन्तो यस्याः सा दुरन्ता । अनन्तेत्यर्थः । ब्रह्माङ्कजः नारदः । स्वस्य जगतां चेशस्य कृष्णस्य पित्रा वसुदेवेन । जगदीशानां पित्रा कृष्णेन च ॥ ८३ ॥ कोपस्य रभसः वेगः । तेन उच्चलित उद्विग्नः । आश्वानयनायादिशत् । अत एव विलम्बो मा भूदिति रथेनाऽनयनायादिशत् । सर्वगतस्याऽनयनायादिशदिति परिहसतीव विष्णोरिति । विशतीति च विष्णुः । स एव कंसस्य हृदि निविश्य तस्यैवं बुद्धिं ददाविति ॥ ८४ ॥ भगवदवतारे दुष्टनिग्रहकार्येऽङ्गतया सेवनं संसेवनम् । अतिशयित आवेशः परमांशः ॥८५॥ उत्तमैरपि पूज्यं कर्मास्येति । भगवदेकतानत्वादुत्तममत एव पूज्यं च वा कर्मास्य । सुमनः सात्विकं भावशुद्धं च मनः ॥ ८६ ॥ अन्तरम्, सर्वेषामन्तारन्तारम् । **'अन्तः स्थित्वा रमणकृदन्तरः समुदाहृतः'** इति हि भगवत्पादवचनम् । अन्तरमात्मीयमिति वा । अन्तरेण मनसा सञ्चिन्तयन् । अन्तरमन्तरेण निरन्तरमिति च । नैरन्तर्यमेव समित्युपसर्गेण चावधारयाञ्चक्रे । सन्तोषभरेण चिन्तयन् । आराद् दूरस्थं गोष्ठं जगाम । गत्वा चाऽरात् समीपे परस्य पदाङ्कितां भुवं दृष्ट्वा मुमुदे ॥ ८७ ॥ उच्चयेन

---

१. **'सुरगायकोऽभूत्'** २. **'–जस्य तथैव विद्वान्'** १. **'सोऽचेष्टतात्र जगदीशितुरङ्गसङ्गाल्लब्धोच्चयेषु निखि–'**

**सोऽपश्यताथ जगदेकगुरुं समेतमग्रोद्भवेन भुवि गा अपि दोहयन्तम् ।**
**आनन्दसान्द्रतनुमक्षयमेनमीक्ष्य हृष्टः पपात पदयोः पुरुषोत्तमस्य ॥ ८९ ॥**

**उत्थाप्य तं यदुपतिः सबलो गृहं स्वं नीत्वोपचारमखिलं प्रविधाय तस्मिन् ।**
**नित्योदिताक्षयचिदप्यखिलं च तस्माच्छुश्राव लोकचरितानुविडम्बनेन ॥ ९० ॥**

**श्रुत्वा स कंसहृदि संस्थितमब्जनाभः प्रातस्तु गोपसहितो रथमारुरोह ।**
**रामश्वफल्कतनयाभियुतो जगाम यानेन तेन यमुनातटमव्ययात्मा ॥ ९१ ॥**

**संस्थाप्य तौ रथवरे जगताऽभिवन्द्यौ श्वाफल्किराश्ववततार यमस्वसारम् ।**
**स्नात्वा स तत्र विधिनैव कृताघमर्षः शेषासनं परमपूरुषमत्र चैक्षत् ॥ ९२ ॥**

**भुवि अवस्थितम् ॥ ८९–९१ ॥ अत्र जले शेषासनं परमपूरुषं चैक्षत् ॥ ९२ ॥**

---

उत्कर्षेण हेतुना निखिलाघविदारणेषु । उच्चेषु विद्युद्वत् भ्राजत्सु किरीटमणिषु लग्नतया लोचनगोचरेषु ॥ ८८ ॥ अग्रोद्भवेन अग्रजेन । भुवि अवतीर्य । व्रजभुवि अपश्यत ॥ ८९ ॥ तस्मिन् विषये । प्रविधाय राजदूतयोग्यं विधाय । लोकचरितानुगुणेन विडम्बनेन ॥ ९० ॥ संस्थितं गूढं गाढं च स्थितम् । प्रातस्तु प्रातरेव । श्वफल्कतनयोऽक्रूरः । अद्य कृतं श्व एव सद्यः फलत्यस्मिन्निति श्वःफलकं श्वफल्कमाहुः । श्वा वृद्धः विशालः फालोऽस्येति श्वफल्क इति वैयाकरणाः । श्वो ज्ञानानन्दमयो भगवान् फलत्यस्य मनसीति वा । भगवति मनोयोगं यच्छतीति यमुना । यमेरुनन् । यमादूना च यमुना । अभित उभयोः पार्श्वयोर्युतः । मध्ये कृष्ण आसीदित्यर्थः ॥ ९१ ॥

'भवन्तावत्रैव तिष्ठताम्' इति प्रीत्यनुरोधाभ्यां स्थापनं संस्थापनम् । विधिनैवेति । आह च तं विधिं भगवत्पाद एवान्यत्र– **'उद्धृतेति मृदाऽऽलिप्य द्विषडष्टषडक्षरैः । त्रिर्निमज्याऽप्यसूक्तेन प्रोक्षयित्वा पुनस्तथा । मृदाऽऽलिप्य निमज्य त्रिस्त्रिर्जपेदघमर्षणम्'** [स.स्मृ.३] इति । अयमर्थः–**'उद्धृताऽसि वराहेण'** इत्यादिना मन्त्रेण देहं मृदा आ समन्ताल्लिप्त्वा, वासुदेवद्वादशाक्षरेण, नारायणाष्टाक्षरेण, कृष्णषडक्षरेण च मन्त्रेण त्रिर्निमज्जेत् । निमज्य च, **'आपो हि ष्ठा मयोभुवः'** इत्यादेराप्यसूक्तस्य नवभिः पादैर्नवकृत्वः स्वदेहं प्रोक्ष्य, यथा पूर्वं तथा उद्धृतेति मन्त्रेण पुनर्मृदा कायमालिप्य, पुनस्तथा त्रिभिर्महामन्त्रैः पुनस्त्रिर्निमज्ज्य मृत्स्नया मन्त्रेण च कृतस्नानः बहिरन्तः पूतो जलान्तर्निमग्न एवाघमर्षणसूक्तं त्रिवारमावर्तये-दिति । तथाहि सूक्तम् [ऋ.सं.१०.१९०] –

**ऋतं च सत्यं चाभीद्धात्तपसोऽध्यजायत । ततो रात्र्यजायत ततः समुद्रो अर्णवः ॥ १ ॥**
**समुद्रादर्णवादधि संवत्सरो अजायत । अहोरात्राणि विदधद्विश्वस्य मिषतो वशी ॥ २ ॥**
**सूर्याचन्द्रमसौ धाता यथापूर्वमकल्पयत् । दिवं च पृथिवीं चान्तरिक्षमथो स्वः ॥ ३ ॥**

**नित्यं हि शेषमभिपश्यति सिद्धमन्त्रो दानेश्वरः स तु तदा ददृशे हरिं च ।**
**अग्रे हि बालतनुमीक्ष्य स कृष्णमत्र[१] किं नास्ति यान इति यानमुखो बभूव ॥ ९३ ॥**

**सिद्धमन्त्रः सिद्धाघमर्षणमन्त्रः । तदा अग्रे स्वपुरस्तात् बालतनुं हरिं च ददर्श ॥ ९३–८ ॥**

---

तैत्तिरीयारण्यके नारायणोपनिषदि चैते मन्त्राः पठ्यन्ते [तै.आ.१०–१] । जले निमग्नस्य प्राणायामार्थमिदं सूक्तम् । मधुच्छन्दसः पुत्रस्याघमर्षणस्याऽर्षम् । देवताऽपि भक्ताघमर्षणादघमर्षणनामा नारायणः । पठतामघं मर्षयतीति सूक्तमप्यघमर्षणम् । छन्दोऽनुष्टुप् । प्रथममन्त्रे **'ततो रात्रिरजायत'** इति याजुषः पाठः । तृतीयमन्त्रे च **'अन्तरिक्षमथो सुवः'** इति । तदा तु स्वरसा च्छन्दोगतिः । बह्वृचानां तु पाठे क्षैप्रविश्लेषेण छन्दःपूरणम् । प्रायः सर्वेऽपि स्नानाङ्गमघमर्षणं याजुषमेव पठन्ति, ऐकस्वर्येण च । अयं मन्त्रार्थः– अभीद्धात्, अभितः बहिरन्तश्च उपर्यधश्च दीप्यमानात्, तपसः ज्ञानरूपान्नारायणात् । **'यस्य ज्ञानमयं तपः', 'तपो ब्रह्म परामृतम्'** इत्यादेः । तस्य च तपसोऽधि । सृष्टिपर्यालोचनाया अनन्तरम् । **'स तपोऽतप्यत'** इत्यादेः । इदमजायत । किमिदम्? ऋतं च सत्यं च । ऋतं भगवता **'सदिदं सृजानि'** इति सत्त्वेनावगतम् । अत एव सत्यं यथार्थं च । **'याथातथ्यतोऽर्थान् व्यदधात्', 'यच्चिकेत सत्यमित् तन्न मोघम्', 'यः सत्यरूपं जगदेतदीदृक् सृष्ट्वा त्वभूत् सत्यकर्मा महात्मा'** इत्यादेः । नहि कश्चिदुन्मत्तादृते वक्तुमर्हति भगवता सत्यत्वेनावगतमप्यसत्यं किं न स्यादिति । अथच यथार्थज्ञानरूपत्वादृतं भगवान् । सत्यजगत्स्रष्टृत्वात् स एव सत्यम् । **'ऋतं यथार्थविज्ञानं सत्यं तत्पूर्विका कृतिः'** इत्यादिस्मरणात् । जगतः सृष्टेरधि आदौ स्वस्मात् स्वयमेव वासुदेवाद्यात्मना सर्वाधिकः सन्नजायत । ततः रात्रिमानिनी रमाऽपि मायाद्यात्मना तत एव नारायणादजायत । ततस्तदभिमता रात्रिरजायत । तस्या लक्ष्म्याः सकाशात् पुनरयं समुद्रेकात् समुद्रो नारायणः विष्णुनामा अजायत प्रादुर्बभूव । अर्णाः सर्वे वर्णा यमेव वर्णयितुं वरयन्ति सोऽर्णवः । अथ समुद्र इत्यन्तरिक्षमुच्यते वैदिकैः । तद् यथा–**'यमन्तः समुद्रे कवयोऽवयन्ति'** इति । अन्तः समुद्रे हृदयाकाश इत्यर्थः । ततः परमात्मनः समुद्रोऽजायत । **'आत्मन आकाशः सम्भूतः'** इति श्रवणात् । ततः वाय्वग्निद्वारा अर्णवः जलराशिरजायत । ततः समुद्रादर्णवाद् विष्णोः संवत्सरमानी चतुर्मुखः सर्वजीवाधिकोऽजायत । तथा संवत्सराद्याः कालावयवाश्च जाताः । पूर्वं रात्रिरजायतेत्यगादि । अहःसापेक्षा च रात्रिः । नह्यह्नो भावे रात्रिर्भवति । अभावे च । अहन्युपरते हि रात्रिर्भवति । नह्यविद्यमानमुपरमति । तेन रात्रिरित्यहोरात्र उच्यते । तत इदमुच्यते–अहोरात्राणां समाहारः संवत्सरोऽपि ततोऽजायतेति । **'रात्री'** इति रात्रिशब्दात् ङीष् । **'रात्रेश्चाजसौ'** [अ.सू.४.१.३१] इति हि पाणिनिः । उक्तमेव विवृत्याऽह–संवत्सरावयवानहोरात्रान् विदधत् । निमेषोन्मेषवतः जीवजातस्य वशयिता । अहोरात्राणि कथं व्यदधात्? आह– सूर्याचन्द्रमसौ । सर्वधारणात् पोषणाच्च धाता नारायणः । तदाविष्टः धाता चतुर्मुखश्च । कथमकल्पयत्? यथा पूर्वकल्पेषु तथास्मिन्नपि कल्पे । दिवं च तत्रत्यान् देवांश्च, पृथिवीं च तत्रत्यान् मनुष्यान् प्राणिनश्च, अन्तरिक्षं च तद्गान् प्राणिनश्चाकल्पयत् । अथो अन्यानप्यवान्तरलोकान् । सुवरिति ज्ञानानन्दमयो भगवान् । **'स्वित्यानन्दः समुद्दिष्टो वरिति ज्ञानमुच्यते'** इति स्मरणात् ॥ ॐ ॥

---

१. **'–तनुमत्र समीक्ष्य कृष्णः किम्'**

तत्रापि कृष्णमभिवीक्ष्य पुनर्निमज्ज्य शेषोरुभोगशयनं परमं ददर्श ।
ब्रह्मेशशक्रमुखदेवमुनीन्द्रवृन्दसंवन्दिताङ्घ्रियुगमिन्दिरया समेतम् ॥ ९४ ॥

स्तुत्वा वरस्तुतिभिरव्ययमब्जनाभं सोऽन्तर्हिते भगवति स्वकमारुरोह ।
यानं च तेन सहितो भगवान् जगाम सायं पुरीं सहबलो मधुरामनन्तः ॥ ९५ ॥

अग्रेऽथ दानपतिमक्षयपौरुषोऽसावीशो विसृज्य सबलः सहितो वयस्यैः ।
द्रष्टुं पुरीमभिजगाम नरेन्द्रमार्ग्गे पौरैः कुतूहलयुतैरभिपूज्यमानः ॥ ९६ ॥

आसाद्य कुञ्जरगतं रजकं ययाचे वस्त्राणि कंसदयितं गिरिशावरेण[1] ।
मृत्यूज्झितं सपदि तेन दुरुक्तिविद्धः पापं कराग्रमृदितं व्यनयद् यमाय ॥ ९७ ॥

हत्वा तमक्षतबलो भगवान् प्रगृह्य वस्त्राणि चाऽत्मसमितानि बलस्य चाऽदात् ।
दत्वाऽपराणि सखिगोपजनस्य शिष्टान्यास्तीर्य्य तत्र च पदं प्रणिधाय चागात्॥ ९८ ॥

ग्राह्यापहेयरहितैकचिदात्मसान्द्रस्वानन्दपूर्णवपुरप्ययशोषहीनः ।
लोकान् विडम्ब्य नरवत्समलक्तकाद्यैर्वप्त्रा विभूषित इवाभवदप्रमेयः ॥ ९९ ॥

**समलक्तकाद्यैः समीचीनालक्तकाद्यैः । वप्त्रा नापितेन ॥ ९९ ॥**

---

परमपूरुषं कृष्णमत्र जलान्तश्च ऐक्षत ॥ ९२ ॥ अभिपश्यति ध्याने स्वाभिमुखं पश्यति । सिद्धशेषमन्त्रत्वात् । वदान्यतमोऽक्रूरः दानेश्वरो दानपतिरिति ख्यात आसीत् । अग्रे पुरः । अत्र जले ॥ ९३ ॥ संवन्दितः भक्त्या नतश्च स्तुतश्च ॥ ९४ ॥ मन्त्रमयत्वाद् वराभिः स्तुतिभिः । स्वकम् । कंसदत्तमिति कुत्सितम् । भगवानत्र गत इति सुखदं च ॥ ९५ ॥ अभितः अभिमानपूर्वं पूज्यमानः ॥ ९६ ॥ गिरिरस्त्यस्याः पितृत्वेनेति गिरिशा । लोमादिभ्यः शमुशन्ति हि वैयाकरणाः । गिरिशस्य स्त्री वा गिरिशा । तस्या वरेण, गिरिशादवरेण मृत्यूज्झितम् । विहृत्य नयनं विनयनम् ॥ ९७ ॥ प्रकटं सर्वजनसमक्षं गृहीत्वा । प्रकृष्टानामेव वा ग्रहणं प्रग्रहणम् । आत्मनः समितानि अनुरूपाणि । बलसमितानि बलस्य च । गोपजनद्वारा आस्तीर्य च । तत्र पदं प्रणिधाय च ॥ ९८ ॥ उपायत्वेन ग्राह्यमपायत्वेन हेयं च न किमपि तस्य । एकः सर्वप्रधानः । केवलचिदात्मा च । केवलमित्यचिदात्मत्वमेव निराकृतमित्याह–सान्द्रेति । दुःखासम्भिन्न आनन्दः

---

१. **‘गिरिजावरेण’**

माला अवाप्य[1] च सुदामत आत्मतन्त्रस्तावक्षयोऽनुजगृहे निजपार्षदौ हि ।
पूर्वं विकुण्ठसदनाद्धरिसेवनाय प्राप्तौ भुवं मृजनपुष्पकरौ पुराऽपि ॥ १०० ॥

सर्वेष्टपुष्टिमिह तत्र सरूपतां च कृष्णस्तयोर्वरमदादथ राजमार्ग्गे ।
गच्छन् ददर्श वनितां नरदेवयोग्यमादाय गन्धमधिकं कुटिलां व्रजन्तीम् ॥ १०१ ॥

तेनार्त्थिता सपदि गन्धमदात् त्रिवक्रा तेनाग्रजेन सहितो भगवान् लिलिम्पे ।
तां चाऽश्वृजुत्वमनयत् स तयाऽर्त्थितोऽलमायामि कालत इति प्रहसन्नमुञ्चत् ॥ १०२ ॥

पूर्णेन्दुवृन्दनिवहाधिककान्तशान्त[2]सूर्य्यामितोरुपरमद्युतिसौख्यदेहः ।
पीताम्बरः कनकभासुरगन्धमाल्यः शृङ्गारवारिधिरगण्यगुणार्ण्णवोऽगात् ॥ १०३ ॥

**सुदामतः सुदामनाम्नो मालाकारात् ॥ १००–३ ॥**

---

स्वानन्दः । स्वरूपभूतश्च । स्वानन्दपूर्णं वपुरस्य । वपुरेव च सः । वपुषा निमित्तेन चाप्ययशोषहीनः । अप्ययो नाशः । शोषो ह्रासः । राजयोग्यत्वात् सम्यक् संस्कृतैरलक्तकाद्यैः । नरवद् विडम्ब्य नरमिवाऽत्मानं प्रदर्श्य । अज्ञलोकानुद्दिश्य नरवत्सं मनुष्यपोतं विडम्ब्येति वा । विडम्ब्य विभूषित इति । विभूष्य विडम्बयामासेति भावः । तद् यथा–मुखं व्यादाय स्वपिति । वप्ता क्षुरिकः । लोकदृष्ट्या विभूषित इव । लोकाः किमेनं जानीयुरप्रमेयम् ॥ ९९ ॥ यस्मात् निजपार्षदौ । कृष्णावतारात् पूर्वमेव भुवं प्राप्तौ । पुरा मूलरूपेऽपि गृहमार्जनकरः । पुष्पमालाकरश्च ॥ १०० ॥ तत्र मोक्षे सारूप्यं च । नरदेवयोग्यत्वादेवाधिकं दुर्गतजनदुर्लभम् । भुग्नपृष्ठतया त्रिवक्रतया चाधिकं कुटिलाम् ॥ १०१ ॥ तेन कृष्णेनार्थिता । तेन गन्धेन लिलिम्पे । लिप उपदेहे । उपदाहे इत्यन्ये । दाहशमनाय देहे सुगन्धद्रव्यस्योपलेपनमित्येतत् । ननु तर्हि कथं लिलिम्पे? अवधत्स्व । लिलिपे इत्येव मौलं रूपम् । अतिशयार्थे बिन्दुः । तेनातितमां लिलिप इति वक्तव्ये अल्पेन शब्देन लिलिम्प इत्याह । वस्तुतस्तु लिपि लेपने इति धात्वन्तरमेव पठनीयम् । वैयाकरणैर्धातुपारायणिकैर्विस्मृतोऽयं धातुराचार्यैः स्मारित इति सुन्दरम् । तया **'गृहमागत्य मत्सेवां मां च स्वीकुरु'** इत्यर्थितः । तद्भावं विज्ञाय प्रहसन् । प्रकटम्, परिहासगर्भं प्रकृष्टं च हसनं प्रहसनम् । तस्या मौग्ध्यं दृष्ट्वाऽनुकम्पागर्भं च हसनम् ॥ १०२ ॥ पूर्णेन्दूनां यानि वृन्दानि तेषां निवह एकीकृतो राशिः । ततोऽप्यधिककान्तः शान्तमूर्तिः सताम् । अमितसूर्या इव उरुपरमद्युतिरसताम् । तापकत्वादुरुः । दाहकत्वात् परमा । **'छायातपौ ब्रह्मविदो वदन्ति'** इति हि श्रूयते । असङ्कचत्वज्ञापनायैव 'वृन्दनिवहे'ति पुनरुक्तवदाभासयामास । अथच पूर्णेन्दुवृन्दानि यां कान्तिं नितरां वहन्ति ततोऽप्यधिककान्तिरिति च । नात्र पुनरुक्तिशङ्काऽपि । सूर्यामितेति विशेषणस्य परनिपातः । अमितैः

---

१. **'मालामवाप्य'** २. **'–धिककान्तिकान्त–'**

प्राप्याथ चाऽयुधगृहं धनुरीशदत्तं कृष्णः प्रसँह्य जगृहे सकलैरभेद्यम् ।
कांसं स नित्यपरिपूर्णसमस्तशक्तिरारोप्य चैनमनुकृष्य[1] बभञ्ज मद्ध्ये ॥ १०४ ॥

तस्मिन् सुरासुरगणैरखिलैरभेद्ये भग्ने बभूव जगदण्डविभेदभीमः ।
शब्दः स येन निपपात भुवि प्रभग्नसारोऽसुरो धृतियुतोऽपि तदैव कंसः ॥ १०५ ॥

आदिष्टमप्युरु बलं भगवान् स तेन सर्वं निहत्य सबलः प्रययौ पुनश्च ।
नन्दादिगोपसमितिं हरिरत्र रात्रौ भुक्त्वा पयोऽन्वितशुभान्नमुवास कामम् ॥ १०६ ॥

कंसोऽप्यतीव भयकम्पितहृत्सरोजः प्रातर्नरेन्द्रगणमद्ध्यगतोऽधिकोच्चम् ।
मञ्चं विवेश सह जानपदैश्च पौरैर्नानाऽनुमञ्चकगतैर्युवतीसमेतैः ॥ १०७ ॥

संस्थाप्य नागमुरुरङ्गमुखे कुवल्यापीडं गिरीन्द्रसदृशं करिसादियुक्तम् ।
चाणूरमुष्टिकमुखानपि मल्लवीरान् रङ्गे निधाय हरिसंयमनं किलैच्छत् ॥ १०८ ॥

**कांसं कंसस्य विद्यमानम् ॥ १०४ ॥ प्रभग्नसारः प्रभग्नबलः ॥ १०५ ॥ काममुवासेत्यत्र निर्भयत्वं सूचितम् ॥ १०६–७ ॥ हरिसंयमनं हरिनिग्रहम् । किलेति अ(सम्भवमैच्छदिति) सूचितम् ॥ १०८ ॥**

---

सूर्यैरप्यमिता द्युतिरिति वा ॥ १०३ ॥ कंसायेशदत्तं अत एव कांसं धनुः । ज्यामारोप्य, आरोपमन्वेव, अविलम्बेन, आकृष्य । धनुःशब्दस्योभयलिङ्गत्वं स्फोरयन् एनं धनुषमित्याह । धनुरित्युदन्तोऽपि पुंसि पठ्यते । एनं च बभञ्ज । चकारेण पूर्वं रामावतारे सकृदीशदत्तस्य धनुषो भञ्जनं स्मारयति ॥ १०४ ॥ रुद्रादवरैः सुरगणैः । येन शब्देन स कंसः ॥ १०५ ॥ स भगवान् यः कांसं धनुर्बभञ्ज । तेन कंसेनाऽदिष्टम् । उर्वपि महदपि, अन्यैर्निहन्तुमशक्यमपि बलं सैन्यं निहत्य । न केवलं धनुर्भङ्क्त्वा, उरु बलमपि निहत्येति च । कंसमबलं विधायायं सबलः प्रहृष्टो ययौ । शुभान्नमित्यनेन **'शुभं पिबत्यसौ नित्यं नाशुभं स हरिः पिबेत्'** इति वचनं स्मारयति । पयोन्वितमन्नम्, पयसा पक्वमन्नम् । पायसमित्येतत् । एतेन नक्तं पयोऽन्नभेजनमेव युक्तम्, न दध्यन्नभोजनमिति च बोधयामास । कामं भुक्त्वा काममुवास ॥ १०६ ॥ सरोजं यथा वात्यया कम्पते तथेति प्रत्याययितुमाह–भयकम्पितहृत्सरोज इति । जानपदैः देशीयैः । पौरैर्नागरिकैः । तत्तद्योग्यतानुगुणेषु मञ्चकेषु । राजमञ्चादल्पकेषु मञ्चेषु ॥ १०७ ॥ कुवलयमेव कुवल्यम् । यथा प्रतनं प्रत्नम् । नूतनं नूत्नम् । जले क्रीडन् कुवलयवृन्दमाच्छिद्य पीडयति । अथच कुवलयवल्लीमापीडयन् कुवल्ल्यापीड एव

---

१. **'चैतदनुकृष्य'**

[१]अक्षोहिणीगणितमस्य बलं च विंशदासीदसँह्यमुरुवीर्य्यमनन्यवद्धयम् ।
शम्भोर्वरादपि च तस्य सुनीथनामा यः पूर्वमास वृक इत्यसुरोऽनुजोऽभूत् ॥ १०९ ॥

सप्तानुजा अपि हि तस्य पुरातना ये सर्वेऽपि कंसपृतनासहिताः स्म रङ्गे ।
तस्थुः सराममभियान्तमुदीक्ष्य कृष्णमात्तायुधा युधि विजेतुमजं सुपापाः ॥ ११० ॥

कृष्णोऽपि सूर[२] उदिते सबलो वयस्यैः सार्द्धं जगाम वररङ्गमुखं सुरेशैः ।
संस्तूयमान उरुविक्रम आसुराणां निर्म्मूलनाय सकळाचलितोरुशक्तिः[३] ॥ १११ ॥

**अक्षोहिणीगणितं विंशद् बलम् । विंशदक्षोहिणीबलमित्यर्थः ॥ १०९–१० ॥ सकलाचरितोरुशक्तिः । सकलाचरणे उरुशक्तिर्यस्य स तथोक्तः ॥ १११ ॥**

---

कुवल्यापीडः । **'लोपः समाने'** इत्येकलकारलोपः । स्वरूपतश्चाऽसुरत्वाद् भूवलयमेव पीडयतीति कुवलयापीड एव कुवल्यापीडः । अथच भूमण्डलं कुत्सितां वल्लीमिव पीडयन् कुवल्ल्यापीडो वा । **'कुवली क्षुद्रबदरी'** [स.कं.२.३.९६] इति दण्डनाथः । कुवलीं भक्षार्थमाक्रम्य पीडयति वा । अपिच कुत्सिताभिर्वलिभिः शुण्डागताभिर्वक्ररेखाभिः त्रासयन् जनानापीडयतीति कुवल्यापीडः । करिणः सादयति साधूकरोतीति करिसादी आधोरणः । **'रिष्टो नाम दितेः पुत्रो वरिष्ठो दानवेषु यः । स कुञ्जरत्वमापन्नो दैत्यः कंसस्य वाहनः'** [ह.वं.प.५४.७३] इति हरिवंशे । **'दितिपुत्रस्तथा रिष्टो गजः कुवलयाभिधः'** [दे.भा.४.२२.४६] इति चान्यत्र ॥ १०८ ॥ अक्षोहिण्या गणितं सदस्य बलं विंशतिसङ्ख्याकमासीत् । तद् यथा शतगणितं द्वयमिति द्विशती भवति । तस्य कंसस्य 'तव सैन्यमप्यवध्यमस्तु' इति शम्भुदत्ताद् वरादन्येन शम्भोरवरेणावध्यम् । अपि च यः पूर्वं वृक इत्यसुर आस स इदानीं तस्य कंसस्य सुनीथनामाऽनुजोऽभूत् । शोभना नीतिरस्येति सुनीथः । नयतेः क्थन् । यद्यपि पुराणेषु सम्प्रति नायं कंसानुजः पठ्यते । तत्स्थाने सुनामा पठ्यते । तथाहि भागवते–**'कंसः सुनामा न्यग्रोधः कङ्कः शङ्कुः सुभूस्ततः । राष्ट्रपालोऽब्दसृष्टिश्च तुष्टिमानौग्रसेनयः'** [९.२१.२५] इति । पुराणान्तरेष्वप्येवम् । **'कंसः सुनीथो न्यग्रोधः–'** इत्यादेः स्थाने पाश्चात्यः पाठव्यत्यासो वा स्यात् । नामैकदेशग्रहणं वा स्यात् सुनीथनामा सुनामेति ॥ १०९ ॥ तस्य सुनीथस्य सप्तानुजा न्यग्रोधादयः । तस्य कंसस्य वा सुनीथादन्ये सप्तानुजाः । सर्वेऽपि पुरातनजन्मन्यप्यनुजाः । सुपापास्तमोगाः ॥ ११० ॥ सूर्ये उदिते सति । वृष्टिं सूत इति सूरः । षूङो रक् । कंसः सबलः प्रत्यैक्षत । कृष्णोऽपि सबलो जगामेति श्लेषेण परिहसति । तस्य विंशत्यक्षोहिणीमितं बलं एकस्यास्य बलस्य नालमिति । सकळमाचलितं आकम्पितं यया, तादृशी उरुशक्तिर्यस्य । अवान्तरभागः कला । कळन्ति माद्यन्त्यनयेति कळा कान्तिः । कळ मदे । कळया सहितं सकळं द्योतमानमग्न्यादिकम् । **'भयादस्याग्निस्तपति'** इत्यादेः ॥ १११ ॥

---

१. **अक्षौहिणी–'** २. **'सूर्य उदिते'** ३. **'सकलाचरितोरुशक्तिः'** । वे.ती. पाठोऽपि तथा ।

**आयन् जगद्गुरुतमो बलिनं गजेन्द्रं रुद्रप्रसादपरिरक्षितमाश्वपश्यत् ।**
**दुष्टोरुरङ्गमुखसंस्थितमीक्ष्य चैभ्यं पापापयाहि नचिरादिति वाचमूदे[१] ॥ ११२ ॥**

**क्षिप्तः स ईश्वरतमेन गिरीशलब्धाद् दृप्तो वराज्जगति सर्वजनैरवद्ध्यः ।**
**नागं त्ववद्ध्यमभियापयते ततोऽग्रे पापो दुरन्तमहिमं प्रति वासुदेवम् ॥ ११३ ॥**

**विक्रीड्य तेन करिणा भगवान् स किञ्चिद्धस्ते प्रगृह्य विनिकृष्य निपात्य भूमौ ।**
**कुम्भे पदं प्रतिनिधाय विषाणयुग्ममुत्कृष्य हस्तिपमहन् निपपात सोऽपि ॥ ११४ ॥**

**नागं ससादिनमवद्ध्यमसौ निहत्य स्कन्धे विषाणमवसज्ज्य[२] सहाग्रजेन ।**
**नागेन्द्रसान्द्रमदबिन्दुभिरञ्चिताङ्गः पूर्णात्मशक्तिरमलः प्रविवेश रङ्गम् ॥ ११५ ॥**

**विष्टे जगद्गुरुतमे बलवीर्य्यमूर्त्तौ रङ्गं मुमोद च शुशोष[३] जनोऽखिलोऽत्र ।**
**कञ्जं तथाऽपि कुमुदं च यथैव सूर्य्य उद्यत्यजेऽनुभविनो विपरीतकाश्च ॥ ११६ ॥**

**आयन् आगच्छन् रङ्गम् । तस्य दुष्टजनपूर्णत्वात् दुष्टत्वम् ॥ ११२ ॥ अग्रे रङ्गाग्रे । वासुदेवं प्रति वासुदेवमुद्दिश्य नागं अभियापयते अभियापयामास ॥ ११३ ॥ अहन् अहनत्[४] ॥ ११४–५ ॥ जगद्गुरुतमे**

---

पूर्वं दैत्यजन्मनि रुद्रप्रसादेन परितः परस्मिन् जन्मन्यपि शत्रुभिरवध्यत्ववरेण रक्षितम् । दुष्टस्य कंसस्य उरुरङ्ग-मुखे संस्थितं द्वारो निरुद्ध्य स्थितं गजेन्द्रमपश्यत् । तत्रैव संस्तभ्य स्थितं इभस्य गजस्यायमिति ऐभ्यं गजयन्तारं चेक्षित्वा । इभ्यस्य कंसस्य सम्बन्धिनं वा । ऊदे अवदत् । भासनार्थ आत्मनेभाषा [अ.सू.१.३.४७] । भासमान उवादेत्यर्थः । महतो दुष्टगजस्य पुरः स्थितोऽपि निर्भयतया भासमानो बभाष इति यावत् ॥ ११२ ॥ अग्रे रङ्गमुखे वासुदेवं प्रति अभिमुखं यापयामास । सतामपि दुरवगमान्तः, असतां दुःखान्तः महिमाऽस्येति दुरन्तमहिमः ॥ ११३ ॥ विविधं क्रीडित्वा विनोदेन तं विनयन्नेव च क्रीडित्वा । हस्ते शुण्डायां प्रगृह्य निरायासं गृहीत्वा । निकारपूर्वं विकृष्य नीचैः पातयित्वा । प्रतिनिधाय दृढं निधाय । उत्कृष्य उत्कृत्य । तेनैव हस्तिपमहन् पोथयामास । तेन सोऽपि मृतः पपात ॥११४॥ नियन्तुमारुह्य सीदन्तं यकङ्कमपि सादिनमाहुः । **'सादी तुरङ्गमातङ्गरथारोहेषु दृश्यते'** इति क्षीरस्वामी । अवसज्ज्य कुसुमनिचयमिव अवज्ञया निक्षिप्य । अञ्चिताङ्गः भूषिताङ्गः ॥ ११५ ॥ अखिलोऽपि जनसमुदायः न मुमुदे, नापि शुशोष । तत्र केचिन्मुमुदिरे । केचित् शुशुषुः । के मुमुदिरे ? के शुशुषुः? भगवद्गुणानुभविनो मुमुदिरे । विपरीताः

---

१. **'वाचमूचे' । वाक्यमूदे'** इति क्वचित् । २. **'–णमवसृज्य'**
३. **'शुशोच जनो–'** इति वे.ती.पाठः । ४. नेदं वक्तव्यम् । स्यात् सम्पातायातम् ।

[१]रङ्गप्रविष्टमभिवीक्ष्य जगाद मल्लः कंसप्रियार्थमभिभाष्य जगन्निवासम् ।
चाणूर इत्यभिहितो जगतामवद्ध्यः शम्भुप्रसादत इदं शृणु माधवेति ॥ ११७ ॥

राजैव दैवतमिति प्रवदन्ति विप्रा राज्ञः प्रियं कृतवतः परमा हि सिद्धिः ।
योत्स्याव तेन नृपतिप्रियकाम्ययाऽऽवां रामोऽभियुद्ध्यतु बली सह मुष्टिकेन॥ ११८ ॥

इत्युक्त आह भगवान् परिहासपूर्वमेवं भवत्विति स तेन तदाऽभियातः ।
सन्दर्श्य दैवतपतिर्युधि मल्ललीलां मौहूर्त्तिकीमथ पदोर्ज्जगृहे स्वशत्रुम् ॥ ११९ ॥

उत्क्षिप्य तं गगनगं गिरिसन्निकाशमुद्भ्राम्य चाथ शतशः कुलिशाक्षताङ्गम् ।
आविद्ध्य दुर्द्धरबलो भुवि निष्पिपेष चूर्णीकृतः स निपपात यथा गिरीन्द्रः॥ १२० ॥

**रङ्गं प्रविष्टे सति । अत्र रङ्गे स्थितः अखिलोऽपि जनः, द्विविध इति शेषः । मुमोद शुशोच च । कस्य मोदादीत्यतः सदृष्टान्तमाह–कञ्जमिति । सूर्ये उद्यति कञ्जं यथा तथा अजे अनुभविनः ज्ञानिनः भक्ता इति यावत्, (मुमुदुः) । सूर्ये उद्यति कुमुदं यथा तथा अजे विपरीतकाः विरोधिनः शुशुचुरिति सम्बन्धः ॥ ११६–९ ॥ दुर्धरबलः असह्यबलः ॥ १२० ॥**

---

कुत्सिताः शुशुचुरिति । यथा सूर्य उद्यति कञ्जं मोदते, कुमुदं च शुष्यति तथैव । अयं भावः–कमलस्य मोदः, कुमुदस्य शोषो वा न स्वेच्छामूलः । किन्तु नियतिमूलः । एवमत्रगतस्य जनस्य मोदशोषावपि भगवदिच्छानियताविति । नहि विकसितव्यमित्यभिलष्य विकसति कमलम् । नापि सम्प्रत्युदितः सूर्यस्तेन मया शोष्टव्यमिति शुष्यति कुमुदम् । आन्तरेण केनापि हेतुना स्वयमजानदेव विकसति कमलम् । स्वयमजानदेव शुष्यति कुमुदम् । एवं तत्रत्यः सज्जनलोकः स्वयमजानन्नेव केनापि सूत्रधारेणाऽदिष्ट इव तुतोष, शुशोष च दुर्जनलोक इति । एतत्सूचनायैव मुमोदेति परस्मैपदम् । रङ्गः विविधविद्यासु विशिष्टसामर्थ्यप्रदर्शनभूमिः । **'रङ्गो नृत्यरणक्षितौ'** इत्यभिधानम् ॥ ११६ ॥ हे माधव शृण्विदमिति आमन्त्र्य भाषणमभिभाषणम् । चाणूरमित्यन्ध्रेषु नगरविशेषः । स्यानन्दूरमिति यथा । मणलूरमिति यथा । चणकपुरमिति तस्यापि मूलं स्यात् । तत आगतोऽयमिति चाणूरमेनमाचक्षत ॥ ११७ ॥ विप्राः ज्ञानिनः । आवां योत्स्याव युध्यावहै । **'योत्स्याव'** इति लोड्गर्भो लृट् । उपरि चेदृशाः प्रयोगा भवन्ति । **'अनेन प्रसविष्यध्वम्–'** इति च गीतासु । मुष्णाति परबलमिति मुष्टिकः । **'वाराहश्च किशोरश्च दानवौ यौ महाबलौ । मल्लौ रङ्गगतौ तौ तु जातौ चाणूरमुष्टिकौ'** [ह.वं.प.५४.७६] इति च । **'वाराहश्च किशोरश्च दैत्यौ परमदारुणौ । मल्लौ तावेव सञ्जातौ ख्यातौ चाणूरमुष्टिकौ'** [दे.भा.४.२२.४५] इति च ॥ ११८ ॥ स भगवान् तेन चाणूरेण । मौहूर्तिकीम् अल्पकालीनाम् ॥ ११९ ॥ गात्रेण गिरिसन्निकाशम् ।

---

१. 'रङ्गं प्रविष्ट–'

कृष्णं च तुष्टुवुरथो दिवि देवसङ्घा मर्त्या भुवि प्रवरमुत्तमपूरुषाणाम् ।
तद्वद् बलस्य दृढमुष्टिनिपिष्टमूर्द्धा भ्रष्टस्तदैव निपपात स मुष्टिकोऽपि ॥ १२१ ॥

कूटश्च कोसल[1] उत च्छलनामधेयो[2] द्वौ तत्र कृष्णनिहतावपरो बलेन ।
कंसस्य ये त्ववरजाश्च सुनीथमुख्याः सर्वे बलेन निहताः परिघेण वीराः ॥ १२२ ॥

ताभ्यां हतानभिसमीक्ष्य निजान् समस्तान् कंसो दिदेश बलमक्षयमुग्रवीर्य्यम् ।
रुद्रप्रसादकृतरक्षमवद्ध्यमेनौ[3] निस्सार्य दण्डमधिकं कुरुतेति पापः ॥ १२३ ॥

श्रुत्वैव राजवचनं बलमक्षयं तदक्षोहिणी[4]दशकयुग्ममनन्तवीर्य्यम् ।
कृष्णं चकार विविधास्त्रधरं स्वकोष्ठे सिंहं यथाऽखिलसृगालबलं समेतम् ॥ १२४ ॥

जानन्नपीश्वरमनन्तबलं महेन्द्रः कृष्णं [5]रथं निजमयापयदायुधाढ्यम् ।
शुश्रूषणाय परमस्य यथा समुद्रमर्घ्येण पूरयति पूर्णजलं जनोऽयम् ॥ १२५ ॥

स्वस्यन्दनं[6] तु भगवान् स महेन्द्रदत्तमारुँह्य सूतवरमातलिसङ्गृहीतम् ।
नानायुधोग्रकिरणस्तरणिर्य्यथैव ध्वान्तं व्यनाशयदशेषत आशु सैन्यम् ॥ १२६ ॥

**भ्रष्टः मृतः ॥ १२१–३ ॥ अनन्तवीर्यं कृष्णम् । स्वकोष्ठे स्वमध्ये चकार ॥ १२४-६ ॥**

---

बलेन तु ततोऽप्यधिकमित्याह– कुलिशाक्षताङ्गम् । गिरयो हि कुलिशाक्षतपक्षाः ॥ १२० ॥ भ्रष्टः गतजीवितः ॥ १२१ ॥ कूटनीत्या प्रतिमल्लान् जिगीषन् कूटः । कुस्यन्ति, कुस श्लेषणे, श्लिष्यन्तीति कोसला नाम जनपदाः । तत्र जातः कोसलः । छलेन जिगीषन् छलनामधेयः । द्वौ कूटकोसलौ । छलो बलेन बलदेवेन कर्त्रा । परिघेण करणेन ॥ १२२ ॥ एनौ कृष्णबलदेवौ । दण्डं शिक्षाम् ॥ १२३ ॥ विविधास्त्रधरं तत् कांसं बलं कृष्णं स्वकोष्ठे चकार तं पर्यावृणोत् । सिंहं यथा । अभूतोपमेयम् । तेन कंसबलस्यागाधं मौढ्यमवगमयति ॥ १२४ ॥ सम्प्रत्येव गोवर्धनोद्धरणेन कृष्णमीश्वरं जानन्नपि । अर्घ्यजलेन पूरयति पूरयन्निवार्घ्यमर्पयति । वस्तुतः परदेवतां शुश्रूषुः ॥ १२५ ॥ वस्तुतस्तदपि स्वस्यैव स्यन्दनम् । स्वस्य स्वीयस्य भक्तस्य स्यन्दनं च । स्वःस्यन्दनं च । सङ्गृहीतं सङ्गृहीताश्वम् । मातलिना

---

१. **‘कोशल–’** २. **‘छलनामधेयौ’** इति क्वचित् पठ्यमानं प्रामादिकमेव । ३. **‘–मेतौ निस्सार्य’**
४. **‘तदक्षौहिणी–’** ५. **‘कृष्णं निजं रथमयातयदा–’** ६. **‘स्वं स्यन्दनम्’**

निःशेषतो विनिहते स्वबले स कंसश्चर्म्मासिपाणिरभियातुमियेष कृष्णम् ।
तावत् तमेव भगवन्तमभिप्रयातम्[1]उत्तुङ्गमञ्चशिरसि प्रददर्श वीरम् ॥ १२७ ॥

तं श्येनवेगमभितः प्रतिसञ्चरन्तं निश्छिद्रमाशु जगृहे भगवान् प्रसँह्य ।
केशेषु चैनमभिमृश्य करेण वामेनोद्धृत्य दक्षिणकरेण जघान केऽस्य ॥ १२८ ॥

सञ्चालितेन मकुटेन[2] विकुण्डलेन कर्ण्णद्वयेन विगताभरणोरसा च ।
स्रस्ताम्बरेण जघनेन सुशोच्यरूपः कंसो बभूव नरसिंहकराग्रसंस्थः ॥ १२९ ॥

उत्कृष्य तं सुरपतिः परमोच्चमञ्चादन्यैरजेयमतिवीर्य्यबलोपपन्नम् ।
अब्जोद्भवेशवरगुप्तमनन्तशक्तिर्भूमौ निपात्य स ददौ पदयोः प्रहारम् ॥ १३० ॥

**यावद् यदा[3] रङ्गे स्थितमभियातुमियेष तावत् तदैव ॥ १२७–८ ॥ नरसिंहकराग्रसंस्थः पुरुषोत्तमकराग्रसंस्थः कंसः सुशोच्यरूपो बभूव । सञ्चालितेनेत्यादि इत्थम्भूतलक्षणे तृतीया ॥ १२९ ॥ पदयोरिति षष्ठी । स्वपदाभ्यां तं प्राहरत् इति भावः ॥ १३० ॥**

---

कृतसारथ्यमित्येतत् । यथा तरणिः स्वस्यन्दनमारुह्य ध्वान्तं विनाशयति तथा सैन्यं व्यनाशयत् । वीत्युपसर्गार्थं स्फुटमाह–अशेषत इति । **'एष शक्ररथे तिष्ठंस्तान्यनीकानि भारत । व्यधमद् भोजपुत्रस्य महाभ्राणीव मारुतः'** [स.प.५४.३०] इत्यर्घाहरणे भीष्मवचनम् । **'कश्च नारायणादन्यः सर्वरत्नविभूषितम् । रथमादित्यसङ्काशमातिष्ठेत शचीपतेः । कस्य चाप्रतिमो यन्ता वज्रपाणेः प्रियः सखा । मातलिः सङ्गृहीता स्यादन्यत्र पुरुषोत्तमात्'** [५४.१५–६] इति च ॥१२६॥ यावदभियातुमियेष तावत्तं कृष्णमेवाभिप्रयातं प्रथममभिगतं प्रकटं ददर्श कंसः ॥ १२७ ॥ प्रतिक्षणं प्रतिदिशं निश्छिद्रं निरवकाशतया रङ्गमापूर्य सम्भ्रमेण आतुरतयेतस्ततो धावन्तम् । कान्दिशीकमित्यर्थः । प्रथमं तं जगृहे । निश्चलं स्थापयामास । ततः केशेषु अभिमृश्य मुष्टिमावृत्य वामेन करेण केशानुद्धृत्य, अन्ते पुनर्मञ्चान्ते निलीनं तत उद्धृत्यास्य के शिरसि जघान ॥ १२८ ॥ सञ्चालितेन शिरसः स्रंसितेन । विमकुटेन शिरसेत्येतत् । कथं मकुटः? कनतेरिति कातन्त्राः । कनेर्मकिरादेशः । उटश्च प्रत्यय इति । मुचेर्धातोरुटच्प्रत्यये मुकुट इति भोजः । वयं तु मनः कुटतीति मकुटमाचक्ष्महे । कुट कौटिल्ये । नरसिंहकराग्रसंस्थ इत्यनेन हिरण्यकशिपोरिव कंसस्यापि दशा शोच्यतमा बभूवेति स्मारयति । नरसिंहत्वे यां लीलां दर्शयामास तामेवाद्य कृष्णरूपेण दर्शयामासेति च । सङ्कटमनुभवन् स्थितः संस्थः । संहाराय स्थितः संस्थः । पुरुषसिंहकराग्रे संस्था मृत्युर्यस्येति च ॥ १२९ ॥ स्वपदयोः प्रहारम् ॥१३०॥

---

१. **'–मभिप्रयान्त–'** २. **'मुकुटेन'**

३. एतदनुसारेण– **'–पाणिरभियातुमियेष यावत् । तावत् तमेव'** इति वे.ती. सम्मतः पाठ स्यादपि ।

देहे तु योऽभवदमुष्य रमेशबन्धुर्वायुः स कृष्णतनुमाश्रयदन्यपापम् ।
दैत्यं चकर्ष हरिरत्र शरीरसंस्थं पश्यत्सु कञ्जजमुखेषु सुरेष्वनन्तः ॥ १३१ ॥

द्वेषात् स सर्वजगदेकगुरोः स्वकीयैः [१]पूर्वप्रमापितजनैः सहितः समस्तैः ।
धात्र्यादिभिः प्रति ययौ कुमतिस्तमोऽन्धमन्येऽपि चैवमुपयान्ति हरावभक्ताः ॥ १३२ ॥

नित्यातिदुःखमनिवृत्ति सुखव्यपेतमन्धं तमो नियतमेति हरावभक्तः ।
भक्तोऽपि कञ्जजगिरीशमुखेषु सर्वधर्म्मार्ण्णवोऽपि निखिलागमनिर्ण्णयेन ॥ १३३ ॥

यो वेत्ति निश्चितमतिर्हरिमब्जजेशपूर्वाखिलस्य जगतः सकलेऽपि काले ।
सृष्टिस्थितिप्रळय[२]मोक्षदमात्मतन्त्रं लक्ष्म्या अपीशमतिभक्तियुतः स मुच्येत् ॥ १३४ ॥

**कंसः सायुज्यमगमदिति ग्रन्थान्तरोक्तेर्गतिमाह– देह इति । अमुष्य देहे यो वायुरभवत् स कृष्णतनुमाश्रयत् । अनेन कंसः कृष्णं प्राविशदित्यत्र कंसस्थो वायुः कृष्णं प्राविशदित्यर्थ इत्युक्तं भवति । अत्र शरीरसंस्थयोरुभयोर्मध्ये (अन्यपापम्), अन्यश्चासौ पापश्चेत्यन्यपापः, तं दैत्यं कालनेम्याख्यं दैत्यम् । तमः प्रति चकर्ष । अत्र किं प्रमाणमित्यतः ब्रह्मादीनां प्रत्यक्षं प्रमाणमित्याह– पश्यत्स्विति ॥ १३१ ॥ चकर्षेत्येतद् विवृणोति– द्वेषादिति । (अन्येषां) हरिद्विषामपीत्थं तमोगतिरित्याह– अन्येऽपीति । (अ)भक्ताः द्वेषिणः ॥ १३२–३ ॥ द्वेषिणस्त(मः)प्राप्त्युक्तिप्रसङ्गात् मुक्तानां मुक्तिसाधनं ज्ञानप्रकारमाह– यो वेत्तीति ॥ १३४ ॥**

---

कंसस्य कृष्णः पैतृस्वसेयश्च भागिनेयश्च बभूवेति लोकदृष्ट्या स रमेशबन्धुः । वस्तुतस्तु वायुसान्निध्यादेव कंसोऽयं रमेशबन्धुताभाग्यभाजनं बभूवेति स एव रमेशबन्धुरित्याह– रमेशबन्धुर्वायुरिति । अत एव स कृष्णतनुमाश्रयत् । कंसशरीरे त्रय आसन्– कंसः भृगुः वायुश्च । कंसस्तु रमेशं दिद्वेषेति न तमाप; किन्तु तम आप । भृगुर्भक्तोऽपि रमेशवक्षस्थलताडनदोषेण न तं विवेश ॥ १३१ ॥ पूर्वं प्रमापिता निसूदिताः । धात्र्यादिभिः पूतनादिभिः । अन्धन्तमः प्रति । येये हरावभक्ताः ते च ॥ १३२ ॥ तदेव दृढमाह– नित्यातिदुःखम् । सर्वधर्माणामर्णव इव जलानामाश्रयोऽपि । निखिलागमेषु तथा निर्णीतत्वात् ॥ १३३ ॥ सृष्टिस्थितिप्रळयमोक्षदमिति । **'यतो वा इमानि भूतानि जायन्ते । येन जातानि जीवन्ति । यत् प्रयन्त्यभिसंविशन्ति'** इति श्रुतिसमाख्यानाय चतुर्णामेव ग्रहणम् । बन्धान्मोक्ष इति प्रतियोगितया

---

१. 'पूर्वं प्रमा–' २. '–प्रलय–'

**तस्मादनन्तगुणपूर्णममुं रमेशं निश्चित्य दोषरहितं परयैव भक्त्या ।**
**विज्ञाय दैवतगणांश्च यथा क्रमेण भक्ता हरेरिति सदैव भजेत धीरः ॥ १३५ ॥**

**निहत्य कंसमोजसा विधातृशम्भुपूर्वकैः ।**
**स्तुतः प्रसूनवर्षिभिर्म्मुमोद केशवोऽधिकम् ॥ १३६ ॥**

**सदैव मोदरूपिणो मुदोक्तिरस्य लौकिकी ।**
**यथोदयो रवेर्भवेत् सदोदितस्य लोकतः ॥ १३७ ॥**

**दैवतगणांश्च हरेर्भक्ता इति विज्ञाय यथाक्रमेण भजेत ॥ १३५–६ ॥ मुदोक्तिः । 'हलन्ता अपि टाबन्ता यथा वाचा निशा दिशा' इति हलन्तादपि टाब्विधानात् मुच्छब्दस्य टाबन्तत्वमभिप्रेत्यायं प्रयोगः । मुदेति भिन्नं वा पदम् । तत्पक्षे विशिष्ट (इतीति) योज्यम् । लौकिकी अज्ञजनानुसारिणी ॥ १३७ ॥**

---

बन्धोऽप्युक्तप्रायः । बन्धमोक्षहेतुतयाऽऽवृतिर्ज्ञानं च । स आत्मतन्त्रः । अन्यत् सर्वं तत्तन्त्रमिति नियतिश्चोक्ता । गुरुषु देवादिषु यथाक्रमं भक्तिः । सर्वातिशायिनी परा भक्तिर्भगवतीत्यतिभक्तियुत इत्याह । **'यस्य देवे परा भक्तिः'** इति श्रुतेः । मुच्येत् मुच्येत । **'तेन मुच्यन्ति जन्तवः'** इतिवत् । मोचनमपि परानुग्रहेणेति परस्मैभाषा ॥ १३४ ॥ यथा यथावत् । क्रमेण तारतम्यक्रमेण । दैवतगणान् भागवतत्वेन भक्त्या भजेत सेवेत । रमेशं च भगवत्त्वेन परयैव भक्त्या । रमापीशकोटिप्रविष्टेति सूचनाय रमेशमित्याह । भगवता सहैव तस्या अपि भजनम्, न पृथगिति च । स्वयमेव च सन्दर्शयामास तं पन्थानं श्रीस्तुतौ–**'श्रीर्यत्कटाक्षबलवत्यजितं नमामि'** इति । महानयमात्मलाभः साधकस्येत्याह भजेतेति ॥ १३५ ॥ निहत्य निबन्धाय हत्वा । **'निबन्धाय नीचस्थानेऽन्धे तमसि बन्धाय'** इति गीतातात्पर्यनिर्णये । सहजा पराभिभवनशक्तिरौजः । मुमोद मोदमभिव्यानक् । केशिनं हतवानिति केशवमाचक्षते नैरुक्ताः । यः पूर्वं भृत्यं जघान स एवाद्य तत्स्वामिनमपि जघानेति ॥ १३६ ॥ तदेव स्फुटमाह– सदैव मोदरूपिणः । मुदाया उक्तिः । हलन्ताट्टाप् । यथा सदोदितस्य रवेरुदयोक्तिः । लोकतः लोकदृष्ट्यनुसारतः । नहि क्वापि रविरुदयते । नाप्यस्तमेति । तथाऽप्युदेत्यादित्य इत्याचक्षते । अस्तमेति गभस्तिमानित्याचक्षते । किं कारणम्? उदित इव दृश्यते । अस्तमित इव दृश्यते लोके । एवं भगवानपि कंसं हत्वा मुदित इवादृश्यत लोकैस्तत्रत्यैः । भ्रान्तिरियं तर्हि? न भ्रान्तिः । दर्शनभाषेयम् । उदियायेति दृष्टिपथं गत इत्येवार्थः । अस्तमित इत्यदर्शनं गत इत्येवार्थः । एवमिहापि मुमोदेति मोदं दर्शयामास, लोकश्च तं तदात्व एवोदितमोदमिव ददृशुरित्यर्थः । इयं लोके च शास्त्रे च विदुषां दर्शनभाषासरणिः । अज्ञलोकस्यापि मोददर्शनं न भ्रान्तिः । मोदस्य कंसहननं निमित्तमिति दर्शनं भ्रान्तिः ॥ १३७ ॥

अनन्तचित्सुखार्णवः सदोदितैकरूपकः ।
समस्तदोषवर्जितो हरिर्गुणात्मकः सदा ॥ १३८ ॥

**इति श्रीमदानन्दतीर्थभगवत्पादविरचिते**
**श्रीमहाभारततात्पर्य्यनिर्ण्णये**
**कंसवधो नाम**
**त्रयोदशोऽद्ध्यायः**

—०—

[आदितः श्लोकाः– **१४८२**+१३८=**१६२०**]

**सदैव मोदरूपित्वं साधयितुं तत्स्वरूपं निरूपयति– अनन्तेति ॥ १३८ ॥**

इति श्रीमहाभारततात्पर्यनिर्णयटीकायां
श्रीवेदाङ्गतीर्थभट्टारकविरचितायां
तात्पर्यदीपिकायां
त्रयोदशोऽध्यायः

—०—

---

सदोदितः अतिरोहितस्वरूपः । अनन्तरूपेषु सदैकरूपश्च । सदा अतिरोहितं एकरूपं वृद्धिह्रासवर्जितं कं सुखं यस्येति च । एकरूपाणि सर्वाणि सर्वविषयग्राहीणि कानि इन्द्रियाणि यस्येति च । गुणात्मकः गुणा एव आत्मा देहो यस्य । गुणभूताः आत्मा अहङ्कारमानी शिवः, कौ ब्रह्मवायू च यस्येति च ॥ १३८ ॥

आचार्यगोविन्दकृते
श्रीमद्भारततात्पर्यनिर्णयस्य ।
निर्णिक्ते व्याख्याने निर्णयभावचन्द्रिकाख्याने
गतं त्रयोदशाध्यायविवरणं सतां हृदयाभरणम् ॥ ※ ॥

इत्याचार्यगोविन्दस्य कृतिषु
श्रीमहाभारततात्पर्यनिर्णयपञ्चिकायां
निर्णयभावचन्द्रिकायां
त्रयोदशोऽध्यायः

—०—

२२-१०-१२

# चतुर्द्दशोऽद्ध्यायः

[उद्धवप्रतियानम्]

ॐ ॥ कृष्णो विमोच्य पितरावभिवन्द्य सर्व-
वन्द्योऽपि रामसहितः प्रतिपालनाय ।
धर्म्मस्य राज्यपदवीं प्रणिधाय चोग्र-
सेने द्विजत्वमुपगम्य मुमोच नन्दम् ॥ १ ॥

नन्दोऽपि सान्त्ववचनैरनुनीय मुक्तः कृष्णेन तच्चरणपङ्कजमात्मसंस्थम् ।
कृत्वा जगाम सह गोपगणेन कृच्छ्राद् ध्यायन् जनार्द्दनमुवास वने सभार्य्यः ॥ २ ॥

कृष्णोऽप्यवन्तिपुरवासिनमेत्य विप्रं [1]सान्दीपनिं सह बलेन ततोऽद्ध्यगीष्ट ।
वेदान् सकृन्निगदितान् निखिलाश्च[2] विद्याः सम्पूर्णसंविदपि दैवतशिक्षणाय ॥ ३ ॥

**ॐ ॥ धर्मस्य प्रतिपालनाय पितरावभिवन्द्य, राज्यपदवीमुग्रसेने प्रणिधाय, द्विजत्वं चोपगम्येति योज्यम् । नन्दं मुमोच नन्दगोकुलाय प्रेषयामास ॥ १–३ ॥**

---

ॐ ॥ सर्ववन्द्योऽपि पितरावभिवन्द्य । कृष्णोऽहमित्यभिधानग्रहणपूर्वं वन्दनमभिवन्दनम् । किमिति? धर्मस्य प्रत्ययपूर्वकं पालनाय । अयं धर्मोऽयमधर्म इति प्रतीत्य जना यथा धर्ममाचरेयुः । प्रतिष्ठापूर्वकं पालनं च प्रतिपालनम् । प्रतिपालनायैव पितरावभिवन्द्य, राज्यपदवीमुग्रसेने सर्वात्मना निधाय, द्विजत्वं चोपगम्य । **'गर्गाद् यदुकुलाचार्याद् गायत्रं व्रतमास्थितौ'** [१०.४३.२९] इति भागवते । नन्दं मुमोच गोकुलं प्रति ॥ १–२ ॥ ज्ञानदीपसन्दीपनात् सान्दीपनिः । दैर्घ्यमवधारणे । सन्दीपनस्यापत्यं सान्दीपनिरिति च । पुराणेषु चायं काश्य इति चोच्यते । **'ततः सान्दीपनिं काश्यमवन्तिपुरवासिनम् । विद्यार्थं जग्मतुर्बालौ कृतोपनयनक्रमौ'** [५.२१.१९] इति वैष्णवे । **'काश्यं सान्दीपनिं नाम ह्यवन्तिपुरवासिनम्'** [१०.४३.३१] इति च भागवते । **'प्रादात् सान्दीपनये मृतपुत्रं ज्ञानदीपसन्दीपनये'**

---

१. **'सान्दीपिनम्'** इति पाठः प्रामादिकः ।
२. **'–दितानखिलाश्च'**

**धर्म्मो हि सर्वविदुषामपि दैवतानां प्राप्ते नरेषु जनने नरवत् प्रवृत्तिः ।**
**ज्ञानादिगूहनमुताद्ध्ययनादिरत्र तज्ज्ञापनार्थमवसद् भगवान् गुरौ च ॥ ४ ॥**

**गुर्वर्थमेष मृतपुत्रमदात् पुनश्च रामेण सार्द्धमगमन्मधुरां रमेशः ।**
**पौरैः सजानपदबन्धुजनैरजस्रमभ्यर्च्चितो न्यवसदिष्टकृदात्मपित्रोः ॥ ५ ॥**

**तज्ज्ञापनार्थं (दैवतानां) धर्मज्ञापनार्थं भगवांश्च गुरावबसत् ॥ ४ ॥ आत्मपित्रोरन्येषां च ॥ ५–६ ॥**

---

[म.भा.ता.२५] इत्याचार्यवचनम् । तेन **'सान्दीपिनम्'** इति पठन्तो भ्रान्ताः । **'सान्दीपिनिम्'** इति च । अवन्तीत्यवन्तयो नाम भूपालाः । अवन्तिनां पुरम् । अवतीत्यवन्तिर्वा उज्जयिनी । अवन्तिनामकं पुरम् । काश्यां जातत्वात् काश्यम्, अवन्तिपुरे वसन्तम् । **'अविभूभ्यामन्तिः'** [स.कं.२.१.१९८] इति भोजः । **'अवन्तिः राजा । भवन्तिः कालः'** इति दण्डनाथनारायणः । अवन्ती वा । अवन्तीनामकं पुरम् । भवन्ती वर्तमानकालः । **'अस्तिर्भवन्तीपरः'** इति हि पतञ्जलिः । सम्पूर्णसंविदपि अध्यगीष्ट । । इङ् स्मरणे । अधिर्नित्यमनुवर्तते । उक्तं हि–**'धात्वर्थं बाधते कश्चित् कश्चित् तमनुवर्तते । विशिनष्टि तमेवार्थमुपसर्गगतिस्त्रिधा'** इति । तस्य लुङि रूपद्वयमामनन्ति–**'विभाषा लुङ्लृङोः'** [अ.सू.२.४.५०] इति । गाङादेशे अध्यगीष्टेति । अनादेशे अध्यैष्टेति । किमिति? लोकधर्मस्य प्रतिपालनाय । दैवतानां शिक्षणाय च । भवद्भिरपि भूमाववतीर्णैरेवं वर्तितव्यमिति । **'प्रोवाच वेदानखिलान् साङ्गोपनिषदो गुरुः । सहरस्यं धनुर्वेदं सर्वन्यायपथांस्तथा । तथा चान्वीक्षिकीं विद्यां राजनीतिं च षड्विधाम् । सर्वं तदमरश्रेष्ठौ सर्वविद्याप्रवर्तकौ । सकृन्निगदमात्रेण तौ सञ्जगृहतुर्नृप । अहोरात्रैश्चतुःषष्ट्या–'** [भाग.१०.४३.३३–६] इति च । **'सहरस्यं धनुर्वेदं ससङ्ग्रहमधीयताम् । अहोरात्रैश्चतुःषष्ट्या तदद्भुतमभूद् द्विज'** [वि.पु.५.२१.२१] इति वैष्णवे ॥ ३ ॥ नरवन्निद्रादौ प्रवृत्तिः । तदर्थं स्वीयस्य सहजज्ञानादेर्गूहनम् । देवानां तज्ज्ञापनार्थं भगवानपि ज्ञानशक्तिबलैश्वर्यवीर्यतेजःस्वरूपोऽपि गुरुसमीपेऽवसत् । अथच गुरौ गुर्वर्थम् । तदनुग्रहार्थम् । नतु विद्याग्रहणार्थम् ॥ ४ ॥ तदेव स्फुटमाह–गुर्वर्थम् । मृतपुत्रमदात् । अत्रेयं कथा–अथ पित्रोपनीतौ रामकृष्णौ गुरुकुले वासमिच्छन्तौ काश्ये सान्दीपनौ ब्रह्मचर्यमूषतुः । अहोरात्रैश्चतुःषष्ट्या समधिगतसमस्तविद्यौ गुरुदक्षिणयाऽऽचार्यं छन्दयामासतुः । स सम्मन्त्र्य सह भार्यया प्रभासे महार्णवे मृतं पुत्रं वरयामास । तौ सिन्धुवेलामाजग्मतुः । वरुणस्तमर्हणैरर्हयामास । तमाह भगवान्–'त्वया ग्रस्तो गुरुपुत्रः प्रदीयताम्' इति । तमाह वरुणः–'देव, नाहमहार्षम् । अन्तः समुद्रे शङ्खरूपधरः पञ्चजनो नामासुरो वसति । तेन हृतस्तव गुरुपुत्रः' इति । सत्वरं भगवान् जलमाविवेश । जघान पञ्चजनम् । न ददर्श तत्रार्भकम् । ततस्तदङ्गप्रभवं शङ्खमादाय, यं पाञ्चजन्यमाहुः, रथमारुक्षत् । ततो यमपुरीं ययौ संयमनीम् । यमस्तमर्चयामास सहलायुधम् । तं भगवान् **'गुरुपुत्रमिहाऽनय'** इत्याह । तेनोपनीतं गुरुपुत्रमादाय स्वगुरवे ददाविति । भगवता हतोऽयं पञ्चजनः प्रह्लादभ्रातुः सह्लादस्य सुत इति भागवते–**'संह्लादस्य कृतिर्भार्याऽऽसूत पञ्चजनं ततः'** [६.१८.१४] इति । पुरगतैर्जनैः, देशगतैर्जनैः, पुरे देशे च गतैर्बन्धुजनैश्च । बन्धुजनैर्वैष्णवैरिति वा । अभितः, अन्तर्बहिश्च । अभिगमनेनार्चितः । अभिमानेनार्चितः । अजस्याप्यात्मनः सर्वान्तरस्य सर्वगतस्याप्यात्मनः पित्रोरिति परिहसतीव । एतावत्पर्यन्तं वृन्दावनगतः सम्प्रति स्वसान्निध्यसुख-

**सर्वेऽपि ते पतिमवाप्य हरिं पुराऽभितप्ता हि भोजपतिना मुमुदुर्न्नितान्तम् ।**
**किं वाच्यमत्र सुतमाप्य हरिं स्वपित्रोर्य्यत्राखिलस्य सुजनस्य बभूव मोदः ॥ ६ ॥**

**कृष्णाश्रयो वसति यत्र जनोऽपि तत्र वृद्धिर्भवेत् किमु रमाधिपतेर्न्निवासे ।**
**वृन्दावनं यदधिवासत आस सध्र्यङ् माहेन्द्रसद्मसदृशं किमु तत्र पुर्य्याः[1] ॥ ७ ॥**

**येनाधिवासमृषभो जगतां विधत्ते विष्णुस्ततो हि वरता सदनेऽपि धातुः ।**
**तस्मात् प्रभोर्न्निवसनान्मधुरा पुरी सा शश्वत् समृद्धजनसङ्कुलिता बभूव ॥ ८ ॥**

**रक्षत्यजे त्रिजगतां परिरक्षकेऽस्मिन् सर्वान् यदून् मगधराजसुते स्वभर्त्तुः ।**
**कृष्णान्मृतिं पितुरवाप्य समीपमस्तिप्रास्ती शशंसतुरतीव च[2] दुःखितेऽस्मै ॥ ९ ॥**

**सध्र्यक् सम्यक् । तत्र पुर्याः समीचीनता किमु वाच्या ॥ ७ ॥ विष्णुः विधातुः सदनेऽधिवासं विधत्ते येन यस्मात् ततो हि तस्माद्धि वरता विधातृलोकस्य लोकोत्तमता ॥ ८–९ ॥**

---

दानेनेष्टकृत् ॥ ५ ॥ यथेष्टं भोगान् भुञ्जत इति भोजा नाम क्षत्रियाः । तेषां पत्या कंसेन पुराऽभितप्ताः । प्रतिभटनापटुतया तूष्णीं सोढस्तापोऽभितापः । अभितः प्रसर्पन् त्रिविधस्तापोऽभितापः । अत्र भूमावपि वसुदेवदेवकीत्वेऽपि, पुरा दिवि वामनः किल पुत्र आस । अत्र अस्मिन् विषये वा । स्वतन्त्रस्यापि स्वस्य पित्रोरिति पुनः परिहसति । स्वपित्रोर्मोदो बभूवेति किं वाच्यम्? यत्र यदा । हरेः पतित्वेन प्राप्तिविषये वा । जरासन्धादयो बहवो न मुमुदुः । अतः सुजनस्येत्याह ॥ ६ ॥ तत्रापि । रमयैव केवलमधिगतः पतिः । सर्वस्मादधिकः, अत एव रमाया अप्यधिकः, पतिश्च । रमाः मुक्ताः । तेषामधिपतिः परमा गतिः । रमो रमणं सुखम् । आधिर्दुःखम् । रमस्याऽधेश्च पतिः । सर्वेषां सुखदुःखनियन्ता । सतां सुखं पाति । असतां सङ्कसुकानामसुखं पाति च । रमाधिपतेर्न्निवासे रमा निर्विचिकित्सं निवसति । वनमपि सध्र्यक् समीचीनं समृद्धमास । यद्यपि वैयाकरणाः सहस्य सध्रिमादेशं मन्यन्ते सहाञ्चतीति सध्र्यङ् इति । **'सहस्य सध्रिः'** [अ.सू.६.३.९५] इति हि स्मरन्ति । 'समोऽपि' इति वक्तव्यम् । समञ्चतीति सध्र्यङ् इति । सहस्येति सहार्थस्येति वा वक्तव्यम् । सहभोगो हि सम्भोगो भवति । एवं सम्यक् सध्र्यक् च भवति । सध्र्यङ्माहेन्द्रसद्मसदृशमित्येकं वा पदम् । सहैवाञ्चति योग्यतायामिति स्पर्धमानं सध्र्यगुच्यते । सध्रीचा माहेन्द्रसद्मना सदृशमास वृन्दावनम् । तत्र तदा तर्हि वा । पुर्या वृद्धिरासेति किमु वक्तव्यम् ॥ ७ ॥ अधिकं वासः अधिवासः । जनदृग्गोचरत्वमेवाऽधिक्यम् । अन्यथा सर्वत्रापि सदाऽपि वसत्येव हि । ऋषभः श्रेष्ठः । शश्वत् सदा ॥ ८ ॥ परिभवाद् रक्षणं असतः परिभूय वा रक्षणं परि-

---

१. **'तत्र पुर्याम्' । किमुतात्र पुर्याः'** इति क्वचित् । **'किमुत स्वपुर्याम्'** इत्यन्यत्र ।
२. **'–तीव हि दुःखि–'** इति क्वचित् ।

**श्रुत्वैव तन्मगधराज उरुप्ररूढबाह्वोर्बलेन नजितो युधि सर्वलोकैः ।**
**ब्रह्मेशचण्डमुनिदत्तवरैरजेयो मृत्यूज्झितश्च विजयी जगतश्चुकोप ॥ १० ॥**

**क्षुब्धोऽतिकोपवशतः [१]स्वगदाममोघां दत्तां शिवेन जगृहे शिवभक्तवन्द्यः ।**
**शैवागमाखिलविदत्र[२] च सुस्थिरोऽसौ चिक्षेप योजनशतं स तु तां परस्मै ॥ ११ ॥**

**जगतः जगत्सकाशात् मृत्यूज्झितः । जगतः विजयी । चण्डमुनिः दुर्वासाः ॥ १० ॥ शैवागमाखिलवित् अखिलशैवागमवित्, अतिकोपवशतः क्षुब्धोऽसौ ॥ ११ ॥**

---

रक्षणम् । सर्वोपरिगतो रक्षकश्च परिरक्षकः । मङ्गतीति मगधः । जनपदो राजा वा । मगि गतौ । मङ्गेरधक्, नलोपश्चेति भोजीयाः । मङ्गेः कध इति कातन्त्राः । मदेन गतिं धत्त इति मगधः इति तु वयम् । वरमनर्थकानामक्षराणामागमात् सार्थकानां लोपोऽपि । न ते प्रीणयन्त्यागमविदां हृदयम्, येऽनर्थकमागमं भाषन्ते । मगधस्य राजा मगधराजो जरासन्धः । जरया राक्षस्या कृतशरीरशकलसन्धान इति जरासन्धनामा बभूव । **'जरा नामास्मि भद्रं ते राक्षसी कामरूपिणी'** [स.प.१८.१] , **'मम नाम्ना च लोकेऽस्मिन् ख्यात एष भविष्यति'** [९] इति भारते । **'तस्य नामाकरोच्चैव पितामहसमः पिता । जरया सन्धितो यस्माज्जरासन्धो भवत्वयम्'** [११] इति च । **'जरया सन्धितो यस्माज्जरासन्धस्ततोऽभवत्'** [द्रो.प.१८२.१३] इति च । मगधो वा राजा । मगधराजसुते अस्तिप्रास्ती । स्वभर्तुः कंसस्य । पितुः समीपमवाप्य अस्मै पित्रे शशंसतुः स्वयम् । नतु मधुरायामेवोषित्वा दूतमुखेन । दुःखिते अस्मै । अप्रग्रहः न केवलं ते एव, अन्येऽपि कंसानुगा दुःखिताः शशंसुरिति ज्ञापनाय । अस्तिप्रास्तिभ्यामितरा अपि भार्या आसन्निति द्योतनाय च । **'कंसपत्न्यस्ततः कंसं परिवार्य हतं भुवि । विलेपुर्मातरश्चास्य दुःखशोकपरिप्लुताः'** [वि.पु.५.२१.७] इति वैष्णवे । प्रगृह्यसञ्ज्ञा विभाषा भवतीति बोधनाय च । अस्तिप्रास्ती च शशंसतुरित्यन्वयः । अथ च अतीव दुःखिते च । नीचत्वे चः । पिशुनतया नीचबुद्धी शशंसतुः । अथ पूर्वमेव स्वजामातुर्मरणवार्तां चारमुखाच्छ्रुत्वा स्वपितरि अतीव दुःखिते सति पुनरिमे च गत्वाऽस्मै पित्रे शशंसतुरतीव कोपं जनयित्वा वैरनिर्यातनायेति । तदिदं प्रज्वलतो दवाग्नेर्वात्या योजनम् । कथमस्तिप्रास्ती? अस्ति भवति भूतिमतीत्यस्तिः । प्रकृष्टा भवतीति प्रास्तिः ॥ ९ ॥ उरुप्ररूढमतिप्रवृद्धम्, शत्रूणां चिरपरिचितं च बाह्वोर्बलम् । अलुगाक्रोशे । उरुप्ररूढयोर्वा बाह्वोर्बलम् । तदा तु बाह्वोः बलमिति भिन्ने पदे । सर्वलोकैर्नजितो न केवलम् । सर्वस्य जगतः विजयी च । ब्रह्मणा शिवेन चण्डमुनिना च दत्तैर्वरैः । चण्डमुनिरिति चण्डकौशिकः । तथाहि भारते–**'अथ कक्षीवतः पुत्रं गौतमस्य महात्मानः । शुश्राव तपसि श्रेष्ठमुदारं चण्डकौशिकम्'** [स.प.१७.२४], **'उवाच च महाप्राज्ञस्तं राजानं महामुनिः । .... अष्टौ वरान् प्रयच्छामि तव पुत्रस्य पार्थिव । ब्रह्मण्यत्वमजेयत्वं युद्धेषु च तथा मतिम् । प्रियातिथेयतां चैव दीनानामन्ववेक्षणम् । तथा बलं च सुमहल्लोके कीर्तिं च शाश्वतीम् । अनुरागं प्रजानां चेत्येवमष्टौ वरान् नृप'** [३६–४१] इत्यादि । **'एष रुद्रं महादेवं त्रिपुरान्तकरं हरम् । सर्वलोकेष्वतिबलः साक्षाद् द्रक्ष्यति मागधः'** [स.प.१९.१५] इति च चण्डकौशिकवचनम् ॥ १० ॥ अखिलं

---

१. **'–वशतः स गदा–'** इति क्वचित् । २. **'शैवाखिलागमविदत्र'** इति क्वचित् ।

अर्वाक् पपात च गदा मधुराप्रदेशात् सा योजनेन यदिमं प्रजगाद पृष्टः ।
एकोत्तरामपि शताच्छतयोजनेति देवर्षिरत्र मधुरां भगवत्प्रियार्त्थे ॥ १२ ॥

शक्तस्य चापि हि [1]गदाप्रविघातने तु शुश्रूषणं मदुचितं त्विति चिन्तयानः ।
विष्णोर्म्मुनिः स निजगाद ह[2] योजनोनं मार्ग्गं पुरो भगवतो मगधेशपृष्टः ॥ १३ ॥

क्षिप्ता तु सा भगवतोऽथ गदा जराख्यां तत्सन्धिनीमसुभिराशु वियोज्य पापाम् ।
मर्त्त्याशिनीं[3] भगवतः पुनराज्ञयैव याता गिरीशसदनं मगधं विसृज्य ॥ १४ ॥

**मार्गविषययोजनसङ्ख्यायां योजनेन अर्वाक् पश्चात् । तन्निमित्तमाह–यदिममिति । मधुरायोजनसङ्ख्यां पृष्टः । अत्र अतः जरासन्धनगरात् ॥ १२ ॥ भगवतः पुरः मधुरायाः मार्गं मार्गविषययोजनसङ्ख्यां मगधेशपृष्टः स मुनिः गदाप्रतिघातने शक्तस्यापि विष्णोरिदं मदुचितं मया कर्तुमुचितं शुश्रूषणमिति चिन्तयानः । योजनोनम्, मार्गमिति[4] शेषः । निजगाद हि ॥ १३–१४ ॥**

---

शैवागमं वेत्ति । शैवागमेष्वखिलं च प्रमेयजातं वेत्ति । अत्र च अत्रैव शैवागमे बद्धदीक्षः । तां गदाम् । परस्मै परमपुरुषाय कृष्णाय । तं हन्मीति बुद्ध्या ॥ ११ ॥ अर्वाक् पपात । निर्दिष्टात् प्रदेशादवरं देशमश्नतीत्यर्वाक् । एतेन– **'भ्रामयित्वा शतगुणमेकोनं येन भारत । गदा क्षिप्ता बलवता मागधेन गिरिव्रजात् । ..... एकोनयोजनशते सा पपात गदा शुभा'** [स.प.१९.२३–४] इति भारतवचनं व्याख्यातम् । मधुरात एकयोजनोनं योजनशतमिति भारतवचनार्थ इति । अत्र जरासन्धप्रश्नस्योत्तरणरप्रसङ्गे । प्रजगाद प्रज्ञया जगाद । प्रमोहाय जगाद । जरासन्धं प्रतारयन् जगाद । भगवन्तं प्रसादयन् जगाद ॥ १२ ॥ घातस्य प्रकटं विफलीकरणं प्रविघातनम् । अपीत्यपिहितो भगवानुच्यते । अपिहीति च । अथापि चेतव्यश्चकारेणोच्यते । तदुभयानुसन्धानाय **'चापि'** इति, **'चापिहि'** इति, **'अपिच'** इति वा सहैव समुच्चयार्थे प्रयुञ्जते महान्तः । क्वचिदेवकारेण च सह–**'चैव'** इति । आ समन्ताज्ज्ञानबलरूपो भगवानेवपदोदितः । तदेतत् सर्वं शास्त्रेषु गाढमवगाढानां सुविदितम् । नह्यल्पधिषणानामपि शास्त्राणि सुबोधानि भवन्ति । अथ लौकिकी व्याकरणसरणिः– शक्तस्यापीति । यद्यपि शक्तस्तथाऽपि तस्य शुश्रूषणं मदुचितमित्यर्थः । चकारेण भगवतः शक्तिमनुपमामाह । दौर्लभ्ये हि चः प्रयुज्यते । हीति विष्णोर्भगवतः सर्वशक्तता सर्वशास्त्रप्रसिद्धा हीत्युल्लाघयति । शुश्रूषणं तु । सदा शुश्रूषमाणस्यापि इदमवतारकार्याङ्गतया विशिष्टं शुश्रूषणम् । मदुचितं तु । भगवन्मनोगतत्वं च तुनाऽऽह । आपाततः मिथ्येति प्रतीयमानमपि वक्तुमुचितमेव । भगवत्सेवार्थत्वात् । शते पञ्चाशन्न्यायेन मिथ्यात्वाभावात् । क्षुद्रसङ्ख्या विहाय पूर्णसङ्ख्याकथनस्य गणितशास्त्रव्यवहारसिद्धत्वाच्च । वदन्ति हि शतमित्यष्टोत्तरं शतमपि । निष्कृष्टतया शतमिति जगाद । नारदस्य भगवत्प्रियं कर्मेदमिति हेत्यास्वादयति । पुरः पुरस्य मार्गम् ॥ १३ ॥ भगवतः शिवस्य सा

---

१. **'गदाप्रतिघा–'** । वे.ती. पाठोऽपि तथेति भाति ।
२. **'–जगाद हि योज–' । वे.ती.पाठोऽपि तथा ।**
३. **'मर्त्याशनीम्'**
४. **मूल एव 'योजनोनं मार्गम्' इति पाठान्नेदं वक्तव्यम् ।**

राजा स्वमातृत उतो गदया च हीनः क्रोधात् समस्तनृपतीनभिसन्निपात्य ।
[1]अक्षोहिणीत्र्यधिकविंशयुतोऽतिवेल[2]दर्प्पोद्धतः सपदि कृष्णपुरीं जगाम ॥ १५ ॥

सर्वां पुरीं प्रतिनिरुद्ध्य दिदेश विन्दविन्दानुजौ भगवतः कुमतिः स दूतौ ।
तावूचतुर्भगवतेऽस्य वचोऽतिदर्प्पपूर्णं[3] तथा भगवतोऽप्यपहासयुक्तम् ॥ १६ ॥

लोके(ऽ)प्रतीतबलपौरुषसाररूपस्त्वं ह्येक एष्यभवतो बलवीर्य्यसारम् ।
ज्ञात्वा सुते नतु मया प्रतिपादिते हि कंसस्य वीर्य्यरहितेन हतस्त्वया सः ॥ १७ ॥

**अभिसन्निपात्य मेलयित्वा ॥ १५ ॥ अनुजोऽनुविन्दः ॥ १६ ॥ एष्यभवतः भविष्यद्भवतः ॥ १७ ॥**

---

गदा । वस्तुतस्तु भगवतः कृष्णस्यैव सा गदा । शिवेनापि भगवदाज्ञयैव दत्तत्वात् । सर्वं च हि तदीयमेव भवति । स हि शर्वस्येशानः । सर्वस्य चेशानः । भगवतः निग्रहाय क्षिप्तेति वा । **'अस्मद्वधार्थं चिक्षेप गदां वै सर्वघातिनीम्'** [द्रो.प.१८२.८] इति च । तत्सन्धिनीं मगधराजदेहदलद्वयसन्धानकरणीम् । सपरिवारामिति च । **'सा तु भूमिं गता पार्थ हता ससुतबान्धवा'** [१४] इति च । मगधं जरासन्धम् । मगधस्य प्रजा अपि मगधा उच्यन्ते । मगधस्य राजाऽपि मगध उच्यते । पूर्वं तत्र स्थिता । पुनरपि तत्रैव याता ॥ १४ ॥ अहो अथो इतिवत् उतो इति च । तथेत्यर्थे । स्वमातृतस्तथा गदया च हीनः । मातेति सन्धात्री माता जरा । ये तद्देहशकलं सुषुवाते ते बृहद्रथभार्ये काशिराज-तनये पूर्वमेव मृते । अभितः स्थितानां स्वाभिमतसाधनाय एकत्र समवायनं अभिसन्निपातः । अक्षोहिणीनां त्र्यधिक-विंशत्या युतः । अक्षोहिणीनां त्रयोविंशत्या । अक्षोहिणीनां विंशोंऽशः, विंशी अक्षोहिणीति यावत्, यदा त्र्यधिको भवति तावता बलेन युतः । अपिच विंशं विंशत् विंशतिरित्येकार्थतया प्रयुञ्जते महान्तः । मधुरायामक्षोहिणीनां विंशतिरस्तीति जानन् मागधस्त्र्यधिकां विंशतिमभिसन्निपातयामास । कृष्णं परिभवानीति भ्रमेण अतिवेलदर्पोद्धतः । औद्धत्यं स्वोत्कर्ष-भ्रमेण परावधीरणा । अहङ्कारस्य परा काष्ठा । **'अक्षोहिणीभिर्विंशद्भिस्तिसृभिश्चापि संवृतः'** [भाग.१०.४९.४] इति च । **'अक्षोहिणीभिः सैन्यस्य त्रयोविंशतिभिर्वृतः'** [वि.पु.५.२२.३] इति वैष्णवे । विंशद्भिरिति विंशतिभिरिति च छान्दसं पदम् । विंशत्येत्यर्थः ॥ १५ ॥ यद्यपि प्रतिनी एकार्थावुपसर्गौ प्रतिरोधो निरोध इति । अथापि द्वयोः प्रयोगेण प्रतिरोधस्यौत्कट्यमाह । प्रतिदिशं निरुद्ध्येति च । स्वजामातुर्वधस्य प्रतीकारतया प्रतिभटनाय च निरुद्ध्य । भगवतः पितृष्वस्रीयौ विन्दानुविन्दौ । भगवते ऊचतुः । **'तस्मै स होवाच'** इति यथा । तुमुनोऽर्थे चतुर्थी । तं बोधयितुं भर्त्सयितुं वा । निषेधमुखो विधिरपहासः ॥ १६ ॥ बलमात्मबलम् । पौरुषं पुरुषकारः । येन शत्रवो नमन्ति तद् बलम् । येन शत्रून् नमयति तत् वीर्यं पौरुषम् । ते एव सारं श्रेष्ठं रूपमस्य तयोः सारभागः रूपमस्येति वा । प्रतीते प्रथिते

---

१. **'अक्षौहिणी–'** २. **'–वेलं दर्पो–'** ३. **'–दर्पपूर्वं तथा'**

**सोऽहं हि दुर्बलतमो बलिनां वरिष्ठं कृत्वैव दृष्टिविषयं विगतप्रतापः ।**
**यास्ये [1]तपोवनमथो सहितः सुताभ्यां क्षिप्रं ममाद्य विषये भव[2] चक्षुषोऽतः ॥ १८ ॥**

**साक्षेपमीरितमिदं बलदर्प्पपूर्ण्णमात्मापहाससहितं[3] भगवान् निशम्य ।**
**सत्यं तदित्युरु वचोऽर्थवदभ्युदीर्य्य मन्दं प्रहस्य निरगात् सहितो बलेन ॥ १९ ॥**

**द्वारेषु सात्यकिपुरस्सरमात्मसैन्यं त्रिष्वभ्युदीर्य्य भगवान् स्वयमुत्तरेण ।**
**रामद्वितीय उदगान्मगधाधिराजं योद्धुं नृपेन्द्रकटकेन युतं परेशः ॥ २० ॥**

**तस्येच्छयैव पृथिवीमवतेरुराशु तस्याऽयुधानि सबलस्य सुभास्वराणि ।**
**शार्ङ्गासिचक्रदरतूणगदाः स्वकीया जग्राह दारुकगृहीतरथे स्थितः सः ॥ २१ ॥**

**तप उद्दिश्येति शेषः ॥ १८ ॥ ईरितं वचनम् । इति तदुरु वचः एवमुक्तं उरु(वचनं) सत्यं न मृषा । तदेवोक्तं अर्थवदिति । इत्यभ्युदीर्य ॥ १९ ॥ कटकेन समूहेन ॥ २०–१ ॥**

---

बलपौरुषे । अप्रतीते इदमीदृगिति केनाप्यविदिते वा । वास्तवमिदम् । जरासन्धस्य त्वपहासः । अप्रसिद्धबलपौरुष इति दर्पवचनम् । प्रतीतबलबौरुष इति वा । सर्वेऽपि प्रतियन्ति कियदल्पं ते बलादिकमितीति । एष्यस्य उत्पत्स्यमानस्य भवतः नतु ज्ञात्वा अज्ञात्वैव वीर्यरहितेन मया कंसस्य प्रतिपादिते इत्यपहासः । ज्ञात्वा । आ । सु । तेन । इति च प्रतृण्णम् । आ समन्तात् सु सम्यक् ज्ञात्वैव तेन मया प्रतिपादिते इति, आसु महिळास्वेव तव वीर्यसारं ज्ञात्वेति, वीर्यरहितेन त्वया हत इति च दर्पवचनम् ॥ १७ ॥ दुर्बलतम इत्यपहासः । काक्वा तदेव दर्पवचनम् । दुर्बलैः तम्यते आकाङ्क्यते रक्षार्थमिति च । तमु काङ्क्षायाम् । बलिनां वरिष्ठमित्यपहासः । अबलिनां वरिष्ठमिति दर्पवचनम् । विगतप्रताप इत्यपहासः । विगतः शत्रूणां प्रतापो येनेति दर्पवचनम् । विगतप्रताप इत्यगतप्रतापो वा । पुत्रीभ्यां सहितस्तपोवनं तत्र तपआख्यमवनं च यास्ये ॥ १८ ॥ योऽत्रापहासः तत् सर्वं वास्तवमिति सत्यं तदित्याह भगवान् । शब्दतः सङ्क्षिप्तत्वेऽप्यर्थत उरु बह्वर्थगर्भितं वचः, अर्थवत् सप्रयोजनम्, अभ्युदीर्य सन्दिश्य, शत्रोरभिधेयं सन्देशं दूतमुखेन स्फुटमीरयित्वा । बलेन बलरामेण यादवसैन्येन च सह ॥ १९ ॥ आत्मसैन्यमभ्युदीर्य येनयेन यद्यत् करणीयं तत्तदादिश्य । शत्रोरभिमुखे चाभित उद्यतैर्भाव्यमिति चेरयित्वा । स्वाभिमतस्य निदेशश्चाभ्युदीरणम् । नानादेशीयानां जरासन्धभयादागतानां नृपेन्द्राणां कटकेन सैन्येन । **'कटकस्त्वद्रिनितम्बे बाहुभूषणे । सेनायां राजधान्यां च'** इत्यभिदधति । **'कटकोऽस्त्री'** इति च ॥ २० ॥ तस्येच्छयैव । यस्येच्छया जरासन्धस्य शिवदत्ता गदाऽपगता । एतदादाय युद्ध्यन्त इति व्युत्पत्तेः

---

१. वे.ती.पाठानुसारेण **'तपः वनम्'** इति भिन्ने पदे । २. **'विषयो भव'** । **'विषयीभव'** इति क्वचित् ।

३. **'–दर्पपूर्वमात्मापवादसहितम्'** इति क्वचित् ।

**आरुह्य भूमयरथं प्रति युक्तमश्वैर्वेदात्मकैर्धनुरधिज्यमथ प्रगृह्य ।**
**शार्ङ्गं शरांश्च निशितान् मगधाधिराजमुग्रं नृपेन्द्रसहितं प्रययौ जवेन ॥ २२ ॥**

**रामः प्रगृह्य मुसलं स हलं च यानमास्थाय सायकशरासनतूणयुक्तः ।**
**सैन्यं जरासुतसुरक्षितमभ्यधावद्धर्षान्नदन्नुरुबलोऽरिबलैरधृष्यः ॥ २३ ॥**

**उद्वीक्ष्य कृष्णमभियान्तमनन्तशक्तिं [१]राजेन्द्रवृन्दसहितो मगधाधिराजः ।**
**उद्वेलसागरवदाश्वभियाय कोपान्नानाविधायुधवरैरभिवर्षमाणः ॥ २४ ॥**

**भूमयः भूदेवतात्मकः । वेदात्मकैः वेदाभिमानिदेवतात्मकैः ॥ २२–५ ॥**

---

शङ्खतूणयोरप्यायुधत्वं निराबाधम् ॥ २१ ॥ प्रतियुक्तमश्वैः । प्रतियानं ये रथे युज्यन्ते, तादृशैश्चिराभ्यस्तैः परिचितरणकर्मभिः प्रतिष्ठितैरश्वैर्युक्तमित्यर्थः । अश्वैर्युक्तं रथं प्रत्यारुह्येति वा । शत्रौ पुरो रथस्थिते तत्प्रतिरोधाय प्रत्याक्रमणाय चाऽरोहः प्रत्यारोहः । प्रकृष्टं ग्रहणं प्रग्रहणं भवति । विजयाय हि प्रगृह्णन्ति । प्रकृष्टं यानं प्रयाणं भवति । विजयाय हि प्रयान्ति । मगधेषु बहवो भवन्ति राजानः । अयमेकस्तेषामधिराजः ॥ २२ ॥ स रामः मुसलं हलं च प्रगृह्य । सहलं मुसलं प्रगृह्य यानं चाऽस्थायेति वा । सायकशरासनतूणयुक्तः । ननु सायकतदासनतूणयुक्त इति वक्तव्यम् । किमनेन वृथा पर्यायपदरोमन्थेन? अयि प्रज्ञावादिन्, प्रथममधीष्व भाषाशास्त्रम् । ततो भाषस्व । कानिचन हि पदानि निरूढानि लोके व्यवह्रियन्ते । यथा गोगोपा इति । तत्र योगानुसन्धाने गावश्च तत्पाश्चेति गोतत्पा इति वक्तव्यम् । न हि कोऽपि भाषारीतिज्ञस्तथा प्रयुङ्क्ते । किन्तु गोगोपा इत्येव प्रयुङ्क्ते । सोऽयं योगमननुसन्धाय निरूढ्या प्रयोगो नाम । तस्माद् युक्तं सायकशरासनतूणयुक्त इति । पूर्वं चैतादृशः प्रयोगो बभूव–'दन्तदशनच्छदरुद्ध-वायुः' इति । अन्यथा–'दन्ततच्छदरुद्धवायुः' इत्येवावक्ष्यत् । भाषाशास्त्रविदामियं सहजा सरणिः सर्वत्रापि । तथाहि गीतायम्–**'स घोषो धार्तराष्ट्राणां हृदयानि व्यदारयत्'** इति । सञ्जयो धृतराष्ट्रमाह–'अयि धृतराष्ट्र, स घोषो धार्तराष्ट्राणां हृदयानि विदारयामास' इति । किमेवं कोऽपि व्याहरति? तव सुतानां हृदयानीति किल वक्तव्यम् । तत्र किं समाधत्से? न स्फुरति? तर्हि शुश्रूषस्व गुरून् । ते ते ब्रूयुः–'धार्तराष्ट्रपदं योगार्थमविवक्षित्वा केवलं निरूढतया दुर्योधनादिकं शतं वक्तीति । यदि योगार्थविवक्षा स्यात् तर्हि युयुत्सुरपि तेनोच्येत । नोच्यते । नहि तस्य हृदयं व्यदार्यत । तेन युक्तं सञ्जय-वचनं धृतराष्ट्रं प्रति–**'धार्तराष्ट्रस्य हृदयानि'** इति । एवं कौरवा इत्यपि । योगार्थानुसन्धाने पाण्डवा अपि कौरवाः । किन्तु निरूढतया शतं दुर्योधनादय एव कौरवा उच्यन्ते । भाषाभिज्ञानां परिणतप्रज्ञानां समवगाढसकलसमयाकूपा-राणां समधिगतावाराणां शब्दब्रह्मजुषां मोहमुषां विदुषामयं वचोविलासः । आलीढशुकपिकालापानां किं काकभेक-कूजितेन ॥ २३ ॥ अभियाय अभीयाय । **'लोपः समाने'** । अभियाय अभिगत्य, अभिवर्षमाणः अभ्यधावदिति पूर्वेण वाऽन्वयः । अभिवर्षमाणो बभूवेति पूर्वाचार्याः ॥ २४ ॥

---

१. **'राजन्यवृन्द–'** इति कचित् पाठः ।

तं वै चुकोपयिषुरग्रत उग्रसेनं कृष्णो निधाय समगात् स्वयमस्य पश्चात् ।
दृष्ट्वाऽग्रतो मगधराट् स्थितमुग्रसेनं कोपाच्चलत्तनुरिदं वचनं बभाषे ॥ २५ ॥

पापापयाहि पुरतो मम राज्यकाम
निर्लज्ज पुत्रवधकारण शत्रुपक्ष ।
त्वं जीर्ण्णबस्तसदृशो न मयेह वद्ध्यः
सिंहो हि सिंहमभियाति न वै सृगालम् ॥ २६ ॥

आक्षिप्त इत्थममुनाऽथ स भोजराजस्तूणात् प्रगृह्य निशितं शरमाशु तेन ।
छित्वा जरासुतधनुर्बलवन्ननाद[१] विव्याध सायकगणैश्च पुनस्तमुग्रैः ॥ २७ ॥

अन्यच्छरासनवरं प्रतिगृह्य कोपसंरक्तनेत्रमभियान्तमुदीक्ष्य[२] कृष्णः ।
भोजाधिराजवधकाङ्क्षिणमुग्रवेगं बार्हद्रथं प्रतिययौ परमो रथेन ॥ २८ ॥

आयान्तमीक्ष्य भगवन्तमनन्तवीर्यं[३] चेदीशपौण्ड्रमुखराजगणैः समेतः ।
नानाविधास्त्रवरशस्त्रगणैर्ववर्ष मेरुं यथा घन उदीर्ण्णरवो जलौघैः ॥ २९ ॥

शस्त्रास्त्रवृष्टिमभितो भगवान् विवृश्च्य[४] शार्ङ्गोत्थसायकगणैर्विरथाश्वसूतम् ।
चक्रे निरायुधमसौ मगधेन्द्रमाशु [५]च्छिन्नातपत्रवरकेतुमचिन्त्यशक्तिः ॥ ३० ॥

**बस्तः छागः ॥ २६ ॥ आक्षिप्तः निन्दितः ॥ २७–९ ॥ विवृश्च्य छित्वा ॥ ३० ॥**

तं जरासुतम् । पश्चात् पृष्ठतः स्वयं समगात्, तं संरक्षन् स्वयमप्यगात् ॥ २५ ॥ पुत्रवधस्य कारणं यः शत्रुः कृष्णः । तत्पक्षमाश्रित्य स्थित । शत्रुपक्षेति भिन्नं वा पदम् । तदपि राज्यकामनया । अत एव निर्लज्जः । नवै सृगालम् । त्वं तु न सृगालोऽपि । किन्तु बस्तश्छागः, अपिच जीर्णः ॥ २६–७ ॥ प्रतिकर्तुं ग्रहणं प्रतिग्रहणम् । उग्रसेनाभिमुखं यान्तम् । प्रतिरोद्धुं यानं प्रतियानम् ॥ २८ ॥ चेदीशः शिशुपालः कृष्णस्य पितृष्वस्रीयः । पौण्ड्रो वासुदेवः कृष्णतात-सुतः । उदीर्णरवो जरासन्धः घनश्च ॥ २९ ॥ अभितः पतन्तीं शस्त्रास्त्रवृष्टिं विवृश्च्य विनाश्य । व्रश्चू च्छेदने । आतपत्रवरं वरकेतुश्च । आततपत्रमातपत्रमामनन्ति । युद्धकाले आतपात् त्रायते च ॥ ३० ॥

१. '–र्बलवान् ननाद' २. '–यातमुदीक्ष्य' ३. '–मनन्तशक्तिं चेदी–' इति क्वचित् ।
४. '–वान् प्रवृश्च्य' इति क्वचित् । ५. '–माशु भिन्नातपत्र–' इति च क्वचित् ।

**नैनं जघान भगवान् सुशकं च भीमे भक्तिं निजां प्रथयितुं यश उच्चधर्म्मम् ।**
**चेदीशपौण्ड्रकसकीचकमद्रराजसाल्वैकलव्यकमुखान् विरथांश्चकार ॥ ३१ ॥**

**ये चापि हंसडिभकद्रुमरुग्मिमुख्या[1] बाह्लीकभौमसुतमैन्दपुरस्सराश्च ।**
**सर्वे [2]प्रदुद्रुवुरजस्य शरैर्विभिन्ना अन्ये च भूमिपतयो य इहाऽसुरुर्व्याम् ॥ ३२ ॥**

**छिन्नायुधध्वजपताकरथाश्वसूतवर्म्माण उग्रशरताडितभिन्नगात्राः ।**
**स्रस्ताम्बराभरणमूर्द्धजमाल्यदीना[3] रक्तं वमन्त उरु दुद्रुवुराशु भीताः ॥ ३३ ॥**

**सुशकं स्वयं हन्तुं शक्यम् । भीमे निजां भक्तिं यशः उच्चधर्मं च प्रथयितुम्, तेन मागधं घातयित्वेति भावः ॥ ३१–३ ॥**

---

भीमेन घातयित्वा तस्मिन् स्वभक्तिं यशः धर्मं च प्रथयितुम् । विष्णुनिष्ठैव धर्मस्योच्चता नाम । 'उत्+च+धर्मम्' इति वा प्रतृण्णम् । उदिति त्रिष्वप्यन्वेति । उत्कृष्टां भक्तिम्, उत्कृष्टं यशः, उत्कृष्टं च धर्मम् । चेदीशः, पौण्ड्रक-वासुदेवः, सकीचको मद्रराजः शल्यः, साल्वो ब्रह्मदत्तसुतः, स्वभावतो जातितश्च कुत्सित एकलव्यः सर्वेऽप्येते कृष्णं विरोद्धुमागता इति सर्वान्वयायान्ते कना कुत्सयामास । मद्रराजमेकं विहायान्ये स्वरूपतश्च कुत्सिताः । मद्रराजस्तु सहवासादेव दुष्टो न स्वत इत्यवगमयितुमेव 'सकीचके'त्याह । अथ च कस्यते यत्र क्वापि क्षिप्यत इति कसोऽवकरः । 'ಕಸ' इत्येव भाषायां च । चेदीशपौण्ड्रौ च कसौ । कीचकश्च कस एव । देहलीदीपोऽयं कस इति । अथ मद्रराज इति सबहुमानमाह । अन्ते साल्वैकलव्यकौ सहैव कुत्सयामास ॥ ३१ ॥ ये तदानीमुर्व्यां जाता असुराः असुराविष्टाश्च आसुः जरासन्धानुगाः । हंसडिभकौ साल्वस्य ब्रह्मदत्तस्याऽत्मजौ । **'आसीत् साल्वेषु राजेन्द्र ब्रह्मदत्तो नृपोत्तमः'** [भ.प.१०४.१] **'तस्य भार्ये महीपाल रूपौदार्यगुणान्विते'** [३] **'स राजा सहितस्ताभ्यामर्चयामास शङ्करम् । पुत्रार्थं शूलिनं शर्वं दशवर्षाण्यनन्यधीः।'** [६] **'ते भार्ये गर्भमाधत्तां तेजसा शङ्करस्य ह ।'** [१२] **'महिष्यौ तौ महावीर्यौ पुत्रौ शङ्करनिर्मितौ । असूयेतां महीपाल क्रमेणैव नृपस्य ह'** [१३] **'हंसो ज्येष्ठो नृपसुतो डिभकोऽनन्तरोऽभवत्'** [१८] इति हरिवंशेषु । **'यस्तु राजन् शिबिर्नाम दैतेयः परिकीर्तितः । द्रुम इत्यभिविख्यातः स आसीद् भुवि पार्थिवः'** [आ.प.६८.८] इति भारते । **'द्रुमं किम्पुरुषाचार्यं लोके प्रथितविक्रमम् । अतिक्रम्य महावीर्यं किं प्रशंससि केशवम्'** [स.प.६७.१६] इति च । अयं पश्चिमद्वारं रुरोधेति हरिवंशे–**'मद्रः कलिङ्गाधिपतिश्चेकितानः सबाह्लिकः । काश्मीरराजो गोनर्दः करूशाधिपतिस्तथा । द्रुमः किम्पुरुषश्चैव पर्वतीयो ह्यनामयः । नगर्याः पश्चिमं द्वारं शीघ्रमारोधयन्त्विति'** [वि.प.३५.३९–४०] इति । भागवते [१०.४९.१५] चैवम् । भौमसुतो भगदत्तः । प्रदुद्रुवुः प्रस्खलन्तः, अथापि त्वरमाणा दुद्रुवुः । हंसादयोऽसुराः । बाह्लीकादयोऽसुराविष्टाः । अतः पृथङ् निर्देशः ॥ ३२ ॥ मध्यगतो

---

१. **'–डिभिकद्रुमरुक्मिमुख्या–'** २. **'सर्वेऽपि दुद्रुवु–'** ३. **'–माल्यहीना–'**

शोच्यां दशामुपगतेषु नृपेषु सर्वेष्वस्तायुधेषु[1] हरिणा युधि विद्रवत्सु ।
नानायुधाढ्यमपरं रथमुग्रवीर्य्य[2] आस्थाय मागधपतिः प्रससार रामम् ॥ ३४ ॥

आधावतोऽस्य मुसलेन रथं बभञ्ज रामो गदामुरुतरोरसि सोऽपि तस्य ।
चिक्षेप तं च मुसलेन तताड रामस्तावुत्तमौ बलवतां युयुधात उग्रम् ॥ ३५ ॥

तौ चक्रतुः पुरु नियुद्धमपि स्म तत्र सञ्चूर्ण्ण्य सर्वगिरिवृक्षशिलासमूहान् ।
दीर्घं नियुद्धमभवत् सममेतयोस्तद्[3] वज्राद् दृढाङ्गतमयोर्बलिनोर्न्नितान्तम् ॥ ३६ ॥

श्रुत्वाऽथ शङ्खरवमम्बुजलोचनस्य विद्रावितानपि नृपानभि वीक्ष्य रामः ।
युद्ध्यन्तमीक्ष्य च रिपुं ववृधे बलेन त्यक्त्वा रिपुं मुसलमाददं आश्वमोघम् ॥ ३७ ॥

तेनाऽहतः शिरसि सम्मुमुहेऽतिवेलं बार्हद्रथो जगृह एनमथो हली सः ।
तत्रैकलव्य उत कृष्णशरैः पलायन्नस्त्राणि रामशिरसि प्रमुमोच शीघ्रम् ॥ ३८ ॥

**हरिणा अस्तायुधेषु ॥ ३४–५ ॥ तत्र तत्समीपे स्थितान् सर्वगिरिवृक्षशिलासमूहानपि सञ्चूर्ण्य पुरु नियुद्धं चक्रतुः ॥ ३६–७ ॥ अतिवेलमत्यर्थम् । कृष्णशरैर्विद्धः ॥ ३८–९ ॥**

---

ध्वजः । परितः पतन्तीति पताकाः । पताकेति बहुलः प्रयोगः । स्यात् पताका । स्यात् पताकः पताकं वा । **'बलाकपिनाकपताकश्यामाकशलाका अकप्रत्ययान्ता निपात्यन्ते'** इति हि दौर्गसिंही वृत्तिः [का.उ.सू.३.४०] । ताडितेन ताडनेन भिन्नगात्राः । ताडितानि अत एव भिन्नानि गात्राणि येषामिति वा । उग्रशरताडिता भिन्नगात्राश्च वा । स्रस्तेन अम्बरेण स्रस्तैराभरणैर्मूर्धजैर्माल्यैश्च । दीनाः शोच्याः । उरु रक्तं वमन्तः ॥ ३३ ॥ युधि हरिणा निरस्तायुधेषु । सर्वमायुधादिकं विहाय 'भिक्षामहे यदि जीवामः' इति द्रवणं विद्रवणम् । प्रतिपक्षधैर्यक्षपणमुग्रम् ॥ ३४ ॥ अस्य जरासुतस्य रथम् । सोऽपि जरासुतोऽपि तस्य रामस्योरसि गदां चिक्षेप । ननु गदा शिवलोकं गता । सत्यं गता । किन्तु शिवदत्ता गदा गता । नाऽयुधशालागताः सर्वा गदाः । तं च जरासुतं च ॥ ३५ ॥ नियुद्धं बाहुयुद्धम् । परितः स्थितानां गिरीणां वृक्षसमूहान् शिलासमूहांश्च । सञ्चूर्ण्य पिष्टपेषं पिष्ट्वा । समीके परस्परसङ्घट्टनेन उभावपि समं चूर्णयित्वा । वज्रादपि अतितमां दृढाङ्गौ दृढाङ्गतमौ । दृढतमाङ्गावित्येतत् ॥ ३६ ॥ जरासन्धसहायानपि नृपान् अभितः विद्रावितान् वीक्ष्य । विद्रावितानभितो वीक्ष्य वा । युद्ध्यन्तम्, स्वयं विगतोत्साहमथापि विद्रवतां स्वपक्षीयाणामुत्साहनाय अगत्या युध्यमानम्, रिपुं मागधं त्यक्त्वा अनादृत्य, नियुद्धे पाणिगृहीतमुन्मुच्य ॥ ३७ ॥ सम्मुमुहे निष्पन्दममुह्यत् । **'मुह वैचित्ये'** इत्यतः

---

१. **'सर्वेष्वात्तायुधेषु'** २. **'–मुग्रवीर्यमास्थाय'** ३. **'–तयोस्तु वज्राद्–'**

भीतेन तेन समरं भगवाननिच्छन् प्रद्युम्नमाश्वसृजदात्मसुतं मनोजम् ।
प्रद्युम्न एनमभियाय महास्त्रजालै रामस्तु मागधमथाऽत्मरथं निनाय ॥ ३९ ॥

युध्वा चिरं रणमुखे भगवत्सुतोऽसौ चक्रे निरायुधममुं स्थिरमेकलव्यम् ।
अंशेन यो भुवमगान्मणिमानिति स्म स क्रोधतन्त्रकगणेष्वधिपो निषादः ॥ ४० ॥

प्रद्युम्नमात्मनि निधाय पुनः स कृष्णः संहृत्य मागधबलं निखिलं शरौघैः ।
भूयश्चमूमभिविनेतुमुदारकर्म्मा बार्हद्रथं त्वमुचदक्षयपौरुषोऽजः ॥ ४१ ॥

[१]व्रीळानताच्छविमुखः सहितो नृपैस्तैर्बार्हद्रथः प्रतिययौ स्वपुरीं स पापः ।
आत्माभिषिक्तमपि भोजवराधिपत्ये दौहित्रमग्रत उत प्रणिधाय मन्दः ॥ ४२ ॥

**यः क्रोधतन्त्र(क)गणेषु क्रोधवशगणेषु अधिपः मणिमानिति मणिमान्नाम अंशेन भुवमगात् भुवि जातः स इह निषादः एकलव्य(नामा) निषादः ॥ ४० ॥ अभिविनेतुमानेतुम् ॥ ४१ ॥ छविरहितमच्छवि । मन्दोऽविवेकः । दौहित्रमपि ॥ ४२–३ ॥**

---

कर्तरि लिट् । एनं प्रज्ञाहीनं मृतमिव पतितं स्वरथं नेतुं जग्राह । पलायन् । ई गतौ । उदयन् इतिवत् । प्रयासेन मुमोच । नत्वनायासेन । निरन्तरमोचनं च प्रमोचनम् । कृष्णशरैर्भुग्नबलत्वात् प्रयासेन मुमोच । पुनः कृष्णागमनात् पूर्वं जेतव्योऽयमिति दुराशया निरन्तरं मुमोच । अथापि कृष्णः पश्येद्वा इति भिया शीघ्रंशीघ्रं मुमोच ॥ ३८ ॥ मूलरूपेऽप्यात्मसुतम् । अस्मिन्नवतारे पुनरात्मसुतं भविष्यन्तम् । मनसैव ससर्ज । अतश्च मनोजम् । स प्रद्युम्नः महास्त्रजालैरेनमेकलव्यमभि घ्नन्नियाय । अभियाय अभिगम्य विव्याधेति शेष इति पूर्वाचार्याः । एकलव्यास्त्रैरकम्पितस्तु रामः । अथ एकलव्याक्रमणानन्तरमप्यक्षुण्णस्तूष्णीं मागधमात्मरथं निनाय ॥ ३९ ॥ स्थिरं निश्चलं चक्रे । कुत्सितानां क्रोधवशानां नाम दैत्यानां गणेषु यो मणिमानिति प्रथितः, अधिपश्च तेषाम् । इह पुनरंशेन निषादः सन् भुवमगात् ॥ ४० ॥ कामात् क्रोधो हि जायते । तेन क्रोधमुपहन्तुं च काम एव प्रभवतीति ज्ञापयन्निव क्रोधतन्त्रगणाधिपं निषादं कामेनैव योधयामास । अथच कृत्यावसाने तं च प्रद्युम्नं पुना रुग्मिण्यां जननार्थमात्मन्यन्तर्धाय । अभितः सङ्गृह्य विनीय चाऽनेतुमवकाशं कल्पयन् अमुचत् अमुक्त, बलरामवशे स्थितं कथञ्चिदागतप्रज्ञं 'जीवन् गच्छ' इति मोक्षयामास । न तु संहर्तुमपारयन् । अक्षयपौरुषत्वात् । मुच्लृ मोक्षणे इत्यस्य लुङि परस्मैपदे 'अमुचत्' इति रूपम् । आत्मनेपदे 'अमुक्त' इति ॥ ४१ ॥ व्रीळया नतोऽवाङ्मुखः । अच्छे नित्यनिर्मले भगवति विमुखः । अत एव व्रीळानतमच्छवि कान्तिहीनं मुखमस्य । उग्रसेनं राजकूर्चादवरोप्य कंसात्मजं भोजानां राजानं करोमीति प्रतिज्ञायाऽगतो मागधो वितथमनोरथो

---

१. 'व्रीडानता–'

जित्वा तमूर्ज्जितबलं भगवानजेशशक्रादिभिः कुसुमवर्षिभिरीड्यमानः ।
रामादिभिः सहित आशु पुरीं प्रविश्य रेमेऽभिवन्दितपदो महतां समूहैः ॥ ४३ ॥

वर्द्धत्सु पाण्डुतनयेषु चतुर्द्दशं तु जन्मर्क्षमास तनयस्य सहस्रदृष्टेः ।
प्रत्याब्दिकं मुनिगणान् परिवेषयन्ती कुन्ती तदाऽऽस बहुकार्य्यपरा नयज्ञा ॥ ४४ ॥

तत्काल एव नृपतिः सह माद्रवत्या पुंस्कोकिलाकुलितफुल्लवनं ददर्श ।
तस्मिन् वसन्तपवनस्पर्शेधितः[१] स कन्दर्प्पमार्ग्गणवशं सहसा जगाम ॥ ४५ ॥

जग्राह तामथ तया रममाण एव यातो यमस्य सदनं हरिपादसङ्गी ।
पूर्वं शचीरमणमिच्छत एष विघ्नं शक्रस्य [२]तद्दर्शनोपगतो हि चक्रे ॥ ४६ ॥

**नयज्ञा नीतिज्ञा, विवेकवतीत्यभिप्रायः ॥ ४४ ॥ सहसा स्त्रिया युक्तो मरिष्यसीति ऋषिशापमविचार्य ॥ ४५ ॥ अशुचित्वावसरे मृतस्य कथं यमसदनप्राप्तिरित्यत उक्तम्–हरिपादसङ्गीति । रतिस्थस्य मरणे किं**

बभूवेत्याह– आत्माभिषिक्तमपि । आत्मन्यतिप्रत्ययात् स्वदौहित्रं मगध एव भोजराज इत्युद्घोष्याभिषिषेच । ततः पराजितस्तमेवाग्रतः प्रणिधाय स्वपुरीं प्रतिययौ । भोजानां वराधिपत्यम् । द्वावेव हि तदा राजस्वधिपती आस्ताम्–कुरुपतिश्च यदुपतिश्च । भोजवराणामाधिपत्यं च । किं सुशकं तदाधिपत्यं यत्र कृष्णबलरामसात्यकिप्रभृतयो वीरवराः? पुनः प्रयत्यापि एनं भोजासने स्थापयिष्यामीति मृषावलेपेन निधानं प्रणिधानम् ॥ ४२ ॥ सतां दृष्ट्या कुसुमवृष्टिः । अज्ञदृष्ट्या सीकरसेकः ॥ ४३ ॥ चतुर्दशेऽब्दे भवं प्रत्याब्दिकं जन्मर्क्षम् । यां चतुर्दशीं वर्धन्तीमाहुः । बहुकार्यपरा नयज्ञा कुन्ती आब्दिकजन्मनक्षत्रनिमित्तहोमादिबहुकार्यतत्परान् मुनिगणान् अयज्ञा शुभावहविधानज्ञा सती परिवेषयन्ती ॥ ४४ ॥ मद्राणामयं राजा माद्र ऋतायनः । सोऽस्त्यस्या जनकत्वेनेति माद्रवती । पुंस्कोकिलेति । **'पुमः खय्यम्परे'** [अ.सू.८.३.६] इति हि पाणिनिः । **'सं-पुं-कानां सो वक्तव्यः'** इत्यन्यत्र । तेन पुमान् कोकिलः पुंस्कोकिलो भवति । मनुष्येषु युवत्यो यून आकर्षन्ति । विपरीतं प्राणिषु । तद्यथा मयूरो विस्तृतपिच्छो नृत्यन् मयूरीं मदयति । पुंस्कोकिलो मधुरं पञ्चमं गायन् स्वप्रियामिति । तमिममाकर्षणभेदमवगमयितुमेव 'पुंस्कोकिले'त्याह । पुंस्कोकिलानां कूजितेन आकुलितं रणरणितं फुल्लकुसुमं च वनं ददर्श । फुल्लैः कुसुमैर्वनमेव फुल्लमिव ददर्श । तस्मिन् वने वसन्तपवनस्य स्पर्शेनेति स्पर्शस्य मादकत्वं मार्दवं चाऽह । तेन एधितः प्रचोदितः । ननु फाल्गुने फल्गुनोऽभूत् । क्व तदा वसन्तपवनः? अयि चान्द्रायण, सौरगणनायां मीनमेषयोर्वसन्तमास इति फाल्गुन एव वसन्तोद्गम इति भगवानाचार्यः सौरायणो मन्यते । गत्वा पश्योद्यानम् । फाल्गुन एव लतासु पश्येः नवपल्लवोद्गमम् । शृणुयाश्च पुंस्कोकिलेषु नवपञ्चमोद्गमम् ॥ ४५ ॥ जग्राह तां

१. **'स्पर्शेधितः'** इति विश्लिष्य पठनीम् । २. **'तद्दर्शनो–'** इति च ।

तेनैव मानुषमवाप्य रतिस्थ एव पञ्चत्वमाप रतिविघ्नमपुत्रतां च ।
स्वात्मोत्तमेष्वथ सुरेषु विशेषतश्च स्वल्पोऽपि दोष उरुतामभियाति[१] यस्मात् ॥ ४७ ॥

माद्री पतिं मृतमवेक्ष्य रुराव दूरात्
तच्छुश्रुवुश्च पृथया सह पाण्डुपुत्राः ।
तेष्वागतेषु वचनादपि माद्रवत्याः
पुत्रान् निवार्य तु[२] पृथा स्वयमत्र[३] चाऽगात् ॥ ४८ ॥

पत्युः [४]कळेबरमवेक्ष्य निशम्य माद्र्याः
कुन्ती भृशं व्यथितहृत्कमळैव[५] माद्रीम् ।

**कारणमित्यतस्तत्कारणमाह–पूर्वमिति । पूर्वजन्मनि । तद्दर्शनोपगतः तस्य दर्शनार्थमुपगतः ॥ ४६ ॥ तेनैव रतिविघ्नकरणेनैव । किञ्चिदपराधस्य किमेवं महानर्थहेतुत्वमित्यत आह– स्वात्मोत्तमेष्विति । दोषः अपराधः स्वल्पोऽपि उरुतां फलत उरुतामुपयाति । अथ तत्रापि सुरेषु विशेषत उरुतामुपयाति यस्मात्तस्माद्रति-विघ्नकरणस्यैतावदनर्थहेतुत्वमिति ॥ ४७ ॥ तेषु पार्थेषु सहाऽगतेषु स्वयं निवार्य माद्रवत्या वचनादपि निवार्य अत्र स्वयं चाऽगात् ॥ ४८–५१ ॥**

रिरंसया । अथ रन्तुमारेभे । अथ रममाण एव मृत्वा यमस्य सदनं यातः । तत्रैव यमानुगः स्थितः । ततः स्वपुत्रै राज-सूये कृते 'यातः अयम् अस्य सदनम्' । परावहो भूत्वा स्वयोग्यं स्थानमापेत्यर्थः । यतो हरिपादभक्तः । ननु पूर्वमपि हरिपादसङ्गी । तत् किं पूर्वमेव नाऽप? आह– पूर्वमिति । शचीरमणमिच्छत एव । नतु रममाणस्य । दर्शनाय उपह्वरे एकान्ते तत्समीपं गतः । भीतभीत एव जगामेति दर्शनेति विश्लिष्याऽह ॥ ४६ ॥ तेन हेतुना मानुषं मनुष्यजन्म । रतिविघ्नं स्वभार्याभ्यां रतिविरहम् । स्वोत्तमेष्वाचरितो दोष एव स्वल्पोऽपि उरुतामभियाति । अथ सुरेष्वाचरितः विशेषतः ततोऽप्युरुतां याति । स्वोत्तमत्वमाधिकारिकमल्पानामपि भवति । यथा बृहस्पतेरिन्द्रात् । यथा वा वसुदेवस्य कृष्णात् । यथा वा पाण्डोर्भीमादिभ्यः । अतः स्वरूपोत्तमत्वमेवापेक्षितम्, न केवलमापेक्षिकं स्वोत्तमत्वमिति स्पष्टयितुं स्वात्मेत्याह । अपुत्रतां च । चकारेण पुत्रकृताद्दते राजसूयान्मूलरूपानवाप्तिं च ॥ ४७ ॥ स्वनिर्धारात्, माद्रवत्या वचनादपि 'मा यूयमागमत' इति पुत्रान् निवार्य । अत एव 'स्वयं च' इति चोऽवधारणे । केवलं स्वयमगात् । 'तु' इति यत्र यथा वर्तितव्यमिति नयज्ञेत्युक्तं स्मारयति । अत्र यत्र पाण्डुर्मृतः ॥ ४८ ॥ कळेबरं निश्चेष्टमवेक्ष्य । कलयन्ति सुख-दुःखे अनेनेति कलेबरमिति कलधातोरेबरं प्रत्ययं मन्यन्ते वैय्याकरणाः । **'कलेरेबरः'** [स.कं.२.३.७५] इति हि भोजः ।

१. **'–तामुपयाति'** इति वे.ती.पाठ इति भाति । २. **'निवार्य च पृथा'** इति क्वचित् । ३. **'स्वयमेव चा–'**
४. **'कलेवर–'** ५ **'-हृत्कमलैव'** । **'–हृत्कमळा च'** इति क्वचित् ।

**धिक्कृत्य चानुमरणाय मतिं चकार**
**तस्याः स्वनो रुदितजः श्रुत आशु पार्थैः ॥ ४९ ॥**

**तेष्वागतेष्वधिक आस विराव एतं[1] सर्वेऽपि शुश्रुवु[2] ऋषिप्रवरा अथात्र ।**
**आजग्मुरुत्तमकृपा ऋषिलोकमद्ध्ये पत्नी नृपानुगमनाय च पस्पृधाते ॥ ५० ॥**

**ते सन्निवार्य्य तु पृथामथ माद्रवत्या भर्त्तुः सहानुगमनं बहु [3]चार्त्थयन्त्याः ।**
**संवादमेव निजदोषमवेक्ष्य तस्याश्चक्रुः सदाऽवगतभागवतोच्चधर्म्माः ॥ ५१ ॥**

**भर्त्तुर्ग्गुणैरनधिकौ तनयार्त्थमेव माद्र्याऽऽकृतौ सुरवरावधिकौ स्वतोऽपि ।**
**तेनैव भर्त्तृमृतिहेतुरभूत् समस्तलोकैश्च नातिमहिता सुगुणाऽपि माद्री ॥ ५२ ॥**

**कृतौ अङ्गीकृतौ । स्वतः स्वस्मात्  अधिकौ, गुणत इति शेषः ॥ ५२ ॥**

---

कडन्ति माद्यन्त्यनेन, भोगेच्छया  ब्रियते  च  स्त्रीपुंसाभ्यामिति कळेबरमिति तु तत्ववादिनः । सकाशात् निशम्य च वृत्तम् । व्यथितहृत्कमळा । कं मनोऽडति तुदतीति कमळम् । 'अड व्यथने' इत्यपि पठनीयम् । अत एव व्या अडति व्यथयतीति व्याळ उच्यते । तेन चित्तहारि  कमलं  भवति । व्यथाकारि कमळं भवति । 'त्वमेव पतिमृतिहेतुरभूः' इति, 'जानन्त्यपि शापं कथं रमणायावकाशमदाः' इति च माद्रीमेव  धिक्कृत्य ॥ ४९ ॥ एतं विरावम्,  पाण्डुमरणोदन्तं वा । शुश्रुवुः ऋषिप्रवरा इत्यत्र रेफः शिथिलतरं पठनीयः, यथा पूर्वाक्षरस्य न गुरुत्वम् । अत एव विसर्गं विलुप्य लिखन्ति प्रतनाः । उत्तमा कृपा उत्तमेषु च कृपा येषाम् । नहि महान्त ऋषयस्तामसेषु कृपयन्ति । पत्नी पत्न्यौ ।  **'वा च्छन्दसि'** [अ.सू.६.१.१०६ ] इति पूर्वसवर्णदीर्घः । 'एकस्याः पत्न्याः नृपानुगमनं पत्नीनृपानुगमनम्' इति पूर्वाचार्याः ॥५०॥ सन्निवार्य शास्त्रसंवादेन स्फुटं निवार्य । सर्वेऽपि समं निवार्य । तुना स्त्रीणामनुगमनमैच्छिकम्, न नियतधर्म इत्याह । अथ पृथाया निवारणानन्तरमपि । अथ, अथापि, अनुगमनस्यानियतत्वेऽपि, अथ माङ्गलिकत्वात् माद्रवत्या अनुगमनमनुमेनिरे । कुतः? द्वाभ्यां कारणाभ्याम् । प्रथमं तावत् तस्या उत्कटाऽनुगमनेच्छा । तदाह– बहु क्रियासमभिहारेण अर्थयन्त्याः । तत् पौनःपुनिकमर्थनमृषीणां मनः पर्यवर्तयत् ।  द्वितीयं कारणमाह– निजदोषमवेक्ष्य । भर्तृमृतिहेतुत्वं निजदोषं  परिमार्जयितुमिदमनुगमनमुपकारि  स्यादित्यप्यवेक्ष्य ।  सहानुगमनम् । सहगमनमिति पर्याप्तम् । अनुगमनमिति पर्याप्तम् । अथापि सहानुगमनमित्याह । तेनेदं विनेयान् कृपया बोधयति– न केवलमिच्छामात्रम् । धर्मानुगुणं चैतत्सहगमनमासेति । तदपि कुतः? ऋषिभिः संवादकरणादेव । ते ह्यधिगतपरावरधर्माः । तस्या एव दोषमवेक्ष्य संवादं चक्रुः ॥ ५१ ॥ माद्र्या कृतौ स्वीकृतौ । आकृतौ आकारितौ वा । आहूतावित्येतत् ॥ ५२ ॥

---

१. **'एषां सर्वे–'** २.**'शुश्रुवुरृषि–'** ३. **'बहुशोऽर्थ–'**

पाण्डोः सुता मुनिगणैः पितृमेधमत्र चक्रुर्य्यथावदथ तेन सहैव माद्री ।
हुत्वाऽऽत्मदेहमुरु पापमदः कृतं च सम्मार्ज्य लोकमगमन्निजभर्त्तुरेव ॥ ५३ ॥

पाण्डुश्च पुत्रकगुणैः स्वगुणैश्च साक्षात् कृष्णात्मजः सततमस्य पदैकभक्तः ।
लोकानवाप विमलान् महितान् महद्भिः किं चित्रमत्र हरिपादविनम्रचित्ते ॥ ५४ ॥

पाण्डोः सुताश्च पृथया सहिता मुनीन्द्रैर्न्नारायणाश्रमत आशु पुरं स्वकीयम् ।
जग्मुस्तथैव धृतराष्ट्रपुरो मुनीन्द्राः वृत्तं समस्तमवदन्ननुजं मृतं च ॥ ५५ ॥

तूष्णीं स्थिते तु[१] नृपतौ तनुजे च नद्याः[२] क्षत्तर्य्युताऽप्त उरुमोदमतीव पापाः ।
ऊचुः सुयोधनमुखाः सह सौबलेन पाण्डोर्म्मृतिः किल पुरा तनयाः क्व तस्य ॥ ५६ ॥

न क्षेत्रजा अपि मृते पितरि स्वकीयैः सम्यङ् नियोगमनवाप्य भवाय योग्याः ।
तेषामितीरितवचोऽनु जगाद वायुराभाष्य कौरवगणान् गगनस्थ एव ॥ ५७ ॥

**अदः कृतं पापं सम्मार्ज्य निजभर्तुर्लोकमेवागमत् । अनेन 'वरं समाश्रिता पतिम्'(१२.२४) इत्येतदकृत-प्रायश्चित्त(विषय)मित्युक्तं भवति ॥ ५३ ॥ इन्द्रापराधाख्योरुदोषवत्त्वात् पाण्डोः कथं विमललोकप्राप्ति-रित्यत उक्तम्– पुत्रकगुणैरित्यादि ॥ ५४–५ ॥ पुरा किल । (तन)योत्पत्तेः पूर्वं किल ॥ ५६ ॥ नियोगमाज्ञाम् । भवाय पितृसन्ततये ॥ ५७–६३ ॥**

---

पितृभिर्मेधयति सङ्गमयतीति पितृमेधोऽन्त्येष्टिः । मेधृ सङ्गमे । अथेति प्रसङ्गान्तरारम्भे । तेन पाण्डोर्देहेन । सहैवेति निर्धारस्याचलतामाह । ततः निजभर्तुरेव लोकमगमत् । नान्यत्र क्वापि गत्वा पश्चाद्, किन्तु तदानीमेव भर्त्रा सहैव भर्तृ-लोकमगमदित्यर्थः । पत्युर्मृतिहेतुत्वादुरु पापम् । अदःकृतममुष्मिन् मनुष्यजन्मनि कृतम् । अद इति भिन्नं वा पदम् । सम्मार्ज्य निःशेषं मार्जयित्वा ॥ ५३–४ ॥ मुनीन्द्रैश्च सहिताः । **'जगाम हस्तिनपुरं षोडशाब्दो युधिष्ठिरः । भीमसेनः पञ्चदशो बीभत्सुर्वै चतुर्दशः । त्रयोदशाब्दौ च यमौ–'** [आ.प.१३४.२–३] इति च ॥ ५५ ॥ नृपतौ तु पुत्रपक्षपातिनि नृपतौ अनिर्णयतया तूष्णीं स्थिते सति । भीष्मे च क्षत्तरि उत विदुरे च उरुमोदमाप्ते सति । सह सुबलात्मजेन शकु-निना । मृतिः सन्न्यास इत्येके । **'सन्न्यस्य गतवान् पाण्डुस्तनयाः क्व नु तस्य वै'** इति भारतवचनं च ते स्वोक्तार्थे सवांदयन्ति । **'प्रजीवति पितरि'** इत्युत्तरवचनेन मृतिरेवाचार्यसम्मतोऽर्थ इति स्फुटमवगम्यत इत्यग्राह्यमेतत् । **'आहुः केचिन्न तस्यैते तस्यैत इति चापरे । यदा चिरमृतः पाण्डुः कथं तस्येति चापरे'** [आ.प.१.१४०] इति च ॥ ५६ ॥ पितरि

---

१. **'स्थिते च नृ–'** २. **'तनुजे द्युनद्याः'** इति क्वचित् । **'तनये च नद्याः'** इति च ।

**एते हि धर्म्मंमरुदिन्द्रभिषग्वरेभ्यो जाताः प्रजीवति पितर्य्युरुधामसाराः[१] ।**
**शक्याश्च नैव भवतां क्वचिदग्रहाय नारायणेन सततं परिरक्षिता यत् ॥ ५८ ॥**

**वायोरदृश्यवचनं परिशङ्कमानेष्वाविर्बभूव भगवान् स्वयमब्जनाभः ।**
**व्यासस्वरूप उरुसर्वगुणैकदेह आदाय [२]तानगमदाशु च पाण्डुगेहम् ॥ ५९ ॥**

**तत्स्वीकृतेषु सकला अपि भीष्ममुख्या [३]वैचित्रवीर्य्यसहिताः परिपूज्य सर्वान् ।**
**कुन्त्या सहैव जगृहुः सुभृशं तदाऽर्त्ता वैचित्रवीर्य्यतनयाः सह सौबलेन ॥ ६० ॥**

**वैचित्रवीर्य्यतनयाः कृपतो महास्त्राण्यापुश्च पाण्डुतनयैः सह सर्वराज्ञाम् ।**
**पुत्राश्च तत्र विविधा अपि बालचेष्टाः कुर्वत्सु वायुतनयेन जिताः समस्ताः ॥ ६१ ॥**

---

नियोगेन जातस्य पितृत्वेनाभिमते नियुक्ताया भर्तरि, मृते सति, तस्य क्षेत्रे भार्यायां जाता अपि सम्यक् विधिपूर्वकम्, स्वकीयैः कुलप्रमुखैः **'एतेन पुत्रमवाप्नुहि'** इति नियोजनमनवाप्य भवाय कुले भवनाय न योग्याः, यथा व्यभिचार-जाता इत्यर्थः । अवैधत्वसाम्यात् । धृतराष्ट्रस्तु सत्यवत्या भीष्मेण च नियोगमाप्य क्षेत्रे जात इति कुलान्तर्भावाय योग्य इति तेषामाशयः । वचोऽनु वचनानन्तरमेव । शकुनिरपि कौरवैः सह गणनीय इति सूचयितुं कौरवगणानित्याह । 'हे कौरवपक्षीयाः' इत्याभाष्याऽमन्त्र्य ॥ ५७ ॥ प्रकटं जीवतीति तत्रत्यानां सर्वमुनीनां प्रत्यक्षमेतदित्याह । उरुतेजः-साराः । अग्रहोऽस्वीकारः ॥ ५८ ॥ अदृश्यवचनम् । ननु सर्वाण्यपि वचनान्यदृश्यानि भवन्ति । न भोः । यस्य वक्ता न दृश्यते तददृश्यं वचनमुच्यते । वक्तृधर्मो वचनेष्वारोप्यते । भाषाभिज्ञा एवं भाषन्ते । तद् यथा दण्डान् प्रवेशय । परीक्ष्यापि स्वीकार्यं नवेति शङ्कमानेषु । उरवः परिपूर्णाः सर्वे गुणाः केवलमस्य देहः ॥ ५९ ॥ भीष्ममुख्या ये गगनभाषितादपि व्यासागमनादपि पूर्वमेव पाण्डवेषु विशश्वसुः । यः पूर्वं विश्वस्तव्यं वा नवेति निश्चेतुमप्रभवन् सम्भ्रमे पतितस्तेनापीदानीं विगतविचिकित्सेन वैचित्रवीर्येण सहिताः । अत एव तस्य भीष्मादिभ्यः पृथग् ग्रहणम् । यद्यपि मूलादर्शे 'वैचित्र्यवीर्यसहिताः' इति पठ्यते । स्खलनं स्यात् । अथवा, वैचित्र्यं चित्तवैचित्र्यं निर्धारापटुतया चलचित्तत्वं यस्य वीर्यं स्वभावसार इति तं परिहसति वाऽनेन प्रयोगवैचित्र्येण भगवानचार्यः । अत एव तस्य पृथग् ग्रहणमिति सुन्दरमेतदपि । तेन स्वीकृतेषु सत्सु पाण्डुतनयेषु । तं तन्निर्धारं वा परिपूज्य सर्वात्मना मानयित्वा । वनादागतान् सर्वानृषींश्च परिपूज्य, सर्वान् पार्थान् कुन्त्या सहैव परिपूज्य यथायोग्यं निर्व्याजं च सत्कृत्य । कुन्त्या सहैवेति कुन्तीमिव पाण्डवानपि तदा निःशङ्कं जगृहुरित्येवकारेणाऽह । जगृहुः । तदा वैचित्रवीर्यतनयाः सुभृशमतिवेलमार्ता बभूवुः ॥ ६० ॥ **'ततोऽधिजग्मुः सर्वे**

---

१. **'पितर्युरुधर्म्मसाराः'** २. **'तानविशदाशु'** ३. मूलादर्शे **'वैचित्र्यवीर्य–'** इति पठ्यते ।

**पक्कोरुभोज्यफलसन्नयनाय वृक्षेष्वारुढराजतनयानभिवीक्ष्य भीमः ।**
**पादप्रहारमुरुवृक्षतळे[१] प्रदाय साकं फलैर्विनिपतत्सु फलान्यभुङ्क्त ॥ ६२ ॥**

**युद्धे नियुद्ध उत धावन उत्प्लवे च वारिप्लवे च सहितान् निखिलान् कुमारान्[२] ।**
**एको जिगाय तरसा परमार्य्यकर्म्मा विष्णोः सुपूर्ण्णसदनुग्रहतः सुनित्यात् ॥ ६३ ॥**

**सर्वान् प्रगृह्य विनिमज्जति वारिमद्ध्ये**
**श्रान्तान् विसृज्य हसति स्म स विष्णुपद्याम् ।**
**सर्वानुदूह्य च कदाचिदुरुप्रवाहां**
**गङ्गां सुतारयति[३] सारसुपूर्ण्णपौंस्यः ॥ ६४ ॥**

**सारः श्रेष्ठः, सुपूर्णपौंस्यश्च । पौंस्यं बलम् ॥ ६४ ॥**

---

**ते धनुर्वेदं महारथाः । धृतराष्ट्रात्मजाश्चैव पाण्डवाः सह यादवैः । वृष्णयश्च नृपाश्चान्ये नानादेशसमागताः । कृपमाचार्यमासाद्य परमास्त्रज्ञतां गताः'** [आ.प.१४०.२४–५] । उभयेऽपि राजानो बभूवुः । केचित् सुराजानः । केचित् किंराजानः । तदेतत् सूचयन्निवाटजन्तं राजपदं प्रायुङ्क्त । केचित् सात्विका भीमप्रियाः । केचिद् राजसास्तटस्थाः । केचित् तामसा दुर्योधनानुगा इति विविधा अपि राजपुत्राः । तेषु विविधा अपि बालचेष्टाः कुर्वत्सु । अपिरभिव्याप्तौ । सर्वास्वपि क्रीडासु समस्ता अपि वायुतनयेन जिताः ॥ ६१ ॥ उरूणि बहूनि बृहन्ति च, स्वादुतया भोज्यानि च फलानि । उरूणि उत्कृष्टानि वा । उरुभिर्भोज्यानि वा । सन्नयनं उत्कृत्य पातनम् । सङ्गृह्य एकत्र नयनं वा । वृक्षेष्वारूढान् राज-तनयान् । उद्यानगतेषु वृक्षेषु, वृक्षाणां मध्ये आरूढराजतनयान् वृक्षानभिवीक्ष्येति वा । स्वाभीष्टमिदमिति वीक्ष्य । उरोर्महागात्रस्य वृक्षस्य तळे मूले । यथा फलानि पतेयुः, न मूलं भज्येत तथा प्रमायप्रमाय दानं प्रदानम् । शक्तिविगमेन नीचैः पतत्सु । प्रयत्याप्यप्रभुतया निरुपायतया पतत्सु ॥ ६२ ॥ सर्वाधिकमुत्प्लुत्य अनायासेन भूमाववतरणमुत्प्लवः । मण्डूकवदुत्प्लुत्य गमनं वा । परमार्यं परमपूज्यम् । परमैरपि पूज्यं च । आर्यकर्मा परं केवलमेको जिगायेति वा । सुपूर्णः सर्वजीवेभ्योऽधिकतया पूर्णः सन् सदाभावी चानुग्रहः । तदेव स्फुटमाह– सुनित्यात् , ऋजुयोगिनां सदा सर्वाधिकतया नियतादिति ॥ ६३ ॥ प्रगृह्य दृढं मुष्टिग्राहं गृहीत्वा । विनिमज्जति अगाधे गर्ते आ तळं मज्जति । वारिमध्ये विसृज्य हसति । उदूह्य अतिशयेनोदुह्य । अनूपममिति यथा । प्रायो दीर्घादिमेव ल्यपं वहतेः प्रतनाः पठन्ति । तथाहि बृहदारण्यके– **'व्यूह्य प्रत्यूह्यात्यक्रामत्'** इति । सुष्ठु अनायासेन तारयति । सर्वजीवेषु सारभूतं सर्वाधिकतया पूर्णं पौंस्यमस्य । स हि

---

१. **'–वृक्षतले'** २. **'च निखिलान् सहितान् कुमारान्'। 'सहितानखिलान् कुमारान्'** इति क्वचित् ।

३. **'स तारयति'**

**द्वेषं ह्युते नहि हरौ तमसि प्रवेशः प्राणे च तेन जगतीमनु तौ प्रपन्नौ ।**
**तत्कारणान्यकुरुतां परमौ करांसि देवद्विषां सततविस्तृतसाधुपौंस्यौ[1] ॥ ६५ ॥**

**दृष्ट्वाऽमितान्यथ करांसि मरुत्सुतेन नित्यं कृतानि तनया निखिलाश्च राज्ञाम् ।**
**तस्यामितं बलमुदीक्ष्य सदोरुवृद्धद्वेषा बभूवुरथ मन्त्रममन्त्रयंश्च ॥ ६६ ॥**

**येये हि तत्र नरदेवसुताः सुरांशाः प्रीतिं परां पवनजे निखिला अकुर्वन् ।**
**तांस्तान् विहाय दितिजा नरदेववंशजाता विचार्य्य वधनिश्चयमस्य चक्रुः ॥ ६७ ॥**

**जगतीं भुवमनुप्रपन्नौ । तत्कारणानि करांसि कर्माणि ॥ ६५–६ ॥ विहाय विना ॥ ६७–९ ॥**

---

बलदेवता । न हि जीवेषु ततोऽधिकबलः कश्चित् । अथ च यत् सतामुपकाराय भवति तत् सुपौंस्यम् । तत्रापि यत् विष्णुकार्याङ्गं तत् सारसुपौंस्यम् । तादृशं पौंस्यमस्य परिपूर्णमिति सारसुपूर्णपौंस्यः । पुंसो भावः पौंस्यम् । पुंस्त्वम् । पुंसु भवं वा । बलं पौरुषं धैर्यं च । **'का देवरं वशगतं कुसुमास्त्रवेगविस्रस्तपौंस्यमुशती न भजेत कृत्ये'** [४.२६. २६] इति भागवते । **'यस्मिन् विश्वानि पौंस्या'** [१.५.९] इत्यृग्वेदे । **'महत् तदस्य पौंस्यम्'** [१.८०.१०] इति च । पुंस अभिमर्दने । पुंसयति शत्रूनभिमर्दयतीति पुंसः पुमान् । पुंसस्य भावः पौंस्यमिति वा ॥ ६४ ॥ द्वेषं हीति हिर्हेतौ । येन हेतुना न तमसि प्रवेशः, तेन हेतुनेति । हरौ प्राणे च द्वेषमृते । नहि नैव । अनेनैव हिकारेण सर्वशास्त्र-सिद्धं चैतदित्याह । **'हि पादपूरणे हेतौ विशेषेऽप्यवधारणे । प्रश्ने हेत्वपदेशे च सम्भ्रमासूययोरपि'** इति मेदिनी । आद्यन्ताभ्यामर्थाभ्यामृते सर्वेऽप्यर्था यथायोगमत्र विवक्षिताः । नहि महान्तः पादपूरणाय व्यर्थं पदं निक्षिपन्ति । नहि महतां मनसि क्वचिदसूया पदं प्रसरति । तथाहि– हेतुविशेषावधारणान्यवगतानि । प्रश्ने यथा–तमसि प्रवेशो न भवति हि? हेत्वपदेशे यथा– जगतीमनुप्रपन्नौ हि । अनुप्रपन्नत्वादेव द्वेषो ववृध इति हेत्वपदेशः । द्वेषं हीति पूर्वावतारोदन्तस्मरण-जनितं सम्भ्रमणं चाऽह । अयमेव भगवत्पादस्य प्रयोगे विशेषः– यत्पादपूरणानि पदानि प्रयोगम्प्रयोगमर्थविशेषाना-विष्करोति । कोऽप्यन्यः सामान्यः कवयिता नेदृशं धैर्यमावहति । प्राकृतश्चेत् प्रबन्धा 'द्वेषादृते' इत्येव प्रायोक्ष्यत । देव-द्विषां जगतीप्रपत्तिमनु तावपि हरिप्राणौ जगतीं प्रपन्नौ तेषां देवद्विषां द्वेषकारणानि करांसि कर्माण्यकुरुताम् । **'आ विद्वाँ आह विदुषे करांसि'** [ऋ.सं.४.१९.१०] इति श्रुतिः । सर्वपरमो हरिः । जीवेषु परमः प्राणः । परा मा रमाऽपि यस्य भार्या स परमो हरिः । परा उत्तमा मा रमा यस्मात् स परमः प्राणः । सदातनं सर्वविषयं साधु सज्जनरक्षैकदीक्षं च पौंस्यं तयोः ॥ ६५ ॥ निखिला इति बहुलापेक्षया । अत एव **'निखिलाश्च'** इत्याह । नीचत्वे चः । नीचास्तामसा निखिला इत्यर्थः ॥ ६६ ॥ तदेव स्फुटमाह–सुरांशाः सात्विका नरदेवसुता निखिलाः प्रीतिमकुर्वन्निति । तान् विहाया-परे । अस्य भीमस्य ॥ ६७ ॥

---

१. **'-सारपौंस्यौ'** इति क्वचित् ।

अस्मिन् हते विनिहता अखिलाश्च पार्थाः
शक्यो बलाच्च न निहन्तुमयं बलाढ्यः ।
छद्मप्रयोगत इमं विनिहत्य वीर्य्यात्
पार्थं निहत्य निगळे[1] च विदध्महेऽन्यान् ॥ ६८ ॥

एवं कृते निहतकण्टकमस्य राज्यं दुर्य्योधनस्य हि[2] भवेन्न ततोऽन्यथा स्यात् ।
अस्मिन् हते निपतिते च सुरेन्द्रसूनौ शेषा भवेयुरपि[3] सौबलिपुत्रदासाः ॥ ६९ ॥

एवं विचार्य्य विषमुल्बणमन्तकाभं क्षीरोदधेर्म्मथनजं तपसा गिरीशात्[4] ।
शुक्रेण लब्धममुतः सुबलात्मजेन प्राप्तं प्रतोष्य मरुतस्तनयाय चादुः ॥ ७० ॥

सम्मन्त्र्य राजतनयैर्धृतराष्ट्रजैस्तद्[5] दत्तं स्वसूदमुखतोऽखिलभक्ष्यभोज्ये ।
ज्ञात्वा युयुत्सुगदितं बलवान् स भीमो विष्णोरनुग्रहबलाज्जरयाञ्चकार ॥ ७१ ॥

जीर्ण्णे विषे कुमतयः परमाभितप्ताः प्रासादमाशु विदधुर्हरिपादतोये ।
ज्ञात्वा युयुत्सुमुखतः स्वयमत्र चान्ते सुष्वाप मारुतिरमा धृतराष्ट्रपुत्रैः ॥ ७२ ॥

**अमुतः शुक्रात् ॥ ७० ॥ राजतनयैः सह । अखिलभक्ष्यभोज्ये मिश्रं कृत्वा ॥ ७१–२ ॥**

---

विविधं निगृह्य हतप्राया अन्ये पार्थाः । अयं तु न बलेन निगृह्य हन्तुं शक्यः । अतः विविधछद्मप्रयोगत एवेमं निकृत्या हत्वा, वीर्यादेव पार्थं च निगृह्य हत्वा ॥ ६८ ॥ अस्य अस्मदनुकूलस्य दुर्योधनस्य । अस्मिन् भीमे कथञ्चिद् हते, सुरेन्द्रसूनौ च निग्रहेण पतिते मृते सति । सौबली गान्धारी ॥ ६९ ॥ भीमाय कालकूटं विषमदादिति भारते पठ्यते– **'कालकूटं विषं तीक्ष्णं सम्भृतं रोमहर्षणम्'** [आ.प.१३७.४७] इति । समुद्रमथनजं किल कालकूटम् । तत् कथं दुर्योधन आप? आह–तपसा गिरीशात् । तपसा गिरीशं प्रतोष्य शुक्रेण गिरीशाल्लब्धम् । ननु गिरीशेन भुक्तं च जीर्णं च । तत् कथं शुक्राय ददौ? गीर्णमेव केवलम्, न पूर्णं जीर्णम् । अत एव विषकण्ठो बभूव, यथा पृदाकुर्विषदन्तः । अतः किञ्चिदवगीर्य ददौ । शक्तोऽयं गिरणे चावगिरणे चेति सूचयितुमेव गिरीशपदमुपादत्त । अमुतः शुक्रादमुं शुक्रं प्रतोष्य शकुनिना प्राप्तम् ॥ ७० ॥ स्वपक्षीयै राजतनयैः समेत्य मन्त्रयित्वा । दत्तं निक्षिप्तम् । भीमाय दत्तं च । विष्णोरनुग्रहबललब्धसहजबलवान् विषजरणबलवांश्च ॥ ७१ ॥ हरिपादतोये गङ्गातीरे । धृतराष्ट्रपुत्रैरमा सह । अत्र प्रासादे ।

---

१. **'निगडे च'** २. **'–धनस्य तु भवे–'** ३. **'–युरथ सौ–'**
४. **'तपसो गिरीशात्'** इति क्वचित् । ५. **'–राष्ट्रजैस्तु दत्तं स सूद–'**

दोषान् प्रकाशयितुमेव विचित्रवीर्य्यपुत्रात्मजेषु नृवरं प्रति सुप्तमीक्ष्य ।
बध्वाऽभिमन्त्रणदृढैरयसा कृतैस्तं पाशैर्विचिक्षिपुरुदे हरिपादजायाः ॥ ७३ ॥

तत् कोटियोजनगभीरमुदं विगाह्य भीमो विजृम्भणत एव विवृश्च्य पाशान् ।
उत्तीर्य्य सज्जनगणस्य विधाय हर्षं तस्थावनन्तगुणविष्णुसदातिहार्दः[१] ॥ ७४ ॥

तं वीक्ष्य दुष्टमनसोऽतिविपन्नचित्ताः[२] सम्मन्त्र्य भूय उरुनागगणानथाष्टौ ।
शुक्रोक्तमन्त्रबलतः पुर आह्वयित्वा पश्चात् सुपञ्जरगतान् प्रददुः स्वसूते ॥ ७५ ॥

दुर्य्योधनेन पृथुमन्त्रबलोपहूतांस्तत्सारथिः फणिगणान् पवनात्मजस्य ।
सुप्तस्य विस्तृत उरस्यमुचद् विशीर्ण्णदन्ता बभूवुरमुमाशु विदश्य नागाः ॥ ७६ ॥

**प्रतिसुप्तम्, अन्त इति शेषः ॥ ७३ ॥ अनन्तगुणविष्णुसदातिहार्दः । अनन्तगुणे विष्णौ सदा अतिहार्दं अतिभक्तिर्यस्यासौ तथोक्तः ॥ ७४ ॥ तं बन्धं छित्वोन्मज्जनम् । पुरः अग्रे ॥ ७५–७ ॥**

---

तेषु सुप्तेषु अन्ते स्वयं सुष्वाप । अन्ते निकटे च हरिपादतोयस्य । येन तेषामिष्टं सुकरं स्यात् । 'हरिपादतोये' इत्यनेनेदमाह– प्रियं चैतत् हरिपादभक्तस्य तस्य तत्तोयनिमज्जनमिति ॥ ७२ ॥ तेषु दोषान् प्रकाशयितुमेव सुष्वाप । प्रतिसुप्तं सुप्तप्रतिमम् । सुप्तमिवाऽत्मानं प्रत्याययन्तम् । प्रतीक्ष्य इति चान्वयः । विचित्रवीर्यपुत्रात्मजाश्च सुप्तमेनं प्रतीक्ष्य, सुप्तं च प्रतीक्ष्य हरिपादजाया उदे उदके । उदकपर्यायोऽयमुदशब्दः ॥ ७३ ॥ कोटियोजनगभीरमिति । योजनमिति यथासम्भवं योजनीयम् । यथा शतयोजनमुच्छ्रितं वृक्षमाचक्षते । कोटिशब्दश्च केवलं बहुत्ववचनः । अन्ये व्याचक्षते– **'तस्याः भागीरथ्याः कोटौ प्रान्तदेशे योजनगभीरं ह्रदं विगाह्य । दुरवगाह्यस्य ह्रदस्य कोटियोजनगभीरमिति सञ्ज्ञा वा'** इति । विजृम्भणत एव गात्रविनाममात्रत एव । तस्थौ तीरे । हार्दं स्नेहः । आधिक्यज्ञानपूर्वं सर्वाधिकं च हार्दमतिहार्दम् । भक्तिरिति यावत् । अनन्तगुणे विष्णौ सदा अतिहार्दं यस्य ॥ ७४ ॥ तं जलादुत्थितं भीमं वीक्ष्य । पूर्वं विषजरणेनैव विपन्नचित्ताः । अनेन चोद्गमनेन अतिविपन्नचित्ताः । विपन्नं विपद्ग्रस्तं विषण्णम् । दुष्टराजतनयैः भूयः पुनरपि समेत्य मन्त्रयित्वा । उरुविषा नागाः । सर्पाः सर्पन्तो भवन्ति । तेषु सफणा नागा उच्यन्ते । शेषमूलो नागगण एकः । वासुकिमूलो द्वितीयः । तक्षकमूलस्तृतीयः । कर्कोटकमूलश्चतुर्थः । पद्ममूलः पञ्चमः । महापद्ममूलः षष्ठः । शङ्खपालमूलः सप्तमः । महाशङ्खमूलोऽष्टम इत्यष्टावुरुविषा नागगणाः । अच्छिद्रत्वमेव पञ्जराणां सुष्ठुता नाम । स्वीये दुर्योधनसूते ॥ ७५ ॥ पृथवः सर्पाह्वाने दक्षत्वेन प्रथिता मन्त्राः ॥ ७६ ॥

---

१. **'–विष्णुपदातिहार्दः'** इति क्वचित् । २. **'–तिविषण्णचित्ताः'**

क्षिप्त्वा सुदूरमुरुनागवरानथाष्टौ[१] तद्वंशजान् स विनिहत्य पिपीलिकावत् ।
जघ्ने च सूतमपहस्तत एव भीमः सुष्वाप पूर्ववदनुत्थित एव तल्पात् ॥ ७७ ॥

तत् तस्य नैजबलमप्रमयं[२] निरीक्ष्य सर्वे क्षितीशतनया अधिकं विषेदुः ।
निश्वासतो [३]दर्शनादपि भस्म येषां भूयासुरेव भुवनानि च ते मृषाऽऽसन् ॥ ७८ ॥

दद्भिर्विदश्य न विकारममुष्य कर्तुं शेकुर्भुजङ्गमवरा अपि सुप्रयत्नाः ।
कस्यापि नेदृशबलं श्रुतपूर्वमासीद् दृष्टं किमु स्म तनयेऽपि हिरण्यकस्य ॥ ७९ ॥

[४]स्वात्मावनार्थमधिकां स्तुतिमेव कृत्वा विष्णोः स दैत्यतनयो हरिणाऽवितोऽभूत् ।
नत्वौरसं बलममुष्य स कृष्यते हि भृत्यैर्बलात् स्वपितुरौरसमस्य वीर्य्यम् ॥ ८० ॥

नैसर्ग्गिकप्रियमिमं[५] प्रवदन्ति विप्रा विष्णोर्न्नितान्तमपि सत्यमिदं ध्रुवं हि ।
नैवान्यथौरसबलं भवतीदृशं तदुत्साद्य एष हरिणैव सहैष नोऽर्त्थः ॥ ८१ ॥

**मृषा व्यर्था आसन् ॥ ७८ ॥ दृष्टं नाऽसीदिति किमु स्म । प्रह्लादे श्रुतत्वात् कुतः श्रुतपूर्वं नासीदित्यत उक्तम्– तनयेऽपीति । अपिशब्देन ईदृशं (बलं) श्रुतपूर्वं नाऽसीदित्यनुकृष्यते ॥ ७९ ॥ तदुपपादयति– आत्मेत्यादिना । अवितः रक्षितः । अमुष्य प्रह्लादस्य औरसं नैसर्गिकं न । कुतः? स प्रह्लादः स्वपितुः भृत्यैः बलात् कृष्यते हि यस्मात् तस्मादौरसं न । अस्य भीमस्य औरसं नैसर्गिकम् ॥ ८० ॥ नितान्तं**

अष्टसु गणेषु प्रधानानष्टौ बहुदूरं क्षिप्त्वा अप्रधानान् गणप्रविष्टान् तद्वंशजान् विनिहत्य । हस्तस्यापसारणमात्रतः । **'प्रबुद्धो भीमसेनस्तान् सर्वान् सर्पानपोथयत् । सारथिं चास्य दयितमपहस्तेन जघ्निवान्'** [आ.प.१३७.४५] इति च । अपहस्तत इत्यपसव्येन हस्तेन ईषत्प्रसारितेन हस्तपृष्ठेनेति च ॥ ७७ ॥ अप्रमयमप्रमेयमित्युक्तम् । अधिकप्रकर्षमयं वा । विशेषेण प्रकृष्टतमं विप्रतममितिवत् । दर्ृशनादपि इति दर्शनमात्रेण भयदानीति विश्लिष्य पपाठ । भुवनानि च लोका अपि, न केवलं लोकिनः । ते च तेऽपि मृषाऽऽसन् ॥ ७८ ॥ दद्भिरिति दन्तैः । **'पद्-दत्..... शस्प्रभृतिषु'** [अ.सू.६.१.६३] इति स्मरणात् शस्प्रभृतिषु प्रत्ययेषु परतः दन्तस्य दत् इत्येष आदेशः । न दृष्टमिति किमु? हिरण्यकस्य तनये प्रह्लादेऽपि न श्रुतपूर्वमीदृशं बलम् ॥ ७९ ॥ अमुष्य प्रह्लादस्य न त्वौरसं सहजम् । अस्य भीमस्य वीर्यमौरसम् ॥ ८० ॥ विष्णोर्नितान्तं सर्वाधिकतया निसर्गतश्च प्रियम् । निर्व्याजप्रेमास्पदम् । विप्रा विशेषज्ञाः । ध्रुवं निश्चितम् ।

१. **'सुदूर उरुनागगणानथाष्टौ'** २. **'–मप्रतिमं नि–'**

३. **'दर्ृशनादपि'** इति विश्लिष्य पठनीयम् । ४. **'आत्मावनार्थ–'** इति वे.ती. पाठ इति भाति ।

५. **'नैसर्ग्गिकं प्रिय–'** । **'नैसर्ग्गिकं प्रियममुम्'** इति **'नैससर्ग्गिकप्रियममुम्'** इति च कचित् ।

कृष्णः किलैष च हरिर्य्यदुषु प्रजातः सोऽस्याऽश्रयः कुरुत तस्य बहु प्रतीपम् ।
सम्मन्त्र्य चैवमतिपापतमा नरेन्द्रपुत्रा हरेश्च बहु चक्रुरथ प्रतीपम् ॥ ८२ ॥

तैः प्रेरिता नृपतयः पितरश्च तेषां साकं बृहद्रथसुतेन हरेः सकाशम् ।
युद्धाय जग्मुरमुनाऽष्टदशेषु युद्धेष्वत्यन्तभग्नबलदर्प्पमदा निवृत्ताः ॥ ८३ ॥

तेनाऽगृहीतगजवाजिरथा[१] नितान्तं शस्त्रैः परिक्षततनूभिरलं वमन्तः ।
रक्तं विशस्त्रकवचध्वजवाजिसूताः स्रस्ताम्बराः श्लथितमूर्द्धजिनो निवृत्ताः ॥ ८४ ॥

एवं बृहद्रथसुतोऽपि सुशोच्यरूप आर्त्तो ययौ बहुश एव पुरं स्वकीयम् ।
कृष्णेन पूर्णबलवीर्यगुणेन मुक्तो जीवेत्यतीव विजितः श्वसितावशेषः ॥ ८५ ॥

एवं गतेषु बहुशो नतकन्धरेषु राजस्वजोऽपि मधुरां स्वपुरीं प्रविश्य ।
रामेण सार्द्धमखिलैर्य्यदुभिः समेतो रेमे रमापतिरचिन्त्यबलो जयश्रीः ॥ ८६ ॥

व्यर्थोद्यमाः पुनरपि स्म सधार्त्तराष्ट्रा भीमं निहन्तुमुरुयत्नमकुर्वताज्ञाः ।
राज्ञां सुतास्तमखिलं स मृषैव कृत्वा चक्रे जयाय च दिशां बलवान् प्रयत्नम् ॥ ८७ ॥

**नैसर्गिकप्रियम् । इदं विप्राणां वचनम् । ध्रुवं सत्यं सर्वथा सत्यम् । तत् तस्मात् । स एष नोऽर्थः । निश्चितोऽर्थः ॥ ८१ ॥ वैकुण्ठे स्थितो हरिः कथमुत्साद्यत इत्यत आह—कृष्ण इति । एष कृष्णो हरिः किल ॥ ८२–५ ॥ जयश्रीः जये श्रीर्यस्य स तथोक्तः ॥ ८६–७ ॥**

---

तत् तस्मात् एष भीम उत्साद्यः हरिणा सहैव । एषः हरिभीमयोरुत्सादो नः परमप्रयोजनम् ॥ ८१ ॥ स कृष्णः अस्य भीमस्याऽश्रयः ॥ ८२ ॥ अष्टौ वा दश वा अष्टदशानि । तेषु युद्धेषु । नत्वष्टादशसु । इतः परमपि भावित्वात् युद्धानाम् । वक्ष्यति हि षोडशेऽध्याये–**'भूय एवाखिलैश्च नृपैर्युक्तो मागधो योद्धुकामः'** [१] इति, **'पुनर्युद्धं बहुशः केशवेन कृत्वा जितः'** [२७] इति च ॥ ८३ ॥ आगृहीताः निगृहीताः स्वायत्तीकृताश्च । शस्त्रैः परितः सर्वत्र क्षततनूभिरपि, न केवलम्, मुखेन रक्तं वमन्तः ॥ ८४–८५ ॥ जयेन सर्वाऽपि शत्रूणां श्रीरेनं श्रयति स्म ॥ ८६ ॥ बलवानष्टादशाब्दश्च भीमः ॥ ८७ ॥

---

१. '–हीतरथवाजिगजा नि–'

प्राचीं दिशं प्रथममेव जिगाय पश्चाद् याम्यां जलेशपरिपालितया सहान्याम् ।
यौ तौ पुरातनदशाननकुम्भकर्णौ मातृष्वसातनयतां च गतौ जिगाय ॥ ८८ ॥

[1]पूर्वस्तयोर्हि दमघोषसुतः प्रजातः प्राहुश्च यं[2] नृपतयः शिशुपालनाम्ना ।
अन्यं वदन्ति च करूशनृपं तथाऽन्य[3]मातृष्वसातनयमेव च दन्तवक्रम् ॥ ८९ ॥

जित्वैव तावपि जिगाय च पौण्ड्रकाख्यं शौरेः सुतं सुतमजैदथ भीष्मकस्य ।
यः पूर्वमास दितिजो नरहेल्वलाख्यो [4]रुग्मीति नाम च बभूव स कुण्डिनेशः ॥ ९० ॥

**अन्यामुत्तराम् । यौ पुरातन(दशानन)कुम्भकर्णौ मातृष्वसातनयतामुपगतौ (तौ) च जिगाय ॥ ८८ ॥ तयोः रावणकुम्भकर्णयोः पूर्वमग्रजम् । तथाऽन्यं दन्तवक्रं वदन्ति । अन्यमातृष्वसातनयमित्यनेनोभयोरेकोदरत्वं निवारितम् ॥ ८९–९० ॥**

---

जलेशपरिपालितया प्रतीच्या सहान्यामुदीचीम् । मातृष्वसा कुन्तीभगिनी श्रुतश्रवाः श्रुतदेवा च । मातृष्वसुस्तनयौ शिशुपालो दन्तवक्रश्च । ननु कथं तर्हि मातृष्वसातनयौ? यतः टाबन्तमपि पदं परावरविद ऋषयः पठन्तीत्युक्तम् । दर्शितश्च प्रयोगः । **'पितृष्वसायाः पुत्रो मे सम्बन्धं नार्हति द्विषाम्'** [आ.प.२४५.१३] इति, **'पितृष्वसामातुलजौ भ्रातरावपराजितौ'** [क.प.३४.१३] इति च । स्वात् स्वजनकादेव गर्भात् सरतीति स्वसा । तदा चैतद्दन्तं पदम् । सुपूर्वादस्यतेः ऋन्प्रत्यय इति पाणिनीयाः । श्वसितीति स्वसेति दुर्गसिंहः । श्वसतेः ऋन् । स्वे स्वीय एव गर्भे सस्ति स्माशेतेति च स्वसा । अत्र च स्वसेत्यादन्तम् ॥ ८८ ॥ तयोः रावणकुम्भकर्णयोः पूर्वः रावणः, तयोः मातृष्वसातनययोः पूर्वः सन् दमघोषसुतः प्रथितो जातः । दमितघोषो दमघोषो बभूव । अन्यं कुम्भकर्णं करूशनृपं वदन्ति । शिशूनिव प्रजाः पालयत्विति पिता शिशुपाल इति नाम चकार । दन्ता वक्रा आसन्नस्येति दन्तवक्र इति जना जगदुः । दमितवक्रोऽयमस्त्विति पिता नाम चकार । अयमुदन्तवक्रो बभूव । कीर्यत इति करूशो नाम जनपदः । किरतेरुशन् । केन आनन्देन रूशो दीप्तो वा । मूर्धन्यान्तं करूषपदं पठन् कृधातोरूषन्प्रत्ययं च विदधत् [स.कं.२.३.१६६] भोजो भ्रान्तः ॥ ८९ ॥ पौण्ड्रकाख्यं पुण्ड्रदेशपं वासुदेवम् । तदेवाऽह–शौरेः वसुदेवस्य सुतमिति । यत्र पुण्ड्रा इक्षवः प्रचुरं रोहन्ति स पुण्ड्रदेशः । यत्रत्यान् गुडप्रचुरत्वाद् गौडानाहुः । यं च देशं गौडम् । त एव वङ्गन्तीति वङ्गा अप्युच्यन्ते । वगि गतौ । तेषामयं कुत्सितो राजा पौण्ड्रको भवति । सर्वखण्डनपराः पुण्डा नास्तिका रमन्तेऽत्रेति च पुण्ड्रदेशः । पुडि खण्डने । तेषामयं पौण्ड्रो राजा । अजैत् अजयत्, अजैषीद् वा । अक्षरलोपेन जये क्षिप्रतामाह । **'उद्यन् सूर्य उर्विया ज्योतिरश्रेत्'** [ऋ.सं.१.१२४.१] इत्यादिवत् । इल्वलाख्यः । इलतीति इल्वलः । इल स्वप्नक्षेपणयोः । इलतेर्वलच् प्रत्यय इति वैयाकरणाः । वस्तुतस्तु

---

१. **'पूर्वं तयोर्हि दमघोषसुतं प्रजातम्'** इति वे.ती. पाठ इति भाति । २. **'तम्'** इति क्वचित् ।
३. **'तथाऽन्यं मातृ–'** इति क्वचित् । ४. **'रुक्मीति'**

भागेत एव तनयस्य स एव वह्नेर्नाम्ना शुचेः स तु पिताऽस्य हि मित्रभागः ।
राह्वंशयुक् तदनुजौ क्रथकैशिकाख्यौ भागौ तथाऽग्निसुतयोः पवमानशुन्ध्व्योः[१] ॥ ९१ ॥

बन्धोर्न्निजस्य तु बलं सुपरीक्षमाणः शल्योऽपि तेन युयुधे विजितस्तथैव ।
भीमो जिगाय युधि वीरमथैकलव्यं सर्वे नृपाश्च विजिता अमुनैवमेव ॥ ९२ ॥

तद्बाहुवीर्य्यपरिपालित इन्द्रसूनुः शेषान् नृपांश्च समजैद् बलवानयत्नात् ।
साल्वं च हंसडिभकौ[२] च विजित्य भीमो नागाह्वयं पुरमगात् सहितोऽर्ज्जुनेन[३] ॥ ९३ ॥

**वह्नेः प्रधानवह्नेस्तनयस्य नाम्ना शुचेः भागेतः, अंशयुक् । अस्य स पिता भीष्मकः मित्रभागः मित्रस्य देव(स्यां)शः ॥ ९१–५ ॥**

---

इलन् वलत इतील्वलः । वल संवरणे । प्रह्लादानुजस्य ह्लादस्यायं तनयः । वल्कलस्य पिता । **'ह्लादस्य धमनिर्भार्याऽसूत वातापिमिल्वलम् । योऽगस्त्यायाप्यतिथये पेचे वातापिमिल्वलः'** [६.१८.१५] इति भागवते । **'इल्वलस्य सुतो घोरो वल्कलो नाम दानवः'** [१०. ९६.२६] इति च । वल्कलमर्वाचीना बल्वलमाहुः । सोऽयमिल्वलो वातापिं मेषं विधायागस्त्याय पेचे । अगस्त्यस्तं स्वोदरे जरयामास । कुपितश्चेल्वलं भस्मसाच्चकार । कथं नरहा? **'ब्रह्मभ्रूणवृत्रेषु क्विप्'** [अ.सू.३.२.८७] इति ब्रह्मादिषु त्रिष्वेव हन्तेः क्विपो विधानात् । सत्यं लोके त्रिष्वेव । छन्दसि त्वन्यत्रापि भवति मातृहेति पितृहेति । अत एवोत्तरं सूत्रं पपाठ–**'बहुलं छन्दसि'** [८८] इति । वस्तुतस्तु ब्रह्मादिष्वेवेति न नियमः । किन्तु ब्रह्मादिषु हन्तेर्भूतकाले क्विबेव, नान्यः प्रत्ययः इत्यपि शक्यं व्याख्यातुम् । तेन मधुहा नरहेत्यादयः लोकेऽपि युज्यन्ते । कुण्डिनेशः । कुण्डं जलाधारः । बहुकुण्डि नगरं कुण्डिनमाहुः । कुण्डयति शत्रूनिति च कुण्डिनम् । कुडि भेदने । रुग्मी स्वरूपतः इल्वलः, प्रधानवह्नेस्तनयस्य शुचेर्भागेतः अंशेनाविष्टश्च । अस्य पिता भीष्मकः स्वरूपतो मित्रांशः । राहुणाऽऽविष्टश्च । राहुग्रस्त इव सूर्यः पिहितवीर्यः । पावकः पवमान शुचिरित्यग्नितनयास्त्रयः । तत्र शुची रुग्मिणमाविवेश । तेन रुग्मी कृष्णस्यालो बभूव । अन्यौ द्वावग्नितनयौ तु क्रथकैशिकौ नाम भीष्मकानुजौ भूत्वा जज्ञतुरिति । तत्र पवमानः क्रथः । पावकः कैशिकः । पावकस्य नामान्तरं शुन्ध्युरिति । शुन्धतेर्युस् । **'जनिमनियजिशुन्धिदसिभ्यो युस्'** [स.कं.२.१] इति हि भोजः । **'पवमानशुन्ध्योः'** इति पठन्तो भ्रान्ताः । नहि शुन्धिरिति नाम पावकस्य क्वचित् पठ्यते । क्रमणात् करणाद् वा क्रथः । शोभनकेशपाशः कैशिकः ॥ ९०–९१ ॥ सुखेन परीक्षमाणः । किञ्चिदिव तेन कदनं कृत्वा । तथैव सुखेन विजितः । एवमेव क्षिप्रमयत्नतश्च ॥ ९२ ॥ समजैत् समूह्य अजयत् । सालवन्तं देशं साल्वमाहुः । तस्य राजा ब्रह्मदत्तः, तत्सुतः साल्वः । हंसडिभकौ च पत्न्यन्तरजातौ तत्सुतावेव । हंसडिभिकाविति पठन्तः शोच्याः । हन्ति शत्रूनिति हंसः । हन्तुं सरति वा । डयत इति डिभकः । डयमानो भाति वा ॥ ९३ ॥

---

१. **'–शुन्ध्योः'** इति पाठः प्रामादिकः । २. **'हंसडिभिकौ'** इति च प्रामादिकः पाठः । ३. **'सहितोऽनुजेन'** इति क्वचित् ।

तद्बाहुवीर्य्यमथ वीक्ष्य मुमोद धर्म्मसूनुः समातृयमजो विदुरः सभीष्मः ।
अन्ये च सज्जनगणाः सहपौरराष्ट्राः श्रुत्वैव सर्वयदवो जहृषुर्न्नितान्तम् ॥ ९४ ॥

कृष्णः सुयोधनमुखाक्रममाम्बिकेयं जानन् स्वपुत्रवशवर्त्तिनमेव गत्वा ।
श्वाफल्किनो गृहममुं धृतराष्ट्रशान्त्यै गन्तुं दिदेश गजनाम पुरं परेशः[१] ॥ ९५ ॥

सोऽयाद् गजाह्वयममुत्र विचित्रवीर्य्यपुत्रेण भीष्मसहितैः कुरुभिः समस्तैः ।
सम्पूजितः कतिपयानवसच्च मासान् ज्ञातुं हि पाण्डुषु मनःप्रसृतिं कुरूणाम् ॥ ९६ ॥

ज्ञात्वा स कुन्तिविदुरोक्तित आत्मना च मित्रारिमद्ध्यमजनांस्तनयेषु पाण्डोः ।
विज्ञाय पुत्रवशगं धृतराष्ट्रमञ्जः साम्नैव भेदसहितेन जगाद विद्वान् ॥ ९७ ॥

पुत्रेषु पाण्डुतनयेषु च साम्यवृत्तिः कीर्त्तिं च धर्म्ममुरुमेषि तथाऽर्थकामौ ।
प्रीतिं परां त्वयि करिष्यति वासुदेवः साकं समस्तयदुभिः सहितः सुराद्यैः ॥ ९८ ॥

धर्म्मार्थकामसहितां च विमुक्तिमेषि तत्प्रीतितः सुनियतं विपरीतवृत्तिः ।
यास्येव[२] राजवर तत्फलवैपरीत्यमित्थं वचो निगदितं तव कार्ष्णमद्य ॥ ९९ ॥

**मनःप्रसृतिं मनःप्रवृत्तिम् ॥ ९६ ॥ अञ्जः अञ्जसा ॥ ९७–८ ॥ कार्ष्णं कृष्णेनोक्तम् ॥ ९९–१०० ॥**

---

तस्य तयोर्वा बाहुवीर्यम् । तत् तादृशमनुपममनुजयोर्बाहुवीर्यमिति वा । मात्रा, यमौ यमळौ जायेते इति, यमजाभ्यां माद्रीतनयाभ्यां च सहितः । धर्मसूनुर्यमज इति पुनरुक्तवदाभासयति ॥ ९४ ॥ सुयोधनमुखैराक्रम आक्रमणं यस्य तम् । सुयोधनादिभिराक्रान्तमतिं बलेन च स्वायत्तीकृतम् । अत एव सर्वात्मना स्वपुत्रवशवर्तिनम् । अथच दुर्योधनेन मुखेन आ समन्तात् क्रमो यस्य । यत्किञ्चित् विवक्षति दुर्योधनमुखेन विवक्षति । अथ दुर्योधनमुखं दृष्ट्वा विवक्षति । यत्किञ्चित् चिकीर्षति दुर्योधनमुखेन चिकीर्षति; अथ दुर्योधनमुखं दृष्ट्वा चिकीर्षति । अथच नास्ति क्रमः धर्ममार्गे क्रमणं येषां तेऽक्रमाः । सुयोधनमुखाः अक्रमाः येन, यस्य दौर्बल्येन ताटस्थ्येन प्रोत्साहेन च, स सुयोधनमुखाक्रमस्तम् । श्वफल्कतनयस्याक्रूरस्य गृहं गत्वा । दिदेश आदिदेश सन्दिदेश च ॥ ९५–६ ॥ आत्मना च स्वयं चावलोक्य अञ्जस्तत्वतो ज्ञात्वा ॥ ९७ ॥ साम्ये साम्येन वा वृत्तिर्यस्य तादृशः । उरुं कीर्तिं च । तथा उरू अर्थकामौ च ॥ ९८ ॥ कार्ष्णं

---

१. **'रमेशः'** इति क्वचित् । २. **'यासे च'** इति क्वचित् ।

**इत्थं समस्तकुरुमद्ध्य उपात्तवाक्यो राजाऽपि पुत्रवशगो वचनं जगाद ।**
**सर्वं वशे भगवतो न वयं स्वतन्त्रा भूभारसंहृतिकृते स इहावतीर्ण्णः ॥ १०० ॥**

**एतन्निशम्य[1] वचनं स तु यादवोऽस्य ज्ञात्वा मनोऽस्य कलुषं तव नैव पुत्राः ।**
**इत्यूचिवान् सह मरुत्तनयार्ज्जुनाभ्यां प्रायात् पुरीं च सहदेवयुतः स्वकीयाम् ॥ १०१ ॥**

**ज्ञानं तु भागवतमुत्तममात्मयोग्यं भीमार्ज्जुनौ भगवतः समवाप्य कृष्णात् ।**
**तत्रोषतुर्भगवता सह युक्तचेष्टौ सम्पूजितौ यदुभिरुत्तमकर्म्मसारौ ॥ १०२ ॥**

**प्रत्युद्यमो भगवताऽपि[2] भवेद् गदायाः शिक्षा यदा भगवता क्रियते नचेमम्[3] ।**
**कुर्य्यामिति स्म भगवत्समनुज्ञयैव रामादशिक्षदुरुगायपुरः स भीमः ॥ १०३ ॥**

**तव पुत्रा नैव (न) सन्त्येव । निश्चितनाशा इत्यर्थः ॥ १०१–३ ॥**

---

कृष्णसन्दिष्टम् ॥ ९९ ॥ उपात्तवाक्यः स्वीकृतकृष्णसन्देशः ॥ १०० ॥ अस्य वचनं निशम्य, अस्य मनः कलुषं ज्ञात्वा । कालुष्ये तात्पर्यमवधारयितुं द्विराह–अस्यास्येति ॥ १०१ ॥ आत्मयोग्यं स्वस्वयोग्यम् । भीमयोग्यं भीमः । अर्जुनयोग्यमर्जुनः । उत्तमेन कर्मणा सारौ श्रेष्ठौ । सार इति बलं वा । उत्तमकर्माणावुत्तमबलौ च ॥ १०२ ॥ यदा भगवता गदायाः शिक्षा क्रियते तदा प्रतियोगिना भगवता सह गदाप्रहारायोद्यमो भवेदेव । नह्येकमुखेन प्रहारेणाभ्यासः सम्भवति । नचेमं प्रत्युद्यममहं कुर्यामिति कृतनिश्चयो भीमः । **'असियुद्धे गदायुद्धे रथयुद्धे च पाण्डवः । सङ्कर्षणादशिक्षद् वै शश्वच्छिक्षां वृकोदरः'** [आ.पा.१५१.५] इति च । भगवतः समनुज्ञया । सञ्ज्ञया चानुज्ञया च । भगवदाकूत-ग्रहणं सञ्ज्ञा । रामादशिक्षत् । रामगताच्छुक्लकेशादेव । आह च स्वयमेवान्यत्र–**'रामोऽखिलानन्दतनुः स एव भीमोऽति-पापेषु दुरन्तवीर्यः'** इति । अशिक्षदिति परस्मैभाषयेदमाह– केवलं परस्य परमात्मनः प्रीत्यर्थमिदं शिक्षणम् । नतु धनुर्विद्या-जिज्ञासयेति । तथाहि वार्तिककारः–**'शिक्षेर्जिज्ञासायाम्'** [अ.सू.१.३.२१] इति जिज्ञासायामर्थे शिक्षतेरात्मनेभाषा-माह । अत्र विवदन्ते वैयाकरणाः । 'शिक्ष विद्योपादाने' इत्यस्य धातोर्जिज्ञासायामर्थे नियमार्थमिदं वचनम् । अन्यत्रार्थे शिक्षतीत्येव' इति क्षीरस्वाम्यादयः । अन्ये तु 'शकेर्धातोः सनन्तस्य जिज्ञासायामर्थेऽत्राऽत्मनेभाषत्वं विधीयते–शक्तुमिच्छति शिक्षते' इत्याहुः । प्रथमपक्षे शिक्षधातो रूपमशिक्षदिति । विनाऽपि जिज्ञासां भगवदनुग्रहार्थं केवलं विद्यामुपा-दत्तेत्यर्थः । अयमेव पक्षो वार्तिकाभिमत इति । द्वितीयपक्षे शकेः सनन्तस्येदं रूपम्– शक्तुमैच्छदशिक्षदिति । केवलं लोकसङ्ग्रहार्थं रामादधीत्य गदायुद्धे सामर्थ्यं सम्पादयितुमियेष, नासमर्थतया, नापि जिज्ञासयेति ॥ १०३ ॥

---

१. **'एवं निशम्य'** २. **'भगवतोऽपि'** इति कचित् । ३. **'नचैनम्'** इति च ।

**रामोऽपि शिक्षितमरीन्द्रधरात् पुरोऽस्य भीमे ददावथ वराणि हरेरवाप ।**
**अस्त्राणि शक्रतनयः सहदेव आर[1] नीतिं तथोद्धवमुखात् सकलामुदाराम् ॥ १०४ ॥**

**कृष्णोऽथ चौपगविमुत्तमनीतियुक्तं सम्प्रेषयन्निदमुवाच ह गोकुलाय ।**
**दुःखं विनाशय वचोभिररे मदीयैर्नन्दादिनां विरहजं मम चाऽशु याहि ॥ १०५ ॥**

**मत्तो वियोग इह कस्यचिदस्ति नैव यस्मादहं तनुभृतां निहितोऽन्तरेव ।**
**नाहं मनुष्य इति कुत्रच वोऽस्तु बुद्धिर्ब्रह्मैव निर्म्मलतमं प्रवदन्ति मां हि ॥ १०६ ॥**

**पूर्वं यदा ह्यजगरो निजगार नन्दं सर्वे न शेकुरथ तत्प्रविमोक्षणाय ।**
**मत्पादसंस्पर्शतः[2] स तदाऽतिदिव्यो विद्याधरस्तदुदितं निखिलं स्मरन्तु ॥ १०७ ॥**

**आर लेभे ॥ १०४–५ ॥ अन्तरेव हृद्येव ॥ १०६ ॥ विद्याधरः, अभूदिति शेषः ॥ १०७–१० ॥**

---

अरीन्द्रधरात् कृष्णादेव शिक्षितं अस्य कृष्णस्यैव पुरः तटाकजलेन तटाकेऽर्घ्यप्रदानमिव भीमे ददौ । वराण्यस्त्राणि । आर प्राप । ऋ गतौ ॥१०४॥ औपगविमुपगवसुतमुद्धवम् । उत्तमनीतियुक्तमौपगविम् । उत्तमनीतियुक्तमिदमुवाच । नन्दादीनाम् । दीर्घलोपेन विरहजमुत्साहलोपमाह । नन्दं प्रमुखे आददत इति नन्दादिन इति वा । मम विरहजं दुःखम् ॥ १०५ ॥ 'कस्यचिदस्ति' इति स्वयमेव प्रश्नमुत्थाप्य 'नैवास्ति' इत्युत्तरमाह । अथच 'कस्यचिन्नैवास्ति' इति सहजान्वयः । प्रवदन्ति वेदाद्यानि शास्त्राण्यृषयश्च ॥ १०६ ॥ पूर्वं यदा । एकदा गोपाला देवयात्रामिषेणाम्बिकावनं प्रययुः । तत्र सरस्वत्यां स्नात्वा देवं पशुपतिं देवीमम्बिकां चाऽनर्चुः । तां रजनीं तत्रैव सरस्वतीतीरे न्यूषुः । अथ यदृच्छयाऽऽगतः कश्चिदजगरस्तत्र शयानं नन्दमग्रसिष्ट । स चुक्रोश–'कृष्णाऽ मोचय माम्' इति । आक्रन्दितेन सहसोत्थिता गोपालाः सम्भ्रान्तास्तमुल्मुकैर्विव्यधुः । अलातैर्हन्यमानोऽपि नामुञ्चत्तमजगरः । अथ भगवान् कृष्ण आजगाम । आगत्य च तं पदा पस्पर्श । भगवत्पादस्पर्शमात्रेण स हताशुभः, हित्वाऽऽजगरं वपुः, दिव्यरूपधरो बभूव । तं भगवानपृच्छत्–'को भवान्?' इति । स च विद्याधरः–**'अहं विद्याधरः कश्चित् सुदर्शन इति श्रुतः । श्रिया स्वरूपसम्पत्त्या विमानेनाचरं दिशः । ऋषीन् विरूपानङ्गिरसः प्राहसं रूपदर्पितः । तैरिमां प्रापितो योनिं प्रलब्धः स्वेन पाप्मना । शापो मेऽनुग्रहायैव कृतस्तैः करुणात्मभिः । यदहं लोकगुरुणा पादस्पृष्टो हताशुभः । तं त्वाऽहं भवभीतानां प्रपन्नानां भयापहम् । आपृच्छे शापनिर्मुक्तः पादस्पर्शादमीवहन् । प्रपन्नोऽस्मि महायोगिन् महापुरुष सत्पते । अनुजानीहि मां कृष्ण सर्वलोकेश्वरेश्वर'** [भाग.१०.३२.१२–६] इति निवेद्य भगवन्तमनुज्ञाप्य दिवं यया-

---

१. **'आप'** इति क्वचित् ।
२. **'–संस्पर्‌शतः'** इति विश्लिष्य पठनीयम् ।

**पूर्वं स रूपमदतः प्रजहास विप्रान् नित्यं तपःकृशतराङ्गिरसो विरूपान् ।**
**तैः प्रापितः सपदि सोऽजगरत्वमेव मत्तो निजां तनुमवाप्य जगाद नन्दम् ॥ १०८ ॥**

**नायं नरो हरिरयं परमः परेभ्यो विश्वेश्वरः सकलकारण आत्मतन्त्रः ।**
**विज्ञाय चैनमुरुसंसृतितो विमुक्ता यान्त्यस्य पादयुगळं[1] मुनयो विरागाः ॥ १०९ ॥**

**नन्दं यदा च जगृहे वरुणस्य दूतस्तत्रापि मां जलपतेर्गृहमाशु यातम्[2] ।**
**सम्पूज्य वारिपतिराह विमुच्य नन्दं नायं सुतस्तव पुमान् परमः स एषः ॥ ११० ॥**

**सन्दर्शितो ननु मयैव विकुण्ठलोको गोजीविनां स्थितिरपि प्रवरा मदीया ।**
**मानुष्यबुद्धिमपनेतुमजे मयि स्म तस्मान्मयि स्थितिमवाप्य शमं प्रयान्तु ॥ १११ ॥**

**शमं दुःखशान्तिम् ॥ १११–२ ॥**

इति श्रीमहाभारततात्पर्यनिर्णयटीकायां श्रीवेदाङ्गतीर्थभट्टारकविरचितायां
तात्पर्यदीपिकायां चतुर्दशोऽध्यायः

—०—

विति कथा । अजगरस्य बलवत्प्रग्रहं विभिद्य मोक्षणं प्रविमोक्षणम् । उल्मुकादिप्रक्षेपेणाजगरं विनाश्य वा मोक्षणं प्रविमोक्षणम् । संस्पर्शतः ईषत्स्पर्शमात्रतः ॥ १०७ ॥ नित्यं नियतं क्रियमाणेन तपसा कृशतरान् ॥ १०८ ॥ भगवदपरोक्षमन्तरा तर्तुमशक्यता संसृतेरुरुता नाम ॥ १०९ ॥ नन्दं यदा च जगृहे । इयमत्र कथा– एकदा एकादश्यां निराहारो नन्दः द्वादश्यां स्नातुं कालिन्द्या जलमाविशत् । निशि जलं प्रविष्टं तं वरुणस्य दूतः कश्चिदसुरो जग्राह । गोपालास्तमपश्यन्तः कृष्णरामेति चुक्रुशुः । तदुपश्रुत्य भगवान् वरुणान्तिकं जगाम । तं वरुणस्तुष्टाव–**'नमस्तुभ्यं भगवते ब्रह्मणे परमात्मने । न यत्र श्रूयते माया लोकदृष्टिविडम्बना । अजानता मामकेन मूढेनाकार्यवेदिना । आनीतोऽयं तव पिता तत् प्रभो क्षन्तुमर्हसि'** [भाग.१०.२६.६–७] इति । एवं प्रसादितः कृष्णो भगवान् नन्दमादाय व्रजमाजगामेति ॥ ११० ॥ सन्दर्शितो ननु मयैव विकुण्ठलोकः । **'दर्शयामास लोकं स्वं गोपानां तमसः परम् । सत्यं ज्ञानमनन्तं यद् ब्रह्म ज्योतिः सनातनम् । यद्धि पश्यन्ति मुनयो गुणापाये समाहिताः । ते तु ब्रह्महृदं नीता मग्नाः कृष्णमचक्षत । ददृशुर्ब्रह्मणो रूपं यत्राक्रूरोऽध्यगात् पुरा । नन्दादयस्तु तं दृष्ट्वा परमानन्दनिर्वृताः । कृष्णं च तत्र च्छन्दोभिः स्तूयमानं सुविस्मिताः'** [भाग.१०.२६.१४–७] इति च । शमं दुःखोपशमं नैजमानन्दं च ॥ १११ ॥

१. 'पादयुगलम्' २. 'यान्तम्'

**श्रुत्वोद्धवो निगदितं परमस्य पुंसो वृन्दावनं प्रति ययौ वचनैश्च तस्य ।**
**दुःखं व्यपोह्य निखिलं पशुजीवनानामायात् पुनश्चरणसन्निधिमेव विष्णोः ॥ ११२ ॥**

**इति श्रीमदानन्दतीर्थभगवत्पादविरचिते**
**श्रीमहाभारततात्पर्य्यनिर्ण्णये**
**उद्धवप्रतियानं नाम**
**चतुर्द्दशोऽध्यायः**

—०—

[आदितः श्लोकाः– **१६२०**+११२=**१७३२**]

---

आयात् पुनः । **'उवास दुःखोपशमं गोपीनां विनुदन् शुचः । कृष्णलीलाकथा गायन् रमयामास गोकुलम्'** [भाग. १०.४६.२] इति, **'अथ गोपीरनुज्ञाप्य यशोदां नन्दमेव च । गोपानामन्त्र्य दाशार्हो यास्यन्नारुरुहे रथम्'** [४६.१२] इति च ॥ ११२ ॥

आचार्यगोविन्दकृते
श्रीमद्भारततात्पर्यनिर्णयस्य ।
निर्णिक्ते व्याख्याने निर्णयभावचन्द्रिकाख्याने
गतं चतुर्दशाध्यायविवरणं सतां हृदयाभरणम् ॥

इत्याचार्यगोविन्दस्य कृतिषु
श्रीमहाभारततात्पर्यनिर्णयपञ्चिकायां
निर्णयभावचन्द्रिकायां
चतुर्दशोऽध्यायः

—०—

२२-१०-१२

# पञ्चदशोऽध्यायः

[पाण्डवशस्त्राभ्यासः]

ॐ ॥ एवं प्रशासति जगत् पुरुषोत्तमेऽस्मिन् भीमार्ज्जुनौ तु सहदेवयुतावनुज्ञाम् ।
कृष्णादवाप्य [1]वर्षत्रितयात् पुरं स्वमाजग्मतुर्हरिसुतेन विशोकनाम्ना ॥ १ ॥

सैरन्ध्रिकोदरभवः स तु नारदस्य शिष्यो वृकोदररथस्य बभूव यन्ता ।
या पिङ्गलाऽन्यभव आत्मनि संस्थितं तं संस्मृत्य कान्तमुरुगायमभूत् त्रिवक्रा ॥ २ ॥

**ॐ ॥ १ ॥ सैरन्ध्री त्रिवक्रा । अन्यभवे पूर्वजन्मनि । या 'पिङ्गला', पिङ्गला नाम वेश्या । आत्मनि संस्थितं स्वहृदयस्थम्, उरुगायं हरिं कान्तं संस्मृत्य सुचि(त्ता) त्रिवक्राऽभूत् । पूर्वजन्मनि कान्तत्वेन भगवच्चिन्तनात् अस्मिन् जन्मनि भगवत्सङ्गोऽभूदिति भावः ॥ २ ॥**

---

ॐ ॥ भुवि प्रकटीभूय शासनं प्रशासनम् । भीमार्जुनौ तु । विशेषतः भगवता लब्धपरविद्यौ । 'वर्‍षत्रितयात्' इति क्षैप्र-व्यूहेन छन्दःसौहित्यम् । व्यूहेन च तत्र कृष्णेन सह वासे हर्षातिशयमाह । वर्षत्रितयात् परम् । तत्र वर्षत्रितयं समाप्येति वा । विशोकनाम्ना सह ॥ १ ॥ कोऽयं हरिसुतो विशोकः? आह– सैरन्ध्रिकोदरभवः । **'प्रसाधनोपचारज्ञा सैरन्ध्री'** इति कात्यः । कन्या सैरन्ध्री सैरन्ध्रिका । तामेतां स्वैरं धरतीति स्वैरन्ध्रीं सतीं सैरन्ध्रीमाचक्षते । पञ्चरात्रवित्त्वं विशेषं तुनाऽऽह–स त्विति । **'त्रिवक्राया विशोकश्च पुत्रः कृष्णमनुव्रतः । आसीच्छिष्यो नारदस्य ददौ चित्तमखण्डितम् । येनोक्तं सात्वतं तन्त्रं यज्ज्ञात्वा मूर्तिमान् भवेत् । यत्र स्त्रीशूद्रदाशानां संस्कारो वैष्णवः स्मृतः'** [१०.१०३.२१–२] इति हि भागवते । आत्मनि सन्देहे जीवेन सह स्थितम् । संस्मृत्य भक्तिपूर्वकं स्मृत्वा । अन्यभवे पिङ्गला नाम वेश्याऽभूदित्यस्मिन् भवे त्रिवक्राऽभूत् । वेश्या हि त्रिषु वक्रा भवति–ओष्ठयोः स्तनयोर्भगे च । त्रिभिर्वा कायेन मनसा वाचा । पश्चादुरुगायं हरिं कान्तं संस्मृत्य अवक्रा कान्ता बभूव । तेनास्मिन् भवे हरिमेव कान्तमवाप च । उरुभिर्ब्रह्मादिभिरपि, उरुभिर्वेदैः, उरुत्वेनोरुधा च गीयत इत्युरुगायो विष्णुः ॥ २ ॥

---

१. **'वर्‍ष–'** इति विश्लिष्य पठनीयम् ।

तं पञ्चरात्रविदमाप्य सुषारथिं[1] स भीमो मुमोद पुनराप परात्मविद्याम् ।
व्यासात् परात्मत उवाच च फल्गुनादिदैवेषु[2] सर्वविजयी परविद्ययैषः ॥ ३ ॥

सर्वानभागवतशास्त्रपथान् विधूय मार्ग्गं चकार स तु वैष्णवमेव शुभ्रम् ।
क्रीडार्थमेव विजिगाय तथोभयात्मयुद्धे बलं च करवाक्प्रभवेऽमितात्मा ॥ ४ ॥

नित्यप्रभूतसुशुभप्रतिभोऽपि विष्णोः श्रुत्वा परां पुनरपि प्रतिभामवाप ।
को नाम विष्णवनुपजीवक आस यस्य नित्याश्रयादभिहिताऽपि रमा सदा श्रीः ॥ ५ ॥

**फल्गुनादिदैवेषु अर्जुनादिदेवावतारेषु । परविद्यया भगवत्तत्त्वविद्यया सर्वविजयी सकलदेवादिविजयी ॥ ३ ॥ तदेवाऽह– सर्वानिति । अमितमपरिमितं[3] आत्मा स्वरूपं बुद्धिश्च यस्य स तथोक्तः । अपरिमित-बलस्वरूपत्वात् करप्रभवे युद्धे जिगाय । अपरिमितबुद्धित्वाद् वाक्प्रभवे युद्धे जिगायेत्यमितात्मेति हेतुगर्भं विशेषणम् ॥ ४ ॥ ननु नित्यप्रतिभश्चेत् पुनः कस्माद् विष्णोरुपजीवनं कृतमित्यत आह–क इति ॥५॥**

---

सुषारथिम् । **'पूर्वपदात्'** [अ.सू.८.३.१०३] इति षत्वम् । तेन स्वस्य परमवैदिकत्वम्, ग्रन्थस्य चास्य छन्दस्तुल्यत्वं स्मारयति । **'पूर्वपदस्थात् निमित्तादुत्तरस्य सकारस्य मूर्धन्यादेशो भवति छन्दसि विषये एकेषामाचार्याणां मतेन'** इति हि वामनः । यन्ता सारथिः । सरथो रथस्वामी भवति । तस्यायं सारथिर्भवति । पुनरपि परात्मविद्यां परात्मत एवाऽप । फल्गुनादिषु दैवेषु, देवानामिमे दैवाः देवांशसम्भवाः । परविद्यया सर्वानपरविद्याजुषो विदुषो विजयते स्म ॥ ३ ॥ तदेव स्फुटमाह–सर्वान् । अभागवतानि भगवत्पारम्यविरोधीन्यवैष्णवानि शास्त्राणि । तेषां पन्थानोऽभागवतशास्त्र-पथाः । तादृशान् शास्त्रमार्गान् विधूय । भागवतशास्त्रमेव पन्थाः येषां ते भागवतशास्त्रपथाः । ते न भवन्तीत्यभागवतशास्त्र-पथा इति वा । **'ऋक्पूरब्धूःपथामानक्षे'** [अ.सू.५.४.७४] इति समासान्तोऽकारः । अदन्त एव वा पथशब्दः । **'वाटः पथश्च मार्गश्च'** इति ह्यभिदधति । गतानुगतिको लोको यत्र येन वा पतति स पन्थाः पथो वा । अतोऽभागवतपथानि-त्याह । यश्च गन्तुं योग्यो मार्ग्यते स मार्गः । अतो वैष्णवं मार्गमित्याह । सर्वान् अवैष्णवपथानुयायिनो विधूय । स तु । तुना तस्य वैष्णवाग्रणीत्वमाह । शुद्धे भागवते धर्मे निरतः स इति । शुभ्रमसङ्कीर्णम् । ऋते परिवारताया इतरदेवतोपासनरहितमित्यर्थः । बलं बलरामं च । अमितात्मा अमितज्ञानबलस्वरूपः । अमिते भगवति आत्मा मनोऽ-स्येति च । अमा अज्ञानम् । तद्वन्तो जीवा अमिन उच्यन्ते । जीवकलामानितया तेषु ततात्मेति च अमितात्मोच्यते ॥ ४ ॥ नित्यं प्रभूता सर्वाधिका, स्विति निरवद्या, या न भवत्यविद्यासमानाधिकरणा, अत एव सत्त्वैकतानत्वात् शुभा च प्रतिभा । परां विद्यां विष्णोः श्रुत्वा पुनरपि परां प्रतिभामवाप । प्रतिभायां स्फुटतातिशयः परत्वम् । यथा दीपज्योतिषा दृष्टमेव ललाटन्तपे सत्यपि तपने पश्यति । अथापि ततोऽतिस्फुटं पश्यति । रमाऽपि श्रीरित्यभिहिता ॥ ५ ॥

---

१. **'सुसारथिम्'** २. **'–नादिदेवेषु'** ३. **'अमितः अपरिमितः'** इति साधुः पाठः ।

**व्यासादवाप परमात्मसतत्वविद्यां[1] धर्म्मात्मजोऽपि सततं भगवत्प्रपन्नाः[2] ।**
**ते पञ्च पाण्डुतनया मुमुदुर्न्नितान्तं सद्धर्म्मचारिण उरुक्रमशिक्षितार्त्थाः ॥ ६ ॥**

**यदा भरद्वाजसुतस्त्वसञ्श्रयी[3] प्रतिग्रहोज्झो निजधर्म्मवर्त्ती ।**
**द्रौणिस्तदा धार्त्तराष्ट्रैः समेत्य क्रीडन् पयः पातुमुपैति सद्म ॥ ७ ॥**

**तस्मै माता पिष्टमालोड्य पातुं ददाति पीत्वैति तदैष[4] नित्यम् ।**
**पीतक्षीरान् धार्त्तराष्ट्रान् स चैत्य[5] मया पीतं क्षीरमित्याह नित्यम् ॥ ८ ॥**

**नृत्यन्तमेनं पाययामासुरेते पयः कदाचिद् रसमस्य सोऽवेत्[6] ।**
**पुनः कदाचित् स तु मातृदत्ते पिष्टे नेदं क्षीरमित्यारुराव ॥ ९ ॥**

**उरुक्रमशिक्षितार्थाः । उरुक्रमेण हरिणा शिक्षिता अर्था धर्मादयो येषां ते तथोक्ताः ॥ ६ ॥ असङ्ग्रही सङ्ग्रहरहितः ॥ ७–९ ॥**

---

तत्वं याथातथ्यम् । तेन सहिता सतत्वा यथार्था परमात्मविद्या । परमात्माख्येन परतत्वेन सतत्वा वा विद्या सतत्वविद्या । **'–सुतत्वविद्याम्'** इति पाठे तु स्वरसोऽर्थः । एवमुरुक्रमेण कृष्णेन व्यासेन च शिक्षितपरमार्थाः पाण्डुतनयाः सततं भगवत्प्रपन्नाः सन्तो मुमुदुः । **'शं नो विष्णुरुरुक्रमः'** इति हि श्रुतिः । तेषां मोदेन सज्जनलोकोऽपि मुमुद इति सूचनाय परस्मैभाषा । प्रोज्झितकैतवो धर्मः सद्धर्मः । भगवदर्पणबुद्ध्या विहितश्च ॥ ६ ॥ भरद्वाजसुतो द्रोणः । असञ्श्रयान्न स्वगृहे धेनुं सञ्चिकाय । प्रतिग्रहवर्जनान्न परेभ्यः पयोऽपि जग्राह । निजधर्मः सिलोञ्छम् । तेन कणिशाद्यर्जनेन पिष्टादिना जीवति स्म स्वस्याले कृपे प्रीत्या तन्निकटे, हस्तिनपुरे । अथ द्रौणिर्यदा पञ्चषहायनो बभूव तदा ॥ ७ ॥ यदा माता पातुं पय इति ददाति । तदा एष तदेव पय इति मत्वा पीत्वा नित्यमेति । एत्य च मयापि पीतं क्षीरमिति नृत्यन् नित्यं वदति स्म बाल्यात् । स्मृतं सत् क्षितिं निवासमीरयतीति क्षीरम् । घस्यते अद्यत इति वा क्षीरमिति वैयाकरणाः । **'घसेः किच्च'** [८.७६] इति हि दशपादिका । पीयत इति पयः ॥ ८ ॥ एवं नित्यं नृत्यन्तमेनं कदाचिदेते कुहकिनो धार्तराष्ट्रा राजगृहे पयः पाययामासुः । तेन सः अस्य क्षीरस्य रसं स्वादं अवेत् विवेद । विद ज्ञाने, लङ् । एवं पीतराजगृहक्षीरः ततो बहूनि दिनानि पयः पातुं गृहं नाऽगात् । प्रायो राजगृह एव पपौ । ततः कदाचित् कुहनयैव धार्तराष्ट्रैरनाहूतः क्षीरपानाय, स्वयं च विदितक्षीरस्वादः पिपासापीडितः पुनः क्षीरापेक्षी गृहं जगाम । तदाऽपि पिष्टमये जले दत्ते नेदं क्षीरमित्याक्रोशपूर्वं रुराव ॥ ९ ॥

---

१. **'–मात्मसुतत्त्व–'** २. **'–पन्नः ।'** ३. **'–सुतस्त्वसङ्ग्रही'** इति वे.ती.पाठः ।
४. **'तदेष–'** । **'पीत्वैव तदैष–'** इति क्वचित् । ५. **'समेत्य'** ६. **'सोऽवैत्'**

दृष्ट्वा रुवन्तं[1] सुतमात्मजस्य स्नेहान्नियत्यैव जनार्दनस्य ।
सम्प्रेरितः कृपया चाऽर्त्तरूपो द्रोणो ययावार्ज्जयितुं तदा गाम् ॥ १० ॥

प्रतिग्रहात् सन्निवृत्तः स रामं ययौ न विष्णोर्हि भवेत् प्रतिग्रहः ।
दोषाय यस्मात् स पिताऽखिलस्य स्वामी गुरुः परमं दैवतं च ॥ ११ ॥

दृष्ट्वैवैनं[2] जामदग्न्योऽप्यचिन्तयद् द्रोणं कर्त्तुं क्षितिभारापनोदे ।
हेतुं सुराणां नरयोनिजानां हन्ता चायं स्यात् सह पुत्रेण चेति ॥ १२ ॥

**भगवन्नियत्यैव प्रेरणयैव जातादात्मजस्य स्नेहात् जनार्दनस्य नियत्यैव (सं)प्रेरितः रुदन्तं सुतं दृष्ट्वा कृपया आर्तरूपः आर्तमना इति भावः ॥ १० ॥ विष्णोः प्रतिग्रहः दोषाय न भवेत्, इति मन्वान इति शेषः । तदुपपादनम्– यस्मात् स पितेत्यादि ॥ ११ ॥ जामदग्न्यः द्रोणम्, आयान्तमिति शेषः, दृष्ट्वा एनं क्षितिभारापनोदे हेतुं कर्तुमचिन्तयत् ॥ १२–१३ ॥**

---

आत्मजस्य स्नेहात् सम्प्रेरितः । आत्मजस्येति हेतुगर्भम् । आत्मजत्वादेव स्नेहपाशः । **'आत्मा वै पुत्रनामाऽसि'** इति हि श्रूयते । व्याजमात्रमेतत् । वस्तुतस्तु जनार्दनस्य नियत्यैव सम्प्रेरितः । समिति प्रेरणस्य गाढत्वमाह । तत् प्रेरणं गाढमुच्यते, येन मनस्ततो न व्यावर्तते । नियतिरस्मिन् काले इदमिदमित्थमित्थं भाव्यमिति नियमः । इच्छा वा । न केवलं स्नेहेन, पुत्रविषये कृपया च । शिशुसहजां पयःपिपासां पूरयितुमहो नाहमिह प्रभुरभवमिति करुणया । आत्मज इति स्नेहः । शिशुक इति करुणा । इयं च प्रेरणा जनतासंहाररूपं महान्तमितिहासं निर्मिमायेति च सम्प्रेरित इत्याह । अत एव जनार्दनस्येच्छयेत्याह । एतेन शिशोः पयःपिपासया धेनुयाचनम्, द्रुपदेन निराकरणम्, तेन द्रोणे क्षत्रद्वेषः, तत्प्रतिकाराय क्षत्रियकुलकुमाराणामस्त्रविद्योपदेशः, ततश्च युद्धेन क्षत्रसंहार इति युक्तं रुद्रावतारस्याश्वत्थाम्नः संहारमूलत्वम् । जनानर्दयिष्यन् भगवानेव भविष्यते संहाराय सम्प्रति तथा प्रेरयामासेति सूचितम् । **''कृपया भार्यया च सम्प्रेरितः । 'कृपामाह कृपस्वसाम्' इति प्रयोगात्'** इत्यपि व्याचक्षते । आर्त्तरूपः विषण्णः । आर्त्तता मुखे व्यक्तमदृश्यतेति आर्तरूप इत्याह । यथाकथाच गामादातुं प्रतियत्न आर्जनम् । अर्ज प्रतियत्ने ॥ १० ॥ प्रतिग्रहात् सर्वात्मना निवृत्तः । पितृत्वं स्वामित्वं गुरुत्वं देवतात्वं चैकैकमपि प्रतिग्रहदोषं वारयति । किमु यत्र चतुष्टयम्? देवताभ्युपयाचनमपि न दोषाय । किमुत परमात् दैवतात्? ॥ ११ ॥ द्रोणं दृष्ट्वैव एनं क्षितिभारापनोदे हेतुं कर्तुमचिन्तयत् । द्रोणं कर्तुमचिन्तयदिति च । अनया चिन्तया द्रोणमन्वर्थनामानं चकारेत्यर्थः । द्रुणतीति द्रोणः । द्रुण हिंसायामिति हि धातुपाठं पठन्ति । द्रुण गताविति च । द्रुणति शत्रूनभिगच्छतीति च । तेनायं रुद्रांशेन पुत्रेण सह हन्ता स्यात् । पुत्रेण निमित्तेनायं सह सम्भूय हन्ता स्यादिति वा ॥ १२ ॥

---

१. **'रुदन्तम्'** इति वे.ती.पाठः स्यादपि ।

२. **'दृष्ट्वा चैनम्'** । **'दृष्टवैव तम्'** इति क्वचित् ।

तेषां वृद्धिः स्यात् पाण्डवार्त्थे हतानां[१] मोक्षेऽपि सौख्यस्य न सन्ततिश्च ।
योग्या सुराणां कलिजा सुपापाः प्रायो यस्मात् कलिजाः सम्भवन्ति ॥ १३ ॥

न देवानामाशतं पूरुषा हि सन्तानजाः प्रायशः पापयोग्याः ।
नाकारणात् सन्ततेरप्यभावो योग्यः सुराणां [२]सदमोघरेतसाम् ॥ १४ ॥

अव्युच्छिन्ने सकलानां सुराणां तन्तौ कलिर्नो भविता कथञ्चित् ।
तस्मादुत्साद्याः सर्व एते सुरांशा एतेन साकं तनयेन वीराः ॥ १५ ॥

एवं विचिन्त्याप्रतिमः स भार्ग्गवो बभाष ईषत्स्मितशोचिषा गिरा ।
अनन्तशक्तिः सकलेश्वरोऽपि त्यक्तं सर्वं नाद्य वित्तं ममास्ति ॥ १६ ॥

आत्मा विद्या शस्त्रमेतावदस्ति तेषां मद्ध्ये रुचितं त्वं गृहाण ।
उक्तः स इत्थं प्रविचिन्त्य विप्रो जगाद कस्त्वद्ग्रहणे समर्त्थः ॥ १७ ॥

**आशतं शतसन्तानपर्यन्तम् । पापयोग्याः पापकरणयोग्याः । अकारणात् शापेन वधेन वा कारणेन विना । सत् निर्दोषं अमोघं रेतो येषां ते तथोक्ताः ॥ १४ ॥ एवं तर्हि कलावव्युच्छिन्नास्ते (भवन्तु), किमनिष्टमित्यत आह– अव्युच्छिन्न इति । नरयोनिजानां सुराणां हन्ता स्यादित्युक्तमुपसंहरति– तस्मादिति ॥ १५–१६ ॥ आत्मा अहम्, शस्त्रं परश्वाद्यायुधम् । त्वद्ग्रहणे सेवकत्वेन त्वद्ग्रहणे ॥ १७ ॥**

---

मोक्षेऽपि सौख्यस्य वृद्धिः स्यात् । सुराणां कलिजा सन्ततिश्च न योग्या ॥ १३ ॥ सद्रेतस्त्वान्न देवानां सन्तानजाः प्रायशः पापयोग्याः । अमोघरेतस्त्वान्न सन्ततेरभावोऽपि योग्यः । साहजिकोऽयं नियमः । क्वचिन्निमित्तविशेषादसुराः पापयोग्या अपि देवानां सन्तानजा भवन्ति । यथा धृतराष्ट्रस्य दुर्योधनादयः । यथा भीष्मकस्य रुग्मी । अतः प्रायश इत्याह । अतः नाकारणादिति पूर्वत्राप्यन्वेति । कारणविशेषात् पापयोग्या अपि भवेयुरित्यर्थः । पूरुषा इति सात्विकाः पुरुषा इत्यर्थः । पुरुषा इति न पुमांस एव । स्त्रियोऽपि । स्थूलं साधनशरीरं पुरमुच्यते । स्थूलशरीरेण भूमौ जाताः स्त्री-जीवा अपि पुरुषा उच्यन्ते । सन्ताने कुले जाताः सन्तानजाः ॥ १४ ॥ परम्परया भङ्गो विच्छेदः । तस्याः पुनरनुद्भव उच्छेदः । तदेतदाह– अव्युच्छिन्न इति ॥ १५ ॥ सर्वं हिरण्यधरण्यादिकम् । सकलेश्वरोऽपि सर्वं त्यक्तमित्याह । अनन्तशक्तिरपि किमपि दातुं न प्रभुरित्याह । हर्षसूचकस्मितेन शोभमानया गिरा सान्त्वयन् । इत्थम्भूतलक्षणे वा तृतीया ॥ १६ ॥ दासत्वेन आत्मग्रहणम् । **'अस्त्राणि वा शरीरं वा ब्रह्मन् शस्त्राणि वा पुनः । वृणीष्व किं प्रयच्छामि तुभ्यं द्रोण वदाऽशु तत्'** [आ.प.१४०.६६] इति, **'शरीरमात्रमेवाद्य मया समवशेषितम् । अस्त्राणि वा शरीरं वा**

---

१. **'मृतानाम्'** इति क्वचित् ।        २. **'–णां यदमोघ–'** इति क्वचित् ।

सर्वेशिता सर्वपरः[१] स्वतन्त्रस्त्वमेव कोऽन्यः सदृशस्तवेश ।
स्वाम्यं[२] तवेच्छन् प्रतियात्यधो हि यस्मान्नचोत्थातुमलं कदाचित् ॥ १८ ॥

सर्वोत्तमस्येश[३] तवोच्चशस्त्रैः कार्य्यं किमस्माकमनुद्बलानाम् ।
विद्यैव देया भवता ततोऽज सर्वप्रकाशिन्यचला[४] सुसूक्ष्मा ॥ १९ ॥

इतीरितस्तत्वविद्यादिकाः स विद्याः सर्वाः प्रददौ सास्त्रशस्त्राः ।
अब्दद्विषट्केन समाप्य ताः स ययौ सखायं द्रुपदं महात्मा ॥ २० ॥

दानेऽर्द्धराज्यस्य हि तत्प्रतिज्ञां संस्मृत्य पूर्वामुपयातं सखायम् ।
सखा तवास्मीति तदोदितोऽपि जगाद वाक्यं द्रुपदोऽतिदर्प्पात्[५] ॥ २१ ॥

न निर्द्धनो राजसखो भवेत यथेष्टतो गच्छ विप्रेति दैवात्[६] ।
इतीरितस्याऽशु[७] बभूव कोपो जितेन्द्रियस्यापि मुनेर्हरीच्छया ॥ २२ ॥

**यस्मात् अधोलोकात् । अलं समर्थः ॥ १८ ॥ अनुद्बलानां अनुत्कृष्टबलानाम् ॥ १९ ॥ तत्वविद्यादिकाः सास्त्रशस्त्राः अस्त्रशस्त्रविद्यासहिताः ॥ २० ॥ पूर्वां गुरुकुलवासकाले कृतां तत्प्रतिज्ञां संस्मृत्य द्रुपदं ययौ । दैवाद् दर्पात् दैवेच्छया जातदर्पात् । इति वाक्यं जगाद ॥ २१–२२ ॥**

---

**ब्रह्मन्नेकतमं वृणु'** [१८०.१०] इति च । प्रविचिन्त्य सर्वतः प्रकृष्टो भगवान् विलक्षणमाहेति चिन्तयित्वा ॥ १७ ॥ सर्वेशिता । अत एव सर्वपरः सर्वोत्तमः । अत एव स्वतन्त्रः । प्रतिकूलं याति ॥ १८ ॥ अनुच्चबलानामुच्चशस्त्रैः किम् । सर्वोत्तमस्य तव, अनुत्तमानां नः । तदेतदाह–अनुद्बलानामिति । अनुद्वराणामित्यप्यर्थः । वबयो रलयोश्चैक्यात् । अनुत्तमानामित्येतत् । सूक्ष्मोऽणुर्जीवः । अणोरणीयान् भगवान् सुसूक्ष्मः । तद्विषया विद्या । सर्वस्य पूर्णस्य भगवतः, सर्वस्य च जगतः यथावत् प्रकाशिनी । अचला जन्मान्तरेऽप्यनपगामिनी ॥ १९ ॥ इतीरितः स भार्गवः । द्विरावृत्तं षट्कं द्विषट्कम् । समाप्य सम्यगधीत्य । द्रुपदस्य सखाऽयं स द्रोणः द्रुपदं सखायं मत्वा ययौ । भार्गवादवाप्तसकल-विद्य इति सम्भावयति–महात्मा ॥ २० ॥ अर्धराज्यस्य दाने । बहोः कालादनन्तरमपि स्फुटमविस्मरणीयं तदित्याह–संस्मृत्य । पूर्वामध्ययनकालकृताम् । सा अविस्मरणीया च सा प्रतिज्ञा, तस्य द्रुपदस्य वा प्रतिज्ञा, ताम् दर्पाद् विसस्मार । अतिदर्पात् तिरश्चकार ॥ २१ ॥ कथं ज्ञानिनस्तस्य दर्पः? दैवात् । ईश्वरेच्छाबलात् । कर्मफलमदृष्टं

---

१. **'सर्ववरः'** इति च । २. **'साम्यम्'** इति प्र. पाठः प्रामादिकः । ३. **'सर्वेश्वरस्येश'**
४. **'–काशिन्यमला'** ५. **'द्रुपदो हि दर्पात्'** इति वे.ती. पाठः स्यात् । ६. **'यथेष्टतो विप्र गच्छेति दैवात्'**
७. **'इतीरितेऽस्याऽशु'**

**प्रतिग्रहात् सन्निवृत्तेन सोऽयं मया प्राप्तो मत्पितुः शिष्यकत्वात् ।**
**पितुः शिष्यो ह्यात्मशिष्यो भवेत शिष्यस्यार्थः स्वीय एवेति मत्वा ॥ २३ ॥**

**सोऽयं पापो मामवज्ञाय मूढो दुष्टं वचोऽश्रावयदस्य दर्प्पम् ।**
**हनिष्य इत्येव मतिं निधाय[१] ययौ कुरूञ्छिष्यतां नेतुमेतान् ॥ २४ ॥**

**प्रतिग्रहाद् विनिवृत्तस्य चार्त्थः स्याच्छिष्येभ्यः कौरवेभ्यो ममात्र ।**
**एवं मन्वानः क्रीडतः पाण्डवेयान् सधार्त्तराष्ट्रान् पुरबाह्यतोऽख्यत् ॥ २५ ॥**

**विक्रीडतो धर्म्मसूनोस्तदैव सहाङ्गुलीयेन च[२] कन्दुकोऽपतत् ।**
**कूपे न शेकुः सहिताः कुमारा उद्धर्त्तुमेतं[३] पवनात्मजोऽवदत् ॥ २६ ॥**

**शिष्यस्यार्थः स्वीय एवेति हेतोः प्रतिग्रहदोषो नेति मत्वेति भावः ॥ २३ ॥ अस्य द्रुपदस्य ॥२४॥ अर्थः द्रुपददर्पहननाख्यं प्रयोजनं धनं च[४] ॥ २५–६॥**

---

च दैवम् । राज्ञः स्यादपि दर्पः, जितेन्द्रियस्य ब्राह्मणस्य कथं कोपः? तदपि भगवदिच्छयेत्याह– जितेन्द्रियस्यापीति । येन महानितिहासः प्रववृते ॥ २२ ॥ नीचः शिष्यः शिष्यक इति कोपोद्गारः । भवेतेति सूचितां फलस्याऽत्मगामितामाह– शिष्यस्यार्थः ॥ २३ ॥ महदवज्ञानान्मूढः । दुष्टस्य वचसः श्रावणात् पापः ॥ २४ ॥ अथ यदाऽर्जुनः परिविंशः, भीमः पर्येकविंशः, परिद्वाविंशश्च युधिष्ठिरः, तदा निर्वृत्तमुदन्तमाह– प्रतिग्रहात् । कौरवेभ्यः कुरुवंशजेभ्यः क्षत्रियकुमारेभ्यः । पाण्डोरिमे पाण्डवेयाः । **'शुभ्रादिभ्यश्च'** [अ.सू.४.१.१२३] इति हि पाणिनिः । ननु शुभ्रादिगणे न पाण्डुशब्दः पठ्यते । मा पाठि । अत एव चकारं पपाठ 'शुभ्रादिभ्यश्च' इति । तथाहि जयादित्यः–**'चकारोऽनुक्तसमुच्चयार्थ आकृतिगणतामस्य बोधयति । तेन गाङ्गेयः पाण्डवेय इत्यादि सिद्धं भवति'** इति । अख्यत् अद्राक्षीत् । **'चक्षिङः ख्याञ्'** [अ.सू.२.४.५४] । यद्यपि चक्षिं व्यक्तायां वाचि कथयन्ति । अथापि चक्षुरिति नेत्रमुच्यते, न मुखम् । वचनादपि चक्षुरेव व्यक्ततरं वक्तीति चक्षुःप्रीतिज्ञानां यूनां न तिरोहितम् । अपिच आङ्पूर्व एव वचनार्थे प्रयुज्यते–आख्यदिति । तमिममर्थविशेषं ज्ञापयन्नाचार्यः–**'अख्यत्'** इत्याह ॥ २५ ॥ विक्रीडतः तन्मयतया क्रीडतः । अङ्गुलीयेन च । चकारेणाङ्गुलीयस्य राजमुद्राङ्कितत्वेन दुर्लभत्वमहार्यत्वं चाऽह । **'तेषां सङ्क्रीडमानानामुदपानेऽङ्गुलीयकम् । पपात धर्मपुत्रस्य वीटा तत्रैव चापतत्'** [आ.प.१४१.१८] इति भारते ॥ २६ ॥

---

१. **'विधाय'**
२. **'–लीयेन तु कन्दु–'** इति क्वचित् ।
३. **'–मेनं प–'**
४. आदर्शे इतः परम्–**'अस्य द्रुपदस्य'** इति पूर्ववाक्यं पठ्यते । स्फुटं लिपिकृत्प्रमादः ।

निष्पत्य चोद्धृत्य समुत्पतिष्ये कूपादमुष्माद् भृशनीचादपि स्म[१] ।
सकन्दुकां मुद्रिकां पश्यताद्य सर्वे कुमारा इति वीर्य्यसंश्रयात् ॥ २७ ॥

तदा कुमारानवदत् स विप्रो धिगस्त्रबाह्यां भवतां प्रवृत्तिम् ।
जाताः कुले भरतानां[२] न वित्थ दिव्यानि चास्त्राणि सुरार्च्चितानि ॥ २८ ॥

इतीरिता अस्त्रविदं कुमारा विज्ञाय विप्रं सुरपूज्यपौत्रम्[३] ।
सम्प्रार्त्थयामासुरथोद्धृतिं प्रति प्रधानमुद्रायुतकन्दुकस्य ॥ २९ ॥

स चाऽश्विषीकाभिरथोत्तरोत्तरं सम्प्रास्य दिव्यास्त्रबलेन कन्दुकम् ।
उद्धृत्य मुद्रोद्धरणार्त्थिनः पुनर्ज्जगाद भुक्तिर्म्मम कल्प्यतामिति ॥ ३० ॥

यथेष्टवित्ताशनपानमस्य धर्म्मात्मजः प्रतिजज्ञे सुशीघ्रम् ।
तथैव तेनोद्धृतमङ्गुलीयं[४] त्रिवर्ग्गमुख्यात्मजवाक्यतोऽनु ॥ ३१ ॥

**वीर्यसंश्रयादित्यवदत् ॥ २७–८ ॥ सुरपूज्यपौत्रं विप्रमस्त्रविदं विज्ञाय ॥ २९ ॥ उत्तरोत्तरं सम्प्रास्य, इषीकामिति शेषः । पूर्वं (केवलं कन्दुकं) उद्धृत्य ॥ ३०–१ ॥**

---

निष्कृष्य पतनं निष्पतनम् । सकन्दुकां मुद्रिकां चोद्धृत्य । कूपतलादन्विष्य हस्तसात्करणं उद्धरणम् । अनायासेन कार्यं सम्पाद्य कूपाद् बहिरुत्पतनं समुत्पतनम् । समुत्पतिष्ये, आत्मप्रत्ययेन समुत्पतिष्यामीत्यर्थः । स्मेति तादृशसाहस-करणे स्वसामर्थ्यं स्मारयति । इत्यवदद् स्ववीर्यमाश्रित्य । आत्मविश्वासेन श्रयणं संश्रयणम् ॥ २७ ॥ भरतानां कुले जाता अपि न वित्थ ॥ २८ ॥ सुरपूज्यपौत्रमिति ग्रन्थकृद्वचनम् । नहि कुमारास्तं द्रोणं जानन्ति । सुरैराचार्यत्वेन पूज्यो बृहस्पतिः । इन्द्रकामाहम्प्राणेभ्यः स्वोत्तमेभ्यः अनिरुद्धमनुदक्षैः स्वसमेभ्यश्चर्ते स्वरूपत एव पूज्यः । तस्य पुत्रो भर-द्वाजः । तत्सुतो द्रोणः । ते केवलं तं दिव्यास्त्रविदं विप्रं विज्ञाय समादरेण प्रार्थयामासुः । सम्भूय च प्रार्थयामासुः । प्रधानमुद्रा । मुद्यते लोकोऽनयेति मुद्रा राजाज्ञा । आज्ञासाधनं नामाङ्कनं वा । 'मुदि हर्षे' इत्यतो रक् । मुदं राति वा । तादृशनामाक्षराङ्किता, अत एवोर्मिकासु प्रधानाऽङ्गुलिमुद्राऽत्र मुद्रापदोक्ता मुद्र्यतेऽनयेति ॥ २९ ॥ इषीका शरवन्निशिताग्रस्तृणविशेषः । **'इषीका काश उच्यते'** इत्यभिधानम् । 'ಕಾಗಬ್ಬು' इति भाषायाम् । परस्परमुत्तरोत्तरं सम्बद्धानां मन्त्रशक्त्याऽसनं सम्प्रासनम् ॥ ३० ॥ शैघ्र्ये व्यवधानराहित्यं सुनाऽऽह । भुक्तिर्मम कल्प्यतामित्युक्तेरव्यवहितोत्तर-

---

१. **'–नीचादिति स्म'** इति । **'–दमुष्मादतिनीचादपि स्म'** इति च क्वचित् । २. **'भारतानाम्'**

३. **'–पौत्रकम्'** इति क्वचित् । ४. **'–मङ्गुलीयकम्'** इति च ।

पप्रच्छुरेनं सहिताः कुमाराः कोऽसीति सोऽप्याह पितामहो वः ।
वक्तेति ते दुद्रुवुराशु भीष्मं द्रोणोऽयमित्येव स तांस्तदोचे ॥ ३२ ॥

न राजगेहं स कदाचिदेति तेनादृष्टः स कुमारैः पुराऽतः ।
भीष्मो विद्यास्तेन सहैव चिन्तयन्नस्त्रप्राप्तिं तस्य शुश्राव रामात् ॥ ३३ ॥

श्रुत्वा वृद्धं कृष्णवर्ण्णं द्विजं तं महास्त्रविद्यामपि तां महामतिः ।
द्रोणं ज्ञात्वा तस्य शिष्यत्व एतान् ददौ कुमारांस्तत्र गत्वा स्वयं च ॥ ३४ ॥

द्रोणोऽथ तानवदद् यो मदिष्टं कर्त्तुं प्रतिज्ञां प्रथमं करोति ।
तं धन्विनां प्रवरं साधयिष्य इत्यर्ज्जुनस्तामकरोत् प्रतिज्ञाम् ॥ ३५ ॥

उन्मादनादीनि स वेद कृष्णादस्त्राण्यनापत्सु न तानि मुञ्चेत् ।
इत्याज्ञया केशवस्यापराणि प्रयोगयोग्यानि सदेच्छति स्म ॥ ३६ ॥

**वक्ता वक्ष्यति । अयं भवद्भिः पृष्टः ॥ ३२–५ ॥ सदा प्रयोगयोग्यानि आपद्यनापदि च ॥ ३६ ॥**

---

क्षणे । कुरुवंशकुमारेषु ज्येष्ठत्वाद् धर्मात्मजः प्रतिजज्ञे । तथैव धर्मात्मजप्रतिज्ञाया अव्यवहितोत्तरक्षण एव, तथैव स्वपूर्वप्रतिज्ञानुगुणमेव । त्रिवर्गमुख्यात्मजस्य धर्मात्मजस्य 'मया प्रतिज्ञा कृता । तद्भवानपि स्ववचनानुगुणमङ्गुलीय-मुद्धरताम्' इति वाक्यमनुसरन् तद्वाक्यसमनन्तरमेव च । त्रिवर्गमुख्यो धर्मः प्राथम्यात् । अर्थकामयोर्धर्माविरोधेनैव पुरुषार्थत्वाच्च । तद्देवताया अयमात्मजः । त्रिवर्गमुख्यात्मैव जातः ॥ ३१ ॥ यदा द्रोणो जामदग्न्यसकाशं जगाम तदा पाण्डवा वने न्यूषुः । पञ्चषहायनाश्च धार्तराष्ट्राः । द्विषडब्दकालं जामदग्न्ये विद्यामभ्यस्य प्रतिनिवृत्तश्च कृपसद्मनि निगूढ-मुवास । अश्वत्थामा च प्रबुद्धो ब्रह्मविद्यामधिजिगांसमानो बभूव । तेन तत्याज क्षत्रकुमारैः सह क्रीडालौल्यम् । तस्मान्न तत्र कोऽपि द्रोणं परिचिकायेत्याह– कोऽसीति पप्रच्छुरिति । **'स नागपुरमागम्य गौतमस्य निवेशने । भारद्वाजोऽवसत् तत्र प्रच्छन्नो द्विजसत्तमः'** [आ.प.१४१.१५] इति हि भारते । इति एव निश्चयेन ऊचे ॥ ३२ ॥ यदि प्रच्छन्नमुवास कथमथ भीष्मेण ज्ञातः? आह– भीष्मः पूर्वं तेन सहैव शस्त्रास्त्रविद्याः चिन्तयन् ततस्तस्य गृहान्निर्गतस्य रामादस्त्रप्राप्तिं पूर्वमेव चारमुखेन शुश्राव ॥ ३३ ॥ श्रुत्वा वृद्धं कृष्णवर्णं धर्मात्मजादिमुखतः । स्वयं च स्वयमेव गत्वा । **'तस्मै पौत्रान् समादाय वसूनि विविधानि च । प्राप्ताय प्रददौ भीष्मः शिष्यान् द्रोणाय धीमते'** [आ.प.१८०.१७] इति च ॥ ३४ ॥ साधयिष्य इति द्रुपदविजयाख्यं स्वगतं फलमाह ॥ ३५ ॥ न मुञ्चेदिति केशवस्याऽज्ञया । इच्छति स्म । तदपि 'अन्यान्यस्त्राणि पुनरन्यतो गुरोर्ग्रहाण' इति केशवस्याऽज्ञयैव ॥ ३६ ॥

भीष्मादिभिर्भविता सङ्गरो नस्तदा नाहं गुरुभिर्न्नित्ययोद्धा ।
भवेयमेकः फल्गुनोऽस्त्रज्ञ एषां निवारकश्चेन्मम धर्म्मलाभः ॥ ३७ ॥

न बुद्धिपूर्वं वर इन्दिरापतेरन्यत्र मे ग्राह्य इतश्च जिष्णुः ।
करोतु गुर्वर्त्थमिति स्म चिन्तयन् भीमः प्रतिज्ञां न चकार तत्र ॥ ३८ ॥

तत्प्रेरितेनार्ज्जुनेन प्रतिज्ञा कृता यदा [१]विप्रवरस्ततः परम् ।
स्नेहं नितान्तं सुरराजसूनौ कृत्वा महास्त्राणि ददौ स तस्य[२] ॥ ३९ ॥

स पक्षपातं च चकार तस्मिन् करोति चास्योरुतरां प्रशंसाम् ।
रहस्यविद्याश्च ददाति तस्य नान्यस्य कस्यापि तथा कथञ्चित् ॥ ४० ॥

भीमः समस्तं प्रतिभाबलेन जानन् स्नेहं त्वद्वितीयं कनिष्ठे ।
द्रोणस्य कृत्वा सकलास्त्रवेदिनं [३]कर्तुं पार्त्थं नार्ज्जुनवच्चकार ॥ ४१ ॥

नैवातियत्नेन ददर्श लक्षं[४] शुश्रूषायां पार्त्थमग्रे करोति ।
स्वबाहुवीर्य्याद् भगवत्प्रसादान्निहन्मि शत्रून् किमनेन चेति ॥ ४२ ॥

**अतिसमर्थो भीमः कस्मान्न प्रतिजज्ञ इत्यत आह– भीष्मेति । न भवेयम् न स्याम् ॥ ३७ ॥ इन्दिरापतेरन्यत्र अ(न्य)स्मात् । इतश्च अस्मात् कारणाच्च । जिष्णुः गुर्वर्थं प्रतिज्ञां करोतु इत्यभिप्रायद्वयम् ॥३८–४४॥**

---

एक एव नित्ययोद्धा नियतयोद्धा ॥ ३७–८ ॥ सुरराजसूनुरर्जुनः ॥ ३९ ॥ पक्षपातं च । चकारो दौर्लभ्यवचनश्च । दुर्लभोऽयं द्रोणकर्तृकः पक्षपातः । दुर्लभा च प्रशंसा । यथाऽर्जुनस्य तथा नान्यस्य कस्यचित् सरहस्यं समग्रतया ददाति ददौ । स्वस्वत्वत्यागाभावान्न सम्प्रदानमेतदिति 'तस्य' इत्येवाह ॥ ४० ॥ भीमः समस्तम् । अनेन **'शिक्षाभुजबलोद्योगैस्तेषु सर्वेषु पाण्डवः । अस्त्रविद्यानुरागाच्च विशिष्टोऽभवदर्जुनः । तुल्येष्वस्त्रप्रयोगेषु लाघवे सौष्ठवेषु च । सर्वेषामेव शिष्याणां बभूवाभ्यधिकोऽर्जुनः । ऐन्द्रिमप्रतिमं द्रोण उपदेशेष्वमन्यत'** [आ.प..१४२.२२–३] इति भारतवचनस्य भावमाह । अन्यथा–**'अधिज्यमपि यत् कर्तुं शक्यते नैव गाण्डिवम् । अन्यत्र भीमपार्थाभ्याम्'** इति वचनं व्याहन्येतेति भावः । पार्थेषु कनिष्ठेऽर्जुने । नार्जुनवत् स्वयं प्रतिज्ञामतियत्नमग्रशुश्रूषां वा ॥ ४१ ॥ लक्षमिति शरव्यमुच्यते ।

---

१. **'–वरः ततः'** इत्यादर्शे शिशिलिष्य पठ्यते । २. **'स तस्मै'** इति क्वचित् ।

३. **'–वेदिनं पार्थं कर्तुं नार्जुन–'** इति क्वचित् । ४. **'लक्ष्यम्'**

**तदा समीयुः सकलाः क्षितीशपुत्रा द्रोणात् सकलास्त्राण्यवाप्तुम् ।**
**ददौ स तेषां परमास्त्राणि विप्रो रामादवाप्तान्यगतानि चान्यैः ॥ ४३ ॥**

**अस्त्राणि चित्राणि महान्ति दिव्यान्यन्यैर्नृपैर्म्मनसाऽप्यस्मृतानि ।**
**अवाप्य सर्वे तनया नृपाणां शक्ता बभूवुर्न्न यथैव[१] पूर्वे ॥ ४४ ॥**

**नैतादृशाः पूर्वमासन् नरेन्द्रा अस्त्रे बले सर्वविद्यासु चैव ।**
**[२]दौष्षन्तिमान्धातृमरुत्तपूर्वाश्चैतत्समानाः [३]सुरुदारवीर्याः ॥ ४५ ॥**

**तदा कर्ण्णोऽथैकलव्यश्च[४] दिव्यान्यस्त्राण्याप्तुं द्रोणसमीपमीयतुः ।**
**सूतो निषाद इति नैतयोरदादस्त्राणि विप्रः स तु रामशिष्यः ॥ ४६ ॥**

**[५]दौष्षन्तिर्भरतः ॥ ४५–८ ॥**

---

**'लक्षं व्याजशरव्ययोः । सङ्ख्यायामपि–'** इति ह्यभिदधति । स्वबाहुवीर्यात् । तदपि भगवत्प्रसादात् । नतु वरादिलब्धात् कृतकात् । नितरां निःशेषं हन्मि इति हेतोश्च न प्रयत्नं चकार ॥ ४२ ॥ अन्यैरगतानि अनधिगतानि, अनवगतानि च ॥ ४३ ॥ एतादृशान्यस्त्राणि भवेयुः सम्भवेयुर्वेति मनसाऽप्यचिन्तितानि । यथा येन प्रकारेण पूर्वे न बभूवुरेव ॥ ४४ ॥ दुष्टान् सम्यक् तनोतीति दुष्षन्तः । तत्तनयो दौष्षन्तिर्भरतः । दुष्यन्त इति दौष्यन्तिरिति चापदज्ञानामपपाठः । वैयाकरणो भोजोऽप्याह–**'हिदुषोर्मुक्षुकौ'** [स.कं.२.२.१३९] इति । दुष्यतेर्धातोरन्तच् प्रत्ययो भवति, षुक् चाऽगमो भवतीति । तेन दुष्+ष्+अन्तः= दुष्षन्त इत्येव साधु रूपम् । केवलं दौष्षन्तिपूर्वाः विरळतया केचनैव एतत्समानाः सुः आसुः, आद्याक्षरलोपेन । एतेनाक्षरलोपेन तेषां समानत्वमपि कथञ्चिदेव, न सामस्त्येनेत्याह । **'अस भुवि'** इति पाणिनिः । **'स भुवि'** इत्यापिशलिः । तमेतं प्राचीनं धातुपारायणं ज्ञापयन्निव च **'सुः'** इत्याह । नञोऽनुवृत्त्या ते च एतत्समाना नाऽसुरिति वा । **'एतत्समा नाऽसुः'** इत्येव क्वचित् पाठः ॥ ४५ ॥ कर्णः प्रथमं इयाय । अथ तदनन्तरमेकलव्य इयाय । न युगपदीयतुः । नैतयोरक्षत्रियत्वादस्त्राण्यदात् । रामशिष्यो हि सः । दुष्टक्षत्रियसंहाराय हि रामोऽवततार । अतस्तच्छिष्योऽयमपि क्षत्रियाणामेवास्त्राणि ददौ । क्षत्रियैरेव क्षत्रियान् घातयिष्यामीति । एकाग्रं लव्यमस्येत्यकलव्यः । लूञ् छेदने ॥ ४६ ॥

---

१. **'–र्न तथैव'** इति क्वचित् ।
२. **'दौष्यन्ति–'** इति पाठः प्रामादिकः ।
३. **'–तत्समा नाऽसुरुदार–'** इति, **'–तत्समाश्चाऽसुरुदार–'** इति च पाठान्तरम् । केचित् **'–तत्समानाः स्युरुदार–'** इति पठन्ति ।
४. **'कर्णश्चैकलव्यश्च'** इति क्वचित् ।
५. **'दौष्यन्तिर्भरतः'** इत्यादर्शे पठ्यते । प्रमाद्यन्ति लिपिकृतः ।

**कर्ण्णोऽनवाप्य निजमीप्सितमुच्चमानो यस्मादवाप पुरुषोत्तमतोऽस्त्रवृन्दम् ।**
**विप्रोऽप्ययं तमजमेमि भृगोः कुलोत्थमित्थं विचिन्त्य स ययौ भृगुपाश्रमाय ॥ ४७ ॥**

**स सर्ववेत्तुश्च विभोर्भयेन विप्रोऽहमित्यवददस्त्रवरातिलोभात्[१] ।**
**जानन्नपि प्रददावस्य रामो दिव्यान्यस्त्राण्यखिलान्यव्ययात्मा ॥ ४८ ॥**

**अस्त्रज्ञचूळामणि[२]मिन्द्रसूनुं विश्वस्य हन्तुं धृतराष्ट्रपुत्रः ।**
**एनं समाश्रित्य दृढो भवेतेत्यदा[३]ज्ज्ञात्वैवास्त्रमस्मै रमेशः ॥ ४९ ॥**

**ज्ञानं च भागवतमप्यपराश्च[४] विद्या रामादवाप्य विजयं धनुरग्र्ययानम् ।**
**अब्दैश्चतुर्भिरथ च न्यवसत् तदन्ते हातुं न शक्त उरुगायमिमं स कर्ण्णः ॥ ५० ॥**

**अस्त्राणि दातुरभिप्रायमाह– अस्त्रेति । एनं कर्णम् । दृढो भवेत धीरो भवेत । ज्ञात्वैव सूत इति ॥ ४९–५० ॥**

---

मा च विप्रोऽयं दात् । यस्मादयमप्यस्त्राण्यवाप तमेवैमि इति विचिन्त्य । भार्गवसमीपगमनजं सम्भ्रमातिशयं शाकरेण द्रुतगतिना वसन्ततिलकेनाऽऽह ॥ ४७ ॥ सूतोऽहमित्युक्ते द्रोणवदयमपि मां निराकुर्यादिति भयेन । सर्ववेत्तुरपि पुरतः विप्रोऽहमिति मृषाऽवदत् । कुतः? विभुः किलायं कर्णस्यापि । अतः अस्त्रवराणां लाभार्थं अदम्याल्लोभात्, विभोरिच्छा-नियत एव तथाऽवदत् । सूतोऽयं विप्रोऽहमिति मृषाऽवददिति जानन्नपि, भाविकार्यमपि जानन्, अजानन्निव प्रददौ प्रीत्या ददौ । अव्ययात्मा नित्यज्ञानस्वरूपः । अत्र त्रयः पादास्त्रैष्टुभाः । द्वितीयस्तु वसन्ततिलकात्मक इति शाकरः । भयेन मृषावादेऽपि तस्येष्टसिद्धिरासेति सम्भ्रमं वसन्ततिलकेनाऽऽह । शक्नोति जामदग्न्यं प्रसादयितुमिति शकर्या सूचया-मास । अथच शाकरेण दीर्घेण च्छन्दसा कर्णस्य लोभातिशयमभिनीय दर्शयतीव । अन्ते च दीर्घाक्षरबहुलेन त्रैष्टुभेन वातोर्मीच्छन्दसा त्वरितमध्यापयामास, न द्रोणभीष्मयोरिव विलम्बेनेति सूचयति ॥ ४८ ॥ अस्त्रज्ञेषु चूळामणिरिवा-यम् । सर्वेषामुपरि तिष्ठति, शत्रूणां मूर्धानमाक्रम्य तिष्ठति । इन्द्रसूनुं हन्तुमयमेव समर्थ इति विश्वस्य । कालात्मनो भगवत इच्छैव तादृशीति भवेतेत्यात्मनेभाषा । इत्यतः, अस्य पूर्वं कुन्तीसुतत्वम्, पश्चाद्राधासुतत्वम्, भाविनि सङ्ग्रामे महासंहाराङ्गत्वमित्यादि सर्वं ज्ञात्वैवास्मा अस्त्रमदात् ॥ ४९ ॥ भागवतं ज्ञानमिति परविद्याम् । अपराश्च विद्यास्तद-ङ्गतया । अपिना शास्त्राणि च । विजयते शत्रूननेनेति विजयं धनुः, अग्र्यं विजयं यानं रथं च रामादवाप्य । अथच अब्दैश्चतुर्भिः सकलविद्यावाप्त्यनन्तरमपि । नितान्तं सेवमानोऽवसत् ॥ ५० ॥

---

१. '**विप्रोऽहमित्यस्त्रबलातिलोभात्**' इति क्वचित् ।
२. '**-चूडामणि-**'
३. '**–तेत्येतज्ज्ञात्वै–**'
४. '**भागवतमाप्य पराश्च**' । '**भागवतमाप पराश्च**' इति क्वचित् ।

अङ्के निधाय स कदाचिदमुष्य रामः शिश्ये शिरो विगतनिद्र उदारबोधः ।
संसुप्तवत् सुरवरः सुरकार्य्यहेतोर्दातुं च वालिनिधनस्य फलं तदस्य ॥ ५१ ॥

तत्राऽस राक्षसवरः स तु हेतिनामा काले महेन्द्रमनुपास्य हि शापतोऽस्य ।
कीटस्तमिन्द्र उत तत्र समाविवेश कर्ण्णस्य शापमुपपादयितुं सुतार्त्थे ॥ ५२ ॥

कर्ण्णः सकीटतनुगेन किरीटिनैव [१]ह्यूरोरधस्तनत ओपरिगात्वचश्च ।
विद्धः शरेण स यथा रुधिरस्य धारां सुस्राव तं विगतनिद्र इवाऽह[२] रामः ॥ ५३ ॥

**सुरकार्यहेतोः कर्णपराजयाख्यसुरकार्यहेतोः शिश्ये । तदिति प्रसिद्धं फलम् ॥ ५१ ॥ यः हेतिनामा राक्षसवरः काले स्वसेवाया नियतकाले महेन्द्रमनुपास्य शापतः कीटः स (तत्र) भृगुपाश्रमे आस ॥ ५२ ॥ ऊरोरधस्तनत आरभ्य उपरिगात्वचः उपरिगात्वक्पर्यन्तम् । शरेण यथा तथा किरीटिना इन्द्रेण विद्धः । (आ उ)परिगात्वच इत्यत्र आ(इ)त्यस्य सवर्णदीर्घः । स्वतो निद्राशून्यत्वात् विगतनिद्र इवेति ॥ ५३ ॥**

---

अमुष्य कर्णस्याङ्के शिरो निधाय । उदारबोधः सदा पूर्णबोधः । अत एव विगतनिद्रः । शापेन शक्तिनिग्रहरूपात् सुरकार्याद्धेतोः । अस्य पूर्वावतारे सुग्रीवस्य मूलतः सूर्यांशस्य, एतन्निमित्तं यद् वालिनः मूलतः इन्द्रांशस्य, अवतारेऽपि ज्येष्ठस्य निधनं तस्य यत् फलं तद् दातुम् । एतेन भगवतोऽसङ्गतां च स्फुटमाविश्चकार ॥ ५१ ॥ हेतिप्रहेती सूर्यरथयन्तारौ देवभृत्यौ । अत एव राक्षसवर इत्याह । शापतः कीटो बभूव । यः शशाप स एव तत्र तस्मिन् शापप्रसङ्गे तं समाविवेश । किमर्थम्? कर्णस्य वालिनिधनफलतयोपपन्नं शापं प्रापयितुम् । वर्तमानं च फलमाह–सुतार्थे । अर्जुनविजयार्थम् ॥ ५२ ॥ शापलब्धया कीटतन्वा सहितः सकीटतनुर्हेतिः । तत्र गतेन किरीटिना इन्द्रेण । अन्यथा स इति पुनरुक्तं स्यात् । अथवा सः कीटतनुगेन इत्येव प्रतृण्णम् । प्रथमस्तच्छब्दो दार्ष्टान्तिकवचनः । द्वितीयो दृष्टान्तवचनः– स यथा तत्र दृष्टान्तो यथा शरेण विद्ध इति । ननु कथमप्रस्तुतः परामृश्यते । तर्हि त्वामप्यधीतब्रह्ममीमांसं विदन्तः पृच्छेयुः– 'कथमथशब्देनाप्रस्तुतमध्ययनं परामृश्यते, अथ अध्ययनादनन्तरमिति, कथमतःशब्देनाप्रस्तुतं प्रयोजनं परामृश्यते, अतः सप्रयोजनत्वादिति' इति । तदा किं ब्रूयाः? नन्वेकेनाभिहितेनापरं स्मर्यते । कृताध्ययनं कश्चिदाह–'अथ किं करोषि' इति । स्फुटमवगम्यते–'अध्ययनानन्तरं किं करोषि' इति । प्रयोजनाकाङ्क्षिणं कश्चिदाह–'अतः कुरु' इति । स्फुटमवगम्यते 'सप्रयोजनत्वात् कुरु' इति । आगतोऽसि पन्थानम् । एवमिहापि यथापदेनोपस्थापितो दृष्टान्तः स इति परामृश्यते । प्रतनांश्च प्रयोगान् बहुलमुपलभामहे । तद् यथा–**'स तथा शकुनिः सूत्रेण प्रबद्धः–'** [छ.उ.३.६.२] इति; **'स यथा सोम्य वयांसि वासोवृक्षं सम्प्रतिष्ठन्ते–'** [ष.उ.४.८] इत्यादि च । अधस्तनतस्त्वग्भागात् आ उपरिगा-

---

१. **'ह्यूरोरधस्तलत औपरिगात्वचश्च'** इति, **'ओपरिगात् त्वचश्च'** इति च केचित् । २. **'–निद्र उवाच रामः'** इति क्वचित् ।

किं त्वं न चालयसि मां रुधिरप्रसेके प्राप्तेऽपि पावनविरोधिनि कोऽसि चेति ।
तं प्राह कर्ण्ण इह नैव मया विधेयो निद्राविरोध इति कीट उपेक्षितो मे ॥ ५४ ॥

जात्याऽस्मि सूत उत ते तनयोऽस्मि सत्यं तेनास्मि विप्र इति भार्ग्गववंशजोऽहम् ।
अग्रेऽब्रवं भवत ईश नहि त्वदन्यो माता पिता गुरुतरो जगतोऽपि मुख्यः ॥ ५५ ॥

इत्युक्तमात्रवचने स तु कीटकोऽस्य रामस्य दृष्टिविषयत्वत एव रूपम् ।
सम्प्राप्य नैजमतिपूर्ण्णगुणस्य तस्य विष्णोरनुग्रहत आप विमानगः स्वः ॥ ५६ ॥

अथाऽह रामस्तमसत्यवाचो[1] न ते सकाशे मम वासयोग्यता ।
तथाऽपि[2] ते नैव वृथा मदीया भक्तिर्भवेज्जेष्यसि सर्वशत्रून् ॥ ५७ ॥

**आद्यस्योत्तरमाह– (इहेति) ॥ ५४ ॥ कोऽसीति द्वितीयस्योत्तरमाह– जात्येति । अग्रे त्वदग्रे । 'ते तनयोऽस्मि सत्यम्' इत्युक्तम् । कथमस्य सत्यतेत्यत आह–नहीति । मुख्यः पितेत्यन्वयः ॥ ५५ ॥ रामे इत्युक्तमात्रवचने ॥ ५६–७ ॥**

---

त्वचः । भूतळसम्बद्धादूरोरधोभागादारभ्य ऊरोरुपरिगा ऊर्ध्वभागगता या त्वक् यत्र रामः शिश्ये तावत्पर्यन्तं शरेणेव कीटेन विद्धः कृतव्रणो रुधिरस्य धारां सुस्राव । उपरिगत्वच इति वक्तव्यम् । उपरिगात्वच इत्याह । तेनेदमवधारयति उपरिगामपि त्वचमहो निर्बिभेदैवेति । अवधारणे हि दैर्घ्यं पठन्ति । उपरि चैवंविधाः प्रयोगाः भवन्ति – **'समुद्रमध्यगापुरीविधानम्–'** [१७.११] इत्याद्याः । **'ङ्यापोः सञ्ज्ञाच्छन्दसोर्बहुलम्'** [अ.सू.६.३.६३] इति ह्रस्वाभाव इत्यपि व्याचक्षते । वस्तुतस्तु विद्यमानस्य दीर्घस्य ह्रस्वता सूत्रार्थः, न ह्रस्वस्य दीर्घता । भाषितपुंस्कस्यानूङः स्त्रीशब्दस्य पुंवद्-भावश्छान्दसत्वान्नाऽश्रित इति तु वक्तुमुचितम् । उपरिगा आत्वगित्यपि व्याचक्षते । सदा विगत-निद्रः सन् तदा विगतनिद्र इव ॥ ५३ ॥ ऊरुकम्पादिना चालनमुत्थापनं चेत्युभयमपि चालनपदार्थः । धारासेकः प्रसेकः ॥ ५४ ॥ भवतोऽग्रेऽब्रवम् । नहि त्वदन्य इति । आह च स्वयमेवान्यत्र भगवत्पादः–**'हरिरेव परो हरिरेव गुरुर्हरि-रेव जगत्पितृमातृगतिः'** इति ॥ ५५ ॥ इत्युक्तमात्रं वचनं येन कर्णेन, कर्णवचनान्तरमेव । यद्यपि कीटकः । क्षुद्रः कीटः शापतः । कृपाविषयश्च कीटः कीटकः । स्वयं तु पुण्यचेतन इति तुनाऽऽह । अत एव पूर्वमपि राक्षसवर इत्याह । निजमेव नैजं रूपम् । निजस्येदं वा । सम्प्राप्य । समिति भगवद्वचनं सामग्र्यवचनं च । भगवतः समग्रं प्रसाद-माप्य । कर्णत्वग्वेधोऽपि भगवदनुग्रहायैव बभूवेत्यर्थः । तदर्थमेव हि तमिन्द्रः शशाप कीटो भवेति । तेन शापेन स्वस्य वालित्वे सुग्रीवकृतमपराधं निर्यातयामास ॥ ५६ ॥ मम सकाशे, असत्यवाचस्ते । तेनैव असत्यवचनमात्रेण कारणेन,

---

१. **'–मसत्यवाचं न'** २. **'अथापि'** इति क्वचित् ।

**अस्पर्द्धमानं न कथञ्चन त्वां जेता कश्चित् स्पर्द्धमानस्तु यासि ।**
**पराभूतिं नात्र विचार्यमस्ति प्रमादी त्वं भविता [1]चास्त्रसङ्के ॥ ५८ ॥**

**याहीति तेनोक्त उदारकर्म्मणा कर्ण्णो ययौ तं प्रणम्येशितारम् ।**
**तथैकलव्योऽपि निराकृतोऽमुना द्रोणेन तस्य प्रतिमां वनेऽर्चयत् ॥ ५९ ॥**

**ततः कदाचिद् धृतराष्ट्रपुत्रैः पाण्डोः सुता मृगयां सम्प्रयाताः ।**
**अग्रे गच्छन् सारमेयो रुराव धर्म्मात्मजस्यात्र वने मृगार्त्थी ॥ ६० ॥**

**श्रुत्वा रावं सारमेयस्य दूराच्छरैर्म्मुखं शब्दवेधी पुपूरे ।**
**स एकलव्यो व्रणमस्य नाकरोच्छ्वा पूरितास्यः पाण्डवानभ्ययात् सः ॥ ६१ ॥**

**अस्त्रसङ्के[2] अस्त्रयुद्धे ॥ ५८–६२ ॥**

---

ते भक्तिर्नैव वृथा भवेत् ॥ ५७–८ ॥ अमुना पूर्वप्रस्तुतेन परशुरामेणेति प्रतीतिं वारयन्नाह– अमुना द्रोणेनेति । अमुना पूर्वं शस्त्रशिक्षार्थमभिगतेन स्वस्य विप्रकृष्टेन पाण्डवानां सन्निकृष्टेन द्रोणेन । अर्चयत् आर्चयदित्यर्थः । भगवद्विरोधेन तस्य तादृगप्यर्चनं व्यर्थमासीदिति दीर्घलोपेनाऽह ॥ ५९ ॥ धृतराष्ट्रपुत्रैः सह । सङ्गतानां प्रमुखानां यानं सम्प्रयाणम् । दूता यान्ति । राजपुत्राः प्रयान्ति । पाण्डोः सुतास्तैः समेताः प्रयान्ति । धर्मात्मजस्य सारमेयः । एतेन **'राजन्ननुजगामैकः श्वानमादाय पाण्डवान्'** [आ.प.१४२.४७] इति सम्भववचनं व्याख्यातम्– न यःकोऽप्येकः, किन्तु धर्मात्मजस्यानुचर इति । अत्र मृगयार्थं गते वने । मृगार्थी कश्चिन्मृगं मृगान् वा दृष्ट्वा निरोद्धुकामः परिधावन् ॥ ६० ॥ शब्दश्रवणमात्रेण शरव्यस्थानं विज्ञाय विध्यतीति शब्दवेधी । ननु भारतविप्रतीपमेतत् । तथाहि सम्भवे पठ्यते– **'स कृष्णं मलदिग्धाङ्गं कृष्णाजिनजटाधरम् । नैषादिं श्वा समालक्ष्य भषंस्तस्थौ तदन्तिके । तदा तस्याथ भषतः शुनः सप्त शरान् मुखे । लाघवं दर्शयन्नस्त्रे मुमोच युगपद् यथा'** [आ.प.१४२.४९–५०] इति । सत्यं विप्रतीपमिव प्रतीयते । एतद्वचनस्य प्रातीतिकमर्थं निवारयितुमेवाऽचार्य एवं व्याचख्यौ–'शब्दवेधी पुपूरे' इति । तथाचायं भारतवचनार्थः– श्वा नैषादिं समालक्ष्य 'मृगयायामेतावन्तमनेहसमदृष्टः कोऽयं प्राणिविशेषः' इति शङ्कमान इव धर्मात्मजानुचरस्य स्वादातुरन्तिक एव तस्थाविति । **'श्वा चरन् स पथा क्रीडन् नैषादिं प्रतिजग्मिवान्'** [१४२.४८] इति पूर्ववचनं चैतदनुगुणतया योजनीयम्– नैषादिं प्रति मनसा जग्मिवान् । दूरे ददर्शेत्यर्थः । चक्षुर्भ्यामिह गमनम् । न पद्भ्यः । कथमन्यथा स्वान्तिके स्थितस्य भषकस्याऽस्ये शरपूरणमात्रेण व्यस्मेषत पाण्डवाः । विशेषतश्च पार्थः । किं तावन्मात्रमपि

---

१. **'चास्त्रसङ्के'** इति वे.ती. पाठः ।

२. आदर्शे **'अस्त्रसङ्कचे'** इति पठ्यते । प्रायो लिपिकृत्प्रमादः ।

दृष्ट्वा चित्रं[1] कुरवः पाण्डवाश्च द्रष्टुं कर्त्तारं मार्ग्गयामासुरत्र ।
द्रोणाकृतिं मार्त्तिकीं पूजयन्तं ददृशुश्चैनं धनुरेवाभ्यसन्तम् ॥ ६२ ॥

पैशाचमेवैष पिशाचकेभ्यः पूर्वं विवेदास्त्रवृन्दं निषादः ।
दिव्यान्यस्त्राण्यासुमेतां च शिक्षां द्रोणं सदा पूजयति स्म भक्त्या ॥ ६३ ॥

दृष्ट्वा विशेषं तममुष्य पार्त्थो द्रोणायोचे त्वद्वरो[2] मे मृषाऽऽसीत् ।
इत्युक्त एनं त्वभिगम्य दक्षिणां विप्रो ययाचे दक्षिणाङ्गुष्ठमेव ॥ ६४ ॥

तस्य प्रसादोपचितोरुशिक्षो निषादोऽदाद् दक्षिणाङ्गुष्ठमस्मै ।
ततः परं नास्य बभूव शिक्षा सन्मुष्टिहीनस्य समाऽर्ज्जुनेन ॥ ६५ ॥

**विवेद विशेषेण व्यजानात्[3] । एतां शिक्षां धनुर्विद्याशिक्षाम् ॥ ६३–४ ॥ उपचिता वृद्धा । अर्जुनेन समा अर्जुनशिक्षासमा ॥ ६५–६ ॥**

**इति श्रीमहाभारततात्पर्यनिर्णयटीकायां श्रीवेदाङ्गतीर्थभट्टारकविरचितायां तात्पर्यदीपिकायां पञ्चदशोऽध्यायः**

—०—

शरकौशलं नाभूदर्जुनस्य? तस्मादवश्यमेतद् वक्तव्यम् । यच्छब्दश्रवणमात्रेणाऽरादेव सारमेयतुण्डे सप्तकाण्डप्रवेशनम्, येन श्वा भषितुमपि न शशाक, तथाऽप्यव्रणमास्यमासीदिति विस्मयावहमेतद् बभूव पार्थस्येति । अहो तदेतन्निगूढं भारत-हृदयं भगवत्पाद एवाभिव्यङ्क्तुं क्षमते । पुपूरे अपूरिष्ट । पूरी आप्यायने इत्यस्य दिवादे रूपम् । शरपूरितास्यः । स एक-लव्यः, स श्वेति उभयोरपि विप्रकृष्टत्वेन शब्दवेधित्वमेकलव्यस्य स्फुटमाह ॥ ६१ ॥ चित्रमद्भुतम् । चित्रस्य कर्मणः कर्तारं द्रष्टुम् । धनुरेवेत्यभ्यासनैरन्तर्यमाह । अभ्यसन्तम् । भ्वादेरसते रूपमेतत् । अस गतिदीप्त्यादानेषु ॥ ६२ ॥ कुत्सितेभ्यः पिशाचेभ्यः । पिशिताशनाः पिशाचाः । अत एव कुत्सितमस्त्रवृन्दम् । नतु दिव्यम् । विवेद विदाश्चकार । वेत्तेर्लिट् । एतां दिव्यास्त्रलाभयोग्यां शिक्षां चाऽप्तुम् । अभ्यासपाटवं शिक्षा ॥ ६३ ॥ त्वद्वरः–'यो मदिष्टं कर्तुं प्रतिज्ञां करोति तं धन्विनां प्रवरं साधयिष्ये' इति शस्त्राभ्यासकाले उक्तः, अर्जुनाय दत्तश्च वरः । एनं तु । अयोग्यविद्यालिप्सुत्वात्, स्वतो दुष्टत्वात्, लोकलुण्टाकत्वात्, कृष्णद्विट्त्वाच्च गुरुणा शिक्षार्होऽयमिति तुनाऽऽह ॥ ६४ ॥ बाणयोजनसमर्था मुष्टिः सन्मुष्टिः ॥ ६५ ॥

१. **'दृष्ट्वा विचित्रम्'** इति कचित् । २. **'त्वद्वचो मे'**

३. न वक्तव्यमेतत् । नात्र वीत्युपसर्गः । वेत्तेर्लिटो हि रूपद्वयम्– विवेदेति, विदाश्चकारेति ।

**पुनः कृपालू रैवतपर्वते तं द्रोणः [१]प्राप्याऽदादस्त्रवराणि तस्मै ।**
**एकान्त एवास्य भक्त्या सुतुष्टो धन्विश्रेष्ठं कृतवानर्जुनं च ॥ ६६ ॥**

**इति श्रीमदानन्दतीर्थभगवत्पादविरचिते श्रीमहाभारततात्पर्य्यनिर्ण्णये**
**[पाण्डवशस्त्राभ्यासो नाम[२]]**
**पञ्चदशोऽद्ध्यायः**

—०—

[आदितः श्लोकाः– **१७३२+६६=१७९८**]

पुनः कृपालुः दक्षिणाङ्गुष्ठस्य दक्षिणात्वेन ग्रहणानन्तरं तामेव निर्दयतां स्मरन् परिखिन्नमनाः कृपया द्रवन् । ब्राह्मणः किल सः । तस्मिन्नसम्भावितमेतत् क्रौर्यम् । रैवतपर्वते । अद्यतन 'गुजरात'प्रान्ते 'गिर्नार्' इति प्रथिते अरण्यभूयिष्ठे पर्वततटे । यत्र स्वपित्रा हिरण्यधनुषा सहैकलव्य उवास । तमेकलव्यम् । अङ्गुष्ठग्रहणे दर्शितस्य क्रौर्यस्य प्रतिक्रियार्थमस्त्रवराण्यदात् । तथाहि हरिवंशे–**'तत्र रैवतको नाम पर्वतो नाति दूरतः । मन्दरोदारशिखरः सर्वतोऽभिविराजते । तत्रैकलव्यसंवासो द्रोणेनाध्युषितश्चिरम्'** [वि.प.५६.२७–८] इति । द्रोणेनैकलव्यस्य सहवासो हि संवासपदार्थः । किमर्थं द्रोण एकलव्येन सहोवास? आह– पुनः कृपालुरिति । एवं श्रीबादरायणेन किञ्चिदिव सूचितं भगवत्पादोऽस्मासु कृपालुः स्पष्टमाचष्ट । नन्वर्जुनस्तर्हि कुप्यति? नेत्याह– एकान्त एव । तर्ह्यर्जुनाय 'धन्विश्रेष्ठं त्वां करोमि' इति दत्तं वचनं भग्नम्? तदपि नेत्याह– धन्विश्रेष्ठं कृतवानर्जुनं च । चकारेण कृष्णभीमयोः स्वतःसिद्धं धन्विश्रेष्ठत्वमाह । तयोरनन्तरं अर्जुनं च धन्विश्रेष्ठं चकार । अस्त्रवराण्यदात्, धन्विश्रेष्ठं च कृतवानिति वा ॥ ६६ ॥

**आचार्यगोविन्दकृते**
**श्रीमद्भारततात्पर्यनिर्णयस्य ।**
**निर्णिक्ते व्याख्याने निर्णयभावचन्द्रिकाख्याने**
**गतं पञ्चदशाध्यायविवरणं सतां हृदयाभरणम् ॥**

**इत्याचार्यगोविन्दस्य कृतिषु**
**श्रीमहाभारततात्पर्यनिर्णयपञ्चिकायां**
**निर्णयभावचन्द्रिकायां**
**पञ्चदशोऽध्यायः**

—०—

१. **'प्रादादस्त्र–'**

२. प्राचीनकोशेष्वेतदध्यायनाम न निर्दिष्टम् ।

२२-१०-१२

## षोडशोऽध्यायः

### [सृगालवधः]

ॐ ॥ काले त्वेतस्मिन् भूय एवाखिलैश्च नृपैर्य्युक्तो मागधो योद्धुकामः ।
प्रायाद् यदूंस्तत्र नित्याव्ययातिबलैश्वर्य्योऽपीच्छयाऽगात् स कृष्णः ॥ १ ॥

सन्दर्शयन् बलिनामल्पसेनाद्युपस्कराणां [१]बहळोपस्करैश्च ।
प्राप्ते विरोधे बलिभिर्न्नीतिमग्र्यां ययौ सरामो दक्षिणाशां रमेशः ॥ २ ॥

सोऽनन्तवीर्य्यः परमोऽभयोऽपि नीत्यै गच्छन् जामदग्न्यं ददर्श ।
क्रीडार्त्थमेकोऽपि ततोऽतिदुर्ग्गं श्रुत्वा गोमन्तं तत्र ययौ सहाग्रजः ॥ ३ ॥

**ॐ ॥ एतस्मिन् काले पाण्डवानामस्त्राभ्यसनसमये ॥ १–२ ॥ नीत्यै उक्तनीतिप्रदर्शनाय ॥ ३–४ ॥**

---

ॐ ॥ एतस्मिन्नेव काले । तत्र तस्मिन् प्रसङ्गे । नित्याव्ययातिबलैश्वर्यत्वात् निग्रहीतुं समर्थोऽपि युद्धपरिजिहीर्षया दूरमगात् । नित्यम्, अव्ययमपकर्षरहितम्, सर्वातिशायि बलं चैश्वर्यं लोकाधिपतित्वं चास्येति तथा ॥ १ ॥ किमर्थं युद्धं पर्यजिहीर्षत्? किमर्थं दूरमगात्? आह– सन्दर्शयन् । उपस्करा उपकरणानि । पाकस्याऽस्वादातिशयजननाय क्षिप्यमाणं रामठजीरकसर्षपादिकमुपस्कर इति भोजनप्रियाः कोशकारा मन्यन्ते । ‘ಒಗ್ಗರಣೆ’ इति भाषायाम् । सामर्थ्यातिशयजननाय यदायुधादिकमुपस्क्रियते तमप्युपस्करं मन्यन्ते कदनप्रियाः । प्रतियत्ने हि स्फुटमाह पाणिनिः–**‘उपात् प्रतियत्नवैकृतवाक्याध्याहारेषु’** [अ.सू.६.१.१३९] इति । **‘ एतेष्वर्थेषु गम्यमानेषु करोतौ धातौ परत उपात् सुट् कात् पूर्वो भवति’** इति वामनः । एतेष्वर्थेष्वत्र विवक्षितोऽर्थः कतमः? प्रतियत्नो नाम । कः प्रतियत्नो नाम? आह वामनः–**‘सतो गुणान्तराधानमाधिक्याय, वृद्धस्य वा तादवस्थ्याय समीहा प्रतियत्नः’** इति । तस्माद् युक्तोऽयमदनोपस्कर इव कदनोपस्करः । स्वयं बलिनामप्यल्पोपस्कराणां बहळोपस्करैर्बलिभिर्विरोधे, अथच स्वयमबलिभिरपि बहळोपस्करबलैर्विरोधे राजभिः किं करणीयमिति नीतिं सन्दर्शयन् । स्वयमाचर्य सम्यग् दर्शयन् । सञ्ज्ञया दर्शयन् ॥२॥ लोकसङ्ग्रहाख्यनीत्यै ।

---

१. **‘बहुलोप–’**

तदा दुग्धाब्धौ संसृतिस्थैः सुराद्यैः पूजां प्राप्तुं स्थानमेषां च योग्यम् ।
मुक्तस्थानादाप नारायणोऽजो बलिश्चाऽगात् तत्र सन्द्रष्टुमीशम् ॥ ४ ॥

तत्रासुरावेशममुष्य विष्णुः सन्दर्शयन् सुप्तिहीनोऽपि नित्यम् ।
संसुप्तवच्छिश्य उदारकर्म्मा सञ्ज्ञायै देवानां मुखमीक्ष्याप्रमेयः ॥ ५ ॥

देवाश्च तद्भावविदोऽखिलाश्च निमीलिताक्षाः शयनेषु शिश्यिरे ।
तदा बलिस्तस्य विष्णोः किरीटमादायागाज्जहसुः सर्वदेवाः ॥ ६ ॥

**सञ्ज्ञायै मद्वत् सर्वे सुप्ता इतीव भवन्त्विति सञ्ज्ञां दर्शयितुम् ॥ ५ ॥ तद्भावविदः शयानस्य हरेः स्वमुखे(क्षा)भिप्रायविदः ॥ ६ ॥**

---

जामदग्न्यं ददर्श। ततो गोमन्तं ययौ। ततः जामदग्न्यात् गोमन्तं दर्शनीयं श्रुत्वा। तथाहि तद्वचनं हरिवंशे–**'गोमन्तमिति विख्यातं नैकशृङ्गविभूषितम्। स्वर्गैकमहाशृङ्गं दुरारोहं खगैरपि'** [वि.प.३९.६४] इति, **'उदयास्तमये सूर्यं सोमं च ज्योतिषां पतिम्। ऊर्मिमन्तं समुद्रं च अपारद्वीपभूषणम्। प्रेक्षमाणौ सुखं तत्र नगाग्रे विचरिष्यथः। शृङ्गस्थौ तस्य शैलस्य गोमन्तस्य वनेचरौ। दुर्गयुद्धेन धावन्तौ जरासन्धं विजेष्यथः'** [६७–९] इत्यादि च। पश्चिमसागरतीरगतः। सह्याद्रिभागोऽयम्। यस्य तटे गोवाख्यो विषयो भवति। तत उत्तराहि सम्प्रति महाराष्ट्रमिति प्रथितं राज्यं भवति, यत्र हि करवीराख्यं लक्ष्मीक्षेत्रं विराजते। यत् प्रायः सम्प्रति कोलापुरमाहुः॥ ३॥ एषां संसृतिस्थानां च गन्तुं योग्यम्। सम्भाषणपूर्वं द्रष्टुम्॥ ४॥ असुरावेशमिति। बलिनामैवासुरो वैरोचनिं बलिमाविवेश। **'आविश्य यो बलिमञ्जश्चकार प्रतीपमस्मासु तथा त्वयीश। स चासुरो बलिनामैव–'** [११.२१३] इति ह्युक्तम्। सन्दर्शयन्निति। अन्तर्गतं वास्तवमाविष्कुर्वन्नित्यर्थः। संसुप्तः गाढनिद्रः। संसुप्तवच्छिष्ये। ननु **'शीङ् स्वप्ने'** इति धातुपाठं पठन्ति। तर्हि सुप्त इव सुष्वापेत्युक्तं भवति। न भोः। द्विविधं शयनं भवति। क्वचिच्छयानो निद्राति। क्वचिच्छयानोऽपि जागर्ति। तेन शयनीये शरीरन्यसनं शयनं नाम। तथाचानिद्र एवाशयिष्ट, असुराविष्टस्य बलेर्गाढनिद्रमिवाऽत्मानं दर्शयन्नित्युक्तं भवति। उदारकर्मा। ज्ञानिनामपि दुरधिगमकर्मा। गुप्ततया स्वाशयसूचनं सञ्ज्ञा। तुरीयश्चरणो द्व्यक्षराधिक इति स्वराट् त्रिष्टुप्। तेन देवानां मुखेक्षा स्वराजो भगवत इयं स्वच्छन्दा लीलेत्याह॥ ५॥ अनिमिषा अस्वप्ना अपि देवा निमीलिताक्षाः शिश्यिरे इति प्रथमचकारार्थः। न केवलं लीलानाटकसूत्रधारी हरिः शिश्ये। पात्रधारिणो देवाश्च सर्वे शिश्यिर इति समुच्चये द्वितीयः। विष्णुमाया दुरत्ययेत्याह– तदा बलिः। कथमन्यथा देवानामनिद्रत्वं जानन्नपि सुप्तास्त इति श्रद्दधे? कथन्तरां भगवान् सुप्त इति? कथन्तमां भगवद्भक्तः सन् तत्किरीटं जहार? कश्चिद् ग्रहग्रस्तः पुरुष इव विस्मृतात्मा स्वात्मनेऽप्यप्रभवंस्तथा चकार। तदाऽऽविष्टस्य देहेन्द्रियादिकमावेष्टा स्वाधीनं करोतीति सर्वमुपपन्नम्। इन्द्रादीनामसुरावेशेऽप्ययमेव न्यायः सर्वत्र। **'सुप्तस्य शयने दिव्ये क्षीरोदे वरुणालये। विष्णोः किरीटं दैत्येन हृतं वैरोचनेन वै'** [वि.प.४१.३९] इति हरिवंशे, **'वैरोचनेन सुप्तस्य मम मौलिर्महोदधौ। शक्रस्य सदृशं रूपं दिव्यमास्थाय सागरात्। ग्राहरूपेण यो नीत आनीतोऽसौ गरुत्मता'**

नारायणे सर्वदेवैः समेते ब्रह्मादिभिर्हासमाने सुपर्ण्णः ।
गत्वा पाताळं[1] युधि जित्वा बलिं च किरीटमादायाभ्ययाद् यत्र कृष्णः ॥ ७ ॥

तत् तस्य शीर्ष्णि प्रतिमुच्य नत्वा खगः स्तुत्वा देवदेवं रमेशम् ।
स्मृत आगच्छेत्येव विसर्ज्जितोऽमुना ययौ दुग्धाब्धिं यत्र नारायणोऽसौ ॥ ८ ॥

किरीटं तत् कृष्णमूर्ध्नि प्रविष्टं तत्तुल्यमासीत् तस्य रूपेष्वभेदात् ।
तदिच्छया चैव[2] नारायणस्य शीर्ष्ण्यप्यासीद् युगपद् दुग्धवार्द्धौ ॥ ९ ॥

पूर्वं[3] प्राप्तान्येव दिव्यायुधानि पुनर्वैकुण्ठं लोकमितानि भूयः ।
तदाऽवतेरू रौहिणेयस्य चैवं[4] भार्य्याऽप्यायाद् वारुणी नाम पूर्वा ॥ १० ॥

**ब्रह्मादिभिः सर्वदेवैः समेते नारायणे हासमाने सति ॥ ७ ॥ तस्य गोमन्ते स्थितस्य कृष्णस्य शीर्ष्णि ॥ ८ ॥ दुग्धवार्धौ नारायणस्य शीर्ष्ण्यपि श्रीकृष्णशीर्ष्ण्यपि युगपदासीच्च । कुत एतत्? तदिच्छयैव अघटितघटकनारायणेच्छयैव ॥ ९ ॥ पूर्वं प्राप्तानि (पूर्वो)क्तजरासन्धयुद्धे प्राप्तानि ॥ १० ॥**

---

[४८] इति च । शेतुमिव शिरसोऽवमुक्तं किरीटमादायागात् पाताळम् ॥ ६ ॥ हासमाने हसति । कृष्णरूपे तत्किरीट-धारणं फलमित्यात्मनेभाषा । ननु तर्हि 'हसमाने' इति वक्तव्यम् । कथं हासमाने? आधिक्येऽधिकम् । अवधारणे वा दैर्घ्यम् । उच्चैर्हसति सतीत्यर्थः । अपिच हासेन बलेर्दुराशयं मानयन् ज्ञापयन् हासमान उच्यते । भक्तत्वात् क्षमया मानयंश्च । अपि च 'ह+असमाने' इति च प्रतृण्णम् । असमाने सर्वोत्तमे नारायणे ब्रह्मादिभिः समेते सपरिवारे स्थिते सत्येव किरीटमपजहार हेति विस्मयते । तदेवं बह्वर्थोऽयं प्रयोगः ॥ ७ ॥ प्रतिमुच्य प्रतिष्ठायै स्थिरमवस्थानाय मुक्त्वा निधाय । स्थापनमेव वा प्रतिमोचनम् । देवानां ब्रह्मादीनामपि देवम् । देवैः सह सृष्ट्यादिना दीव्यतीति च । देवैरपि देवं स्तुत्यम् । रमाणां मुक्तानामपीशम् । रमाया अपीशम् । अमुना कृष्णेन । असौ नारायणः यो बलिं परिजहास । असौ कृष्ण एव यत्र नारायणात्मेति च । अत्र पूर्वार्धं त्रैष्टुभमुत्तरार्धं जागतम् । अपिच तृतीयपादस्त्रयोदशाक्षर इति भुरिग् जगती । अक्षराधिक्येन गरुडेऽनुग्रहातिशयमाह ॥ ८ ॥ तत्तुल्यं तत्प्रमाणतुल्यप्रमाणम् । अत एव प्रकर्षेण विष्टं निरवकाशं लग्नम् । कथमिदम्? रूपेष्वभेदात् । तदिच्छया च । तदिच्छयैव सर्वमघटितं घटयतीति नात्र कारणान्तरं मृग्यमित्येवकारेणाव-धारयति ॥ ९ ॥ पूर्वं जरासन्धेन साकं प्रथमसङ्ग्रामसमये । पुनर्वैकुण्ठं लोकमितानि तदिच्छयैव । भूयः बहुधा । पुनरपीत्यर्थे वा । तदिच्छयैवावतेरुः । एतेनाऽयुधानां चिद्रूपतामाह । रौहिणेयस्य आयुधानि च एवमवतेरुः, न केवलम्, पूर्वा मूल-

---

१. **'पातालम्'**
२. **'–च्छया तस्य नारा–'** इति क्वचित् ।
३. **'पुरा'** इति क्वचित् ।
४. **'चैव भार्याऽप्यगाद्'**

**सैवापरं रूपमास्थाय चाऽगाच्छ्रीरित्याख्यं सेन्दिरावेशमग्र्यम् ।**
**कान्तिश्चाऽगात् तस्य सोमस्य चान्या भार्य्या द्वयोः पूर्वतना सुरूपा ॥ ११ ॥**

**ननु कान्तिः सोमस्य भार्या । सा कथं रौहिणेयस्य भार्येति? तत्राऽह–सोमस्येति । सोमस्य भार्या कान्तिरन्या । द्वयोः कान्तिवारुण्योः ॥ ११ ॥**

---

रूपस्य भार्याऽप्यायात् । वारुणीति सुरोच्यते । मथनकाले वरुणादब्धेर्जातत्वात् । अत एव तन्मानिनी शेषभार्या च वारुणी । मणिपूरे स्थित्वा मनसि विषयकामनां जनयित्वाऽनाहते भगवद्ध्यानं वारयतीति च वारुणी । **'साऽस्मि पूर्णेन योगेन यथैवामृतमन्थने । समीपं प्रेषिता पित्रा वरुणेन तवानघ'** [ह.वं.वि.प.४१.२१] इति हि स्मरन्ति ॥ १० ॥ सैव रूपान्तरेण सतां ध्यानान्तरायं वारयन्ती भगवदनुभूतिजातं शं रातीति श्रीः । श्रयति शेषमिति च श्रीः । श्रिय आवेशाच्च श्रीरित्याह– सेन्दिरावेशम् । यस्यां शेषाविष्टः सङ्कर्षणो भगवान् रमते । एतेन– **'श्रीश्च पद्मालया देवी निधेया वैष्णवोरसि'** [वि.प.४१.२८] इति हरिवंशवचनतात्पर्यं विवृतम् । बलरामे विष्णोः शुक्लकेशावेशात् तत्पत्न्यामपि लक्ष्म्या आवेश इति । सोमस्य भार्या कान्तिरन्या । रामस्य भार्या कान्तिरन्येति प्राचीनटीका । **'मदिरा रूपिणी भूत्वा कान्तिश्च शशिनः प्रिया । श्रीश्च देवी वरिष्ठा स्त्री स्वयमेवाम्बुजध्वजा । साञ्जलिप्रग्रहा देवी बलभद्रमुपस्थिता'** [४१.१५] इति च । इदमत्र चिन्त्यं भवति– शशिनो भार्या कान्तिः स्मर्यते । शेषस्य भार्या च । तत्र संशय्यते– किमेकैव द्वयोर्भार्या, आहो द्वे अप्येते अन्ये एवेति । एकैवेति तावत् हरिवंशे प्रतीयते–**'कान्तिश्च शशिनः प्रिया'** इति । निर्णयाय प्रवृत्तमाचार्यवचनमिदमपि सावकाशमिव । तथाहि एकैवेति पक्षे पद्यार्थः– तस्य रामस्य वारुणीतोऽन्या भार्या, सोमस्य च रोहिणीतोऽन्या भार्या कान्तिरित्येकैव सा द्वयोर्भार्येति । उभे अपि भिन्ने इति पक्षे–तस्य रामस्य अन्या कान्तिर्भार्या । सोमस्य चान्येति । ननु हरिवंशसंवादेन प्रथमः पक्ष एव स्वीक्रियताम् । न शक्यं स्वीकर्तुम् । यतः प्राचीनाष्टीकाकारा नैकत्वमनुमोदन्ते । ऋतेऽश्विभ्यामृते च प्रचेतोभ्यो नान्यत्र देवेष्वेकभार्यत्वमिति तेषामाशयः । समानभार्यतायाः समानस्कन्धताव्याप्यत्वनैयत्यात् । यत्तु तारा चन्द्रमसो दयिता बभूव स न वैधः पतिपत्नीभावः । बृहस्पतिभार्यां चन्द्रश्चकमे । यत्तु वालिसुग्रीवयोरेका भार्या बभूव तदप्यावतारिकम्, न मूलरूपसम्बन्धि । अपिच तेन किञ्चिदिव दोषलेपो बभूव । नात्र तथा । नापि द्रौपदीवत् । तत्र हि पञ्चदेवीसमावेशः स्मर्यते । नात्र तथा कान्त्यां वारुण्या रोहिण्या वा समावेशः स्मर्यते । तस्मान्नामैक्यमेव, न भार्यैक्यमिति प्रतनानामाचार्याणामाशयः । ततो वयमपि तमेव पन्थानमनुपतामः । ननु प्रतनाचार्याननुरुरुत्सन् प्रतनतमं हरिवंशं व्यरुणः? न कदाऽपि । तथाहि निर्णयवचनस्य तावदयमर्थः–तस्य रौहिणेयस्य कान्तिनामा तृतीया भार्या चाऽगात् । ननु **'कान्तिश्च शशिनः प्रिया'** इति पठ्यते? सत्यं पठ्यते । अथापि सोमस्य भार्या कान्तिनामाऽपि रामभार्याया अन्या? तयोर्द्वयोः रौहिणेयरोहिणीभार्ययोः पूर्वतना रामभार्या कान्तिः सुरूपा सोमभार्यायाः कान्तितोऽधिकरूपा । एवं तयोः रामभार्ययोः वारुणीकान्त्योः पूर्वतना वारुणी योग्यतायामधिकेति रूपतोऽप्यधिकेति । कथमनेन हरिवंशविरोधः पर्यहियत? शृणु । शेषस्य भार्या कान्तिः शशिनश्च प्रिया सुहृदित्युच्यते । नतु भार्येति । तत् को विरोधः । प्रीतिर्व्यापको धर्मः । भार्यात्वं व्याप्यम् । भार्याऽपि प्रीयते । न तु भार्यैव । ननु शेषभार्या

**ताभी रामो मुमुदे तत्र तिष्ठञ्छशाङ्कपूगोद्रिक्तकान्तिः सुधामा ।**
**तस्या वारुण्याः प्रतिमा पेयरूपा कादम्बरी वारुणी[1] तां पपौ सः ॥ १२ ॥**

**एवं तयोः क्रीडतोः स्वैरमत्र राजन्यवृन्दानुगतो जरासुतः ।**
**गिरिं गोमन्तं परिवार्य्यादहत् तं दृष्ट्वा देवौ पुप्लुवतुर्बलाब्धौ[2] ॥ १३ ॥**

**गिरिस्ताभ्यां पीडितः सन् निमग्नो भूमौ पद्भ्यां योजनैकादशं सः ।**
**निष्पीडिताज्जलधारोद्गताऽस्माद् वह्निं व्याप्तं शमयामास सर्वम् ॥ १४ ॥**

**ताभिः वारुणीश्रीकान्तिभिः ॥ १२–१६ ॥**

---

शेषस्य प्रियेति वक्तव्यम् । किमिति शशिनः प्रियेत्यसङ्गतमुच्यते? तत्रापि शृणु कारणम् । कान्तिनामानाविमे कान्तिमानिन्यौ, तत एव च चन्द्रिकामानिन्यौ । तस्मात् स्वचन्द्रिकाया मुख्यमानित्वात् शेषचन्द्रिकाऽपि चन्द्रस्य विशिष्य स्नेहपात्रं बभूवेति । तमेतमर्थविशेषं ग्राहयितुमेव हरिवंशे **'कान्तिश्च शशिनः प्रिया'** इत्याह । यदीदं नावक्ष्यत नाज्ञास्यत शेषभार्यायाश्चन्द्रिकाभिमानित्वम् । सोमस्य चेयमन्या भार्या । चन्द्रिकैका भार्या । इयमन्या कान्तिर्नाम भार्येति । चन्द्रिकामात्रमानिनी चन्द्रिका । कान्तिस्तु न केवलं चन्द्रकान्तिमानिनी । किन्तु कान्तिसामान्यमानिनी । वक्ष्यति च– **'सचन्द्रिकाकान्तिरनूनबिम्बो नभःस्थितश्चन्द्र इव–'** [३०.२०] इति । सचन्द्रिकः सकान्तिरिति किल तत्रार्थः । **''शशिनः प्रिया कान्तिः 'अन्या' इत्यध्याहारेण हरिवंशयोजना'** इति व्याख्यानं तु भाषाशास्त्रविदां चित्ते न लगति । नहि नञर्थं पदं क्वाप्यध्याह्रियते । नहि कोऽपि 'घटोऽस्तीत्यस्य नञोऽध्याहारेण घटो नास्तीत्यर्थः' इति वदन् विदन् भवति । अनन्वितं चेदं व्याख्यानमित्युपेक्ष्यम् ॥ ११ ॥ शशाङ्कपूगोद्रिक्तकान्तिरिति । **'पूगः क्रमुकसङ्घयोः'** इति हैमः । अनेन **'अहं चन्द्रादपि गुरुं सहस्रशिरसं प्रभुम् । स्वगुणैरनुरक्ता त्वाम्–'** [वि.प.४१.२७] इति कान्तिवचनं विवृतम्– कान्त्या स्वगुणैश्च चन्द्रादपि गुरुमधिकमिति । एतेनैतदपि सूचितम्–चन्द्रादुत्तमगुणं कामयमाना कान्तिः चन्द्रजायायाः कान्तितः स्फुटमधिकगुणेति । न केवलं सुकान्तिः । किन्तु सुधामा सुतेजाः । परैरसह्यतैव सुष्ठुता तेजसि । सुखरूपं भगवन्तमाश्रित इति च सुधामा । कादम्बरी मदिरा । तस्याः प्रतिमास्थानीयत्वादेव तन्नाम्नैव मदिराऽपि कथ्यते वारुणीति । कादम्बरीपदमप्येतमेवार्थमाह । कदम्बर इति नीलाम्बरतया कुत्सिताम्बरो बलभद्रो ह्युच्यते । तस्येयं कादम्बरी भवति । एतेनैतदाह– नहि मदिरापानं रामस्य दोषाय । नहि स्वभार्याभोगो दोषाय भवतीति । कदम्बस्य रसेन जातत्वाच्च कादम्बरी । **'अथ सङ्कर्षणः श्रीमान् विना कृष्णेन वीर्यवान् । चचार तस्य शिखरे नगस्य नगसन्निभः । प्रफुल्लस्य कदम्बस्य सुच्छाये निषसाद ह । ..... तदा प्रावृषि फुल्लस्य यदम्भो जलदोज्झितम् । तत्कोटरस्थं मदिरा सञ्जायत मनोहरा'** [४१.५.१०] इति च ॥ १२ ॥ गिरिं तं यं रामकृष्णावधितिष्ठतुः । देवौ क्रीडन्तौ सेनासागरे पुप्लुवतुः वेगेन दुद्रुवतुः । प्लुङ् गतौ । परसेनायाः प्रतारणमस्य फलमिति परस्मैभाषा ॥ १३ ॥ योजनानामेकादशः यत्र पूर्यते स योजनैका-

---

१. 'वारुणीं ताम्'

२. '–वतुर्बलाढ्यौ ।'

**सेनां प्रविष्टौ सर्वराजन्यवृन्दं व्यमत्थ्नातां देववरौ स्वशस्त्रैः ।**
**[1]तत्र हंसो डिभकश्चैकलव्यः स कीचकस्तौ शिशुपालपौण्ड्रकौ ॥ १५ ॥**

**भौमात्मजो दन्तवक्रश्च रुग्मी[2] सौभाधिपो मैन्दमैन्दानुजौ च ।**
**अन्ये च ये पार्त्थिवाः सर्व एव क्रोधात् कृष्णं परिवार्य्याभ्यवर्षन् ॥ १६ ॥**

**शस्त्रैरस्त्रैर्द्रुमपूगैः शिलाभिर्भक्ताश्च ये शल्यबाह्लीकमुख्याः ।**
**ससोमदत्ताः[3] सौमदत्तिर्विराटः पाञ्चालराजश्च जरासुतस्य ।**
**भयात् कृष्णं [4]शस्त्रवर्षैरवर्षन् कारागृहे वासिता मागधेन ॥ १७ ॥**

**सर्वानेताञ्छरवर्षेण[5] कृष्णो विसूतवाजिध्वजशस्त्रवर्म्मणः ।**
**कृत्वा वमच्छोणितानार्त्तरूपान् विद्रावयामास हरिर्य्यथा मृगान् ॥ १८ ॥**

**हत्वा सेनां विंशदक्षोहिणीं[6] तां त्रिभिर्य्युक्तां रुग्मिणं[7] नैव कृष्णः ।**
**रुग्मिण्यर्त्थे[8] पीडयामास शस्त्राण्यस्य च्छित्वा विरथं द्रावयानः ॥ १९ ॥**

**सौमदत्तिर्भूरिश्रवाः ॥ १७–१८ ॥ त्रिभिरक्षोहिणीबलैः ॥ १९–२० ॥**

---

दशः । एकादश योजनानीत्यर्थः । निःशेषं पीडितत्वान्नितरां मग्नः । निमग्नत्वात् भूमेरधःस्थिता जलधारा उद्गता ॥ १४ ॥ सः यः पूर्वं जितः हंसः डिभकः एकलव्यश्च । सकीचको वा एकलव्यः । तौ च कृष्णबन्धू शिशुपालपौण्ड्रकौ । जयाविष्टतया प्राधान्यात् शिशुपालस्य पूर्वनिर्देशः ॥ १५ ॥ भौमात्मजो भगदत्तः । सौभाधिपः साल्वः । मैन्दानुजो विविदः । कृष्णं परिवार्य शस्त्रैरस्त्रैर्द्रुमपूगैः शिलाभिश्चाभ्यवर्षन् ॥ १६ ॥ भक्ता अपि शल्याद्या जरासन्धस्य भयात् । 'कृष्णेन साकं युद्धे भवतो मोचयामि । न चेत् कारागृहमेव शरणमामरणम्' इति भीषयित्वा कारागृहे वासिताः । ये चान्ये कारागृहे वासिताः परस्सहस्रा राजपुत्रास्ते च शरवर्षैरवर्षन्निति चार्थान्तरं भावप्रकाशिकायाम् ॥ १७ ॥ विगताश्च विगतानि च विगतानि । विगतानि सूतवाजिध्वजशस्त्रवर्माणि येषाम् । हरिः सिंहो मृगानिव हरिः कृष्णो विद्रावयामास ॥ १८ ॥ प्राचीने संस्कृते विंशतिर्विंशद् भवति । त्रिशंत् त्रिंशतिर्भवति । विंशतिरक्षोहिण्यः यत्र सा सेना विंशदक्षोहिणी । पुनश्च त्रिभिः तिसृभिः अक्षोहिणीभिर्युक्ताम् । सेनायाः पौरुषातिशयद्योतनार्थं लिङ्गव्यत्ययः । सेयमाचार्यपादशैली दृश्यतेऽन्यत्रापि । तद् यथा–

---

१. **'तत्रैव हंसो डिभक–'** २. **'रुक्मी'** ३. **'–मदत्तः सौम–'** ४. **'शरवर्षै–'**
५. **'–वर्षैस्तु कृष्णो–'** इति क्वचित् । ६. **'विंशदक्षौहिणीम्'** ७. **'रुक्मिणम्'** ८. **'रुक्मिण्यर्थे'**

जरासुतो रौहिणेयेन युद्धं चिरं कृत्वा तन्मुसलेन पोथितः ।
विमोहितः प्राप्तसञ्ज्ञश्चिरेण क्रुद्धो गदां तदुरस्यभ्यपातयत्[१] ॥ २० ॥

तेनाऽहतः सुभृशं रौहिणेयः पपात मूर्च्छाभिगतः क्षणेन ।
अजेयत्वं तस्य दत्तं हि धात्रा पूर्वं गृहीतो विष्णुना रामगेन ॥ २१ ॥

तथाकृते बलभद्रे तु कृष्णो गदामादाय स्वामगान्मागधेशम् ।
तताड जत्रौ स तयाऽभिताडितो जगाम गां मूर्च्छयाऽभिप्लुताङ्गः ॥ २२ ॥

**कथमतिबलो बलभद्रो जरासन्धगदापातान्मूर्छित इत्यत उक्तम्– अजेयत्वमिति । अजेयत्वं तस्य धात्रा दत्तं चेत् कथं बलेन पूर्वं गृहीत इत्यत आह– पूर्वमिति । 'जगृह एनमथो हली सः'(१४.३८) इति पूर्वयुद्धे ॥ २१ ॥ जत्रौ वक्षस उपरि कण्ठादधस्तात् स्थितास्थ्नि । अभिप्लुताङ्गः प्रहतावयवः ॥ २२ ॥**

---

**'दाशोदिताभिर्वचोभिः'** इत्यादि। अथच त्रिभिर्युक्तामिति पूर्वं विंशदक्षोहिणीमिति प्रस्तुतैकदेशे विंशताऽन्वेति। बहुलं भवन्ति चैतादृशाः प्रतनप्रयोगाः । त्रिभिर्युक्ता विंशतिः । त्रयोविंशतिरित्युक्तं भवति । तावदक्षोहिणीकां सेनाम् । द्रावयानः । **'बुधयुधनशजनेङ्प्रद्रुस्रुभ्यो णेः'**[अ.सू.१.३.८६] इति विहितं परस्मैपदमनादृत्य कर्त्रभिप्रायक्रिया-फलविवक्षयाऽऽत्मनेपदमेवाऽश्रितम् । रुग्मिणीतोषणमात्मगामि फलमिति स्फुटमगादि रुग्मिण्यर्थ इति । सुषुम्नादिवत् क्वचिण्णत्वं च विभाषा भवति । अपिच अरातियानं द्रावयन् द्रावयान उच्यते । तथाच रुग्मिणो यानं द्रावन्द्रावं तं विरथं कृत्वा पीडयामासेत्यर्थः ॥ १९ ॥ विमोहितः दीर्घकालं मोहं प्रापितः । अत एव चिरेण प्राप्तसञ्ज्ञः । दीर्घमोहजनितेनाव-हेळनेनैव च क्रुद्धः । केनापि विधानेनावार्यतया पातस्यामोघत्वमभेरर्थः, अभितः पातनमभिपातनमिति । अभिद्रुत्य च पातनमभिपातनम् । **'अभिदुद्राव रामं तु जरासन्धो नराधिपः'** [वि.प.४३.६७] इति च ॥ २० ॥ सुभृशमिति । यद्यपि स्विति भृशमिति समानार्थे पदे अतिशयवचने । अथाप्यस्ति सूक्ष्मोऽर्थभेदः । भृशमिति आहननस्य वेगातिशयमाह । स्विति तन्मूलं क्रोधातिशयमाह । कोपातिशयेन दृढतरमाजघ्न इति । अथच भृशमिति दृढमुच्यते । सुभृशमिति दृढतरम् । अथच पूजायां सुः । शत्रुभिरप्यस्य गदायुद्धपाटवमभिनन्दनीयमित्यर्थः । सुष्ठु च भृशं च यथा स्यात् तथा । **'सु पूजायां भृशार्थेऽनुमतिकृच्छ्रसमृद्धिषु'** इति मेदिनी । तेन तस्य प्रतिनिरोधः कृच्छ्रसाध्य इति चाऽह । अत एव पपात मूर्च्छा-भिगतः । निष्पन्दत्वमभेरर्थः । पूर्वयुद्धे यद्यपि रामेण जरासुतो निगृहीतः । वस्तुतस्तु रामगेन विष्णुनैव गृहीत इति न धातुर्वचनभङ्गः ॥ २१ ॥ तथाकृते मूर्च्छिते कृते । शेषावतारत्वेऽपि धातुर्वरोल्लङ्घनशक्त्यभावं तुनाऽऽह । तताड ताडया-मास । चुरादीनां णिज्विकल्पश्च प्राचामाचार्याणां मते । चन्द्रादयोऽपि तथैव मन्यन्ते । नह्यपसिद्धान्तकौमुदीमुग्धानां दुर्विदग्धानामवबोधाय भवति प्राचीना गैर्वाणी वाणी । तेन चोरति ताडति तताडेत्यादीनि साधुपदान्येव । जत्रौ जत्रुणि ।

---

१. **'–भ्यताडयत्'** इति क्वचित् ।

**अथोत्तस्थौ रौहिणेयः सहैव समुत्तस्थौ मागधोऽप्यग्रवीर्य्यः ।**
**क्रुद्धो गृहीत्वा मौलिमस्याऽशु रामो वधायोद्यच्छन्मुसलं बाहुषाळी[1] ॥ २३ ॥**

**अथाब्रवीद् वायुरेनं न राम त्वया हन्तुं शक्यते मागधोऽयम् ।**
**वृथा न ते बाहुबलं प्रयोज्यममोघं ते यद् बलं तद्वदस्त्रम् ॥ २४ ॥**

**अन्यो हन्ता बलवानस्य चेति श्रुत्वा ययौ बलभद्रो विमुच्य ।**
**जरासुतं पुनरुद्यच्छमानं जघान कृष्णो गदया स्वयैव ॥ २५ ॥**

**उद्यच्छत् उदयच्छत् उद्यतमकरोत् ॥ २३ ॥ ते अस्त्रं यद्वदमोघं तद्वत् ते बलमपि अमोघं यत् तस्मात् ते बाहुबलं वृथा न प्रयोज्यमिति सम्बन्धः ॥ २४–७ ॥**

---

दार्ढ्यातिशयद्योतनार्थं लिङ्गव्यत्ययः । **''जत्रुश्मश्रुशिग्रुशत्रवो रुप्रत्ययान्ता निपात्यन्ते । 'जनी प्रादुर्भावे ' । जायत इति जत्रु । ग्रीवाया अस्थि ग्रीवावयवो वा'** [का.उ.सू.३.६६] इति दौर्गसिंही वृत्तिः । तेन अस्थि जत्रु, अवयवो जत्रुरित्यपि शक्यं वक्तुम् । पुम्पदानां सामानाधिकरण्यात् । अभिगृह्य ताडितोऽभिताडितः । 'किं तेन मूर्छाभिगतेन । अयि मयि दर्शय ते पुरुषकारम्' इति कलहाह्वानमभिग्रहः । अभ्यमित्रीणतया ताडितः । अभ्यर्हितं ताडितः । अभिप्लुतमाक्रान्तम् ॥ २२ ॥ रामः स्वशक्त्या उत्तस्थौ । मागधोऽपि वरेण समेधित उत्तस्थौ । अथच मागधोऽप्यग्रवीर्यः । रौहिणेयः स्वयमग्र्यवीर्यः । मागधोऽपि रौहिणेयापेक्षयाऽनग्रवीर्योऽपि, रौहिणेयादप्यग्रेण ब्रह्मणा, तद्वरबलेनेति यावत्, वीर्यमस्येत्यग्र्यवीर्यः । इतरापेक्षया तु स्वयमग्र्यवीर्यः । मौलिं जूटम् । उदयच्छत् उद्यमं चकारेत्यर्थः । 'यम उपरमे' । 'यमु' इति मैत्रेयः । **'इषु-गमि-यमां छः'** [अ.सू.७.३.७७] इति पाणिनिः । इच्छति, गच्छति, यच्छति । मुसलमुदयच्छदिति वक्तव्ये उद्यच्छदित्याह । तेनाक्षरलोपेन क्रियाफलस्य लोपमाह । यदा उद्यच्छन् बभूव, अथाब्रवीदिति वा ॥ २३ ॥ अथाब्रवीदिति । **'ततोऽन्तरिक्षे वागासीत् सुस्वरा लोकसाक्षिणी । न त्वया राम वध्योऽयमलं खेदेन मानद । विहितोऽस्य मया मृत्युस्तस्मात् साधु व्युपारम । अचिरेणैव कालेन प्राणांस्त्यक्ष्यति मागधः'** [वि.प.४३.७२–३] इति च । भीमरूपेण मयाऽस्य मृत्युर्विहित इति पुराणवचनार्थः । अत एवेदं वायुवचनमिति स्फुटम् । एतेन **'प्रहर्तव्यो न राजाऽयमवध्योऽयं त्वयाऽनघ । कल्पितोऽस्य वधोऽन्यस्माद् विरमस्व हलायुध । श्रुत्वाऽहं तेन वाक्येन चिन्ताविष्टो निवर्तितः । सर्वप्राणहरं घोरं ब्रह्मणा स्वयमीरितम्'**[ ७३.४९–५०] इत्युपरितनहरिवंशवचने **'ब्रह्मणा स्वयमीरितम्'** इत्यस्य 'वायुना स्वयमीरितम्' इत्यर्थ इत्युक्तं भवति । **'विहितोऽस्य मया मृत्युः'** इति पूर्ववचनसंवादात् । 'मया वायुना' इति किलार्थः । अत एव भीमस्तं जघान ॥ २४ ॥ अन्यो बलवानिति वायुरेव । वायुर्हि बलदेवता । उद्यच्छमानम् । उद्यमनफलं हननं न परगामि, किन्त्वात्मगाम्येव बभूवेत्याह– जघान कृष्णः ॥ २५ ॥

---

१. **'बाहुशाली ।'**

तेनाऽहतः स्रस्तसमस्तगात्रः पपात मूर्च्छाभिगतः स राजा ।
चिरात्[1] सञ्ज्ञां प्राप्य चान्तर्हितोऽसौ सम्प्राद्रवद् भीतभीतः सलज्जः ॥ २६ ॥

ययौ शिष्टै राजभिः संयुतश्च पुरं जीवेत्येव कृष्णेन मुक्तः ।
पुनर्य्युद्धं बहुशः केशवेन कृत्वा जितो राजगणैः समेतः ॥ २७ ॥

कृष्णो जित्वा मागधं रौहिणेययुक्तो ययौ दमघोषेण सार्द्धम् ।
पितृष्वसायाः पतिना तेन चोक्तः पूर्वं जितेनापि युधि स्म बान्धवात् ॥ २८ ॥

यामः पुरं करवीराख्यमेव महालक्ष्म्याः क्षेत्रसन्दर्शनाय ।
श्रुत्वा वाक्यं तस्य युद्धे जितस्य भीत्या[2] युक्तस्याऽत्मना तद्युतोऽगात् ॥ २९ ॥

**पूर्वं युधि जरासन्धेन सहाऽगत्य युद्धे जितेनापि पराजितेनापि तेन च बान्धवादेव बन्धुस्नेहादेव करवीराख्यं नाम पुरं याम इत्युक्तोऽभूत् । आत्मना मनसा प्रीत्या भक्त्या । न केवलं बन्धुस्नेहवतः, किन्तु मनसा भक्त्याऽपि युक्तस्य । मनसेति बाह्यप्रीतिप्रदर्शनमात्रं न भवतीत्युक्तम् ॥ २८–९ ॥**

---

स्रस्तं गलितं शिथिलबन्धम् । अन्तर्हितः, अदर्शनं गतः । मुखं दर्शयितुमपि लज्जमानः क्वापि निलीय ययावित्यर्थः । धावन्धावं गमनं द्रवणमुच्यते । भयेन द्रवणं प्रद्रवणम् । भयकातरतया पलायनपरायणता सम्प्रद्रवणम् ॥ २६ ॥ केशयोरपि प्रवर्तकेन केशलब्धवरो युयुध इति तस्य मौर्ख्यं विस्मयावहमित्याह ॥ २७ ॥ पितृष्वसायाः पृथुश्रवसः पतिना । **'पितृष्वसायाः पुत्रो मे'** [आ.प.२४६.१३] इति भारते । **'षष्ठीयुक्तश्छन्दसि वा'** [अ.सू.१.४.९] । शिशुपालस्य पित्रा दमघोषेण सार्धं ययौ । यानकाले तेन उक्तश्च । शत्रून् दमयन् घोषोऽस्येति दमघोषः । बान्धवात् बन्धुत्वेन हेतुना । बन्धुत्वमनुसृत्यानुस्मृत्य वा । यद्यपि वैयाकरणा बन्धुरेव बान्धव इत्याचक्षते । **'प्रज्ञादिभ्यश्च'** [अ.सू.५.४.३८] इत्यतः प्रज्ञादिगणपठितत्वात् स्वार्थेऽणं प्रत्ययमाहुः । वयं तूभयवादिनः–बन्धुरेव बान्धवः, बन्धोर्भावो बान्धवं बान्धव्यं वेति ॥ २८ ॥ 'महालक्ष्म्याः क्षेत्रं करवीराख्यं पुरमेव प्रथमं यामः । सामीप्यात्, आह्वातुर्मम बन्धुत्वात्, क्षेत्रदेवताया महालक्ष्म्याः, क्षेत्रस्य च सन्दर्शनाय च । ततः स्वपुरं यास्यसि' इत्युक्तः कृष्णः तस्येदं वाक्यं श्रुत्वा । त्रेधा सन्दर्शनं भवति । सम्भाषणार्थं दर्शनं सन्दर्शनम्, समेत्य दर्शनं सन्दर्शनम्, भक्त्या दर्शनं सन्दर्शनम् । क्षेत्रं सन्दर्शनायेति वक्तव्ये बिन्दुलोपेन क्षेत्रसन्दर्शनायेत्याह । तेनाऽह्वाने किञ्चिदिव प्रीति-लोपमाह । यथाश्रुतं च व्याख्यानं भवति– करवीराख्यं महालक्ष्म्याः पुरमेव यामः । किमर्थम्? क्षेत्रसन्दर्शनाय । देवताधिष्ठितं स्थानं क्षेत्रम्, देवता अत्र क्षियन्ति निवसन्तीति । क्षि निवासे । तस्येति कस्य? पूर्वं यदा जरासन्धबन्धुतामङ्गीकृत्य, तद्भीत्या

---

२. **'चिरात् प्रसञ्ज्ञां प्राप्य चान्तर्गतोऽसौ'** इतति क्वचित् । २. **'प्रीत्या'** । वे.ती. पाठोऽपि तथा ।

**गन्धर्वोऽसौ दनुनामा नरोऽभूत् तस्मात् कृष्णे भक्तिमांश्चाऽस राजा ।**
**[1]पुरप्राप्तांस्तान् स विज्ञाय पापः सृगालाख्यो वासुदेवः क्रुधाऽऽगात्[2]** ॥ ३० ॥

**सूर्य्यप्रदत्तं रथमारुह्य दिव्यं वरादवद्ध्यस्तिग्मरुचेः स कृष्णम् ।**
**योद्धुं ययावमुचच्चास्त्रङ्घाञ्छिरस्तस्याथाऽशु जहार कृष्णः** ॥ ३१ ॥

**द्विधा कृत्वा देहमस्यारिणा च पुत्रं भक्तं तस्य राज्येऽभिषिच्य ।**
**स शक्रदेवं माणिभद्रः[3] पुरा यो ययौ पुरीं स्वां सहितोऽग्रजेन** ॥ ३२ ॥

**पुरं प्राप्तान् ॥ ३०–२ ॥**

---

च तत्सैन्यघटको भूत्वा स्वपत्न्याः भ्रातृव्येण लोकबन्धुना कृष्णेनैवायुयुत्सत तदा, आत्मना स्वेन युद्धे जितस्य । अत एवाऽत्मना अन्तर्मनसि भीत्या युक्तस्य । तेनेदमाह्वानं प्रीतिमाक्रम्य तिष्ठन्त्या भीत्येत्युक्तं भवति ॥ २९ ॥ अन्ततः प्रीतिरप्यासेत्याह– गन्धर्वोऽसौ । नरेषु जातोऽभूत् । यो रामायणे शापग्रस्तः कवन्ध आस । तान् रामकृष्णौ दमघोषं च । करवीरनृपतेर्दुहितरि वसुदेवेन जातत्वाद् वासुदेवः । पौण्ड्रक इव कृष्णद्विडयं कृष्णाग्रजः सृगालः । सरति शत्रूनिति सृगालः । **'सर्तेः कालन् प्रत्ययः गुक् चाऽगमः'** [स.कं.वृ.२.३.१०] इति दण्डनाथनारायणः । सृत्वा सृत्वा शत्रून् गालयतीति वा ॥ ३० ॥ तपसा प्रसन्नेन दत्तं प्रदत्तम् । **'सावित्रे नियमे पूर्णे यं ददौ सविता स्वयम् ।....तेन स्यन्दनमुख्येन द्विषत्स्यन्दनघातिना । स सृगालोऽभ्ययात् कृष्णं शलभः पावकं यथा'** [वि.प.४४.६–७] इति च । तिग्मरुचेः सूर्यस्य वरबलादवध्यः । जहार चक्रेण । **'चक्रेणोरसि निर्भिण्णः स गतासुर्गतोत्सवः'** [वि.प.४४.२९] इति च । **'शिरो जहार गोविन्दः क्षणेन मकुटोज्ज्वलम्'** [१०.५२.३९] इति भागवते । प्रथमं चक्रेणोरो निर्भिद्य पश्चाच्छिरो जहारेत्यर्थः । अत एव हरिवंशेऽपि–**'चक्रनिर्दारितोरस्कं भिन्नशृङ्गमिवाचलम्'** [३७] इत्युक्तम् । शत्रुकर्षणात् कृष्णः ॥ ३१ ॥ चक्रेणोरोनिर्भेदनप्रकारमाह– द्विधा कृत्वा देहमस्येति । पुत्रं भक्तमिति । **'तस्य पद्मावती नाम महिषी प्रमदोत्तमा । रुदती पुत्रमादाय वासुदेवमुपस्थिता । .....अयमस्य विपन्नस्य बान्धवस्य तवानघ । सन्तती रक्ष्यतां वीर पुत्रः पुत्र इवाऽत्मजः । तस्यास्तद् वचनं श्रुत्वा महिष्या यदुनन्दनः । मृदुपूर्वमिदं वाक्यमुवाच वदतां वरः ।.....योऽयं पुत्रः सृगालस्य ममाप्येष न संशयः । अभयं चाभिषेकं च ददाम्यस्य सुखाय वै'** [वि.प.४४.४८–५६] इति हरिवंशेषु । मणिभद्रस्य गन्धर्वस्यायं माणिभद्रः । पुरा मूलरूपे । ययौ पुरीं स्वाम् । **'अभिषिच्य सृगालस्य करवीरपुरे सुतम् । कृष्णस्तदहरेवाऽशु प्रयाणमभिरोचयत्'** [वि.प.४४.५९] इति च । ननु भागवतेऽन्यथा पठ्यते–**'अवरुह्य गिरेः शृङ्गात् करवीरपुरं गतौ । तत्र तौ चतुरो मासानुषित्वा भरतर्षभ । महत्या सेनया सार्धं जग्मतुर्मधुरां पुरीम्'** [१०.५३.२०–१] इति । नान्यथा

---

१. **'पुरं प्राप्तांस्तान्'** २. **'–देवः समागात्'** इति क्वचित् । ३. **'मणिभद्रः'**

**नीतिं बलिष्ठस्य विहाय सेनां दूराद् युद्धं दर्शयित्वैव गुप्त्यै ।**
**स्वसेनायाः सर्वपूर्णात्मशक्तिः पुनः पुरीं प्राप्य स [१]पूजितोऽवसत् ॥ ३३ ॥**

**इति श्रीमदानन्दतीर्थभगवत्पादविरचिते**
**श्रीमहाभारततात्पर्यनिर्णये सृगालवधो नाम**
**षोडशोऽद्ध्यायः**

—०—

[आदितः श्लोकाः– **१७९८**+३३=**१८३१**]

**सन्दर्शयन् बलिनामित्यत्रोक्तनीतिशेषं पूरयन् अध्यायार्थमुपसंहरति– नीतिमिति । बलिष्ठस्य स्वयमेव बलिष्ठस्य स्वसेनाया गुप्त्यै सेनां विहाय दूराद् युद्धं दूरं गत्वा युद्धम् ॥ ३३ ॥**

इति श्रीमहाभारततात्पर्यनिर्णयटीकायां श्रीवेदाङ्गतीर्थभट्टारकविरचितायां
तात्पर्यदीपिकायां षोडशोऽध्यायः

—०—

पठ्यते । भवानर्थमन्यथा जग्राह । अयं भागवतवचनार्थः–'तत्र गोमन्ते तौ चतुरो मासानुषित्वा, ततो गोमन्तगिरेरवरुह्य करवीरपुरं गतौ' इति । युक्तं च वर्षासु गोमन्ते विहारस्ततो जरासन्धेन युद्धं ततः करवीरक्षेत्रयात्रेति । नहि प्रावृषि युद्धं प्रवर्तते । अतीतायां प्रावृषि, प्राप्तायां च शरदि युद्धायोदयुङ्क्त जरासन्ध इति सर्वं सुन्दरम् ॥ ३२ ॥ स्वतो बलिष्ठस्यापि स्वसेनाया गुप्त्यै स्वसेनां विहाय दूराद् युद्धं युक्तमिति लोकनीतिं दर्शयित्वा । बलिष्ठस्य स्वस्य तु सेनानिरपेक्षत्वात् सेनां विहाय दूराद् युद्धमिति ज्ञानिनां लीलामयीं स्वनीतिं दर्शयित्वा । सर्वत्र पूर्णा आत्मशक्तिर्यस्य ॥ ३३ ॥

**आचार्यगोविन्दकृते**
**श्रीमद्भारततात्पर्यनिर्णयस्य ।**
**निर्णिक्ते व्याख्याने निर्णयभावचन्द्रिकाख्याने**
**गतं षोडशाध्यायविवरणं सुधियां हृदयाभरणम् ॥**

**इत्याचार्यगोविन्दस्य कृतिषु**
**श्रीमहाभारततात्पर्यनिर्णयपञ्चिकायां**
**निर्णयभावचन्द्रिकायां**
**षोडशोऽध्यायः**

—०—

१. **'सम्पूजितोऽ–'** इति, **'सुपूजितोऽ–'** इति च क्वचित् ।

# सप्तदशोऽध्यायः

[हंसडिभकवधः]

ॐ ॥ गतेऽथ चेदिपे स्वकं पुरं जनार्दनोऽशृणोत् ।
रमैव रुग्मिणीति[1] योद्यतां स्वयम्बराय[2] ताम् ॥ १ ॥

स [3]रुग्मिनामकोऽग्रजः श्रियो द्विषन् रमापतिम् ।
हरेः प्रदातुमुद्यतां न्यवारयद्धरिप्रियाम् ॥ २ ॥

प्रघोषिते [4]स्वयम्बरेऽथ तेन मागधादयः ।
समीयुरुग्रपौरुषाः ससाल्वपौण्ड्रचेदिपाः ॥ ३ ॥

**ॐ ॥ चेदिपे दमघोषे गते । कृष्णमापृच्छ्येति शेषः ॥ १ ॥ हरेः प्रदातुमुद्यताम्, पित्रेति शेषः । स्वयंवरं विनैवेति भावः । न्यवारयत् । तत् निवारणं चाशृणोदिति योज्यम् ॥ २–४ ॥**

ॐ ॥ चेदिपे शिशुपालताते दमघोषे । रमैव साक्षाद् रमा । या रुग्मिणीति नाम्ना बभूव ताम् । स्वयम्बराय स्वनिश्चित-वराय दातुं भ्रात्रादिभिरुद्यतां बलान्नियुक्ताम् । स्वाभिमतवरवरणाय यतमानां वा । यम उपरमे । उदुपसर्गयोगे चायं यच्छतिर्यत्ने, उद्योगे, उत्तोलने च पठ्यते ॥ १ ॥ सः हरिद्विडिति प्रसिद्धः । रुग्मिणीरूपायाः श्रियोऽग्रजः । रमापतिं द्विषन् । वस्तुतोऽयं न रमाया अग्रजः । किन्तु भीष्मकसम्पदभिमानिन्याः श्रिय एव दायभागग्रज इति परिजहास । रमापतिं हरिं द्विषन् । मूलरूपे च कृष्णरूपे च । कृष्णरूपस्य हरेः स्वात्मानं स्वयमेव प्रदातुमुद्यतां सन्नद्धाम् । पित्रा च हरेः प्रदातुमुद्यतां नियुक्ताम् । कन्याया अप्यभिमताय वराय हि दानं प्रदानम् ॥ २ ॥ प्रघोषिते घोषणद्वारा प्रकटिते । अथ हरिवरणनिवारणाय किमपि कुहकमारभमाणाः तेन निमित्तेन, तेन वरणनिवारणेन रुग्मिणा समीयुः सङ्गता बभूवुः, दुर्मन्त्रणार्थम् । चेदिपः शिशुपालः । ननु द्व्यक्षरं पदं विभज्य एकेनाक्षरेणासंहितेन पादान्तरारम्भो विद्वद्भि-र्नेष्यते । यथाऽत्र–'**प्रघोषिते स्वयम्बरेऽथ तेन मागधादयः**' इति । कुत्र नेष्यते? ननु काव्येषु । नायं काव्यालापः । एतत्सूचनायैवाऽऽचार्यः प्रथममेव प्रायुङ्क्त–'**परिपूर्णं गुरूंश्चान् गी+तार्थं वक्ष्यामि**' इति । नहि श्रवणसुभगता नाम काव्यधर्मः

१. '**रुक्मिणीति**' २. '**स्वयंवराय**' ३. '**रुक्मि–**' ४. '**स्वयंवरे**'

**तदा जगाम केशवो जवेन कुण्डिनं पुरम् ।**
**स्मृतोऽथ तेन पक्षिराट् समाजगाम केशवम्** ॥ ४ ॥

**पतत्रवायुनाऽस्य ते नरेश्वराः प्रपातिताः ।**
**यदेदृशं[1] पतत्रिणो बलं हरेः किमुच्यते** ॥ ५ ॥

**किमत्र नः कृतं भवेत् सुखाय हीति तेऽब्रुवन् ।**
**अथाब्रवीज्जरासुतो जयी पयोब्धिमन्दिरः ।**
**किलैष पक्षिवाहनो यतश्च नान्यथा भवेत्** ॥ ६ ॥

**पतत्रवायुनेत्ययं श्लोकः ग्रन्थकारवचनम् ॥ ५ ॥ किमत्रेत्यनुवादः । ते पातिता नरेश्वराः । जयी एष कृष्णः पयोब्धिमन्दिरः श्रीनारायणः किल । पक्षिवाहनो यतः अतश्च । पक्षिवाहनत्वलिङ्गाच्च ॥६–१२॥**

---

शास्त्रेष्वनुगम्यते । अत एवाध्यायेऽस्मिन् बहुलमेतादृशाः प्रयोगा विशेषतो दृश्यन्ते–**‘अतोऽभिषेचनाद् यदी+ह शार्ङ्गिणः शचीपतिः’** [४०], **‘प्रकुर्युरासुरा अपी+ति देवकार्यसङ्क्षयः’** [४४], **‘समस्तसेनया युतोऽ+पि योद्धुमित्यदर्शयत्’** [१२०], **‘भवासुरेण दूषिते+ति सा ततो हि मायया’** [१८९] इति । अपिच **‘तुहिचस्महवै’** इत्येतान्यव्ययान्यपि पादादौ काव्येषु न प्रयुज्यन्ते । तदपि न शास्त्रविषयमिति ज्ञापयन्नाचार्यस्तं कविसमयमभिन्त, प्रायुङ्क्त च पादादौ– **‘समस्तशो मृधेमृधे+हि येन चाक्षतेन हा’** [९], **‘स यावनेन भूभृता+हि गोपिकाभिरर्चितः’**[८२] इति । अपिच तुह्याद्या द्वेधा प्रयुज्यन्ते–अर्थविशेषद्योतनाय पादपूरणाय च । पादपूरणमिति वाक्यालङ्कार इति चानर्थान्तरम् । पादपूरणाय शास्त्रेऽपि न पादादौ प्रयुज्यन्ते । अर्थविशेषद्योतनाय तु पादादावपि स्युरित्याचार्याशयः । अपिच यत्र पाद एव वाक्यपूर्तिः तत्र वाक्यादाविव पादादावपि तुह्यादिर्न प्रयुज्यते । अत्र पादद्वयस्य संहत्याऽन्वय इति न दोषः ॥ ३ ॥ कुण्डानि जलाशया बहुलमत्र सन्तीति कुण्डिनं पुरम् । मत्वर्थीय इनच् । कुण्डतीति वा । कुडि रक्षायाम् । स्मृत इति । ‘स्मृत आगच्छ’ इति पुरा विसर्जितः [१६.६] । अथ अनन्तकरणीयाय स्मृतः । तत्र तत्सहायनैरपेक्ष्येऽपि तस्मिन्ननुग्रहविशेषापादनाय स्मृतः । अनुग्रहोन्मुखत्वमेव हि स्मरणं नाम । अथ स्मृतमात्र एव । समाजगाम, सेवालौल्यसम्भ्रमेण सन्त्वरमाण आजगाम ॥ ४ ॥ प्रपातिताः । न पतितव्यमिति प्रयतमाना अप्यपारयन्तः पातिताः । यदेदृशमिति भगवन्महिमग्रथनपुळकितगात्रस्य भगवत्पादस्य शिष्यानुजिघृक्षया स्ववचनं वा स्यात्, नरेश्वराणां वा वचनं स्यात् । **‘तस्य पक्षनिपातेन पतनोद्भ्रान्तकारिणा । कम्पिता मनुजाः सर्वे न्युब्जाश्च पतिता भुवि’** [वि.प.४७.२९] इति, **‘विदितं वः सुपर्णस्य ह्यागतस्य नृपोत्तमाः । पक्षवेगानिलोद्धूता बभूवुर्गगनेचराः’** [४८.४४] इति च हरिवंशे ॥ ५ ॥ अत्र हरिविरोधविषये, रुग्मिणीस्वयम्बरविषये वा । किं कृतं चेत् नः सुखाय हि निश्चितं सुखसाधनं स्यात् इति ते प्रपातिता

---

१. **‘यदीदृशम्’** इति क्वचित् ।

**जिता वयं च सर्वशोऽमुनैकलेन संयुगे ।**
**अनेकशो न सङ्गतैर्जितः कदाचिदेष हि ॥ ७ ॥**

**अमुष्य चाग्रजः पुरा निहन्तुमुद्यतो हि माम् ।**
**अदृश्यवाक्यतोऽत्यजत् प्रताडनात् सुपीडितम् ॥ ८ ॥**

**किमस्य तूच्यते बलं वयं तृणोपमाः कृताः ।**
**समस्तशो मृधेमृधे हि येन चाक्षतेन हा[१] ॥ ९ ॥**

**किमत्र कुर्वतां सुखं भवेदुदीर्ण्णसङ्कटे ।**
**इति ब्रुवन्नवाङ् मुखं नृपश्चकार विच्छवि[२] ॥ १० ॥**

अब्रुवन् । **'ही इति'** इति च प्रतृण्णम् । ही इति शोचन्त एवाब्रुवन् । एष पयोब्धिमन्दिरो नारायणः किल । इति वार्ता श्रूयते । यन्मे न रोचते । **'वार्तायामरुचौ किल'** इति ह्यभिदधति । अथापि श्रद्धेयमापतितम् । कुतः? पक्षिवाहनः । प्रसङ्गात् पक्षीति गरुड उच्यते । दृष्टेन व्याप्येन गरुडवाहनत्वेनादृष्टं व्यापकं पयोब्धिमन्दिरत्वं हि शक्यमनुमातुम् । कथं तथाऽन्वमिमीथाः? यतः अन्यथा पयोब्धिमन्दिरत्वाभावे गरुडवाहनत्वं च न भवेत् । व्यापकाभावे व्याप्याभावनैयत्यात् । **'कथमन्यस्य मर्त्यस्य गरुडो वाहनं भवेत्'** [वि.प.४८.३५] इति च । नारायणः पक्षिवाहनः श्रूयते । एषोऽपि पक्षिवाहनः किल । तेन तस्य नारायणत्वमनुमिमीमहे । अथच यतश्च यस्मादेव, तस्य पयोब्धिमन्दिरत्वात् पक्षिवाहनत्वाच्च हेतोः, अन्यथा न भवेत् । स व्यजयत वयं त्वजीयामहि इति वृत्तस्य व्यत्ययेनास्माकं विजयस्तस्य पराजयश्च प्रायः कदाऽपि न भवेदेवेति नैराश्यस्य परां काष्ठामाह । अथच यतश्च यस्मादेव, तस्य नारायणत्वादेव, नारायणस्य नित्यजयित्वादेव, अन्यथा पराजयः कदाऽपि न भवेत् । अथच यतश्च, तस्य पक्षिवाहनत्वादेव, तस्य गरुडस्कन्धमारुह्य यतः गच्छतः, अन्यथा पराजयो नाम न भवेत् अत्रापि किलेति न वाक्यारम्भः । तेन न दोषः । तथाच–**'जयी पयोब्धिमन्दिरः किलैष पक्षिवाहनः'** इति पादान्त्यविरामेण विना संहिततया पठनीयम् ॥ ६ ॥ सर्वशः सर्वस्मिन्नपि संयुगे । वयं सर्वशः सर्वे सङ्गता अपि जिताः । अनेकशः अनेकेषु संयुगेषु । अनेकशः अनेकैः सङ्गतैरपि । स एकलोऽपि एकदाऽपि न जितः । एकलोऽसहायः । **'एकादकिनिचासहाये'** [अ.सू.५.३.५२] एकादकिनिचि एकाकी । चकारात् कन्लुकौ लश्च । कनि एककः । लोपे एकः । लादेशे एकलः ॥ ७ ॥ यस्य वाक्यस्य वक्तुः शरीरं न दृश्यं तददृश्यं वाक्यम् । अदृश्यस्य वायोर्वाक्यं च । ग्रन्थिभञ्जनं प्रगाढताडनं प्रताडनम् । तेन दीर्घकालं पीडितम् ॥ ८ ॥ अस्य बलं तु । अनन्यसाधारणं बलम् । स्वयं चाक्षतेन वयं सर्वे तृणोपमाः कृताः । समस्तशः समस्ताः । सामस्त्येन च । मृधेमृधे हि । तदेतद् सर्वविदितं हि । **'हा'** इत्यात्मनो दौर्भाग्यं शोचति ॥ ९ ॥ 'किमत्र नः कृतं भवेत् सुखाय' इति

१. **'चाक्षतेन हि'** । **'च क्षणेन हि'** इति क्वचित् ।
२. **'विच्छविः'**

**अथाऽह चेदिभूपतिः सदन्तवक्रको वचः ।**
**पुरा हरेर्हि पार्षदः प्रसन्नबुद्धिरेकदा ॥ ११ ॥**

**शृणुष्व राजसत्तम प्रभुं शिवस्वयम्भुवोः ।**
**हरिं वदन्ति केचिदप्यदो भवेन्न वै मृषा ॥ १२ ॥**

---

नरेश्वरैः पृष्टः, स्वयमपि तमेव प्रश्नं पुर उपस्थाय, उत्तरमविदन् तूष्णीमासेत्याह– किमत्र कुर्वतां सुखं भवेदिति । मा स्म विच्छवितां मुखस्य परेऽपि पश्यन्निति मुखमवाक् चकार । अहो अवाङ्मुखतैव तस्य नैराश्यमाविश्चकार । उदीर्ण-मुत्कटम् ॥ १० ॥ सदन्तवक्रक इत्युभावपि कुत्सयामास तं च, तेन सह य आह तं च । एकदा यदाकदाचित् । 'ಒಮ್ಮೊಮ್ಮೆ' इति भाषायाम् । यदा हरिपार्षदौ जयविजयौ शिशुपालशरीरे दन्तवक्रशरीरे च तावतिक्रम्य जागृतौ भवतः । अत्रेद-मवधेयम्–हरिवंशे सुनीथो दन्तवक्रश्चोचतुरिति पठ्यते । **'एवं विब्रुवमाणे तु मगधानां जनेश्वरे । सुनीथोऽथ महाप्राज्ञो वचनं चेदमब्रवीत्'** [वि.प.४८.३८] इति, **'इत्येवमुक्ते वचने सुनीथेन महात्मना । करूशाधिपतिर्वीरो दन्तवक्रोऽभ्य-भाषत'**[४९.१] इति च । तत्र सुनीथ इति क उच्यत इति न स्फुटम् । द्वित्रा हि सुनीथनामानो भारते पठ्यन्ते । अतो निर्णयकार आह–'अथाऽह चेदिभूपतिः' इति । तथाच सुनीथ इति शिशुपालस्यैव नामान्तरमित्यर्थः । तथाहि महाभारतेऽर्घाहरणे **'जन्मप्रभृति वृष्णीनां सुनीथः शत्रुरब्रवीत्'** [स.प.३९.५४] इति शिशुपालः सुनीथ उक्तः । तद्वदत्रापि सुनीथ इति शिशुपाल उच्यत इति युक्तम् । ननु न युक्तमेतत् । **'यदुक्तं मागधेनात्र सुनीथेन नराधिपाः'** [४९.१] इत्युत्तरत्र दन्तवक्रवचनविरोधात् । यद्यत्र शिशुपालो विवक्षितः, चैद्य इति वक्तुमुचितम् । न मागध इति । न भोः । शिशुपालो हि मागधानां सेनापतिरास । दत्तपुत्रश्च जरासुतस्य । तेन सोऽपि मागध उच्यत इति न कोऽपि दोषः । उपरि च हरिवंशे बहुधा शिशुपालः सुनीथपदेनोल्लिखितः– **'चैद्यस्यार्थे सुनीथस्य जरासन्धस्तु भूमिपः । वरयामास तां राजा भीष्मकं भीमविक्रमम्'** [वि.प.५९.१९] इत्यादि ॥ ११ ॥ हितान्मत्तः शृणुष्व । यदि शृणोषि तव च मम च शुभं भवेदित्यात्मनेभाषा । सम्पूर्वकस्यैवाऽत्मनेभाषत्वमिति पाणिनिः–**'समो गम्यृच्छिप्रच्छिस्वरत्यर्तिश्रुविदिभ्यः'** [अ.सू. १.३.२९] इति । अत्राप्यर्थतः समिति वर्तते । सम्यगवधानपूर्वं शृण्विति । तेन सङ्गर्भोऽयं शृणोतिरिति ज्ञापयन् शृणुष्वे-त्याह । यथा संविद्महे इति वक्तव्ये 'विद्महे' इति प्रयुञ्जते । अप्यद इति । अपिः सम्भावनायाम् । यत् केचिद् वदन्ति अदः स्यादपि । तदपि युक्तमिति सम्भाव्यते । वै तवाप्येतदनुभवसिद्धं ननु । केचित् शिवस्वयम्भुवोरपि प्रभुं वदन्ति । किमुतान्येषामिति वा । असुराणां मते स्वयम्भुवोऽपि शिवोऽभ्यर्हित इति जरासुतमतमनुसरन् शिवं पूर्वमाह– शिव-स्वयम्भुवोरिति । हरतीति हरिः । तृतीयोऽतिशये । तेन हरमतिशेत इति किल हरिरुच्यते । शिवपदेनापि रीत्यन्तरेण विष्णोराधिक्यमेव स्मारयति– **'यच्छौचनिःसृतसरित्प्रवरोदकेन तीर्थेन मूर्ध्न्यधिधृतेन शिवः शिवोऽभूत्'** [भाग.३.२९.२२] इति स्मरणात् ॥ १२ ॥

तथाऽऽवयोश्च दर्शने भवेत् कदाचिदूर्ज्जिता ।
अमुष्य भक्तिरन्यथा पुनश्च जायते क्रुधा ॥ १३ ॥

न कारणं च विद्महे न संशयः परो हरिः ।
व्रजाम तं सुखार्त्थिनो वयं विहाय शत्रुताम् ॥ १४ ॥

इदं हि नः शुभप्रदं नचान्यथा शुभं क्वचित् ।
इतीरितो[1] जरासुतो ददर्श तौ दहन्निव ॥ १५ ॥

अथ प्रहस्य सौभराड् वचो जगाद मागधम् ।
विनिन्द्य तौ क्रुधा स्फुरन् क्रुधा स्फुरन्तमीक्ष्य च ॥ १६ ॥

न तन्मृषा हरिः स्वयं जनार्द्दनो वधाय नः ।
प्रजात एष यादवो वयं च दानवेश्वराः ॥ १७ ॥

स्वधर्म्म एष नः सदा दृढप्रतीपता हरौ ।
स्वधर्म्मिणो हता अपि प्रयाम सद्गतिं ध्रुवम् ॥ १८ ॥

**अन्यथा पुनः, अन्यथा च, भक्तेरन्यथा द्वेषेणेति यावत् ॥ १३ ॥ कारणं कदाचिद्भक्तेः कदाचिद् द्वेषस्य च । 'किमत्र' इति त्वदुक्तस्योत्तरम् –व्रजामेति । (शरणमिति) शेषः ॥ १४–१६ ॥ पयोब्धिमन्दिर इति(यत्) त्वयोक्तं तन्न मृषा भवेत् । तदेवानूद्याऽह–हरिः स्वयमिति । जनानर्दयतीति जनार्दनः हरिः स्वयं एष यादवः प्रजातः ॥ १७–२२ ॥**

---

आवयोः मम दन्तवक्रस्य च । अमुष्य दर्शने सति । ऊर्जिता उद्रिक्ता । अन्यथा तस्य परोक्षे पुनरपि क्रुधा जायते । **'टापं चैव हलन्तानाम्'** । क्रुधा क्रोधेन भक्तिरेवान्यथा जायते द्वेषात्मना विपरिणमते इति वा । क्वचिदन्यथा भवेत् । तदा पुनश्च क्रुधा क्रोधो जायत इति वा ॥ १३ ॥ एवमस्थिरायाः क्रुधाया भक्तेश्च कारणं न विद्महे । न संविद्महे । न यथावज्जानीमः । **'वासुदेवाय विद्महे'** इत्यादिवदयं सङ्गर्भो धातुरित्युक्तम् । यद्यपि हरिः नः परः शत्रुः । अथापि हरिर्नः सर्वेषां पर उत्तम इत्यत्र न संशयः ॥ १४–१५ ॥ प्रकटाक्षेपो हासः प्रहासः । क्रोधाग्निना स्फुरन् ज्वलन् । स्वयमिव क्रुधा स्फुरन्तं साभिमानमीक्षित्वा । अभिरनभिहितोऽपि वर्तते अभीक्ष्येति । सौभराट् अम्बाकमितुर्ब्रह्मदत्तस्याऽत्मजः । हंसडिभकयोरग्रजः । निवृत्तप्रायो वृद्धः पिता । अयं साल्वानां राजा बभूव ॥ १६ ॥ दानवजनार्दनः ॥ १७–१९ ॥

---

१. **'इतीरिते'** इति क्वचित् ।

शिवश्च नः परा गतिर्गुरुर्भवानरिर्हरिः[1] ।
इतीरितः स मागधो जगाद साधुसाध्विति ॥ १९ ॥

तथैव [2]रुग्मिपूर्वकाः करूशचेदिपौ च तौ ।
विनिश्चयं कुबुद्धयो युधे च चक्रुरूर्जितम् ॥ २० ॥

सदा प्रतीपकारिणौ भवाव कृष्ण इत्यपि ।
गुरोः प्रसादमाप्नुतां करूशचेदिभूभृतौ ॥ २१ ॥

पुनश्च ते त्वमन्त्रयन् सहैव पापबुद्धयः ।
ध्रुवं समागतो हरिर्लभेत [3]रुग्मिणीमिमाम् ॥ २२ ॥

अयं त्रिलोकसुन्दरोऽनुरूपिणी च रुग्मिणी[4] ।
मुखेन बाहुनाऽप्ययं समस्तलोकजिद् वशी ॥ २३ ॥

समस्तवेदिनां वरं जितारिमग्ग्र्यरूपिणम् ।
समस्तयोषितां वरा व्रजेत रुग्मिणी[5] ध्रुवम् ॥ २४ ॥

वयं च मानसङ्क्षयं नितान्तमाप्नुमस्तदा ।
न शक्नुमो निवारितुं शरैरमुं कथञ्चन ॥ २५ ॥

**मुखेन मुखकान्त्यादिना वशी । बाहुना समस्तलोकजित् ॥ २३–६ ॥**

---

रुग्मिपूर्वका अपि तथैव साधुसाध्विति जगदुः । करूशपः दन्तवक्रः । तौ अन्ततः भक्तावपि असुरावेशेन कुबुद्धी सन्तौ । विनिश्चयमचलं निश्चयम् । साधुविपरीतं निश्चयम् । कृष्णविप्रतीपं निश्चयम् । रुग्मिणीकामनाविरुद्धं निश्चयम् । ऊर्जितमुद्बणम् ॥ २० ॥ इत्यपि विनिश्चयं कृत्वा दैत्यगुरोर्जरासन्धस्य ॥ २१–२ ॥ अनुरूपं रूपमस्या इत्यनुरूपिणी । मुखेन लोकमोहनेन वचोविलासेन । बाहुना शत्रुक्षपणेन विक्रमेणापि । सर्वं वशयन् वशी ॥ २३ ॥ वेदिनां वरमत एव वादिनां वरम् ॥ २४ ॥ मानस्य सर्वात्मना क्षयम् । मानसं वा क्षयम् । मनसा कुब्जाः

---

१. '–र्हरिः ।' २. 'रुक्मिपूर्वकाः' ३. 'रुक्मिणी–'
४. '–सुन्दरः सुरूपिणी च रुक्मिणी' ५. 'रुक्मिणी'

**अतः स्वयम्बरे[1] यथा न सङ्गमो हरेर्भवेत् ।**
**तथा विधानमेव नः सुनीतिरूर्ज्जिता ध्रुवम् ॥ २६ ॥**

**अतो न देयमस्य नः सुभूभुजां समागमे ।**
**क्वचित् कदाचिदासनं नचार्घ्यपूर्वको विधिः ॥ २७ ॥**

**नचाऽस्यति [2]क्षितौ क्वचिद् विमानितः पुरो हि नः ।**
**वरासनस्थभूभुजां स मानितो हि दैवतैः ॥ २८ ॥**

**स दर्प्पमानसंयुतः क्रुधा प्रयास्यति ध्रुवम् ।**
**पुरीं स्वकां ततो वयं विधेम च स्वयम्बरम्[3] ॥ २९ ॥**

**इति स्म सर्वभूभृतां[4] विनिश्चयं सकैशिकः ।**
**क्रथोऽवगम्य भीष्मकानुजोऽभ्ययाद्धरिं द्रुतम् ॥ ३० ॥**

**अतः स्वयंवर एतद्धर्जनस्योपायान्तराभावात् ॥ २७–३१ ॥**

---

कान्दिशीका भवेमेत्यर्थः । तदा कोऽस्मच्छासनाद् बिभीयात्? सेवका अपि शासनातिगा भवेयुः । नितान्तं निरन्तरम् । निवारयितुम् । अक्षरलोपेन शक्तिलोपमाह । **‘अन्तः कामं कुलस्यास्तु न शक्नोमि निवारितुम्’** [स.प.९७.१०१] इति च प्रयोगो भारते ॥ २५ ॥ विवाहसदसि सङ्गमः राजभिः सहस्थितिः । तेन च तस्य रुग्मिण्या सह सङ्गमश्च । अस्माकं सुखावहा नीतिः । ऊर्जिता उन्नता ॥ २६ ॥ सुभूभुजाम् । कृष्णः भूभुजां कुले जातोऽपि गोपालैः सह वर्धित इति न सुभूभुक् । किन्तु कुभूभुगिति तेषामाशयः । नास्य पिता भूभुक् । नतरामयमिति च । नाप्ययं क्वाप्यभिषिक्तो राजा । केवलं भुवि भुङ्क्ते । न भुवं भुनक्ति । नहि स्वयमनारूढसिंहासनस्य क्वचिदासनं दातुमुचितमारूढसिंहासनैः सुभूभृद्भिरिति ॥ २७ ॥ आ अस्यति उपविशति । असु क्षेपणे । क्षेपणं स्थापनम् । कुथाद्यास्तृतायां क्षितौ । **‘नीचेष्वासनेषु’** इति स्मरणाद्धरिवंशे । भूभुजां नः पुरः । अत्र ‘आस्यति’ इति पदप्रयोगेन–**‘पार्थिवेषूपविष्टेषु स्वेषु सिंहासनेषु वै । कथमास्यति नीचेषु आसनेषु महाद्युतिः’** [वि.प.५०.१७] इति हरिवंशवचनं स्मारयति ॥ २८ ॥ दर्पोऽहङ्कारः । दृप हर्षमोहनयोः । मोहनमहङ्कारः । तन्मूलो मानः । चित्तसमुन्नतिः । सर्वमान्यता वा । स कथमस्मत्कृतामवमाननां सहेत? ततः स्वयंवराशां प्रहाय यास्यति ॥ २९ ॥ भीष्मकानुजः क्रथश्च कैशिकश्च । भीष्म इत्येव तन्नाम । तथाऽपि

---

१. **‘स्वयंवरे’** २. **‘नचाऽस्यति क्वचित् क्षितौ विमा–’** ३. **‘स्वयंवरम्’** ४. **‘–भूभुजां वि–’**

**प्रणम्य पादपद्मयोर्निजं गृहं प्रवेश्य च ।**
**महासनं प्रदाय तौ प्रचक्रतुर्वरार्चनम् ॥ ३१ ॥**

**अथाऽगमच्छतक्रतोर्वचः प्रगृह्य भूभुजः ।**
**जरासुतादिकान् पुमानुवाच चार्त्थवद् वचः ॥ ३२ ॥**

**अहं प्रियः शचीपतेः सदाऽस्य चाक्षिगोचरः ।**
**सुरेन्द्र आज्ञयाऽवदन्नृपान् व ईश्वरो हि सः ॥ ३३ ॥**

**समस्तराजसत्पतिर्हरिर्न्निचान्य इत्यपि ।**
**वराभिषेकमीशितुः कुरुध्वमाश्वसंशयम् ॥ ३४ ॥**

**अतोऽन्यथा शिरस्यहं निपातयामि वोऽशनिम् ।**
**इतीदमिन्द्रशासनं कुरुध्वमित्यसौ ययौ ॥ ३५ ॥**

**शतक्रतोः पुमान् दूतः । शतक्रतोर्वचः प्रगृह्य ॥ ३२ ॥ आज्ञया आज्ञापूर्वकमवदत् ॥ ३३–४ ॥ इत्युक्त्वा असौ दूतो ययौ ॥ ३५–९ ॥**

---

तेन नाम्ना पूर्वमेव प्रथिताद् कुरुवृद्धाद् व्यावर्तयितुं ततो यवीयानयं भीष्म इति भीष्मकं तमाचचक्षिरे । सत्कर्म करोतीति क्रथः इत्युक्तम् । शोभनकेशपाशः कैशिक इति च । शत्रून् क्रथतीति वा क्रथः । क्रथ हिंसायाम् । सत्कर्मभिः काशत इति वा कैशिकः । कुण्डिनं पुरमागतं हरिमभिगत्य, स्वागतमभिधाय सत्कर्तुमयात् ॥ ३० ॥ उद्वहतो वरस्यार्चनमिव वरमर्चनं प्रेम्णा चक्रतुः । प्रणम्य प्रदाय प्रचक्रतुः इति त्रिः प्रयोगेन प्रतिक्रियं तयोर्भक्तिप्रकर्षमाह ॥ ३१ ॥ प्रगृह्य प्रकाशनार्थं स्वीकृत्य आगमत् । आगत्य तदेवार्थवद् वच उवाच च । अर्थवत्त्वं नाम वैशिष्ट्यमवगमयितुं विशेष्यस्य पुनरादानम् । अर्थवदिति महार्थयुक्तं सप्रयोजनं च । चित्राङ्गदो नामायं देवदूत इति हरिवंशे । तथाहि तद्वचनम्–**'एवमाज्ञां सुरेशस्य श्रुत्वा चित्राङ्गदेरिताम्'** [वि.प.५०. ५७] इति ॥ ३२ ॥ सदाऽक्षिगोचर इति नित्यसहायतामाह । वः युष्मान् अवदत् । वः युष्माकमीश्वरो हि सः । स इतीन्द्रः । स इति कृष्णश्च । **'मानुषाणां नृपा देवा नृपाणां देवताः सुराः । सुराणां देवता शक्रः शक्रस्यापि जनार्दनः । एष विष्णुः प्रभुर्देवो देवानामपि दैवतम् । जातोऽयं मानुषे लोके नररूपेण केशवः । अजेयः सर्वलोकेषु देवदानवमानवैः'** [वि.प.५०.४७–९] इत्यादि च ॥ ३३ ॥ सन् निर्दुष्टः श्रेष्ठश्च पतिः । इत्यपि । इत्यवदत् । अपि पुनरपि वक्ष्यमाणमवदत् । किमिति? रुग्मिण्या वरोऽयमिति निश्चित्य राज्ञां च वः समेषां वरोऽयमित्यभिषेकं कुरुध्वम् । युष्माकमेव क्षेमायेत्यात्मनेभाषा ॥ ३४ ॥ निकृत्य पातयामि । निगृह्य पातयामि । इत्युक्त्वाऽसौ ययौ ॥ ३५ ॥

**तदीरितं निशम्य ते पुनः सुतप्तचेतसः ।**
**बभूवुरूचिरे वचः सुगर्वितो हि वासवः ॥ ३६ ॥**

**पुरा बिभेति नः सदा प्रतिप्रति स्म वासवः ।**
**उताद्य कृष्णसंश्रयाद् दृढं विभीषयत्यसौ ॥ ३७ ॥**

**अदृश्य एव देवराड् यदि स्म वज्रमुत्सृजेत् ।**
**भवेम पीडिता वयं वरादमृत्यवोऽपि हि ॥ ३८ ॥**

**पुरा दिविस्थितस्य च प्रमर्द्दने वयं क्षमाः ।**
**उताद्य यद्यमुं वयं व्रजेम कृष्ण एष्यति ॥ ३९ ॥**

**अतोऽभिषेचनाद् यदीह शार्ङ्गिणः शचीपतिः ।**
**न वज्रमुत्सृजेत् तदाऽभिषेचयाम तं वयम् ॥ ४० ॥**

**अतोऽन्यथा दनुर्य्यथा वरादमृत्युकोऽपि सन् ।**
**सुरेन्द्रवज्रताडितो बभूव कुक्षिगास्ययुक् ॥ ४१ ॥**

**तथैव कृष्णसंश्रयात् स नः शचीपतिर्न्नयेत् ।**
**इति स्म निश्चिता नृपानयातयन्त शौरये ॥ ४२ ॥**

**इह अस्मासु । तदा तर्हि ॥ ४०–१ ॥ इत्येवं विचार्य निश्चिताः, अभिषेक्तुं निश्चिताः, जरासुतादयः,**

---

कृष्णः किमपि तन्त्रं कुर्यादिति शङ्कयैव तप्तचेतसः । इन्द्रवचनं निशम्य पुनः सुतप्तचेतसः । देवानाम्पतिरिति गर्वितः । कृष्णसंश्रयात् पुनः सुगर्वितः ॥ ३६ ॥ नः अस्माकं मध्ये प्रतिप्रति, प्रत्येकम्, एकैकस्मादपीत्येतत् । प्रतिप्रसङ्गं च । पुरा बिभेति अबिभेत् । **'पुरि लुङ् चास्मे'** [अ.सू.३.२.१२२] । उत किन्तु । वितण्डया भीषयति । अस्माक-मैकमत्यं विभिद्य भीषयति ॥ ३७ ॥ अमृत्यवोऽपि अङ्गवैकल्येन पीडिताः । दनुकवन्ध इवेति हिना सूचयति ॥ ३८ ॥ प्रसभं मर्दने । उत वितर्के । **'उत प्रश्ने वितर्के च'** इत्यभिदधति । तमेव वितर्कमाह–अद्येति । तर्हि कृष्ण एष्यति ॥ २९ ॥ तदा वज्रभयविधुराः सुखं जीवेमेति हेतोः अभिषेचयाम तं कृष्णम् ॥ ४० ॥ पूर्वं हिना सूचितमिदानीं मुखत आह–अतोऽन्यथा । यथा पुरा रामायणे दनुकवन्धः । अमृत्युत्वादेव कुक्षिगास्ययुगजीवत् । वरं मृत्युर्न तादृशं जीवनम् । तेन वरोऽपि शापादवरो बभूवेति कुत्सयति–अमृत्युक इति ॥ ४१ ॥ नयेद् विनयेत् । शिक्षयेदित्यर्थः ।

समस्तशो जरासुतादिभिः कृतेऽभिषेचने ।
अतीव भग्नमानकान् नचानुयाति कश्चन ॥ ४३ ॥

समाश्रयं च केशवं तदैव जीवनार्त्थिनः ।
प्रकुर्य्युरासुरा अपीति देवकार्य्यसङ्क्षयः ॥ ४४ ॥

इतीक्ष्य पाकशासनोऽवदज्जरासुतादिकान् ।
सरुग्मिचेदिसाल्वपो[1] न यातु मागधो हरिम् ॥ ४५ ॥

ततस्तु तान् विनाऽपरेऽधिराजराज इत्यमुम् ।
तदाऽभिषेक्तुमुद्यता नृपाः सुरेशशासनात् ॥ ४६ ॥

अतः[2] शचीपतिर्न्निजं वरासनं हरेरदात् ।
विवेश तत्र केशवो [3]नभस्तळावतारिते ॥ ४७ ॥

करे प्रगृह्य केशवो न्यवेशयत् सहाऽसने ।
पतत्रिपुङ्गवं च तौ स भीष्मकानुजौ प्रभुः ॥ ४८ ॥

**शौरये श्रीकृष्णाय, नृपान् कांश्चन नृपान्, अयातयन्त अभिषेक्तुमिति भावः ॥ ४२–५ ॥ जरासुतादयः नृपानयातयन्त । स्वयमभिषेक्तुं कुतो न गता इति (अत आह–तत इति । ततः) न यात्विति सुरेन्द्र-वचनादेव । सुरेन्द्रः कस्मात् तथाऽवददित्यतस्तदभिप्रायमाह– समस्तश इत्यादिना ॥ ४६ ॥ अतस्तदनन्तरम् ॥ ४७–८ ॥**

---

शौरये शौरिमभिषेक्तुम् ॥ ४२ ॥ समस्तशः समस्तैः ॥ ४३ ॥ प्रकटं निर्भयतया कुर्युः । दुर्बलं परित्यज्य योऽन्यः बली समेत्याऽश्रीयते स समाश्रयः । सर्वात्मना क्षयः सङ्क्षयः ॥ ४४–५ ॥ ततस्तु पाकशासनवचनादेव तान् जरासुतादीन् विना । **‘जरासन्धश्च चैद्यश्च रुग्मी चैव महारथः । साल्वः सौभपतिश्चैव चत्वारो राजसत्तमाः । रङ्गस्याशून्यताहेतोस्तिष्ठन्त्व-त्रैव पार्थिवाः’** [वि.प.५०.५६] इति च । **‘जरासन्धः सुनीथश्च–’** इति क्वचित् । सुनीथश्चैद्य इत्यनर्थान्तरमि-त्युक्तम् । अमुं हरिम् ॥ ४६ ॥ अतः नृपाणामभिषेकार्थमुद्यतत्वात् । विवेश उपविवेश । उपसर्गो हि केवलं व्यञ्जयति धातुलीनमर्थम् । जगत् संहरतीति हरिः । केशाववति, वर्तयति वर्धयति चेति केशवः ॥ ४७ ॥ आत्मना सह । पाश्र्वगत

---

१. **‘सरुक्मिसाल्वचेदिपो–’** २. **‘ततः’** ३. **‘नभस्तलाव–’**

अथाखिला नरेश्वरा मुनीन्द्रसंयुता हरिम् ।
सुशातकौम्भकुम्भकैः प्रचक्रुराभिषेकिणम् ॥ ४९ ॥

विरिञ्चशर्वपूर्वकैरभिष्टुतः सुरादिभिः ।
समस्तदेवगायकैः प्रगीत आस केशवः ॥ ५० ॥

अथाऽह भीष्मकं प्रभुः स्वयंवरः किल त्वया ।
अभीप्सितः सुताकृते शुभाय ते भवेन्न सः ॥ ५१ ॥

इयं रमा तवाऽत्मजा बभूव तां हरेर्न्नच[१] ।
ददाति चेत् तदा पिता निरिन्दिरो व्रजेदधः ॥ ५२ ॥

हिताय चैतदीरितं तवान्यथा न चिन्तय ।
न योषिदिच्छया त्वहं ब्रवीमि पश्य यादृशः ॥ ५३ ॥

**सुशातकौम्भकुम्भकैः सौवर्णकुम्भसम्भृतोदकैः ॥ ४९–५१ ॥ रमा इयम्, ममैषा, तवात्मजा बभूव । पिता, तस्याः पिता भवान्, हरेर्मम न ददाति चेत्, अन्यस्मै ददाति चेत्, तदा तर्हि निरिन्दरः, निःश्रीकः श्रीरहितः, अधः अधोलोकं व्रजेदिति योजना ॥ ५२ ॥ अहं यादृशस्तादृशं मां पश्य ॥ ५३ ॥**

---

आसने । **'वैनतेयश्च बलवान् कामरूपी नराकृतिः । दक्षिणं पार्श्वमाश्रित्य आसनस्थो महाबलः । क्रथकैशिकौ च तौ वीरौ वामपार्श्वे तथाऽसने । उपविष्टौ महात्मानौ देवस्यानुमते नृपौ'** [वि.प.५०.७७–८] इति च । सः भक्त-वत्सलः । प्रभुश्चाभक्तजनसंहारे ॥ ४८ ॥ स्फुटितसौवर्णकलशैः । कुम्भकैरल्पैः कुम्भैः । 'ತಂಬಿಗೆ' इति भाषायाम् । कुम्भगैः कैः तीर्थोदकैर्वा । कं जलं उम्भन्ति पूरयन्त्यत्रेति कुम्भो घटः । उम्भ पूरणे । शतकुम्भे पर्वते भवं शातकुम्भं शातकौम्भं वा सुवर्णम् । नरेश्वरा आ समन्ताद् दरेण मुनयश्च आदरेण अभिषेकिणं प्रकटं सर्वलोकस्य पश्यतश्चक्रुः ॥ ४९ ॥ अभिमुखं स्तुतः । प्रकटं प्रत्यक्षं स्तुतः । अभीष्टद इति स्तुतः । स्वरप्रकर्षेण, प्रकृष्टः सर्वोत्तम इति च गीतः ॥ ५०–१ ॥ रमैव तवाऽत्मजा बभूव । अवताररूपाणां यः पिता स नैव ददाति चेत् ॥ ५२ ॥ इच्छया तु । तुना पूर्ण-कामस्य का स्पृहेत्याह ॥ ५३ ॥

---

१. **'हरेर्न्न चेत्'** इति पाठः प्रामादिकः ।

उदीर्य्य चैवमीश्वरश्चकार हाऽविरात्मनः ।
स विश्वरूपमुत्तमं विसङ्ख्यशीर्षबाहुकम्[१] ॥ ५४ ॥

[२]अनन्ततेज आततं विसङ्ख्यरूपसंयुतम् ।
विचित्रमौलिकुण्डलाङ्गदोरुहारनूपुरम् ॥ ५५ ॥

ज्वलत्सुकौस्तुभप्रभाऽभिभासकं[३] शुभाम्बरम् ।
प्रपश्य यादृशाः स्त्रियो ममेत्यदर्शयच्छ्रियम् ॥ ५६ ॥

अनन्तरूपिणीं परां मनुष्यदृष्टितोऽधिकाम् ।
[४]स्वरुग्मिणीतनोरपि व्यदर्शयच्च[५] देवताः ॥ ५७ ॥

तदद्भुतं समीक्ष्य तु प्रभीत आशु[६] भीष्मकः ।
पपात पादयोर्विभोः करोमि तत् तथेति च ॥ ५८ ॥

**स ईश्वरः एवमुदीर्य आत्मनः विश्वरूपमाविश्चकार ॥ ५४ ॥ अनेकतेजआततं बहुतेजसा व्याप्तम् । अनेकतेजः आततमिति भिन्नं वा पदम् ॥ ५५ ॥ ताः प्रपश्य ॥ ५६ ॥ मनुष्यदृष्टितः मनुष्यदृष्टि(व्यपेक्ष)या स्वरुग्मिणीतनोरपि अधिकां रूपादिगुणैरधिकाम् ॥ ५७ ॥ तत् त्वयोक्तं तथा करोमीति च, वदन्निति**

---

आत्मनः विश्वरूपमाविश्चकार ह । हेति विश्वरूपमनुभवन्निव प्रमोदते च विस्मयते च । कमिति भिन्नं वा पदम् । कमानन्दरूपम् ॥ ५४ ॥ अनन्ततेजः । आततं सर्वगतं च । अनन्तेन तेजसा वा आततम् । अनन्तं तेजोभिराततं वा । मौलिर्मकुटः । उरुहारः ग्रैवेयकम् । उरवो बहुविधा वा हाराः । ऊरुहारश्च काञ्चीदाम ॥ ५५ ॥ ज्वलत् विश्वरूपम् । उरसि शोभमानं कौस्तुभम् । तस्य प्रभया अभितो दिशामभिभासकम् । स्वप्रभया सुकौस्तुभस्याप्यभिभासकमिति वा । ज्वलत्सुकौस्तुभेत्याद्येकं वा पदम् । ज्वलन्ती सुकौस्तुभप्रभा । कौस्तुभस्य चतुर्मुखात्मकत्वं च सुत्वम् । ज्वलन् वा सुकौस्तुभः । मनुष्यदृष्टेरगोचरत्वेऽपि मदनुग्रहेण प्रकटं पश्य । यादृशा यादृश्यः । प्राचीनानां प्रयोगेषु ङीप् विभाषा भवति । **'विद्वद्रूढिर्वैदिका स्यात्'** इत्यन्यत्रापि ॥ ५६ ॥ अनन्तान्यस्या रूपाणि । अनन्तस्येयं रूपिणी भार्या । यद्यपि रुग्मिणी स्वयं श्रीरेव । अथापि स्वरुग्मिणीतनोरपि मनुष्यदृष्टितोऽधिकरूपिणीं श्रियं व्यदर्शयत् । स्वस्मादेव रुग्मिणीरूपादिदं श्रीरूपं मनुष्यदृष्ट्यपेक्षयाऽधिकमिव दर्शयामास । अत एव व्यदर्शयदित्याह । अविभक्तं विभक्तमिवादर्शयदित्यर्थः । विचित्रं चेदं दर्शनमिति च । स्वपरिवारतया देवताश्च विविधा अदर्शयत् ॥ ५७ ॥ तुना रूपस्या-

---

१. **'विसङ्ख्यबाहुशीर्षकम्'** २. **'अनेकतेज–'** इति वे.ती.पाठः ३. **'प्रभाप्रभासकम्'** । **'प्रभाविभासकम्'** इति क्वचित् ।
४. **'स रुक्मिणीतनोरपि'** ५. **'प्रदर्शयच्च'** इति क्वचित् । ६. **'आस भीष्मकः'**

पुनश्च विश्वरूपतां पिधाय पद्मलोचनः ।
जगाम पक्षिवाहनः पुरीं स्वबाहुपालिताम् ॥ ५९ ॥

अपाम्पतिश्च मैथिलः स्वयंवरङ्कृतावपि ।
हरिं विनिश्चयादियं व्रजेदिति स्म चक्रतुः ॥ ६० ॥

स्वयंवरः क्षितेर्भुजां स्वधर्म्म इत्यतो द्वयोः ।
न दोष आस भीष्मको न केशवार्त्थमैच्छत ॥ ६१ ॥

अतो हरौ प्रबोद्ध्य तं गते कृपालुसत्तमे ।
वशीकृते च भीष्मके नृपास्त्वमन्त्रयन् पुनः ॥ ६२ ॥

यशश्च धर्म्ममुत्तमं विधित्सता वृकोदरे ।
न केशवेन सूदितो जरासुतो हि मन्यते ॥ ६३ ॥

**शेषः ॥ ५८–९ ॥ नन्विन्दिरास्वयंवरः शुभाय न चेत् नाज्ञानिनौ वरुणमैथिलौ किमिति स्वयंवरमकुरुतामिति तत्राऽह– अपाम्पतिरिति ॥ ६० ॥ तर्हि[१] स्वयंवरं किमित्यकुरुतामिति तत्राऽह– स्वयंवर इति ॥ ६१–९ ॥**

---

भौतिकत्वमाह । अथापि समीक्ष्य बाह्यचक्षुर्भ्यामेव दृष्ट्वा । प्रभीतः । प्रकटं देहेनापि, स्विद्यन् कम्पमानः पादयोः पपात । तथा करोमीति जगाद च ॥ ५८ ॥ स्वस्य सदा विद्यमानां विश्वरूपतां भीष्मकदृष्टितः पिधाय । दृश्यतया स्वबाहुपालिताम् । सदा सर्वं स्वपालितम् । सम्प्रति राजन्यावतारे विशिष्य स्वबाहुपालिताम् । **'बाहू राजन्यः'** इति श्रवणात् ॥ ५९ ॥ स्वयंवरं कुर्वाते इति स्वयंवरङ्कृतौ । बिन्दुरवधारणे । स्वयंवरमिति भिन्नं वा पदम् । कृतावपि स्वयंवरकरणेऽपि हरिं व्रजेदिति विनिश्चयात् स्वयंवरं चक्रतुरित्यन्वयः । स्वयं स्वतन्त्रो भगवानेव यत्र वरणीयो वरः स स्वयंवरः । विज्ञानमूलो निश्चयो विनिश्चयः । नतु विभ्रममूलः । यथार्थ इत्येतत् । स्मेति प्रमेयस्यास्य प्रमाणप्रमितता-माह ॥ ६० ॥ कन्यया स्वयं स्वेष्टस्य वरस्य वरणं क्षत्रियाणां स्वधर्मः । क्षितेर्भुजामित्यलुक् । नैच्छत । अनिच्छा चाऽत्मजावरोधमूलेत्यात्मनेभाषयाऽह ॥ ६१ ॥ कृष्णेन वशीकृते च भीष्मके । पूर्वं यः स्वतनयां न केशवार्थमैच्छत् स एवेदानीं केशवायैव रुग्मिणी दातव्येति दृढमाजग्राहेत्यर्थः । नृपास्तु अनिरीक्षिताया अस्या नूतनसमस्यायाः प्रतिक्रियार्थं पुनरमन्त्रयन् ॥ ६२ ॥ एवङ्गतेऽपि वस्तुतत्वे जरासुतोऽन्यथा मन्यते ॥ ६३ ॥

---

१. **'तथाऽपि'** इति स्वरसम् ।

**वराच्छिवस्य मामयं न हन्तुमीष्ट उत्तमात् ।**
**अतः शिवप्रसादतो जितोऽपि जेष्य उत्तरम् ॥ ६४ ॥**

**मृधेमृधे जितोऽपि सन् दृढाशया[१] पुनःपुनः ।**
**समीहते युधे शिवं नचावमन्यते क्वचित् ॥ ६५ ॥**

**अतः पुनश्च भूमिपानुवाच बार्हद्रथः[२] ।**
**धिगेव पौरुषं हि नो यदेष नोऽजयत् सदा ॥ ६६ ॥**

**अभूपतेर्न्नचाऽसनं प्रदेयमित्युदाहृतम् ।**
**अमुष्य नस्तदन्यथा बभूव चिन्तितं नृपाः ॥ ६७ ॥**

**अयं नृपोत्तमाङ्गणे महेन्द्रपीठमारुहत् ।**
**समस्तराजराजतामवाप नोऽप्यनिच्छताम् ॥ ६८ ॥**

**अतः पुनः कथं हरिं वयं जयेम चिन्त्यताम् ।**
**यथा च भीष्मकात्मजामवाप्नुयाच्च चेदिराट् ॥ ६९ ॥**

**अयं हि दत्तपुत्रको म औरसाद्[३] विशिष्यते ।**
**अतो निवेश्य एष मे सुरूपिणी च रुग्मिणी[४] ॥ ७० ॥**

**निवेश्यः उद्वाह्यः ॥ ७०–७१ ॥**

---

किमन्यथा मन्यते–वराच्छिवस्य । पूर्वं जितोऽपि उत्तरं अहमेव विजेष्ये । विजयफलं च मे सम्राट्त्वमित्यात्मनेभाषा । उत्तमाद् वरात् । हरिप्रसादत उत्तमाच्च शिवप्रसादतः ॥ ६४ ॥ समीहते सर्वात्मना प्रयतते । ईह चेष्टायाम् ॥ ६५ ॥ बार्हद्रथ इति विश्लथाक्षरपाठेन तस्य पराजयजनितं विषादं स्फोरयति । यदायदाऽयोधयाम तदा सदा एष एवाजयत् । एष सदा अजयत् जयतीति वा ॥ ६६ ॥ अभूपतेरमुष्य । उदाहृतम्, उच्चैर्व्याहृतम्, घोषितमित्येतत् । नश्चिन्तितम् ॥ ६७ ॥ नृपोत्तमानामङ्गणे । नृपानामुत्तमाङ्गणे । अङ्गस्य णः सुखमत्रेत्यङ्गणं चत्वरम् । वैयाकरणास्तु 'अङ्गनम्' इति पठित्वा 'अङ्गणम्' इति रूपं पृषोदरादिं मुधा मन्यन्ते । महेन्द्रदत्तं पीठम् ॥६८–९॥ प्रीत्यतिशयेन पुत्रक इत्याह ।

---

१. **'जयाशया'** इति क्वचित् ।
२. **'बार्हद्रथः'** इति विश्लिष्य पठनीयम् ।
३. **'ममौरसाद्–'**
४. **'रुक्मिणी'**

**शिवागमेषु शिष्यकाः [1]सरुग्मिसाल्वपौण्ड्रकाः ।**
**ममाखिला नृपास्ततः कुरुध्वमेतदेव मे ॥ ७१ ॥**

**इतीरिते तु[2] सौभराड् जगाद रुग्मिसंविदा[3] ।**
**स्वयंवरो निवर्त्तितः स्वसारमेष दास्यति ॥ ७२ ॥**

**नचातिवर्त्तितुं क्षमः पिताऽस्य चेदिपाय ताम् ।**
**प्रदातुकाममात्मजं वयोगतस्तथाऽबलः ॥ ७३ ॥**

**स्वयं तु कृष्ण एत्य नो विजित्य कन्यकां हरेत् ।**
**ततोऽस्य पूर्वमेव नो ह्यभावता कृता शुभा ॥ ७४ ॥**

**रुग्मिसंविदा रुग्मिमतेन ॥ ७२–७४ ॥**

---

**'ज्ञातेः समानवंशस्य सुनीथं प्रददौ सुतम् । जरासन्धः स्वसुतवद् ददर्शैनं जुगोप च'** [वि.प.५९.२४] इति हरिवंशे । दमघोषः स्वसुतं सुनीथापरनामानं शिशुपालं स्वज्ञातेर्जरासन्धस्य दत्तपुत्रत्वेन ददाविति हरिवंश-वचनार्थः । औरसपुत्रात् सहदेवात् । एषः मे मदीयः । रुग्मिणी च रूपवतीषु श्रेष्ठा । अतस्तया एष निवेश्यः परि-णेतव्यः । **'निवेशौ शिबिरोद्वाहौ'** इति दण्डनाथः ॥ ७० ॥ शिष्यका इत्यपि वात्सल्यातिशये कन् । मम शिष्यकाः । मे मदर्थम्, मत्प्रियं वा ॥ ७१ ॥ इतीरिते तु । तुना जरासुतवचनस्य शिष्यकैरनुल्लङ्घ्यत्वमाह । रुग्मिणः संविदा आज्ञया स्वयंवरो निवर्तितः व्यवस्थापितः । तत्र स्वसारमेष चेदिपाय शिशुपालाय दास्यति ॥ ७२ ॥ वयोगतत्वाद-बलत्वाच्च । बलमिति सेना च । साऽपि रुग्मिवशगेति सर्वात्मनाऽबलो भीष्मकः । वयो यौवनं गतमस्येति वयोगतः प्रवयाः ॥ ७३ ॥ नः विजित्य । नः कन्यकां हरेत् किम्? नैव हरेत् । कुतः? यतस्ततोऽस्य पूर्वमेव । ततः सम्भावितात् हरणात् पूर्वमेव । न इति तृतीयार्थे । अस्माभिः । न विद्यते भावो जीवनं यस्य सोऽभावः । अभावता, अजीवनं मृतिरित्येतत्, कृता व्यवस्थापिता । याऽस्माकं शुभकरी । अत्र स्वविवक्षाऽन्या । दैवविवक्षाऽन्या । दैवहतकः स्वयमन्यदेव मनसा चिन्तयति । अन्यदेव वाचा व्याहरति । यतो दैवं तथा व्याहारयति । तथाह्यत्रार्थान्तरम्– नः विजित्य कन्यकां हरेदेव । अथच नो विजित्य अविजित्यापि केनाप्युपायान्तरेण कन्यकां हरेदेव । ततः पूर्वमेव नोऽस्माकमेवाभावता कृता स्यात् । याऽस्माकमशुभा । अकारवाच्यस्य कृष्णस्यैव च शुभा । तदिदं स्वाविवक्षितस्यार्थस्य स्ववचने दैवनिक्षेपः । स यथा वाल्मीकेः शोकः श्लोकत्वमापद्यत ॥ ७४ ॥

---

१. **'सरुक्मि–'** २. **'इतीरितेऽथ'** इति क्वचित् । ३. **'रुक्मिसंविदा'**

**उपाय एष चिन्तितो मयाऽत्र मागधेश्वर ।**
**मुनिं हि गर्ग्गनामकं ह्यमुष्य साल[१] आक्षिपत्** ॥ ७५ ॥

**यदाऽस्य षण्ढतोदिता[२] मुनेः पुरोहितस्य च ।**
**परेण वृष्णयोऽहसंश्चुकोप गर्ग्ग एषु ह[३]** ॥ ७६ ॥

**अमुष्य गर्गस्य ॥ ७५ ॥ परेण, चोदिता इति शेषः । परेण अन्येन अपहसता, स्यालेन षण्डता(रोपा)य**

---

मुनिं हि । वैष्णवत्वेन जितेन्द्रियत्वेन च प्रसिद्धं मुनिम् । सालः स्यालः । रक्षकतया भगिन्या सह सलतीति सालः । सल गतौ । **'स्यालसालसमसूरसूरयः'** इति ह्यभिदधति । अयं न साक्षात् स्याल इति भाति । तस्योर्ध्वरेतस्त्व-कथनात् । तथाहि हरिवंशे–**'वृष्णीनामन्धकानां च गुरुर्गर्गो महामनाः । ब्रह्मचारी पुरा भूत्वा न स्म दारान् स विन्दति । तथाहि वर्तमानं तमूर्ध्वरेससमव्ययम् । स्यालोऽभिशस्तवान् गर्गमपुमानिति भूपते'** [वि.प.५७.७–८] इति । **'गर्गं गोष्ठ्यां द्विजं स्यालः षण्ढ इत्युक्तवान् द्विज । यदूनां सन्निधौ सर्वे जहसुर्यादवास्तदा'** [वि.पु.५.२३.१] इति च वैष्णवे । तेनायं गर्गेणोद्विवक्षितायाः सोदरः स्यात् । अथ कः स्यादयं स्यालः? न क्वापि स्फुटम् । उपलब्धमपि पाठदोषेणानिर्णायकं जातम् । तथाह्येतद्विषये हरिवंशे–**'कन्या त्रिगर्तराजस्य भर्ता वै शैशिरायणः । जिज्ञासां पौरुषे चक्रे न चस्कन्देऽथ पौरुषम्'** [ह.वं.प.३५.१२] इत्येके पठन्ति । तथाचायमेवाऽक्षेप्ता भावी स्याल इति स्फुटम् । अथापि पाठसाङ्कर्यादनिर्णय एव पुनः शरणम् । तथाह्यपरे पठन्ति–**'कन्या त्रिगर्तराजस्य भर्ता वै शिशिरायणः' इति ।** अन्य एव च पाठः पुराणान्तरे–**'कन्या त्रिगर्तराजस्य भार्या वै शिशिरायणे'** [ब्रा.पु.१३.४६] लिपिकृतां प्रमादेन ग्रन्थोऽप्येवं विलुळितः किम्वर्थो देवदुर्गमः । अयमत्र सम्भावितः पाठः–**'कन्या त्रिगर्तराजस्य भ्राता वै शैशिरायणः'** इति । एतेनेयं सम्भाविता गर्गोद्वाहभङ्गकथा– त्रिगर्तराजस्य विवाहयोग्या कन्या बभूव । तदा तस्याः परिणये महर्षेर्गर्गस्यापि नाम प्रास्तूयत । तदा त्रिगर्तराजपुत्रः कन्याग्रजस्तस्य जितेन्द्रियस्य मुनेः पौस्नं पर्यैचिक्षिषत । यदा बहुभिरुपायैरुद्रेचित-स्यापि तस्य न रेतश्चस्कन्द तदा तं सभायामेव 'अपुमानयम् । नास्मै मे भगिनी देया' इति परिजहास । तच्छ्रुत्वा सभा-गता यदुपुङ्गवा उच्चैरहसिषुरिति । आक्षिपद्धि । मुनेर्जितेन्द्रियत्वमजानन् गर्गं षण्ढोऽयमित्याचिक्षेप हि । **'जिज्ञासां पौरुषे चक्रे न चस्कन्देऽथ पौरुषम्'** [ह.वं.प.३५.१२] इति ह्युक्तम् । तस्यापि मनोदूषणमस्मदीयैरसुरैराविश्य निष्पादितं प्रसिद्धं हि ॥ ७५ ॥ वृष्णीनां पुरोहितस्य तस्य पुरो हि । परेण वृष्णीनां परकीयेण सालेन, भावुकस्य षण्ढता उदिता । यद्यपि वैयाकरणाः शमेर्ढप्रत्ययेन शण्ढशब्दो नपुंसकवचन इति वदन्ति । श्वेतवनवासी तु **'षणेर्ढः'** [द.पा.५.११] इति पठित्वा षण्ढशब्दं निष्पादयति । युक्तोऽयं पाठः । शण्ढशब्दस्य सूत्रान्तरेण विधानात् पुनरत्र तदुक्तौ पौनरुक्त्यात् । तथाहि सूत्रम्–**'जनि-दा-च्यु-सृ-वृ-मदि-शमि-शमि-नमि-भृञ्भ्य इत्वन्-त्व-क्तन्-निक्-शक्-छ-ढ-खक्-ट-अटचः'**

---

१. **'शाल आक्षिपत्'** इति, **'स्याल अक्षिपत्'** इति, **'श्याल आक्षिपत्'** इति च । **'स्याल आक्षिपत्'** इति वे.ती. पाठ इति भाति ।

२. **'षण्डतोदिता'** इति क्वचित् । वे.ती. पाठोऽपि तथा स्यात् ।

३. **'एषु हि'** । **'एष हि'** इति क्वचित् ।

**चकार च प्रतिश्रवं समार्ज्जये सुतं द्रुतम् ।**
**अकृष्णतां य आनयेद् भुवोऽपि वृष्णिनाशकः ॥ ७७ ॥**

**यतो हि कृष्णसंश्रयाद् बतापहासिता वयम् ।**
**इति ब्रुवन् वनं ययौ तपश्च शैवमाचरत् ॥ ७८ ॥**

**स चूर्ण्णमायसं त्वदन् ददर्श चाब्दतः शिवम् ।**
**वरं ततोऽभिपेदिवान् सुतं हरेरभावदम् ॥ ७९ ॥**

**चोदितेन वा ॥ ७६–९ ॥**

---

[द.पा.१०.१५] । अत्र शमिधातोः ढस्य खकश्च विधानेन शण्ढशङ्खयोर्निष्पत्तौ पुनः **'शमेर्ढः'** इति, **'शमेः खः'** इति च न वक्तव्यम् । तेन **'षणेर्ढः'** इत्येव साधुः पाठः । षणु दाने । नियोगाय स्वभार्यामन्येभ्यः सनोति ददातीति षण्ढः । षण भक्तौ । स्वकार्यार्थमन्यान् सनति सेवत इति वा षण्ढः । काशकृत्स्नीयास्तु **'षडि निर्बीजे'** इति धातुं पठित्वा षण्डतीति षण्ड इति निर्वदन्ति । अयमपि भ्रान्तिमूलः पाठः । अस्य धातोः **'ठढिठुढि'** इत्यादि ढान्तधातूनामन्ते पाठात् ढान्तत्वमेवोचितम्–**'ढढि शब्दे । ढुढि अनुसन्धाने । षढि निर्बीजे'** इति । यदनेन सह पठ्यते **'षडि शिखडि निर्बीजे'** इति, तत्र **'शिखडि'** इति ढान्तात् पूर्वं पृथक् पठनीयम् । अर्थैक्यात् केनचित् भ्रान्त्या सहपठितम् । शिखडिसहपाठेन च षढिः षडिर्बभूव । अहो वैयाकरणानां भ्रान्तिपरम्परा । इयमत्र वस्तुस्थितिः– षण्ड इति सबीजो वृषभ उच्यते । षण्ढ इति निर्बीजः पुमान् । हेति भगवल्लीलाचित्रतां विस्मयते । कथमन्यथा भगवद्भक्तः कृष्णहन्तारं सुतं प्रेप्सेत्, अघटित-घटनापटीयस्या ऋते भगवदिच्छायाः । केचित्तु **'तस्य कृष्णस्य पुरः अग्रे'** इति, **'परेण कृष्णेन प्रेरिताः वृष्णयो यादवा अहसन्'** इति च व्याचक्षते । वयसो वैयाकुल्यादसङ्गतमेतत् । कृष्णो हि परिपञ्चविंशः यदा कालयवनं जघान । सोऽपि तदा परिविंशः स्यात् । तेन ज्ञायते कृष्णः पञ्चषवत्सरो यदा कालयवनोऽजायत । ततः पूर्वं वत्सरं तपः । ततः पूर्वं परि-हासः । प्रायस्तदा कृष्णस्त्रिचतुरहायनः । तदा कृष्णः गोकुलमध्युवास । कथं कृष्णप्रेरिता वृष्णयो हसेयुः । ननु कृष्णसंश्रयत्वमपि तर्हि कथम्? शृणु । जानन्ति किल वृष्णयो यद् देवक्यां भगवानवततारेति । स क्वापि वर्धमान आस्त इति च । अशरीरवाण्या कंसकराद् दिवमुत्पत्यादृश्यतां गताया दुर्गाया वचनाच्च । तेन युक्तस्तेषां कृष्णसंश्रयत्वाभिमानः ॥ ७६ ॥ तपसा सन्तोष्य आशु अर्जनं समार्जनम् । तदेव स्फुटमाह– यः द्रुतं भुवः अकृष्णतां आनयेत् । यः द्रुतं वृष्णीनामपि नाशको भवेत् ॥ ७७ ॥ बत विषादे कोपे च ॥ ७८ ॥ ननु हरिवंशे श्रूयते–**'महामुनिश्चायसचूर्णम-श्नन्नुपस्थितो द्वादशवार्षिकं व्रतम् ।........तपोबलाद् गर्गमुनेर्महात्मनो वरप्रभावाच्छकलेन्दुमौलिनः । भवन्त-मासाद्य जनार्दनो हिमं विलीयते भास्कररश्मिना यथा'** [वि.प.५३.५४] इति च । **'अलिप्संस्तु स्त्रियं चैव तपस्तेपे सुदारुणम् । ततो द्वादशवर्षाणि सोऽयश्चूर्णमभक्षयत्'** [५७.९] इति चोपरि । **'आराधयन् महादेवं लोहचूर्णम-**

स विष्णुदैवतोऽपि सन् प्रविष्ट उल्बणासुरैः ।
व्यधाद्धरेः प्रतीपकं व्रतं च[1] नैष्ठिकं जहौ ॥ ८० ॥

तमार चाऽसुराप्सरा बलिष्ठपुत्रकाम्यया ।
प्रविश्य गोपिकाङ्गनासमूहमद्धयमुल्बणा ॥ ८१ ॥

स यावनेन भूभृता हि गोपिकाभिरर्चितः ।
अपुत्रकेण जानता मुनेर्म्मनोऽनुचिन्तितम् ॥ ८२ ॥

**नैष्ठिकं व्रतं नैष्ठिकब्रह्मचर्यव्रतम् ॥ ८० ॥ असुराप्सराः गोपिकाङ्गनासमूहमध्यं प्रविश्य ॥ ८१ ॥ तस्य गोपाङ्गनासमूहस्य तत्समीपगमने किं कारणित्यत आह– स इति ॥ ८२ ॥**

---

**भक्षयत् । ददौ वरं च तुष्टोऽस्मै वर्षे तु द्वादशे हरः'** [५.२३.३] इति वैष्णवे । अत्र सर्वत्र गार्गं तपो द्वादशवार्षिकमिति प्रतीयते । यदि द्वादशवार्षिकं तपः, हन्त तर्हि कालयवनः परिदशः स्याद् यदा कृष्णेन सह योद्धुं जगाम । अतस्तात्पर्यमाह– ददर्श चाब्दतः शिवम् । तथाच पुराणवचनेषु वर्षशब्देन मासा गृह्यन्ते । बहुलं चैवंविधाः प्रयोगाः । वक्ष्यति चोपरि– **'मासा द्वादश नः प्रयाताः । वेदप्रामाण्याद् वत्सरास्ते हि'** [२२.१०४] इति । एतेन–**'कृष्णायससमप्रख्यो वर्षे द्वादशमे तदा । मिथ्याभिशप्तो गर्गस्तु मन्युनाऽभिसमीरितः'** [ह.वं.प.३५.१३] इति पूर्ववचनमपि विवृताभिप्रायम् ॥ ७९ ॥ विष्णुरेव दैवतं परदेवता यस्य स गर्गः । यो यच्छरीरं मनश्चाऽक्रामति स तेन स्वानुकूलं कर्म साधयति । यथा नराविष्टो दुष्टग्रहः । यस्मिन्नाविष्टः स तत्र सुप्त इव निर्लिप्ततया वसति । तदेतदुक्तम्–प्रविष्ट उल्बणासुरैरिति । स्वभावप्रच्छादनेन वेशः प्रवेशः । दारुपुरुषवत् स्वेच्छया प्रवर्तयितुं वेशः प्रवेशः । तेनास्मत्समीहितं सम्पन्नमिति साल्वाशयः । तेन न गर्गस्य महान् पापलेप इति भगवत्पादाशयः । प्रतीपकमतिहेयं विरोधम् । नैष्ठिकं विष्ण्वेकनिष्ठारूपं व्रतम्, ब्रह्मचर्यं वा ॥ ८० ॥ तमुल्बणासुरैः प्रविष्टमुल्बणाऽसुराप्सराऽऽर । एतेन–**'गोपकन्यामुपादाय मैथुनायोपचक्रमे । गोपाली त्वप्सरास्तस्य गोपस्त्रीवेषधारिणी । धारयामास गर्गस्य गर्भं दुर्धरमच्युतम्'** [ह.वं.प.३५. १४–५] इति हरिवंशवचनं गदिताभिप्रायम् । एवमेवोपरि विष्णुपर्वण्यपि पठ्यते–**'ततः शुश्राव तं राजा यवनाधिपतिर्वरम् । पुत्रप्रसवजं दैवादपुत्रः पुत्रकामिता । स नृपस्तमुपानाय्य सान्त्वयित्वा द्विजोत्तमम् । तं घोषमध्ये यवनो गोपस्त्रीषु समासृजत् । गोपाली त्वप्सरास्तत्र गोपस्त्रीवेषधारिणी । धारयामास गर्गस्य गर्भं दुर्धरमच्युतम् । मानुष्यां गर्गभार्यायां नियोगाच्छूलपाणिनः । स कालयवनो नाम जज्ञे शूरो महाबलः'** [वि.प.५७.१२–५] इत्यादि । सत्यमप्सराः । अथापि न गन्धर्वी, किन्त्वासुरीति । सुरेष्वप्यप्सरसो भवन्ति । असुरेष्वपि । गन्धर्वाप्सरस्सु द्वे शते एव हि दैवे मोक्षयोग्ये च । आर जगाम ॥ ८१ ॥ अपुत्रकेण यावनेन भूभृता कर्त्रा, मुनेर्मनसश्च स्वानुगुणं चिन्तितं जानता । स गर्गः गोपिकाभिः

---

१. 'व्रतं तु नै–'

**स चाप्सरस्तनौ सुतं निषिच्य यावनाय च ।**
**ददौ विमोहितः क्रुधा किमेतदीश वैरिणः ॥ ८३ ॥**

**स आश्रमाच्च नैष्ठिकाद् विदूषितः प्रतीपकृत् ।**
**हरेश्च तापमेयिवान् जगर्ह चाऽत्मशेमुषीम् ॥ ८४ ॥**

**जगाम चारणं हरिं प्रपाहि मां सुपापिनम् ।**
**इति स्म विष्णवनुज्ञया चकार वैष्णवं तपः ॥ ८५ ॥**

**कुतो हि [1]भाग्यमापतेन्मुनेः शिवार्चने सदा ।**
**भवादृशा हि दानवाः स्थिराः शिवार्चने सदा ॥ ८६ ॥**

**ईश प्रभो, हे जरासुत । वैरिणः एतत् प्रतिकूलाचरणं किं विचित्रम्? वैरिणः सर्वमपि प्रतिकूलं कुर्युरिति भावः ॥ ८३–४ ॥ इति स्म ब्रुवन् अरणं जगाम ॥ ८५–६ ॥**

---

करणैरर्चितः । गोपिकाः प्रेषयित्वा ताभिस्तमर्चयामासेत्यर्थः । अनुगुणं चिन्तितं चिन्तनं यत्र तादृशं मुनेर्मनो विज्ञायेति वा । युवन्ति यकेनककेनापि यकयाककयाऽपि वेति यवना नाम जनपदाः । **'यु मिश्रणे'** । तेषामयं राजा यावनः ॥ ८२ ॥ अस्यामुत्पत्स्यमानं सुतं त्वमेव गृहाण पाहि चेति यावनाय ददौ । सुतं निषिच्य वरबलात् सुतदत्वेन निश्चितं शुक्रं निषिच्य । शुक्रेण सह तद्गतं जनिष्यमाणं जीवं गर्भे निधायेत्येतत् । तनावित्यनेन तां स्त्रीतनुं कामङ्कामं सम्बुभुज इति सूचयति । ईशेति सौभराड् जरासन्धमुल्लाघयन् ब्रूते– अस्मद्वैरिणः गर्गस्य अस्मदनुकूलाचरणं किं चित्रमेतत् । तेन जानीमहे दिष्टमस्मदिष्टमिह सम्पिपादयिषतीति । अथवा असुरावेशेन कृष्णवैरिणः एतत् किं चित्रम्? न चित्रमित्यर्थः । प्रतिकूलमाचरन् हि वैरी भवति । अथवा, ईशवैरिण इत्येकं पदम् । विष्णुभक्ततया ईशपारम्यवैरिणस्तस्य शिवं प्रति तपःकरणम्, तेन कृष्णाभावप्रदसुतलम्भनं चेति किमिदं चित्रम् । अश्रद्धेयमघटनीयं च । घटितमिति श्रद्धेयम् ॥ ८३ ॥ नैष्ठिकादाश्रमाद् ब्रह्मचर्याद् विदूषितो विभ्रष्टः । येनोर्ध्वरेताः सन् परनारीभगे निषिषेच रेतः । अथ चासुरावेशान्मुक्तः पश्चात्तापमेयिवान् । गर्ह विनिन्दने । **'वा णिच् । गर्हयति गर्हति'** इति क्षीरस्वामी । आत्मनः शेमुषी, शं सुखमिं ज्ञानं च मुमोषेति तस्मिन्नन्वर्थैवाऽस शेमुषी ॥ ८४ ॥ अरणं शरणम् । **'स्मृत्वा हरिस्तमरणार्थिनमप्रमेयः'** [२.७.१६] इति भागवते । अहं न केवलं पापी, किन्तु सुपापी । महत्तमपातकी । अतो नाल्पेन रक्षणेन पूर्यते, किन्तु महता रक्षणेन भाव्यम् । अतः प्रपाहीति प्रार्थ्यसे इति वदन् हरिं शरणं रक्षितारं जगाम च । गर्हासमुच्चये चकारः ॥ ८५ ॥ कुतः सदा शिवार्चने योग्यं भाग्यमापतेन्मापतेर्भक्तस्य मुनेः? भवादृशा एव हि स्थिरदीक्षाः **'शिवार्चने सदा'**

---

१. **'भाग्यमाप्यते मुनेः'** इति क्वचित् ।

सुतोऽस्य कालनामको बभूव कृष्णमर्द्दितुम् ।
सदैव कालकाङ्क्षणात् स यावनाभिषेचितः ॥ ८७ ॥

तवैव शिष्य एष चातिभक्तिमान् हि शङ्करे ।
प्रभूतसेनया युतो बलोद्धतश्च सर्वदा ॥ ८८ ॥

तमेष[1] यामि शासनात् तवोपनीय सत्वरम् ।
विकृष्णकं क्षितेस्तळं विधाय संरमाम हा[2] ॥ ८९ ॥

ततश्च रुग्मिणीं[3] वयं प्रदापयाम चेदिपे ।
विनाश्य देवपक्षिणो यथेष्टमास्म सर्वदा ॥ ९० ॥

**कृष्णमर्द्दितुं हन्तुं सदा कालकाङ्क्षणात्, कालप्रतीक्षणात्, काल(नामकः) स यावनाभिषेचितः ॥ ८७–८ ॥ एषोऽहम् ॥ ८९–१०२ ॥**

---

इति द्विरुक्तिस्तस्य शैवमाग्रहं ग्राहयति । शिवस्यार्चनमेव शिवं माङ्गलिकमर्चनमित्यर्थभेदद्योतनाय च द्विराह ॥ ८६ ॥ कालनामकः । कुतः? कृष्णमर्दितुं सदैव कालकाङ्क्षणात् । कृष्णं कालयितुं कालं कलयतीति कालः । कल सङ्ख्याने । वर्णतश्च काळः । स्वभावतश्च । अनेहा कालः । अशुक्लः काळः । अतः कालः कृष्णवर्ण इति न निराह । **'अर्द गतौ याचने च'** इति पठन्ति । उपलक्षणमेतत् । **'पीडायां च'** इति च पठितव्यम् ॥ ८७ ॥ स शङ्करेऽतिभक्तिमानिति तवैव शिष्यः । सर्वेषां शैवानां त्वं किल जगद्गुरुः ॥ ८८ ॥ तव शासनात् तवोपनीय तव समीपमानीय । सर्वेऽपि असुराः सङ्गता रमाम । हा इति दीर्घेण आनन्दातिशयमसुराणां द्योतयति । विस्मयते च । **'हा विस्मये प्रमोदे च'** इति पुरुषोत्तमः । वस्तुतस्तु भाव्यनिष्टमसुराणां तन्मुखात् हाकारमुच्चारयता दैवेन सूचितमिवेति भावः । यद्यपि रमतिरात्मनेभाषः पाणिनीयानां मते । वियोगेन च भवति परस्मैभाषः, विररामेति । तेन परस्मैभाषयाऽसुराणां विरामः सन्निहित इति च सूचयतीव । स्फुटमेतत् समित्युपसर्गेण । संस्थया नाशेन विरामो हि संविरामः । संविराम एवात्र संरामः ॥ ८९ ॥ चेदिपे चेदिपाय । चेदिपे वरे सति । विवाह्य दानं प्रदानम् । आस्मेति वर्तमानार्थे भविष्यदर्थे च लुङ् । **'छन्दसि लुङ्-लङ्-लिटः'** [अ.सू.३.४.६] इति पाणिनिस्मरणात् । **'छन्दसि विषये धातुसम्बन्धे सर्वेषु कालेषु लुङ्लङ्लिटः प्रत्यया भवन्ति'** इति जयादित्यः । वर्णव्यत्यासेन आस्म असामेति लोड् वा ॥ ९० ॥

---

१. **'तमेव यामि'** २. **'विकृष्णकं विधाय च क्षितेस्तलं रमामहे'** । **'विकृष्णकं क्षितेस्तलं विधाय सरंमामहे'** इति क्वचित् ।
३. **'ततश्च रुक्मिणीम्'** । **'ततस्तु रुग्मिणीम्'** इति क्वचित् ।

**इतीरितो जरासुतो बभूव दुर्म्मना भृशम् ।**
**किरीटमण्डितं शिरश्चकार चाऽश्ववाग् भृशम् ॥ ९१ ॥**

**करं करेण पीडयन् निशाम्य चाऽत्मनो भुजौ ।**
**जगाद कार्य्यसिद्धये कथं प्रयाचये परम् ॥ ९२ ॥**

**सुदुर्ग्गकार्य्यसन्ततिं ह्यगुः स्म मद्भुजाश्रयाः ।**
**समस्तभूतळे[1] नृपाः स चाहमेष मागधः ॥ ९३ ॥**

**कदाऽप्यचीर्णमद्य तत् कथं करोमि केवलम् ।**
**गिरीशपादसंश्रयः प्रभुः समस्तभूभृताम् ॥ ९४ ॥**

**इतीरितः स सौभराड् जगाद वाक्यमुत्तरम् ।**
**भवानपि स्म मुह्यते किमस्मदादयः प्रभो ॥ ९५ ॥**

**स्वशिष्यकैः कृतं तु यत् किमन्यसाधितं भवेत् ।**
**स्वशिष्यदासवर्ग्गकैः समर्त्थयन्ति भूभुजः ॥ ९६ ॥**

---

दुःखितमनाः किं वक्तव्यमित्यभानात् क्षणमवाक् अवचनस्तूष्णीं शिरः अवाक् चकार अवनतशिरा बभूव । भृशं दुर्मनाः । अत एव भृशमवागनुत्तरो भवन् अवाक् शिरश्चकार । दुर्मनस्तया पूर्वमेवावनतं शिरः । भृशं दुर्मना इति भृशं पुनरप्यवनतं चकारेति वा ॥ ९१ ॥ प्रयाचये प्रह्वः सन् याचये । कथं स्वयं याचे । दूतमुखेन वा याचये । तेनागौरवं केवलमात्मगामीत्यर्थः ॥ ९२ ॥ सुदुर्गेति । नञर्थे दुः । असाध्यपारगमना दुर्गा । अन्यैः सर्वथाऽसाध्या सुदुर्गा । सुदुर्गामामपि कार्यसन्ततिं मद्भुजाश्रयणेन सुखेनागमन् ॥ ९३ ॥ तत् स्वकार्यसाधनाय अन्यस्य कस्यचित् याचनम् । अथच केवलं गिरीशपादसंश्रयः कथमधुनाऽन्यं कञ्चन संश्रये? श्रिञ् सेवायाम् । अनन्यया भक्त्या श्रयणं संश्रयणम् ॥ ९४ ॥ मुह्यते मुह्यति । मुह वैचित्त्ये । **'वैचित्त्यमविवेकः'** इति क्षीरस्वामी । तत्फलं च कृष्णेन भवतः पराजय इत्यात्मने-भाषा । अथवा भवानपि विवेकित्वेन सम्मतोऽपि अनेन मानभङ्गभयेन मुह्यते अविवेकीक्रियत इत्यर्थः ॥ ९५ ॥ अल्पमात्रैः स्वशिष्यैः । अल्पतमैः स्वशिष्यवर्गैः स्वदासवर्गैश्च । समर्थयन्ति स्वकार्यं सम्पादयन्ति ॥ ९६ ॥

---

१. **'–भूतले'**

अपि स्म ते बलाश्रयप्रवृत्तयोऽस्मदादयः ।
पुमान् कुठार[1]सङ्ग्रहादशक्त ईर्यते हि किम्[2] ॥ ९७ ॥

कुठारसम्मितो ह्यसौ तवैव यावनेश्वरः ।
विना भवद्बलं क्वचित् प्रवर्त्तितुं नहि क्षमः ॥ ९८ ॥

वरो हि कृष्णमर्द्दने वृतोऽस्य केवलः शिवात्[3] ।
तदन्यशत्रुपीडनात् त्वमेव तस्य[4] रक्षकः ॥ ९९ ॥

तवाखिलैरजेयता शिवप्रसादतोऽस्ति हि ।
विशेषतो हरेर्ज्जये वरादयं विमार्ग्यते[5] ॥ १०० ॥

इतीरितेऽप्यतृप्तवत् स्थिते तु बार्हद्रथे[6] ।
जगाम सौभमास्थितः स सौभराट् च यावनम् ॥ १०१ ॥

स कालयावनोऽथ तं जरासुतान्तिकागतम् ।
निशम्य भक्तिपूर्वकं प्रणम्य चाऽर्च्चयद् द्रुतम् ॥ १०२ ॥

जरासुतो हि दैवतं समस्तकेशवद्विषाम् ।
इति प्रणम्य तां दिशं तदीयमाश्वपूजयत् ॥ १०३ ॥

**तदीयं जरासुतसम्बन्धिनं साल्वं अपूजयत् ॥ १०३–४ ॥**

---

अस्मदादयोऽपि तव बलाश्रया प्रवृत्तिर्येषां तादृशाः । उपकरणतया ग्रहणं सङ्ग्रहणम् ॥ ९७ ॥ कुठारसम्मित एव हि । तदपि तवैव । नान्यस्य कस्यचित् ॥ ९८ ॥ शत्रुपीडाया रक्षको निवारणेन । शत्रून् पीडयित्वा वा रक्षकः । ल्यबर्थे पञ्चमी ॥ ९९ ॥ हरेर्जयविषये विशेषतो वरान्निमित्तात् वरबलात् हरेर्जयार्थमयं कालयावनो विशिष्य मार्ग्यते । **'मार्ग अन्वेषणे'** ॥ १०० ॥ बार्हद्रथे इति शिथिलोच्चारणेन तस्य निर्धारशैथिल्यं द्योतयतीव । तूर्ष्णीं स्थिते तु । मौनं सम्मतिलक्षणमिति तुनाऽऽह । अतः सौभराड् यावनं जगाम ॥ १०१ ॥ जरासुतान्तिकादागतम् । जरासुतात् स्वान्तिकमागतं वा । द्रुतमिति आदरातिशयात् सम्भ्रमातिशयमाह ॥ १०२ ॥ दैवतमिव दैवतम् । पूज्यतम इत्यर्थः ।

---

१. **'–संश्रयादशक्त–'** इति कचित् । २. **'ईर्यते नु किम्'** ३. **'केवलं शिवात्'**
४. **'त्वमेव चास्य'** ५. **'विमृग्यते'** ६. **'बार्हद्रथे'** इति पठनीयम् ।

**तदीरितं निशम्य च द्रुतं त्रिकोटिसङ्ख्यया ।**
**अक्षोहिणीकया[1] युतः स्वसेनया निराक्रमत् ॥ १०४ ॥**

**तदश्वमूत्रविष्ठया बभूव नामतः शकृत् ।**
**नदी सुवेगगामिनी कलौ च या वहेद् द्रुतम् ॥ १०५ ॥**

**पुनःपुनर्न्नदीभवं निशाम्य देशसङ्क्षयम् ।**
**तदन्यदेशमूत्रितं व्यशोषयद्धि मारुतः ॥ १०६ ॥**

**हरिश्च वैनतेययुग् विचार्य्य रामसंयुतः ।**
**सदाऽतिपूर्णसंविदप्यजोऽथ लीलयाऽस्मरत् ॥ १०७ ॥**

**वहेत् प्रवहेत् ॥ १०५–६ ॥ अस्मरत् अचिन्तयत् ॥ १०७–८ ॥**

---

**'गुरुः साक्षान्महेश्वरः'** इति गुरुमेव च दैवतं ते मन्यन्ते ॥ १०३ ॥ त्रिकोटिमिता यत्र योधानां सङ्ख्या सा त्रिकोटिसङ्ख्याऽक्षोहिणी । सेयं वैदेशिकानां म्लेच्छानां सेना । **'नारदप्रेषितो वीरो यावनः प्रत्यदृश्यत । रुरोध मधुरामेत्य तिसृभिर्म्लेच्छकोटिभिः'** [१०.५३.२८] इति भागवते । **'समृद्धो हि यदा राजा यवनानां महाबलः । तत एनं नृपा म्लेच्छाः संश्रित्यानुययुस्तदा । शकास्तुषारा दरदा पारदाः शृङ्खलाः खशाः । पल्लवाः शतशश्चान्ये म्लेच्छा हैमवतास्तथा'** [वि.प.५७.१९–२०] इति हरिवंशे । **'गजवाजिखरोष्ट्राणां सहस्रैरयुतैरपि । पृथिवीं कम्पयामास सैन्येन महता वृतः'** [वि.प.५७.२२] इति च । **'अक्षोहिणीकया'** इत्यत्र द्वितीयमक्षरं शिथिलतया पठनीयम्, यथा अकारस्य द्विमात्रता न स्यात् । तद् यथा **'दृळ्ढच्युतः'** इति । यथा वा भगवान् व्यासः–**'यं सञ्चित्य न जायते न म्रियते'** [वि.पु.६.८.५८] इति । एवमुत्तरत्रापि । कुत्सिता अक्षोहिणी अक्षोहिणीका । निराक्रमत् निराक्रामत् । निर्गत्य आचक्रामेत्यर्थः । दीर्घलोपेनाऽक्रमणस्यापि फललोपमाह । यद्वा–**'क्रमः परस्मैपदेषु'** [अ.सू.७.३.७६] इति दीर्घो नाऽश्रितः । तेन क्रमति, क्रामति, क्राम्यतीति त्रीण्यपि रूपाणि युक्तानीति भगवत्पादाशयः । तथाहि प्रयोगः–**'येनाऽक्रमन्त्यृषयो ह्याप्तकामाः'** [आथ.उ.३.१.६] इति, **'स्पृधो अदेवीरभि च क्रमाम'** [ऋ.सं.६.४९.१५] इति च । **'ततो देशान्निराक्रमत्'** [भ.प.१२६.४३] इति च हरिवंशे ॥ १०४ ॥ दुर्गन्धादिना देशक्षयेण च शं सुखं कृन्ततीति शकृत् । सुवेगेन अप्रतिहतवेगेन । **'मूत्रेण शकृता चैव सैन्येन ससृजे नदीम् । अश्वोष्ट्रशकृतां राशेर्निःसृतेति जनाधिप । ततोऽश्वशकृदित्येव नाम नद्या बभूव ह'** [वि.प.५७.२३-४] इति च ॥ १०५ ॥ नदीतीरभाजां देशानां समग्रं क्षयं सस्यादिसम्पदो वा क्षयं समीक्ष्य व्यशोषयत् निःशेषमशोषयत् ॥ १०६ ॥ स्वाशयसंवादिना रामेण च युतः । भगवच्चिन्तनमिदं

---

१. **'अक्षौहिणीकया'**

**युयुत्सुरेष यावनः समीपमागतोऽद्य नः ।**
**युयुत्सतामनेन नो जरासुतोऽभियास्यति ॥ १०८ ॥**

**स यादवान् हनिष्यति प्रभङ्गतस्तु कोपितः[1] ।**
**पुरा जयाशया हि नौ[2] यदून् न जघ्निवानसौ ॥ १०९ ॥**

**निराशकोऽद्य यादवानपि स्म पीडयिष्यति ।**
**अतः समुद्रमद्ध्यगापुरीविधानमद्य मे ॥ ११० ॥**

**प्ररोचते निधानमप्यमुत्र सर्वसात्त्वताम् ।**
**उदीर्य चैवमीश्वरोऽस्मरत् सुरेशवर्द्धकिम्[3] ॥ १११ ॥**

**प्रभङ्गतः पराजयात् । जयाशया, (वि)जेष्ये यदुपुर्यां दौहित्रं स्थापयिष्य (इति) चाऽशया ॥ १०९ ॥ निराशकः रामकृष्णौ (वि)जेष्य इत्याशारहितः ॥ ११०–११ ॥**

---

कालयवनविनाशनान्दीत्याह–अथेति । लीलया कर्तव्यमस्मरत् । एतावत्पर्यन्तं विस्मृतं किमप्यपूर्वं सम्प्रति प्रतिभातमितीव दर्शयामास । यः पुनःपुनर्जायते स मृत्या सह पूर्वतनं विस्मरति । अयमजः कथं विस्मरेत्? कथमविस्मृतिः स्मरेत् । अथापि लीलयाऽस्मरत् । यदून् प्रत्यनुग्रहोन्मुखो बभूवेति हृदयम् । अनुग्रहोन्मुखत्वमेव हि भगवतः स्मरणं नाम । **'क्रतो स्मर कृतं स्मर'** इति श्रवणात् । स्मृत्वा वक्ष्यमाणं जगाद च रामं प्रति । गरुडं च ॥ १०७ ॥ किमस्मरत्? किं जगाद? आह– युयुत्सुरेष इत्यादि सर्वसात्त्वतामित्यन्तम् । अनेन युयुत्सतां नः, अपसृत्य नो युयुत्सतामयुयुत्सतां वा । उभयथाऽपि नोऽस्मान् जरासुतोऽभियास्यति ॥ १०८ ॥ पूर्वयुद्धेषु सर्वेष्वपि सामस्त्येन मुखभङ्गात् पराजयः प्रभङ्गः । नैराश्यं नाम विशेषं तुनाऽऽह । नौ जयाशया यदून् न जघ्निवान् । **'विभाषा गम-हन-विद-विशाम्'** [अ.सू.७.२.६८] इति पाणिनिः । तेनैषां धातूनां वसाविडागमो विभाषा भवति । तेन गमेः– जग्मिवान् जगन्वानिति रूपद्वयम् । हन्तेः– जघ्निवान् जघन्वानिति । विदेः–विविदिवान् विविद्वानिति । विशेः–विविशिवान् विविश्वानिति । विदिरत्र लाभार्थः । न ज्ञानार्थः ॥ १०९ ॥ समुद्रमध्यगापुरीविधानमिति दत्तोत्तरम् । अथच समुद्रमध्यगायां भूमौ पुरीविधानमिति व्याकरणं व्याकरणमुग्धानां समाधानाय भवति ॥ ११० ॥ प्रधानं प्रथमकर्तव्यमिति वा रोचते । निधानं स्थापनम् । वर्धयतीति वर्धकिस्तक्षा । वर्ध च्छेदनपूरणयोः । **'वर्धेरकिः'** [स.कं.२.२.१७४] । सुरेशवर्धकिर्विश्वकर्मा ॥ १११ ॥

---

१. **'कोपतः'** २. **'हि नो यदून्'** इति पाठः प्रामादिकः । ३. **'सुरेशवार्धकिम्'**

**स भौवनः समागतः कुशस्थलीं विनिर्म्ममे ।**
**निरम्बुके तु सागरे जनार्दनाज्ञया कृते ॥ ११२ ॥**

**भौवनः विश्वकर्मा ॥ ११२–५ ॥**

---

भौवन इति विश्वकर्मणो नामान्तरम् । तथाहि प्रयोगः–**'भौवनः सुमहावीर्यः सोमस्य परिरक्षिता'** [म.भा;आ.प.३२.३] इति । भौमन इति पठन्तः कोशकारा भ्रान्ताः । कथं भौवनः? शिल्पकौशलेन भुवनेषु ख्यात इति भौवनः । भुवनस्य शिल्परहस्यं विदन् वा भौवनः । विश्वकर्मणः पिता वसुष्वेको वस्तुर्नाम । तस्यैव भुवन इति नामान्तरं च । तथाहि विश्वकर्मसूक्ते [१०.८१] अनुक्रमणिका–**'य इमा विश्वकर्मा भौवनो वैश्वकर्मणं तु'** इति । **'वरुणेनाभिसङ्गम्य समाभाष्याभिपूजितः । इति सम्मन्त्र्य भगवान् दुर्गं द्वादशयोजनम् । अन्तःसमुद्रे नगरं कृष्णोऽद्भुतमचीकरत् । दृश्यते यत्र हि त्वाष्ट्रं विज्ञानं शिल्पनैपुणम्'** [१०.५३.३२–४] इति भागवते । **'ततः सा निर्मिता कान्ता पुरी द्वारावती तदा । मानसेन प्रयत्नेन वैष्णवी विश्वकर्मणा'** [वि.प.५८.४४] इति हरिवंशे । द्वारावत्येव पूर्वं कुश-स्थली । अयमत्रेतिहासः– शंयातेः सुत आनर्तः, यश्च्यवनजायायाः सुकन्यायाः सहोदरः । तत्पुत्रो रेवान् । रेवत इति चास्य नामान्तरम् । तेन पुरा सागरमध्ये निर्मिता पुरी कुशस्थली । कुशा अत्र प्रचुरमासन्निति तथा नाम चक्रे । तत्पुत्रः ककुद्मी रैवतः । तन्नाम्नैव च तत्र रैवतको नाम गिरिर्बभूव । रेवतः पौत्री ककुद्मिनः पुत्री रैवती । यां बलभद्र उप-येमे । तेन तं रैवतीरमणं सन्तमधुनातना रेवतीरमणमाहुः । रैवत्याः पितामहेन युगान्तरे निर्मिता कुशस्थली महता कालपर्ययेण रक्षोभिः क्षपिता जलधिनाऽऽप्लुतप्राया च बभूव । तां कृष्णः समुद्रमपसार्य पुनरपि सञ्चस्कार । चक्रे नाम च द्वारवतीति । कथं द्वारवती? मनोहराणि द्वाराण्यस्याः सन्तीति । सर्ववर्णानां मोक्षद्वाराण्यत्र सन्तीति । अधिका द्वार-वत्येव द्वारावती । **'शंयातेर्मिथुनं चाऽसीदानर्तो नाम विश्रुतः । पुत्रः कन्या सुकन्याख्या या पत्नी च्यवनस्य ह । आनर्तस्य तु दायादो रेवान् नाम महाद्युतिः । आनर्तो विषयश्चाऽसीत् पुरी चास्य कुशस्थली । रेवतो रैवतः पुत्रः ककुद्मी नाम धार्मिकः'** [ह.वं.१०.३१–३] इति, **'कृतां द्वारवतीं नाम्ना बहुद्वारां मनोरमाम् । भोजवृष्ण्यन्धकैर्गुप्तां वासुदेवपुरोगमैः । ततः स रैवतो ज्ञात्वा यथातत्वमरिन्दम । कन्यां तां बलदेवाय सुव्रतां नाम रैवतीम् । दत्वा जगाम शिखरं मेरोस्तपसि संस्थितः'** [३६–८] इति च हरिवंशे । **'उत्तानबर्हिरानर्तो भूरिषेण इति त्रयः । शंयातेर-भवन् पुत्रा आनर्ताद् रेवतोऽभवत् । सोऽन्तः समुद्रे नगरीं विनिर्माय कुशस्थलीम् । आस्थितोऽभुङ्क्त विषयानानर्तादीन-रिन्दमः । तस्य पुत्रशतं जज्ञे ककुद्मिज्येष्ठमुत्तमम् । रैवतो रैवतीं कन्यां स्वामादाय विभुं गतः ।...... पुनः स्वपुर-मागतः । त्यक्तां पुण्यजनत्रासाद् भ्रातृभिर्दिक्ष्ववस्थितैः । सुतां दत्वाऽनवद्याङ्गीं बलाय बलशालिने । बदर्याख्यं ययौ राजा तप्तुं नारायणाश्रमम्'** [९.४.२७–३७] इति भागवते । सागरे निरम्बुके कृते । जनार्दनाज्ञया तु । तुना आज्ञाया अनुल्लङ्घ्यतामाह । अनुभूतं हि सागरेण रामावतारे आज्ञालङ्घनफलम् ॥ ११२ ॥

महोदकस्य मद्ध्यतश्चकार तां पुरीं शुभाम् ।
द्विषट्कयोजनायतां [1]पयोब्धिमद्ध्यगोपमाम् ॥ ११३ ॥

चकार लावणोदकं जनार्द्दनोऽमृतोपमम् ।
सभां सुधर्म्मनामकां[2] ददौ समीरणोऽस्य च ॥ ११४ ॥

शतक्रतोः सभां तु तां प्रदाय केशवाय सः ।
निधीन् समर्प्य सर्वशो ययौ प्रणम्य तं प्रभुम् ॥ ११५ ॥

समस्तदेवतागणाः स्वकीयमर्प्पयन् हरौ[3] ।
विमुच्य पक्षिपुङ्गवं स योद्धुमैच्छदच्युतः ॥ ११६ ॥

**स्वकीयं स्वेषां विद्यमानम् ॥ ११६–२२ ॥**

---

द्विषट्कयोजनायताम् । **'यादवाभिभवं दुष्टा मा कुर्वन्त्वरयोऽधिकाः । इति सञ्चिन्त्य गोविन्दो योजनानां महोदधिम् । ययाचे द्वादश पुरीं द्वारकां तत्र निर्ममे'** [वि.पु.५.२३.१३] इति वैष्णवे । पयोब्धिमध्यगश्वेतद्वीपोपमाम् । पयांस्येवात्रापां स्थाने निहितानीति पयोब्धिः ॥ ११३ ॥ अमृतोपमम् । यथा सामुद्रमुदकमेव सर्वे यादवाः पिबेयुः कृषिकर्मणे चोपयुञ्जीरन् । स्वर्गादानीय ददौ । **'सुधर्माय सुधर्मां तां कृष्णयाक्लिष्टकारिणे । देवो देवसभां दत्वा वायुरन्तरधीयत'** [वि.प.५८.७६] इति हरिवंशे ॥ ११४ ॥ कस्य मनआख्यस्येन्द्रियस्येष्ट इति केशः शतक्रतुरिन्द्रः । तमपि वर्तयतीति केशवः । कस्य जीवानन्दस्येशः केशो वायुस्तमपि वर्तयति । सर्वशः सर्वान् निधीन् । सर्वेषां निधिपतीनां देवानां च । शतक्रतोः प्रभुम् । सर्वलोकस्य प्रभुम् । स्वस्य च प्रभुम् । **'गृहीत्वा शासनं मूर्ध्ना निधिराट् केशवस्य ह । निधीनाज्ञापयामास द्वारवत्यां गृहेगृहे'** [वि.प.५८.६४] इति च । मुख्यतो निधिराड् वायुरेव । अतो वायुरेव तान् समर्प्य ययावित्युक्तम् ॥ ११५ ॥ वस्तुतस्तदीयमेव । ततोऽर्पणमित्युपधमात्रम् । तदेतदल्लोपेनाऽह । तदिदं सरसः पाथसः सरसि प्रक्षेपणं नाम । **'श्यामैककर्णान् वरुणो हयान् शुक्लान् मनोजवान् । ददौ सहस्रसङ्ख्यातान् देवदेवाय तोयराट् । अष्टौ निधिपतिः कोशान् रत्नपूर्णानविक्षयान् । तथाऽन्ये लोकपालाश्च ददुः स्वाधिकृतं धनम्'** [१०.५३.४०–१] इति भागवते । सर्वसात्त्वतां द्वारकायां निधानानन्तरं कृतकार्यं पक्षिपुङ्गवं विमुच्य गम्यतामित्यामन्त्र्य यावनेन योद्धुमैच्छत् ॥ ११६ ॥

---

१. **'पयोधि–'** इति कचित् । २. **'सुधर्मनामिकाम्'**

३. **'–मर्पयन् हरेः'** इति कचित् । कचित् **'–मार्पयन्'** इत्येव पठ्यते ।

**समस्तमाधुरान् प्रभुः कुशस्थलीस्थितान् क्षणात् ।**
**विधाय[१] बाहुयोधकः स यावनं समभ्ययात् ॥ ११७ ॥**

**अनन्तशक्तिरप्यजः सुनीतिदृष्टये नृणाम् ।**
**व्यवासयन्निजान् जनान् स लीलयैव केवलम् ॥ ११८ ॥**

**अनाद्यनन्तकालकं समस्तलोकमण्डलम् ।**
**यदीक्षयैव रक्ष्यते किमस्य वृष्णिरक्षणम् ॥ ११९ ॥**

**निरायुधं च मामयं वराच्छिवस्य न क्षमः ।**
**समस्तसेनया युतोऽपि योद्धुमित्यदर्शयत् ॥ १२० ॥**

**स कृष्णपन्नगं घटे निधाय केशवोऽर्प्पयत् ।**
**निरायुधोऽप्यहं क्षमो निहन्तुमप्रियानिति ॥ १२१ ॥**

**घटं पिपीलिकागणैः प्रपूर्य्य यावनोऽस्य च ।**
**बहुत्वतो विजेष्य इत्यहिं मृतं व्यदर्शयत् ॥ १२२ ॥**

---

तदेव स्फुटमाह–समस्तेति ॥ ११७ ॥ आपदि शुभां नीतिं दर्शयितुम् ॥ ११८ ॥ न लवकालोऽप्ययं भगवतः योयमनादिरनन्तः काल इति कप्रत्ययेनाऽह– अनाद्यनन्तकालकमिति । अनवच्छिन्नो हि कालेन भगवान् ॥ ११९ ॥ निरायुधमपि, शिवस्य वरादपि ॥ १२० ॥ अर्पयत् । अनादरेण गमयामासेत्यर्थः । एतेन– 'स्वेन दूतेन हारयत्' [वि.प.५७.३३] इति हरिवंशवचनमपि गदिताभिप्रायम् । इति ज्ञापयन् । ननु कृष्णाशयं वितथीचकार यावनः, हत्वा कृष्णसर्पं पिपीलिकागणैः । तेन विफलसन्देशः कृष्णो बभूव । न भोः । कृष्णसर्पहननेनाजानन्नपि यवनः कृष्णाभिमतमेव चकार । कृष्णसर्पं यवनो वध्यादित्येव कृष्णस्तं तत्र गमयामास । तथाहि गर्गः पूर्वं प्रतिजज्ञे–'यो भुवोऽकृष्णतामानयेत् तादृशं सुतं समार्जये' इति । मा स्वभक्तस्य वचनं मोहमूलमपि वितथं भूदिति कृष्णश्चिन्तयामास । ततः कृष्णं सर्पं यवनाय प्रेषयामास । यवनस्तं जघान । एवं कृष्णपन्नगहननेन ऋषेरभिमतं स्वसुतस्य कृष्णहन्तृत्वं सम्पन्नम् । एवमृषेः प्रतिश्रवोऽप्यवितथो बभूव । कृष्णस्य सन्देशोऽपि ॥ १२१ ॥ प्रभूतं पूरयित्वा । यावद्भिः पन्नगो निश्चप्रचं प्रमीयते । अस्य कृष्णस्य च

---

१. **'विहाय'** इति मुद्रितः पाठो भ्रान्तिमूलः ।

किमत्र सत्यमित्यहं प्रदर्शयिष्य इत्यजः ।
उदीर्य दूतमभ्ययात् स यावनं प्रबाधितुम् ॥ १२३ ॥

स बाहुनैव केशवो विजित्य यावनं प्रभुः ।
निहत्य सर्वसैनिकान् स्वमस्य यापयत्[1] पुरीम् ॥ १२४ ॥

[2]सहास्त्रशस्त्रसञ्चयान् सृजन्तमाशु यावनम् ।
न्यपातयद् रथोत्तमात् तळेन[3] केशवोऽरिहा ॥ १२५ ॥

विवाहनं निरायुधं विधाय बाहुना क्षणात् ।
विमूर्च्छितं नचाहनत् सुरार्थितं स्मरन् हरिः ॥ १२६ ॥

**अत्र उभयोर्मध्ये, निरायुधजयस्य बहुत्वतो जयस्य च (मध्ये), किं सत्यं भविष्यतीत्यहं प्रदर्शयिष्य इति दूतमुदीर्य ॥ १२३ ॥ अस्य कालयवनस्य स्वं धनम् ॥ १२४–६ ॥**

---

मृतमहिं व्यदर्शयत् विजयभ्रान्त्याऽदर्शयत् । **'ततः कुम्भे महासर्पं भिन्नाञ्जनचयोपमम् । घोरमाशीविषं कृष्णं कृष्णः प्राक्षेपयत् तदा । ततस्तं मुद्रयित्वा तु स्वेन दूतेन हारयत् । निदर्शनार्थं गोविन्दो भीषयामास तं नृपम् । स दूतः कालयवने दर्शयामास तं घटम् । काळसर्पोपमः कृष्ण इत्युक्त्वा भरतर्षभ । तत्कालयवनो बुद्ध्वा त्रासनं यादवैः कृतम् । पिपीलिकानां चण्डानां पूरयामास तं घटम् । स सर्पो बहुभिस्तीक्ष्णैः सर्वतस्तैः पिपीलिकैः । भक्ष्यमाणः किलाङ्गेषु भस्मीभूतोऽभवत् तदा । तं मुद्रयित्वाऽथ घटं तथैव यवनाधिपः । प्रेषयामास कृष्णाय बाहुल्यमुपवर्णयन्'** [वि.प.५७.३२–७] इति हरिवंशे ॥ १२२ ॥ अत्र अनयोः अहिप्रेषणाहिमरणयोः किं सत्यं भविष्यतीति भाविनि प्रधने प्रकटं दर्शयिष्ये किमहिर्म्रियते, आहो पिपीलिकागणा इति । अथाप्यहेर्मृतिर्गर्गवचनरक्षार्थं मदिच्छयैव सञ्जाता, न त्वदिच्छयेति चाऽन्तरं सत्यं प्रेष्ठानां प्राज्ञानां त्वन्मारणेनैव दर्शयिष्ये । सर्वमेतन्मत्सङ्कल्पमूलं लीलानाटकमिति चाऽत्मनेभाषयाऽऽह । सः अजः यावनं प्रबाधितुम् । सयावनं जरासुतं वा । प्रबाधितुम्, यथा न पुनरावर्तेतेयं शत्रुपीडा तथा बाधितुम् ॥ १२३ ॥ अस्य सर्वस्वं स्वां पुरीमयापयत् ॥ १२४ ॥ अस्त्रशस्त्रसञ्चयान् सह युगपत् सृजन्तम् । सहास्त्राणां शस्त्राणां वा सञ्चयान् । सः ह इति पदद्वयं वा । तळप्रहारेण । नीचैरपातयत् । सतामरीन् हन्ति । अरिणा हन्ति च ॥ १२५ ॥ बाहुबलेन । निरायुधस्तं निरायुधं विधाय । तस्मादरिहाऽपि नारिपाणिर्बभूव । स्मरन् । अविस्मरणमेव भगवतः स्मरणं नाम । सुरार्थितं स्मरन् नित्यं जानन् सम्प्रत्यनुग्रहोन्मुखो भवन्नित्यर्थः । **'अनुग्रहोन्मुखत्वं तु स्मरणं**

---

१. **'प्रापयत्'** इति क्वचित् । २. **'महास्त्र –'** ३. **'तलेन'**

पुरा हि यौवनाश्वजे वरप्रदाः सुरेश्वराः ।
ययाचिरे जनार्दनं वरं वरप्रदेश्वरम् ॥ १२७ ॥

अनर्थको वरोऽमुना वृतोऽपि सार्थको भवेत् ।
अरिं भविष्ययावनं दहत्वयं तवेश्वर ॥ १२८ ॥

तथाऽस्त्विति प्रभाषितं स्ववाक्यमेव केशवः ।
ऋतं विधातुमभ्ययात् स यौवनाश्वजान्तिकम् ॥ १२९ ॥

ससञ्ज्ञकोऽथ यावनो धरातळात्[1] समुत्थितः ।
निपात्य यान्तमीश्वरं स पृष्ठतोऽन्वयात् क्रुधा ॥ १३० ॥

**किं तत् सुरार्थितमिति तत्राऽह– पुरेति । यौवनाश्वजे । युवनाश्वापत्यं मान्धाता यौवनाश्वः । तज्जस्तु मुचुकुन्दः । तस्मिन् तद्विषय इति भावः ॥ १२७ ॥ अनर्थकः फलहरितः । कथं सार्थको भवेदित्यत आह– अरिमिति ॥ १२८–३३ ॥**

---

**नाम कीर्तितम्'** इति स्मरणात् ॥ १२६ ॥ युवनाश्वसुतो मान्धाता यौवनाश्वः । तत्सुतो मुचुकुन्दः । वरप्रदेश्वरम् । अन्यत्र चाऽह– **'वरदेशवरप्रदम्'** इति । अपिच गर्गस्य वरप्रदो य ईशः शिवः तस्मादपि वरम् । वरप्रदस्य ईश्वरस्यापीश्वरमिति वा । अथच वरदाः सुराः । वरप्रदाः सुरेश्वराः । तेषामीशो ब्रह्मा । तस्मादपि वरम् । **'मान्धातुस्तु सुतो राजा मुचुकुन्दो महायशाः । पुरा देवासुरे युद्धे कृतकर्मा महाबलः । वरेण च्छन्दितो देवैर्निद्रामेव गृहीतवान् । श्रान्तस्य तस्य वागेवं तदा प्रादुरभूत् किल । प्रसुप्तो बोधयेद् यो मां तं दहेयमहं सुराः । चक्षुषा क्रोधदीप्तेन एवमाह पुनःपुनः । एवमस्त्विति तं शक्र उवाच त्रिदशैः सह । स सुरैरभ्यनुज्ञातो लोकं मानुषमागमत् । स पर्वतगुहां काञ्चित् प्रविश्य श्रमकर्शितः । सुष्वाप कालमेतं वै यावत् कृष्णस्य दर्शनम्'** [वि.प.५७.४३–७] इति च ॥ १२७ ॥ 'युद्धश्रान्तः विश्रान्तिमभिरोचये । तेन निद्रां वरं वृणे । यो मे निद्राभङ्गं कुर्यात् स मे दृष्टिपातेन भस्मसाद् भूयात्' इत्यनर्थको निद्रारूपो वरः यावनस्य भस्मसात्करणेन सार्थको भवेत् । त्वदीयानामरिं तव प्रसादात् दहतु ॥ १२८ ॥ तदेव ममापीष्टमिति प्रकटं प्रशस्य च भाषितम् ॥ १२९ ॥ ससञ्ज्ञकः कथञ्चिल्लब्धसञ्ज्ञः । सः शिववरबलात् कृष्णं हनिष्यामीति मुधाविश्वासः ॥ १३० ॥

---

१. 'धरातलात्'

हरिर्गुहां नृपस्य तु प्रविश्य संव्यवस्थितः[1] ।
स यावनः पदाऽहनन्नृपं स तं ददर्श ह ॥ १३१ ॥

स तस्य दृष्टिमात्रतो बभूव भस्मसात् क्षणात् ।
स एव विष्णुरव्ययो ददाह तं हि वह्निवत् ॥ १३२ ॥

वराच्छिवस्य दैवतैरवद्ध्यदानवान् पुरा ।
हरेर्वरान्निहत्य स प्रपेद आशिवमं वरम् ॥ १३३ ॥

सुदीर्घसुप्तिमात्मनः प्रसुप्तिभङ्गकृत्क्षयम् ।
स्वदृष्टिमात्रतस्ततो हतः स यावनस्तदा ॥ १३४ ॥

अतश्च पुण्यमाप्तवान् सुरप्रसादतोऽक्षयम् ।
स यौवनाश्वजो नृपो न देवतोषणं वृथा ॥ १३५ ॥

ततो हरिं निरीक्ष्य स स्तुतिं विधाय चोत्तमाम् ।
हरेरनुज्ञया तपश्चचार[2] मुक्तिमाप च ॥ १३६ ॥

**तत एव वरबलात् स्वदृष्टिमात्रतः हतः ॥ १३४ ॥ कथमेतददृष्टफलमभूदित्यत आह– अतः हरिविरोधिनिग्रहादिति । सुरप्रसादतः सुरप्रसादसम्भवात् ॥ १३५–९ ॥**

---

नृपस्य शयनस्थानं गुहाम् । प्रविश्य तु । तुना भगवतो गुहाप्रवेशे भक्तानुग्रहकातर्यमाह । तमसा संवृतः, यावनस्य दृष्टिपथं च विहाय, अवहसन्निवावज्ञया स्थितः । सः सुप्तोऽयं हरिरिति भ्रान्तः यावनः मुचुकुन्दं पदा अहनत् दृढं ताडयामास । स च सुप्तोत्थितः तं ताडयन्तं ददर्श ह । अहनत् अहन् । अक्षराधिक्येन तस्य दुरिताधिक्यं चाऽह । हेति हरिलीलामास्वदते । यावनस्य दौरात्म्यं चानुकम्पते ॥ १३१ ॥ **'ददाह पावकस्तं तु शुष्कं वृक्षमिवाशनिः'** [वि.प.५७.५५] इति हरिवंशे पठ्यते । कथं हरवरबलं पावको दहेत्? अतस्तात्पर्यमाह– स एवेति । स एव यः संवृत इवावस्थितः कृष्णः । स एव हि शिववरभञ्जनस्येष्टे ॥ १३२ ॥ शिवस्य वरात् दैवतैरप्यवध्यान् । 'शिववरादवध्या अपि मत्सन्निधानबलेन त्वया वध्या भविष्यन्ति' इति हरेर्वरात् । तेन तुष्टैर्दैवतैरिमं वक्ष्यमाणं वरं प्रपेदे ॥ १३३ ॥ आत्मनः सुदीर्घसुप्तिम्, आत्मनः सुदीर्घसुप्तिभङ्गकर्तुः स्वदृष्टिमात्रतः क्षयं नाशं च वरं प्रपेदे ॥ १३४–६ ॥

---

१. **'स व्यवस्थितः'** इति क्वचित् । २. **'तपश्चकार'**

ततो गुहामुखाद्धरिर्विनिस्सृतो जरासुतम् ।
समस्तभूपसंवृतं[1] जिगाय बाहुनेश्वरः ॥ १३७ ॥

तळेन[2] मुष्टिभिस्तथा महीरुहैश्च चूर्ण्णिताः ।
निपेतुरस्य सैनिकाः स्वयं च मूर्च्छितोऽपतत् ॥ १३८ ॥

ससाल्वपौण्ड्रचेदिपान् निपात्य सर्वभूभुजः ।
स पुप्लुवे जनार्द्दनः क्षणेन तां कुशस्थलीम् ॥ १३९ ॥

ससञ्ज्ञकाः समुत्थितास्ततो नृपाः पुनर्य्ययुः ।
जिगीषवोऽथ [3]रुग्मिणीं विधाय[4] चेदिपे हरिम् ॥ १४० ॥

समस्तराजमण्डले विनिश्चयादुपागते ।
सभीष्मके च रुग्मिणि[5] प्रदातुमुद्यते मुदा ॥ १४१ ॥

समस्तलोकयोषितां वरा विदर्भनन्दना ।
द्विजोत्तमं हरेः पदोः सकाशमाश्वयातयत्[6] ॥ १४२ ॥

**ससञ्ज्ञकाः समुत्थिताः (ततः) युद्धरङ्गात् पुनर्ययुः । किं चिकीर्षवः? अथ रुग्मिणीं चेदिपे प्रदाय हरिं जिगीषवः । भीष्मकेण कृष्णाय दातुं निश्चितां रुग्मिणीं चेदिपाय दापयित्वा तन्मानभङ्गेन जिगीषव इति भावः ॥ १४० ॥ निश्चयात् (चेदिपाय) दापयाम इति निश्चयात् ॥ १४१–७ ॥**

---

जरासुतेनाऽराध्यस्य ईशस्यापि वरणीयः ॥ १३७ ॥ अस्य जरासुतस्य सैनिका न केवलम् । स्वयं जरासुतश्च ॥१३८॥ पुप्लुवे द्रुतं ययौ । तदेव स्फुटमाह– क्षणेनेति । दुर्जनानर्दयित्वा ॥ १३९ ॥ रुग्मिणीं चेदिपे विधाय चेदिपाय प्रदाय हरिं मानभङ्गेन जिगीषवः । अथापि स हरत्येव रुग्मिणीमिति हरिपदेनाऽह । तेन तेषां मानं चायमेव हरति ॥१४०॥ विनिश्चयात् । रुग्मिणी शिशुपालायैव दातव्येति अचलं निर्धारं कृत्वा समस्तराजमण्डले पुत्राशयं प्रतिक्षेप्तुमक्षमेण भीष्मकेण सहिते रुग्मिणि च । शिशुपालाय रुग्मिणीं प्रसभं दातुमुद्यते । तेन भीष्मकोऽप्यन्तरमुदा बहिर्मुदेव प्रदातुमुद्यतः ॥१४१॥ कश्चिद् द्विजोत्तमं सन्देशवाहकमयातयत् । **'यत निकारोपस्करयोः'** इति धातुपाठं पठन्ति । गमने चेत्युपस्कर्तव्यम् ।

---

१. **'–संयुतम्'** २. **'तलेन'** ३. **'रुक्मिणीम्'**
४. **'प्रदाय'** इति वे.ती.पाठः स्यात् । ५. **'रुक्मिणि'** ६. **'–यापयत्'**

**निशम्य तद्वचो हरिः क्षणाद् विदर्भकानगात् ।**
**तमन्वयाद्धलायुधः समस्तयादवैः सह ॥ १४३ ॥**

**समस्तराजमण्डलं प्रयान्तमीक्ष्य केशवम् ।**
**सुयत्तमात्तकार्मुकं बभूव कन्यकावने ॥ १४४ ॥**

**पुरा प्रदानतः सुरेक्षणच्छलाद् बहिर्गताम् ।**
**रथे न्यवेशयद्धरिः प्रपश्यतां च भूभृताम् ॥ १४५ ॥**

**जरासुतादयो रुषा तमभ्ययुः शरोत्तमैः ।**
**विधाय तान् निरायुधान् जगाम केशवः शनैः ॥ १४६ ॥**

---

यद्वा यातेरेवेदं णिचि रूपान्तरम्–यापयति, यातयति चेति । **'बन्धूनामिच्छतां दातुं कृष्णाय भगिनीं नृप । रुग्मी निवार्य कृष्णद्विट् चैद्याय समकल्पयत् । तदवेत्यासितापाङ्गी वैदर्भी दुर्मना भृशम् । विचिन्त्याऽप्तं द्विजं कञ्चित् कृष्णाय प्राहिणोद् द्रुतम्'** [१०.५७.२३–४] इति भागवते ॥ १४२ ॥ तद् वचः, भैष्म्या सन्दिष्टम्, द्विजोत्तमेन निवेदितम् । तस्या भैष्म्या वच इति वा । तस्य द्विजोत्तमस्य वच इति वा । **'आनर्तादेकरात्रेण विदर्भानगमद्धयैः'** [१०.५८.६] इति च । **'श्रुत्वैतद् भगवान् रामो विपक्षीयनृपोद्यमान् । कृष्णं चैकं गतं हर्तुं कन्यां कलहशङ्कितः । बलेन महता सार्धं भ्रातृस्नेहपरिप्लुतः । त्वरितः कुण्डिनं प्रायाद् गजाश्वरथपत्तिभिः'** [५८.२०–१] इति च ॥ १४३ ॥ प्रत्यर्थिप्रमथनाय यान्तम् । प्रसह्य यान्तम् । ईक्ष्य ज्ञात्वा कन्यकाया अवनार्थम्, कन्यकाया वने उद्याने, यत्र देवमन्दिरम् । आत्तकार्मुकं बभूव । सुयत्तं कृष्णनिवारणे कृतभूरियत्नम् ॥ १४४ ॥ **'श्वोभाविनि विवाहे च रुग्मिणी निर्ययौ बहिः । चतुर्युजा रथेनैन्द्रे देवतायतने शुभे । इन्द्राणीमर्चयिष्यन्ती कृतकौतुकमङ्गला । दीप्यमानेन वपुषा बलेन महताऽऽवृता'** [वि.प.५९.३३–४] इति हरिवंशे । ननु भागवतेऽन्यथा पठ्यते भवानीमर्चयितुं जगामेति, पद्भ्यामेव जगामेति च– **'कन्या चान्तःपुरात् प्रागात् भटैर्गुप्ताऽम्बिकालयम् । पद्भ्यां विनिर्ययौ द्रष्टुं भवान्याः पादपङ्कजम्'** [१०.५८.४०] इति । तत् कथं न विरोधः? इत्थम्– आदौ भवानीमन्दिरं प्रति पद्भ्यामेव जगाम । तत उपकण्ठे विद्यमानं शचीमन्दिरं रथेन जगामेति न कोऽपि विरोधः । एतदपि भागवतादेवावगम्यते– **'मुनिव्रतमथ त्यक्त्वा निश्चक्रामाम्बिकागृहात् । उपकण्ठे सुरेशस्य पौलोम्याश्च निकेतनम्'** [५८.५१] इति । पद्भ्यां चरणमेवात्र मुनिव्रतम् । उभयसङ्ग्रहायैव निर्णयकृत् **'सुरेक्षणच्छलात्'** इत्याह । सुराणामीक्षणं सुरेक्षणम् । भवानीभवयोः शचीपुरन्दरयोश्चेक्षणमित्यर्थः । तत्रापि सुरोत्तमस्य मुकुन्दस्यैवेक्षणं सुरेक्षणम् । **'सा चानुध्यायती सम्यङ् मुकुन्दचरणाम्बुजम्'** [५८.४१] इति च । चक्षुरुन्मील्य प्रकाशं पश्यताम् । पश्यतोऽनादृत्य ॥ १४५ ॥ शरोत्तमैरभियुध्यमानाः पृष्ठतोऽनुययुः । केशवोऽपि तान् शरोत्तमैर्निरायुधान् विधाय शनैरसम्भ्रान्तो जगाम ॥ १४६ ॥

पुनर्ग्गृहीतकार्म्मुकान् हरिं प्रयातुमुद्यतान् ।
न्यवारयद्धलायुधो बलाद् बलोर्ज्जिताग्रणीः ॥ १४७ ॥

तदा सितः शिरोरुहो हरेर्हलायुधस्थितः[१] ।
प्रकाशमाविशद्[२] बलं विजेतुमत्र मागधम् ॥ १४८ ॥

स तस्य मागधो रणे गदानिपातचूर्ण्णितः[३] ।
पपात भूतळे[४] बलो विजित्य तं ययौ पुरीम् ॥ १४९ ॥

वरोरुवेषसंवृतोऽथ[५] चेदिराट् समभ्ययात् ।
तमाससार[६] सात्यकिर्न्नदन् मृगाधिपो यथा ॥ १५० ॥

चिरं प्रयुद्ध्य तावुभौ वरास्त्रशस्त्रवर्षिणौ ।
क्रुधा निरीक्ष्य तस्थतुः परस्परं स्फुरत्तनू ॥ १५१ ॥

समानभावमक्षमी शिनेः सुतात्मजः शरम् ।
अथोद्बबर्ह [७]तत्क्षणाद् बलान्मुमोच वक्षसि ॥ १५२ ॥

**हलायुधस्थितः । पूर्वमप्रकाशतया हलायुधस्थितः । बलं प्रकाशमाविशत् । प्रकाशो यथा भवति तथा प्राविशत् । आविर्बभूवेति भावः ॥ १४८–९ ॥ वरोरुवेषसम्भृतः । वरस्योरुवेषः । तेन सम्भृतः युक्तः ॥ १५०–५१ ॥ समानभावं साम्यम् ॥ १५२–६१ ॥**

---

बलेन य ऊर्जिता उद्रिक्तास्तेषामग्रणीः । परेषामनुत्थानहेतुश्चेष्टा ऊर्जा ॥ १४७ ॥ सन्निहितोऽपि पुनर्विशिष्याऽविशत् ॥ १४८ ॥ पपात भूतळे अबलः सन् । एवं बलरामो विजित्य तं ययौ ॥ १४९ ॥ वरः उरुवेषः । वरस्य चोरुवेषः परिणयोष्णीषादिः ॥ १५०–१ ॥ अक्षमी न क्षममाणः । शिनेः सुतात्मज इत्येकं वा पदम् । शिनेः सुतः सत्यकः । तदात्मजः । उद्बबर्ह निषङ्गान्निष्कासयामास । बृहू उद्यमने ॥ १५२–३ ॥

---

१. '–युधे स्थितः' २. '–मादिशद्–' ३. 'गदाप्रहारचूर्णितः' । 'गदाभिपातचूर्णितः' इति क्वचित् ।
४. 'भूतले' ५. '–वेषसंयुतोऽथ' । '–वेषसम्भृतो–' इति वे.ती. पाठ इति भाति ।
६. 'तमाससाद' ७. '–र्हतं शरं बला–' । 'तं बलान्मुमोच तस्य वक्षसि' इति क्वचित् ।

स तेन ताडितोऽपतद् विसञ्ज्ञको नृपात्मजः ।
विजित्य तं स सात्यकिर्य्ययौ प्रहृष्टमानसः ॥ १५३ ॥

अथापरे च यादवा विजित्य तद्बलं ययुः ।
पुरैव [1]रुग्मिपूर्वकाः प्रजग्मुरच्युतं प्रति ॥ १५४ ॥

सहैकलव्यपूर्वकैः समेत्य भीष्मकात्मजः ।
हरिं ववर्ष सायकैः स सिंहवन्न्यवर्त्तत ॥ १५५ ॥

अक्षोहिणीत्रयं[2] हरिस्तदा निहत्य सायकैः ।
अवाहनायुधं व्यधान्निषादपं शरैः क्षणात् ॥ १५६ ॥

शरं शरीरनाशकं समाददानमीश्वरम् ।
स एकलव्य आशु तं विहाय दुद्रुवे भयात् ॥ १५७ ॥

धनुर्भृतां वरे गते रणं विहाय भूभृतः ।
करूशराजपूर्वकाः क्षणात् प्रदुद्रुवुर्भयात् ॥ १५८ ॥

अथाऽससाद केशवं रुषा स भीष्मकात्मजः ।
शराम्बुधार आशु तं विवाहनं व्यधाद्धरिः ॥ १५९ ॥

---

तद्बलं शैशुपालम् । रुग्मिपूर्वाः कुनृपतयः । प्रधनापेक्षया जग्मुः ॥ १५४ ॥ एकलव्यः सपुत्रः रुग्मिणाऽऽहूतः स्वयंवरमाजगामेति पौराणं वचः । अत एकलव्यादिभिः दुष्टैः सह हरिं सङ्गराय सङ्गम्य एत्य सायकैर्ववर्ष । स हरिः पृष्ठतोऽनुगन्तुर्गोमायोः सिंह इव सूक्तं पाठं शिक्षयितुं तदभिमुखं न्यवर्तत । तदिदं सिंहावलोकनं नाम ॥ १५५ ॥ साय-यन्तीति सायकैः । षो अन्तकर्मणि । नखैरिव हरिः सिंहः । शिवानिकुरम्बमिवाक्षोहिणीत्रयम् । निहत्य, विनाश्य । अक्षोहिणीत्रयमिति पूर्ववच्छिथिलं पठनीयम् । तेन सेनाशैथिल्यं शब्दतोऽभिनीय दर्शयतीव । निषादपमेकलव्यम् । शॄ हिंसायाम् । शृणन्तीति शरैः केवलं जिहिंस, न मारयामास ॥ १५६ ॥ सः हरिं द्रावयामीति भ्रान्त्या अक्षोहिणीत्रयेण सहाऽगत एकलव्यः स्वयं मृत्युभयात् दुद्रुवे ॥ १५७ ॥ धनुर्भृतां वरे एकलव्ये । स दुद्रुवे । एते पुनः प्रदुद्रुवुः । स निहतसेनः स्वजीवरक्षार्थं दुद्रुवे । एते पुनः ससेनाः प्रदद्रुवुः ॥ १५८ ॥ शरा अम्बुधारा इव यस्मान्निस्सरन्ति स शराम्बुधारः भीष्मकात्मजश्च

---

१. **'रुक्मिपूर्वकाः'** २. **'अक्षौहिणीत्रयम्'**

**चकर्त्त कार्म्मुकं पुनः स खड्गचर्म्मभृद्धरेः ।**
**रथं समारुहच्छरैश्चकर्त्त खड्गमीश्वरः ॥ १६० ॥**

**शरैर्वितस्तिमात्रकैर्विधाय तं निरायुधम् ।**
**प्रियावचः प्रपालयन् जघान नैनमच्युतः[1] ॥ १६१ ॥**

**निबद्ध्य पञ्चचूळिनं[2] विधाय तं व्यसर्ज्जयत् ।**
**जगज्जनित्रयोरिदं विडम्बनं रमेशयोः ॥ १६२ ॥**

**सदैकमानसावपि स्वधर्म्मशासकौ नृणाम् ।**
**रमा हरिश्च तत्र तौ विजह्वतुर्हि रुग्मिणा[3] ॥ १६३ ॥**

**अथाऽससाद सौभराड् हरिं शराम्बुवर्षणः ।**
**हरिः शरं यमोपमं मुमोच तस्य वक्षसि ॥ १६४ ॥**

**पञ्चचूडिनं पञ्चशिखिनम् ॥ १६२–७ ॥**

---

हरिश्च ॥ १५९ ॥ तस्य कार्मुकं च चकर्त । विकार्मुकः स खड्गचर्मणी आदाय हरेः सञ्जिहीर्षया रथमारुरोह ॥ १६० ॥ वितस्तिः द्वादशाङ्गुलानि मात्रा परिमाणं येषां तैः शरैः । **'योगेश्वराप्रमेयात्मन् देवदेव जगत्पते । हन्तुं नार्हसि कल्याण भ्रातरं मे महाभुज'** [भाग.१०.५९.३५] इति प्रियावचः प्रीत्या पालयन् । नतु हन्तुमपारयन् । किन्तु प्रपारयन् । यतो न च्युताऽस्य शक्तिः कदाऽपि ॥ १६१ ॥ निबध्य निपात्य बध्वा । **'रुग्मिणं पतितं दृष्ट्वा व्यद्रवन्त नराधिपाः'** [वि.प.६०.२६] इति हरिवंशे । वाससा निपीड्य बध्वा । **'चैलेन बध्वा तमसाधुकारिणं सश्मश्रुकेशान् प्रवपन् व्यरूपयत्'** [भाग.१०.५९.३८] इति । व्यसर्जयत् विससर्ज । स्वार्थे णिच् । जनित्री च जनित्रश्च । जनितारं जनित्रं वदन्ति छान्दसाः । **'यत्रा त आहुः परमं जनित्रम्'** [ऋ.सं.१.१६३.४] इति हि श्रुतिः । यत्र त्रिषु लोकेषु व्याप्तमुरुक्रमं नारायणं **'तस्मादश्वा अजायन्त'** इति ते परमं जनकमाहुरित्यश्वः स्तूयते । जनयतीति जनित्रः । जनेरित्रः । तदेवं जनयिता, जनिता, जनित्वः, जनित्र इति चत्वारि जनकवचनानि । विडम्बनं लोकानुकारः । रमारमेशयोः ॥ १६२ ॥ नृणां यः स्वस्वविहितो धर्मः, यश्च स्वाभिमतो धर्मः ॥ १६३ ॥ यमोपमं यमदण्डोपमम् । अथच यममेव शररूपेणाऽगतमिव ॥ १६४ ॥

---

१. **'नैनमीश्वरः'** २. **'पञ्चचूडिनम्'** । वे.ती. पाठोऽपि तथेति भाति । ३. **'विजह्वतुश्च रुक्मिणा'**

शरेण तेन पीडितः पपात मन्दचेष्टितः ।
[1]चिरात्तसञ्ज्ञकोऽगमत् त्रिनेत्रतोषणेच्छया ॥ १६५ ॥

समस्तराजसन्निधावयादवां महीमहम्[2] ।
करिष्य इत्युदीर्य स व्यधात् तपोऽतिदुश्चरम् ॥ १६६ ॥

अथो विवेश केशवः पुरीं कुशस्थलीं विभुः[3] ।
प्रियायुतोऽब्जजादिभिः समीडितः सुरेश्वरैः ॥ १६७ ॥

पुरा ततो हलायुधः प्रियां निजां पुराऽपि हि ।
स वारुणीसमाह्वयामवाप रैवतीं विभुः[4] ॥ १६८ ॥

पतिं यथाऽनुरूपिणं तदीयमेव पूर्वकम् ।
पिता तदीय ऐच्छत प्रवेत्तुमब्जसम्भवात् ॥ १६९ ॥

स तत्सदो गतो वरात् तदीयतः प्रगीतिकाम् ।
निशम्य नाविदद् गतं युगोरुकालपर्य्ययम् ॥ १७० ॥

**ततः पुरा रुग्मिणीहरणात् (पूर्वम्), पुराऽपि वारुणीसमाह्वयां निजां प्रियाम्, अत्र जन्मनि नाम्ना रैवतीम् ॥ १६८ ॥ तदीयः पिता रेवतपुत्रः ककुद्मी ॥ १६९ ॥ तदीयतः वरात् तत्सदो गतः, ब्रह्मवराद् ब्रह्माणं प्राप्तः । युगोरुकालपर्ययः बहुयुगकालात्ययः ॥ १७० ॥**

---

अगमत् तपस्तप्तुम् । त्रिनेत्रं तोषयित्वा तद्वरबलेन हरिं निग्रहीष्यामीतीच्छया ॥ १६५ ॥ तदेव स्फुटमाह– समस्तराजसन्निधौ ॥ १६६ ॥ विभुरपि रूपविशेषेण विवेश ॥ १६७ ॥ पुरा मूलरूपेऽपि निजां भार्याम् । इन्द्रादिभिर्विशिष्टो भवतीति विभुः । न केवलम्, विर्विष्णुः शुक्लकेशात्मनाऽत्र भवतीति च विभुः । रेवतस्येयं पौत्री रैवती । रेवतपुत्रः ककद्मी । ककुद्मि-तनया रैवतीति । यथा युयुधानः शिनिपौत्र इति शैनेय उच्यते । तामेतां रैवतीं सतीमधुनातना रेवतीमप्याहुः । यद्वा रेवत-स्यायं रैवतः ककुद्मी । रैवतस्येयं रैवती । कथं रेवतः? राः सम्पदस्यास्तीति । मतुबर्थेऽतचि रेवत इति रूपम् । स्त्रियां रेवती ॥ १६८ ॥ पूर्वकं पूर्वजन्मस्वपि भूतम् । अनादिसिद्धं सहजं पतिम् । यथावत् प्रवेत्तुम् । अज्ञानात् पुरुषान्तरवरणाख्यप्रमादवारणाय । कन्यादानात् प्रथमं वेत्तुम् ॥ १६९ ॥ प्रकृष्टां मनुष्यलोकदुर्लभां गीतिकाम् । अत

---

१. 'चिरात् ससञ्ज्ञको–' २. 'महीमिमाम्' । ३. '–लीं प्रभुः' ४. 'रैवतीं प्रभुः'

**नरानयोग्यगीतिका विमोहयेत् ततो नृपः ।**
**[1]सुमूढबुद्धिरन्ततोऽल्पकाल इत्यमन्यत ॥ १७१ ॥**

**स मूर्च्छितः प्रबोधितोऽब्जजेन तं त्वपृच्छत ।**
**सुतापतिं बलं च सोऽब्रवीद् युगात्यये बहौ ॥ १७२ ॥**

**स रैवतो बलाय तां प्रदाय गन्धमादनम् ।**
**गतोऽत्र चीर्ण्णसत्तपा अवाप केशवान्तिकम् ॥ १७३ ॥**

**बलोऽपि तां पुरातनप्रमाणसम्मितां विभुः ।**
**हलेन चाऽज्ञया[2] समां चकार सत्यवाञ्छितः ॥ १७४ ॥**

**तया रतः सुतावुभौ शठोल्मुकाभिधावधात् ।**
**पुराऽर्यमांशकौ सुरावुदारचेष्टितो बलः ॥ १७५ ॥**

**अयोग्यगीतिका नराणां श्रोतुमयोग्यगानम् । अन्ततः उद्बोध(ना)न्ते ॥ १७१ ॥ सुतापतिं बहौ युगात्यये तमपृच्छत ॥ १७२ ॥ (रैवतः) रेवतपुत्रः ककुद्मी ॥ १७३ ॥ पुरातनप्रमाणसम्मितां पूर्वतनमनुष्य-प्रमाणसम्मिताम् । अत्युच्चामिति यावत् । समां परिमाणत आत्मसमाम् ॥ १७४–७ ॥**

---

एव युगानामुरुकालस्य परिवर्तं गतं नाविदत् ॥ १७० ॥ गीतिका सत्यलोकापेक्षयाऽल्पकालीना गीतिरपि । सुमूढ-बुद्धिः बहुकालं सर्वात्मना मोहग्रस्तबुद्धिः । अन्ततः गीतिकान्ते ॥ १७१ ॥ सेयं दैवी व्यवस्थेत्याह– अब्जजेन तदिच्छयैव पूर्वं मूर्छितः पश्चात् प्रबोधितः । तं अब्जजं त्वपृच्छत । पृच्छाऽपि तदिच्छानियतेति तुनाऽऽह । सुतापतिमपृच्छत । पृच्छा-फलं योग्यजामातृवरणं पूर्णमात्मगामीत्यात्मनेभाषा । स चाब्जजः बलरामं सुतापतिमब्रवीत् । बहौ युगात्यये । बहूनां युगानामत्यय इति यावत् ॥ १७२ ॥ रेवतस्य पुत्रो रैवतः ककुद्मी । सद् वैष्णवं तपः । अवगम्य आप ॥ १७३ ॥ हलेन आत्मसमां चकार । विभुत्वात् । तादृशमहिमशालित्वात् । आज्ञया चाऽत्मसमां चकार । सत्यवाञ्छितत्वात् । नहि सत्यसङ्कल्पानामिच्छा क्वापि विहन्येत । एतद् द्वयमपि विभुत्वात् विष्ण्वावेशादिति च । स्वाज्ञया, हरेराज्ञया च ॥ १७४ ॥ अधात् व्यधात् । जनयामासेत्यर्थः । पुरा बलरामसुतत्वेन जननात् पूर्वम् । मूलरूपापेक्षयेत्यर्थः । इदानीमप्यर्यमांशकावेव पुनर्बलसुतत्वेनापि जातौ । शठः अर्यमा । उल्मुकः अंशकः । द्वावेतावादित्यौ । **'वरुणोंऽशोऽर्यमा रविः'** इति स्मरणात् । शत्रुशातनाच्छठः । शाम्यतीति वा शठः । शमठतीति वा शठः । अठ गतौ । तमेनं शमठं

---

१. **'स मूढ–'**

२. **'चाऽत्मना'** इति, **'चाञ्जसा'** इति च क्वचित् ।

**जनार्द्दनश्च [1]रुग्मिणीकरं शुभे दिनेऽग्रहीत् ।**
**महोत्सवस्तदाऽभवत् कुशस्थलीनिवासिनाम्** ॥ १७६ ॥

**चतुर्म्मुखेशपूर्वकाः सुरा वियत्यवस्थिताः ।**
**प्रतुष्टुवुर्ज्जनार्द्दनं रमासमेतमव्ययम्** ॥ १७७ ॥

**मुनीन्द्रदेवगायनादयोऽपि[2] यादवैः सह ।**
**विचेरुरुत्तमोत्सवे रमारमेशयोगिनि** ॥ १७८ ॥

**रमारमेशयोगिनि, रमारमेश(योः) योगः पाणिग्रहणसमा(वेशः) अस्मिन्नस्तीति रमारमेशयोगी, तस्मिन्नुत्त-मोत्सवे ॥ १७८–८० ॥**

---

सन्तं शठमाचक्षत परोक्षप्रियाः । ननु लोके शठ इति निहीनेऽर्थे पठ्यते । सत्यं पठ्यते । स्वभावोऽयं लोकस्य यन्महार्थं पदं निहीनेऽर्थे प्रयुङ्क्ते । स्वभावोऽयं महतां यल्लोके निहीनार्थमपि महत्यर्थे प्रयुञ्जते । तद्यथा देवीं भगवतीमाहुः । देवं भगवन्तम् । ननु वेश्याऽपि भगवती भवेत् । योनिचकितोऽपि भगवान् भवेत् । न भवति महतां मतेन । लोकस्य भग इति रेतःपातकुण्डमात्रम् । महतां भग इति भाग्यम् । किं करणीयम्? भगभाग्यो हि लोकः । ज्वलतेरुकञि वर्णव्यत्यये च ज्वलतीति उल्मुक इति वैयाकरणाः । उरूनपि मूकयतीति वा । तमेनमुलुमूकं सन्तमुल्मुकमाचक्षत परोक्षप्रियाः । ननु बलानुजः शठः । विशठः पुत्रः । तथाहि हरिवंशे–**'पौरवी रोहिणी नाम बाह्लीकस्याऽत्मजाऽभवत् । ज्येष्ठा पत्नी महाराज दयिताऽऽनकदुन्दुभेः । लेभे ज्येष्ठं सुतं रामं सारणं शठमेव च'** [ह.वं.प.३५.५] इति, **'रामाच्च निशठो जज्ञे रैवत्यां दयितः सुतः'** [७] इति च । **'बलदेवोऽपि रैवत्यां विशठोल्मुकौ पुत्रावजनयत्'** [४.१५.२०] इति विष्णुपुराणे । निशठो वा स्याद् विशठो वा । न तावच्छठः । तस्य बलानुजत्वेन कथनात् । तत् कथं **'शठोल्मुकाभिधौ'** इति । अत्र ब्रूमः–बलानुजेषु प्रायः सर्वत्र शठ इति सम्पातायातम् । गद इति लिखितव्ये शठ इति लिलिखुः । अत एव वसुदेव-भार्याणां तनयानां च नामानि बहुत्र बहुधा पठ्यन्ते । प्रायो भागवतानुसारेणान्यत्रगः पाठः शोधितव्यो भवति । भाग-वते बलानुजो गदः पठ्यते, न शठः–**'बलं गदं सारणं च दुर्दमं विपुलं ध्रुवम्'** [९.२१.४७] इति । वक्ष्यति च– **'गदश्च नामतोऽनुजो हरेः स रोहिणीसुतः'** [२५१] इति । ग्रन्थान्तरेषु निशठ इति विशठ इति नामवैरूप्यादेव पाठान्तर-मासीदिति स्फुटम् । अयं सर्वानुगतः पाठः स्यात्–**'रामाच्चापि शठो जज्ञे'** इति हरिवंशपाठः । **'रैवत्यां च शठोल्मुकौ पुत्रावजनयत्'** इति विष्णुपुराणपाठः । तेन सर्वाविरोधः । तदेतत् सर्वं मनसि निधायाऽह निर्णयकारः **'शठोल्मुकाभिधा-वधात्'** इति । बहुग्रन्थसंवादात् निशठ इत्यपि नामान्तरं स्यात् । शठ इति नामैकदेशग्रहणं वा । शठस्य बलानुजत्ववारणं तथा प्रयोगबीजम् ॥ १७५ ॥ यो जननमर्दयति सोऽपि प्रद्युम्नं जनयितुं रुग्मिणीकरमग्रहीत् ॥ १७६ ॥ स्वलोकादवतीर्यावनताः स्थिताः । प्रकृष्टाभिर्वाग्भिः भक्तिपूर्वं तुष्टुवुः । भक्तिश्रद्धाभूयिष्ठतैव हि स्तुतौ प्रकर्षो नाम ॥ १७७ ॥ मुनीन्द्रो नारदः ।

---

१. **'रुक्मिणी–'**

२. **'–गायकादयोऽपि'**

सुरांशकाश्च ये नृपाः समाहुता महोत्सवे ।
सपाण्डवाः समाययुर्हरिं रमासमायुतम् ॥ १७९ ॥

समस्तलोकसुन्दरौ युतौ रमारमेश्वरौ ।
समीक्ष्य मोदमाययुः समस्तलोकसज्जनाः ॥ १८० ॥

तया रमन् जनार्दनो वियोगशून्यया सदा ।
अधत्त पुत्रमुत्तमं मनोभवं पुरातनम् ॥ १८१ ॥

चतुस्तनोर्हरेः प्रभोस्तृतीयरूपसंयुतः ।
ततस्तदाह्वयोऽभवत् स [१]रुग्मिणीसुतो बली ॥ १८२ ॥

पुरैव मृत्यवेऽवदत् तमेव शम्बरस्य ह[२] ।
प्रजातमब्जजा[३]ङ्गजस्तवान्तकोऽयमित्यपि ॥ १८३ ॥

**तया रमन् जनार्दनः पुरातनं मनोभवं पुत्रं तस्यां पुत्रमधत्त ॥ १८१ ॥ वासुदेवादिचतुस्तनोः तृतीयरूप-संयुतः प्रद्युम्नांशेन युक्तः ॥ १८२ ॥ अब्जजाङ्गजः प्रद्युम्नोत्पत्तेः पुरैव प्रद्युम्नं शम्बरस्य मृत्यवे मरणाय**

मुनीन्द्राश्च मरीच्यादयः । तुम्बुरुप्रमुखा हहाहहूमुखाश्च देवगायनाः । आदिपदेन गन्धर्वाप्सरसः । यादवैः सह बन्धव इव विचेरुः ॥ १७८ ॥ सुरांशकाश्च ईषत्सुरांशा अपि । अंशत एव येषु मूलशक्त्याविर्भावः । प्रीत्यर्थे च कन् । ये भगवत्प्रियाः सुरांशाः । सम्भाव्य सगौरवमाहूताः । अर्हणादिना हरिं सम्भावयितुं सन्तुष्टाः सम्भ्रमेण चाऽययुः । सदाऽपि युतः । अथापि सम्प्रति भूमावागत्य सर्वजनसमक्षमयुनगिति समायुतमित्याह ॥ १७९ ॥ समीक्ष्य । अपूर्वं भुवनभाग्यमीक्षित्वा ॥ १८० ॥ रमणमपि रमार्थमेव, न स्वार्थमित्याह– रमन्निति । देवानपि दुष्टनिग्रहाय भूमौ जनयित्वाऽर्दय-तीति जनार्दनः । **'रुग्मिण्यां वासुदेवस्य लक्ष्म्यां कामो धृतव्रतः । शम्बरान्तकरो जज्ञे प्रद्युम्नः कामदर्शनः । सनत्कुमार इति यः पुराणे परिगीयते'** [वि.प. १०४.२] इति हरिवंशे ॥ १८१ ॥ तदाह्वयः तस्य तृतीयरूपस्याऽह्वय एवाऽ-ह्वयोऽस्य प्रद्युम्न इति । 'ब कामने' इति धातोर्बकारः कामवचनः । जीवानां हृदि या कामना तस्यां लीनस्तां नियमयतीति च बली । तन्नियम्यः काम एव बलवान् । किमुत नियन्ता कामः ॥ १८२ ॥ ब्रह्माङ्गजः नारदः । शम्बरस्य, शम्बरं प्रति, अवदत् । कदा? पुरैव प्रद्युम्नजननात् पूर्वमेव । किमिति? तमेव जनिष्यमाणं प्रद्युम्नं शम्बरस्य मृत्यवे मृति-

१. **'रुक्मिणी–'** २. **'हि'** इति क्वचित् । ३. **'–जाङ्गज–'** इति वे.ती.पाठ भाति ।

**स मायया हरेः सुतं प्रगृह्य सूतिकागृहात् ।**
**अवाक्षिपन्महोदधावुपेक्षितोऽरिपाणिना ॥ १८४ ॥**

**तमग्रसज्जलेचरः स दाशहस्तमागतः ।**
**कुमारमस्य तूदरे निरीक्ष्य शम्बरे ददुः ॥ १८५ ॥**

**विपाट्य मत्स्यकोदरं स शम्बरः कुमारकम् ।**
**न्यवेदयन्मनोभवप्रियाकरे सुरूपिणम् ॥ १८६ ॥**

**भविष्यतीत्यवदत् । 'कृष्णपुत्रः प्रद्युम्ननामा भविष्यति, स त्वां हनिष्यति' इति शम्बरमवददिति भावः । प्रजातं तं प्रद्युम्नं 'तवान्तकः पूर्वं मयोक्तः तव मृत्युरयं श्रीकृष्णपुत्रो जातः' इत्यप्यवदत् ॥ १८३–४ ॥ शम्बरे ददुः दाशाः ॥ १८५–६ ॥**

---

निमित्तमवदत् । मृत्यवे जनिष्यमाणमवददिति वा । तं प्रजातं सन्तम्, तस्मिन् प्रजाते सति, 'तवान्तकोऽयं प्रजातः' इत्यप्यवदत् । हेति भगवन्नाटकानुगुणं भक्तनटनं स्वदते ॥ १८३ ॥ प्रगृह्य प्रसभं गृहीत्वा । उप समीप ईक्षितोऽप्युपेक्षितः भावित्वात् कार्यस्य । अरिपाणिना चक्रपाणिना । तदैव चक्रं प्रयुज्य निग्रहीतुं समर्थेनाप्युपेक्षितः । अपि च अरिः शत्रुरपि यस्य पाणौ । हस्तप्राप्यमप्यरिं स्वेच्छया विजहावित्यर्थः । **'तं सप्तरात्रे सम्पूर्णे निशीथे सूतिकागृहात् । जहार कृष्णस्य सुतं शिशुं वै कालशम्बरः'** [वि.प.१०४.३] इति च । अथ प्रघसेन शैलीभेदेन हरिवंशेऽनुक्तं कथांशं पुराणान्तरानुसारेणाऽह– अवाक्षिपदिति । **'हृत्वा चिक्षेप चैवैनं ग्रहोग्रे लवणार्णवे । कल्लोलजनितावर्ते सुघोरे मकरालये । पातितं तत्र चैवैको मत्स्यो जग्राह बालकम् । न ममार च तस्यापि जठराग्निप्रदीपितः'** [वि.पु.५.२७.४–५] इति वैष्णवे ॥ १८४ ॥ अविश्वसनीयमपि विश्वसनीयमापतितमिति तुनाऽऽह । दाशाः शम्बराय ददुः ॥ १८५॥ पूर्वं दाशैरर्धपाटितम्, मनुष्यशिशुमन्तर्दृष्ट्वा विस्मयात् पुनस्तथैव पिहितं मत्स्यकोदरं द्विधा विदारणेन समग्रं पाटयित्वा । भगवत्सुतग्रसनात् स दाशैर्गृहीतो मृतिमापेति तं कुत्सयामास मत्स्यकेति । अल्पं कुमारं शिशुकम् । मन्यत इति मनो भगवान् । तस्माद् भवतीति मनोभवः । कामिनां मनसि भवतीति च मनोभवः । मनोभवप्रिया रतिः । सम्प्रति मायावतीति नाम्ना शम्बरपत्नी भूत्वा स्थिता । **'तस्य मायावती नाम पत्नी सर्वगृहेश्वरी । कारयामास सूदानामाधिपत्यमनिन्दिता'** [७] इति च । **'अनपत्या तु तस्याऽसीद् भार्या रूपगुणान्विता । नाम्ना मायावती नाम मायेव शुभदर्शना । ददौ स वासुदेवस्य पुत्रं पुत्रमिवाऽत्मजम् । तस्या महिष्या मादिन्या दानवः कालचोदितः'** [वि.प.१०४.५–६] इति हरिवंशे । कालचोदितत्वात् स्वेनैव सागरे क्षिप्तोऽयं शिशुरिति न तस्य प्रत्यभादित्यर्थः । नापि च तमभ्यजानादिति ॥ १८६ ॥

अनङ्गतामुपागते पुरा हरेण साऽङ्गजे ।
वशं विरिञ्चिशापतो जगाम शम्बरस्य हि ॥ १८७ ॥

पुरा हि पञ्चभर्तृकां निशम्य कञ्जजोदिताम् ।
जहास पार्षतात्मजां शशाप तां ततस्त्वजः ॥ १८८ ॥

भवासुरेण दूषितेति सा ततो हि मायया ।
पिधाय तां निजां तनुं जगाम चान्ययाऽसुरम् ॥ १८९ ॥

गृहेऽपि साऽऽसुरे स्थिता निजस्वरूपतोऽसुरम् ।
न गच्छति स्म सा पतिं निजं समीक्ष्य[1] हर्षिता ॥ १९० ॥

रसायनैः कुमारकं व्यवर्द्धयद् रतिः पतिम् ।
स [2]पूर्णयौवनोऽभवच्चतुर्भिरेव वत्सरैः ॥ १९१ ॥

पतिं सुपूर्णयौवनं निरीक्ष्य तां विषज्जतीम्[3] ।
उवाच कार्ष्णिरम्ब ते कुचेष्टितं कथं न्विति[4] ॥ १९२ ॥

**असुरेण दूषिता भवेति विरिञ्चिशापतः ॥ १८७–८ ॥ (ततः) शापात् । अन्यया तन्वा ॥ १८९ ॥ आसुरे गृहे ॥ १९० ॥ कुमारकं कुमाररूपं पतिं समीक्ष्य, रसायनैः शरीरधातुपुष्टिकरैः आड्यादिभिः[5] व्यवर्धयत् ॥ १९१–२ ॥**

अङ्गे अन्तरङ्गे मनसि जायत इत्यङ्गजः । विशेषतः स्त्रीणां वराङ्गे जायते । यौवतस्याङ्गादङ्गात् सम्भवति वा । शम्बरस्य वशं जगाम हि । शं सुखमावृणोतीति शम्बरः ॥ १८७ ॥ किङ्कारणः शापः? आह– पुरा ॥ १८८ ॥ किमिति शशाप? आह– भवासुरेण दूषितेति ॥ १८९ ॥ समीक्ष्य अनङ्गमङ्गवन्तं सम्भूतमीक्षित्वा ॥ १९० ॥ धात्रीद्वारा व्यवर्धयत् । **'कथमस्य स्तनं दास्ये मातृभावेन जानती । भर्तुर्भार्या त्वहं भूत्वा वक्ष्ये वा पुत्र इत्युत । एवं सञ्चिन्त्य मनसा धात्र्यास्तं सा समर्पयत् । रसायनप्रयोगैश्च शीघ्रमेव व्यवर्धयत्'** [१०४.१२–१३] इति च ॥ १९१ ॥ सुरूपतया पूर्णयौवनम् । विषज्जतीमनुरक्ताम् ॥ १९२ ॥ तत् स्वस्य रतित्वम्, शापतोऽसुरगृहवासम्, अस्य पुनः प्रद्युम्नत्वम्, कृष्ण-

१. **'निरीक्ष्य'** इति क्वचित् । २. **'सुपूर्ण–'** ३. **'विलज्जतीम्'**
४. **'कथं त्विति'** ५. अस्फुटोऽर्थः ।

जगाद साऽखिलं पतौ तदस्य[१] जन्म चाऽगतिम् ।
ततोऽग्रहीत् स तां प्रियां रतिं रमापतेः सुतः ॥ १९३ ॥

ददौ च मन्त्रमुत्तमं समस्तमायिनाशकम् ।
भृगूत्थरामदैवतं रतिर्हरेः सुताय सा ॥ १९४ ॥

ततः स्वदारधर्षकं समाह्वयद् युधेऽङ्गजः ।
स शम्बरं स[२] चैत्य तं युयोध शक्तितो बली ॥ १९५ ॥

स चर्म्मखड्गधारिणं[३] वरास्त्रशस्त्रपादपैः ।
यदा न योद्धुमाशकद्धरेः सुतं न दृश्यते ॥ १९६ ॥

सहस्रमायमुल्बणं त्वदृश्यमम्बराद् गिरीन् ।
सृजन्तमेत्य विद्यया जघान कृष्णनन्दनः ॥ १९७ ॥

स विद्यया विनाशितोरुमाय आशु शम्बरः ।
निकृत्तकन्धरोऽपतद् वरासिनाऽमुना क्षणात् ॥ १९८ ॥

**तदखिलं स्वागमनादिकम्, अस्य जन्म आगतिं च उवाच[४] ॥ १९३–५ ॥ न दृश्यते, अदृश्योऽभूदिति भावः ॥ १९६–७ ॥ विद्यया मायां विनाश्य ॥ १९८–२०४ ॥**

---

जातत्वम्, मत्स्यकोदरद्वारा इहाऽगतिं चेत्यखिलम् । **'न त्वं मम सुतः कान्त नापि ते शम्बरः पिता ।....पुत्रस्त्वं वासुदेवस्य रुग्मिण्यानन्दवर्धनः । दिवसे सप्तमे बालो जातमात्रोऽपवाहितः'** [१०४.२४–५] इत्यादि च । **'भवान् नारायणसुतः शम्बरेणाऽहृतो गृहात् । अहं तेऽधिकृता पत्नी रतिः कामो भवान् प्रभो'** [१०.६८.१५] इति भागवते ॥ १९३–४ ॥ यो बलात् स्वापेक्षितं कारयति, अविचार्य तत्कर्तुरिष्टमनिष्टं वा, स धर्षक उच्यते । सः धर्षितदारोऽङ्गजः शम्बरं समाह्वयत् सन्नह्याऽह्वयत् । स च समाहूतो दारधर्षकः शम्बरश्च तमेत्य युयोध । स्वशक्त्या मन्त्रशक्त्या च, यथाशक्ति, वस्तुतः बली । अथापि शक्तितः प्रद्युम्नशक्त्यपेक्षया अबली अल्पबलः ॥ १९५ ॥ आ ईषदपि न योद्धुमशकद् यदा तदा न दृश्यते नादृश्यत ॥ १९६ ॥ उल्बणं तु । तुनाऽन्यैरशक्यहननोऽयं मायीत्याह । विद्यया रतिदत्तया ॥ १९७ ॥ बाणेन तं जघानेति हरिवंशे पठ्यते–**'स क्षिप्तो वृष्णिसिंहेन शरः क्रव्यादमोहनः । हृदयं शम्बरस्याथ भित्त्वा धरणिमागतः'**

---

१. **'तदाऽस्य'**
२. **'समेत्य'** इति कचित् ।
३. **'खड्गचर्म्मधारिणम्'** इति कचित् ।
४. **'उवाच साऽखिलं'** इत्यपि वे.ती.मूलपाठः स्यात् ।

**निहत्य तं हरेः सुतः तयैव[1] विद्ययाऽम्बरम् ।**
**समास्थितः स्वभार्य्यया[2] समं कुशस्थलीं ययौ ॥ १९९ ॥**

**समस्तवेदिनोर्म्मुनिर्न्नरान् विडम्बमानयोः ।**
**रमारमेशयोः सुतं जगाद तं स्म नारदः ॥ २०० ॥**

**स [3]रुग्मिणीजनार्द्दनादिभिः सरामयादवैः ।**
**पितामहेन चाऽदरात् [4]सुलाळितोऽवसत् सुखम् ॥ २०१ ॥**

**ततः पुरा स्यमन्तकं ह्यवाप सूर्य्यमण्डले ।**
**स्थिताद्धरेः स सत्रजित् सदाऽत्र केशवार्च्चकः ॥ २०२ ॥**

**सदाऽस्य विष्णुभाविनोऽप्यतीव लोभमान्तरम् ।**
**प्रकाशयन् रमापतिर्य्ययाच ईश्वरो मणिम् ॥ २०३ ॥**

---

[वि.प.१०७.२७] इति । असिनेति भागवते–**'निशातमसिमुद्यम्य सकिरीटं सत्कुण्डलम् । शम्बरस्य शिरः कायात् ताम्रश्मश्र्वोजसाऽहरत्'** [१०.६०.२७] इति । अतो निर्णयमाह– वरासिना निकृत्तकन्धर इति । का गतिस्तर्हि हरिवंशवचनस्य । प्रथमं शरेण विव्याध । शर एव धरणिमागतः । न शम्बरः । वैष्णवास्त्राभिमन्त्रितेन अत एव वरेणासिना शिरश्चकर्तेति न कोऽपि विरोधः । तदेतद् वरासिनेति वरपदेन सूचयामास ॥ १९८ ॥ **'विश्लिष्टार्थे च विश्लिष्टम्'** इति वचनात् **'सुतः तयैव'** इति विश्लिष्य पाठः । दैत्यसम्पर्कात् सर्वात्मना विश्लिष्टः ॥ १९९–२०० ॥ आदरात् वात्सल्यात् । अलभ्यलाभेन सुलाळितः ॥ २०१ ॥ ततः प्रद्युम्नजननात् पुरा । स्यम् अन्तकमपि अन्तयतीति स्यमन्तकः । षो अन्तकर्मणि । सत्रेण जिगाय भगवन्तमिति सत्रजित् । सत्राजिदित्यपि स एवार्थः । **'विश्वाष्टशरनेत्रधूमपद्मानां सञ्ज्ञायां दैर्घ्यम्'** इति पठनीयम् । **'विभाषा सत्रादीनाम्'** इति च । तेन विश्वामित्रः, अष्टावक्रः, शरावती, नेत्रावती, धूमावती, पद्मावतीति नियतरूपाणि । सत्रादीनां स्याद्वा नवा स्यात् । सत्रजित्, सत्राजित्, द्वारवती, द्वारावती, शतजित् शताजित्, सहस्रजित् सहस्राजित् इत्यादि । अत्र कुशस्थल्यां वर्तमानः सत्रजित् । अत्र सूर्यमण्डले केशवार्च्चकः ॥ २०२ ॥ लोकविलक्षणमिदं याचनमिति सूचयन् ययाच ईश्वर इत्यसंहिततया प्रयुयोज । ईश्वरः सन्नपि ययाचे, अपवादस्वीकारार्थं स्वेच्छया ययाच इति वा । **'अच्युतोऽपि तद् दिव्यं रत्नमुग्रसेनस्य भूपतेर्योग्यमेतदिति लिप्सां चक्रे । गोत्रभेदभयाच्छक्तोऽपि न जहार'** [४.१३.२७–८] इति वैष्णवे । तदेतदपि ईश्वरपदेनैव सूचितम् ॥ २०३ ॥

---

१.**'सुतस्तयैव'** २. **'स भार्यया'** ३. **'रुक्मिणी–'** ४. **'सुलालितोऽ–'**

**स तं न दत्तवांस्ततोऽनुजो निबद्ध्य तं मणिम् ।**
**वनं गतः प्रसेनको मृगाधिपेन पातितः[1]** ॥ २०४ ॥

**तदा स सत्रजिद्धरिं शशंस सोदरान्तकम् ।**
**उपांशु वर्त्मना ततो हरिः सयादवो ययौ** ॥ २०५ ॥

**वने स सिंहसूदितं पदैः प्रदर्श्य वृष्णिनाम् ।**
**प्रसेनमृक्षपातितं स सिंहमप्यदर्शयत्** ॥ २०६ ॥

**उपांशु शशंस । ततोऽनन्तरम् । वर्त्मना प्रसेनगतमार्गेण । तत्पदं दृष्ट्वेति भावः ॥ २०५ ॥ स वने पदैः सिंहप्रसेनपदैः प्रसेनं सिंहसूदितं वृष्णीनामदर्शयत् । सिंहप्रसेनपदानि दृष्ट्वा, सिंहमदृष्ट्वा, प्रसेनं हतं दृष्ट्वा तदन्यथाऽनुपपत्त्या प्रसेनं सिंहपातितमदर्शयदिति भावः । स प्रसेनं सिंहसूदितं प्रदर्श्य, पदैः ऋक्षसिंहपदैः सिंहमपि ऋक्षपातितमदर्शयत्[2] ॥ २०६ ॥**

---

सत्राजितोऽनुजः प्रसेनः । **'निघ्नस्य प्रसेनसत्राजितौ'** [वि.पु.४.१३.१०] इति पुराणे प्रथमपाठात् प्रसेनोऽग्रज इति भ्रमं वारयितुमेवमाह । अल्पाच्तरत्वादेव प्रथमपाठो नाभ्यर्हितत्वादिति । एतेन **'प्रसेनश्चाथ सत्राजित्–'** [ह.व.प.३८.१३] इति हरिवंशवचनमप्युक्तार्थम्–सत्राजिदथ प्रसेन इति । दुर्मरणेन मृत इति तस्य दौर्भाग्यं कुत्सयामास प्रसेनक इति । **'कदाचिन्मृगयां यातः प्रसेनस्तेन भूषितः । स्यमन्तककृते सिंहाद् वधं प्राप वनेचरात् । अथ सिंहं प्रधावन्तमृक्षराजो महाबलः । निहत्य मणिरत्नं तदादाय प्राविशद् गुहाम्'** [१४.२६–७] इति ब्राह्मे ॥ २०४ ॥ उपांशु रहसि शशंस । ततः रहस्यस्फोटार्थं यादवैः सहितो ययौ येन प्रसेनो गतः, ततः तेनैव वर्त्मना । **'अनागच्छति तस्मिन् कृष्णो मणिरत्नमभिलषितवान् न च प्राप्तवान् नूनमेतदस्य कर्मेत्यखिल एव यदुलोकः परस्परं कर्णाकर्ण्यकथयत् । विदितलोकापवादवृत्तान्तश्च भगवान् सर्वयदुसैन्यपरिवारपरिवृतः प्रसेनाश्वपदवीमनुससार'** [४.१३.३५–३८] इति वैष्णवे । प्रथमं रहसि शशंस । ततः कर्णाकर्णिकतया प्रसृतं रहस्यं पुस्फुट इत्यर्थः ॥ २०५ ॥ प्रसेनं सिंहसूदितं सिंहस्य रक्ताक्तपदचिह्नैः प्रथमं दर्शयित्वा, तत ऋक्षपातितं सिंहमप्यदर्शयत् । वृष्णिनामिति वृष्णीनाम् । अपवादे विश्वस्य कृष्णेऽपि संशयं चक्रुरिति तेषां विवेकलोपं दीर्घलोपेनाऽह । अथचायं पुरातनानामृषीणामाद्यानां सम्प्रदायो यदर्थविशेषध्वननाय इदन्तमिन्नन्तवत् पठन्ति, इन्नन्तं पुनरिदन्तवत् । तद् यथा चक्रपाणिं चक्रपाणिनमाहुः । नृकेसरिणं नृकेसरिमाहुः । एवं वृष्णीनामिति पठितव्ये वृष्णिनामिति पठन्ति । यतीनामिति पठितव्ये यतिनामिति । सारत्वात् सः । सर्वोत्तमोऽपि दोषदूरोऽपि अपवादमार्जनाय प्रयतमान इव सिंहमप्यदर्शयत् ॥ २०६ ॥

---

१. **'–पेन सूदितः ।'** २. आदर्शे **'–पदैः ऋक्षमपि सिंहपातितमदर्शयत्'** इति पठ्यते । स्फुटं लिपिकृत्प्रमादः ।

ततो निधाय तान् बिलं स जाम्बवत्परिग्रहम् ।
विवेश तत्र संयुगं बभूव तेन चेशितुः ॥ २०७ ॥

युयोध मन्दमेव [1]सः प्रभुः स्वभक्त इत्यजः ।
चकार चोग्रमन्ततः प्रकाशयन् स्वमस्य हि ॥ २०८ ॥

स मुष्टिपिष्टविग्रहो नितान्तमापदं गतः ।
जगाम [2]चेतसा रघूत्तमं निजं पतिं गतिम् ॥ २०९ ॥

स्मृतिं गते तु राघवे तदाकृतिं यदूत्तमे ।
समस्तभेदवर्ज्जितां समीक्ष्य सोऽयमित्यवेत्[3] ॥ २१० ॥

**तान् यादवान् निधाय बिलाद् बहिः । जाम्बवत्परिग्रहं जाम्बवदाश्रयम् ॥ २०७–९ ॥ तदाकृतिं रामाकृतिम् । समस्तभेदवर्जितां कृष्णेन गुणक्रियाकृत्यादिभिः समस्तभेदवर्जिताम् । यदूत्तमे दृष्ट्वा रामः अयं श्रीकृष्ण इत्यवैत् ॥ २१०–१२ ॥**

---

बिलद्वारे निधाय । जाम्बवता वासार्थं परिचित्य गृहीतम् । **'स्थापयित्वा बिलद्वारि यदून् लाङ्गलिना सह । शार्ङ्गधन्वा बिलस्थं तु जाम्बवन्तं ददर्श ह'** [ह.वं.प.३८.३८] इति हरिवंशे । न प्रथमं जाम्बवन्तं ददर्श । प्रथमं वाणीं शुश्राव– **'सिंहः प्रसेनमवधीत् सिंहो जाम्बवता हतः । सुकुमारक मा रोदीस्तव ह्येष स्यमन्तकः'** इति । तत एवं गानेन शिशुं लाळयन्तीं धात्रीं ददर्श । लाळ्यमानं कुमारं ददर्श । कुमारक्रीडनकीकृतं स्यमन्तकं च । **'तं च स्यमन्तकाभिलाषचक्षुषमपूर्वपुरुषमागतं समवेक्ष्य धात्री त्राहित्राहीति व्याजहार'** [वि.पु.४.१३.४४] । आर्तरवश्रवणेनामर्षितो जाम्बवानाजगाम । ततस्तत्र तेन चेशितुः संयुगं बभूवेति ॥ २०७ ॥ स्वरूपं प्रकाशयन् । **'युयुधे वासुदेवस्तु बिले जाम्बवता सह । बाहुभ्यामेव गोविन्दो दिवसानेकविंशतिम्'** [ब्र.पु.१४.३९] इति च । **'आसीत् तदष्टविंशाहम्–'** [भाग.१०.६०.२४] इति भागवते । दिवसानेकविंशतिं क्रीडन्निव मन्दं युयुधे । अन्ततः सप्तदिनानि किञ्चिदिवोग्रं युयुध इत्यविरोधः ॥ २०८ ॥ चेतसा गतिं शरणं जगाम । गतिं सर्वलोकस्य, स्वस्य च गतिं चेतसा जगाम चिन्तयामासेति वा ॥ २०९ ॥ अवेत् विवेद । विद ज्ञाने । **'अवश्यं भवताऽस्मत्स्वामिना रामेणेव नारायणस्य सकलजगत्परायणस्यांशेन भगवता भवितव्यमित्युक्तस्तस्मै भगवानखिलावनिभारावतरणार्थमवतरणमाचचक्षे'** [वि.पु.४.१३.५३] इति वैष्णवे ॥ २१० ॥

---

१. **'स प्रभुः'** । मूलादर्शे–**'सः प्रभुः'** इति पठ्यते । कारणमुक्तम् । २. **'चेतसाऽरणं रघूत्तमं निजं पतिम् ।'**

३. **'–मित्यवैत्'** । वे.ती.पाठोऽपि तथेति भाति । तत्पक्षे, अवेत्युपसर्गपूर्वात् **'इण् गतौ'** इति धातोर्लङ् ।

**ततः क्षमापयन् सुतां प्रदाय रोहिणीं शुभाम् ।**
**मणिं च तं नुनाव [1]सः प्रपन्न आशु पादयोः ॥ २११ ॥**

**विधाय चक्रदारितं सुजीर्णदेहमस्य सः ।**
**युवानमाशु केशवश्चकार वेदनां विना ॥ २१२ ॥**

**विधाय भक्तवाञ्छितं प्रियासहाय ईश्वरः ।**
**प्रगृह्य तं महामणिं विनिर्ययौ गुहामुखात् ॥ २१३ ॥**

**गुहाप्रविष्टमीश्वरं[2] बहून्यहान्यनिर्गतम् ।**
**प्रतीक्ष्य यादवास्तु ये [3]गता गृहं तदाऽहृषुः ॥ २१४ ॥**

**भक्तवाञ्छितम्, भक्तस्य जाम्बवतः वाञ्छितम्, जाम्बवती कृष्णाय दातव्येति वाञ्छितम् ॥२१३–५॥**

---

रोहिणीं जाम्बवतीम् । **'सुतां जाम्बवतश्चापि रोहिणीं कामरूपिणीम्'** [वि.प.६०.४१] इति हरिवंशे । ऋक्षस्य पुत्री नूनमृक्षमुखी भवितुमर्हति । तत् कथं कृष्णस्तामुदुवाहेति शङ्काऽप्यनेनापास्ता । **'कामरूपिणीम्'** इति विशेषणात् । तेन मनुष्यरूमिण्येव भगवता संससारेत्युक्तं भवति । नुनाव । णु स्तुतौ ॥ २११ ॥ विधाय चक्रदारितम् । **'ततः स जाम्बवन्तं तं हत्वा चक्रेण वै प्रभुः । कृतकर्मा महाबाहुः सकन्यं मणिमाहरत्'** [अ.पु.४५.१६] इत्याग्नेयवचनमनेन व्याचख्यौ । हत्वेति न प्राणहरणमुच्यते । किन्तु प्रहरणम् । यतस्तं न मारयामास, प्रत्युत चक्रेण हत्वा विदार्य युवानमाशु चकार । एतेन कृष्णावतारानन्तरमपि जाम्बवता करणीयं महद् देवकार्यमुर्वरितमिति सूचयति । अत्रेदमवधेयम्– का जाया जाम्बवतः, या जाम्बवतीमसोष्ट, सुकुमारकं च? का सा धात्री? कश्चायं कृष्णस्यालः सुकुमारकः? किं तेन भाविकार्यम्? सर्वमिदं देवगुह्यम् । न जाम्बवतो जन्मकार्यमवसितम् । रामसेवको बभूव । कृष्णश्वशुरो बभूव । पुनर्भाविनि युगान्तरे तस्य महत् कर्तव्यमुर्वरितमस्तीत्येतावदवगम्यते ॥ २१२–३ ॥ बहूनि दिनानि प्रतीक्ष्येति कति दिनानि? **'ते च यदुसैनिकास्तत्र सप्ताष्टदिनानि तन्निष्क्रान्तिमुदीक्षमाणास्तस्थुः'** [वि.पु.४.१३.४७] इति वैष्णवे । **'अदृष्ट्वा निर्गमं शौरेः प्रविष्टस्य बिलं जनाः । प्रतीक्ष्य द्वादशहानि दुःखितास्ते पुरं ययुः'** [१०.६०.३३] इति भागवते । सप्त वाऽष्टौ वा दिनानीत्यनिर्णयं वचः । न तत्र सङ्ख्याविशेषविवक्षा । बहूनि दिनानीतीयदेव विवक्षितम् । तदेतदाह– बहून्यहान्यनिर्गतमिति । द्वादशहानीति निर्णायकं वचः । निश्चितसङ्ख्याकथनात् । तदप्याह– बहून्यहानीति । ब+ह =३+८ =११ । एकादशहानि प्रतीक्ष्य द्वादशेऽहन्यपि तस्मिन् नागते पुरं ययुरित्यर्थः । ये विना कृष्णं निराशा गृहं गतास्ते तदा कृष्णे

---

१. 'स प्रसन्न–' २. 'गुहां प्रविष्ट–' ३. 'गतास्तदा तु जहृषुः'

**समस्तवृष्णिसन्निधौ यदूत्तमः स्यमन्तकम् ।**
**ददौ च सत्रजित्करे स विच्छविर्बभूव ह ॥ २१५ ॥**

**स दुर्य्यशो रमापतावनूच्य मित्थ्यया तपन् ।**
**स्वपापहानकाङ्क्षया[1] ददौ सुतां जनार्द्दने ॥ २१६ ॥**

**मणिं च तं प्रदाय तं ननाम ह[2] क्षमापयन् ।**
**मणिं पुनर्द्ददौ हरिर्म्मुमोद सत्यभामया ॥ २१७ ॥**

**रमैव सा हि भूरिति द्वितीयमूर्त्तिरुत्तमा ।**
**बभूव सत्रजित्सुता समस्तलोकसुन्दरी ॥ २१८ ॥**

**ततो हि सा च रुग्मिणी[3] प्रिये प्रियासु तेऽधिकम् ।**
**जनार्द्दनस्य ते हरेः सदाऽवियोगिनी यतः ॥ २१९ ॥**

**स दृष्ट(मणिः), मिथ्यया दुर्यशः अनूच्य तपन् पश्चात्तपन् ॥ २१६–८ ॥ ततः उभयोरपि रमावतारत्वात् । ननु रमावतारत्वेऽप्यधिकप्रियत्वं कुतः? सदाऽवियोगिनी यतः । रमेति शेषः ॥ २१९–२४ ॥**

---

प्रत्यागते अहृषुः जहृषुः । हृषेर्लुङि रूपम् ॥ २१४ ॥ अपराधप्रज्ञया विगतच्छविर्बभूव । अपराधमार्जनार्थं सत्यभामाऽस्मै देयेति भावनया विशिष्टच्छविश्च बभूव ह ॥ २१५ ॥ मिथ्ययेति विभक्तिप्रतिरूपकमव्ययमिति व्याख्यातारः । आबन्तं पदमप्यस्तीति भाति । मिथ्यावचनवाचित्वादद्रव्यवाचित्वं गतम् । अन्यत्र च भगवत्पादप्रयोगः– **'मिथ्यायाः साधकत्वं च न सिद्धम्'** इति । पुराणेषु च–**'तां मिथ्यामिव यो वक्ति स ज्ञेयः पापिनां वरः'** [क्रि.यो.सा.१.३०] इत्यादि पाद्मे । दुर्यश उच्य उक्त्वा अनुतपन् । अन्यैः कैश्चित् खलैरुक्ते विश्वस्य स्वयमप्यनूच्येति वा ॥ २१६ ॥ तं जाम्बवतः सकाशादानीतं मणिं च, चकारेण सत्यभामां च, प्रदाय, 'क्षमस्व अपराधम्' इति वदन् तं हरिं ननाम । हेति हरेर्लीलानाटकं स्मारंस्मारं विस्मयते । मणिं पुनर्द्ददौ सत्रजित एव ॥ २१७–८ ॥ ते अधिकम् । वस्तुत एकैव सेति अप्रगृह्य प्रयुयोज । अवियोगिन्याविति वक्तव्ये अवियोगिनीति च । छान्दसी चेयं प्रक्रिया यदीकारान्तं स्त्रीलिङ्गं द्विवचनेऽप्येकवचनवदेव पठ्यते पूर्वसवर्णतया । आचार्यैरपि बहुशस्तथा प्रयुक्तम् । **'पत्नी नृपानुगमनाय च पस्पृधाते'** [१४.५०] इति च पूर्वत्र । **'यतः कारणात् सा च रुग्मिणी चेत्युभे अपि मूलरूपे अवियोगिनी रमैव ततः ते अधिकं प्रिये'**

---

१. **'–हानिकाङ्क्षया'** २. **'ननाम च क्षमा–'** ३. **'रुक्मिणी'**

**अथाऽप[1] साम्बनामकं सुतं च रोहिणी हरेः ।**
**चतुर्म्मुखांशसंयुतं कुमारमेव षण्मुखम् ॥ २२० ॥**

**इति प्रशासति प्रभौ जगज्जनार्द्दनेऽखिलम् ।**
**अगण्यसद्गुणार्ण्णवे[2] कदाचिदाययौ द्विजः ॥ २२१ ॥**

**जनार्द्दनः स नामतो रमेशपादसंश्रयः ।**
**स मानितश्च[3] विष्णुना प्रणम्य वाक्यमब्रवीत् ॥ २२२ ॥**

**क्षमस्व मे वचः प्रभो ब्रवीम्यतीव पापकम्[4] ।**
**यतः सुपापदूतकस्ततो हि तादृशं वचः ॥ २२३ ॥**

**न तेऽस्त्यगोचरं क्वचित् तथाऽपि चाऽज्ञया वदे ।**
**वदेति चोदितोऽमुना द्विजो जगाद माधवम् ॥ २२४ ॥**

---

इति गमनिकान्तरं च प्राचीनटीकायाम् ॥ २१९ ॥ साम्बनामकम् । अम्ब्यते काम्यत इत्यम्बं सौन्दर्यम् । तेन सहितः साम्बः । अकारवाच्यं भगवन्तं वृणोतीति अम्बश्चतुर्मुखः । तेनाऽविष्टः साम्बः । अं आकाशं वृणोतीत्यम्बो हेरम्बः । अम्बेन भ्रात्रा अम्बया पार्वत्या युतो मूलरूप इति वा साम्बः । स्यतीति साम्ब इति वैयाकरणाः । **'स्यतेर्बप्रत्ययः, नुम् च । साम्बो जाम्बवतेयः'** [स.कं.२.२.२२२] इति हृदयहारिण्यां दण्डनाथनारायणः । रोहिणी जाम्बवती । सनत्कुमारं व्यावर्तयितुं षण्मुखमित्याह । यद्यपि सनत्कुमार एव षण्मुखः । स एव कामः । अथापि, तस्य रूपत्रयेषु षण्मुखांशेन साम्बो बभूव । कामांशेन प्रद्युम्नः । **'हृतो यदैव प्रद्युम्नः शम्बरेणाऽत्मघातिना । मासेऽस्मिन्नेव साम्बस्तु जाम्बवत्यामजायत । बाल्यात् प्रभृति रामेण शस्त्रेषु विनियोजितः । रामादनन्तरश्चैव मानितः सर्ववृष्णिभिः'** [वि.प.११०.१–२] इति हरिवंशे ॥२२०॥ द्विज इति । ब्रह्मदत्तः साल्वः शिवभक्त आस । तस्य मित्रसहो नाम कश्चिद् वैष्णवो विप्रः सखा बभूव । साल्वः शैवं तपः कृत्वा स्वभार्ययोर्द्वौ तनयावाप हंसो डिभक इति । तन्मित्रं मित्रसहो वैष्णवेन तपसा पुत्रमाप जनार्दनं नाम । त्रयश्च कुमाराः सवयसः । तेन हंसडिभकयोर्महेश्वरयोरयं जनार्दनो द्विजो वैष्णवः सखा बभूवेति कथा हरिवंशे । अतस्तौ हंसडिभकौ जनार्दनं दूतत्वेन प्रजिघ्यतुः । स च रमेशपादसंश्रय इति सम्भ्रमादराभ्यां कृष्णं द्रष्टुमाययौ । विष्णुना कृष्णरूपेण मानितश्च । **'अहमेव सदा धन्यो मत्तो ह्यभ्यधिको नहि । यतो द्रक्ष्याम्यहं विष्णुं वसन्तं द्वारकापुरे'** [भ.प.११९.५] इति विप्रवचनं हरिवंशे ॥ २२१–२ ॥ मनसाऽप्यचिन्त्यं पापं पापकम् । कुत्सितो दूतो दूतकः ॥ २२३ ॥ यस्य सुपापस्य दूतोऽहं तदाज्ञया वदे । भगवदाज्ञया च । यदि

---

१. **'अवाप'** २. **'समस्तसद्गुणार्णवे'** इति क्वचित् । ३. **'सुमानितश्च'** इति क्वचित् । ४. **'पातकम्'**

**सुतौ हि साल्वभूपतेर्बभूवतुः शिवाश्रयौ ।**
**शिवप्रसादसम्भवौ पितुस्तपोबलेन तौ ॥ २२५ ॥**

**अजेयवद्धचतां च तौ[1] शिवाद् वरं समापतुः ।**
**जरासुतस्य शिष्यकौ तपोबलेन केवलम् ॥ २२६ ॥**

**महोदरं च कुण्डधारिणं च भूतकावुभौ ।**
**तथाऽजितावबद्धयकौ दिदेश शङ्करस्तयोः ॥ २२७ ॥**

**कस्य दूतः किं तद्वच इत्यत आद्यस्योत्तरमाह– सुतावित्यादिना ॥ २२५ ॥ तपोबलेन अजेयवध्यतां जेयत्वाभावं वध्यत्वाभावं च वरं समापतुः । केवलं जरासुत(स्य) शिष्यकौ ॥ २२६–७ ॥**

---

भवानाज्ञापयति तदा वदे । वक्तुं प्रयते, उत्सहे वा । यत्नार्थे वदेरात्मनेभाषा–**'भासनोपसम्भाषाज्ञानयत्नविमत्युपमन्त्रणेषु वदः'** [अ.सू.१.३.४७] इति । अत एव 'वद' इति भगवता चोदितः सन् जगाद । साल्वराजस्य आज्ञया च, कृष्णेन वदेति उदितश्च जगादेति वा ॥ २२४ ॥ तौ हंसडिभकाविति प्रसिद्धौ अम्बाकमितुर्ब्रह्मदत्तस्य सुतौ साल्वस्य सौभपतेः कनीयांसौ भ्रातरौ, योऽयादवीं महीं कर्तुं शिवस्य तपस्तप्तुं वनं गतः, यश्च ब्रह्मदत्तस्य प्रथमभार्यायां जातः । एवं तस्यासन्निधानेऽनुजयोरिदं साहसम् ॥ २२५ ॥ अजेयतामवध्यतां च । **'नामभ्यां हंसडिभकावशस्त्रनिधनावुभौ'** [स.प.१४.३९] इति भारते । **'देवासुरचमूमुख्यैर्यक्षगन्धर्वदानवैः । आवामजय्यौ सर्वात्मन्नेष नौ प्रथमो वरः । द्वितीयो नौ विरूपाक्ष रौद्रास्त्राणां च सङ्ग्रहः'** [भ.प.१०५.१२] इति हरिवंशे । केवलं तपोबलेन वरं समापतुः । नतु स्वरूपयोग्यताबलेन । केवलं जरासुतस्य परमशैवस्य शिष्यकौ । स्वयं कुत्सितावपि महाशैवम्मन्यौ ॥२२६॥ महोदर इत्याद्यूनो लम्बोदरः । उदरे कुण्डमिव नाभिरस्येति कुण्डधारी । भूतकौ क्षुद्रभूतौ । यथा हंसडिभकौ तथा तौ भूतकावपि वरात् अजितौ देवयोनित्वात् स्वतोऽवध्यकौ च । तयोरवध्यत्वमपि वृथा पापवृद्धयर्थमेवेति कुत्सयामास–अवध्यकाविति । तौ तयोः हंसडिभकयोः सहायत्वेन शङ्करो ददौ । अयमिह हरिवंशपाठः–**'सहायौ द्वौ महादेव भूतौ युद्धे हि गच्छताम् । एवमस्त्विति देवेश आह भृङ्गिरिटी हरः । कुण्डोदरं विरूपाक्षं सर्वप्राणिहिते रतम् । युवामथ च भूतेशौ सहायौ सततं रणे'** [भ.प.१०५.१५–६] इति । अत्र पाठदोषः स्फुटः । अनन्वयादर्थास्वारस्याच्च । अयमत्र निर्णयकारसम्मतः सम्भावितः पाठः–**'एवमस्त्विति देवेशः प्राह लम्बोदरं हरः । कुण्डधारं विरूपाक्षः सर्वप्राणिहिते रतः'** इति । तत्र लम्बोदर इति विनायक उच्यत इति भ्रमो मा भूदिति 'महोदरम्' इति विववार ग्रन्थकारः । **'अथ भूतौ महाघोरौ लम्बोदरशरीरिणौ'** [भ.प.१२७.२१] इति चोपरि ॥ २२७ ॥

---

१. 'अजेयतामवध्यतां शिवाद्–'

तयोः सहाय एव तौ वराच्छिवस्य भूतकौ ।
अजेयतामवापतुर्न्नचान्यथाऽमरावपि ॥ २२८ ॥

अजेयतामवद्ध्यतामवाप्य तावुभौ शिवात् ।
पितुस्तु[1] राजसूयितां समिच्छतो मदोद्धतौ ॥ २२९ ॥

जरासुतो गुरुत्वतो विरोद्धुमत्र नेच्छति ।
नृपांस्तु देवपक्षिणो विजित्य कर्तुमिच्छतः ॥ २३० ॥

स्वयं हि[2] राजसूयितां जरासुतो न मन्यते ।
यतो हि वैष्णवं क्रतुं तमाहुरीश वैदिकाः ॥ २३१ ॥

इमौ पितुर्य्यशोऽर्थिनौ पराभवाय ते तथा ।
समिच्छतोऽद्य तं क्रतुं[3] भवन्तमूचतुश्च तौ ॥ २३२ ॥

समुद्रसंश्रयो भवान् बहून् प्रगृह्य लावणान् ।
सुभारकानुपैहि नाविति क्षमस्व मे वचः ॥ २३३ ॥

**अमरावपि देवयोनित्वान्मरणरहितावपि । तयोः सहाय एवाजेयतामवापतुः । अन्यथा तयोः सहायत्वाभावे, न अजेयत्ववरो न ॥ २२८–३२ ॥ द्वितीयस्योत्तरमाह– समुद्रेति ॥ २३३ ॥**

---

अमरौ देवयोनिजातौ, अत एव अमराववध्यावपि । अजेयता तु तयोः सहायकर्मण्येव नान्यथा ॥ २२८ ॥ तावुभौ हंसडिभकौ । शिवाद् वरमवाप्य मदोद्धतौ । पितुस्तु । यौवन एव भीष्मविजितस्य, जरासन्धादवरबलस्य स्वप्नेऽपि न राजसूययोग्यतेति तुनाऽऽह । अथापि समिच्छतः, अशक्यं सम्पादयितुमिच्छत इति तयोर्मौर्ख्यमपहसतीव ॥२२९॥ राजसूयं कर्तुम् ॥२३०–१॥ तं क्रतुं सम्पादयितुमिच्छतः । तथा तव पराभवाय समरमिच्छतः । अतो भवन्तमूचतुः । पुत्रप्रोत्साहेन तं क्रतुं समिच्छतः पितुर्वा यशोऽर्थिनौ ॥ २३२ ॥ संश्रयो दुर्गाश्रयः । अथच शत्रुभिर्भीतः स्वात्मसंरक्षणाय समुद्रं शिश्रिय इति परिहासः । वस्तुतस्तु क्षीरसमुद्रसंश्रयः किलेति च । उपायनत्वेन गृहीत्वा । भवानुपैहि । अगौरवसूचनाय मध्यमपुरुषप्रयोगो भवति भवच्छब्दयोगेऽपि । यत्र उपचारव्याजेन त्वङ्कारो ध्वन्यते । तद् यथा– **‘को भवानिह सम्प्राप्तो विपिने गिरिगह्वरे । पद्भ्यां पद्मपलाशाभ्यां विचरस्युरुकण्टके’** [१०.५४.२८] इति भागवते । सुभार-

---

१. **‘पितुश्च राज–’** २. **‘स्वयं च राज–’** ३. **‘समिच्छतोऽच्युत क्रतुम्’**

**इतीर्य[१] तं ननाम सः प्र चाहसन्[२] स्म यादवाः ।**
**हरिस्तु सात्यकिं वचो जगाद मेघनिस्वनः ॥ २३४ ॥**

**प्रयाहि सात्यके वचो ब्रवीहि मे नृपाधमौ ।**
**समेत्य वां वरायुधैः करं [३]ददान्यसंशयम् ॥ २३५ ॥**

**यादवाश्च प्राहसन् स्म ॥ २३४–६ ॥**

---

कान् । 'ಹೊಂಠ ಕಾಣಿಕೆ' इति भाषायाम् । समुद्रमध्यगतः किमन्यद् यच्छेरिति कुत्सयत इव सुभारकानिति । **'लवणानि बहून्यद्य गृह्य केशव मा चिरम् । आगच्छ त्वरितं कृष्ण न ते कार्यं विलम्बनम्'** [भ.प.११३.२३] इति च । नावितीति सन्देशवचनं समाप्य द्विजः स्वयमाह– क्षमस्व मदुक्तं दुष्टं सन्देशवच इति ॥ २३३ ॥ प्रकटमुच्चैरपाहसन् । **'करदः कृष्ण इत्येवं ब्रुवन्तः सर्वसात्वताः । हासं मुमुचुरत्यर्थं तालं दत्वा परस्परम्'** [भ.प.११५.३७] इति च ॥ २३४ ॥ ब्रवीहि ब्रूहि । नन्वर्थं वदसि ब्रवीहीत्यस्य ब्रूहीत्यर्थ इति । कस्त्वामर्थं पप्रच्छ? वयं तु शब्दरूपं पृच्छामः–कथं ब्रूहीत्यर्थे ब्रवीहीति रूपमिति । ननु भोः, भगवानाचार्यः किल **'नवव्याकरणार्थवेत्ता'** [उ.कां.३६.४८] यथा वाल्मीकिर्बभाण । तेन स नवव्याकरणानि वेद । व्याकरणानां च नवमर्थं वेद । स भवान् केवलं नवं व्याकरणं विवेद । कथञ्चिदेकमर्थम् । अहो भवानपि नवव्याकरणार्थवेत्ता । अथापि पृच्छति कथं ब्रवीहीति रूपमिति । तर्हि भवन्तमपि पिपृच्छिषामः– कथमथ भगवान् बादरायणः प्रायुङ्क्त–**'अथ यो विजिगीषेत क्षत्रियः क्षत्रियं युधि । कस्तस्य विजये धर्मो ह्येतं पृष्टो ब्रवीहि मे'** [शां.प.९५.१] इति । प्राचेतसः कविवृषा वाल्मीकिरपि–**'तस्यैवं भाषितं श्रुत्वा राघवः परमार्तवत् । उवाच सुहृदः सर्वान् कथमेतद् ब्रवीथ माम्'** [उ.कां.४३.२१] इति । तत्र यत् तत्रभवतः समाधानं तदेवास्माकमिह समाधानं भवति । नहि वैयाकरणाः सूत्रं प्रणिन्युरिति विदितवेद्या अनवद्या आद्या महान्त ऋषयः प्रयुञ्जते । किन्तु महान्तः प्रायुक्षतेति अन्वेषमन्वेषं वैयाकरणाः सूत्रं प्रणयन्ति । सर्वत्रापि छान्दसानां प्रयोगेष्वेवं व्यवस्था । अनल्पप्रज्ञाः प्रायुक्षतेति मा स्वल्पज्ञा अपि प्रयुक्षतेति नियमनाय न पाणिन्यादयः सूत्रयामासुः । अथापि **'बहुलं छन्दसि'** इति बहुधा स्मरति पाणिनिः । **'यत्रोक्तं तत्र न भवति । अन्यत्रापि भवति'** इति किल सूत्रार्थः । अथच सर्वेषामेतादृशां प्रयोगाणामेकयोक्त्या सङ्ग्रहायाऽह पाणिनिः–**'पृषोदरादीनि यथोपदिष्टम्'** [अ.सू.६.३.१०९] इति । **'यानियानि यथोपदिष्टानि शिष्टैरुच्चारितानि प्रयुक्तानि तानि तथैवानुगन्तव्यानि'** इति वामनः । नह्यत्राऽदिपदेन सुबन्तान्येव ग्राह्याणीत्याग्रहीतव्यम् । तिङन्तस्यापि ग्रहणेन सर्वसङ्ग्रहे महान् लाभ इति तत्त्यागे कारणाभावात् । पतञ्जलिरप्याह–**'पृषोदरादीनीत्युच्यते । कानि पृषोदरादीनि? पृषोदरप्रकाराणि । कानि पुनः पृषोदरप्रकाराणि । येषु लोपागमवर्णविकाराः श्रूयन्ते नचोच्यन्ते । अथ यथेति किमिदम्? प्रकारवचने थाल् । अथ किमिदमुपदिष्टानीति? उच्चारितानि । कुत एतत्? दिशिरुच्चारणक्रियः । उच्चार्य ह वर्णानाह उपदिष्टा इमे वर्णा इति । कैः पुनरुपदिष्टाः? शिष्टैः'** इत्यादि । समेत्य संयुगे सङ्गत्य ॥ २३५ ॥

---

१. **'उदीर्य'** २. **'स प्र चाहसन्'** । **'ननाम सोऽप्यपाहसन्'** इति क्वचित् । ३. **'ददाम्यसं–'**

उपैतमाशु[1] संयुगार्त्थिनौ च पुष्करं प्रति ।
इतीरितः शिनेः सुतो जगाम विप्रसंयुतः ॥ २३६ ॥

उपेत्य तौ हरेर्वचो जगाद सात्यकिर्बली ।
विधाय तौ तृणोपमौ गिरा जगाम केशवम् ॥ २३७ ॥

ततः पुरैव तावुभौ द्विजं हरस्वरूपिणम् ।
सुदुःखवासनामकं प्रचक्रतुस्तृणोपमम् ॥ २३८ ॥

**गिरा तौ तृणोपमौ विधाय ॥ २३७ ॥ सुदुःखवासनामकम् । दुर्वासा दुःखवासनामकः । दुर्दुःखपर्यायत्वात् । 'दुरशोभनदुःखयोः' इत्यभिधानम् ॥ २३८ ॥**

---

पुष्कराख्यं क्षेत्रम् । **'तोताद्रिः पुष्करं चैव नरनारायणाश्रमम्'** इति स्वयं व्यक्तो भगवानत्रेति पुष्टिकरत्वात् पुष्करम् । वैयाकरणास्तु पुष्करमिति करन्प्रत्ययान्तं पदमाहुः । अत्र शिनेः सुत इति सात्यकिः । **'प्रयाहि सात्यके'** इति पूर्वश्लोके, **'जगाद सात्यकिर्बली'** इत्युत्तरश्लोके च तस्यैव प्रस्तावात् । स्यादयमर्थः पूर्वोत्तराविरोधाय । तथाऽपि कथमयमर्थः पदेन लभ्यते । कथं सत्यकस्य सुतः शिनेः सुतः स्यात् । यं मातापितरौ सुतः स हि सुतो भवति । सत्यमाह भवान् । अथापि किञ्चिद् वक्तव्योऽसि । भवन्तमेव तावत् पृच्छामः– माता किल सूते, न पिता । तत् कथं पितुः सुत इति? अथ ब्रुवीथाः– माता साक्षात् सूते । मातरमन्तरं कृत्वा पिताऽपि सूत इति । तर्हि समं समाधानं भवति भवतश्च मम च– पितरमन्तरं कृत्वा पितामहोऽपि सूते । किमुक्तं भवति? इदमुक्तं भवति– सुतशब्दोऽत्र गोत्रापत्यवचनः, न साक्षादपत्यवचन इति । पौत्रेऽपि पुत्रनिर्विशेषां प्रीतिं प्रत्याययितुं क्वचित् पौत्रमपि पुत्रमाचक्षत इति । ननु **'सुतात्मजं शिनेः'** [२६५] इत्युपरि यथा तथाऽत्रापि महता कण्ठेन **'शिनेः सुतात्मजः'** इति किमिति नावोचद् भगवान्? अस्ति कारणान्तरम् । एवं प्रयोगेण भारतगतस्य वचनान्तरस्यार्थोऽपि शक्यं निर्णेतुमिति । तथाहि भारते श्रूयते–**'अपातयच्च समरे सौमदत्तिः शिनेः सुतम् । पश्यतां सर्वसैन्यानां पदा चैनमताडयत्'** [द्रो.प.१४४.१९] इति । सौमदत्तिर्भूरिश्रवाः शिनेः सुतं सात्यकिमपातयदिति किल भारतवचनार्थः । तत्रापि सुत इति गोत्रापत्यस्य ग्रहणमिति सूचयितुमेव स्वयमेवं प्रयुयोज । एतेनान्येऽप्येतादृशाः प्रयोगा गदिताभिप्रायाः । तद्यथा वंशानुक्रमे– भरतस्य भुमन्युः सुत इति भारते पठ्यते–**'भरतः खलु सार्वसेनीमुपयेमे सुनन्दां नाम । तस्यामस्य जज्ञे भुमन्युः'** इति । भरतस्य वितथः सुत इति हरिवंशे । वितथस्य [भु]मन्युः सुत इति भागवते गारुडे विष्णुपुराणे च । तेन भरतस्य भुमन्युः सुत इति भारतवचनं गोत्रापत्यपरतया व्याख्येयमिति स्फुटम् । बहव एतादृशाः प्रयोगविशेषाः पुराणेषु भवन्ति । तत्र सर्वत्राप्येवमेव न्यायोऽनुसरणीय इति प्रतनां पुराणशैलीं परिचाययन्नेवमाह भगवत्पादः–शिनेः सुतः सात्यकिरिति ॥ २३६–७ ॥ महता दुःखेन वास्यत इति सुदुःखवासो दुर्वासाः । अवमान्य तृणोपमं प्रकाशं सर्वजनसमक्षं चक्रतुः ॥ २३८ ॥

---

१. **'उपेतमाशु'** इति क्वचित् ।

**दशत्रिकैः शतैर्वृतो यतीश्वरैः स सर्ववित् ।**
**विपाटितात्मकौपिनादिसर्वमात्रकोऽभवत्** ॥ २३९ ॥

**वरात् स्वसम्भवादसौ न शापशक्तिमानभूत् ।**
**ततः समस्तभञ्जनोरुशक्तिमाप केशवम्** ॥ २४० ॥

**स तान् समर्च्य[1] माधवः प्रदाय चोरुमात्रकाः ।**
**ययौ च तैः समन्वितो वधाय साल्वपुत्रयोः** ॥ २४१ ॥

**तमत्रिजं हरात्मकं यतो हि वेद मागधः ।**
**ततोऽत्यजत् स्वशिष्यकौ निशम्य तत्प्रतीपकौ** ॥ २४२ ॥

**दशत्रिकैः शतैः त्रिसहस्रैः ॥ २३९ ॥ ततः स्वयमसर्थत्वात् ॥ २४०–२ ॥**

---

दशानां त्रिकं यत्र तैः त्रिंशद्भिः शतैः । त्रिसहस्रैर्यतीश्वरैः । हरिवंशे पञ्चसहस्राणीति सम्प्रति पठ्यते–**'छिन्नं ताभ्यां समादाय शिक्यं दारुमयं तथा । द्विदलं कर्पटं चैव कौपीनमथ वल्कलम् । कमण्डलुं तदा राजन्नर्धप्रोतकपालकम् । एतानन्यान् समादाय द्रष्टुं केशवमाययुः । पञ्च चैव सहस्राणि पुरस्कृत्य महामुनिम् । दुर्वाससं तपोयोनिमीश्वरस्याऽत्मसम्भवम्'** [भ.प.११०.१२–४] इत्यादि । निर्णयरीत्या **'त्रीणि चैव सहस्राणि'** इति साधुः पाठः । गिरीशो गिरिशो भवति । अङ्कूरोऽङ्कुरो भवति । इन्दीवरमिन्दिवरं भवति । गाण्डीवं गाण्डिवं भवति । कौपीनं कौपिनं भवति । कौ भूमौ चरतां कामान्धानां स्त्रीपुंसानां चक्षुषः पिधानं कौपिनम् । कुत्सितमिति पिदधतीति कुपिधानं कुपिनमुच्यते । तस्येदमाच्छादनं कौपिनम् । अथ कथं कौपीनम्? कुहरे पीनं कुपीनम् । तस्येदमावरणं कौपीनम् । कुत्सितां कामनां पातीति कुपिः कामः । स इनोऽस्येति कुपीनं गुह्यम् । तस्येदमिति वा । मात्रा वसनादि । **'मात्रा परिच्छदे'** इति रत्नमाला । **'मात्रा कर्णविभूषायां वित्ते माने परिच्छदे'** इति मेदिनी ॥ २३९ ॥ समस्तदोषभञ्जने समस्तदुष्टभञ्जने समस्तवरभञ्जने वा पूर्णशक्तिम् । समस्तभञ्जनश्चोरुशक्तिश्च वा । यतः केशवः । ब्रह्मरुद्रयोरपि प्रवर्तकः । शरणमाप । **'जेष्यामि तौ रणे विप्र हंसं डिभकमेव च । गिरीशो वा वरं दद्याच्छक्रो वा धनदोऽपि वा । यमो वा वरुणो वाऽपि ब्रह्मा वाऽथ चतुर्मुखः । सबलौ सानुगौ हत्वा पुनर्दास्यामि वो रतिम्'** [भ.प.११२.३–४] इति कृष्णवचनाशयं केशवपदेन सूचयामास ॥ २४० ॥ यथायोग्यमर्चनं समर्चनम् । न केवलं केशवः । रमाया अपि धवः । प्रमाया अपि धवः । ज्ञानी हि ज्ञानिनः समर्चनस्येष्टे । प्रीत्या दानं प्रदानम् । तैरादरपूर्वकमनुगतः ॥ २४१ ॥ अत्रिजं दुर्वाससम् । शिष्यकौ शिष्याधमौ । हरविरोधितया कुत्सितौ च । **'ततः श्रुत्वा जरासन्धो विग्रहं यदुभिः सह । नाकरोन्नृप**

---

१. **'समीक्ष्य'** इति क्वचित् । **'स तान् समर्च्य केशवः'** इति वे.ती. समुद्धृतः पाठः [९.५२] ।

**हरौ तु पुष्करं गते मुनीश्वरैः समर्चिते[1] ।**
**समीयतुश्च तावुभावथात्र हंसडीभकौ[2] ॥ २४३ ॥**

**स ब्रह्मदत्तनामकोऽत्र तत्पिताऽप्युपाययौ ।**
**समागतौ च भूतकौ शिवस्य यौ पुरस्सरौ ॥ २४४ ॥**

**विचक्रनामकोऽसुरः पुरा विरिञ्चतो वरम् ।**
**अवद्ध्यतामजेयतामवाप्य बाधते सुरान् ॥ २४५ ॥**

**स चाभवत् तयोः सखा सहायकाम्यया‌ऽऽगमत् ।**
**हिडिम्बराक्षसोऽपि यः पुराऽऽप शङ्कराद् वरम् ॥ २४६ ॥**

**न जीयसे न वद्ध्यसे कुतश्चनेति तोषितात् ।**
**स चैतयोः सखाऽभवत् समाजगाम तत्र च ॥ २४७ ॥**

**गाण्डिवं गाण्डीवमिति(वत्) डिभको डीभकश्चेति नाम तस्य भवति ॥ २४३–५० ॥**

---

**साहाय्यं पापं मे भवितेति ह'** [१२१.१६] इति च ॥ २४२ ॥ हरिणा लब्धोरुमात्रकैर्मुनीश्वरैः समर्चिते हरौ पुष्करं गते सति, सेनया सङ्गत्य, विजयावहे इति सम्भ्रम्य तौ च ईयतुः । अथ हरेरागमनं विज्ञाय तदनन्तरमेवेत्यहङ्कारातिशयमाह । डिभक एव डीभकः । यथा हनुमानेव हनूमान्, सत्रजिदेव सत्राजित्, द्वारवत्येव द्वारावती । सञ्ज्ञायां हि दीर्घो विभाषा भवति । अत्र डिभिक इति डिबिक इति डिम्भक इति वा पठन्तः सर्वेऽपि नामविभ्रान्ताः । **'अथ तं हंसडिभयोर्दर्शयामास सात्यकिम्'** [११७.२] इति हरिवंशप्रयोगोऽत्र स्फुटं गमकः ॥ २४३ ॥ स ब्रह्मेत्यत्रापि ब्रेति शिथिलं पठनीयं यथा सकारस्य द्विमात्रता न स्यात् । ब्रह्मदत्तोऽपि वयसा शिथिल इत्यनेनाऽह । तयोः पिता । इदं हरिवंशेऽनुक्तम् । ननु ब्रह्मदत्तः स्वयं यष्टा । स कथमत्राऽगच्छेत्? आगच्छेदेव । यतोऽयं नाश्वमेधः । किन्तु राजसूयः । अश्वमेधे तु यष्टाऽश्वं विसृज्य स्वयं दीक्षितो भवति वत्सरम् । शिवस्य भूतकौ हंसडिभकयोः सेनायाः पुरःसरौ । **'अथ तौ हंसडिभकौ जग्मतुः पुष्करं प्रति । पुरःसरमहाभूतौ–'** [भ.प.१२१.१–२] इति च । शिवस्य च पुरःसरौ परिचारकौ ॥ २४४ ॥ विचकतीति विचक्रः । चकते रक् । चक प्रतिघाते ॥ २४५ ॥ हिडिम्बनामकः । डयत इति हिडिम्ब इति वैयाकरणाः । **'डीङो बप्रत्ययः, नुम्, ह्रस्वः । हिट् च वा । डिम्बो व्यसनम् । हिडिम्बो राक्षसः'** [स.कं वृ.२.२.२२२] इति दण्डनाथः ॥ २४६ ॥ स च नीचः सखा । नीचत्वे चः । समाजगाम सहायकाम्ययाऽऽजगाम, सेनया समेत्य च ॥ २४७ ॥

---

१. **'समन्विते'** २. **'हंसडीभिकौ'**

अक्षोहिणी[१]दशात्मकं बलं तयोर्बभूव ह ।
विचक्रगं षडात्मकं तथैकमेव राक्षसम् ॥ २४८ ॥

द्विरष्टसेनया युतौ सहैकयैव तौ नृपौ ।
समीयतुर्य्युधे हरिं हरिश्च तौ ससार ह ॥ २४९ ॥

अथ द्वयोर्द्वयोरभूद् रणो भयानको महान् ।
हरिर्विचक्रमेयिवान् बलश्च हंसमुद्धतम् ॥ २५० ॥

तदाऽस्य चानुजं ययौ शिनिप्रवीर आयुधी ।
गदश्च नामतोऽनुजो हरेः स रोहिणीसुतः ॥ २५१ ॥

पुरा स चण्डको गणो हरेर्न्निवेदिताशनः ।
समाह्वयद् रणाय वै तयोः स तातमेव हि ॥ २५२ ॥

अक्षोहिणी[१]त्रयान्विताः समस्तयादवास्तदा ।
त्रिलोचनानुगौ च तौ न्यवारयन् सराक्षसौ ॥ २५३ ॥

**नामतः गदः । हरेरवरजोऽस्ति । स रोहिणीसुतः ॥ २५१ ॥ स पुरा चण्डको गणः पार्षदः । स हि स एव गदः । तयोस्तातमेव ब्रह्मदत्तमेव रणाय समाह्वयद्धै ॥ २५२–३ ॥**

---

अक्षोहिणीत्यत्रापि पूर्ववदकारो लघुरुच्चारणीयः । तयोः हंसडिभकयोः । राक्षसस्य रक्षसो वा हिडिम्बस्येदं राक्षसम् ॥ २४८ ॥ द्विरावृत्ता अष्टौ षोडशाक्षोहिण्यः । द्विरष्टमिता सेना द्विरष्टसेना । हिडिम्बस्य चैकयाऽक्षोहिण्या सहैव । हरिश्च तौ मितसेनः ससार ह ॥ २४९ ॥ विचक्रं षळक्षोहिणीपतिम् । पञ्चाक्षोहिणीसहितं हंसं बलः ॥ २५० ॥ अस्यानुजं चाऽयुधी । एतदादाय युध्यन्त इत्यायुधम् । शिनिवंशप्रवीरः सात्यकिः । हरेः प्रियोऽनुजः । गदाग्रजं हि हरिं व्याहरन्ति । तेन प्राप्तं देवकीसुतत्वभ्रमं वारयति–रोहिणीसुत इति । कथं गदः? भगवद्गणोऽयमिति गदित इति गदः । सदा भगवन्महिमानं गदतीति च । अथ चाऽयुधत्वेन गदाऽस्यास्तीति गदः । तदेतत् सूचयामास भगवान्– आयुधी गदश्चेति ॥ २५१ ॥ हरेः गणः परिवारेषु गणितः । चण्डको नाम दौवारिकः । प्रियश्चण्डः चण्डकः । पुत्रक इतिवत् । प्रीतिकारणमाह– हरेर्निवेदिताशनः । न केवलं द्वारि प्रतीहारः सन् । अशननिवेदनेनापि तं विशेषतः परिचचार । स तयोस्तातं ब्रह्मदत्तमेव सङ्गरार्थमाह्वयद्धि इदमपि हरिवंशेऽनुक्तम् ॥ २५२ ॥ अक्षोहिणीति पूर्ववत् शिथिलद्वित्वम् । तौ

---

१. **'अक्षौहिणी–'**

हरिर्विचक्रमोजसा महास्त्रशस्त्रवर्षिणम् ।
विवाहनं निरायुधं क्षणाच्चकार सायकैः ॥ २५४ ॥

पुनश्च पादपान् गिरीन् प्रमुञ्चतोऽरिणाऽरिहा ।
शिरो जहार देवता विनेदुरत्र हर्षिताः ॥ २५५ ॥

प्रसूनवर्षिभिः स्तुतश्चतुर्म्मुखादिभिः प्रभुः ।
ससार तौ हरानुगौ प्रभक्षकौ स सात्त्वताम् ॥ २५६ ॥

समस्तयादवान् रणे विधूय तौ जनार्द्दनम् ।
उपेत्य चांसगौ हरेरदंशतां सुकर्ण्णकौ ॥ २५७ ॥

स तौ भुजप्रवेगतो विधूय शङ्करालये ।
न्यपातयद् बलार्ण्णवोऽमितस्य किं तदुच्यते ॥ २५८ ॥

प्रभक्षयन्तमोजसा हिडिम्बमुद्धतं बलम् ।
सहोग्रसेनको ययौ पिता हरेः शरान् क्षिपन् ॥ २५९ ॥

**ओजसा बलेन महास्त्रशस्त्रवर्षिणं विचक्रम् ॥ २५४–५ ॥ (प्रभुः) हरानुगौ ससार ॥ २५६–६६ ॥**

---

महोदरकुण्डधारिणौ । राक्षसः एकाक्षोहिणीपतिर्हिडिम्बः ॥ २५३–४ ॥ अरिणाऽरेः शिरो जहार । अहो, सचक्रो हरि-र्विचक्रं चक्रेणैव निराचक्रे । **'हन्तुमैच्छत् तदा दैत्यमादाय निशितं शरम्'** [भ.प.१२३.२०] इति हरिवंशवचनेऽपि शृणातीति व्युत्पत्त्या शरपदेन चक्रमेवोच्यते । **'यथापूर्वं जगमाऽशु करं भगवतः पुनः'**[२१] इत्युत्तरवचनात् । विनेदुः विजयघोषं चक्रुः ॥ २५५ ॥ हरिवंशे व्यत्यासेन शैलीभेदेन परस्तात् कथितं प्रसङ्गं पूर्वमाह–ससार तौ हरानुगौ । न केवलं कालव्यत्यासः । कश्चन कथाव्यत्यासोऽपि । तथाहि हरिवंशे–**'अथ भूतौ महाघोरौ लम्बोदरशरीरिणौ । शूलेन पोथयां राजन् चक्रतुर्यादवेश्वरम् । ताभ्यां समाहतो विष्णुर्देवगन्धवसन्निधौ । रथाद् रथिवरश्रेष्ठस्तौ प्रगृह्य जना-र्दनः । भ्रामयित्वा शतगुणमलातमिव केशवः । कैलासं तौ समुद्दिश्य प्रचिक्षेप ततो हरिः'** [भ.प.१२७.२१–५] इति । प्रथमं शूलेन पोथयाञ्चक्रतुः । ततः कर्णावदंशताम् । प्रसह्य भक्षकौ प्रभक्षकौ । प्रभूतं भक्षकौ । कृष्णस्य पश्यतः प्रकटं भक्षकौ च । हरेः अंसगौ । हरेः सुकर्णकावदंशताम् । दशि दंशने । सुन्दरौ, अपरिणाहसंश्लिष्टौ च कर्णौ ॥ २५६–७ ॥ भूमेः शङ्करालयं प्रति शत्रुक्षेपक्षमो वेगः प्रवेगः । न्यक्कृत्य पातनं निपातनम् ॥ २५८ ॥ उग्रसेनेन सहितः

**तयो रथौ सहायुधौ प्रभक्ष्य राक्षसो बली ।**
**प्रगृह्य तावभाषत प्रयातमाशु मे मुखम्** ॥ २६० ॥

**तदा गदावरायुधः सहैव हंसभूभृता ।**
**प्रयुद्ध्यमान आययौ विहाय तं हलायुधः** ॥ २६१ ॥

**तमागतं समीक्ष्य तौ विहाय राक्षसाधिपः ।**
**उपेत्य मुष्टिनाऽहनद् बलं स वक्षसि क्रुधा** ॥ २६२ ॥

**उभौ हि [१]बाहुषाळिनाववयुद्ध्यतां च मुष्टिभिः ।**
**चिरं प्रयुद्ध्य तं बलोऽग्रहीत् स जङ्घयोर्विभुः** ॥ २६३ ॥

**अथैनमुद्धृतं[२] बलाद् बलः [३]स दूरमाक्षिपत् ।**
**पपात पादयोजने स नाऽजगाम तं पुनः** ॥ २६४ ॥

**विहाय सैनिकांश्च तौ नृपौ ययौ वनाय सः ।**
**निहत्य तस्य राक्षसान् हलायुधो ननाद ह** ॥ २६५ ॥

---

सहोग्रसेनकः । स च वसुदेवस्य प्रियसुहृदिति कनाऽऽह । उग्रया सेनया च सहितः ॥ २५९ ॥ प्रगृह्य निष्पन्दतया भुजयोर्गृहीत्वा । प्रयातं प्रविशतम् ॥ २६० ॥ गदावरायुध इति । अन्यान्यपि हलादीनि भवन्त्यायुधान्यस्य । अथापि गदैव वरायुधमस्य । अन्येऽपि गदायुधा भवन्ति गदादयः । अथापि इतरगदाभ्यो विशिष्टा गदावराऽस्याऽयुधमिति हलायुधो गदावरायुध उक्तः । तर्हि गदायुध इति नाम स्यात् । कथं हलायुध इति? न स्यात् । गदायुध इत्यव्यावर्तकं नाम । कृष्णोऽपि गदायुधः । भीमोऽपि । गदोऽपि । बहवो गदायुधा भवन्ति । हलायुधस्त्वयमेक एवेति तथोच्यते । तदेतत् सर्वमाचार्यः सूचयामास– गदावरायुधो हलायुध इति पदाभ्याम् । प्रयुध्यमानः घोरं युध्यमानः ॥ २६१ ॥ अहनत् अतितमामताडयत् ॥ २६२ ॥ बाहुषाळिनाविति । उभावपि बाहुयुद्धेन विपक्षक्षपणदक्षावित्यर्थः । प्रयुद्ध्य भीकरं युद्ध्वा ॥ २६३ ॥ पादयोजनमिते देशे । स हिडिम्बस्तं बलरामं पुनर्नाऽजगाम । **'गतासू राक्षसश्रेष्ठस्ततो देशान्निराक्रमत्'** [भ.प.१२६.४३] इति हरिवंशवचनमनेन विववार–गतासुर्गतसत्व इति । कथमन्यथा तस्माद् देशान्निष्क्रामति । कथं वा बलभद्रेण मृतः पुनर्भीमेन म्रियते । तस्मादाचार्योक्त एवार्थः ॥ २६४ ॥ स्वसैनिकांश्च तौ हंसडिभकौ च विहाय ।

---

१. **'बाहुशालिनाव–'** २. **'–नमुद्धतम्'** ३. **'स दूर आक्षिपत्'** । **'सुदूरमाक्षिपत्'** इति क्वचित् ।

**गदस्तु साल्वभूभृता वयोगतेन योधयन् ।**
**विवाहनं निरायुधं चकार सोऽप्यपाद्रवत् ॥ २६६ ॥**

**सुतेन तस्य कन्यसा युयोध सात्यकी रथी ।**
**वरास्त्रशस्त्रयोधिनौ विजह्रतुश्च तावुभौ ॥ २६७ ॥**

**चिरं प्रयुद्ध्य सात्यकिः स हंसकन्यसा बली ।**
**शतं सपञ्चकं रणे चकर्त्त तस्य धन्वनाम् ॥ २६८ ॥**

**स खड्गचर्म्मभृद् रणेऽभ्ययात् सुतात्मजं शिनेः ।**
**स चैनमभ्ययात् तथा वरासिचर्म्मभृद् विभीः ॥ २६९ ॥**

**द्विषोडशप्रभेदकं वरासियुद्धमश्रमौ ।**
**प्रदर्श्य निर्विशेषकावुभौ व्यवस्थितौ चिरम् ॥ २७० ॥**

**कन्यसा कनिष्ठेन ॥ २६७–७२ ॥**

---

तस्य सैनिकान् राक्षसान् ॥ २६५ ॥ वयोगतेन साल्वभूभृता ब्रह्मदत्तेन । अयं कथाभागः हरिवंशे न कथित इत्युक्तम् ॥ २६६ ॥ कनीयसा डिभकेन । प्रत्ययस्य ईकारलोपः । तेन तस्य शक्तिलोपमाह ॥ २६७ ॥ शतं सपञ्चकमिति । **'एवं धनूंषि राजेन्द्र शतं पञ्च च पुञ्जशः । छित्वा ननाद शैनेयः सर्वक्षत्रस्य पश्यतः'** [भ.प.१२५.१२] इति च ॥ २६८ ॥ डिभकस्य खड्गचर्मभ्यां सात्यकेः खड्गचर्मणी उत्तमे आस्तामित्याह– वरासिचर्मभृदिति । डिभकाद् वरश्चायमसिचर्मभृत् । खण्डनात् खड्गः । सर्वथाऽरिनिरसनादसिः । स खड्गचर्मभृदपि डिभकः सभीः । अयं तु विभीः ॥ २६९ ॥ द्वाभ्यां गुणिता षोडश । द्वात्रिंशत्सूक्ष्मप्रभेदयुक्तम् । वरमसियुद्धम् । तथाह्याग्नेये–**'भ्रान्तमुद्भ्रान्तमाविद्ध-माप्लुतं विप्लुतं सृतम् । सम्पातं समुदीर्णं च श्येनपातमथाऽकुलम् । उद्धूतमवधूतं च सव्यं दक्षिणमेव च । अनालक्षितविस्फोटौ कराळेन्दुमहामखौ । विकराळनिपातौ च विभीषणभयानकौ । समग्रार्धतृतीयांशपादपादार्ध-वारिजाः । प्रत्यालीढमथाऽलीढं वाराहं लुळितं तथा । इति द्वात्रिंशतो ज्ञेया खड्गचर्मविधौ रणे'** [अ.पु.२५२.१–४] इति । हरिवंशे तु किञ्चिदन्यथा पठ्यते–**'भ्रान्तमुद्भ्रान्तमाविद्धं प्रविद्धं प्रसृतं सृतम् । आकिरं निकिरं भिन्नं निर्मर्यादममानुषम् । सङ्कोचितं कुरचितं सव्यजानु विजानु च । आहिकं चित्रकं क्षिप्तं कुसुम्भं लम्भनं धृतम् । सव्यबाहुर्विनिर्बाहुः सव्येतरमथोत्तरम् । विबाहुस्तुङ्गबाहुश्च सव्योन्नतमुदासि च । पृष्ठतः प्रहितं चैव यौधिकं प्रथितं तथा । इति प्रकाशयन् द्वात्रिंशच्चक्रतुः खड्गयोधिनौ'** [भ.प.१२५.१७–२१] इति । अपपाठबाहुल्यादस्फुटम-निर्णायकं चैतत् । **'द्वात्रिंशत्करणानि स्युर्यानि युद्धानि भारत । तान्यदर्शयतां तत्र युध्यमानौ महाबलौ'** [द्रो.प.

**परस्परान्तरैषिणौ[1] नचान्तरं व्यपश्यताम् ।**
**ततो विहाय सङ्गरं गतौ निरर्थकं त्विति ॥ २७१ ॥**

**ततः स हंससंयुतो जगाम योद्धुमच्युतम् ।**
**क्षणेन तौ निरायुधौ चकार केशवः शरैः ॥ २७२ ॥**

**हतं च सैन्यमेतयोश्चतुर्थभागशेषितम् ।**
**क्षणेन केशवेन तद्भयादपेयतुश्च तौ ॥ २७३ ॥**

**स पुष्करेक्षणस्तदा सुरैर्नुतोऽथ पुष्करे ।**
**उवास तां निशां प्रभुः सयादवोऽमितप्रभः ॥ २७४ ॥**

**चतुर्थभागशेषितं यथा भवति तथेति क्रियाविशेषणम् । क्षणेन हतम् ॥ २७३–९२ ॥**

---

१४२.५०] इति भारते । एषु विशेषतस्त्रयोदश प्रचुराः प्रभेदाः–**'मण्डलाकारतः खड्गभ्रामणं भ्रान्तमुच्यते(१) । तदेव बाहुमुद्यम्य कृतमुद्भ्रान्तमीरितम् (२) । भ्रामणं स्वस्य परितः खड्गस्याऽविद्धमुच्यते (३) । परप्रयुक्तशस्त्रस्य वारणार्थमिदं त्रयम् । शत्रोराक्रमणार्थाय गमनं त्वाप्लुतं मतम् (४) । खड्गस्याग्रेण तद्देहस्पर्शनं प्रसृतं मतम् (५) । वञ्चयित्वा रिपौ शस्त्रपातनं गदितं सृतम् (६) । परिवृत्तं भवेच्छत्रोर्वामदक्षिणतो गतिः (७) । पश्चाद् पदापसरणं निवृत्तं तत् प्रचक्षते (८) । अन्योन्यताडनं प्राहुः सम्पातमुभयोरपि (९) । आधिक्यमात्मनो यत्तत् समुदीर्णमुदीरितम् (१०) । अङ्गप्रत्यङ्गदेशेषु भ्रामणं भारतं स्मृतम् (११) । विचित्रखड्गसञ्चारदर्शनं कैशिकं स्मृतम् (१२) । निलीय चर्मणि क्षेपो यदसेः सात्विकं हि तत्'**(१३) इति । आप्लुतमेव प्रविद्धम् । प्रसृतमेव विप्लुतम् । सव्यं दक्षिणमिति द्वयं समाहृत्य परिवृत्तमुच्यते । अथ सव्यपरिवृत्तं दक्षिणपरिवृत्तमिति विभागविवक्षायां चतुर्दश प्रभेदाः स्युः । प्रायो निवृत्तमित्याकुलमिति च । विस्फोटः कैशिकमिति । एषु चतुर्दशस्वप्यष्टौ प्रधानाः । तदपि भारतादेवावगम्यते– **'भ्रान्तमाविद्धमुद्भ्रान्तमाप्लुतं प्रसृतं प्लुतम् । सम्पातं समुदीर्णं च दर्शयामास पाण्डवः'** [भी.प.५४.५०] इति भीष्मवधे । सृतमेव प्लुतमुच्यते । **'भ्रान्तमुद्भ्रान्तमाविद्धमाप्लुतं विप्लुतं सृतम् । सम्पातं समुदीर्णं च दर्शयन्तौ यशस्विनौ'** [द्रो.प.१४२.३९] इति जयद्रथवधे । **'भ्रान्तमुद्भ्रान्तमाविद्धमाप्लुतं विप्लुतं सृतम् । सम्पातं समुदीर्णं च दर्शयामास संयुगे'** [क.प.१६.३१] इति च कर्णपर्वणि ॥ २७०–७२ ॥ अक्षोणिीदशकमागतम् । सार्धमक्षोहिणीद्वयं शेषितम् । तत् तस्मात् पराजयात्, सैन्यस्य चतुर्थभागमात्रावशेषाच्च मृत्युभयात् । तस्मात् कृष्णाद्वा भयं तद्भयम् । भयादपेयतुः तस्यामेव क्षणदायां पुष्कराद् गोवर्धनं प्रति पलायेतामित्यर्थः । **'उभौ तौ हंसिडिभकौ रात्रावेव महागिरिम् । जग्मतुः सहितौ राजन् गोवर्धनमथो नृपौ'** [भ.प.१२७.१] इति च ॥ २७३ ॥ अथ हंसडिभकयोः पलायनवार्ताश्रवणानन्तरम् । स्वयं

---

१. **'–रान्तरेषिणौ'**

परे दिने जनार्द्दनो नृपात्मजौ प्रविद्रुतौ ।
यमस्वसुस्तटे प्रभुः समाससाद पृष्ठतः ॥ २७५ ॥

स रौहिणेयसंयुतः समन्वितश्च सेनया ।
स्वशिष्टसेनया वृतौ पलायिनाववारयत् ॥ २७६ ॥

निवृत्य तौ स्वसेनया शरोत्तमैर्ववर्षतुः ।
सुकोपितौ समस्तशो यदूनवार्य्यपौरुषौ ॥ २७७ ॥

अथाऽससाद हंसको हलायुधं महाधनुः ।
अनन्तरोऽस्य सात्यकिं गदं च सर्वसैनिकान् ॥ २७८ ॥

स सात्यकिं निरायुधं विवाहनं विवर्म्मकम् ।
व्यधाद् गदं च तौ रणं विहाय हापजग्मतुः ॥ २७९ ॥

विधूय सैनिकांश्च सः प्रगृह्य[१] चापमाततम् ।
हरिं जगाम चोन्नदन् महास्त्रशस्त्रवर्षणः ॥ २८० ॥

---

तत्रैव तस्थौ पुष्करे पुष्करेक्षणः । ज्ञानिनां पुष्टिकरे ईक्षणे अस्येति च पुष्करेक्षणः ॥ २७४ ॥ परस्मिन् दिने । सर्वनामत्वं नाऽश्रितम् । परमुत्कृष्टं च तद्दिनं शत्रुविजयादित्याह । प्रविद्रुतौ प्राणभयात् पलायितौ । यमस्वसुर्यमुनायास्तटे । **'अथ प्रभाते विमले सूर्ये चाभ्युदिते सति । गोवर्धनं जगामाऽशु केशवः केशिसूदनः । शैनेयो बलभद्रश्च यादवाः सारणादयः । गोधनैरथ सैन्यैश्च नादितं बहुधा गिरिम् । तस्योत्तरं नृपश्रेष्ठ पार्श्वं सम्प्राप्य यादवाः । निकषा यमुनां राजंस्ततो युद्धमवर्तत'** [भ.प.१२७.२–५] इति च ॥ २७५ ॥ स्वेन कृष्णेन अवशेषिता सेना । अवशिष्टया स्वसेनया वृताविति वा ॥ २७६ ॥ आदौ पुष्करेऽनुभूतेन पराभवेन कोपितौ । पुनर्गोवर्धनं गतयोरप्यनुद्रवणेन सुकोपितौ । समस्तशः सर्वान् यदून् । सर्वत्र च । यदुवीरेषु कृष्णबलभद्रौ विहाय न केऽपि तं वारयितुमशकन्नित्याह–अवार्यपौरुषाविति । **'भीताश्च यादवा राजन् पलायनपरायणाः'** [भ.प.१२७.१४] इति च ॥ २७७ ॥ अनन्तरो डिभकः ॥ २७८ ॥ तौ गदसात्यकी ॥ २७९–८० ॥

---

१. **'स प्रगृह्य'**

**तमाशु केशवोऽरिहा समस्तसाधनोज्झितम् ।**
**क्षणाच्चकार सोऽप्यगाद् विसृज्य तं हलायुधम् ॥ २८१ ॥**

**हलायुधो निरायुधं विधाय हंसमोजसा ।**
**विकृष्टचाप[1] आगतं ददर्श तस्य चानुजम् ॥ २८२ ॥**

**स हंस आशु कार्म्मुकं पुनः प्रगृह्य तं बलम् ।**
**यदाऽऽससाद केशवो न्यवारयत् तमोजसा ॥ २८३ ॥**

**शिनेः सुतात्मजोऽप्यसौ विहाय हंसकानुजम् ।**
**रथान्तरं समास्थितो जगाम तातमस्य च ॥ २८४ ॥**

**वयोगतः पिता तयोर्युयोध तेन वृष्णिना ।**
**शरं च कण्ठकूबरे व्यसर्ज्जयत् स सात्यकेः ॥ २८५ ॥**

**स सात्यकिर्दृढाहतो जगाम मोहमाशु च ।**
**सुलब्धसञ्ज्ञ उत्थितः समाददेऽर्द्धचन्द्रकम् ॥ २८६ ॥**

**स तेन तच्छिरो बली चकर्त्त शुक्लमूर्द्धजम् ।**
**यदम्बयाऽभिकामितं पुरा पपात तत् क्षितौ ॥ २८७ ॥**

**नदंश्च सात्यकिर्हरेर्ज्जगाम पार्श्वमुद्धतः ।**
**बलोऽपि हंसकानुजं युयोध सेनया युतम् ॥ २८८ ॥**

---

आशुत्वं सावकाशमिति निरवकाशं पदमाह– क्षणात् । तद्यथा भागवते सद्य इत्युक्त्वा पुनः तत्क्षणादित्याह–**'सद्यो हृद्यवरुध्यतेऽत्र कृतिभिः शुश्रूषुभिस्तत्क्षणात्'** [१.१.२] इति । तं डिभकम् । सोऽपि तं हरिं विहाय हलायुधमगात् ॥ २८१–३ ॥ रथान्तरं समानाय्य तत्राऽस्थितः । तातं ब्रह्मदत्तम् । नायं प्रसङ्गः सम्प्रति हरिवंशे पठ्यत इत्युक्तम् ॥ २८४ ॥ कण्ठकूबरे । कण्ठमूले जत्रुसन्धिमध्यगतेऽवनतभागे ॥ २८५ ॥ सुलब्धसञ्ज्ञः सपदि लब्धसञ्ज्ञ इत्यर्थः ॥ २८६–७ ॥ यं राजसूयिनं कर्तुमयमुद्यमः स एव ममारेति मूलोच्छेदजनितेन हर्षभरेण नदन् ॥ २८८ ॥

---

१. **'–चापमागतम्'**

हरिस्तु हंसमुल्बणैः शरैः समर्दयन् बलम् ।
जघान तस्य सर्वशो न कश्चिदत्र शेषितः ॥ २८९ ॥

स एक एव केशवं महास्त्रमुक् ससार ह ।
निवार्य्य तानि सर्वशो हरिर्निजास्त्रमाददे ॥ २९० ॥

स वैष्णवास्त्रमुद्यतं निरीक्ष्य यानतो महीम् ।
गतः पराद्रवद् भयात् पपात यामुनोदके ॥ २९१ ॥

वरास्त्रपाणिरीश्वरः पदाऽहनच्छिरस्यमुम् ।
स मूर्छितो मुखेऽपतन्महाभुजङ्गमस्य ह[1] ॥ २९२ ॥

स धार्त्तराष्ट्रकोदरे यथा तमोऽन्धमेयिवान् ।
तथा सुदुःखसंयुतो वसन् मनोः परं म्रियेत् ॥ २९३ ॥

**मनोः परं वैवस्वतमन्वन्तरानन्तरम् ॥ २९३–४ ॥**

तस्य हंसस्य बलं सेनां सर्वशो जघान । तस्य पक्षीयान् सर्वशः सर्वान् वा जघान ॥ २८९ ॥ महास्त्राणि मुञ्चन् । तानि महास्त्राणि सर्वाणि । निजास्त्रं वैष्णवम् । **'अस्त्रं वैष्णवमादाय शरे स निशिते हरिः । योजयामास भूतात्मा भूतभावनभावनः'** [भ.प.१२७.४८] इति च ॥ २९० ॥ स वैष्णवास्त्रमिति । **'हंसो राजा महाराज निश्चेष्ट इव सम्भ्रमौ । उत्प्लुत्य स रथात् तस्माद् यमुनामभ्यधावत । यत्र कृष्णो हृषीकेशः काळियाहिं ममर्द ह । तस्मिन् ह्रदे महाघोरे पपाताथ स हंसकः'** [भ.प.१२८.१–४] इति च ॥ २९१ ॥ वरास्त्रपाणिरीश्वर इति । अस्त्रपाणिं तं दृष्ट्वैव भीतः स परादुद्राव पपात च यामुनोदके । तेनास्त्रं न प्रयुयोज भगवान् । किन्त्वस्त्रपाणिरेव तमनुदुद्राव । अनुद्रुत्य च हंसस्य शिरसि पदाऽवधीत् । **'रथादुत्प्लुत्य कृष्णोऽपि तस्योपरि पपात ह । देवदेवो जगन्नाथो जगद्विस्मापयन्निव । प्राहरत् तं महाबाहुः पादाभ्यामेव केशवः'** [भ.प.१२८.५–६] इति च । ततः किमासीत्? आह–स मूर्छित इति । एतेन–**'पादक्षेपं नृपस्तस्माल्लब्ध्वा हंसो नृपोत्तम । ममार च नृपश्रेष्ठ केचिदेवं वदन्ति हि । अन्ये पाताळमायातो भक्षितः पन्नगैरिति । अद्यापि नैव राजेन्द्र दृष्ट इत्यनुशुश्रुम'** [१२८.७–८] इति हरिवंशवचनं विवृतार्थम्–केचिज्ज्ञानिनो मृतस्तमसि पपातेत्याहुः । अन्ये ज्ञानिनः पन्नगस्य मुखे पपातेत्याहुरिति । उभयथाऽपि युक्तं वचः । प्रथमं महाभुजङ्गमस्य मुखे पपात । मन्वन्तरान्ते तमसि पतिष्यतीति । ननु तर्हि मरिष्यतीति वक्तव्यम् । कथं ममारेत्याह? न दोषः । एष्यदपि निश्चितमित्यतीतत्वेनाऽह । तदेतदुत्तरश्लोके स्फुटम्–**'तमो हरेर्द्विडेति निश्चयात्'** इति ॥ २९२ ॥ यथा तमोऽन्धमेयिवान्

१. **'–मस्य हि'**

**ततोऽन्धमेव तत् तमो हरेर्द्विडेति निश्चयात् ।**
**तदाऽस्य चानुजोऽग्रजं विमार्ग्गयन् जलेऽपतत् ॥ २९४ ॥**

**विहाय रोहिणीसुतं जले निमज्ज्य मार्ग्गयन् ।**
**अपश्यमान आत्मनो व्यपाटयच्च काकुदम् ॥ २९५ ॥**

**काकुदं जिह्वामूलस्थिता सूक्ष्मा जिह्वा ॥ २९५–८ ॥**

इति श्रीमहाभारततात्पर्यनिर्णयटीकायां
श्रीवेदाङ्गतीर्थभट्टारकविरचितायां तात्पर्यदीपिकायां सप्तदशोऽध्यायः

—०—

सुदुःखेन निरानन्देन दुःखेन संयुतस्तथा सुदुःखसंयुतः धार्तराष्ट्रके धृतराष्ट्राख्यस्य पृदाकोः सम्बन्धिनि दुःखमयत्वात् कुत्सिते चोदरे । यावन्मन्वन्तरं वसन् ततः परं म्रियेत् तमसि पतेत्, लोककल्याणायेति परस्मैभाषा ॥ २९३ ॥ यदा हंसो महाभुजङ्गमस्य मुखेऽपतत् तदा । विविधं मार्गयन् स्थलेऽपश्यन् जलेऽपतत् । मार्ग अन्वेषणे । **'श्रुत्वा निहत-मत्युग्रं भ्रातरं वीर्यशालिनम् । बलदेवं परित्यज्य युध्यमानं महारणे । डिभको वीर्यसम्पन्नो यमुनामनुजग्मिवान् । तमन्वधावद् वेगेन बलभद्रो हलायुधः । हंसो हि यत्र पतितस्तत्रासौ निपपात ह । यमुनायां महाराज विलोड्य बलसश्चयम्'** [१२९.१–३] इति च ॥ २९४ ॥ अपश्यमान इति । अदर्शनफलं स्वात्मनाश इत्याह । **'यदा पश्यः पश्यते रुग्मवर्णम्'** इति श्रौतः प्रयोगः । काकुदं तालु । जिह्वामूलात् किञ्चिदुपरि जिह्वाधिष्ठानमस्थिविशेषः । व्यपाटयत् विदार्योदच्छिनत् । **'अथ क्रुद्धः स डिभको भ्रामयित्वा जलं बहु । उन्मज्योन्मज्य सहसा निमज्य च पुनःपुनः । न ददर्श तदा राजन् भ्रातरं वीर्यशालिनम् । उन्मज्याथ महाबाहुर्वासुदेवं विलोक्य च । उवाच वचनं राजन् डिभको वीर्यसत्तमः । अरे गोपकदायाद कासौ हंस इति स्थितः । वासुदेवोऽपि धर्मात्मा यमुनां पृच्छ राजक । इत्यब्रवीत् प्रसन्नात्मा देवदेवः प्रतापवान् । तच्छ्रुत्वा यमुनां भूयः प्रविश्य डिभकः किल । बहुप्रकारमुद्वीक्ष्य भ्रातरं भ्रातृ-वत्सलः । विललाप ततो राजा यमुनाया महाह्रदे । निमज्योन्मज्य सहसा मरणे कृतनिश्चयः । हस्तेन जिह्वामाकृष्य भूयोभूयो विलप्य च । ततः समूलमाकृष्य जिह्वां साहसकृत् स्वयम् । ममारान्तर्जले राजन् डिभको नरकाय वै'** [भ.प.१२९.४–१३] इति च । तदेतत् सर्वं महाभारतेऽपि सङ्क्षिप्योक्तम्–**'अथ हंस इति ख्यातः कश्चिदासीन्महान् नृपः । रामेण स हतस्तत्र सङ्ग्रामेऽष्टादशावरे । हतो हंस इति प्रोक्तमथ केनापि भारत । तच्छ्रुत्वा डिभको राजन् यमुनाम्भस्यमज्जत । विना हंसेन लोकेऽस्मिन् नाहं जीवितुमुत्सहे । इत्येतां मतिमास्थाय डिभको निधनं गतः । तथा तु डिभकं श्रुत्वा हंसः परपुरञ्जयः । प्रपेदे यमुनामेव सोऽपि तस्यां न्यमज्जत'** [स.प.१४.४३–६] इति । अष्टादशादवरे अर्वाचीने, अनन्तरभाविनि युद्धे । रामेण हतः, शस्त्रेण हतः पराजितः । अथच रामेण हत इति कृष्णेन हत इत्यर्थः । **'विस्तारे कृष्णनिहता बलभद्रहता इति । उच्यन्ते च क्वचित् कालव्यत्यासोऽपि क्वचिद् भवेत्'** [म.भा.ता.नि.९.१३] इति पूर्वोक्तस्येदं स्फुटमुदाहरणम् । अनयोर्हंसडिभकयोः कौशिकः चित्रसेन इति च नामान्तरं

विहाय देहमुल्बणं तमोऽवतार्य्य[१] चाग्रजम् ।
प्रतीक्षमाण[२] उल्बणं समत्ति तत् सुखेतरम् ॥ २९६ ॥

ततो हरिर्बलैर्य्युतो बलान्वितो मुनीश्वरैः ।
समं कुशस्थलीं ययौ स्तुतः कशङ्करादिभिः ॥ २९७ ॥

स्वकीयपादपल्लवाश्रयं जनं प्रहर्षयन् ।
उवास नित्यसत्सुखार्ण्णवो रमापतिर्गृहे ॥ २९८ ॥

**इति श्रीमदानन्दतीर्थभगवत्पादविरचिते**
**श्रीमहाभारततात्पर्य्यनिर्ण्णये हंसडिभकवधो नाम सप्तदशोऽद्ध्यायः**

—०—

[आदितः श्लोकाः– **१८३१**+२९८=**२१२९**]

च भारतादवगम्यते–**'सतु सेनापतिं राजा सस्मार भरतर्षभ । कौशिकं चित्रसेनं च तस्मिन् युद्ध उपस्थिते । ययोस्ते नामनी राजन् हंसेति डिभकेति च'** [स.प.२२.४२–३] इति ॥ २९५ ॥ आत्मानमुल्बणं तमोऽवतार्य । उल्बणं सुखेतरं दुःखमेवात्ति ॥ २९६ ॥ मुनीश्वरैः दुर्वासःप्रभृतिभिः । को ब्रह्मा वायुश्च ॥ २९७ ॥ प्रत्यक्षं हर्षयन् । नित्यं सत् निर्दुःखं च सुखम् ॥ २९८ ॥ उपसंहारवाक्ये हंसडिभकवधो नामेति । यद्यप्यत्र रुग्मिणीविवाहादयोऽपि निरूपिताः । तथाऽपि हंसडिभकवधस्य भागवतभारतादिषु स्फुटमनुल्लेखात् केवलं हरिवंशे विस्तृतोऽयं प्रसङ्ग इत्यपूर्वतां स्फोरयितुं तदेव नामाध्यायस्य ददौ । हंसडिभकवधेनोपसंहाराच्च युक्ता तन्नामताऽध्यायस्य । पूर्वाध्यायस्य सृगालवध इति नाम । अस्य च हंसडिभकवध इति । तेन सृगालवधादनन्तरं हंसडिभकवधपर्यन्ता कथाऽत्रोदितेत्युक्तं भवति । तेन मध्यगताः सर्वा अपि कथा उपसङ्गृहीता भवन्ति । अथ दुष्टनिधनमेव भगवदवतारमुख्यकार्यमिति तदेव मुखत आह– कंसवध इति, सृगालवध इति हंसडिभकवध इतीति ॥ ✲ ॥

**आचार्यगोविन्दकृते**
**श्रीमद्भारततात्पर्यनिर्णयस्य ।**
**निर्णिक्ते व्याख्याने निर्णयभावचन्द्रिकाख्याने**
**गतं सप्तदशाध्यायविवरणं सतां हृदयाभरणम् ॥**

**इत्याचार्यगोविन्दस्य कृतिषु महाभारततात्पर्यनिर्णयपञ्चिकायां**
**निर्णयभावचन्द्रिकायां सप्तदशोऽध्यायः**

—०—

१. **'तमोऽवतीर्य'** २. **'प्रपश्यमान–'** इति क्वचित् ।

२२-१०-१२

# अष्टादशोऽद्ध्यायः

**[भीमार्ज्जुनदिग्विजयः]**

**ॐ ॥ यदा[1] रामादवाप्तानि दिव्यास्त्राणि प्रपेदिरे ।**
**द्रोणात् कुमारास्तेष्वासीत् [2]सर्वेष्वप्यधिकोऽर्ज्जुनः ॥ १ ॥**

**निजप्रतिभया जानन् सर्वास्त्राणि ततोऽधिकम् ।**
**नास्त्रयुद्धं क्वचिद् भीमो मन्यते धर्म्ममञ्जसा ॥ २ ॥**

**नहि भागवतो धर्म्मो देवताभ्युपयाचनम् ।**
**ज्ञानभक्ती हरेस्तृप्तिं विना विष्णोरपि क्वचित् ॥ ३ ॥**

**नाऽकाङ्क्ष्यं किमुतान्येभ्यो ह्यस्त्रं काम्यफलप्रदम् ।**
**शुद्धे भागवते धर्म्मे निरतो यद् वृकोदरः ॥ ४ ॥**

---

ॐ ॥ रामाद् द्रोणेनावाप्तानि । अवगतानि, आप्तानि च । आत्मवश्यता आप्तिः । तदेव प्रपदनं च । लोकदृष्ट्याऽर्जुनोऽधिकः । वस्तुगत्याऽपि अर्जुनोऽधिकः, भीमोऽभ्यधिक इति हृदयम् ॥ १ ॥ ततोऽर्जुनादप्यधिकम् । जानन् न द्रोणादस्त्राणि प्रपेदे । अपि च सर्वास्त्राणि जानन्नपि नास्त्रयुद्धं धर्मं मन्यते । अञ्जसा सामञ्जस्येन सर्वात्मना । किन्तु काम्यधर्ममापद्धर्मं वा मन्यते ॥ २ ॥ कुतः? अस्त्राभिमानिनो हि देवा समन्त्रमभियाचिता अस्त्रेषु वीर्यमादधति, नहि भागवतो धर्मो देवताभ्युपयाचनम् । देवतानां सकाशात् देवतासु वा स्वस्याभीष्टमुपपादयितुं याचनम् । हरिविषये ज्ञानभक्ती हरिनिष्ठां तृप्तिं च विना । हरिं किल तर्पयन्ति साधनचयेन । 'पर्याप्तमनेन साधितं मोक्षाय; तदेनं मोचयामि' इतीच्छा तृप्तिः । तृप्तिरन्यत्रालम्बुद्धिर्वा । मोक्षदानेन संसारहरणाद्धरिः । तादृशाद् विष्णोरपि नाऽकाङ्क्ष्यम् ॥ ३ ॥ यत् यस्मात् । तस्मान्न काम्यकर्मकृत् । स्वतस्तेभ्योऽधिकत्वाद् देवमानुषान् नायाचत् । अथच निमित्तविशेषादुत्तमान् पित्रादीनपि

---

१. अस्याध्यायस्य आ षड्विंशं श्लोकं वेदाङ्गतीर्थीया प्राचीनटीकाऽऽदर्शे नोपलब्धा । न ज्ञायते किं न व्याख्यदेव टीकाकार आहोस्विल्लिपिकृत्प्रममादेति । आदर्शान्तरपाठो गवेषणीयः ।

२. **'सर्वेष्वभ्यधि–'** इति वे.ती. पाठ उपरि पठ्यते । लिपिकृत्प्रमाद इति भाति ।

**न काम्यकर्म्मकृत् तस्मान्नायाचद् देवमानुषान् ।**
**न हरिश्चार्थितस्तेन कदाचित् कामलिप्सया[१] ॥ ५ ॥**

**भिक्षामटंश्च हुङ्कारात् करवद् वैश्यतोऽग्रहीत् ।**
**नान्यदेवा नतास्तेन वासुदेवान्न पूजिताः ॥ ६ ॥**

**न प्रतीपं हरेः क्वापि स करोति कथश्चन ।**
**अनुपस्करिणो[२] युद्धे नाभियाति ह्युपस्करी ॥ ७ ॥**

**नापयाति युधः क्वापि न क्वचिच्छद्म चाऽचरेत्[३] ।**
**[४]नैवोर्ध्वदैहिकानुज्ञामवैष्णवकृतेऽकरोत् ॥ ८ ॥**

---

तस्मात् अकाम्यकर्मकृत्त्वादेव नायाचत् । किमन्ये? हरिश्च हरिरपि । तस्मादेव कारणात् ॥ ४–५ ॥ हुङ्कारादिति । हुङ्कारो हि क्वचिदाज्ञावचनः । क्वचिदनुज्ञावचनः । न क्वापि याचनवचनः । वैश्येभ्यः करमिव । वासुदेवादन्ये देवाः । वासुदेवं विहायान्यदेवा वा । न नताः । न वाचा स्तुताः, न कायेन प्रणताः । न मनसाऽपि पूजिताः ॥ ६ ॥ करोति चकार । अभियाति अभिययौ । उपस्कर उपकरणमायुधादि । निरायुधान् सायुधो नाभियातीत्यर्थः । ननूपकरणे न विहितः सुट् । सत्यम् । अथापि भूषणे विहितः । कन्यामुपस्करोति । युद्धे पुनरायुधमेव भूषणम् । न कटककुण्डलादि । अतस्तदेव भवत्युपस्करणम् । अथवा **'सम्पर्युपेभ्यः करोतौ भूषणे'** [अ.सू.६.१.१३७] इत्यस्य क्वचिदपवाद इष्यते वैयाकरण-रूपैरेव । यदाह वामनः–**'सम्पूर्वस्य क्वचिदभूषणेऽपि सुडिष्यते, संस्कृतमन्नमिति'** इति । एवमुपपूर्वस्यापि क्वचिदभूषणेऽपि सुडिष्यते, उपस्करी योद्धेति । अपिचार्थान्तरमप्यत्र सूक्तं प्रतिभाति । तथाहि–**'समवाये च'** [१३८] इति पाणिनिः पठति । तेन उपस्करीति समुदित उच्यते । तथाच अनुपस्करिणः असमवेतानेकाकिनः स्वयमुपस्करी सेनासमवेतो नाभियातीत्यर्थः । अथवा **'उपात् प्रतियत्नवैकृतवाक्याध्याहारेषु'** [१३९] इति स्मरणात् प्रतियत्ने सुट् । तेन युद्धे प्रति-रुध्य स्वाधिक्याय प्रयतमाना उपस्करिण उच्यन्ते । ये तादृशा न भवन्ति तेषु स्वयमपि नाधिक्यस्थापनाय प्रयतत इत्यर्थः ॥ ७ ॥ युधो नापययौ । कारणान्तरादपि युद्धं त्यक्त्वा नापचक्राम । छद्म कपटेन कार्यसाधनम् । ऊर्ध्वदैहिका-नुज्ञामिति । देहपातादूर्ध्वं क्रियमाणं दाहादिसपिण्डीकरणान्तं क्रियाजातमूर्ध्वदैहिकम् । अपूर्वोऽयं प्रयोगः । वैयाकरणास्तु उभयवृद्ध्या और्ध्वदैहिकमिति पूर्वपदवृद्ध्याा और्ध्वदेहिकमिति च रूपद्वयमभ्युपयन्ति । **'ऊर्ध्वदेहाच'** इति वार्तिकाट् ठञ् [४.३.६०], अनुशतिकादित्वात् [७.३.२०] उभयपदवृद्धिर्वेति । मरणादूर्ध्वं क्रियमाणं देहदाहादिकं कर्म

---

१. **'हरिश्च नार्थितस्तेन कदाचित् काम्यलिप्सया'** २. **'अनुपस्कारिणो–'**

३. **'–च्छद्म वाऽऽचरेत्'** ४. **'नचौर्ध्व–'**

**न करोति स्वयं नैषां प्रियमप्याचरेत् क्वचित् ।**
**सख्यं नावैष्णवैश्चक्रे प्रतीपं वैष्णवे न च[१]** ॥ ९ ॥

**परोक्षेऽपि हरेर्न्निन्दाकृतो[२] जिह्वां छिनत्ति च ।**
**प्रतीपकारिणो हन्ति विष्णोर्वैनानजीघनत्[३]** ॥ १० ॥

**न संशयं कदाऽप्येष धर्म्मे ज्ञानेऽपि वाऽकरोत्[४] ।**
**विद्योपजीवनं नैष[५] चकाराऽपद्यपि क्वचित्** ॥ ११ ॥

**अतो न धर्म्मनहुषौ प्रत्युवाच कथञ्चन ।**
**आज्ञयैव हरेर्द्रौणेरस्त्राण्यस्त्रैरशातयत्[६]** ॥ १२ ॥

**अदृश्योऽलम्बुसो भग्नो नान्यत्र तु कथञ्चन ।**
**नह्यस्त्रयुद्धे सदृशो द्रौणेरस्त्यर्ज्जुनादृते** ॥ १३ ॥

---

ऊर्ध्वदैहिकमित्याचार्याशयः । नैवाकरोत् । अवैष्णवा इति स्वतो विष्णुद्विषस्तामसाः । न करोति च स्वयमौर्ध्वदैहिकं कर्मावैष्णवकृते । स्वयं करणेऽनुज्ञाकरणे वा फलं हि परगामि, तामसानां महत् पुण्यम् । तन्मा भूदिति न करोतीति परस्मैभाषा । स्वरूपधर्मोऽयमिति सार्वकालिकत्वद्योदनाय वर्तमानव्यपदेशः । वैष्णवे प्रतीपं विरोधं च न चक्रे । तेन विष्णुप्रीत्याख्यं महत् फलमात्मगामीत्यात्मनेभाषा ॥ ८–९ ॥ विष्णोः प्रतीपं कुर्वन्तः प्रतीपकारिणः । ताच्छील्ये णिनिः । विष्णोः प्रतीपकरणशीलान् अवधीत् अजीघनद् वा । तेन तेषां तमःपातनं फलम् । अजीघनदिति हन्तेर्णिजन्तस्य लुङि रूपम् । वैयाकरणास्तु 'अजीघतत्' इति रूपं पठन्ति । तत्ववादिनस्तु लुङि तकारादेशो विभाषा भवतीति मन्यन्ते । तद्यथा प्रतना ऋषयः करोमि कुर्मीति द्विधा पठन्ति । दद्मि ददामीति ॥ १० ॥ धर्मे ज्ञाने वा संशयमपि नाकरोत् । तेन सतां ज्ञानदार्ढ्यं फलम् । एवमुत्तरत्रापि ॥ ११ ॥ यक्षरूपं धर्मम्, अजगररूपं नहुषं च । अशातयत् अत्रोटयतेत्यर्थः । शद्लृ गत्यादिषु । **'शदेरगतौ तः'** [अ.सू.७.३.४२] । शदेरगतावर्थे दस्य तः स्याण्णिचि । शादयति गमयति । शातयति त्रोटयते । कथेयमुपरिष्टाद् भवति [२७.८–१०]॥१२॥ अदृश्योऽलम्बुसो भग्नः, आज्ञयैव हरेः । तुना आज्ञाऽपि कारणविशेषमूलेत्याह । तर्हि हरिरपि किमर्थमाज्ञां ददौ? आह– न ह्यस्त्रयुद्धे । अर्जुनादृते अस्त्रयुद्धे द्रौणेः सदृशो नास्तीति लौकिकी प्रथा । अतः सर्वास्त्रवित्त्वं द्रौणेरप्यधिकं भीमे प्रकटं दर्शयितुम् । अलतिर्भूषणार्थः ।

---

१. **'नतु ।'** २. **'निन्दां कृतो–'** ३. **'–वैतानजीघनत्'**
४. **'–पि चाकरोत्'** इति क्वचित् । ५. **'नैवं चका– '** ६. **'–रशामयत्'**

**सर्ववित्त्वं ततो भीमे प्रदर्शयितुमीश्वरः ।**
**अदादाज्ञामस्त्रयुद्धे तथैवालम्बुसं प्रति ॥ १४ ॥**

**प्रत्यक्षीभूतदेवेषु बन्धुज्येष्ठेषु वा नतिम् ।**
**मर्य्यादास्थितयेऽशासद् भगवान् पुरुषोत्तमः ॥ १५ ॥**

**तत्रापि विष्णुमेवासौ नमेन्नान्यं कथञ्चन ।**
**आज्ञयैवास्त्रदेवांश्च प्रेरयामास नार्त्थनात् ॥ १६ ॥**

**अन्वेनमेव तद्धर्म्मे कृष्णैका संस्थिता[१] सदा ।**
**धृतराष्ट्रादपि वरं ततो नाऽत्मार्त्थमग्रहीत् ॥ १७ ॥**

**नाशपद् धार्त्तराष्ट्रांश्च महापद्यपि सा ततः ।**
**न वाचा मनसा वाऽपि प्रतीपं केशवेऽचरत् ॥ १८ ॥**

---

अलत्यात्मानमित्यलम्बुसः । **'अलेरम्बुसः'** [स.कं.२.३.१८२] इति भोजः । अलम्भूषत्यात्मानमिति पर्याप्तभूषणो वा । तमेतमलम्भूषं सन्तमलम्बुसमाहुर्म्लेच्छितेन भाषितेन । तद्यथा ऋषिकां लुसिकामाहुः । यथा द्रौणिं प्रति तथैव भीमस्य मायायुद्धेऽपि सर्ववित्त्वं प्रदर्शयितुमेव अलम्बुसं प्रति, अलम्बुसेन साकमित्यर्थः, अस्त्रेण योद्धुमाज्ञामदात् । अलम्बुसं प्रति अलम्बुसस्य प्रतियोधनायेति वा । वक्ष्यति हि–**'अस्त्रज्ञतामात्मनि केशवाज्ञया सन्दर्शयन्नागतधर्मसङ्कटः । त्वाष्ट्रास्त्रमादत्त–'**[२६.८३] इति ॥ १३–१४ ॥ दर्शनपथं गतेषु देवलोकादागतेषु नारदादिषु । बन्धुषु ये ज्येष्ठास्तेषु मानुषेषु च । मर्यादा लोकव्यवस्था । तस्याः निरन्तरतायै । नतिं अशासत् कर्तव्यतयाऽऽज्ञापयामास । श्रुतिस्मृतिभ्यां च । स्वयमपि तथा चरित्वा शिक्षयामास । शासु अनुशिष्टौ । शास्त्रानुगुणं लोकानुगणं वा बोधनमाज्ञापनं वाऽनुशिष्टिः । अशादिति वक्तव्येऽशासदित्याह । तेनाक्षराधिक्येन शासनस्यानुल्लङ्घ्यतामाह । भूवादिष्वपि शासधातुः पठनीय इति तु वस्तुस्थितिः । क्षराक्षरपुरुषोत्तमत्वात् स एव वायोरपि शासनस्येष्ट इत्याह–पुरुषोत्तम इति । भगवान् सर्वेश्वरः । **'ऐश्वर्यस्य समग्रस्य–'** इत्यादेः । अतः सर्वस्येष्टे ॥ १५ ॥ तत्रापि देवेषु बन्धुषु च । अन्तर्यामिणं विष्णुमेव । यश्च सर्वस्यान्तः विशति, यं च नामानि सर्वाणि विशन्ति स हि विष्णुः ॥ १६ ॥ एनमन्वेव । एवकारोऽव्यवधानमाह । एनमेवानु । एवकारेण अर्जुनादिव्यावृत्तिः । अत एवेतरापेक्षया सम्यक् स्थिता । तद्धर्मे विष्णुधर्मे । धृतराष्ट्रादपि बन्धुज्येष्ठादपीत्यपेरर्थः । ततः शुद्धभागवतधर्मे निरतत्वात् भीमानुसरणाच्च हेतोः ॥ १७–८ ॥

---

१. **'संश्रिता'** इति क्वचित् ।

**अन्ये भागवतत्वेऽपि खिन्नधर्म्माः[१] क्वचित्क्वचित् ।**
**स्यमन्तकार्त्थे रामोऽपि कृष्णस्य विमनाऽभवत् ॥ १९ ॥**

**अवमेनेऽर्ज्जुनः कृष्णं विप्रस्य शिशुरक्षणे ।**
**प्रद्युम्न उद्धवः साम्बोऽनिरुद्धाद्याश्च सर्वशः ॥ २० ॥**

**हरेरिष्टं सुभद्रायाः फल्गुने दानमञ्जसा ।**
**ज्ञात्वाऽपि रुरुधुः सम्यक् सात्यकिः कृष्णसम्मितम् ॥ २१ ॥**

**कदाचिन्मन्यते पार्त्थं धर्म्मजोऽपि नरं हरिम् ।**
**मत्वाऽबिभेज्जरासन्धवधे कृष्णमुदीरितुम् ॥ २२ ॥**

**बन्धनं शङ्कमानो हि कृष्णस्य विदुरोऽपि तु ।**
**कौरवेयसभामद्ध्ये नावतारमरोचयत् ॥ २३ ॥**

---

खिन्नधर्माः परिहीणधर्माः । **'खिद परिघाते'** । विमनाः अभवत् । **'शिरोपधानम्', 'सहस्रपादाक्षिशिरोरुबाहवे'** इत्यादिवत् सन्धिगर्भः सन्धिः । **'प्रियः प्रियायाऽर्हसि'** इति च गीतायाम् । **'हे सखेति'** इति च । **'दक्षिणे भव राजा त्वं भागीरथ्याऽहमुत्तरे'** इति भारते । अङ्गीकुर्वन्ति वैयाकरणा अपीदृशं सन्धिम्– **'सैष दाशरथी रामः'** इत्यादौ । **'लोपशि पुनर्न सन्धिः । छन्दसि तु भवति'** इति सारस्वतं वचनम् । अथवा **'विमनाः भवत्'** इत्येव प्रतृण्णम् । अडभावश्छान्दसः । कृष्णस्य विषये विमनाः स्यमन्तकं निगूह्य मिथ्या वदतीति विपरीतं मन्यमानः । तेन च विमना अप्रीयमाणः अभवत् । कथेयं विंशेऽध्याये पठ्यते [२०.३२–३] ॥ १९ ॥ विप्रस्य तृणावहस्य मृतशिशुरक्षणे । कथा चेयमुपरिष्टाद् वक्ष्यते [२१.१५–३५] । सर्वशः सर्वथा, सर्वे च ॥ २० ॥ अञ्जसा सामञ्जस्येन ज्ञात्वाऽपि । सुभद्रया सह कृष्णरथेन यान्तमर्जुनं सम्यक्, वारणीयोऽयमिति निश्चित्य, रुरुधुः प्रतिरोधं चक्रुः । कदाचित् पार्थं कृष्णसम्मितममन्यत । समत्वेन मितः सम्मितः । धर्मजोऽपि कृष्णं साक्षाद्धरिमपि नरं मत्वा बिभाय । 'भीमार्जुनाभ्यां सह जरासन्धवधाय याहि' इत्युदीरितुम् । उदीरयितुम् । तस्याधीरतामेवाक्षरलोपेनाऽह । उत्पूर्वस्य ईरयतेर्हि कथनमर्थः । अथवा उत्पूर्वस्यादादेरीर्ते रूपमेतत् । ईर गतौ कम्पने च । अन्तर्णीतो णिच् । तेन उदीरितुं गमयितुं प्रेषयितुमित्यर्थः । अथच उत्पूर्वस्येरयतेरिव ईर्तेरपि कथनमर्थः स्यात् । प्रयोगशरणा हि वैयाकरणाः ॥ २१–२ ॥ यद्यपि कुरोरयं गोत्रापत्यं कौरवेयो धृतराष्ट्रस्तस्येयं सभा । अथापि कौरवेयाणां धार्तराष्ट्राणां कूटनीतिनियन्त्रितेति विशिष्य कौरवेयसभा । कुरुशब्दाद् गोत्रापत्यार्थे

---

१. **'छिन्नधर्माः'** । वे.ती.पाठोऽपि तथेति भाति ।

**नकुलः करदानाय प्रेषयामास केशवे ।**
**अवमेने हरेर्बुद्धिं सहदेवः कुलक्षयात् ॥ २४ ॥**

**देवकीवसुदेवाद्या मेनिरे मानुषं हरिम् ।**
**भीष्मस्तु भार्गवं राममवमेने युयोध च ॥ २५ ॥**

**द्रोणकर्ण्णद्रौणिकृपाः कृष्णाभावे मनो दधुः ।**
**देवाः शिवाद्या अपि तु विरोधं चक्रिरे क्वचित् ॥ २६ ॥**

**ऋषिमानुषगन्धर्वा वक्तव्याः किमतः परम्[१] ।**
**जन्मजन्मान्तरे[२]ऽज्ञानादवजानन्ति यत् सदा ॥ २७ ॥**

**तस्मादेको वायुरेव धर्म्मे भागवते स्थिरः[३] ।**
**लक्ष्मीः सरस्वती चेति परशुक्लत्रयं श्रुतम्[४] ॥ २८ ॥**

**ॐ ॥ १–२६ ॥ ऋषिमानुषगन्धर्वाः जन्मजन्मान्तरे स्थिताः अज्ञानात् अन्यथाज्ञाना(नुगमात्) एव अवजानन्ति यत् तस्मात् ते ऋष्यादयः छिन्नधर्मा इति वक्तव्याः (किम्) ॥ २७ ॥ शुक्लत्रयं**

---

ढक् । अवतारः प्रवेशः । नारोचयत् । असाम्प्रतं मेने । तत्राप्रीतिं प्रकटयामासेत्यर्थः । **'रुच दीप्तावभिप्रीतौ च'** । पाणिनिस्तु ण्यन्तस्य रुचेः परस्मैपदं न मन्यते–**'न पा-दमि-आङ्यम-आङ्यस-परिमुह-रुचि-नृति-वद-वसः'** [अ.सू.१.३.८९] इति । क्रियाफलं कृष्णस्य कौरवेयसभां प्रत्यगमनमिति परस्मैभाषां प्रायुङ्क्ताऽचार्यः । **'तेषां समुपविष्टानां सर्वेषां पाप-चेतसाम् । तव मध्यावतरणं मम कृष्ण न रोचते'** [उ.प.९२.१६] इति विदुरवचनम् । **'तेषां मध्ये प्रविशेथा यदि त्वं न तन्मतं मम दाशार्हवीर'** [२६] इति च ॥ २३ ॥ केशवे केशवसकाशं दूतं प्रेषयामास । **'तत्रस्थः प्रेषयामास वासुदेवाय भारत । स चास्य गतभी राजन् प्रतिजग्राह शासनम्'** [स.प.३५.१३] इति च । सप्तमी सामीप्य-वचना । अवमेने अवमतया मेने । अगौरवप्रकटनं ह्यवमानना नाम ॥ २४–५ ॥ द्रोणानन्तरं सेनापतित्वात् कर्णस्य द्रौणिकृपाभ्यां पूर्वं ग्रहणम् । शिवाद्या अपि तु । तुना जातापरोक्षत्वं नाम विशेषमाह । जातापरोक्षा अपि शिवाद्याः क्वचिदसुरावेशेन ॥ २६ ॥ ऋषयः, मानुषाः, देवगन्धर्वाः, मानुषगन्धर्वाश्च । अत एव मानुषपदं मध्ये न्यवेशयत् । वर्तमानं जन्म च, जन्मान्तराणि च, भूतानि भावीनि च, तेषां समाहारो जन्मजन्मान्तरम् । जन्मजन्मान्तरेऽनुवर्तमानात् अज्ञानात्, शापादिना असुरावेशादिना अन्यथाज्ञानाच्च । ज्ञानविरुद्धमन्यथाज्ञानमप्यज्ञानमुच्यते ॥ २७ ॥ पुरुषेषु वायुरेक एव ।

---

१. **'परे ।'** २. **'–जन्मान्तराज्ञानात्'** ३. **'स्थितः ।'** ४. **'स्मृतम्'**

सर्वमेतच्च कथितं तत्रतत्रामितात्मना ।
व्यासेनैव पुराणेषु भारते च स्वसंविदा ॥ २९ ॥

यदा ते सर्वशस्त्रास्त्रवेदिनो राजपुत्रकाः ।
बभूवू रङ्गमद्ध्ये तान् भारद्वाजोऽप्यदर्शयत्[१] ॥ ३० ॥

रक्तचन्दनसत्पुष्पवस्त्रशस्त्रगुळोदनैः[२] ।
सम्पूज्य भार्ग्गवं राममनुजज्ञे कुमारकान् ॥ ३१ ॥

ते भीष्मद्रोणविदुरगान्धारीधृतराष्ट्रकान् ।
सराजमण्डलान् नत्वा कुन्तीं चादर्शयञ्छ्रमम् ॥ ३२ ॥

**भागवतधर्मव्यभिचाराभावेन शुद्धत्रयम् ॥ २८ ॥ स्वसंविदा स्वरूपज्ञानेन व्यासेन ॥ २९ ॥ 'सर्वेष्वभ्यधिकोऽर्जुनः'[३] इति प्रसङ्गप्राप्तशङ्कापरिहारत्वेन भीमाधिक्यमुक्त्वा परिसंहृत्य प्रकृतमनुसरति– यदा त इत्यादिना ॥ ३०–१ ॥ श्रममभ्यासम् ॥ ३२–७ ॥**

आखणाश्मा हि सः । वायुरिति वायुपदयोग्यः । सरस्वतीति सरस्वतीपदयोग्या । अतो भारती द्रौपदी च । एतत्सूचनार्थमेव वायुः सरस्वती चेत्याह । अन्यथा 'वायुर्भारती च' इति वा, 'ब्रह्मा सरस्वती च' इति वाऽवक्ष्यत् । भीमप्रस्तावाद् वायुरेवात्र मुख्यो भवतीति **'वायुरेव'** इत्याह । अत एव च तस्य प्रथमनिर्देशः । स्त्रीत्वसामान्याच्च लक्ष्म्याः सरस्वत्या सह निर्देशः । लक्ष्मीः सरस्वती च धर्मे भागवते स्थिरे । कदाऽप्यज्ञानविपर्ययाभ्यां विद्धं न भवतीत्यतितरां शुद्धं परशुक्लम् । परे परमात्मनि कदाऽप्यन्यथाज्ञानराहित्याच्च परशुक्लम् ॥ २८ ॥ न केवलं श्रुतौ श्रुतम् । कथितं च पुराणेषु भारते च । एतच्च लक्ष्म्यादीनां परशुक्लत्वं च, तदन्येषामशुद्धत्वं च । तदपि न यस्यकस्यचित् वचनम् । स्वयं व्यासेनैव कथितम् । अमितः अपरिच्छिन्नः आत्मा देहोऽप्यस्य । **'परो मात्रया तन्वा वृधान'** इति श्रुतिः । अन्यैरविदितस्वरूपेण च । अमितमनसा वा । स्वरूपभूतया संविदा । ज्ञानस्वरूपेण वा व्यासेन ॥ २९ ॥ उक्तं प्रासङ्गिकम् । अथ प्रसक्तमाह– यदा ते । प्रीत्या वर्धिताः शिक्षिताश्च पुत्राः पुत्रकाः । एतावन्तमनेहसमेकान्तशिक्षणमासीत् । इदानीं रङ्गमध्येऽपि सर्वजनसमक्षमदर्शयत् । रञ्जयन्ति प्रेक्षकाणां मनांस्यत्र स्वकौशलप्रदर्शनेनेति रङ्गः ॥ ३० ॥ साहचर्यात् पुष्पाण्यपि रक्तानि स्युरिति भ्रान्तिवारणाय सत्पुष्पेत्याह । प्रायः श्वेतानि सुगन्धीनि च सत्पुष्पाणि । गुळमिश्रमोदनं गुळोदनम् । अचूकवचितस्य डस्य ळ इति हि बह्वृचानां पन्थाः । सम्पूज्य भार्गवम् । तस्य शस्त्रास्त्रविद्याप्रवर्तकत्वात् । विशिष्य स्वगुरुत्वाच्च । तेन देवतापूजा गुरुपूजा चेयं भवति । पूजायाः सम्यक्त्वं नाम शास्त्रविधेरनुत्सर्गः, भक्तिश्रद्धासमृद्धता च । अनुजज्ञे स्वकौशलप्रदर्शनाय । कुमारकान् प्रियशिष्यान् राजकुमारान् ॥ ३१ ॥ प्रथमं द्वयच्कावुक्तौ भीष्मद्रोणेति । अथ

१. **'–द्वाजो व्यदर्शयत्'** २. **'–गुडोदनैः'** ३. **'सर्वेष्वप्यधिकोऽर्जुनः'** इति पठनीयम् । लिपिकृत्प्रमाद इति भाति ।

**सर्वैः प्रदर्शितेऽस्त्रे तु द्रोणादात्तमहास्त्रवित् ।**
**द्रौणिरस्त्राण्यमेयानि दर्शयामास चाधिकम् ॥ ३३ ॥**

**ततोऽप्यतितरां पार्त्थो दिव्यास्त्राणि व्यदर्शयत् ।**
**अविद्ध्यन्माशके पादे पक्षिणः पक्ष्म एव च ॥ ३४ ॥**

**एवमादीनि चित्राणि बहून्येष व्यदर्शयत् ।**
**तदैव कर्ण्ण आगत्य रामोपात्तास्त्रसम्पदम् ॥ ३५ ॥**

**दर्शयन्नधिकः पार्त्थादभूद् राजन्यसंसदि ।**
**कुन्ती निजं सुतं[1] ज्ञात्वा लज्जया नावदच्च[2] तम् ॥ ३६ ॥**

**पार्त्थोऽसहंस्तं युद्धायैवाऽह्वयामास संसदि ।**
**रणायाक्षत्रियाह्वानं जानन् धर्म्मप्रतीपकम् ॥ ३७ ॥**

---

त्र्यच्कौ विदुरगान्धारीति । ततो धृतराष्ट्र इति क्रमः । तत्रापि कुलवृद्धः प्रथमम्, ततः कुलगुरुः । दम्पत्योः सह निर्देशाद-वशिष्टो विदुरस्तत इति पाठक्रमः । नमनक्रमस्तु यथोचितम् । राजमण्डलं समष्टचा । एषोऽयं राजमण्डलस्य प्रणाम-पर्याय इति । तत्र कांश्चिद् व्यष्टचा च बाह्लीकशल्यकुन्तिभोजादीन् । अन्धस्य पुरः प्रदर्शनमित्यरुचिं कनाऽऽह– धृत-राष्ट्रक इति । श्रमं परिश्रमफलमस्त्रपाटवम् ॥ ३२ ॥ अस्त्रे अस्त्रपाटवे । सर्वेषां राजकुमाराणां प्रदर्शनमपि इतरापेक्षयाऽ-धिकमेवाऽसीदिति तुनाऽऽह । ततोऽप्यधिकमस्त्रकौशलानि दर्शयामास । द्रोणादात्तानि स्वीकृतानि महास्त्राणि । आङ्पूर्वस्य दाञो दाणो वा निष्ठायां दा इत्यस्य त इत्यादेशे रूपम् । **'अच उपसर्गात् तः'** [अ.सू.७.४.४७] । अमेयानि अन्यैर्दुरधिगमानि । इयदस्यास्त्रकौशलमिति परिच्छेत्तुमप्यशक्यानि ॥ ३३ ॥ विविधं विचित्रं चादर्शयत् । पक्ष्मे पक्ष्मणि नेत्रच्छदलोमनि । पक्ष्म पक्ष्मं च भवति । तद्यथा लक्ष्म लक्ष्मं च भवति । प्रत्यये भेदः । मनिनि नान्तता । मनि चादन्त-तेति । **'श्रीवत्सलक्ष्मम्'** इति च भागवते । **'उणादयो बहुलम् । केचिदविहिता अप्यूह्याः'** इति वैयाकरणाः । **'कार्याद् विद्यादनूबन्धमेतच्छास्त्रमुणादिषु'** इति च ॥ ३४ ॥ द्रौणेरपि विशिष्टतया विलक्षणतया चादर्शयत् । रामादुप-सदनपूर्वकमात्तानामस्त्राणां सम्पदम् । प्रयोगेष्वनितरसाधारणोऽपूर्वः कौशलातिशयः सम्पत् ॥ ३५ ॥ निजं सुतं ज्ञात्वाऽपि तथा नावदत्, तं च नमन्तं किमपि नावदत् । आदर्शे 'न वदच्च' इत्येव पठ्यते । अल्लोपेन मातृसहजां ममतामपि बलादलूलुपदित्याह ॥ ३६ ॥ क्षत्रियाणां संसदि सूतस्याऽधिक्यमसहन् असहमानः । सेयं गुरोरवज्ञेत्यसहनम्, न

---

१. **'निजसुतम्'**

२. **'न वदच्च'** इति मूलकोशे । हस्तस्खलनं स्यात् । अथच कुन्त्या लज्जाकृतं वचनलोपं सूचयितुमेवायमकारलोप इति वा स्यात् ।

भीमो निवार्य्य बीभत्सुं कर्ण्णायादात् प्रतोदकम् ।
अक्षत्रसंस्कारयुतो जातोऽपि क्षत्रिये कुले ॥ ३८ ॥

न क्षत्रियो हि भवति यथा व्रात्यो द्विजोत्तमः ।
निरुत्तरे कृते कर्ण्णे भीमेनैव सुयोधनः ॥ ३९ ॥

अभ्यषेचयदङ्गेषु राजानं पित्रनुज्ञया ।
धृतराष्ट्रः पक्षपातात् पुत्रस्यानु वशोऽभवत् ॥ ४० ॥

अभिषिक्ते तदा कर्ण्णे प्रायादधिरथः पिता ।
सर्वराजसदोमद्ध्ये ववन्दे तं वृषा तदा ॥ ४१ ॥

तुतुषुः कर्म्मणा तस्य सन्तः सर्वे समागताः ।
भीमदुर्योधनौ तत्र शिक्षासन्दर्शनच्छलात् ॥ ४२ ॥

**प्रतोद(क)मदात् । सूतजातेस्तव रथनियमनमेव धर्मः । न क्षत्रियैः सह (युद्धं) धर्म इति सञ्ज्ञया ज्ञापयन् अश्वताडनाङ्गं तोत्रमदादिति भावः । क्षत्रियकन्यकाजातत्वात् कथमस्य सूतत्वमित्यत आह— अक्षत्रेति । व्रात्यः उपनयनादिसंस्कारहीनो यथा ब्राह्मणो न भवति एवं क्षत्रियकुले जातोऽपि क्षत्रियसंस्काररहितः क्षत्रियो न भवतीति भावः ॥ ३८–९ ॥ पक्षपातात् पुत्रपक्षपातात् । पुत्रस्य आनुकूल्येन वशः अधीनः ॥ ४० ॥ वृषा समर्थः ॥ ४१–२ ॥**

---

स्वासूयामूलमित्यसहन्नित्याह । धर्मप्रतीपकम् । अल्पार्थे कन् । ईषद्धर्मविरोधि । प्रसङ्गविशेषे तु युज्यते । यथा भाविनि युद्धे । सम्प्रति त्वनिवार्यप्रसङ्गाभावादधर्म एवेत्यर्थः । तत्रापि तस्मिन् प्रहरति प्रतिप्रहरणमेव । न प्रथमं प्रहरणायाऽह्वानमित्यर्थः ॥ ३७ ॥ बीभत्सात् कर्मणः स्वयं बीभत्सत इति हि बीभत्सुरुच्यते । प्रतोदकम् । कुत्सायां कन् । कर्णं कुत्सयितुमेव हि भीम एवं चकार । प्रतोद इति तोत्रम् । प्रतुद्यन्तेऽश्वा अनेनेति । करणे घञि तोदः । ष्ट्रनि तोत्रम् । 'ಚಾಟಿ' इति भाषायाम् ॥ ३८ ॥ यथा विप्रकुले जातोऽपि व्रात्यो द्विजोत्तमो न भवति । द्विजेषु वैश्यादिषु त्रिषूत्तमो विप्रः । भीमेन निरुत्तरे कृत एव करणसमनन्तरमेव । स्वयं सर्वविदुषा भीमेनैव निरुत्तरे कृते कथमन्यः समादध्यात् । कथं वा कर्णाह्वानं समर्थयेरन् विना मूर्खं सुयोधनमिति च ॥ ३९ ॥ अनुचरः भृत्य इव पुत्रवचनमक्षरशोऽनुसरन् अनुवशः । पुत्रस्य वशः इच्छाधीनः सन् तस्य दुर्व्यवहारेषु अन्वभवत् अनुकूलोऽभवदिति वा । वशमिच्छामनुगतोऽनुवश इति वा ॥ ४० ॥ प्रायात् पुत्रप्रकर्षदिदृक्षयाऽऽयात् । पिता कर्णस्य । अभीष्टवर्षणाद् वृषा वदान्यतमः कर्णः । पुराणेषु प्रथितं कर्णस्य नामान्तरमेतत् ॥ ४१ ॥ शिक्षा अभ्यासपाटवम् । सङ्गतयोः कोऽधिक इति संस्पर्धया प्रदर्शनं

**समादाय गदे गुर्वी संरम्भादभ्युदीयतुः ।**
**देवासुरमनुष्यादि जगदेतच्चराचरम्** **॥ ४३ ॥**

**सर्वं तदा द्विधा भूतं भीमदुर्य्योधनाश्रयात् ।**
**देवा देवानुकूलाश्च भीममेव समाश्रिताः** **॥ ४४ ॥**

**असुरा आसुराश्चैव दुर्य्योधनसमाश्रयाः ।**
**द्विधाभूता मानुषाश्च[१] देवासुरविभेदतः** **॥ ४५ ॥**

**जय भीम महाबाहो जय दुर्य्योधनेति च ।**
**हुङ्कारांश्चैव [२]भिट्कारांश्चक्रुर्देवासुरा अपि** **॥ ४६ ॥**

**संरम्भात् कोपात् ॥ ४३–९ ॥**

---

सन्दर्शनम् । तस्य च्छलात् । शिक्षापाटवप्रदर्शनं व्याजमात्रम् । किन्तु कोपाटोपेन परस्परनिग्रहायैव प्रायतिषातामित्यर्थः ॥ ४२ ॥ गुर्वी गुर्व्यौ । पूर्वसवर्णः । संरम्भात् सम्भ्रमात् कोपाटोपाच्च । अत एव परस्परं सम्मर्दाय आदाय । अभिमुखमुत्कौ उत्कण्ठतया चेयतुः । अथचैक अभीयाय । अपर उदियाय । कःकः? दुर्योधन अभीयाय । भीमस्तु उदयाद्रौ सूर्य इव रङ्ग उदियायेति । चराचरमिति । चित्रमेतद् यदचरेष्वपि वृक्षादिषु ये सत्त्वप्रचुरास्ते भीमपक्षमशिश्रयिषन्, ये तमःप्रचुरास्ते दुर्योधनपक्षमिति । एवं चरेष्वपि खगा मृगा अपि ॥ ४३ ॥ सामस्त्येन आश्रिताः । आसुरा असुराणामनुकूलास्तत्पक्ष-पातिनः । दुर्योधनं समाश्रयन्त इति दुर्योधनसमाश्रयाः । दुर्योधनः समाश्रयो येषां वा । आसुराश्चैवेत्येवकारः दुर्योधनपदेनान्वेति– दुर्योधन एव सामस्त्येनाऽश्रयो येषामिति । दुर्योधनसमाश्रया एवेति बाह्यान्वयः । असुरा आसुराश्चैव केवलं दुर्योधनसमाश्रयाः । न केऽपि देवा देवानुकूलाश्चेति च । ननु नैवं शक्यं वक्तुम् । यतः स्वयं देवः कर्णो दुर्योधनसमाश्रयो बभूव । न भोः । तत्राप्यसुरावेश एव निमित्तम् । तत्रगतं देवत्वमपोद्य पूर्वमा जननात् तदाविष्टो सहस्रवर्मा, ततश्च नरकासुर-स्तं बलाद् दुर्योधनसमाश्रयं चकार । तदेतत् सर्वमेवकारेणोक्तम् । वक्ष्यति हि–**‘कृष्णेन निहतश्चैव नरकः कर्ण आस्थितः । स च कृष्णार्जुनाभावं करिष्यति न संशयः । भीष्मादींश्च वयं सर्वानाविशाम जयाय ते’** [२२.४२९–३०] इति । **‘सहस्रवर्मनामिनाऽसुरेण वेष्टितोऽजनि’** [११.१५६] इति चोक्तम् । **‘कर्णोऽप्याविष्टचित्तात्मा नरक-स्यान्तरात्मना । अर्जुनस्य वधे क्रूरां करोति स तदा मतिम्’** [व.प.२५३.३४] इति भारते । सत्त्वप्रचुरा देवाः, तमःप्रचुरा असुरा इति मानुषा अपि द्विधाभूताः । राजसेष्वपि सत्वतमसोः सत्वाधिक्ये देवाः, तमआधिक्ये असुरा इत्यर्थः । **‘द्वौ भूतसर्गौ लोकेऽस्मिन् दैव आसुर एव च’** इति हि भगवद्वचनम् ॥ ४४ ॥ मानुषाश्च । चकारेण खगा मृगास्तरुलतादयश्च ॥ ४५ ॥ जय भीम महाबाहविति देवा दैवाश्च । जय दुर्योधन महाबाहविति असुरा आसुराश्च । हुङ्कारांश्च भिट्कारांश्च

---

१. **‘मनुष्याश्च दैवासुर–’**

२. **‘फट्कारान्’** । **‘फिट्कारान्’** इति कचित् ।

दृष्ट्वा जगत् सुसंरब्धं द्रोणोऽथ द्विजसत्तमः ।
नेदं जगद् विनश्येत भीमदुर्य्योधनाश्रयात् ॥ ४७ ॥

इति पुत्रेण तौ वीरौ न्यवारयदरिन्दमौ ।
स्वकीयायांस्वकीयायां योग्यतायां नतु क्वचित् ॥ ४८ ॥

युवयोः सम इत्युक्त्वा द्रौणिरेतौ न्यवारयत् ।
द्रोणाज्ञया वारितौ तौ ययतुः स्वंस्वमालयम् ॥ ४९ ॥

सुरासुरान् सुसंरब्धान् कालेन द्रक्ष्यथेति च ।
ब्रह्मा निवार्य्य ससुरो ययौ सेशः स्वमालयम् ॥ ५० ॥

कर्ण्णं हस्ते प्रगृह्यैव धार्त्तराष्ट्रो गृहं ययौ ।
पार्त्थं हस्ते प्रगृह्यैव भीमः प्रायात् स्वमालयम् ॥ ५१ ॥

पार्त्थेन कर्ण्णो हन्तव्य इत्यासीद् भीमनिश्चयः ।
वैपरीत्येन तस्याऽसीद् दुर्य्योधनविनिश्चयः ॥ ५२ ॥

**कालेन द्रक्ष्यथ, जयपराजयाविति शेषः ॥ ५०–६ ॥**

---

देवा अप्यसुरा अपि । देवासुरविभागस्था मनुष्या अपि । चक्रुरेव निरन्तरं चक्रुरित्यर्थः । परस्परं स्पर्धमानयोरुत्साहजननाय हुङ्कारः । अभिनन्दनाय भिट्कारः । यथा लोके 'ಭೇಷ್','ಭಳರೆ', 'ಭಾಪುರೆ' इत्यादयः ॥ ४६ ॥ स्पर्धमानयोर्जयस्य पराजयस्य वा तन्मयतया स्वेष्वारोपेण प्रेक्षकेष्वेव परस्परं सङ्घर्षाय सन्नहनं संरम्भः । आत्मविस्मृतिमयः संरम्भः सुसंरम्भः । इत्यभिप्रायवान् द्रोणः । द्विजेषु सत्तमः उत्तमः । ब्राह्मण इत्यर्थः । ब्राह्मणोत्तम इति वा । विनश्येत विनश्येत् । जगतोऽविनाशः स्वाभिमत इत्यात्मनेभाषा । यद्वा भावे नश्यत इत्यात्मनेभाषा । भीमदुर्योधनावाश्रित्य ॥ ४७ ॥ इत्यालोच्य न्यवारयत् रङ्गादपनीयावारयत् । अरिं दाम्यत इति दमयत इति वा अरिन्दमौ । **'सञ्ज्ञायां भृ-तृ-वृ-जि-धारि-सहि-तपि-दमः'** [अ.सू.३.२.४६] इति दमेः खच् । खित्वाच्च मुम् । स्वकीयायांस्वकीयायामिति वीप्सात्वादैकपद्यम् । सहप्रयोगनैयत्यं ह्यैकपद्यं नाम ॥ ४८ ॥ एवं स्वंस्वमिति च ॥ ४९ ॥ भीमदुर्योधनयोर्गदापाटवं द्रक्ष्यथ । ससुरः सेशः ब्रह्मा स्वमालयं ययौ । ब्रह्मणा सह देवा अपि स्वंस्वमालयं ययुः, रुद्रश्च स्वमालयं ययावित्यर्थः ॥ ५० ॥ प्रगृह्यैव । एवकारेण स्नेहातिशयमाह । तदपि प्रकटं गृहीत्वा । जानन्तु सर्वे मम निर्धारमिति । प्रकर्षेणायादिति भीमनिर्धारस्य साधुत्वमाह ॥ ५१ ॥ तस्य भीमनिश्चयस्य वैपरीत्येन । अत एव विपरीतो निश्चयो विनिश्चय

तदर्थं नीतिमतुलां चक्रतुस्तावुभावपि ।
तथोत्कर्षे फल्गुनस्य यशसो विजयस्य च ॥ ५३ ॥

उद्योग आसीद् भीमस्य धार्त्तराष्ट्रस्य चान्यथा ।
भीमार्थं केशवोऽन्ये च देवाः फल्गुनपक्षिणः ॥ ५४ ॥

आसन् यथैव रामाद्याः सङ्ग्रहेण हनूमतः ।
सुराः सुग्रीवपक्षस्थाः पूर्वमासंस्तथैव हि ॥ ५५ ॥

तदर्थमेव भीमस्य ह्यनुजत्वं सुरेश्वरः ।
आप पूर्वानुतापेन तेन भीमस्तथाऽकरोत् ॥ ५६ ॥

दुर्योधनार्थं कर्णस्य पक्षिणो दैत्यदानवाः ।
आसुः सर्वे ग्लहावेतावासतुः कर्णफल्गुनौ ॥ ५७ ॥

**एतौ कर्णफल्गुनौ ग्लहावासतुः । द्यूतकर्त्रोर्जयपराजयौ यथा ग्लहानुकूल्यप्रातिकूल्यनिमित्तकावेवं भीम-दुर्योधनयोर्जयपराजयौ पार्थकर्णजयपराजयनिमित्तकाविति भावः ॥ ५७–६८ ॥**

---

इति परिहसतीव । आग्रहपूर्वकश्च निश्चयो विनिश्चयः ॥ ५२ ॥ फल्गुनस्य यद् यशः, यश्च विजयस्तस्योत्कर्षे ॥५३॥ अन्यथा कर्णोत्कर्षे । फल्गुनस्यानुत्कर्षे च । निर्धारपूर्वं निरन्तरा प्रवृत्तिरुद्योगः ॥ ५४ ॥ सुग्रीवेण हनूमतः सङ्ग्रहेणैव, स्वीयत्वेन परिग्रहेणैव निमित्तेन केवलम्, यथा रामाद्याः सुराः सुग्रीवपक्षस्थाः पूर्वमासन् तथैवेदानीमपि । एवकारेण द्वयोः प्रसङ्गयोरत्यन्तसाम्यमाह । तदेतत् शास्त्रप्रसिद्धं हि । कथाया अवलोकनेनैव चक्षुष्मतां स्फुटमेतदिति च सूचयति हीति । तथाहि– अत्र केशवः इन्द्रावतारस्य फल्गुनस्य पक्षी भवन् सूर्यावतारं कर्णं प्रतिपक्षे निचिक्षेप । रामावतारे तु सूर्यावतारस्य सुग्रीवस्य पक्षे बभूव, इन्द्रावतारं च वालिनं जघान । कारणं स्फुटम् । अत्र वायुर्भीमो भूत्वा अर्जुनाग्रजो बभूवेति भगवानपि पार्थपक्षगो बभूव । तत्र वायुर्हनुमान् भूत्वा सुग्रीवपक्षे बभूवेति भगवानपि सुग्रीवपक्षगो बभूव । तेन ज्ञायते यत्र वायुस्तत्र हि केशव इति । के वायौ शं वर्तयन् केशव इति नाम चैतमर्थमवगमयति । कस्य वायोरीशः सन्नेव सदा तेन सह वर्तत इति च ॥ ५५ ॥ पूर्वं वालित्वे सुग्रीवपक्षस्थ इति हनूमन्तं विरुरोध । ततस्तादृशपूर्वापराधजनितेनानुतापेन अस्मिन् जन्मनि भीमशुश्रूषया तत्परिमार्जनार्थं भीमस्यानुजत्वमाप । तेन कारणेन भीमोऽप्यर्जुने तथा प्रीतिमकरोत् । तस्योत्कर्षे उद्योगमकरोच्च ॥ ५६॥ दैत्यदानवा इति तामसा उपलक्ष्यन्ते । ग्लह्येते पण्येते जयपराजयनिश्चयार्थमिति ग्लहौ । 'ದಾಳ' इति भाषायाम् ॥ ५७ ॥

**अथ पृष्टो दक्षिणार्त्थं द्रोण आह कुमारकान् ।**
**बध्वा पाञ्चालराजानं दत्तेत्यूचुस्तथेति ते** ॥ ५८ ॥

**ते धार्त्तराष्ट्राः कर्ण्णेन सहिताः पाण्डवा अपि ।**
**ययुर्द्रोणेन सहिताः पाञ्चालनगरं प्रति** ॥ ५९ ॥

**अथाऽह भीमः सामर्त्थ्यविवेकाभीप्सया गुरुम् ।**
**गर्व एष[१] कुमाराणामनिवार्य्यो द्विजोत्तम ।**
**गच्छन्त्वेतेऽग्रतो नैषां वशगो द्रुपदो भवेत्** ॥ ६० ॥

---

युद्धेष्वननुभवात् कुमारकानित्याह । समासान्तो विधिरनित्य इति, छन्दसि च सर्वेऽपि विधयोऽयोगव्यवच्छेदायैव, नान्ययोगव्यवच्छेदायेति च बोधयन् पाञ्चालराजानमित्याह । अपि च द्रोणस्येदं व्यङ्ग्यवचनं च भवति । य इदानीमपि पाञ्चालराजोऽहमिति जल्पन् अनिति चेष्टते स पाञ्चालराजानः । निरुद्ध्यतां तच्चापलमिति द्रोणोऽपजहासेव । पञ्चन्ते इति पञ्चालाः जनपदाः । पचि व्यक्तीकरणे । अबन्धुरतया सुदूरं व्यक्तो विशालश्च भूभाग इत्यर्थः । पञ्चयन्तीति वा पञ्चालाः । पचि विस्तारवचने । ये सर्वमपि प्रपञ्च्य वर्णयन्ति तेषामयं भूभागः । येषां सुषमा लोकैः प्रपञ्च्यते ते वा पञ्चालाः । **'पञ्चेरालः'** [का.उ.सू.५.१३] इति कातन्त्राः । पञ्चालानामयं राजा पाञ्चालः । पञ्चालवासिनो वा पाञ्चालाः । पाञ्चालानां वा राजा पाञ्चालराजः । बद्ध्वा दत्तेति द्रोण आह । ते तथा कुर्म इत्यूचुः ॥ ५८ ॥ कर्णेन सहिता धार्तराष्ट्राः । ये गुरोरप्यधिकं कर्णं बहुमन्यन्ते । एतेन गुरुभक्तिवैधुर्यं च तेषामाह । द्रोणेन सहिताः पाण्डवाः । पञ्चालानामिदं पाञ्चालं नगरम्, पाञ्चालानां च नगरम्, पाञ्चालस्य द्रुपदस्य च नगरं काम्पिल्यं नाम पुरम् । **'राजराजाश्रयं पुरम्'** इति ह्यभिदधति ॥ ५९ ॥ **'पूर्वमेव तु सम्मन्त्र्य पार्थो द्रोणमथाब्रवीत् । दर्पोद्रेकात् कुमाराणामाचार्य द्विजसत्तम । एषां पराक्रमस्यान्ते वयं कुर्याम साहसम् । एतैरशक्यः पाञ्चालो ग्रहीतुं रण-मूर्धनि । एवमुक्त्वा तु कौन्तेयो भ्रातृभिः सहितोऽनघः । अर्धक्रोशे तु नगरादतिष्ठद् बहिरेव सः'** [आ.प.१४८.१४–६] इति सम्भवे पठ्यते । तत्र पार्थः कौन्तेय इति सावकाशं पदं त्रिष्वपि पार्थेषु । अतः क आहेति निर्णयमाह– अथाऽह भीमः । क्वचित् पुनरेवं पाठः **'–ते पूर्वमेव सम्मन्त्र्य पाण्डवा जनमेजय । मतं यौधिष्ठिरं ज्ञात्वा पार्थो द्रोणमथा-ब्रवीत्'** इति । तदा पार्थ इति भीमार्जुनौ द्वावेव प्रसक्तौ । तत्र अग्रजत्वेन प्रथमप्राप्तत्वात्, भाविकार्ये निर्णयवचनाच्च भीम एवोच्यत इति निर्णिनाय । **'स युद्धकुशलः पार्थः–'** [३४] इत्युपरि पार्थशब्देन भीमस्यैव परामर्शाच्च । स्वेषां परेषां च सामर्थ्ययोर्विवेकाभीप्सया । कस्य सामर्थ्यं कियदिति जानन्तु धार्तराष्ट्रा अपीति । सहैव गमने पाण्डवानां विजयं स्व-विजयं मन्येरन्निति । वयमेव बलवत्तरा इति वृथाभिमानो गर्वः । एषां गर्वभङ्गायैत एवाग्रतो गच्छन्तु ॥ ६० ॥

---

१. **'एषाम्'** इति क्वचित् ।

निवृत्तेष्वकृतार्त्थेषु वयं बध्वा रिपुं तव ।
आनयाम[1] न सन्देह इति तस्थौ ससोदरः ॥ ६१ ॥

सद्रोणकेषु पार्त्थेषु स्थितेष्वन्ये ससूतजाः ।
ययुरात्तप्रहरणाः पाञ्चालान्तःपुरं[2] द्रुतम् ॥ ६२ ॥

कुमारान् ग्रहणेप्सूंस्तानुपयातानुदीक्ष्य सः ।
अक्षोहिणी[3]त्रितययुङ् निस्सृतो द्रुपदो गृहात् ॥ ६३ ॥

ते शरैरभिवर्षन्तः परिवार्य्य कुमारकान् ।
अर्दयामासुरुद्धत्तान्[4] स्त्रियो बालाश्च सर्वशः ॥ ६४ ॥

हर्म्यसंस्थाः स्त्रियो बाला ग्रावभिर्म्मुसलैरपि ।
अत्यर्त्थमर्दयामासुः कुमारान् सुसुखेधितान्[5] ॥ ६५ ॥

द्रुपदस्य वरो ह्यस्ति सूर्य्यदत्तस्तपोबलात् ।
आ योजनात् पुरमुप न त्वा[6] जेष्यति कश्चन ॥ ६६ ॥

---

इत्युक्त्वा, गुरुणा च स्ववचनेऽङ्गीकृते, ससोदरस्तूष्णीं प्रेक्षमाणस्तस्थौ ॥ ६१ ॥ सद्रोणकेष्विति स्वार्थे प्रयुक्तोऽपि कप्रत्ययः परमसात्विकस्य द्रोणस्य सम्प्रत्युपनतां राजसीं प्रतीकारेच्छामनुकम्पत इव । अन्ये धार्तराष्ट्राः । पाञ्चालानां पाञ्चालस्य वा पुरस्यान्तर्ययुः ॥ ६२–३ ॥ उद्धृत्तान् युद्धनीतिमुल्लङ्घ्य वर्तमानान् । दुर्बलत्वादुद्धृत्तत्वाच्च कुमारकानिति कुत्सयामास । ते अक्षोहिणीत्रितयपदेन प्रस्तुताः पाञ्चालसैनिकाः, पुरगताः स्त्रियो बालाश्च वृद्धाश्च । वक्ष्यति हि–**‘स्त्रीबालवृद्धसहितैः पाञ्चालैरप्यनुद्रुताः’** [६८] इति । कुमारकानभिलक्ष्य वर्षन्तः । शरैरभितः क्लेशयन्तश्च । वृषु क्लेशने च । तानर्दयामासुः । सर्वशः सर्वे । सर्वतोदिशं च ॥ ६४ ॥ विशिष्य बालाः । न केवलं बालाः । अबाला वृद्धा अपि । मुसलानि व्रीहीणामवहननेन वितुषीकरणसाधनानि । ‘ഉലക്ക’ इति भाषायाम् । सुतरां केवलं सुखेन वर्धितान् । अपरिचितसङ्गरक्लेशान् । **‘एङि पररूपम्’** [अ.सू.६.१.९४] इत्यत्र आदित्येव केवलमनुवर्तते । उपसर्गाद् धाताविति न नियतमनुवर्तत इत्याचार्याशयः ॥ ६५ ॥ कथं महावीरान् महाचार्याद् द्रोणात् चिराभ्यस्तशस्त्रग्रामान् कर्णादीनर्दयामासुः अबलाः

---

१. **‘आनयामो न’** २. **‘पाञ्चालानां पुरम्’** ३. **‘अक्षौहिणी–’**
४. **‘–रुद्धृत्ताः स्त्रियो–’** इति क्वचित् । ५. **‘सुसुखैधितान्’** ६. **‘न त्वाम्’**

**इति तेन वरेणैव सुखसंवर्द्धिताश्च ते ।**
**भग्नाः कुमारा आवृत्य दुद्रुवुर्य्यत्र पाण्डवाः ॥ ६७ ॥**

**स्त्रीबालवृद्धसहितैः पाञ्चालैरप्यनुद्रुताः ।**
**भीमार्ज्जुनेति वाशन्तो ययुर्य्यत्र स्म पाण्डवाः ॥ ६८ ॥**

**तान् प्रभग्नान् समालोक्य भीमः प्रहरतां वरः ।**
**आरुरोह रथं वीरः पुर आत्तशरासनः ॥ ६९ ॥**

**तमन्वयादिन्द्रसुतो[1] यमौ तस्यैव चक्रयोः ।**
**युधिष्ठिरस्तु द्रोणेन सह तस्थौ निरीक्षकः ॥ ७० ॥**

**आयान्तमग्रतो दृष्ट्वा भीममात्तशरासनम् ।**
**दुद्रुवुः सर्वपाञ्चालाः विविशुः पुरमेव च ॥ ७१ ॥**

**पुरआत्तशरासनः सन्नद्ध इति भावः ॥ ६९–७१ ॥**

---

स्त्रियोऽपि बाला अपि? वरबलादित्याह– द्रुपदस्य । न त्वां जेष्यति कश्चन । अथापि सूर्यनारायणं नत्वा कश्चन जेष्यति । पितुः सखेति त्वामपि नत्वा, गौरवेण प्रह्वीभवन्नेव जेष्यति । तेन तव महान् लाभ एवेत्यर्थः । पाण्डवस्नेह-लाभात्, जामातृलाभाच्च ॥ ६६ ॥ वर एवालं तेषां भङ्गाय । सुखसंवर्धितत्वाच्च पुनरतितरां भग्नाः । सम्यग् दुःखस्य परिचय एव यथा न भवेत् तथा वर्धिताः । आवृत्य पुरं पृष्ठतः कृत्वा ॥६७॥ वाशन्त उच्चैः क्रोशन्तः । वाशृ शब्दे । नन्वयमात्मनेभाषो दिवादिषु पठ्यते । तेन वाश्यमाना इति वक्तव्यम् । सत्यं वाश्यमाना इति वक्तव्यम् । नोवाच तथा । किन्तु वाशन्त इत्याह । तेन ज्ञापयति धातुरयं भूवादिष्वपि पठनीयः शुचधातुरिवेति । **'वाशन्तो देशनाशस्त्विविति बत कुधियां नाशमाशा दशासु'** इति पण्डिताचार्यः । स्मेति भग्नमानानां शोच्यतां विस्मयत इव ॥ ६८ ॥ प्रकटं, प्रकर्षेण च भग्नान्, यथा न पुनर्युद्धाय समुत्सहेरन् । पुरः प्रथमं भीम आरुरोह । पुरः रथारोहणात् पूर्वमेव आत्तं शरासनं येनेत्येकं वा पदम् ॥ ६९ ॥ तमिन्द्रसुत अन्वयात् । चक्रयोरिति निमित्तसप्तमी । चक्रार्थम्, अर्जुनस्य चक्ररक्षार्थमश्विनावन्व-याताम् । **'माद्रेयौ चक्ररक्षौ तु फल्गुनश्च तदाऽकरोत् । सेनाग्रगो भीमसेनस्तदाऽभूद् गदया सह'** [आ.प.१४८.२९] इति च ॥ ७० ॥ कश्चन जेष्यतीति सूर्योक्तं सम्पन्नमित्याह– दुद्रुवुः सर्वपाञ्चालाः । पुरमेव विविशुश्च ॥ ७१ ॥

---

१. **'–दिन्द्रसूनुर्यमौ'**

**द्रुपदस्त्वभ्ययाद् भीमं सपुत्रः [१]सारसेनया ।**
**चक्ररक्षौ तु तस्याऽस्तां युधामन्यूत्तमोजसौ[२]** ॥ ७२ ॥

**धात्रर्य्यमावेशयुतौ विश्वावसुपरावसू ।**
**सुतौ तस्य महावीर्य्यौ[३] सत्यजित् पृष्ठतोऽभवत्** ॥ ७३ ॥

**स मित्रांशयुतो वीरश्चित्रसेनो महारथः ।**
**अग्रतस्तु शिखण्ड्यागाद् रथोदारः शरान् क्षिपन्** ॥ ७४ ॥

**जनमेजयस्तमन्वेव पूर्वं चित्ररथो हि यः ।**
**त्वष्टुरावेशसंयुक्तः स शरानभ्यवर्षत** ॥ ७५ ॥

**तावुभौ विरथौ कृत्वा विचापौ च विवर्म्मकौ ।**
**भीमो जघान तां सेनां सवाजिरथकुञ्जराम्** ॥ ७६ ॥

**सारसेनया प्रबलसेनया ॥ ७२–७ ॥**

पञ्चभिः पुत्रैः सहितः । सारभूतया सेनया सह । किमुक्तं भवति? उत्कृष्टया न्यायादनपेतया च सेनयेति । तथाहि जयादित्यः–**'अर्धर्चादयः शब्दाः पुंसि नपुंसके च भाष्यन्ते । अर्धर्चः । अर्धर्चम् । गोमयः । गोमयम् । शब्दरूपाश्रया चेयं द्विलिङ्गता क्वचिदर्थभेदेनापि व्यवतिष्ठते । यथा सारशब्द उत्कर्षे पुल्लिङ्गः, न्यायादनपेते नपुंसकम्, नैतत् सारमिति'** इति । **'युधामन्युश्च विक्रान्त उत्तमोजाश्च वीर्यवान्'** इति गीतायां गीतविक्रमौ युधामन्यूत्तमोजसौ । युधा युद्धेन मन्यते ज्ञायतेऽस्य वीर्यमिति युधामन्युः । युधायां मन्यन्ते जानन्त्यस्य पौरुषं वीरा इति वा । शत्रुभिर्युधायां युद्धेन वा प्रवृद्धमन्युरिति वा । युधां युद्धविद्यां साधु मन्यतेऽयमिति वा । उत्तममोजोऽस्येत्युत्तमोजाः । एङि पररूपमित्युक्तम् । 'उत्तमौजाः' इत्यर्वाचीनं रूपम् ॥ ७२ ॥ विश्वावसुपरावसू गन्धर्वौ । विश्वो भगवान् । तस्मिन् वसतीति विश्वावसुः । परोऽपि भगवानेव । विश्वसञ्चारित्वाद्वा विश्वावसुः । परेषु स्थानेषु वसन् वा परावसुः । सञ्ज्ञात्वादादिपदवृद्धिः । सत्यचित् तन्नामा सुतः पृष्ठतोऽभवत् पृष्ठगोपः ॥ ७३ ॥ रथेनोदारः महान्, महारथ इत्येतत् ॥ ७४ ॥ जनमेजय इत्यपरश्च सुतः । शत्रुजनमेजयतीति जनमेजयः । **'एजेः खश्'** [अ.सू.३.२.२८] । खित्वात् मुम् । अन्वेव आगात् । अभ्यवर्षत । धारासम्पातमभ्यषिञ्चत्, अभिषिञ्चन्नहिनत् । हिंसन् परान् क्लेशयामास चेत्यर्थः । वृषु सेचनहिंसाक्लेशनेषु । अन्ततः परान् क्लेशयितुमपारयन्नात्मरक्षार्थमेवाभ्यवर्षदित्यात्मनेभाषयाऽऽह । यद्यपि 'वर्ष स्नेहने' इत्यात्मनेभाषो धातुः पठ्यते । परन्तु नातीवात्र सङ्गतः । प्रियव्याकरणानां तदपि स्यात् समाधानम् । नवाक्षरः प्रथमः पाद इति भुरिगनुष्टुप् ॥ ७५ ॥ तावग्रगौ शिखण्डिजनमेजयौ । बाणव्रणितं

१. **'सह सेनया'** २. **'–त्तमौजसौ'** ३. **'महावीरौ'** इति क्वचित् ।

अथैनं शरवर्षेण युधामन्यूत्तमोजसौ[1] ।
अभीयतुस्तौ विरथौ चक्रे भीमो निरायुधौ ॥ ७७ ॥

हस्तप्राप्तं च पाञ्चालं नाग्रहीत् स वृकोदरः ।
[2]गुर्वर्त्थामर्ज्जुनस्योर्वीं प्रतिज्ञां कर्त्तुमप्यृताम् ॥ ७८ ॥

मानभङ्गाय कर्ण्णस्य पार्त्थमेव न्ययोजयत् ।
स शरान् क्षिपतस्तस्य पाञ्चालस्यार्ज्जुनो द्रुतम् ॥ ७९ ॥

पुप्लुवे स्यन्दने चापं छित्वा तं चाग्रहीत् क्षणात् ।
सिंहो मृगमिवाऽदाय स्वरथे चाभिपेतिवान्[3] ॥ ८० ॥

अथ प्रकुपितं सैन्यं फल्गुनं पर्य्यवारयत् ।
जघान भीमस्तरसा तत् सैन्यं शरवृष्टिभिः ॥ ८१ ॥

अथ सत्यजिदभ्यागात् पार्त्थं मुञ्चञ्छरान् बहून् ।
तमर्ज्जुनः क्षणेनैव चक्रे विरथकार्म्मुकम् ॥ ८२ ॥

घ्नन्तं भीमं पुनः सैन्यमर्ज्जुनः प्राह मा भवान् ।
सेनामर्हति राज्ञोऽस्य वीर हन्तुमशेषतः ॥ ८३ ॥

**गुर्वर्थं गुरुप्रयोजना(य प्रतिज्ञां) तद्बन्धनविषयाम् ॥ ७८–९ ॥ स्वरथे अभिपेतिवान् स्वरथे पुप्लुवानित्यर्थः ॥ ८०–३ ॥**

वर्म वर्मकम् । तदपि परस्ताद् विगळितमासेति विवर्मकौ । जघान अर्दयामास । सेनां पदातिवृन्दम् । सवाजिरथ-कुञ्जराम् । तेन चतुरङ्गत्वमुक्तम् ॥ ७६–७ ॥ प्रतिज्ञामृतां कर्तुमपि । कर्णादधिकबलोऽर्जुन इति ग्राहयितुमपि ॥ ७८ ॥ तदेवोत्तरपद्येन स्फुटमाह– मानभङ्गाय ॥ ७९ ॥ स्यन्दने स्यन्दनस्योपरि पुप्लुवे द्रुतं गत्वाऽऽरुरोह । सप्तमी किलाऽऽरोहणं ध्वनयति । रथं पुप्लुवे रथं जगामेत्यर्थः । रथे पुप्लुवे रथमारुरोहेत्यर्थः । एवमुत्तरत्रापि । स्वरथे चाभिपेतिवान् स्वरथाभिमुखं धावित्वा रथमारुह्य तस्थावित्यर्थः ॥ ८०–३ ॥

१. **'–त्तमौजसो'** २. **'गुर्वर्त्थमर्ज्जुन–'** । वे.ती. पाठोऽपि तथेति भाति । ३. **'स्वरथं चाभिपेदिवान्'**

**सम्बन्धयोग्यस्तातस्य सखाऽयं नः सुधार्म्मिकः ।**
**नेष्याम एनमेवातो गुरोर्वचनगौरवात् ॥ ८४ ॥**

**स्नेहपाशं ततश्चक्रे बीभत्सौ द्रुपदोऽधिकम् ।**
**ततः सेनां विहायैव भीमो बीभत्सुमन्वयात्[1] ॥ ८५ ॥**

**मुक्ता कथञ्चिद् भीमात् स्यात्[2] सा सेना दुद्रुवे भयात् ।**
**द्रुपदं स्थापयामासाथार्ज्जुनो द्रोणसन्निधौ ॥ ८६ ॥**

**पप्रच्छैनं तदा द्रोणसख्यमस्त्युत नेति ह[3] ।**
**अस्तीदानीमिति प्राह द्रुपदोऽङ्गिरसां वरम् ॥ ८७ ॥**

**अथाऽह द्रुपदं द्रोणः सख्यमिच्छेऽक्षयं तव ।**
**नह्यराज्ञा[4] भवेत् सख्यं तवेतीदं कृतं मया ॥ ८८ ॥**

**न विप्रधर्म्मो यद् युद्धमतस्त्वं न मया धृतः ।**
**शिष्यैरेतत् कारितं मे तव सख्यमभीप्सता ॥ ८९ ॥**

**अयं नः सम्बन्धयोग्यः ॥ ८४–९१ ॥**

---

नस्तातस्य पाण्डोः सखा अत एव नः स्नेहसम्बन्धयोग्यः । धर्ममाचरन् धार्मिकः । वैष्णवमेव धर्ममाचरन् सुधार्मिकः ॥ ८४ ॥ ततः तस्माद् बीभत्सुवचनात् । तत एव बीभत्सुवचनादेव भीमोऽपि । ततः तच्छ्रवणसमनन्तरमिति वा ॥ ८५ ॥ एवं शत्रुसेना कथञ्चिद् अतिविरळतया भीमात् मुक्ता स्यात् । ततः सा द्रुपदसेना दिष्ट्या मुक्ता दुद्रुवे । **'भीमा-स्यात्'** इति प्रचुरः पाठः स्वरसः ॥ ८६ ॥ पप्रच्छैनं द्रोणः । किमिति? द्रोणसख्यमस्ति, उत वा नास्तीति । अवधारणार्थं परोक्षतया निर्देशः साकूतः । **'ययोरेव समं वित्तं तयोर्मैत्री'** इत्युक्त्वा पूर्वं निराकृतस्य द्रोणस्य सहाधीतिनः, अथापि त्वया विस्मृतस्य द्रोणस्येति । हेति विस्मृतिं विस्मयते । अस्तीति वक्तव्ये इदानीमस्तीति सासूयमाह । इदानीं अङ्गी-कर्तव्यमापतितं ते सख्यं पराजितेन मयेति ॥ ८७ ॥ काकुध्वनिना ज्ञातहृदयो द्रोणः पुनराह– नह्यारोपितं सख्यम् । किन्त्वक्षयं सहजं सख्यमिच्छामीति । बलादारोपितं हि न चिरमवतिष्ठते । अराज्ञा राज्ञः सख्यं न भवेत् । अतः अराज्ञा मया तव सख्यं न भवेत् । अतः मयेदं कृतम् ॥ ८८ ॥ धृतः वशमानीतः । मे शिष्यैः ॥ ८९ ॥

---

१. **'–मन्वगात्'** २. **'भीमास्यात् '** ३. **'द्रोणः सख्यमस्त्युत नेति वा'** ४. **'नह्यराज्ञो भवेत्'**

**अतः सख्यार्थमेवाद्य त्वद्राज्यार्द्धो हृतो मया ।**
**गङ्गाया दक्षिणे कूले त्वं राजैवोत्तरे त्वहम् ॥ ९० ॥**

**नह्यराजत्व एकस्य सख्यं स्यादावयोः सखे ।**
**इत्युक्त्वोन्मुच्य तं द्रोणो राज्यार्द्धं गृह्य चामुतः ॥ ९१ ॥**

**ययौ शिष्यैर्न्नागपुरं न्यवसत् सुखमत्र च ।**
**ब्राह्मण्यत्यागभीरुः स न गृह्णन्[1] धनुरप्यसौ ॥ ९२ ॥**

**धार्त्तराष्ट्रैस्तु भीमस्य भयात् पादौ प्रणम्य च ।**
**शरणार्त्थं याचितत्वात् सपुत्रो युयुधे परैः ॥ ९३ ॥**

**'न विप्रधर्मो यद् युद्धम्' इत्युक्तवान् द्रोणः कस्माद् युद्धमकार्षीदित्यत आह– ब्राह्मण्येति ॥ ९२–५ ॥**

---

अर्द्धः नत्वर्द्धम् । तेन राज्यस्य एकदेशः । न समोंऽशः । **'खण्डे ना समभागेऽर्द्धम्'** इति पुरुषोत्तमः । **'राजाऽसि दक्षिणे कूले भागीरथ्याऽहमुत्तरे'** [आ.प.१४८.७५] इति च । दक्षिणे कूल एव त्वं राजा । दक्षिणे कूले त्वमेव राजा । नाहं तत्र नासाक्षेपं करोमि । अहं तूत्तरे राजा । उत्तर एवाहं राजा । उत्तरे त्वहमेव । मा च स्म त्वमितस्तत्र नासाक्षेपं करोः । अथ चैवं पराजयेऽपि त्वं राजैव । अहं चेदानीं राजैव । तेन निरातङ्कं नः सख्यं स्यादिति । द्रोणविजितां राजधानीं सम्प्रति **'देहरादून्'** [दहरद्रोणपुरम्] इति वदन्ति । दक्षिणोत्तरशब्दयोः ङसिङ्योः स्मात्स्मिनौ वा भवत इत्युक्तम् । तेन दक्षिणस्मिन्, दक्षिणे; उत्तरस्मिन्, उत्तरे इति रूपद्वयमपि साधु [अ.सू.७.१.१६] ॥ ९० ॥ **'सखे'** इति सम्बोधनेन स्वस्यानौपाधिकं सख्यं विचख्यौ । तेनैकस्याराजत्वे सख्यं न स्यादिति द्रुपदाशयं परिहसतीव । यदाह भवभूतिः–**'स्नेहश्च निमित्तसव्यपेक्षश्चेति विप्रतिषिद्धमेतत्'** इति । अत्र श्लोकेऽप्ययमर्थभेदः सूचितः । तथाहि–आवयोरेकस्याराजत्वे परस्परं सख्यं न स्यादिति द्रौपदं पक्षमनूवाद द्रोणः । आवयोरेकस्य ममाराजत्वे एकस्य द्रुपदस्य तवैव सख्यं न स्यात् । ममतु स्यादेवेति द्रौणः पक्षः । तदेतत् **'सखे'** इति सम्बुद्ध्य स्फुटीचकार । उन्मुच्य स्नेहपूर्वकं मोचयित्वा । राज्यार्धं गृह्येति । **'माकन्दीमथ गङ्गायास्तीरे जनपदायुताम् । सोऽध्यावसद् दीनमनाः काम्पिल्यं च पुरोत्तमम् । दक्षिणांश्चापि पञ्चालान् यावच्चर्मण्वती नदी'** [आ.प. १४८.७८–९] इति, **'अहिच्छत्रं च विषयं द्रोणः समभिपद्यत'** [८१] इति च । अत्र च नागपुरे च, स्वायत्तीकृते द्रुपुदराज्यभागे च । धनुर्न गृह्णन्नपि शिष्यै राज्यं शशासेत्यर्थः ॥ ९२ ॥ ननूपरि सेनापतिर्भूत्वा योत्स्यते । यथा क्षत्रिया अपि त्रपेरन् । तदा क्व निलीना ब्राह्मण्यत्यागभीरुता? आह– धार्तराष्ट्रैस्तु । तुना तदन्नेन स्वस्याधमर्णत्वमाह । शरणार्थं रक्षणार्थम् । शरणागतरक्षणमयुद्धादपि परमो धर्म इति मन्वानो युयुधे । आपदि क्षत्रधर्मोऽपि हि विहितो विप्राणाम् ॥ ९३ ॥

---

१. **'सन् नागृह्णाद् धनु–'** । **'सन्न गृह्णन्'** इति क्वचित् ।

एवं हरीच्छयैवासौ क्षात्रं धर्म्ममुपेयिवान् ।
द्रुपदस्तु दिवारात्रं तप्यमानः पराभवात् ॥ ९४ ॥

भीमार्ज्जुनबलं दृष्ट्वा चेच्छन्[१] पाण्डवसंश्रयम् ।
सम्बन्धीत्यर्ज्जुनवचश्चिकीर्षुः सत्यमेव च ॥ ९५ ॥

मार्द्दवं चार्ज्जुने दृष्ट्वा सुतामैच्छत् तदर्त्थतः ।
पुत्रं च द्रोणहन्तारमिच्छन् विप्रवरौ ययौ ॥ ९६ ॥

याजोपयाजावानीयाथार्बुदेन गवां नृपः ।
चकारेष्टिं तु तद्भार्य्या द्विजाभ्यामत्र चाऽहुता ॥ ९७ ॥

द्रुपदात् सुतलब्ध्यर्त्थं साऽहङ्काराद् व्यळम्बयत्[२] ।
किमेतयेत्यवज्ञाय तावुभौ विप्रसत्तमौ ॥ ९८ ॥

**तदर्थतः अर्जुनार्थतः । द्रोणहन्तारं पुत्रं च ऐच्छत् । इत्युभयं इच्छन् याजोपयाजौ विप्रवरौ ययौ । (अथ) तत्प्राप्त्यनन्तरं गवामर्बुदेन (गवामर्बुदं दत्वा) तावानीय ॥ ९६–७ ॥ कृतायामपीष्टौ मदपेक्षाऽस्तीति अहङ्कारात् व्यळम्बयत् । आयतकालक्षेपमकरोत् ॥ ९८–१०० ॥**

धार्तराष्ट्रैर्याचनं व्याजमात्रम् । मुख्यं तु कारणमाह–एवं हरीच्छया । धार्तराष्ट्रपक्षे स्थित्वाऽनेन योद्धव्यमिति हरीच्छया । द्रोणकृतात् पराभवात्, द्रोणेन पराभवं प्राप्य वा, तप्यमानश्च, पाण्डवसंश्रयमिच्छंश्च, अर्जुनवचः सत्यं चिकीर्षुश्चेति कारणत्रयसमुच्चयार्थौ चकारौ । एवकारेण तत्र महातात्पर्यमाह ॥ ९४–५ ॥ सख्यमस्तीति कण्ठादुपरिवचनमित्याह– पुत्रं च द्रोणहन्तारमिच्छन् विप्रवरौ याजोपयाजौ भ्रातरौ ययौ ॥ ९६ ॥ **'तत् कर्म कुरु मे याज वितराम्यर्बुदं गवाम्'** [आ.प.१४९.४१] इति च । अर्बुदशब्दोऽत्र कोटिवचनः । आहुतिदानकाले दम्पतिभ्यामत्र सन्निधातव्यमिति द्रुपदभार्या च अत्र आहुता आहूता, तस्यां द्रुपदात् सुतलब्ध्यर्थं यज्ञशेषप्राशनेन । जुहोतेराहुतिराहुता भवति । ह्वयते राजभार्या त्वाहूता भवति । तथाऽपि प्रतनानां मते द्वयोरपि निष्ठायां द्वयमपि रूपं भवति । द्वयोरपि हूयत इति प्रकृतिसाम्यात् । तेन आहुतेत्याहूतोच्यते । अपि च दीर्घलोपेन तस्या आह्वाने ऋषीणामनादरमाह– आगच्छतु वा, मा वा गादिति । सुता च सुतश्च सुतौ । तयोर्लब्ध्यर्थम् । यजतां नाम याजोपयाजौ, सुतौ पुनर्मया वोढव्यावित्यहङ्कारात् । विळम्बः कालातिपातः । समयेऽनुपस्थितिरित्येतत् । व्यळम्बयत्, तेन व्यडम्बयच्च । महतां परिहासो विडम्बः ॥ ९७–८ ॥

१. 'चैच्छत् पा–' २. 'व्यलम्बयत्'

अजुह्वतां तत् पुत्रार्थं पत्न्याः प्राश्यं[1] हविस्तदा ।
हुते हविषि मन्त्राभ्यां वैष्णवाभ्यां तदैव हि ॥ ९९ ॥

दीप्ताङ्गारनिभो वह्निः [2]कुण्डमद्ध्यात् समुत्थितः ।
किरीटी कुण्डली दीप्तो हेममाली वरासिमान् ॥ १०० ॥

रथेनाऽदित्यवर्ण्णेन नदन् द्रुपदमाद्रवत् ।
धृष्टत्वाद् द्योतनत्वाच्च धृष्टद्युम्न इतीरितः ॥ १०१ ॥

मुनिभिर्द्रुपदेनापि सर्ववेदार्थतत्वविद् ।
अन्वेनं भारती साक्षाद् वेदिमद्ध्यात् समुत्थिता ॥ १०२ ॥

प्राणो हि भरतो नाम सर्वस्य भरणाच्छ्रुतः ।
तद्भार्य्या भारती नाम वेदरूपा सरस्वती ॥ १०३ ॥

**धृष्टद्युम्न इतीदं नामान्वर्थमित्याह– धृष्टत्वादित्यादिना । धृष्टत्वात् धृष्टः । द्योतमानत्वात् द्युम्नः । धृष्टश्चासौ द्युम्नश्चेति धृष्टद्युम्न इत्यन्वर्थकमिति भावः ॥ १०१ ॥ साक्षात् समुत्थिता प्रत्यक्षतया समुत्थिता ॥१०२॥ कथं भारती नामेत्यतः मुख्यप्राणभार्येति तद्भावं वक्तुं भरतनाम्नो निरुक्तिपूर्वं भारतीशब्दं निर्वक्ति– प्राणो**

पुत्रार्थं प्राश्यं पत्न्याः भागभूतं तत् हविः यागाग्नावजुह्वताम् । अजुहुतामित्यर्थः । अजुहोत्, अजुहुताम्, अजुहुवुरिति नवीनाः । प्रतनास्तु रूपद्वयवादिनः–अजुहुतामजुह्वतामिति, अजुहुवुरजुह्वन्निति । अक्षराधिक्येन हुतस्य हविषः प्रभावातिशयमाह । तस्य द्रुपदस्य पुत्रार्थमित्येकं वा पदम् ॥ ९९ ॥ वह्निः मूर्तिमान्, वर्णतो दीप्ताङ्गारनिभः । दीप्तः दिव्यप्रकाशः । दीपी दीप्तौ । ईदित्त्वान्निष्ठायामिडभावः । **‘श्वीदितो निष्ठायाम्’** [अ.सू.७.२.१४] इति ॥ १०० ॥ धृष्टत्वात् प्रगल्भत्वात् शत्रुदमने । द्योतयति सर्वमिति द्योतनत्वाच्च ॥ १०१ ॥ आदौ मुनिभिरीरितः । ततः मुनिवचनमनुमन्वानेन द्रुपदेनापि धृष्टद्युम्न इतीरितः । **‘तयोस्तु नामनी चक्रुर्द्विजाः सम्पूर्णमानसाः । धृष्टत्वादप्रधृष्यत्वाद् द्युम्नाद् द्युत्सम्भवादपि । धृष्टद्युम्नः कुमारोऽयं द्रुपदस्य भवत्विति । कृष्णेत्येवाभवत् कन्या कृष्णाऽभूत् सा हि वर्णतः । तदा तन्मिथुनं जज्ञे द्रुपदस्य महामखे । वैदिकाध्ययने पारं धृष्टद्युम्नो गतस्तदा’** [आ.प.१४९.७१–३] इति च । सर्ववेदार्थं भगवत्तत्वं जानन् दृष्टद्युम्नः । मुख्यतः सर्ववेदार्थतत्वविद् भारती । वेदार्थं परापरतत्वं वा । सर्वान् वेदार्थान् मुख्यार्थं परतत्वं च वा । वेदार्थस्य तत्वं याथातथ्यं वा । साक्षाद् भारती । नत्वावेशमात्रेण । साक्षात् प्रत्यक्षं समुत्थिता वा । समग्रविग्रहा सम्पूर्णयौवना चोत्थिता ॥ १०२॥ **‘प्राणो भरतः’** [ऐ.ब्रा.१०.२] इत्यैतरेयी श्रुतिः । सर्वस्य जगतः । सर्वस्य

१. **‘पत्न्या प्राश्यम्’** २. **‘वह्निकुण्ड–’**

**शंरूपमाश्रिता वायुं श्रीरित्येव च कीर्त्तिता ।**
**आवेशयुक्ता शच्याश्च [१]श्यामळायास्तथोषसः ॥ १०४ ॥**

**ताश्चेन्द्रधर्म्मनासत्यसंश्रयाच्छ्रिय ईरिताः ।**
**सा कृष्णा नामतश्चाऽसीदुत्कृष्टत्वाद्धि योषिताम् ॥ १०५ ॥**

**कृष्णा सा वर्ण्णतश्चाऽसीदुत्कृष्टानन्दिनी च सा ।**
**उत्पत्तितश्च सर्वज्ञा सर्वाभणभूषिता ॥ १०६ ॥**

**हीत्यादिना । नामान्तरं चाऽह सरस्वतीति । कुतः? वेदरूपा । वेदवाचामभिमानित्वत एव सरस्वतीति भावः ॥ १०३ ॥ क्वचिद् भारती च श्रीरित्युच्यते । तदर्थमाह– शमिति । सा किंविशिष्टेत्यत आह– आवेशेति ॥ १०४ ॥ न केवलं भारत्येव श्रीनाम्नीत्याह– ताश्चेति । भारत्या अवतारनामार्थमाह– सेति ॥१०५॥ कृष्शब्दस्योत्कृष्टवाचकत्वात् णशब्दस्याऽनन्दवाचकत्वात् उत्कृष्टानन्दिनीत्वात् कृष्णेत्युक्ता ॥ १०६ ॥**

---

सम्पूर्णगुणस्य भगवतो हृदि भरणाद् वा । सैव वेदरूपा वेदमानिनी । सरस्वती भाविनी भगवद्गुणेषु सदा सरणवती ॥ १०३ ॥ वायुमेवाऽश्रितेति श्रीरिति च कीर्तिता । शं श्रयतीति शंश्रीरिव श्रीः, अनुस्वारस्य तदुत्तरशाकारस्य च लोपेन । शंरूपे प्राणे नित्यं रमत इति च श्रीः । **'शंरूपाने नित्यरतेरियं श्रीः'** इति च महाभारततात्पर्ये । अत्रैव च पूर्वमाह–**'शंरूपे तु रतेर्वायौ श्रीः–'** [२.१२६] इति । वक्ष्यति च–**'श्रीरिति नाम यस्याः शमात्मकेऽस्मिन् रमते यदेषा'** [३२.११९] इति । शतानन्दो हि शमुच्यते । सर्वजीवेष्वधिकानन्दरूपत्वात् । संसारेऽपि प्रायो दुःखविरहात् । तदेवं लक्ष्मीः सरस्वतीभारत्यौ चेति तिस्रः विशेषतः श्रीपदवाच्याः । तथाहि भारते–**'मानुषं विग्रहं कृत्वा साक्षाच्छ्रीरिव वर्णिनी'** [आ.प.१४९.६२] इति सम्भवे । **'तां चाप्येषां योषितं लोककान्तां श्रियं भार्यां व्यदधान्मानुषेषु'** [आ.प.२१४.३०] इति वैवाहिके । अन्ते च–**'श्रीरेषा द्रौपदीरूपा त्वदर्थे मानुषं गता । अयोनिजा लोककान्ता पुण्यगन्धा युधिष्ठिर'** [स्व.प.४.१२] इति । कथं साक्षाद् भारती 'पञ्चानां भार्या' इत्युच्यते? आह– आवेशयुक्तेति ॥ १०४ ॥ तर्हि गतं श्रीपदवाच्यत्वम् । नेत्याह– ताश्चेति । मूलरूपे स्वस्वभर्तृनेव श्रयन्त इति श्रियः । ज्ञातं शास्त्रीयं नाम । अवगतश्चार्थः । लौकिकं नामेदानीमाह– नामतः कृष्णा चाऽसीत् । न केवलं श्रीः, किन्तु कृष्णा च । अथ नामतश्च कृष्णाऽऽसीत् । न केवलं नामतः किन्तु वर्णतश्च । तच्चानुपदमेव वक्ष्यति । तदेव चेतरदेवीनां कृष्णेति नामप्रवृत्तिनिमित्तं मुख्यम् । उत्कृष्यत इति कृष्णा ॥ १०५ ॥ उत्कृष्टः णः आनन्दश्चास्या इति कृष्णा, उत्कृष्टेतिपदेऽन्त्यवर्णस्योपसर्गस्य च लोपेन । अथच उत्कृष्टा आनन्दिनी चेति भिन्ने पदे । उत्कृष्टत्वात्, कृष्यत इति कृषिः । आनन्दरूपत्वाण्णा चेति कृष्णा । उत्कृष्टा+नन्दिनी इति वा प्रतृण्णम् । नन्दिनी आनन्दिनीति चैकोऽर्थः ।

---

१. **'श्यामलाया–'**

**सम्प्राप्तयौवनैवाऽसीदजरा लोकसुन्दरी ।**
**उमांशयुक्ताऽतितरां[1] सर्वलक्षणसंयुता ॥ १०७ ॥**

**पूर्वं ह्युमा च देव्यस्ताः कदाचिद् भर्तृभिर्युताः ।**
**विलासं दर्शयामासुर्ब्रह्मणः पश्यतोऽधिकम् ॥ १०८ ॥**

**शशाप तास्तदा ब्रह्मा मानुषीं योनिमाप्स्यथ ।**
**तत्रान्यगाश्च भवतेत्येवं शप्ताः सुराङ्गनाः ॥ १०९ ॥**

**शच्यादिभ्यः अतितराम् । सर्वव्यवहारेषु भारत्या (सहा)वस्थानादिति भावः ॥ १०७ ॥ भारत्या उमावेशे कारणमाह– पूर्वमित्यादिना । अधिकं विलासं दर्शयामासुः ॥ १०८ ॥ तदा ब्रह्मा ताः शशाप । तत्र मानुषजन्मनि स्वपतेः अन्यगाः ॥ १०९ ॥**

---

नन्दयतीति वा नन्दिनी । उत्पत्तित एव सम्प्राप्तयौवनैव चाऽसीत् । एवकारेण वार्धकेऽप्यलुप्तयौवनेत्याह । तदेव स्फुट-माह– अजरा लोकसुन्दरी । तदात्वे भूलोके रमावर्जमियमेकैव सर्वाधिका सुन्दरी । लोके जीवलोके इयमनन्य-सुन्दरीति वा । पूर्वानुक्तं सन्निधानान्तरमाह– उमांशयुक्ता । उमाया अस्मिन् देहे पत्युः श्रयणाभावान्न श्रीशब्दवाच्यतेति पृथगुक्तिः । शच्यादिभ्योऽधिकसन्निधानाच्च । अत एव तत्राऽवेशयुक्ता इत्याह । अत्र त्वंशयुक्तेति । शच्यादीनामा-वेशः । यथा विष्णोर्विशेषावेशोऽर्जुने । उमाया अंशः । शप्ततया सदा देहाभिमानवती पार्वती । पार्वत्यादीनां चतसृणा-मनुग्राहकतया स्वेच्छया धृतदेहा भारती । अन्यासां सर्वदाऽभिमानस्याप्यभावादावेशयुक्ता इति युक्तमुक्तम् । अत एव शच्यादिभ्योऽतितरामुमांशयुक्ता । त्रिलोकसुन्दरीत्वात् अतितरां सर्वलक्षणसंयुता च । शच्याद्याः सर्वलक्षणयुताः । पार्वत्याद्याः सर्वलक्षणसंयुताः । भारतीसरस्वत्यावतितरां सर्वलक्षणसंयुते । लक्ष्मीरतितमां सर्वलक्षणसंयुतेति विवेकः ॥ १०६–७ ॥ उमायाः प्राधान्ये पूर्वतनं कारणमाह–पूर्वं हीति । देव्यस्ताः शचीश्यामलोषसः । ब्रह्मणः पश्यतः । अनादरे षष्ठी । पश्यन्तं ब्रह्माणमनादृत्य । पश्यतां मन्मथजननो मनउन्मथनो विलासिनीनां हावविशेषो विलासः । यद्यपि सहज-विलासाः कामिन्यः । तास्तु सहजादप्यधिकमसहजं विलासं दर्शयामासुः । तत्रापि भर्तृभिर्युताः । यत्र विशिष्य संयमेन वर्तितव्यम् । यत्र परेषां मनःसंयमश्लथनं महानपराधः । यदहो भर्तरि पश्यति वित्रपो विलासः । कथं देवस्त्रीष्विदं सम्भाव्यते? असुरावेशादिति गृहाण ॥ १०८ ॥ ब्रह्मा इति शशाप । किमिति? 'मानुषीं योनिमाप्नुत । तत्रान्यगाश्च भवत' इति । मानुषीं योनिं मनुष्यलोके जननमित्यर्थः । मनुष्ययोग्यं स्थानं भूमिमिति वा । योनिशब्दो हि स्थानवचनः ॥ १०९ ॥

---

१. '–क्ता नितराम्'

विचार्य्य भारतीमेत्य सर्वमस्यै निवेद्य च ।
सहस्रवत्सरं चैनां शुश्रूषित्वा बभाषिरे ॥ ११० ॥

देवि नो मानुषं प्राप्यमन्यगात्वं च सर्वथा ।
तथाऽपि[1] मारुतादन्यं न स्पृशेम कथञ्चन ॥ १११ ॥

ब्रह्मणैव च शप्ताः स्म[2] पूर्वं चान्यत्र लीलया ।
एकदेहत्वमाप्यैनं यदा वञ्चयितुं गताः ॥ ११२ ॥

एकदेहा मानुषत्वमाप्स्यथ[3] त्रिश उद्धताः ।
त्रिशो मद्वञ्चनायेता इति तेनोदिता वयम् ॥ ११३ ॥

अतस्त्वय्यैकदेहत्वमिच्छामो देवि जन्मसु ।
चतुर्ष्वपि यतोऽस्माकं शापद्वयनिमित्ततः ॥ ११४ ॥

**अन्यगात्वे च कं गच्छाम इति विचार्य, वायुमेव गमिष्याम इति निश्चित्य भारत्या अनुज्ञां ग्रहीतुं भारतीमेत्य । सर्वं व्यापारं शापप्रकारं च ॥ ११०–१ ॥ पूर्वमन्यत्र शप्ताः स्म ॥ ११२ ॥ त्रिशः मद्वञ्चनाय इताः भवत्यः एकदेहाः मानुषत्वमाप्स्यथ ॥ ११३ ॥ अस्माकं शापद्वयनिमित्ततः । एकदेहास्त्रिशो मानुषत्व-**

ऋते वायोर्मा नामान्यपुरुषगमनं भूदिति विचार्य, तदर्थं भारतीमेत्य, सर्वं वृत्तमस्यै निवेद्य च । विशेषानुल्लेखे प्रायो वत्सर-पदेन मानुषवत्सर एव ३६०दिनात्मको गृह्यते । बभाषिरे **'नान्य आप्नोति मारुतात्'** [११६] इत्यन्तम् ॥ ११० ॥ मानुषं मनुष्यलोके जन्म । सर्वथेति । ब्रह्मशापत्वेन केनाप्युपायेनापरिहार्यमित्यर्थः । न भोगार्थं स्पृशेम । कथञ्चन अकामनयाऽपि ॥ १११ ॥ इतः पूर्वं च ब्रह्मणैव शप्ताः । चकारेण स्वलीलाया नीचतामाहुः । **'नीचत्वे चः प्रयुज्यते'** इति हि स्मरन्ति । पार्वत्या एकदेहत्वमाप्य । लीलया वञ्चयितुम् । लीला परिहासमौर्ख्यम् । कथं पार्वत्याद्या बभ्रमुः– ब्रह्माऽपि विप्रलभ्येतेति? दत्तमुत्तरमसुरावेशादिति । तेषां भ्रम एता भ्रामयति । ब्रह्माऽपि सकृत् सेहे । द्विरपि सेहे । ताश्च द्विवारमपि नायं नः परिचिकायेति पुनस्तृतीयमेकदेहा जग्मुः । अहो असुरावेशजा मौर्ख्यस्य परा काष्ठा । तदा तु तन्न सेहे ब्रह्मा । युक्तमेतदसहनमित्याहुः स्मेति । अतः शप्ताः ॥ ११२ ॥ किमिति शशाप– एकदेहाः । त्रिशो मद्वञ्चनायेता इति हेतोः त्रिशो मानुषत्वमाप्स्यथ इति तेनोदिताः ॥ ११३ ॥ शापद्वयमिमित्ततः । 'मानुषीं योनिमाप्स्यथ, तत्रान्यगाश्च भवत' इत्येकः शापः । 'त्रिशो मानुष्यमाप्स्यथ' इत्यपरः । एवं शापद्वयेन निमित्तेन चत्वारि जन्मानि भवन्ति । तत्र

१. **'तत्राऽपि'** २. **'शप्ताः स्मः'** ३. **'मानुषत्वं प्राप्स्यथ'** इति क्वचित् ।

चतुर्ज्जन्म भवेद् भूमौ त्वां नान्यो मारुताद् व्रजेत् ।
नियमोऽयं हरेर्य्यस्मादनादिर्न्नित्य एव च ॥ ११५ ॥

अतस्त्वयैकदेहान्नो[1] नान्य आप्नोति मारुतात् ।
इतीरिते तथेत्युक्त्वा पार्वत्यादियुतैव सा ॥ ११६ ॥

विप्रकन्याऽभवत् तत्र चतस्रः पार्वतीयुताः ।
एकदेहस्थिताश्चक्रुर्ग्गिरीशाय तपो महत् ॥ ११७ ॥

तद्देहस्था भारती तु रुद्रदेहस्थितं हरिम् ।
तोषयामास तपसा कर्म्मैक्यार्त्थं धृतव्रता ॥ ११८ ॥

**माप्स्यथेत्येकः शापः । तस्मिन् शापे जन्मत्रयम् । मानुषीं योनिमाप्स्यथ, अन्यगाश्च भवतेत्येकः शापः । तस्मिन् शापे एकं जन्म । एवं शापद्वयनिमित्ततः भूमौ चतुर्जन्म भवेत् यतः अतः हे देवीति सम्बन्धः । एकदेहत्वेन किं प्रयोजनमित्यतस्तदा(शय)माह –त्वामिति । अन्यगामित्वेऽपि मारुतगामित्वमेवास्माकं त्वयैकदेहत्वप्रयोजनमिति भावः ॥ ११४–७ ॥ रुद्रदेहस्थितं रुद्रात्मानं हरिम् । कर्मैक्यार्थं रुद्रपरिचर्यादिः**

---

कस्मिन् जन्मन्यन्यगात्वं नः स्यादिति न वयं जानीमः । अतश्चतुर्ष्वपि जन्मसु त्वयैकदेहत्वमिच्छामः ॥ ११४ ॥ चतुर्णां जन्मनां समाहारः चतुर्जन्म । चतुर्वारं वा जन्म चतुर्जन्म । हरेरेवायं नियमः । नित्यश्च अनन्तश्च । नित्यो नियत इति वा ॥ ११५ ॥ भारतीयोगे वयमपि पुंवत् प्रभवाम इति एकदेहानिति पुल्लिङ्गप्रयोगः । अथवा **'एकदेहात्'** इति प्रतृण्णम् । त्वया एकः अभिन्नो देहः, एकदेहः । तस्मात् कारणात् । त्वया एकः एकीभूतः समवेतो देहो यस्य तस्मान्मारुतादिति वा । **'एकदेहा नः'** इति पाठे स्फुटोऽर्थः । यद्यपि शापनिमित्तमेकदेहत्वं त्रिष्वेव जन्मसु । अन्यगात्वं चैकस्मिन्नेव जन्मनि । अथापि यतमे जन्मन्यन्यगात्वमिति निर्णयाभावात् सौन्दर्यातिशयेन सर्वत्रापि धर्षणसम्भावनया च चतुर्ष्वपि जन्मसु भारत्या सह जननमभ्यार्थयन्त । अन्यगात्वशापे भिन्नदेहत्वानुक्तेश्चतुर्ष्वपि एकदेहत्वमिति शापद्वयस्यापि सम्भूय प्रवृत्तिरविरोधात् । विप्रकन्या, इन्द्रसेना, द्रौपदी, चन्द्रेति चत्वारि जन्मानि । तत्र विप्रकन्या हनुमदवतारे । इन्द्रसेना नळनन्दिनी । भीमावतारे द्रौपदी, मध्वावतारे चन्द्रेति च । **'काळी चन्द्रेति चोच्यते'** [म.भा.ता.नि.२.१२०] इति । **'तदैव कृष्णाऽपि भुवि प्रजाता'** [३२.१३२] इति च ॥ ११६ ॥ भारते व्यत्यस्य विक्षिप्य चोदितां पञ्चदेवीकथां जन्मानुक्रमेण स्फुटमाह– विप्रकन्येति । **'आसीत् तपोवने काचिद्दषेः कन्या महात्मनः । नाध्यगच्छत् पतिं सा तु कन्या रूपवती सती । तोषयामास तपसा सा किलोग्रेण शङ्करम्'** [आ.प.२१४.५६] इति वैवाहिके । शचीश्याम-लोषसः पार्वतीयुताश्चतस्रः । पार्वतीयुतत्वादेव गिरीशाय तपश्चक्रुः ॥ ११७ ॥ तासां चतसृणां प्रवृत्तिं साक्षितया निरीक्ष-

---

१. **'–देहा नो–'** । तथैव वे.ती. पाठोऽपीति भाति ।

तस्यै स रुद्रदेहस्थो हरिः प्रादाद् वरं प्रभुः ।
अनन्ततोषणं विष्णोः स्वभर्त्रा सह जन्मसु ॥ ११९ ॥

सर्वेष्वपीति चान्यासां ददौ शङ्कर एव च ।
वरं स्वभर्तृसंयोगं मानुषेष्वपि जन्मसु ॥ १२० ॥

ततस्तदैव देहं ता विसृज्य नळनन्दिनी[१] ।
बभूवुरिन्द्रसेनेति देहैक्येन सुसङ्गताः ॥ १२१ ॥

तदाऽऽसीन्मुद्गलो नाम मुनिस्तपसि संस्थितः ।
चकमे पुत्रिकां ब्रह्मेत्यशृणोत् स कथान्तरे ॥ १२२ ॥

**तासां कर्मणः स्वकर्मणश्च एकविषयत्वार्थम् । अन्यथा विरुद्धकर्मत्वेन एकशरीरस्थानां तदुन्मथनादिप्रसङ्ग इति भावः ॥ ११८ ॥ रुद्रदेहस्थः स हरिः तस्यै इति वरं ददौ । किमिति? तत्राऽह– अनन्तेति । सर्वेष्वपि जन्मसु स्वभर्त्रा सह विष्णोरनन्ततोषणम् । अन्यासां शङ्कर एव मानुषेष्वपि जन्मसु स्वभर्तृसंयोगं वरं ददौ । भारत्याः काम्यवरप्रार्थनाभावात्, स्वभर्तृसंयोगो नाम स्वभर्त्रा सह विष्णोरनन्तप्रीतियोगः प्रार्थितः । हरिणा स एव वरो दत्तः । अन्यासां तु केवलं स्वभर्तृसंयोग एव रुद्रेण दत्त इति हृदयम् ॥ ११९–२० ॥ देवीनां बहुत्वाद् बभूवुः इति बहुवचनम् । नळनन्दिनीदेहस्यैकत्वात् नळनन्दिनी इत्येकवचनम् । ततः वरप्राप्त्यनन्तरं तदैव शीघ्रं देहं (विप्रकन्या)देहं विसृज्य । सुसङ्गताः सम्यगेककार्य-बुद्धयः । देहैक्येन नळनन्दिनी नळस्य पुत्री इन्द्रसेनानाम्नी इति बभूवुः ॥ १२१ ॥ चकमे अकामयत् ।**

---

माणा भारती कर्मैक्यार्थं स्वयमपि तपसा रुद्रदेहस्थं हरिं तोषयामास । अन्यास्तु रुद्रान्तर्यामिणं हरिं प्रतीकभूतं रुद्रं च तोषयामासुः । भारती तु केवलं हरिमिति विशेषार्थस्तुः । तेन कर्मैक्यार्थमित्यत्र कर्मेति शरीरक्रिया । न मानसीति न कोऽपि दोषः ॥ ११८ ॥ सर्वेष्वपि जन्मसु । पार्वत्यादिभिः सह चत्वारि जन्मानि । केवला च भारती भीमावतारे काशिराजदुहिता काळी बभूवेति पञ्चस्वपि जन्मसु । नळनन्दिनीत्वे स्वभर्त्रा मुद्गलस्थेन वायुना सह । अन्यत्र अवतारत्रयगतेन साक्षाद् वायुना सह विष्णोरनन्ततोषणम् ॥ ११९ ॥ भारत्याः सर्वेष्वपि जन्मसु स्वभर्त्रा संयोग इति सहयोगः । न दाम्पत्यम् । नाळायनीजन्मनि द्रौपदीजन्मनि च दाम्पत्यमपि । अन्यासां मूलरुपे सदा स्वभर्त्रा संयोगः । मानुषेष्वपि जन्मसु कदाचित् । द्रौपदीजन्मनीति यावत् । न सर्वेष्वपि । त्रिशो विधातारमविवश्चयिषन्निति त्रिषु जन्मसु भर्तृसंयोगवञ्चिता बभूवुः ॥ १२० ॥ नळस्य नन्दिनी पुत्री, इन्द्रसेनेति नाम्ना । इन्द्र इति प्राणश्च नारायणश्च । ताभ्यामेव केवलं सेना सस्वामिका । सुसङ्गताः, ऐकमत्येन एकस्मिन् देहे सह स्थिताः ॥ १२१ ॥ सदा मुदं गिलन् मुद्गलः । मोदत इति मुद्गल इति वैयाकरणाः । तत्पक्षेऽलः प्रत्ययः, गश्चादेशः । चकमे कामयाञ्चक्रे । कमु कान्तौ । कान्तिरभि-

---

१. 'नलनन्दिनी'

अपाहसत् सोऽब्जयोनिं शशापैनं चतुर्म्मुखः ।
भारत्याद्याः पञ्च देवीर्ग्गच्छ मानिन्नभूतये ॥ १२३ ॥

इतीरितस्तं तपसा तोषयामास मुद्गलः ।
शापानुग्रहमस्याथ चक्रे कञ्जसमुद्भवः ॥ १२४ ॥

न त्वं यास्यसि ता देवीर्म्मारुतस्त्वच्छरीरगः ।
यास्यति त्वं सदा[1] मूर्च्छां गतो नैव बिबुद्ध्यसे ॥ १२५ ॥

नच पापं ततस्ते स्यादित्युक्ते चैनमाविशत् ।
[2]मारुतोऽथेन्द्रसेनां च गृहीत्वाऽथाभवद् गृही ॥ १२६ ॥

**कथान्तरे कस्याश्चित् कथायाम् ॥ १२२ ॥ तर्हि साध्यो नहीत्याशङ्क्य परिहरति– नेति । भूतये सुखाय न, किन्तु पापायेति भावः ॥ १२३–५ ॥ अथ मुद्गलशापानुग्रहानन्तरं मारुतः एनं मुद्गलं आविशत् । अथ तत्प्रवेशानन्तरं इन्द्रसेनां गृहीत्वा उदुह्य अथ मङ्गलतया गृही गृहस्थः अभवत् । 'मङ्गलानन्तरारम्भ-प्रश्नकात्स्न्र्येष्वथो अथ' इत्यभिधानम् ॥ १२६–३० ॥**

---

लाषः । **'कमेर्णिङ्'** [अ.सू.३.१.३०] इति णिङ्प्रत्यये कामयाञ्चक्रे, कामयामास । **'अयादय आर्धधातुके वा'** [३१] इति णिङभावपक्षे चकमे ॥ १२२ ॥ अहो महान्तोऽपि महिळामोहोपहताः क्षुद्रमीहन्त इत्यपाहसत् । असुरावेशादेव । यस्याब्जमेव योनिरुत्पत्तिस्थानम्, न स्त्रीयोनिः, स कथं स्तनयोनिचकितः स्यात्? जितकामोऽप्यजितक्रोध इव शशाप । गच्छ कामयस्वेति हृदयम् । सम्भुङ्क्ष्वेति प्रातीतिकोऽर्थः । परेषामपहासेनाऽत्मानं सुभगं मन्यमानो मानी । आत्म-सम्भावित इत्यर्थः । अभूतये अश्रेयसे । यत् पञ्चदेवीगमनं भूतये न स्यादिति वा ॥ १२३ ॥ शापजदोषापनयनेना-नुग्रहम् । चञ्चरीकोऽपि कञ्जभवो भवति । मकरन्दोऽपि कञ्जसम्भवो भवति । अतः कञ्जसमुद्भव इत्याह । अपिच सर्वमपि विश्वं नाभिकञ्जोद्भवम् । अयं प्रथममुद्बभूवेति समुद्भवः । अथ तपसा तुष्टः ॥ १२४ ॥ नैव विबुध्यसे नैव जागर्षि । ग्रहग्रस्त इवाऽत्मप्रज्ञाविधुरो जीवसि । **'इन्द्रसेनेति विख्याता पुरा नाळायनी शुभा । मुद्गलं पतिमासाद्य चचार विगत-ज्वरा'** [आ.प.२१३.३], **'नाळायनी चेन्द्रसेना बभूव वश्या नित्यं मुद्गलस्याऽजमीढ'** [व.प.११४.२४], **'नाळायनी चेन्द्रसेना रूपेणाप्रतिमा भुवि । पतिमन्वचरद् वृद्धं पुरा वर्षसहस्रिणम्'** [वि.प.२४.२१] इत्यादि भारतवचना-नामन्तरङ्गमनेनोदघाटि ॥ १२५ ॥ तेन ते पञ्चदेवीगमनं च न स्यात् । पापं च न स्यात् । मारुतो मुद्गलमाविशच्च । गृहीत्वा परिगृह्य । गृही चाभवत् । चकारादीदृशी घटनाऽतीव दुर्लभेति चाऽह । **'दौर्लभ्ये चः प्रयुज्यते'** इति हि स्मरन्ति । अथ मारुतो मुद्गलमाविशत् । अथ इन्द्रसेनां गृहीत्वा चाभवद् गृही । यद्वा अथ ब्रह्मवचनानन्तरमिति

---

१. **'त्वं तदा'**

२. आदर्शे **'मारुतेऽथेन्द्र–'** इति पठ्यते । स्खलनं सम्भाव्यते ।

रेमे च स तया सार्द्धं दीर्घकालं जगत्प्रभुः ।
ततो मुद्गलमुद्बोद्ध्य ययौ च स्वं निकेतनम् ॥ १२७ ॥

ततो देशान्तरं गत्वा तपश्चक्रे स मुद्गलः ।
सेन्द्रसेना वियुक्ताऽथ[१] भर्त्रा चक्रे महत् तपः ॥ १२८ ॥

तद्देहगा भारती तु केशवं शङ्करे स्थितम् ।
तोषयामास तपसा कर्म्मैक्यार्त्थं हि पूर्ववत् ॥ १२९ ॥

उमाद्या रौद्रमेवात्र तपश्चक्रुर्य्यथा पुरा ।
प्रत्यक्षे च शिवे जाते तद्देहस्थे च केशवे ॥ १३० ॥

पृथक्पृथक् स्वभर्त्रास्त्यै ताः पञ्चाप्येकदेहगाः ।
प्रार्त्थयामासुरभवत् पञ्चकृत्वो वचो हि तत् ॥ १३१ ॥

**स्वभर्त्रास्त्यै वरं पृथक्पृथक् प्रार्थयामासुः । तद् वचः पञ्चानां स्वस्वपतिप्रार्थनानुरूपं वचः पञ्चकृत्वः पञ्चवारं अभवत् हि यतः तस्मात् पतिरस्त्विति वचोऽपि पञ्चकृत्वोऽभवदिति वाक्यशेषः ॥ १३१ ॥**

प्रथमाथशब्दार्थः । अत इत्यर्थे द्वितीयोऽथः । अतः ब्रह्मवचनादेव हेतोः । ब्रह्मवचनमवितथं कर्तुमिति यावत् । स्वभक्ते मुद्गले कारुण्याच्च । तं महापातकाच्यावयितुमिति यावत् । नचैतदमाङ्गलिकं मुद्गलदाम्पत्यमिति मन्तव्यम् । परममङ्गल-मेतद् भारतीमारुतयोर्दाम्पत्यमिति चाऽह– अथाभवद् गृही ॥ १२६ ॥ उद्बोध्य जागरयित्वा स्वोपास्यं निकेतनं निलयनं हरिं ययौ । यत्र हरिः सदा निकेतति तं च स्वलोकम् ॥ १२७ ॥ तत इति । **'ततः कदाचित् धर्मात्मा तृप्तः कामैर्व्य-रज्यत । अन्विच्छन् परमं धर्मं ब्रह्मयोगपरोऽभवत्'** [आ.प.२१३.५] इति च । इन्द्रसेनेति । तद्देहगा पञ्च देव्य इत्यर्थः । लोकदृष्ट्या भर्त्रा मुद्गलेन । वस्तुतो मारुतेन । अत एव वायुश्च स्वं निकेतनं ययावित्याह ॥ १२८ ॥ पञ्चसु भारत्याः कश्चन विशेषमाह– तद्देहगा भारती तु । विप्रकन्यात्वे स्वभर्तृसंयोगो वरो लब्धः । लब्धश्च भर्तृसंयोगो भारत्या नाळायनीत्वे । उमादीनां वर एव लब्धः । न भर्तृसंयोगः । तमिमं विशेषं तुनाऽऽह– लब्धभर्तृसंयोगाऽपि भारतीति । तथाऽपि सा पूर्ववत् कर्मैक्यार्थं तपश्चक्रे । उमाद्यास्तु रुद्रेण भर्तृलाभवरं लब्ध्वाऽपि न स्वभर्तृनलप्सतेति अपरितोषात् पुना रौद्रं तपश्चक्रुः । भारती तु तपसा केशवं तोषयामासेति । रौद्रं तप इत्युग्रं च तपः । कस्य मनस ईशः केशः शिवः । तमन्तः स्थित्वा वर्तयतीति केशवः । प्रत्यक्षे च शिवे जात इति । उमाद्याः शिवं ददृशुः । भारती शिवं च तद्देहस्थं केशवं च ददर्शेत्यर्थः । उमाद्या हि विशिष्य प्रतीकमुपासिषत । भारती प्रतीकगतं प्रतीकिनम् ॥ १२९–३० ॥ पृथक्पृथक्

१. '–युक्ता च भर्त्रा'

**शिवदेहस्थितो विष्णुर्भारत्यै तु ददौ पतिम् ।**
**अन्यासां शिव एवाथ प्रददौ चतुरः पतीन् ॥ १३२ ॥**

**देव्यश्चतस्रस्तु तदा दत्तमात्रे वरेऽमुना ।**
**देवानामवतारार्थं पञ्च देव्यः स्म इत्यथ ॥ १३३ ॥**

**नाजानन्नेकदेहत्वाच्चिद्योगात् क्षीरनीरवत् ।**
**ताः श्रुत्वा स्वपतिं देवि नचिरात् प्राप्स्यसीति च ॥ १३४ ॥**

**तत्रायं प्रभेदः । शिवदेहस्थित इत्यादिना भारतीवरदानमुक्ताभिप्रायम् ॥ १३२–३ ॥ चिद्योगात् चितां परस्परसंश्लेषात् ॥ १३४ ॥**

---

प्रार्थयामासुरिति । तत्र तावत् प्रथमं केशवाशयं जानाना भारती 'पतिं देहि' इति प्रार्थयामास । यद्यपि तस्मिन्नपि जनुषि सा मुद्गलाविष्टं पतिमलब्ध्वैव । अथापि भूमौ साक्षादवतीर्णं पतिं देहीत्ययाचिष्ट । अथ गतं कर्मैक्यम् । तत उमादिष्वेकैकाऽपि स्वभर्तृयोगकातर्यादिव परवशा, स्वप्नादिवोद्बुद्धा, केनाप्यन्तर्निविष्टेन ग्रहेणेव प्रचोदिता, किं निर्वृत्तमित्यवगमात् पूर्वं पृथक्पृथक् प्रार्थयामास– पतिं देहीति । तेन हि तद् वचः पञ्चकृत्वोऽभवत् । पञ्चकृत्वः पञ्च वारान् । **'सङ्ख्यायाः क्रियाभ्यावृत्तिगणने कृत्वसुच्'** [अ.सू.५.४.१७] इति हि पाणिनिः स्मरति । **'पौनःपुन्यमभ्यावृत्तिः । एककर्तृकाणां तुल्यजातीयानां क्रियाणां जन्मसङ्ख्यानं क्रियाभ्यावृत्तिगणनम्'** इति जयादित्यः । ननु कथमत्र क्रियाया एककर्तृकत्वम्? पञ्च देव्यः किल प्रार्थयामासुः । न भोः । दर्शनभाषा वैयाकरणाः । नळनन्दिनी किल प्रार्थयमानाऽदृश्यत । तेन देहैक्याद् युक्तमेककर्तृकत्वम् । एतेन–**'पतिं देहि पतिं देहि पतिं देहि त्रिलोचन । पतिं देहि पतिं देहि पञ्चवारं पतिव्रता'** [ब्र.वै.प्र.खं.१४.५८] इति ब्रह्मवैवर्तवचनं गदिताभिप्रायम् । उमाद्याः त्रिलोचनेति शिवमेव सम्बोधयामासुः । भारती तु शिवान्तर्यामिणं नरसिंहमिति ॥ १३१ ॥ भारत्यास्तस्मिन्नपि जनुषि मुद्गलाविष्टः पतिरासीत् । भुवि प्रजातं पतिं पुनर्ददाविति विशेषं द्योतयितुं भारत्यै तु ददावित्याह । अन्यासां तु जन्मद्वयेऽलब्धं भर्तृयोगं प्रथमतया ददाविति प्रददावित्याह । एतेन–**'शिवस्तत्प्रार्थनां श्रुत्वा सस्मितो रसिकेश्वरः । प्रिये तव प्रियाः पञ्च भवन्तीति वरं ददौ'** [५९] इति ब्रह्मवैवर्तवचनं गदिताशयम् ॥ १३२ ॥ **'पञ्चकृत्वस्त्वया चोक्तः पतिं देहीत्यहं पुनः । पञ्च ते पतयो भद्रे भविष्यन्ति सुखावहाः'** [आ.प.२१३.१७] इति भारतवचनं च । तथाहि शङ्करदेहस्थो विष्णुर्भारत्यै प्रथममाह–'स्वपतिं देवि नचिरात् प्राप्स्यसि' इति । ततः शङ्कर एवोमाद्याश्चतस्र आह– 'अयि नाळायनि, पञ्चकृत्वः पतिं देहीत्यवोचः । अतः पुनस्ते चत्वारः पतयः पृथग् भविष्यन्ति' इति । नळनन्दिनीं प्रतीदं व्याहरणमिति पुराणे तवेत्येकवचनम् । अथ भारत्यै वरदानानन्तरम् । अन्यासां शिव एव वरं ददौ । वस्तुतस्तु शिवं द्वारीकृत्य विष्णुरेव ददौ । भारत्यै तु साक्षाद् विष्णुरिति विशेषः । अथ तस्मादेव शिवदेहस्थिताद् विष्णोः । तदिच्छयेति यावत् ॥ १३३ ॥ नाजानन् शापग्रस्ताश्चतस्रः । न तु भारती । एकदेहत्वात् यथा जयस्य शिशुपालस्य च ॥ १३४ ॥

विष्णूक्तं शङ्करोक्तं च चत्वारः पतयः पृथक् ।
भविष्यन्तीत्यथैकस्या[1] मेनिरे पञ्चभर्त्तृताम् ॥ १३५ ॥

रुरुदुश्चैकदेहस्था एकैवाहमिति स्थिताः ।
[2]अथाभ्यागान्महेन्द्रोऽत्र सोऽब्रवीत् तां वरस्त्रियम् ॥ १३६ ॥

किमर्थं रोदिषीत्येव साऽब्रवीद् वटुरूपिणम् ।
शङ्करं दर्शयित्वैव पञ्चभर्त्तृत्वमेष मे ॥ १३७ ॥

वरार्थमर्थितः प्रादादिति तं शिव इत्यथ ।
अजानन् शक्र आहोच्चैः किमेतद् भुवनत्रये ॥ १३८ ॥

मत्पालिते योषितं त्वं वृथा शपसि दुर्म्मते ।
इतीरिते शिवः प्राह पत मानुष्यमाप्नुहि[3] ॥ १३९ ॥

अस्याश्च भर्त्ता भवसि त्वामेवैषा वरिष्यति ।
पश्यात्र मदवज्ञानात् पतितांस्त्वादृशान् सुरान् ॥ १४० ॥

**विष्णूक्तं शङ्करोक्तं च पञ्चकृत्व उपपन्नं वचनं श्रुत्वा, अथ तद्वचनश्रवणानन्तरम्, अस्मिन् देहे अहमेकैवेति स्थिताः एवं मन्वानाः । पृथक्पृथगिति भावः ॥ १३५–७ ॥ वरार्थं स्वभर्त्रादिप्रदानार्थम् ॥ १३८–४० ॥**

---

स्वपतिं नचिरात् प्राप्स्यसीति विष्णूक्तं च चत्वारः पतयो भविष्यन्तीति शङ्करोक्तं च श्रुत्वा । अथ तस्मात् पञ्चानां पतीनां दानात् ॥ १३५ ॥ चतस्रो रुरुदुः । अथ रोदनं श्रुत्वा । कार्यविशेषमभिलष्य आगतः अभ्यागत उच्यते ॥१३६॥ रोदिषीत्येव । परिचयादिकमपृष्ट्वा साक्षाद्रोदनकारणं पप्रच्छेत्येवकारार्थः । दर्शयित्वैव । साऽप्यागतस्य पूर्वोक्तमविचार्यैव स्वातङ्कमपरिचितस्य पुर उद्घाटयामासेत्येवकारेण तस्या औत्कण्ठ्यातिशयमाह ॥ १३७ ॥ प्रादात् प्रसन्नोऽदात् प्रसभमदात् । अथ अत एव । अघटितं घटयन्त्या भगवदिच्छयेत्यर्थः । अन्तःस्थितेन भगवतैव प्रेरित इति वा । उच्चैराह सगर्वमाहेत्यर्थः ॥ १३८ ॥ शपसि अशपः । त्वद्दत्तोऽयं वरः शापतुल्य इत्यर्थः । स्वर्गात् पत । भूमिं च पत गच्छ । गत्वा मानुष्यमाप्नुहि ॥ १३९ ॥ त्वादृशान् त्वामिव भूमौ मानुष्यमाप्नुवतः ॥ १४०–४१ ॥

---

१. **'भविष्यन्ति तथैकस्याः'** इति क्वचित् । २. **'अथाप्यागा–'**
३. **'पत मानुषमाप्नुहि'** । **'प्राह त्वं मानुष्यमवाप्नुहि'** इति क्वचित् ।

गिरेरधस्तादस्यैवेत्युक्तोऽसौ पाकशासनः ।
उद्बबर्ह गिरिं तं तु ददर्शात्र च तान् सुरान् ॥ १४१ ॥

पूर्वेन्द्रान् मारुतवृषनासत्यांश्चतुरः स्थितान् ।
मानुषेष्ववताराय मन्त्रं रहसि कुर्वतः ॥ १४२ ॥

ततो वरेण्यं वरदं विष्णुं प्राप्य स वासवः ।
तत्प्रसादान्नरांशेन युक्तो भूमावजायत ॥ १४३ ॥

मदवज्ञानिमित्तेन पतिता इति तान् सुरान् ।
मारुतादीन् मृषाऽवादीरिति ब्रह्मा शिवं तदा ॥ १४४ ॥

शशाप मानुषेषु त्वं क्षिप्रं जातः पराभवम् ।
शक्रान्नरतनोर्य्यासि यस्मै त्वं तु मृषाऽवदः ॥ १४५ ॥

मच्छप्तानां च देवीनामविचार्य्य मया यतः ।
पतियोगवरं प्रादा नावाप्स्यसि ततः प्रियाम् ॥ १४६ ॥

मानुषेषु ततः पश्चाद् भारतीदेहनिर्ग्गताम् ।
स्वलोके प्राप्स्यसि स्वार्त्थे वरोऽयं ते मृषा भवेत् ॥ १४७ ॥

**अत्र स्थितान् चतुरः सुरान् ॥ १४१–२ ॥ वरेण्यम् उत्तमैः प्राप्यम् ॥ १४३ ॥ मृषा असत्यम् । यस्मै इन्द्राय । नरतनोः नरेषूत्पन्नात् तस्मात् शक्रात् पराभवं यासि ॥ १४४–४५ ॥ मया सह अविचार्य मच्छप्तानां पतियोगवरं प्रादा यतः ततः मानुषेषु स्थितः प्रियां नावाप्स्यसि इति ब्रह्मा तदा शिवं शशाप ॥१४६॥ ततः पश्चात्, उमायास्तव च मानुषत्वनिवृत्त्यनन्तरम्, भारतीदेहनिर्गतां उमां स्वलोके कैलासे, रुद्रभूतस्त्वमिति भावः, प्राप्स्यसि । स्वार्थे स्वविषये, ते अयं त्वया दत्तः वरः उमायाः पतियोगवरः मृषा भवेत् ॥१४७॥**

---

वृषो धर्मः ॥ १४२ ॥ पञ्चदेवीनां वरदम्, स्वस्यापि वरदम्, स्वस्य शापदातुः शिवस्यापि वरेण्यम् ॥ १४३ ॥ इति भर्त्सयित्वा ॥ १४४ ॥ द्रौणित्वेन जातः । शक्रान्नरतनोरर्जुनात् ॥ १४५ ॥ तस्या मानुषेषु जननेषु, मनुष्यलोके वा त्वं प्रियां नावाप्स्यसि ॥ १४६–७ ॥

एषा सा द्रौपदी नाम पञ्चदेवीतनुर्भवेत् ।
मृषावाग् येषु ते प्रोक्ता मारुताद्यास्तु तेऽखिलाः ॥ १४८ ॥

तासां पतित्वमाप्स्यन्ति भारत्यैव तु पार्वती ।
संयुक्ता व्यवहारेषु प्रवर्त्तेत नचान्यथा ॥ १४९ ॥

एते हि मारुताद्यास्ते देवकार्य्यार्त्थगौरवात् ।
जाता इति श्रुतिस्तत्र[१] नावज्ञा तेऽत्र कारणम् ॥ १५० ॥

दीर्घकालं मनुष्येषु ततस्त्वं स्थितिमाप्स्यसि ।
इत्युक्त्वा प्रययौ ब्रह्मा सोऽश्वत्थामा शिवोऽभवत् ॥ १५१ ॥

पञ्चदेवीतनुस्त्वेषा द्रौपदी नाम चाभवत् ।
वेदेषु सपुराणेषु भारते चावगम्यते ॥ १५२ ॥

**पञ्चदेवीतनुः सैषा त्वया दत्तवरा एषा इन्द्रसेना द्रौपदी नाम भवेत् । येषु यद्विषये । मारुतादीनुद्दिश्य, इन्द्रं प्रतीति भावः । ते त्वया मृषावाक् असत्यवाणी प्रोक्ता, तेऽखिलाः धर्माद्या इति भावः ॥१४८॥ पार्वती (तु) भारत्या संयुक्ता व्यवहारेष्वेव हानोपानादिव्यवहारेष्वेव प्रवर्तेत । अन्यथा इतरदेवीवत् पतिप्राप्तिमिती न प्रवर्तेत ॥ १४९ ॥ ननु मदवज्ञातस्तेषां जन्म किं न स्यात्? मम मृषावात्त्वं कुतोऽवगतमित्यतः श्रुतेरेवेत्याह– एत इति । तत्र, त्वदवज्ञा कारणं नेत्यत्र श्रुतिरस्ति । अतः अत्र तेषां मानुषजन्मनि (तेऽवज्ञा) न कारणम् ॥ १५० ॥ ततः अनृतोक्तिदोषात् दीर्घकालं मनुष्येषु स्थितिमाप्स्यसि इत्युक्त्वा ब्रह्मा प्रययौ ॥ १५१ ॥ उक्तमर्थं प्रमाणेन स्थापयति–वेदेष्वित्यादिना ॥ १५२ ॥**

---

'एवमेते पाण्डवाः सम्बभूवुर्ये ते राजन् पूर्वमिन्द्रा बभूवुः । लक्ष्मीश्चैषां पूर्वमेवोपदिष्टा भार्या यैषा द्रौपदी दिव्यरूपा' [आ.प.२१४.३५] इति च । एषां पञ्चानां पूर्वेन्द्राणां **'धर्मो वायुर्मघवानश्विनौ च'** [१७] इत्युक्तानां भार्या पञ्चदेवीतनुरित्यर्थः ॥ १४८–९ ॥ य एते त्वदवज्ञापतिता इति त्वयोक्ताः ते मारुताद्या हि । त्वमप्येतज्जानासि हि । अथापीन्द्रं मोहयितुं तथा उवक्थ हि । इति तत्र विषये श्रुतिरप्यस्ति हि । अतः अत्र तेषां पर्वतादधःस्थितौ भूमौ जनने च ॥ १५० ॥ मनुष्येषु मध्ये, मनुष्यलोके वा । स शिवोऽश्वत्थामाऽभवत् ॥ १५१–२ ॥

---

१. **'श्रुतिस्तस्मान्नावज्ञा'** इति कचित् ।

उक्तोऽर्थः सर्व एवायं तथा पूर्वोदिताश्च ये ।
मुमुदुः सर्वपाञ्चाला जातयोः सुतयोस्तयोः ॥ १५३ ॥

मानुषान्नोपभोगेन संसर्गान्मानुषेषु च ।
मनुष्यपुत्रतायाश्च भावो मानुष एतयोः ॥ १५४ ॥

अभून्नातितरामासीत् तदयोनित्वहेतुतः ।
याजोपयाजौ तावेव दयिता द्रुपदस्य सा[1] ॥ १५५ ॥

मातृस्नेहार्त्थमनयोर्य्ययाचे ददतुश्च तौ ।
जातमात्मनिहन्तारं भारद्वजो निशम्य तम् ॥ १५६ ॥

यशोर्त्थमस्त्राणि ददावग्रहीत् सोऽपि लोभतः ।
रामास्त्राणां दुर्ल्लभत्वात् त्रिदशेष्वपि वीर्य्यवान् ॥ १५७ ॥

भीमार्ज्जुनाभ्यां बद्धं तं श्रुत्वा पाञ्चालभूपतिम् ।
प्राहिणोत् कृतवर्म्माणं पाण्डवानां जनार्द्दनः ॥ १५८ ॥

पाण्डवेष्वतुलां प्रीतिं लोके ख्यापयितुं प्रभुः ।
समान्य[2] पाण्डवान् सोऽपि शूरानुजसुतासुतः ॥ १५९ ॥

**सुता च सुतश्च सुतौ । तयोर्जातयोः सतोः ॥ १५३–५ ॥ मातृस्नेहार्थम् । मातृ(त्वेन भावना)र्थम् ॥ १५६–७ ॥ पाण्डवानाम्, सकाशमिति शेषः ॥ १५८–६५ ॥**

---

पूर्वोदिता अन्येऽप्यर्था विषयाः, ते च तथा वेदादिगदिताः । सुतयोः द्रौपदीधृष्टद्युम्नयोः ॥ १५३–४ ॥ अयोनित्वहेतुतस्तयोः, तत् मनुष्यत्वम् । सः मनुष्यः अयोनिः तयोरुत्पत्तिकारणं न बभूवेति तौ तदयोनी इति वा । तयोरयोनित्वं तदयोनित्वमिति वा । यौ पूर्वं दर्पान्नोपससर्प तावेव सम्प्रति गलितदर्पा ॥ १५५ ॥ मातरि स्नेहः ॥१५६–७॥ पाण्डवानां समीपम् । जनानां दौर्जन्यमर्दयतीति जनार्दनः । द्रुपददौर्जन्यार्दनेन पाण्डवेषु प्रीतः ॥ १५८ ॥ स कृतवर्मा कृष्णवचनानुसारेण

---

१. 'द्रुपदस्य च ।'
२. 'सम्मान्य'

तैर्म्मानितः कृष्णभक्त्या भ्रातृत्वाच्च हरिं ययौ ।
ततः प्रभृति सन्त्यज्य देवपक्षा जरासुतम् ॥ १६० ॥

पाण्डवानाश्रिता भूपा ज्ञात्वा भैमार्ज्जुनं बलम् ।
विशेषतश्च कृष्णस्य विज्ञाय स्नेहमेषु हि ॥ १६१ ॥

पराजिताश्च बहुशः कृष्णेनाचिन्त्यकर्म्मणा ।
प्रतापाद्ध्येव[१] ते पूर्वं जरासन्धवशं गताः ॥ १६२ ॥

न स्नेहात् तद् बलं ज्ञात्वा पार्त्थानां केशवस्य च ।
जन्मान्तराभ्यासवशात् स्निग्धाः कृष्णे च पाण्डुषु ॥ १६३ ॥

जरासन्धभयं त्यक्त्वा तानेव च समाश्रिताः ।
अपि तं बहुशः कृष्णविजितं नैव तत्यजुः ॥ १६४ ॥

आसुराः[२] पूर्वसंस्कारात् संस्कारो बलवान् यतः ।
देवा हि कारणादन्यानाश्रयन्तोऽपि नाऽन्तरम् ॥ १६५ ॥

स्नेहं त्यजन्ति दैवेषु तथाऽन्येऽन्येष्वपि स्फुटम्[३] ।
धृतराष्ट्रो बलं ज्ञात्वा[४] बहुशो भीमपार्त्थयोः ॥ १६६ ॥

**धृतराष्ट्रः भीमपार्थयोः बलं दृष्ट्वा स्वभावतः देवत्वाच्च सुप्रीत एव धर्मराजस्य ज्येष्ठत्वात् तं यौवराज्याभिषेकिणं चक्रे ॥ १६६–७ ॥**

---

पाण्डवान् समान्य सत्कृत्य । कृष्णभक्त्या कृष्णेन प्रेषितोऽयमिति तैर्मानितः । भ्रातृत्वाच्च । पाण्डवाः शूरसुतासुताः । कृतवर्मा शूरानुजसुतासुत इति भ्रातृत्वाच्च मानितः । **'समानः सत्समैकेषु'** इति केशववचनात् समानयति सत्करोतीत्यर्थः । तेन समानना सत्कारः । समान्य समाइवास्येति वा । अन प्राणने । 'सम्मान्य' इति पाठे स्फुटोऽर्थः ॥ १५९ ॥ सन्त्यज्य सर्वात्मना त्यक्त्वा ॥ १६० ॥ विशेषतः स्नेहं विशेषतो ज्ञात्वा ॥ १६१–३ ॥ तं जरासन्धम् । बहुशः बहुकृत्वः ॥ १६४ ॥ आसुरा असुरपक्षाः ॥ १६५–७ ॥

---

१. **'प्रतापादेव'**
२. **'असुराः'**
३. **'देवेषु तथाऽन्येष्वपि च स्फुटम्'**
४. **'दृष्ट्वा'** इति क्वचित् । वे.ती. पाठोऽपि तथेति भाति ।

दैवत्वाच्च[3] स्वभावेन ज्येष्ठत्वाद् धर्म्मजस्य च ।
सुप्रीत एव तं चक्रे [4]यौवराज्याभिषेकिणम् ॥ १६७ ॥

भीमार्ज्जुनावथो जित्वा सर्वदिक्षु च भूपतीन् ।
चक्रतुः करदान् सर्वान् धृतराष्ट्रस्य दुर्ज्जयौ ॥ १६८ ॥

तयोः प्रीतोऽभवत् सोऽपि पौरजानपदास्तथा ।
भीष्मद्रोणमुखाः सर्वेऽप्यतिमानुषकर्म्मणा ॥ १६९ ॥

**इति श्रीमदानन्दतीर्थभगवत्पादविरिचिते श्रीमहाभारततात्पर्य्यनिर्ण्णये**
**भीमार्ज्जुनदिग्विजयो नामाष्टादशोऽध्यायः**
[आदितः श्लोकाः– **२१२९**+१६९=**२२९८**]

—०—

**अथो युधिष्ठिराभिषेकानन्तरम् । दुर्जयौ भीमार्जुनौ । धृतराष्ट्रस्य (करदान्) चक्रतुः ॥ १६८ ॥ सोऽपि धृतराष्ट्रोऽपि तयोरतिमानुषकर्मणा तयोः प्रीतोऽभवत् इति सम्बन्धः ॥ १६९ ॥**

इति श्रीमहाभारततात्पर्यनिर्णयटीकायां श्रीवेदाङ्गतीर्थभट्टारकविरचितायां
तात्पर्यदीपिकायामष्टादशोऽध्यायः

—०—

अथो धर्मजस्य यौवराज्येऽभिषेकानन्तरम् । धृतराष्ट्रस्य करदान् ॥ १६८ ॥ पौराः पुरगताः । जानपदा राष्ट्रगताः । पौरजानपदा अपि प्रीता अभवन् । भीष्मद्रोणमुखा गुरुजना अपि ॥ १६९ ॥ रङ्गेऽस्त्रविद्याप्रदर्शनेऽपि सर्वदिग्भ्य आगतानां राजकुमाराणां विजयेन भीमार्जुनयोर्दिग्विजय एव । पाञ्चालनगरेऽपि सर्वतोदिशं विजयः । धर्मराजस्य यौवराज्येऽभिषेकानन्तरमपि वस्तुतो दिग्विजय एवेति भीमार्जुनविजयमयीं सर्वामध्यायकथां समाहृत्य नाम चकार–भीमार्जुनदिग्विजयो नामेति ॥ ✻ ॥

**आचार्यगोविन्दकृते**
**श्रीमद्भारततात्पर्यनिर्णयस्य ।**
**निर्णिक्ते व्याख्याने निर्णयभावचन्द्रिकाख्याने**
**गतमष्टादशाध्यायविवरणं सतां हृदयाभरणम् ॥**

इत्याचार्यगोविन्दस्य कृतिषु महाभारततात्पर्यनिर्णयपञ्चिकायां
निर्णयभावचन्द्रिकायामष्टादशोऽध्यायः

—०—

१. **'देवत्वाच्च'** । वे.ती. पाठोऽपि तथेति भाति । २. **'यौबराज्येऽभि–'**

२२-१०-१२

# विषयानुक्रमणिका

**(अध्यायानामधः पत्रसङ्ख्या, विषयनिर्देशपार्श्वे श्लोकसङ्ख्या च निर्दिष्टा ।)**


**प्रथमोऽध्यायः**

**३–५२**

मङ्गलाचरणम् १

भगवतः सिसृक्षा २–५

वासुदेवादिचतुर्मूर्तिप्रादुर्भावः ६– ९

भगवतोऽनन्तरूपता अनन्तगुणता, सर्वेश्वरत्वम् १०–३

प्राणादीनां तत्प्रतिबिम्बत्वम्, देवानां तरतमभावश्च १४–७

जीवत्रैविध्यम् १८

जीवानां गणश आनन्त्यम् १९

नारायणस्य सर्वस्माद् भेदः २०–१

सर्वशास्त्रसंवादः २२

अत्र प्रमाणवचनानि २३–९

भविष्यत्पर्ववचनसंवादः ३०–४७

वाराहवचनसंवादः ४८–९

ब्रह्माण्डसंवादः ५०–१

स्कान्दस्यापि ग्राह्यत्वम् ५२

स्कान्दवचनसंवादः ५३–५

पाद्मवचनसंवादः ५६–८

वेदानां वैष्णवशास्त्राणां चैकमत्यम् ५९–६०

श्रुतिवचनानामुद्धारः ६१–७४

गीतासंवादः ७५

ब्रह्मसूत्रसंवादः ७६

काठकसंवादः ७७

भविष्यत्पर्ववचनसंवादः ७८–९९

श्रुतिविषये पञ्चरात्रसंवादः १००–५

विविधपुराणसंवादः १०६–२०

गुरुलक्षणादिविषये पञ्चरात्रवचनम् १२१–७

भविष्यत्पर्ववचनम् १२८–९

तत्र श्रुतिसूत्रसंवादः १३०

देवमुक्तिविषयाणि वचनानि १३१–५

अध्यायोपसंहारः १३६–८

**द्वितीयोऽध्यायः**

**५३–१०३**


मङ्गलाचरणम् १

एतदध्यायविषयप्रतिज्ञा २

सकारणं पुराणग्रन्थोत्सादनिरूपणम् ३–५

एतद्ग्रन्थस्य भगवदाज्ञामूलत्वम् ६

ग्रन्थकरणप्रतिज्ञा ७–८

भारतस्य सर्वशास्त्रनिर्णयरूपत्वे ब्रह्माण्डवचनसंवादः ९–५२

मार्कण्डेयवचनम् ५३–४

वायुप्रोक्ते भारतस्य प्रशंसनम् ५५

भारतसंवादप्रदर्शनप्रतिज्ञा ५६–७

भारताद्यपद्यम् ५८

तदर्थविवरणम् ५९–६१

भारतवाक्योद्धारः ६२–११७

भविष्यत्पर्ववचनसंवादः ११८–३०

भागवतसंवादः १३१–३

विष्णुमहिमैव सर्वशास्त्रोदितः, अन्यत् सर्वं मोहायेति निरूपणम् १३४–७

भारतस्य त्रयोऽर्था इत्यत्र भारतवचनम् १३८

भगवद्वचनेनैव तदर्थविवरणम् १३९–४८

वाय्वादिदेवतातारतम्यक्रमविषये श्रुतिपुराणवचनोद्धारप्रतिज्ञा १४९

श्रुतिपुराणवचनानि १५०–५

अस्मिन् विषये भारतवाक्योद्धारः १६६–९

ब्रह्माण्डवचनम् १७०–१

पुनर्भारतवाक्योद्धारः १०२–९

उपसंहारः १८०–३


**तृतीयोऽध्यायः**

**१०४–१४७**


व्यासस्तवनम् १

रामस्तवनम् २

कृष्णस्तवनम् ३

भारतमङ्गलपद्यम् ४

पञ्चरात्रवचनेन तदर्थविवरणम् ५–७

पूर्वाध्यायद्वयविषयनिरूपणपूर्वमुत्तराध्यायानां विषयप्रस्तावना ८

वासुदेवरूपेण विरिञ्चसृष्टिः ९

सङ्कर्षणरूपेण भाविविरिञ्चस्य वायोः सृष्टिः १०

प्रद्युम्नरूपेण तत्पत्न्योः सृष्टिः ११

तयोः शेषगरुडयोः सृष्टिः १२

ततः कालमानिदेवानां जयविजयादीनां च सृष्टिः १३

वायोर्विष्वक्सेनसृष्टिः १४

बीजात्मतया स्थितानां देवानां प्रद्युम्नात् स्वीकृत्यानिरुद्धेन शान्त्यां निधानम् १५

ततः स्थूलात्मना विरिञ्चस्य वाचश्च जननम्, तयोश्च रुद्रतद्भार्ययोः १६

शिवेन इन्द्रियमानिदेवानाम्, इन्द्रियाणां भूतानां शब्दादीनां च सृष्टिः १७
पुनः पुरुषनामकाद् विरिञ्चात् शिवस्य सृष्टिः, ततः सुरेशानां सृष्टिः १८
पुनः सूत्रनाम्नो वायोः शेषशिवेन्द्राणां सृष्टिः १९
वासुदेवात् सत्वरूपायां मायायां विष्णुप्रादुर्भावः, रजस्तमोरूपायां ब्रह्मरुद्रयोः २०
सृष्ट्यर्थं देवैर्विष्णुप्रार्थना २१
विष्णुनाऽण्डसृष्टिः २२
नाभिपद्मात् पुनर्विरिञ्चसृष्टिः २३
ततो देवानाम्, देवेषु कः श्रेष्ठ इति परीक्षा २४
वायोः श्रेष्ठत्वनिर्णयः २५
विरिञ्चाद् भुवनसृष्टिः २६
ततो भुवनान्तर्देवतासृष्टिः २७
मनुष्याणामसुराणामृषीणां च सृष्टिः ३०
गुणानामभिभवकारणम् ३१
व्युत्क्रमेण लयः ३२–३
सृष्टिलययोर्निरन्तरता ३४–५
एतज्ज्ञानेन मुक्तिः ३६
यथापूर्वं तत्तद्गणगतानामेव सृष्टिः ३७
पुनः काश्यपाद् देवदानवादिजननम् ३८
वराहावतारः ३९
जयविजयशापः ४०
वराहेण हिरण्याक्षहननम् ४१
मत्स्यावतारे हयग्रीवासुरं हत्वा वेदोद्धारः ४२
वैवस्वतमनवे विद्योपदेशः ४३
हिरण्यकशिपुपीडितैर्देवैर्भगवत्स्तवनम् ४४
नृसिंहरूपेण हिरण्यकशिपुवधः ४५
कूर्मरूपेण मन्दरधारणम् ४६
वामनावतारः ४७
त्रिभिः पदैर्बलिनिग्रहः ४८
बलौ याच्ञाकारणम् ४९
क्षत्ररूपाणामसुराणां निग्रहाय ब्रह्मणा सह देवैः प्रार्थना ५०–२
परशुरामरूपेण क्षत्रसंहारः ५३
रावणकुम्भकर्णयोर्जननम् ५४
ताभ्यां देवार्दनम् ५५
पुनर्देवैर्विष्णुप्रार्थना ५६–७
युगपरिमाणम् ५८
ब्रह्मण आयुर्मानम् ५९
मधुकैटभजननम् ६०
हयग्रीवप्रादुर्भावः ६१
मधुकैटभहननम् ६२
सुराणां सहजं बलमसुराणां वरजम् ६३
रामावतारः ६४
दशरथकृतयागेन तद्गृहे जननम् ६५
वानरादिरूपेण देवानां जननम् ६६
वायुर्हनुमान् बभूव, वासवो वाली ६७

रविः सुग्रीवः, धर्मो जाम्बवान् ६८
तस्य ब्रह्ममुखतः पूर्वमेव सृष्टिः ६९
सोमोऽङ्गदः, बृहस्पतिस्तारः, शची तारा ७०
पूर्वं बृहस्पतेरङ्गिरसः, तारायाश्च पुलोम्ना जननम् ७१
वरुणः सुषेणो बभूव, अश्विनौ मैन्दविविदौ बभूवतुः ७२
इन्द्रावेशनिमित्तान्मैन्दाद् विविदो बलीयान् ७३
अग्निर्नीलनामा कपिर्बभूव, काम एव प्रद्युम्नः, स्कन्दः, विष्णुचक्रमानी च ७४
दुर्गा प्रथमं चक्रमानिनी; श्रीः शङ्खमानिनी, भूः पद्ममानिनी ७५
गदामानी वायुः शार्ङ्गमानी च, रमा खड्ग-मानिनी दुर्गा चर्ममानिनी, वायुर्बाणमानी ७६
ततः कामश्चक्रमानी बभूव, तत्सूनुरनिरुद्धः शङ्खमानी ७७
तावेव भरतशत्रुघ्नौ जातौ; तयोः पूर्वं शेषो लक्ष्मणो जातः ७८
भगवान् कौसल्यायां जज्ञे, चक्रं कैकेय्याम्, शेषः शङ्खं च सुमित्रायाम् ७९
लक्ष्मणादिषु त्रिषु सङ्कर्षणादिरूपस्य भगवत आवेशः, अङ्गदे चेन्द्रावेशः ८०
बलाधिकेषु सर्वत्र भगवत्सन्निधानविशेषः ८१
रमा सीरजाता सीता बभूव ८२
अध्यायविषयनिरूपणपूर्वकमुपसंहारः ८३–४

**चतुर्थोऽध्यायः**

**१४८–१६९**

कुमाराणां वृद्धिः १
राज्ञो मोदः २
सर्वलोकस्याऽनन्दः ३
विश्वामित्रागमनम् ४
तेन सह रामलक्ष्मणयोर्गमनम् ५
विश्वामित्रेण रामलक्ष्मणयोरस्त्रदानम् ६
ताटकायाः सुबाहोश्च वधः ७
मारीचस्यार्णवे क्षेपः ८
विदेहगमनम् ९
अहल्योद्धारः १०
अहल्याया नारीभावः ११
नगरीप्रवेशः १२
नागरै रामदर्शनम् १३
जनकेन रामार्चनम् १४–५
जनकेन स्वप्रतिज्ञानिवेदनम् १६–२३
रामेण शिवधनुःपूरणम् २४
धनुर्भङ्गः २५–६
सीतया रामदर्शनम् २७
रामांसे मालार्पणम् २८
विदेहपुर्यामानन्दः २९
दशरथाय दूतप्रेषणम् ३०
दशरथागमनम् ३१

सीतारामस्वयंवरः ३२
देवलोके सम्भ्रमः ३३–५
सीतास्वयंवरस्य लक्ष्मीस्वयंवरसादृश्यम् ३६
रामाय जनकेन धनादिदानम्, लक्ष्मणादीनां विवाहश्च ३७–८
अयोध्यां प्रति प्रयाणम् ३९
मार्गे भार्गवदर्शनम् ४०
युद्धायेवाऽह्वानम् ४१
दशरथप्रार्थना, भार्गवप्रत्युक्तिः ४२
रामं प्रति भार्गववचनम् ४३–५१
रामेण वैष्णवधनुषि शरसन्धानम् ५२
अतुलवधाय भार्गवचोदना ५३–५
रामेण बाणमोचनम् ५६
अतुलासुरस्य नाशः ५७
तपोभङ्गोक्तिनटनम् ५८–६०
राघवभार्गवयोरैक्यम् ६१
भार्गवनिर्गमनम् ६२
रामस्यायोध्यायां सीतया सह रमणम् ६३–५

**पञ्चमोऽध्यायः**

**१६९–१८९**

रामस्य राज्याभिषेकनिर्णयः १
अलक्ष्म्या मन्थराभावः २
रामवनगमनम् ३
चित्रकूटे निवासः ४
दशरथस्य स्वर्गतिः, भरतशत्रुघ्नयोः रामसमीपगमनम् ५
भरतेन रामं प्रति प्रत्यागमनप्रार्थना ६
रामेण तन्निराकरणपूर्वकं भरतसान्त्वनम् ७
भरतेन रामपादुकानयनम् ८
जयन्तस्य वायसरूपेणाऽगमनम् ९
रामेण तन्निग्रहः १०–१२
तेन काकानामेकाक्षिपातनम् १३–६
दण्डकारण्यप्रवेशः १७
शरभङ्गोद्धारः १८
तस्याग्निप्रवेशः १९
विराधदर्शनम् २०
विराधमोचनम् २१
अगस्त्यदर्शनम् २२–३
शूर्पणखाया अभिसरणम् २४–६
खरदूषणादिसंहारः २७
रावणचिन्ता २८
तेन गोकर्णे मारीचदर्शनम् २९
राघववञ्चनार्थमर्थना ३०
मृगरूपस्य मारीचस्य निग्रहः ३३–४
सीताया लोकविडम्बनलीला ३५–६
रावणागमनम्, सीतायाः कैलासगमनम् ३७
रावणेन मायासीतापहरणम् ३८–४०
जटायुषः संस्कारः ४१

कवन्धमोचनम् ४२–३
शबरीदर्शनम् ४४
हनूमद्दर्शनम् ४५–९
भीतानां कपीनां मारुतिना वारणम्,
रामपादप्रणामः ५०–१

**षष्ठोऽध्यायः**

**१९०–२०७**

रामलक्ष्मणयोः सुग्रीवसमागमः १–२
दुन्दुभिशरीरक्षेपः ३–४
सप्तसालभेदनम् ५–११
वालिसुग्रीवयोः सङ्ग्रामः १२–६
रामेण वालिवधः १७–८
अदृष्टतया हनने कारणम् १९–२१
वालिसंस्कारपूर्वकं सुग्रीवस्य कपिराज्ये
अभिषेकः, रामस्य चातुर्मास्यम् २२–३
हनुमता सुग्रीवप्रबोधनम् २४–५
सर्वतः कपीनामानयनम् २६–७
रामेण सुग्रीवसमीपे सौमित्रिप्रेषणम् २८–९
रामान्तिके सुग्रीवागमनम् ३०–१
वानराणां सीतान्वेषणाय प्रेषणम् ३२
रामेणाङ्गुलीयकदानपूर्वकं हनुमत्प्रेषणम् ३३–४
मासान्तेऽन्यकपीनां प्रत्यागमनम् ३५
हनुमदादिभिः विन्ध्ये बिलदर्शनम् ३६
निराशानां कपीनां तत्रैव वासनिश्चयः ३७–४१
हनुमता प्रतिबोधनम् ४२–५
कपिभिर्महेन्द्रपर्वतासादनम् ४६
प्रायोपवेशनिर्धारः ४७
सम्पातिसमागमः ४८–५०
सम्पातिना सीतावृत्तान्तकथनम् ५१
कपीनां सामर्थ्यनिवेदनम् ५२–५
जाम्बवता हनुमत्प्रार्थनम् ५६–८
हनुमता समुद्रतरणाय देहवर्धनम् ५९

**सप्तमोऽध्यायः**

**२०८–२२०**

हनुमत उत्पतनम् १–२
मैनाकदर्शनम् ३
सुरसादर्शनम् ४
हनुमता तदास्यं प्रविश्य बहिर्गमनम् ५
छायाग्रहदर्शनम् ६
तन्निग्रहः ७
लङ्कायामवतरणम् ८
लङ्कानगरप्रवेशः ९
सीतादर्शनम् १०
रामानुगुणं हनुमताऽपि लोकविडम्बनम् ११
अङ्गुलीयकदानम् १२
सीतया चूळामणिदानम् १३–५
आत्माविष्काराय अशोकवनिकाभङ्गः १६–७
तद्वधाय रावणेन किङ्करसेनाप्रेषणम् १८

| | |
|---|---|
| तेषां सामस्त्येन वधः | १९–२१ |
| सप्तमन्त्रिपुत्राणां वधः | २२ |
| पञ्चसेनानायकानां वधः | २३ |
| अक्षकुमारवधः | २४–९ |
| इन्द्रजित्प्रेषणम् | ३० |
| युद्धे ब्रह्मास्त्रमोचनम् | ३१–२ |
| हनुमता तन्माननार्थं निर्धारः | ३३–४ |
| कपीन्द्रस्यान्यपाशैर्बन्धनम् | ३५ |
| रावणसमीपे नयनम् | ३६ |
| रावणप्रश्नः | ३७ |
| हनुमता रावणबोधनम् | ३८–४१ |
| पुच्छदाहाय नियोजनम् | ४२ |
| हनुमतोऽदाह्यता | ४३ |
| लङ्कापुरीदाहः | ४४–७ |
| समुद्रतरणम्, मधुवनभङ्गः | ४८ |
| रामपादयोः चूळामणिसमर्पणम् | ४९ |
| रामकृतः हनुमदाश्लेषः | ५० |


**अष्टमोऽध्यायः**

**२२१–२८३**


| | |
|---|---|
| रावणविजयाय रामप्रस्थानम् | १ |
| दक्षिणसमुद्रतीरे शयनम् | २ |
| विभीषणागमनम् | ३ |
| सुग्रीवादिभिः तत्परिग्रहणविरोधः | ४ |
| हनूमता ग्राह्यत्वसमर्थनम् | ५ |
| रामेण विभीषणस्वीकारः | ६ |
| तं प्रशस्य तस्य लङ्काराज्यदानम् | ७–८ |
| अब्धौ कोपः | ९ |
| अब्धिशोषः, तस्य शरणागतिः | १०–१२ |
| तस्मिन् रामानुग्रहः, सेतुबन्धायाऽऽदेशः | १३–४ |
| लङ्काप्रवेशः | १५ |
| रावणविषादः | १६ |
| अङ्गददूत्यम् | १७ |
| चतुर्दिशं सेनाप्रस्थानम् | १८–२० |
| हनुमतेन्द्रजित्प्रद्रावणम्, नीलविभीषणाभ्यां प्रहस्तवधः | २१ |
| अङ्गदेन वज्रदंष्ट्रवधः | २२ |
| हनुमता धूम्राक्षवधः | २३ |
| अकम्पनवधः | २४ |
| कपिभिः लङ्कादहनम् | २५ |
| कुम्भनिकुम्भयो रणाय प्रस्थानम् | २६ |
| सुग्रीवेण कुम्भवधः | २७ |
| निकुम्भप्रतापः | २८–९ |
| मारुतिना तदाह्वानम् | ३० |
| तयोर्युद्धम् | ३१–२ |
| भूमौ निपात्य मारुतिना निकुम्भवधः | ३३–४ |
| सुप्तघ्नादीनां सप्तानां रामेण वधः | ३५–६ |
| युद्धोन्मत्तादीनां षण्णां प्रस्थानम् | ३७ |
| नरान्तकस्य युद्धम्, अङ्गदेन तद्वधश्च | ३८–४२ |

देवान्तकयुद्धम्, हनुमता तद्वधश्च ४३–५२
त्रिशिरसश्च वधः ५३
युद्धोन्मत्तस्य मत्तस्य च वधः ५४
अतिकायस्य पराक्रमः ब्रह्मास्त्रं प्रयुज्य लक्ष्मणेन तद्वधः ५५–६२
रावणानुमत्या खरात्मजस्य मकराक्षस्य प्रस्थानम् ६३–५
तत्पराक्रमः, रामेण तद्वधः ६६–८
अवशिष्टानां पलायनम् ६९
रावणप्रस्थानम् ७०
रावणपराक्रमः ७१–६
हनुमता वक्षसि ताडितस्य रावणस्य सरक्तवमनं पतनम् ७७
लब्धसञ्ज्ञेन तेन मारुतिप्रशंसा ७८
रावणेन मारुतेरुरसि मुष्टिप्रहारः ७९
ततोऽपसृतस्य रावणस्य नीलेन विरोधः ८०–२
रावणस्य लक्ष्मणेन सह युद्धम् ८३–४
लक्ष्मणमोहः ८५
लक्ष्मणचालनेऽपि रावणस्याशक्तिः ८६–८
मारुतेः दत्तमुष्टिप्रहारेण रावणस्य मूर्छा ८९–९०
मारुतिना लक्ष्मणस्य रामसमीपनयनम्, रामहस्तस्पर्शेन लक्ष्मणसञ्ज्ञालाभः ९१–२
रामरावणयोर्युद्धम्, रावणपराभवः ९३–७
कुम्भकर्णबोधनम् ९८–९
रावणकुम्भकर्णसंवादः १००–३
रावणबोधितेन कुम्भकर्णेन युद्धाय प्रस्थानम् १०४–५
भीकरं युद्धम् १०६–१२४
कुम्भकर्णस्य रामेण सह युद्धम् १२५–९
कुम्भकर्णवधः १३०–३
अवशिष्टानां पलायनम् १३४
रावणमूर्छा १३५
इन्द्रजिता शिवं प्रति होमः १३६
तेन नागपाशेन कपीनां बन्धनम् १३७
गरुडागमनकारणम् १३८–४२
रावणेनेन्द्रजित्प्रशंसा १४३
गरुडेन नागपाशमोचनम् १४४
कपीनामुत्थानम् १४५
रावणत्रासः १४६
पुनर्हुत्वेन्द्रजितो मायायुद्धम् १४७
सलक्ष्मणानां कपीनां निपतनम् १४८
विभीषणेनानाकुलस्य मारुतेर्दर्शनम् १४९
प्रबुद्धेन जाम्बवता औषधचतुष्टयानयनार्थं हनुमतश्चोदना १५०–३
हनुमता गिरिमुत्पाट्याऽनयनम् १५४–६
कपीनामुत्थानम् १५७
देवैः पुष्पवृष्टिः १५८
पुनः पर्वतस्य स्वस्थाने निक्षेपः १५९–६०

पुनरिन्द्रजिता मायायुद्धम् १६१–४
रामाद् भीतस्येन्द्रशत्रोः पलायनम् १६५–६
विज्ञानास्त्रेण कपीनामुत्थानम् १६७–८
इन्द्रजित् पुनर्जुहाव पावकम् १६९
विभीषणेन कृतहवनस्येन्द्रजितः
अवध्यत्वकथनम् १७०
रामेण तद्वधाय लक्ष्मणप्रेषणम् १७१–२
लक्ष्मणेन सहेन्द्रजितो युद्धम्, तद्वधश्च १७३–५
रावणेनासङ्ख्यबलप्रेषणम् १७६–९
तस्य रावणबलस्य रामेण संहारः १८०–४
पुष्पकमारुह्य रावणाभिगमनम् १८५
विरूपाक्षादिभिस्तदनुगमनम् १८६
महोदरस्य पराक्रमः १८७–८
अङ्गदेन तद्वधः १८९–९०
महापार्श्वस्य वधः १९१–२
विरूपाक्षयूपाक्षयोः सुग्रीवेण वधः १९३–५
रावणागमनम्, लक्ष्मणेन रोधः १९६
रावणेन शक्तिप्रयोगः, लक्ष्मणमूर्छा,
हनुमता रावणवक्षसि शैलक्षेपः १९७–८
रावणमूर्छा १९९
लक्ष्मणबोधनाय रामाज्ञया हनुमता
पुनर्गिर्यानयनम् २००
लक्ष्मणोत्थानम्, रामेण हनुमत्प्रशंसा २०१
पुनस्तत एव गिरेः प्रक्षेपः, तद्गन्धेन
मृतानां कपीनां चोत्थानम् २०२–५
पुष्पकमारुह्य रावणागमनम् २०६
इन्द्रदत्तेन रथेन रामस्यापि युद्धसिद्धता २०७
रामरावणयोर्युद्धम्, रावणसंहारश्च २०८–१०
ब्रह्मणा रामस्तुतिः २११–५
शूलिना युद्धाह्वानम् २१८
रुद्रस्य निपातः २१९
तेन क्षमाप्रार्थना २२०
इन्द्रादिभिः स्तवः २२१
अग्निसमर्पितायाः सीतायाः स्वीकारः २२२–३
सुषेणेन रुग्णानां कपीनां चिकित्सा २२४
मृतानां यमक्षयाद् रामेणाऽनयनम्,
दशरथानुमोदनम् २२५
पुष्पकेणायोध्यां प्रति प्रस्थानम् २२६
हनुमता भरतसान्त्वनम् २२७
रामसमागमः २२८–९
पुरप्रवेशः, साम्राज्याभिषेकः २३०
रामसन्देशः २३१–४२
हनुमद्वचनम् २४३–४७
रामानुग्रहः २४८

**नवमोऽध्यायः**

**२८४–३१९**

लक्ष्मणेन युवराजपदवीनिराकरणम् १–२
भरतस्य यौवराज्यम् ३
रामराज्यस्य महिमा ४–११

सीतारामयोर्विहारः १२–१६
लवकुशोत्पत्तिः १७
भरतेन गान्धारदेशगानां गन्धर्वाणां संहारः १८
शूद्रतापससंहारः १९
तत्पूर्वकथा २०–१
अगस्त्यदत्तमालास्वीकारः २२
तत्पूर्वकथा २३–६
सुराणकानां पूर्वेतिहासः २७–३१
तैः कृतः सीतापवादः ३२
सीतावियोगलीला ३३
सीताया भूमिप्रवेशः ३४
ब्रह्मणो जगद्गुरुत्वम्, तद्वाक्यरक्षार्थं विष्णोरवतारः ३५–९
अदृश्यतया सीताया रामेण रमणम् ४०–२
अचिन्त्यानि रामचरितानि ४३
रामस्य स्वधामगमनाय ब्रह्मप्रहितेन शिवेन प्रार्थना ४४–८
दुर्वाससः आगमनम् ४९
रामेण तस्य तत्कालकृतभोजनदानम् ५०–१
लक्ष्मणत्यागः ५२–८
लक्ष्मणस्य मूलरूपाप्तिः ५९
मोक्षेच्छूनामाह्वानम्, सर्वेषामागमनम् ६०–१
कुशस्य राज्येऽभिषेकः, लवस्य यौवराज्ये ६२
हनूमन्तं प्रति रामवचनम् ६३–८
हनुमता निरन्तरभक्तिप्रार्थना ६९–७१
रामस्य सज्जीवैः सह स्वधामगमनम् ७२–५
रामस्य दिव्यस्वरूपवर्णनम् ७६–९२
भगवतोऽम्बरारोहः ९३
चतुर्मुखेन निवेदनम् ९४–१०२
भगवत्प्रतिवचनम् १०३–५
रामेण सहाऽगतानां सान्तानिकलोकप्राप्तिः १०६–७
देवानां मूलरूपप्रवेशः १०८
मैन्दविविदयोः मूलरूपप्रवेशाभावे कारणम् १०९–१२
अङ्गदकुशयोः कालतो निजरूपाप्तिः ११३
विभीषणस्य कल्पजीविता ११४
जाम्बवत्या उत्पत्त्यर्थं जाम्बवतस्तपश्चर्या ११५
रामस्य रूपत्रयम् ११६–७
रामाज्ञया ब्रह्मादीनां निवर्तनम् ११८
हनुमतो बदर्यां वासः ११९–२०१
रूपान्तरेण किम्पुरुषे राज्यकरणम् १२१–२
रामस्य पयोब्धौ विहारः १२३–४
अस्याः कथायाः सर्वशास्त्रानुगुणता १२५–४२
रामकथोपसंहारः १४३


**दशमोऽध्यायः**

**३२०–३४७**


व्यासावतारार्थं देवैः प्रार्थना १–३
स्तुतिप्रस्तावेन समुद्रमथनकथानिर्णयः ४–१२
विषसमुत्थानम् १३

| | |
|---|---|
| वायुना विषं विमथ्य रुद्राय दानम् | १४ |
| तेन शिवस्य नीलकण्ठत्वम् | १५ |
| वायुना समग्रविषपानम् | १६ |
| शिवस्य शिरःशूला; वायोरविकारिता | १७ |
| विषेण वृश्चिकादिसृष्टिः | १८ |
| उच्चैःश्रवस ऐरावतादीनां चोद्भवः | १९ |
| पारिजातादिसृष्टिः | २० |
| लक्ष्मीप्रादुर्भावः, धन्वन्तरिप्रादुर्भावः | २१–२ |
| मोहिनीप्रादुर्भावः | २३–४ |
| दैत्यानां मोहः | २५–९ |
| राहोः शिरसः कृन्तनम् | ३० |
| तस्य ग्रहत्वम् | ३१ |
| दैत्यानां नाशः, कलेः पुरुषेष्ववस्थानम् | ३२ |
| हरिवक्षसि लक्ष्मीवासः, विधेः कौस्तुभत्वम् | ३३ |
| अमृतविभागेन मोक्षनिदर्शनम् | ३४–५ |
| कलिपीडानिवेदनम्, तत्परिहारप्रार्थना | ३६–४० |
| भगवत इळायां प्रादुर्भावः | ४१ |
| पराशरेण तपश्चरणम् | ४२ |
| भगवद्वचनम् | ४३–६ |
| सत्यवतीपराशरसमागमः | ४७ |
| स्त्रीपुंसमागमेन जननमिति मोहजननम् | ४८–५० |
| व्यासवर्णनम् | ५१–५ |
| पित्रोर्वरदानम् | ५६ |
| मेरौ वेदोद्धारः | ५७ |
| ब्रह्मसूत्रकरणम् | ५८ |
| महाभारतरचनम् | ५९ |
| देवेषु कलिनिरासः | ६० |
| मनुष्यगतस्यापि कलेर्निरसनेच्छा | ६१ |
| वेदविभागः पुराणरचनं च | ६२ |
| कीटदर्शनम् | ६३ |
| कीटोद्धारः | ६४–७ |
| बहूनां सतां बन्धमोचनम् | ६८ |
| पुत्रार्थं तपःकरणलीला | ६९–७० |
| शुकोत्पत्तिः | ७१–२ |
| शुकस्य सर्वशास्त्रोपदेशः,तस्मिन् वायोरावेशः | ७३ |
| पैलादिषु शेषादीनामावेशः | ७४–५ |
| पैलादिभिर्वेदप्रवर्तनम् | ७६–८ |
| रोमहर्षणसृष्टिः, तत्र कामावेशः | ७९–८० |
| सनत्कुमारादिभिर्योगप्रवर्तनम्,जैमिनिना कर्ममीमांसाकरणम्, देवमीमांसाकरणे पैलशेषयोरादेशः | ८०–३ |
| पुराणरचनम् | ८४–६ |
| व्यासमहिमानुवर्णनम् | ८७–८ |


**एकादशोऽध्यायः**

**३४८–४२०**


| | |
|---|---|
| चन्द्रवंशपरम्परा | १–२ |
| यदुवंशे कार्तवीर्यसम्भवः | ३ |
| पूरुवंशे भरतचक्रवर्ती | ४ |

भरतवंशे कुरोः, कुरोर्वंशे प्रतीपस्य सम्भवः ५
तत्र पुत्रत्रयम्, अग्रजस्य देवापेर्वनगमनम् ६
तदवरजस्य स्वमातामहदत्तपुत्रत्वम् ७
तस्य प्रह्लादावतारत्वम् ८
तस्य भूभारक्षपणे विष्णोरङ्गत्वम् ९
तत्पुत्रस्य सोमदत्तस्य पत्रतापाख्यरुद्रांशत्वम् १०
तस्य त्रयोऽपि पुत्रा रुद्रांशाः ११
तत्र भूरिश्रवसो बलाधिक्यम् १२–५
अब्धेः ब्रह्मशापः १६
महाभिषक्त्वेन जननम् १७–८
ब्रह्मसदसि तस्य पुनः प्रमादः १९
पुनः शापदृढीकरणम् २०
तस्य शन्तनुत्वेन जननम् २१
द्युनाम्नो वसोश्चरित्रम् २२–३
वसूनां वसिष्ठसंस्थेन ब्रह्मणा शापः २४–५
द्युपत्न्याः शापः २६
द्युवसोः शापः २७–८
वसुभिः प्रार्थना २९
गङ्गासमीपे वसूनामभ्यर्थना ३०
गङ्गयाऽष्टवसूनां जननम् ३१
गङ्गायाः प्रतीपदक्षिणोरुसमाश्रयणम् ३२
प्रतीपेन तस्याः स्नुषात्वेन स्वीकारः ३३
गङ्गायाः समयबन्धः, राज्ञा तत्स्वीकारः ३४–५
गङ्गायाः शन्तनुपत्नीत्वम् ३६
सप्तपुत्रान् हत्वाऽष्टमस्यापि हन्तुमिवोद्योगः ३७
देवानां मानुषेऽवस्थितिर्नातिसुखाय ३८
शन्तनुना तस्या वारणम् ३९–४०
गङ्गाया निर्गमनम् ४१
देवतानां स्वभावः ४२–४
अष्टमसुतस्य बृहस्पतौ दानम् ४५
तत्र तस्य वेदाभ्यासः ४६
भार्गवे तत्ववादाभ्यासः ४७
अस्त्राभ्यासः, मात्रा तदानयनम् ४८
सुतेन शरैर्गङ्गानदीरोधः ४९
शन्तनुना स्वसुतदर्शनम् ५०
गङ्गया पुत्रं समर्प्य समाश्वासनम् ५१–२
शन्तनुना स्वसुतस्य यौवराज्याभिषेकः ५३
पुनस्तस्य बृहस्पतिशिष्यत्वं भार्गव-शिष्यत्वं च ५४
प्रत्यागतस्य तस्य पितृशुश्रूषा ५५
कृपस्य कृप्याश्चोत्पत्तिः ५६–८
कृपस्य भगवदनुग्रहः, भाविसप्तर्षित्वं च ६०–१
तस्य शस्त्राभ्यासः शास्त्राभ्यासश्च ६२–३
द्रोणोत्पत्तिकथा ६४–५
तस्य पितुः सकाशे शस्त्रशास्त्राभ्यसनम् ६६
द्रुपदोत्पत्तिः ६७–८
तस्य भरद्वाजसमीप एव शस्त्रशास्त्राभ्यासः ६९

द्रुपदस्य पाञ्चालराज्याभिषेकः, द्रोणस्य कृप्या सह विवाहः ७०
तस्य सिलोञ्छावृत्तिः ७१
तत्समानवया विराटः ७२
शन्तनुना दाशकन्यादर्शनम्, तस्याः पूर्वरूपे विष्णुना वरश्च ७३–४
शन्तनुना तदर्थं दाशराजे याचनम् ७५
देवव्रतस्य दाशराजगृहगमनम् ७६
देवव्रतस्य प्रतिज्ञा ७७
तस्य भीष्म इति देवदत्तं नाम ७८
सत्यवत्याः शन्तनुना विवाहः ७९–८०
तया शन्तनो रमणम् ८१
चित्राङ्गदविचित्रवीर्ययोर्जननम्, शन्तनुना जीर्णदेहत्यागः ८२
तस्मिन् काले महतामिच्छामरणम् ८३–४
चित्राङ्गदस्य राज्याभिषेकः ८५
तस्य गन्धर्वेण हननम् ८६
विचित्रवीर्यस्य राज्याभिषेकः, तदर्थं भीष्मेण कन्यात्रयस्य हरणम् ८७–८
तत्र अम्बिकाम्बालिकाभ्यां विचित्रवीर्यस्य पतित्वेन स्वीकारः ८९
अम्बया निराकरणम् ९०
तया स्वकमितुः साल्वस्य समीपे गमनम्, तेन तन्निराकरणम् ९१
तया भार्गवं प्रति गमनम् ९२
भार्गवस्य भीष्मेण युद्धलीला ९३
भगवतो न क्वापि पराभवः ९४–६
भीष्मस्य यशोदानम्, अम्बापापमोचनम् ९७
अम्बया शिवं प्रति तपःकरणम् ९८
भार्गववचसः सत्यत्वम् ९९
रुद्रेणाम्बाया पुन्देहप्राप्तिवरः १००
भीष्महननहेतुमालादानम् १०१
अम्बाया देहत्यागः १०२
पुत्रार्थं द्रुपदस्य तपः १०३
तस्य कन्यकाजननम् १०४
पुंवेषेण गूहितायास्तस्या विवाहः १०५
कन्यया तदवगमः १०६
कन्यापित्रा युद्धाय प्रस्थानम् १०७
द्रुपदेन प्रत्युत्तरदानम् १०८–९
शिखण्डिन्या तुम्बुरुदर्शनम् ११०–१
तेन तस्यै स्ववपुर्दानम् ११२
स्त्रीपुम्भावव्यवस्था ११३–५
गन्धर्वदेहस्य शिखण्डिनीदेहसादृश्यम् ११६–७
गन्धर्वस्य कन्यादेहेन वने वासः ११८
धनदशापः ११९–२०
कन्यया पितुर्वृत्तनिवेदनम् १२१
शिखण्डिनी शिखण्डी बभूव १२२–३
विचित्रवीर्यमरणम् १२४

| | | | |
|---|---|---|---|
| व्यासागमनम् | १२५ | तस्य कर्णनामता | १५८ |
| सत्यवत्या सन्तानार्थमभ्यर्थना | १२६–७ | जातस्य यमुनाजले विसर्जनम् | १५९ |
| व्यासप्रतिवचनम् | १२८–३० | सूतेन तत्स्वीकारः | १६० |
| अन्धस्य धृतराष्ट्रस्य जननम् | १३१–२ | सर्वशास्त्राभ्यासः, वसुषेणनामता | १६१ |
| पाण्डुजननम् | १३३–४ | विदुरभार्या आरुणी | १६२ |
| पुत्रान्तरजननाय मातुरभ्यर्थना | १३७ | मद्रेशस्य तपः | १६३ |
| अम्बिकाया निदेशः | १३६ | ततः शल्यस्य जननम् माद्र्याश्च | १६४–५ |
| तया दूतीप्रेषणम् | १३७ | पाण्डोर्माद्र्या विवाहः | १६६ |
| माण्डव्यशापेतिवृत्तम् | १३८–९ | पाण्डुना महीपालनम् | १६७ |
| विदुरजननम् | १४०–१ | धृतराष्ट्रस्यान्धत्वात् पाण्डुना राज्यभारः | १६८–९ |
| पुनः पुत्रजननिराकरणम् | १४२ | सत्यवत्या स्नुषाभ्यां च व्यासाश्रमगमनम् | १७० |
| धृतराष्ट्रादीनां विद्याध्ययनम् | १४३ | तस्या मुक्तिः | १७१ |
| विदुरस्य सर्ववित्त्वम्, पाण्डुना दिग्विजयः | १४४ | विदुरमातुर्मुक्तिः | १७२ |
| गवद्रणात् सञ्जयोत्पत्तिः | १४५ | अम्बिकाम्बालिकयोर्गतिः | १७३ |
| तस्य व्यासशिष्यता | १४६ | पाण्डोर्वनगमनम्, बदर्यां वासः | १७४ |
| धृतराष्ट्रस्य गान्धार्या विवाहः | १४७ | तपश्चरणम् | १७५ |
| पाण्डोः कुन्त्या विवाहः | १४८ | ऋषिशापः | १७६ |
| कुन्तिभोजगृहे दुर्वासस आगमनम् | १४९ | पुनः पत्नीभ्यां सह तपश्चर्या | १७७–८ |
| तच्छुश्रूषणाय कुन्तीनिदेशः | १५० | देवानां नारायणस्तुतिः | १७९–८१ |
| कुन्त्या मुनिसेवा | १५१ | देवासुरयुद्धम् | १८२–९४ |
| दुर्वाससा तस्यै मन्त्रदानम् | १५२ | तत्र हतानामसुराणां भूतळे जननम् | १९५ |
| तया मन्त्रेण सूर्याह्वानम् | १५३ | तेषां धर्मे रतिः | १९६ |
| सूर्येण पुत्रदानम् | १५४–५ | तेषां ततश्च्यावनाय प्रार्थना | १९७–९८ |
| पुत्रे असुरावेशेन मतिदुष्टता | १५६–७ | उग्रसेनात् कालनेमिर्जातः | १९९ |

तस्य शिवाद् वरः २००
उग्रसेनक्षेत्रे द्रमिळेन तज्जननम् २०१
कंसपराक्रमः २०२
तस्य जरासुतसुताभ्यां विवाहः २०३–४
मधुकैटभावेव हंसडिभकौ २०५
एवमन्येऽप्यसुरा भूमौ जाताः २०६
कल्यादयो साधुमार्गाच्चालनीयाः २०७–१०
जयविजयौ शापान्मोचनीयौ २११–१२
बलिः साल्वो बभूव २१३
स हन्तव्यः २१४–७
बाणः कीचको बभूव, स च वध्यः २१८
हरौ शरणागतिः २१९–२०
देवैः सह हरेः मेरुप्रस्थानम्, तत्र ब्रह्मणा संवादः २२१
ब्रह्मणा वसुदेवे जायस्वेति प्रार्थना २२२–५
नन्दवसुदेवाभ्यां भगवत्पितृत्वार्थं पूर्व-रूपे तपःकरणम् २२६–८
देवानामवतारार्थं भगवदाज्ञा २२९
देवानामवतारः, नरकासुरात् कुबेरजननम् २३०
नरकेण सुप्रतीकस्यापहारः, ततः कुबेरो भगदत्तो बभूव २३१
तस्मिन्नसुरावेशः, रुद्रावेशश्च २३२
शिनिपौत्रो युयुधानः २३३
हृदिकपुत्रः कृतवर्मा २३४–५
देवासुरादिव्यवस्था २३६–७

**द्वादशोऽध्यायः**

**४२१–४५७**

देवकसुता देवकी, साऽहुकस्य दत्तपुत्री १–२
तस्या विवाहमङ्गलप्रयाणे आकाशभाषितम् ३–४
कंसेन भगिन्या हननोद्यमः, वसुदेवेन मोचनम् ५
देवक्या अनुजाः षट् च वसुदेवभार्याः, बाह्लीकपुत्री रोहिणी च ६
काशीश्वरकरवीरेश्वरतनये च ७
काशिजायां पौण्ड्रकवासुदेवः ८
करवीरेश्वरसुतायां सृगालवासुदेवः ९
इमौ वसुदेवस्य ज्येष्ठपुत्रौ यदूनां शत्रू १०
देवावताराणां व्यासशिष्यत्वम् ११
मरीचिपुत्राणां षण्मुनीनां शापः १२
दुर्गया तेषां देवकीगर्भे स्थापनम्, कंसेन तद्वधश्च १३–४
ब्रह्मसदनं जिगमिषोः पाण्डोर्मुनिभिः वारणम् १५–८
कल्यादीनां राक्षसानां गान्धारीगर्भे प्रवेशः १९
पाण्डुना पुत्रार्थं कुन्तीं प्रति चोदना २०–१
अयुक्तमपि पतिवचनमिति कुन्त्या स्वीकारः २२–३०
पाण्डोराशयेन धर्मस्याऽह्वानम् ३१–२
युधिष्ठिरजननम् ३३
तच्छ्रुत्वा गान्धार्या गर्भभञ्जनम् ३४

गर्भपिण्डस्य व्यासेन घटेषु निधाय रक्षणम् ३५
तेन शतं दुर्योधनादयः, दुःशळा च जाता ३६
देवकार्यार्थं व्यासेन तद्रक्षणम् ३७
कलिर्दुर्योधनो बभूव ३८
असुरैः कृततपसा दुर्योधनस्य वज्र-
कायत्वम् ३९–४१
इन्द्रजित् दुःशासनो बभूव, अतिकायो
विकर्णः, खरश्चित्रसेनः ४२–४
मृषामानिनी दुःशळा ४५–६
जयद्रथः कालकेयदानवः ४७
निरृथो युयुत्सुर्धृतराष्ट्राद् वैश्यकन्याजातः ४८–९
बलाढ्यपुत्रजननार्थं पाण्डुचोदना ५०
वायुः जीवोत्तमः ५१
पाण्डुप्रेरणया कुन्त्या वायोर्जननम्,
स भीमनामा बभूव ५२–४
तेन पर्वतभेदनम् ५५
असुराणां भयम् ५६
शेषस्य देवकीगर्भे प्रवेशः ५७
ततस्तस्य दुर्गया रोहिणीगर्भप्रवेशनम् ५८
देवक्यां श्रीकृष्णाविर्भावः ५९
ज्ञानानन्दरूपस्य पितृमातृगर्भवासः
जनमोहनी लीला ६०–४
भगवतोऽद्भुतं बालरूपम् ६५
नन्दगृहं नेतुमादेशः ६६
तदैव यशोदायां दुर्गाजननम् ६७
वसुदेवेन तस्या कन्यकाया आनयनम्,
कंसागमनम् ६८
बालायाः शिलातळे पोथनम् ६९
देव्या गगनगमनम् ७०
कंसभर्त्सनम् ७१
पुनर्देवकीतल्पे शयनम् ७२
कंसेन देवकीवसुदेवयोर्मोचनम् ७३
कंसस्य मन्त्रालोचनम् ७४
कंसेन बालहत्यायै मन्त्रिणां निदेशः ७५
प्रातर्यशोदया नन्देन च कृष्णदर्शनम् ७६
नन्देन गोदानम् ७७
सुवर्णरत्नादिदानम्, गोपैरभिनन्दनम् ७८
करदानाय नन्दस्य कंसगृहप्रयाणम्,
मध्ये बृहद्वने वासश्च ७९–८०
वसुदेवेन समागमः ८१
पूतनाया नन्दगृहगमनम् ८२–३
तया बालकस्य कृष्णस्य स्तनदानम्,
कृष्णेन तस्या हननम् ८४–५
मृताया भूमौ पतनम्, निरयप्राप्तिः ८६–७
तदाविष्टाया उर्वश्याः स्वर्गप्राप्तिः ८८
जन्मर्क्षमहोत्सवः ८९
शकटासुरवधः ९०–१
कृष्णस्य विप्रसूक्तिभी रक्षा ९२

